विषयानुक्रमः ।

# SÂHITYASÂRA 5

OF

## SHRIMADACHUTARÂYA



With the commentary "Saras' . da" consisting Purvârdha ar' .ttarârdha

REVISED BY

PANSHIKAR WASUDEO LAXMAN SHASTRI



PRINTED AND PUBLISHED

BY

TUKÂRÂM JÂVAJÎ,

PROPRIETOR OF JAVAJI DADAJI'S "NIRNAYA-SÂGAR" PRESS.

Bombay:

1906.

*Price 2½ Rupees.*

## ५ अश्ववररत्नम् ।

## ७ गुणरत्नम् ।

## अथोत्तरार्धम् ।

### ८ कौस्तुभरत्नम् ।

श्रीः ।

श्रीमदच्युतरायप्रणीतम्

# साहित्यसारम् ।

सरसामोदाख्यव्याख्यासहितम् ।

## पूर्वार्धम् ।

### धन्वन्तरिरत्नम् १

गौरीगौराङ्गरागोरुरञ्जितानन्तविग्रहम् ।
वन्दे कंचिच्चिदानन्दं नन्दितानङ्गनिग्रहम् ॥ १ ॥

अथ व्याख्या ।

साहित्यसारमाप्य स्वं स्वोक्तसाहित्यसारगम् ।
व्यनज्मि सरसामोदं सरसामोदसिद्धये ॥ १ ॥

मङ्गलादीनीत्यादिमहाभाष्यस्मृत्यनुमितश्रुतिप्रमाणकं शिष्टसांप्रदायिकं चिकीर्षितग्रन्थनिर्विघ्नतादिफलकं स्वेष्टदेवताप्रणत्यात्मकं मङ्गलं स्वयमनुष्ठायान्तेवास्यनुशासनार्थं ग्रन्थादावपि संग्रथयति—**गौरीत्यादिना**। गौर्याः यः गौरः काश्मीरात्मकोऽङ्गरागः शरीरालेप्यसुगन्धिद्रव्यविशेषः तेन उरु उत्कटं रञ्जितः सरागीकृतः अनन्तः निर्गुणत्वेन वस्तुतः अपरिच्छिन्नोऽपि भक्तानुग्रहार्थं मायैकमयः कर्पूरगौरादिरूपः, यद्वा 'शेषोऽनन्तः' इत्यमरादनन्तः शेषस्तद्वान् । तद्भूषितकण्ठ इत्यर्थः। शिवग्रैवेयकं भुजंगराज इति पुराणादौ प्रसिद्धमेव । एतेन तत्र सर्वविद्यादातृत्वं ध्वनितम् । एतादृशः विग्रहः शरीरं यस्य स तथा तम् । अतएव नन्दिताः अद्वैतानन्दबोधेन मोदिताः अनङ्गस्य कामस्य निग्रहो येषां तादृशाः शुकादयो येन स तथा । हर्षितदान्तभक्तमित्यर्थः । एतादृशं कंचिन्निर्गुणत्वेन 'यतो वाचो निवर्तन्ते' इत्यादिश्रुतेर्वाग्वाद्यगोचरं सगुणत्वेनापि तद्गुणानामानन्त्यात्तथाविधं चिदानन्दबोधरूपं 'सुखं शिवमद्वैतम्' इतिश्रुतेरद्वैतात्मानन्दरूपं परं शिवं अहं ग्रन्थप्रारीप्सुर्वन्दे। यथाविधि आत्मत्वेन प्रणौमीत्यर्थः। यतो गौरीत्यादिविशेषणविशिष्टोऽतोऽस्मदिष्टमपि स तनुयादेवेति भावः। अत्र शान्तो भक्तिश्च रसः। परिकरोऽलंकारः। 'शरीरं वर्ष्म विग्रहः' इत्यमरः। अत्र प्रतिपद्येऽपि भूरि लेखनीयं यद्यप्यस्त्यथापि विस्तरभियोप-

गुरून्विद्यागुरूंस्तद्वत्सद्गुरून्संप्रणौम्यहम् ।
तत्तत्पादारविन्देषु स्वान्तं नीत्वा मिलिन्दताम् ॥ २ ॥
साहित्यसारं शिवयोः संचिन्त्य सुमनोनुगः ।
साहित्यसारं संविच्छ्रीविलासार्थं समुद्धरे ॥ ३ ॥
दुनोति नानया पूर्वसुमनोहृदयं गिरा ।
किंत्वच्युतश्चिनोत्येव मधुमक्षिकया यथा ॥ ४ ॥
प्राक्प्रबन्धविलोपेन स्वख्यात्यै नायमात्मवत् ।

---

रतम् ॥ १ ॥ अथ 'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः' इति श्रुतेर्गुरुभक्तेरप्यर्थावबोधहेतुत्वात्तान्प्रणमति—**गुरूनित्यादिना** । गुरून् 'स्यान्निषेकादिकृद्गुरुः' इत्यमरोक्तेः श्रीमत्पित्रादिरूपान् विद्यागुरून्वेदशास्त्रादिविद्याप्रदाचार्यान् सद्गुरूनद्वैतात्मतत्त्वोपदेष्टॄन् । नमने सम्यक्त्वं भक्तिश्रद्धातिशयत्वम् । प्रकृष्टत्वं कायिकत्वादिनाऽष्टाङ्गविध्युक्तत्वे सति निरन्तरत्वम् । तदेव स्पष्टयति—**तत्तदित्युत्तरार्धेन** । मिलिन्दो भ्रमरः । अत्र प्राक्तनावेव रसौ । रूपकमलंकारः ॥ २ ॥ अथात्यन्तिकनिर्विघ्नतायै विघ्नराजं विचिन्त्य ग्रन्थनाम कथयन्सप्रयोजनं स्वौद्धत्यपरिहारपूर्वकं तत्करणं प्रतिजानीते—**साहित्यसारमिति** । शिवयोः पार्वतीपरमेश्वरयोः साहित्यसारं साहित्यं मिथुनीभावस्तस्य सारो मुख्यांशस्तं तत्पुत्रं गजाननमित्यर्थः । सुमनोनुगः सकलशान्तविद्वदनुसारी अहमित्यनुकर्षणीयम् । साहित्यसारं साहित्यशब्दवाच्यरसालंकारादिशास्त्ररहस्यमित्यर्थः । नचैवमस्य बहिर्मुखत्वहेतुत्वं शङ्क्यम्।प्रायःशान्तरसैकप्रधानत्वादस्येति प्रयोजनोक्तिव्याजेन समभिव्यञ्जयति—**संविदिति** । संविद्ब्रह्मविद्या सैव श्रीर्लक्ष्मीस्तया सह विहारायेत्यर्थः । यथा सुमनःशब्दवाच्यदेवानुगेनाच्युतेन श्रीविलासार्थं साहित्यस्य देवासुरसंमेलनस्य सारं कौस्तुभादिकमुद्धृतमेवं मयापीदमुद्ध्रियत इति भावः । अत्र संविदिति रूपकम्।भक्तिशान्तशृङ्गारा रसाः ॥३॥ प्रतिज्ञातं सुमनोनुगत्वमेव विशदयन्नस्य साहित्यशास्त्रीयप्रकरणत्वेऽपि निरुक्तप्रयोजनप्रतिज्ञयाभिनवत्वात्किमनेन प्राचां मतं खण्डयसीत्याशङ्कामपि शमयन् स्वनामापि निबध्नाति—**दुनोतीति** । अच्युतः अनया गिरा पूर्वसुमनोहृदयं नैव दुनोति किंतु यथा मक्षिकया द्वारा मधु चिनोति तथा चिनोत्येवेत्यन्वयः । अच्युतः अच्युतशर्मा ग्रन्थकृत्, मधुपक्षे परमात्मा तस्यैव मक्षिकाप्रेरकत्वेन तत्संपादकत्वात् पूर्वे च ते सुमनसस्तेषां हृदयम्।प्राचीनविद्वद्ग्रन्थतात्पर्यमित्यर्थः । नैव दुनोति । नैव खण्डयतीत्यर्थः । पक्षे अपूर्वेति च्छेदः । विचित्रनानाविधपुष्पगर्भमित्यर्थः । अत्र सुमनःपदेन तत्खण्डनानौचित्यं तथा मक्षिकोपमया स्वगिरः क्षुद्रत्वेऽपि परैकहितार्थं सारग्राहित्वं ध्वनितम् । प्राचामेवाशयकदम्बमेकीकृत्य विचित्ररसवत्त्वेनोक्तप्रयोजनसाधकं प्रकरणं क्रियत इति तात्पर्यम् । अच्युतेत्यादिगतश्लेषसहितः पूर्णोपमालंकारः ॥ ४ ॥ ननु मास्तु तत्खण्डनं तथापि विचित्ररचनयानया किं तद्ग्रन्थविलोपनपूर्वकं स्वकीर्त्यर्थं यत्नोऽयं नेत्याह—**प्रागिति** । अयं ग्रन्थः । आत्मपक्षे

**तन्यते तद्विकासेन स्मरवत्सुदृशां मुदे ॥ ५ ॥**
**अप्रौढानामपि क्षिप्रं साहित्ये प्रौढताप्तये ।**
**वक्ष्ये लक्ष्यादि संक्षेपादत्र वेणुक्वणे यथा ॥ ६ ॥**
**काव्यादिस्वार्थमन्यार्थं चाथ स्वार्थश्चतुर्विधः ।**
**धर्मादिः कीर्तिसंपत्तितृप्तिमुक्तिवपुःक्रमात् ॥ ७ ॥**

---

प्राचीनोऽनादिर्यः प्रकृष्टो बन्धः संसारस्तद्विलोपेनेत्यर्थः । एवं स्वशब्देनाद्वैतं ब्रह्म तत्ख्यातिरपरोक्षत्वेन प्रसिद्धिस्तस्यै इत्यर्थः । प्रत्युतास्य तद्विवेचकत्वमेवेत्याह—**तदिति**। सुदृशां विदुषाम्, स्मरपक्षे सुदृशां राधादिगोपीनां ये प्राचीनाः कृष्णाभिसरणात्प्रागेव संपादिताः कञ्चुकीग्रन्थ्यादिरूपाः सुदृढं बद्धत्वात्प्रकृष्टा बन्धास्तेषां अच्युतकृतस्मरविस्तारेण विकासशब्दितश्लथनद्वारा यथानन्दस्तथेह पण्डितानामानन्दार्थमेवायं ग्रन्थः प्रकाश्यत इति भावः । अत्र शान्तशृङ्गारौ रसौ । अलंकारस्तूक्त एव ॥ ५ ॥ ननु बहूनामलंकारशास्त्रीयग्रन्थानां सत्वाद्विद्वन्मोदस्य तैरेव संपादितत्वात्ख्यात्यादिप्रयोजनस्य तु त्वयानुपदमेव प्रत्याख्यातत्वाद्विद्याविनोदस्य तु वेदान्तशास्त्रीयनिबन्धैरेव संपादयितुमुचितत्वाच्च निरर्थक एवायं त्वदायास इत्याशङ्क्याह—**अप्रौढानामपीति**। अच्युतः अहमिति च अनुषज्यते । यथा अच्युतः श्रीकृष्णः अप्रौढानामपि मुग्धानामपि गोपीनां साहित्ये स्वेन सह मिथुनीभावे विषये क्षिप्रं शीघ्रं प्रौढताप्तये कामोद्दीपनादिनाऽभिसरणादिचातुर्यसिद्ध्यर्थं लक्ष्यादिकुञ्जसंकेतादिकं वेणुक्वणे मुरलीरवे संक्षेपादवक्षदेवमहमप्यच्युतशर्मा साहित्ये साहित्यशास्त्रे अप्रौढानामपि अकोविदानामपि पुंसां क्षिप्रं द्रुतं प्रौढताप्तये तद्विषयकाभिज्ञत्वसिद्ध्यर्थं अत्र ग्रन्थे लक्ष्यादि लक्ष्यलक्षणादिकं संक्षेपात्स्वल्पप्रबन्धेन वक्ष्ये । कथयिष्यामीत्यर्थः । अयं भावः—यथा आम्रस्य तावन्मुख्यं प्रयोजनं फलावाप्तिरेव, मध्यमं कुसुमामोदः, सामान्यं छाया; तथास्य मुख्यं प्रयोजनं तत्त्वविद्याश्रीविनोद एव, मध्यमं विबुधमोदः, सामान्यं बालबोध इति प्रयोजनत्रयवत्त्वान्नास्य निष्प्रयोजनताशङ्कावकाश इति,अभिनवग्रन्थेन काव्यरीत्यैव विद्याविलासानौचित्यपरिहारस्त्वग्रेऽनुपदमेव सोदाहरणं वक्ष्यत इत्यदोषः । अत्र पूर्णोपमाव्यङ्ग्यः शृङ्गार एव रसः॥६॥ननु भवत्वेवमस्य भवद्ग्रन्थस्य यथाकथंचित्सप्रयोजनत्वं वा निष्प्रयोजनत्वं वा किं तेन, सति कुड्ये हि चित्रमिति न्यायेनादौ काव्यादेरेव किं प्रयोजनं। नहि ततः सुखावाप्तिर्दुःखनिवृत्तिर्वा दृश्यते, प्रत्युत 'काव्यालापांश्च वर्जयेत्' इति निषेध एव तद्वचनादेरित्याशङ्क्य प्रतिज्ञातं साहित्यरहस्यरूपं ग्रन्थं काव्याद्युद्देशादिनोपपादयन् समाधत्ते—**काव्यादीति**। आदिशब्देन दशरूपकप्रसिद्धं नाटकादिकम् । किं काव्यादितः स्वार्थो नेत्युच्यते परार्थो वा। नाद्यः।धर्मादिरूपस्य चतुर्विधस्यापि तस्य ततः समुपलब्धत्वादिति।अत **एव** नान्त्योऽपि।स्वन्यायेन तदुपदेशेन परस्यापि पुमर्थसंभवादित्याशयेन प्रतिजानीते—**स्वार्थमित्यादिना**।तच्चातुर्विध्यमुद्दिशति—**धर्मादिरिति**। तल्लक्षणान्याह—**कीर्तीति**।यथा वृक्षस्य संपुष्पितस्य दूराद्गन्धो वात्येवं

**वाल्मीक्यादेरभूत्कीर्त्यै धावकादेः श्रियेऽपि च ।**
**कामाप्त्यै जयदेवादेर्मुद्गलादेस्तु मुक्तये ॥ ८ ॥**

पुण्यस्य कर्मणो दूराद्गन्धो वातीति श्रुतेर्गन्धशब्दितसत्कीर्तिरेव धर्मलक्षकत्वेन तल्लक्षणम् । संपत्तिर्धनादिरूपा प्रसिद्धैव । तृप्तिरभिलषितावाप्त्या तुष्टिः । मुक्तिरद्वैतात्मतयावस्थितिः । एताः कीर्त्यादयो वपूंषि स्वरूपलक्षणत्वेन स्वरूपाणि यस्य स धर्मादिः क्रमादनुक्रमेण चतुर्विधः स्वार्थः स्वकीयः पुरुषार्थो भवतीत्यर्थः ॥ ७ ॥

ननु किमेतावता प्रकृते काव्ये समायातमित्यत आह सोदाहरणम्—**वाल्मीक्यादेरिति** । काव्यादीत्यनुकृष्य योज्यम् । आदिशब्देन कालिदासादिः । वाल्मीकिग्रहणात्पूर्वपद्यटीकायां शङ्कितस्य साहित्यमूलककाव्यादिना तत्त्वविद्याविनोदानौचित्यस्य व्युदासः । विमतं धर्महेतुः कीर्तिजनकत्वात् वाल्मीक्यादिकाव्यवदित्यनुमानमत्रोन्नेयम् । धावकः एतन्नामा कश्चित्पण्डितः प्राक् परमदरिद्रश्चिन्तामणिनामकमहामन्त्रविशेषोपासनप्रसादेन विचित्रविद्याशाल्यपि निर्धनत्वेन बहु क्लिश्यमानः सन्नैषधीयचरिताख्यं शतसर्गात्मकं विचित्रं महाकाव्यं विरच्य गुणज्ञशिरोमणिं श्रीहर्षनामानं राजानं तत्प्रदर्श्य तेनातितुष्टात्ततः प्रतिवर्षं शतसहस्रात्मकरूप्यमुद्रोत्पत्तियोग्यां भूमिं प्रतिगृह्य तत्काव्ये प्रतिसर्गान्तिमश्लोके तत्पित्रोर्नामभ्यां सहितं तत्कर्तृत्वेन तन्नाम प्रथितवानिति वृद्धैरुपाख्यायते।एतदनुग्राहकं काव्यप्रकाशवाक्यमपि श्रीहर्षादेर्धावकादीनामिव धनमिति । आदिपदेन हेमाद्र्यादेराश्रितानां बोपदेवादीनां ग्रहः । एवं जयदेवोऽपि कस्यचिन्नृपस्याश्रितः सखाभूत् । तत्पत्नी पद्मावतीनाम्नी महासती कदाचित्तन्नृपपत्नीनिकटस्थिता सती तत्र कस्याश्चित्स्वपतिमृतिमनु तच्छवादिना सहात्मदेहं दहन्त्याः सत्याः प्रशंसां श्रुत्वा-किमेतत्सतीत्वम्, किंतु तदेव सतीत्वं यत्स्वपतिमृतिश्रवणोत्तरक्षण एव स्वप्राणवियोगः स्वत एव स्यादित्युक्तवती । ततस्तद्वाक्यं तया महिष्या मनसि निधाय तस्याः परीक्षार्थं कंचिन्नृपभृत्यं रहसि समुपदिश्य मृगयार्थं गच्छता राज्ञा सह महाहयं समारुह्य जयदेवेऽपि कदाचिद्गते सति ।किंचिन्मृगयाकौशलविशेषप्रदर्शनेन तं नृपं जयदेवं च प्रसाद्य ततः पारितोषिकदानात्मना जयदेवात्स्वोष्णीषं संपाद्य युक्त्या तदानीमेव स्वनिकटे समानयित्वा तदुपरि भृत्यान्तरद्वारा पशुरक्तबिन्दून्सद्यः संनिषेचयित्वा, जयदेवस्तु राज्ञा सह मृगयालीलावलोकानार्थं गतस्तत्राकस्मादागतेन व्याघ्रेण भक्षित इति त्वत्प्रत्ययार्थं मया तदुष्णीषमिदमानीतमिति वार्ताकथनपूर्वकं तत्पद्मावतीं प्रत्यभिप्रेषितमासीत् । अथ सा पद्मावती परमसती तद्वृत्तान्तश्रवणपूर्वकं तद्वीक्ष्य तत्क्षण एव प्राणान्मुमोच । ततः सा राज्ञी भृत्यतः तद्वृत्तं श्रुत्वाऽथ स्वयमपि तत्र गत्वाऽतिचकिताऽभूत् । ततो मृगयां विधाय परावृत्ते राज्ञि जयदेवोऽपि गृहमागम्याथ नृपपत्न्या स्वापराधे निवेदिते तां सांत्वयित्वा तच्छवनिकट एव स्थित्वा भगवतः श्रीकृष्णस्य भगवत्या राधया सह विलासं गीतगोविन्दाख्यकाव्येनावर्णयत् । ततश्चतुर्विंशतिगीतसमाप्तिसमं सा पद्मावती पूर्ववदेव निद्रात

१ रूपद्वयमपीदं प्रामादिकं 'समासे नञ्पूर्वे–'इति ल्यब्विषयत्वात्। णीङोऽनिट्कत्वाच्च ।

**जिज्ञासोः सुन्दरीरीत्या काव्यं समुपदेशकृत् ।**
**ऐहिकामुष्मिकादेर्यत्सोऽयमन्यार्थ उच्यते ॥ ९ ॥**
**वेदेतिहासकाव्यादिशब्दभेदात्त्रिधा मतः ।**
**उपदेशो नृपसुहृत्सुन्दरीरीतितः क्रमात् ॥ १० ॥**
**नृपाज्ञावत्तु वेदाज्ञानुलङ्घ्यैवेति वैदिकः ।**
**नृपरीत्योपदेशोऽसौ फल एवातिसौख्यदः ॥ ११ ॥**
**सुहृदुक्तिकृतौ सौख्यं फले नोचेद्भयं नहि ।**
**सुहृद्रीत्योपदेशोऽयमितिहासादिकर्तृकः ॥ १२ ॥**
**योऽधिकारिसुखायैव श्रवणेऽनुष्ठितौ फले ।**
**कान्तारीत्योपदेशः स्यात्सोऽयं काव्यादिसंभवः ॥ १३ ॥**

---

इव समुत्थितासीदिति प्रसिद्धमेव लोके । अत्राप्यादिना सूर्यशतककारो मयूरः, तथा मुद्गलाचार्योऽपि श्रीरामोपासकः कंचिद्ग्रन्थं कुर्वन्माध्याह्निकार्थं गङ्गातीरमगात्तदा तद्रूपेण श्रीराम एवागत्य तत्र किंचिल्लिलेखेति तन्मात्रा निरीक्षितम् । ततः पुनरागते तस्मिंस्तया अयि पुत्र, किमिदं तव विलक्षणं शास्त्रव्यसनं यद्गङ्गां प्रति गतोऽपि तत्र किंचित्स्मृतलेखनार्थं ततोऽप्यागत्यादौ तत्संलिख्य पश्चात्पुनस्तत्र गत्वा नित्यकर्म विधायाधुना समागतोऽसीत्युक्तः संस्तेनेदं श्रीरामचरितमेवेत्यनुमाय स्वकुलस्वामिश्रीरामप्रतिमां स्वप्रत्यक्षतार्थमार्याशतकात्मककाव्येन संप्रार्थ्य सद्यः साक्षात्कृतिमापेत्यपि समुपाख्यायते वृद्धैः ॥ ८ ॥ एवं प्रतिज्ञातकाव्यादिजन्यस्वार्थस्य चातुर्विध्यमार्षमानुषोदाहरणपूर्वकं प्रपञ्च्याधुनोद्देशानुसारेणावसरप्राप्तं तज्जन्यमन्यार्थं लक्षयति–**जिज्ञासोरिति** । सौन्दर्यमत्र यावत्स्त्रीगुणविशिष्टस्वरमणीत्वमेव यत् ऐहिकामुष्मिकादेः समुपदेशकृद्भवतीति संबन्धः। ऐहिकोऽर्थादिपुमर्थः । आमुष्मिको धर्मादिः । आदिशब्देन ऐहिकादेः साधनम् ॥९॥ अथोक्तरीतिमेव व्युत्पादयितुं रीतिभेदेनोपदेशस्यैव त्रैविध्यं बोधयति—**वेदेतिहासेति**।आदिपदं मुख्यार्थम् । नृपः सार्वभौमः । यद्वा स्वापेक्षया शक्त एव यः कश्चित् प्रभुशब्दवाच्यः । सुहृत् निरपेक्षसततहितकर्ता ॥ १० ॥ सूत्रितं नृपादिरीतित्रयेण वेदाद्युपदेशत्रयं क्रमेण विवृणोति—**नृपेत्यादि**श्लोकत्रयेण। वैदिकः उपदेश इति पूरणीयम् । अत्रायं प्रयोगः-वेदोपदेशः नृपरीतिकः अनुल्लङ्घ्यत्वात्तदुपदेशवदिति।एवं तर्ह्यस्यर्हितत्वात्तेनैव पुरुषार्थसिद्धौ कृतं काव्यादिनेत्यत आह–**असाविति** । तस्य तथात्वेऽपि श्रवणानुष्ठानकालयोः सुखहेतुत्वाभावाद्विषयिणामधिकारिणां सुसमुद्वेजकत्वेन झटिति सन्मार्गप्रवर्तकत्वं इति काव्याद्युपयुक्तमेवेति तात्पर्यम् ॥ ११ ॥ **सुहृदिति** । फले सति सौख्यं भवत्येवेत्यध्याहृत्य योज्यं नोचेत् तदकरण इत्यर्थः । **इतिहासादीति**। आदिशब्देन पुराणादिग्रहः । इतिहासादयः कर्तारो यस्य सतथा ॥१२॥**योऽधिकारीति**।आधिकारित्वमत्र विषयित्वेऽपि पुरुषार्थेच्छुत्वमेव। अन्यथा रसिकत्वेऽपि तदुक्तानुष्ठाने औदासीन्यापत्तेः । एवकारोऽत्र दुःखलेशस्यापि

**सुन्दरी स्वेशहृदयं वशीकृत्य स्वसद्गुणैः।**
**लौकिकं वैदिकं चापि कूजतीष्टं ससाधनम् ॥ १४ ॥**
**तद्वत्काव्याद्यपि श्रीमन्महारामायणादिकम्।**
**श्रोतुर्मनो वशीकृत्य हितं वक्ति सहेतुकम् ॥ १५ ॥**
**अयं सर्वत्र सुखदः श्रवणेऽनुष्ठितावपि।**
**तद्गुणाद्यै रसोत्पत्तेः फले त्विष्टार्थसिद्धितः ॥ १६ ॥**
**यत्तु स्मृत्यादिवचनं काव्यालापांश्च वर्जयेत्।**
**इत्यादि तत्तु श्रीशादिभिन्नवर्णनदूषकम् ॥ १७ ॥**

---

निरासार्थः। श्रवण इत्यादिसप्तम्यन्तत्रयेऽपि। अपिशब्दोऽध्याहार्यः। शेषं स्पष्टम्। अत्र पद्यद्वयेऽपि नृपोपदेशदिशा अनुमानमूह्यम् ॥ १३ ॥ ननु कथमस्योपदेशत्वसाम्येऽपि कालत्रयेऽपि सुखहेतुत्वमेवेत्यतस्तं विशदयति—**सुन्दरीत्यादि**पद्यद्वयेन। स्वेशहृदयं नतु कान्तहृदयम्। तथात्वे कान्तशब्दितरम्यपुंमात्रलाभेन तस्याः परकीयात्वापत्तेः। तस्मान्निजरमणान्तःकरणमित्यर्थः। स्वसद्गुणैः स्वसंबन्धिभिरेव नतु सख्यादिनिष्ठैः।तत्रापि सद्भिः लोकवेदवन्द्यैः पातिव्रत्यादिभिः। नतु केवलं लावण्यादिगुणैः यावद्दिव्यमुग्धाधर्मैरित्यर्थः। लौकिकं अर्थकामाख्यम्। वैदिकं धर्ममोक्षाख्यम्। साधनैर्नम्रत्वादिभिः सहितम् ॥ १४ ॥ **तद्वदिति**। एतदनुरोधेन पूर्वं यद्वदिति ज्ञेयम्। महारामायणं श्रीमद्वाल्मिकीययोगवासिष्ठाख्योत्तरकाण्डार्थकद्वात्रिंशत्साहस्र्यात्मकोत्तररामायणसहितं। चतुर्विंशतिसाहस्र्यात्मकं पूर्वरामायणं प्रसिद्धमेव। आदिपदान्मानुषकाव्यसंग्रहः। स्वसदित्यादितृतीयचरणान्तमत्रानुकर्षणीयम् ॥ १५ ॥ ननु किमेतावता सुखैकहेतुत्वे समायातमिति निजाभिसंध्यनभिज्ञशङ्कां व्युदसितुं स्वरहस्यं स्पष्टयति—**अयमिति**। तत्र हेतुमाह—**श्रवण** इत्यादिशेषेण। तद्गुणाद्यैः रसोत्पत्तेः श्रवणे तथा अनुष्ठितावपि सुखदः तस्य काव्यस्य पक्षे निरुक्तलक्षणकलत्रस्य ये गुणाः काव्यपक्षे वक्ष्यमाणाः, कलत्रपक्षे पातिव्रत्याद्याः। आद्यशब्देन काव्ये वक्ष्यमाणदोषाभावः, कलत्रे च कुरूपत्वाद्यभावो ग्राह्यः। रसः शृङ्गारादिः। उपदेशस्य श्रवणादिवेलायामपि निरुक्तरसास्वादमोदमग्नमानसत्वजनकतयास्य सर्वत्र सुखदत्वमिति भावः। नन्वेवं चेत् 'विषयेन्द्रियसंयोगाद्यत्तदग्रेऽमृतोपमम्। परिणामे विषमिव तत्सुखं राजसं स्मृतम्' इति स्मृतेः फले दुःखदः स्यान्नेत्याह—**फलेत्विति**। तुशब्दः शङ्काशान्त्यर्थः ॥ १६ ॥ अहो यद्येवं काव्यादिमाहात्म्यं तर्हि स्मृत्यादौ तद्वचनादि किमिति निषिद्धमित्याशङ्क्य तदाशयस्त्वन्य एवेत्याह—**यत्त्विति**। अतएव श्रीमद्भागवते 'न यद्वचश्चित्रपदं हरेर्यशः' इति, 'स वाग्विसर्गो जनताघविप्लवः' इति च भगवद्गुणवर्णनविधानमिति भावः। आदिपदात्तद्भक्तानां संग्रहः। तेषां तस्यापि मान्यत्वात्। अतएव शाकुन्तलनाटके कालिदासेन दुष्यन्तस्य, नैषधीयचरिते श्रीहर्षेण नलस्य, किरातार्जुनीये भारविणार्जुनस्य, दमयन्तीकथाचम्पूप्रबन्धे दमयन्त्यादेस्त्रिविक्रमेण

**तत्र निर्दोषशब्दार्थगुणवत्त्वे सति स्फुटम् ।**
**गद्यादिबन्धरूपत्वं काव्यसामान्यलक्षणम् ॥ १८ ॥**

---

च वर्णनं कृतम् । यत्तु भामिनीविलासे शृङ्गारोल्लासे–'गुरुमध्यगता मया नताङ्गी निहता नीरजकोरकेण मन्दम् । दरकुण्डलताण्डवं नतभ्रूलतिकं मामवलोक्य घूर्णितासीत्' इत्यादिना जगन्नाथपण्डितैः स्वप्रेयसीवर्णनं कृतं तत्तेषां श्रीगङ्गाप्रसादादेव शोभतेतराम् । नचैवं चतुर्विधपुमर्थात्मकस्वार्थादिसिद्धिलक्षणं काव्यादिप्रयोजनं 'काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये । सद्यः परनिर्वृतये कान्तासंमिततयोपदेशयुजे' इति काव्यप्रकाशकारिकया सह विरुद्धमिति वाच्यम् । एतस्य तदाशयैकविवृतिरूपत्वात् । तथाहि तत्र व्यवहारविच्छब्देन धर्मज्ञानमेव विवक्षितम् । नोचेत्तद्विवरणे राजादिगतोचिताचारपरिज्ञानमिति वचने उचितपदमाचारपदं च बाधितं स्यात् । तथा शिवेतरक्षतिसद्यःपरनिर्वृतिपदाभ्यां मुक्तिरेव । तस्याएव निरतिशयसुखं च दुःखजातव्युपरमणं च वदन्ति मोक्षतत्त्वमिति श्रीमत्संक्षेपशारीरकाचार्यचरणवचनेन तथारूपत्वात् । एतेन कामाख्यपुरुषार्थस्यापि शिवेतरक्षत्यादावेव कैमुतिकन्यायेनान्तर्भूतत्वं विज्ञेयम् । अन्यत्सर्वं स्फुटमेव । तस्मान्निरुक्तमेव काव्यादिप्रयोजनमिति न कोऽपि दोष इति दिक् ॥ १७ ॥ एवं साहित्याधारीभूतकाव्यादेः साधारण्येन वेदादिवच्चतुर्विधपुरुषार्थहेतुत्वे सोदाहरणे तथास्य सर्वदा सुखदत्वेन विषयिणामपि मनो वशीकृत्य वेदार्थस्यैवाविष्करणद्वारा झटिति सन्मार्गप्रवर्तकत्वे च सप्रपञ्चं सिद्धे सति किं तत्स्वरूपलक्षणमिति जिज्ञासायां सत्यां तदाह **–तत्रेति** । तत्र इदं काव्यसामान्यलक्षणं स्फुटमित्यन्वयः । तत्र निरुक्तरीत्या तस्य सप्रयोजनत्वेन प्रेक्षावदादरणीयतरत्वे सिद्धे सतीत्यर्थः । इदं निरुच्यमानम् । काव्यसामान्यलक्षणं कौति सुशब्दरचनां करोतीति कविस्तस्य कर्म काव्यं तस्य सामान्येन साधारण्येन लक्षणं अव्याप्त्यादिदूषणत्रयहीनो धर्मविशेषः स्फुटं स्पष्टं प्रतिज्ञातमित्यर्थः । किं तदित्यत आह–**निर्दोषे**त्यादिना शेषेण । शब्दो रामादिःअर्थः सीताकान्तादिः शब्दश्चार्थश्च शब्दार्थौ निर्गताः सुतरामविद्यमानाः दोषाः वक्ष्यमाणलक्षणाः श्रुतिकटुत्वादिरूपाः शब्दादिदोषाः याभ्यां तौ तथा तयोर्ये गुणा अपि सौकुमार्यादयो वक्ष्यमाणा एव शब्दार्थधर्मास्ते विद्यन्ते यस्मिंस्तत् । तद्वत् तस्य भावस्तत्त्वं तस्मिन् सति गद्यादिबन्धरूपत्वम् गद्यं अनियताक्षरं दण्डकापरनामकं गाथाख्यं छन्दः तदादि यस्य श्लोकादिरूपपद्यस्य तद्रूपो यो बन्धः प्रबन्धस्तद्रूपं स्वरूपं यस्य तत्त्वम् । अत्र सत्यन्तपदकृत्यं तु स्वयमेवाग्रे वक्ष्यति । गद्यग्रहणेन कादम्बर्याः संग्रहः । तेन गद्यैकरूपं कादम्बर्यादि, पद्यैकरूपं रघुवशादि । उभयरूपं दमयन्तीकथाचम्प्वादि च विवक्षितं भवतीति भावः । अत्र बन्धपदेन वेदादेर्व्युदासः । तस्याविर्भावादिमत्त्वेऽप्यर्थरचनपूर्वकत्वाभावेनानादित्वात् श्रीमद्रामायणस्य तु आर्षत्वेऽपि न तत्राव्याप्तिः । इतिहासपुराणः पञ्चमो वेदानां वेदः इति श्रुतौ तदनुक्तेरिति १८

**दोषे सति गुणैः किंवा किंवालंकरणैरपि।**
**अतो निर्दोषसाद्गुण्यमेवात्राद्रियतां बुधैः॥ १९॥**
**धर्मा रसा लक्षणानि रीत्यलंकृतिवृत्तयः।**
**रसिकाह्लादका ह्येते काव्ये सन्ति च षड्गुणाः॥ २०॥**

---

तत्र निर्दोषपदकृत्यमाह श्लेषेण—**दोषे सतीति।** दोषः काव्यपक्षे वक्ष्यमाणः श्रुतिकटुत्वादिलक्षणः, अन्यत्र अविवेकित्वादिः। गुणा अपि काव्यपक्षे सौकुमार्यादयो वक्ष्यमाणा एव, अन्यत्र सुरूपत्ववक्तृत्वादयः। तद्वदलंकरणान्यपि काव्यपक्षे वक्ष्यमाणानि अनुप्रासपूर्णोपमादीन्येव, अन्यत्र हारादिभूषणानि। अत्र काव्ये स्त्रीपुंसोरन्यतरस्य शरीरे च बुधैः सारासारविचारचतुरैः निर्दोषसाद्गुण्यमेव निर्गताः कालत्रयेऽप्यविद्यमानाः दोषाः यस्मात्तत्तथा सन्तः अलंकारसंग्राहकाः।निजरूपेष्वेवालंकारान्तर्भावपटव इत्यर्थः। ते च ते गुणाश्च तथा तेषां भावः साद्गुण्यं निर्दोषं च तत्साद्गुण्यं च निर्दोषसाद्गुण्यम्। अवधारणं त्वलंकारपार्थक्यव्यावृत्त्यर्थम्। उपलक्षणमिदं वक्ष्यमाणलक्षणानां रसादीनामपि। तेन निर्दोषशब्दादिगुणवत्त्वशालिवाक्यत्वं फलितम्। आद्रियतां।प्रेम्णा स्वीक्रियतामित्यर्थः। अत्र दोषे इत्येकवचनेन गुणैरिति बहुवचनेन च 'एको हि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्कः' इति न्यायः प्रत्युक्तः। तत्र यदि किरणशब्देन कला विवक्षितास्तर्हि तास्वखिलासु सतीष्वङ्कस्फुटत्वस्य प्रत्यक्षसिद्धत्वात् 'कलावतः सैव कला यया धः क्रियते भवः। किं ताभिर्बहुपुष्टाभिर्याभिरङ्कः प्रदृश्यते' इति कविसमयेऽपि तथा वर्णितत्वाच्च। यदिवा रश्मय एव तत्रापि तेषु तन्निमज्जनस्य सुतरामसंभवात् प्रत्युत ज्योत्स्नारूपाणां तेषां परमपुष्टत्वे बिम्बवर्तिनस्तस्य स्पष्टत्वेनैवभानानुभवाच्च। तस्मान्महाकविप्रयोगादिन्दुकिरणेषु अङ्कः कलङ्कः निमज्जति गुणानां बाहुल्यात्स्वस्यैकत्वात्तद्विघातक एव न भवति नतु स्वयमपि न प्रदृश्यत इति यथाम्भसि गजो निमज्जतीत्युच्यते तद्वदिति व्याख्येयम्। अतएव 'अनन्तरत्नप्रभवस्य यस्य हिमं न सौभाग्यविलोपि जातम्' इति पूर्वार्धे हिमस्य हिमालयगतानन्तरत्नोत्पत्तिस्थानत्वलक्षणसौभाग्यविलोपकत्वराहित्यमेवोक्तं नतु तस्य अभासमानत्वमपि। तस्माद्भासमानो दोषस्तावद्धिमवत्कलङ्कवच्च जाड्यादिवदनौचित्यादिवच्च वैरस्यं जनयिष्यत्येव, तथापि तस्याल्पत्वाद्गुणानां बाहुल्याच्च 'विपदः संतु नस्तास्तास्तत्रतत्र जगद्गुरो। भवतो दर्शनं यत्स्यादपुनर्भवदर्शनम्' इति श्रीकृष्णं प्रति कुन्त्युक्तन्यायेन न तावत्स्वाधिकरणत्याज्यतां जनयतीति। नन्वेवं चेत्कथं त्वया दोषे सतीत्यादि प्रतिज्ञातमितिचेन्न। तथात्वस्यैव सार्वत्रिकत्वात् उक्तोदाहरणव्यवस्थायास्तु क्वाचित्कत्वादिति रहस्यम्। अतएव भामिनीविलासे जगन्नाथपण्डितोक्तिः'अमितगुणोऽपि पदार्थो दोषेणैकेन निन्दितो भवति। निखिलरसायनराजो गन्धेनोग्रेण लशुन इव' इति। अस्मिन्नुदाहरणे तु एकोऽपि दोषो बहुगुणविघातकोऽपीति विशेषः॥ १९॥ एवं निर्दोषपदप्रयोजनमभिधाय गुणपदकृत्यं कथयंस्तद्विभागं तत्साधारणलक्षणं तत्संख्यां च तुल्ययोगितयाह—**धर्मा इति।** धर्माः काव्यप्रकाशादौ गुणशब्दव्यवहार्या

वक्ष्यमाणलक्षणाः माधुर्यादयः, रसाः शृङ्गारादयः, लक्षणानि अक्षरसंहतिशोभादीनि वक्ष्यमाणानि, रीतयोऽपि गौडीपाञ्चाल्यादयो वक्ष्यमाणा एव। एवमलंकृतयोऽप्यनुप्रासादयोऽलंकाराः । तथा वृत्तयो मधुराद्याः शक्त्याद्याश्च तादृश्य एव । हि यस्मात् एते धर्मादयो रसिकाह्लादकाः षडपि सन्ति । अत एते काव्ये सति च गुणा भवन्तीत्यन्वयः । यस्माद्धेतोः एते पूर्वार्धोक्ताः धर्मादयः गुणापरनामकधर्मप्रभृतयः रसिकाह्लादकाः रसज्ञास्तानाह्लादयन्ति सन्तोषयन्तीति तथा । पण्डितानन्दहेतव इत्यर्थः । षडपि सन्ति षट्संख्याकाः सर्वेऽपि साधर्म्येण वर्तन्ते । अतोहेतोः एते प्रकृताः षट्पदार्थाः काव्ये प्रागुक्तलक्षणे प्रबन्धे सति 'सदेव सोम्येदमग्र आसीत्', 'तदैक्षत', 'तत्तेजोऽसृजत' इत्यादिश्रुतेः सगुणे ब्रह्मणि च । परमेश्वरशब्दितमायोपहितब्रह्मण्यपीत्यर्थः । गुणाः गुणशब्दव्यवहार्या भवन्तीत्यर्थः । रसिकाह्लादकत्वरूपं गुणत्वं षट्स्वपीति सर्वेऽप्येते गुणा एवेति भावः । ब्रह्मपक्षे तु 'ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः । वैराग्यस्य च मोक्षस्य षण्णां भग इतीरणा' इति वचनादिमे तत्रापि योज्याः । तद्यथा धर्मा इत्यादिषु बहुवचनं समग्रस्येति विशेषणध्वनितपूर्णत्वसूचनार्थम् । धर्मपदार्थस्तु प्रसिद्ध एव । रसशब्देन 'रसो वै सः' इति श्रुतेरद्वैतानन्दरूपो मोक्षः । लक्षणपदेन सगुणब्रह्मणो लक्षणमणिमाद्यैश्वर्यमेव । रीतिशब्देन लोके व्यवहृतिः प्रसिद्धा । भगवति तु सा यशस एव मूलीभूतेति यश एव । अलंकृतिपदेन तत्साध्या शोभापरनाम्नी श्रीरेव । वृत्तिशब्देन वर्तनं वृत्तिरिति व्युत्पत्त्या 'अनश्नन्नन्यो अभिचाकशीति' इति श्रुतेः परमेश्वरस्य वैराग्यात्मकमेव वर्तनमिति तदेव ग्राह्यम् । 'वीर्यस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव' इत्यादिपाठेऽपि यथायथमूह्यम् । ननु काव्यप्रकाशकारस्तु गुणान्प्रकृत्य 'माधुर्यौजःप्रसादाख्यास्त्रयस्तेन पुनर्दश' इति कारिकया धर्मशब्देन त्वदभिमतानां माधुर्यादीनां त्रयाणामेव गुणत्वमुक्त्वा यत्तावच्चन्द्रालोके स्वाभिमतगुणाष्टककथनोत्तरम् 'श्लेषः प्रसादः समता माधुर्यं सुकुमारता । अर्थव्यक्तिरुदारत्वमोजः कान्तिः समाधयः । अमी दश गुणाः काव्ये पुंसि शौर्यादयो यथा' इति वामनोक्तगुणदशकं संगृहीतं तत्तिरस्करणमपि प्रतिज्ञातवान् । तथा 'ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः । उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः' इति,'उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित् । हारादिवदलंकारास्तेऽनुप्रासोपमादयः' इति च कारिकाभ्यां तथा । अतएव माधुर्यादयो रसधर्माः समुचितैर्वर्णैर्व्यज्यन्ते नतु वर्णमात्राश्रया इति । येच वाचकवाच्यलक्षणाङ्गातिशयमुखेन मुख्यं रसं संभविनमुपकुर्वन्ति ते कण्ठाद्यङ्गानामुत्कर्षाधानद्वारेण शरीरिणामप्युपकारका हारादय इवालंकारा इति च तद्व्याख्यानाभ्यां क्रमेण गुणालंकारयोर्लक्षणं विभागं चोक्तवान् । एवं चन्द्रालोकेऽपि 'अमी दश गुणा' इत्यस्मादुत्तरश्लोके 'तिलकाद्यमिव स्त्रीणां विदग्धहृदयंगमम् । व्यतिरिक्तमलंकारं प्रकृते भूषण गिराम्' इत्यत्र अलंकाराणां गुणभिन्नत्वं

तत्स्वरूपादिकं चोक्तम्।त्वया त्वद्य माधुर्यादीनां धर्माणां रसादिवृत्तिपर्यन्तानामन्येषामपि साधारण्येन रसिकाह्लादकत्वेन गुणत्वमेवोच्यते तत्कथं न विरुद्धमुदाहृतप्राचीनाचार्यवचनैः सहेति चेत्सत्यं। तथापि मया तावत्त्वदुदाहृतग्रन्थतात्पर्यमेव मनसि निधायैवमुक्तं भङ्गयन्तरेण, नतु किंचित्कपोलकल्पितमिति। तथाहि काव्यप्रकाशे तावत्काव्यलक्षणावसरे–'तददोषौ शब्दार्थौ सगुणावनलंकृती पुनः क्वापि' इति प्रायः सालंकारत्वे सति निर्दोषसगुणशब्दार्थोभयत्वं काव्यत्वमिति स्पष्टं काव्यलक्षणं सामान्येनोक्तम्। चन्द्रालोके तु तत्र 'निर्दोषा लक्षणवती सरीतिर्गुणभूषणा। सालंकाररसानेकवृत्तिर्वाक्काव्यनामभाक्' इति तल्लक्षणमुक्तम् तत्रोभयोर्विरोधस्तावत्प्रत्यक्ष एव। तत्परिहरणार्थमेव मयात्र भङ्गयन्तरमाश्रितम्। तद्यथा— काव्यप्रकाशे तावत्तददोषाविति लक्षणमुक्त्वा दोषगुणालंकारा वक्ष्यन्ते। क्वापीत्यनेनैतदाह–यत्सर्वत्र सालंकारौ क्वचितु स्फुटालंकारविरहेऽपि न काव्यत्वहानिः। यथा–'यः कौमारहरः स एव हि वरस्ता एव चैत्रक्षपास्ते चोन्मीलितमालतीसुरभयः प्रौढाः कदम्बानिलाः। सा चैवास्मि तथापि तत्र सुरतव्यापारलीलाविधौ रेवारोधसि वेतसीतरुतले चेतः समुत्कण्ठते'। अत्र स्फुटो न कश्चित्तदलंकारः। रसस्य हि प्रधानत्वान्नालंकारतेति सोदाहरणं व्याख्यातम्। तत्र रसस्येत्युक्तेस्तस्य काव्यलक्षणान्तर्गतत्वेन रसोऽपि विवक्षित इति गम्यते। तथा स्फुटो नेत्याद्युक्त्या गूढोऽलंकारो ध्वन्यात्मकस्तावदत्राप्यस्तीत्येतदाशयः स्पष्ट एव। लक्षणवाक्ये तु रससंग्राहकपदाभावात्तद्रहस्य तूक्तरीत्या आवश्यकत्वात् माधुर्यादयो रसधर्माः समुचितैर्वर्णैर्व्यज्यन्त इत्यनुपदोदाहृततदुक्त्या काव्यलक्षणे गुणपदेन माधुर्यादीनां रसधर्माणां तद्व्यञ्जकसमुचितवर्णसंग्रहेणैव सिद्धत्वाद्धर्मग्रहस्य धर्मिग्रहान्यथानुपपत्त्या तद्धर्मिणां शृङ्गारादिरसानामपि गुणपदेनैवार्थिकग्रहणस्यावश्यवाच्यत्वच्चा सिद्धमेव तल्लक्षणे सरसत्वम्। नच नीरसस्याप्युदाहृतानलंकारकाव्यवन्निर्दोषसगुणशब्दार्थयुगुलस्यैवास्तु काव्यत्वं किमेतावत्कुसृष्टयेति वाच्यम्। गुणग्रहणे निरुक्तरीत्या बलात्सरसतापत्तेः। उपलक्षणमिदमक्षरसंहत्याद्यात्मकानां लक्षणरीतिवृत्तिपदार्थानामपि वक्ष्यमाणलक्षणास्तेऽप्यत्रोक्तदिशा यथायथमूह्याः। अतएवेदमेव काव्यप्रकशस्वारस्यं विवृण्वद्भिश्चन्द्रालोककारैः श्रीजयदेवकविवरैर्बालानां स्फुटसंबोधार्थं 'निर्दोषा लक्षणवती' इत्यादिना काव्यलक्षणं कृतं, मया तूभयोः सारतस्तात्पर्यमादायाविरोधार्थं प्रवृत्तेन काव्यप्रकाशोक्तलक्षणमेव प्रथममुक्त्वा गुणशब्देनोक्तरीत्या तदभिप्रेतानां चन्द्रालोककृतल्लक्षणे स्पष्टं विवृतानां रसादिषण्णां पदार्थानां रसिकाह्लादकत्वलक्षणगुणत्वसामान्येन गुणभेदोक्तिद्वारा कथनं कृतमिति कोनाम ममानयोश्च विरोधगन्धोऽपि। नचास्तु नाम यथाकथंचिद्रसादीनामुक्तयुक्त्या गुणपदेन संग्रहः परंत्वलंकारस्य तु तेन यथा संग्रहः कृतस्तथा तु त्वया नैव कृतस्तस्मात्पुनर्विरोधतादवस्थ्यमेवेति वाच्यम्। तद्रहस्यस्य त्वयैवाज्ञातत्वात्। तथाहि 'यः कौमार' इत्युदाहरणं तु स्फुटालंकृतिहीनकाव्यस्येत्यविवा-

**अलंकारा गुणेष्वेव प्रथ्यन्ते प्रायशो भुवि ।**
**गुणेभ्योऽतः पृथक्त्वेन प्रगल्भानां न तद्ग्रहः ॥ २१ ॥**

दमेव । तत्र गूढालंकारस्य ग्राहकं लक्षणे गुणपदं विना किमस्तीति त्वयैव वक्तव्यम् । तस्मादेकदेशविकृतन्यायेन सर्वोऽप्यसौ मया गुणत्वेनोक्त इति निर्मत्सरैर्धीरैर्ध्येयमिति दिक् । एतेन यत्तु प्राञ्चः–अदोषौ सगुणौ सालंकरौ च शब्दार्थौ काव्यमित्याहुस्तत्र विचार्यत इत्यादिग्रन्थेन काव्यपदस्य लोकव्यवहारतः शब्दविशेष एव शक्तत्वाच्छब्दार्थयुगुलस्य नैव काव्यत्वं संभवतीत्याशयवद्भिर्जगन्नाथपण्डितैस्तावद्रसगङ्गाधरे काव्यप्रकाशोक्तलक्षणं दूषितमिव भाति तदपि परास्तम् । तथाहि 'तददोषौ शब्दार्थौ सगुणावनलंकृती पुनः क्वापि' इति काव्यप्रकाशे काव्यलक्षणमुक्तं तद्यदि यथाश्रुतं गृह्येत तदा राम इति पदे तदर्थमात्रेऽपि काव्यतापत्तिः स्यात् । उक्तलक्षणस्य तत्रापि सत्त्वात् । इष्टापत्तौ तेन 'यः कौमारहर' इत्यादिश्लोकोदाहरणं किमिति दत्तं स्यात् । तस्मात्तदन्यथानुपपत्त्या निर्दोषाभ्यां गुणवद्भ्यां शब्दार्थाभ्यां युक्तः प्रबन्धविशेष एव काव्यत्वेन तस्य विवक्षित इति वक्तव्यम् । मदुक्तलक्षणे चात्र तावन्मात्रमेवास्ति । तथात्वे च क्व नामोक्तदूषणावसरः । तस्मादिदं दूषणं तु तैरत्र नैव दत्तं किंत्वन्यस्मिन्नेवोक्तलक्षणवति कस्मिंश्चित्प्राचीननिबन्ध इति ज्ञेयम् । नच शब्दसमुदायात्मके प्रबन्धे कथं शब्दाधारतेति शङ्क्यम् । वने वृक्षवत्तत्संभवात् । यत्तु निरुक्तग्रन्थे रमणीयार्थप्रतिपादकः शब्दः काव्यमिति तैः काव्यलक्षणं कृतं तत्तावत् 'अयमात्मा ब्रह्म'इत्यादिवेदान्तमहावाक्यादावतिव्याप्तमिति तत्परिहरणमेवादौ विचारणीयं सहृदयधुरीणैः । किंच मदुक्तलक्षणे तु गुणपदेन धर्मा इत्याद्युक्तषाड्गुण्यसंग्रहान्न रसगङ्गाधरोक्ते निर्गुणे निरलंकारे 'उदितं मण्डलं विधोः', 'गतोऽस्तमर्क' इत्यादौ काव्ये अव्याप्त्यापत्तिः । निरुक्तगुणान्यतमगुणवत्त्वस्य तत्रापि सत्वात्, शब्दार्थदोषाभावाच्च । तस्माद्युक्तमेव निर्दोषशब्दार्थेत्यादिलक्षणमित्यलं पल्लवितेन ॥ २० ॥ ननु गुणेष्वलंकाराणामन्तर्भावः क्वचिदपि नैव दृष्टस्त्वया तु लाघवाय रसिकाह्लादकत्वसाधर्म्येण स कृतोऽपि नैव सहृदयादरणीयः स्यादित्याशङ्कायां श्लेषेण लोकनिदर्शनमपि तत्र द्योतयन्समाधत्ते—**अलंकारा इति** । अलंकाराः अनुप्रासोपमादयः, पक्षे मङ्गलसूत्रादयः गुणेष्वेव माधुर्यादिष्वेव । पक्षे सूत्रेष्वेव प्रायशः बाहुल्येन । एतेन क्वचिन्माधुर्यादिव्यञ्जकवर्णविपर्ययेऽप्यलंकारदर्शनात्, तथा सूत्रं विनापि कङ्कणाद्यलंकाराणां च दर्शनान्नैवेयंव्याप्तिरिति प्रत्यस्तम् । भुवि लोके ग्रथ्यन्ते गुम्फनविषयीक्रियन्त इत्यर्थः । अतः प्रायेणालंकाराणां गुणैकगुम्फनव्यवहारात् गुणेभ्यः पूर्वोक्तेभ्यः पृथक्त्वेन भिन्नत्वेन प्रगल्भानां प्रौढविदुषां पक्षे पतिमात्रविषयकेलिकलापकोविदां प्रगल्भेति रसमञ्जर्युक्तलक्षणानां रमणीनां तद्ग्रहः तेषामलंकाराणां ग्रहः संग्रहः नैवास्तीत्यर्थः । यथा लोके मङ्गलसूत्राद्यलंकाराणां गुणशब्दितसूत्रेष्वेव ग्रथनादुक्तलक्षणतरुणीनां निरुक्तगुणेभ्यः पार्थक्येन तत्संग्रहो नैव संमतः पतिमात्रेत्युक्तलक्षणत्वेन मङ्गलसूत्रेत-

**अलंकारेष्वपि गुणा यद्यप्यन्तर्भवन्ति हि ।
तथाप्याधारतायोगान्मुख्यास्तेऽतः सुधीप्रियाः ॥ २२ ॥
अलंकारविहीनोऽपि सुदृक्सौभाग्यकृद्गुणः ।
गुणहीनमलंकारसहस्रमपि किं तथा ॥ २३ ॥
स्फीतदृष्टिष्वलंकारा गुणेभ्यः पृथगप्यलम् ।
दृश्यन्ते तत्तु बाहुल्यात्तेषां तेषां च सौक्ष्म्यतः ॥ २४ ॥**

---

राङ्गुलीयकादावनादरात्तद्गुणप्रकृतेऽपीति भावः ॥ २१ ॥ एवंचेन्मुक्ताहारादौ गुणस्य गूढत्वरूपान्तर्भावाद्विपरीतमेवास्त्वित्यत आह—**अलंकारेष्वपीति** । सुधीत्वमुभयत्रापि, श्लेषस्तु प्राग्वत् श्लोकषट्केपि विज्ञेयः । शेषं तु स्पष्टमेव ॥ २२ ॥ तदेवान्वयव्यतिरेकाभ्यामुपपादयति—**अलंकारेति** । गुणोऽत्र निरतिशयं पातिव्रत्यमेव । तस्यैव सावित्र्यादौ तथात्वदर्शनात् । अलंकारविहीनोऽपि कनककटकाद्यलंकाररहितोऽपि सुदृक् सौभाग्यकृत् मृगाक्षी तस्याः सौभाग्यहेतुर्भवतीत्यर्थः । 'यः कौमारहर' इत्यादिकाव्यप्रकाशोक्तोदाहरणे अलंकारराहित्येऽपि माधुर्यादिगुणसत्त्वात्सुदृक्शब्दितपण्डितानां सौभाग्यशब्दितानन्दजनकत्वमस्त्येवेति भावः । एतेन अलंकाराभावेऽपि गुणसत्त्वे सौभाग्यसत्त्वमित्यन्वयः सूचितः । गुणहीनेत्युत्तरार्धोक्तव्यतिरेकस्तु स्फुट एव । तत्र गुणहीनशब्दालंकारोदाहरणमुक्तं काव्यप्रकाशे—'स्वच्छन्दोच्छलदच्छकच्छकुहरच्छातेतराम्बुच्छटामूर्च्छन्मोहमहर्षिहर्षविहितस्नानाह्निकाह्नाय वः । भिद्यादुद्यदुदारदर्दुरदरीदीर्घा दरिद्रद्रुमद्रोहोद्रेकमयोर्मिमेदुरमदा मन्दाकिनी मन्दताम्' इति । अत्र यद्यपि वक्ष्यमाणलक्षणो दीर्घसमासादिरूप ओजःसंज्ञको गुणोऽस्त्येव तथापि 'दीप्त्यात्मविस्तृतेर्हेतुरोजोवीररसस्थितिः' । बिभत्सरौद्ररसयोस्तस्याधिक्यं क्रमेण च' इति तत्रत्यसूत्रवचनाद्वीररसादावेव तस्योपयुक्तत्वेनात्र गङ्गावर्णनेनुपयुक्तत्वात्प्रत्युत दोषत्वाच्च नैर्गुण्यमेव । यद्यपीदं तत्राव्यङ्ग्यात्मकाधमकाव्यगशब्दचित्रत्वेनोदाहृतं तथाप्युक्तरीत्या निर्गुणत्वसत्त्वात्तदुदाहरणमपीति न दोषः । एवं 'मोक्षः स्वकृष्णसारेक्षणेक्षणे नैव तत्क्षणाद्भवति । इत्याचक्षंस्त्र्यक्षः समैक्षि गौर्या कटाक्षेण' इत्येवंजातीयकं गुणहीनार्थालंकारोदाहरणमपि ज्ञेयम् । अत्र यद्यपि शब्दालंकार एव भाति तथापि श्लेषेणार्थालंकारोऽप्यस्तीति ॥ २३ ॥ कथं तर्हि काव्यप्रकाशादिमहानिबन्धेषु गुणेभ्योऽलंकारभिन्नतोक्तिरित्याशङ्क्य गुणानां 'माधुर्यौजःप्रसादाख्यास्त्रयस्तेन पुनर्दश' इति तदीयसूत्रवचनेन त्रित्वादलंकाराणां च बहुत्वादेवेत्याह—**स्फीतदृष्टिष्विति**। स्फीता विशाला दृष्टिः प्रज्ञा येषां तेषु दीर्घदर्शिषु मम्मटभट्टप्रभृतिष्वित्यर्थः । अत्र जहल्लक्षणया तत्कृता ग्रन्था ग्राह्याः । पक्षे विशाललोचनाखितियावत् । तत्त्विति तुशब्दः शङ्काशान्त्यर्थः । तत् अलंकारपार्थक्यदर्शनं तेषां अलंकाराणां बाहुल्यात् विपुलत्वात्तथा तेषां गुणानां सौक्ष्म्यतः सूक्ष्मत्वात्पूर्वोक्तरीत्या त्रित्वात्, पक्षे मुक्ताफलादिसूक्ष्मरन्ध्राहत्वायुक्तमेवेत्यध्याहृत्य योज्यम् । मया तु रसिकाह्लादकत्वसाधर्म्येण गुणेष्वेव तदन्तर्भाव उक्त इति न

**अलंकारा यदाप्येवमन्तर्भूता गुणेष्वमी।**
**रसलक्षणमाधुर्यवृत्तिरीति तदा न किम्॥ २५॥**
**यस्माद्दीर्घेक्षणानां हि शाब्दलाघवपूर्वकम्।**
**आर्थिकी गुरुतेष्टातो युक्तमेवोक्तलक्षणम्॥ २६॥**
**यं चिन्तयति निश्चिन्तं फुल्लयेन्दिरया वृतः।**
**तमेव वाणी रमणी परिणेतुं समातुरा॥ २७॥**

---

कोऽपि दोषः ॥ २४ ॥ अस्त्वेवं तथापि रसादेः कथं गुणेष्वन्तर्भाव इति चेत्कैमुतिकन्यायादित्याह—**अलंकार इति।** रसादीनां दिङ्मात्रेण रूपं तु धर्मा रसा इति विंशतितमश्लोके निरुक्तमेव। रसलक्षणमाधुर्यवृत्तिरीतीनां समाहारस्तथा। अत्र समाहारात्क्लीबत्वम्। एवंच निरुक्तरसादि तदा नान्तर्भवेत्किमिति योजना। कान्तापक्षे तु रसः शृङ्गार एव। लक्षणं मुग्धात्वपद्मिनीत्वादि। माधुर्यं मञ्जुभाषणं। वृत्तिः पातिव्रत्येन वर्तनं यद्वा सदाचारेण वर्तनम्। रीतिः मन्दगामित्वादिसरणिः ॥२५॥ ननु नहि दृष्टान्तमात्रेणेष्टसिद्धिरिति न्यायान्नैवेदं संगतं रसिकाह्लादकत्वहेतुस्त्वप्रयोजक एवेति चेत्सत्यम्। रसिकाह्लादकत्वं हेतूकृत्य यद्यनुमानेन मया गुणेष्वलंकारान्तर्भावः साधितः स्यात्तदा भवेदेव तस्याप्रयोजकत्वं, मया तु माधुर्यादयस्त्रय एव ये काव्यप्रकाशे गुणत्वेनोक्तास्तान्धर्मत्वेन गृहीत्वा ये तावत्तदाद्या रसालंकारलक्षणरीतिवृत्तिरूपाः काव्ये उपादेयाः पदार्थास्तान् सर्वानपि रसिकाह्लादकत्वलक्षणसाधर्म्येण गुणत्वेनोररीकृत्य तथा हेयानखिलान्पदार्थान्प्राचां रीत्यैव दोषत्वेन मत्वा लाघवात्तत्र निर्दोषशब्दार्थेत्यादिकाव्यलक्षणं कृतमिति को नाम ममापराध इत्याशयेनाह—**यस्मादिति।** यस्माद्धेतोः दीर्घेक्षणानां विवेकेन परमदूरदर्शिनां विदुषां, पक्षे कर्णान्तनेत्राणां तरुणीनां शाब्दलाघवपूर्वकं शब्दसंबन्धि यल्लाघवमल्पत्वं तत्पूर्वकं, पक्षे—'गतागतकुतूहलं नयनयोरपाङ्गावधि स्मितं कुलनतभ्रुवामधर एव विश्राम्यति। वचः प्रियतमश्रुतेरतिथिरेव कोपक्रमः कदाचिदपि चेत्तदा मनसि केवलं मज्जति'इति रसमञ्जर्युक्तस्वकीयालक्षणरीत्या मधुरतराक्षराल्पत्वमेव। तत्पूर्वकं तदादौ संपाद्येत्यर्थः। आर्थिकी प्रतिपाद्यार्थविषयिका, पक्षे सूचनीयार्थविषयिका गुरुता विपुलता इष्टा संमता अस्तिहीति प्रसिद्धम्। अतः शाब्दलाघवपूर्वकमर्थगौरवस्य सकलविद्वत्संमतत्वादुक्तलक्षणं युक्तमेवेति संबन्धः। तस्मान्न कोऽप्यत्र दोषलेश इति ॥२६॥ अथोक्तलक्षणं काव्यमुदाहरति—**यमिति।** फुल्लया समुद्रमथनान्निजाविर्भावोत्तरं स्वयंवरणावसरे सर्वगुणनिलयं भगवन्तं दृष्ट्वा अभिमतवरलाभेन मुदितयेत्यर्थः। एतादृश्या इन्दिरया 'इन्दिरा लोकमाता मा क्षिराब्धितनया रमा' इत्यमरोक्तेर्लक्ष्म्येत्यर्थः। वृतः स्वयंवरविधिना परिणीतः श्रीनारायण इत्यर्थः। अत्र विशेष्यानुक्तेस्तस्यावाङ्मनसगम्यत्वं सूचितम्। सोऽपि निश्चिन्तं कृतार्थं यं चिन्तयति। तदुक्तं श्रीमद्भगवद्गीतासु—'प्रियो हि ज्ञानिनो-

त्यर्थमहं स च मम प्रियः' इति। श्रीमद्भागवतेऽपि—'निरपेक्षं मुनिं शान्तं निर्वैरं समदर्शनम्। अनुव्रजाम्यहं नित्यं पूयेयेत्यङ्घ्रिरेणुभिः' इति। वाणी वाग्रूपा रमणी। यावत्स्त्रीगुणविशिष्टत्वे सति निखिलदोषहीना कन्येत्यर्थः। अनेन दमयन्त्यादिवत्स्वयंवरणनिपुणत्वं द्योतितम्। सा तमेव पूर्वोक्त श्रीवल्लभचिन्तितपादपल्लवं स्थितप्रज्ञमेव। एतेन ब्रह्मादीनामपि व्यावृत्तिः सूचिता। तेन तेष्वेतदपेक्षयाऽनभिवर्णनीयत्वमपि व्यज्यते। परिणेतुं विधिवत्तत्पाणिग्रहणं कर्तुमित्यर्थः। सम्यक् अखण्डितप्रेमपूर्वकं आतुरा विह्वलास्तीत्यर्थः। अयमाशयः–मद्वाणीलक्षणरमण्याः स्वयं वरणनैपुण्येऽपि ब्राह्मणकन्यकात्वेन तदनौचित्यात्, मम तु ब्राह्मणत्वेन 'न यद्वचश्चित्रपदम्' इत्यादिभगवद्वर्णनविधायकवचनैस्तत्रैव तां नियोक्तुं प्रवृत्तत्वात् तस्याः स्वातन्त्र्याभावान्निरुक्तरीत्या भगवदपेक्षयापि तन्माहात्म्यातिशयदर्शनेन निरुक्तजीवन्मुक्तपुंस्येवानुरागदार्ढ्यसद्भावाच्च रोगाक्रान्तेव परमव्याकुलीभूतेति। तेनात्रोदात्तो नायकः, उत्कण्ठिता नायिकापि रूपकतः। तस्मात्प्रायेणात्र ब्रह्मनिष्ठमेव वर्णयिष्यामीति भावः। अत्रैव लक्षणसमन्वयः। तथाहि अत्र सकलशब्दार्थदोषलेशेनापि रहितत्वं तु वक्ष्यमाणलक्षणादीनां तेषां काव्यप्रकाशादिसंमतानां श्रुतिकटुत्वादिरूपाणां सर्वेषामपि लेशतोऽप्यभावात्स्फुटतरमेव। यद्यप्यत्र—'श्लोके षष्ठं गुरु ज्ञेयं सर्वत्र लघु पञ्चमम्' इत्युक्तेर्वाणीरमणीत्यत्र तद्वैपरीत्याच्छन्दोभङ्गदोषः स्फुट एव, तथापि अस्यानुष्टुब्विशेषेऽन्तर्भावाद्वा 'धिक्तां च तं च मदनं च इमां च मां च' इत्यत्रेव प्रकृतेऽपि वाण्याः समातुरत्वाभिधानात्तद्व्याकुलीभाववशादुक्तदोषोऽपि रभसादभिसरन्त्याः सुन्दर्याः प्रच्युतमञ्जीरादिवद्गुणत्वेनैव रसपोषकत्वात्परिणमत इति ध्येयम्। गुणवत्त्वं तु यथा 'तत्र तावद्धर्मा रसा' इत्यादिश्लोकेन ये प्रागुक्ताः काव्ये षड्गुणास्ते सर्वेऽप्यत्र वर्तन्ते। तद्यथा—धर्मा हि माधुर्यादयस्त्रय एव। तत्र 'माधुर्यौजःप्रसादाख्यास्त्रयस्तेन पुनर्दश। आह्लादकत्वं माधुर्यं श्रृङ्गारे द्रुतिकारणम्। करुणे विप्रलम्भे तच्छान्ते चातिशयान्वितम्' इति काव्यप्रकाशीयसूत्रवचनाच्छान्तरसप्रधाने प्रकृतपद्ये तद्व्यञ्जकशब्दादिसत्त्वात् श्रवणमात्रेण सहृदयानामाह्लादकत्वलक्षणरसास्वादेन चित्तस्य विलयावस्थारूपद्रुतिहेतुभूतं तदस्त्येव। तथा रसाः श्रृङ्गारादयः प्रसिद्धा एवात्र वक्ष्यमाणाश्च। तन्मध्ये प्रकृते शान्त एव प्रधानो रसः। श्रृङ्गारस्तु वक्ष्यमाणरसप्रकरणरीत्या तद्विरोध्यपि प्रकृतवर्ण्यजीवन्मुक्ताख्यनायकभिन्नलक्ष्म्याख्यनायिकानिष्ठत्वेन स्ववाण्यां प्रथितरमण्यात्मकरूपकालंकारोपयोगित्वात् प्रथित इति बोध्यम्। नन्वेवं रसभङ्गापत्तिः शान्तश्रृङ्गारयोश्च विरोध इति रसगङ्गाधरोक्तेः सुन्दोपसुन्दन्यायेनोभयोरपि ध्वंससंभवादिति वाच्यम्। उभयोः सामानाधिकरण्याभावात् प्रत्युत तेन तत्पुष्टेरेव संभवाच्च। तथाहि अहो त्रिभुवनसुन्दर्या भगवत्या लक्ष्म्यापि यः परमप्रमोदेन स्वयंवरे शिवादीनपि विहाय परिणीतः सोऽपि सर्वज्ञः सर्वेश्वरः सर्वकल्याणगुणनिलयः पूर्णानन्दघनः परमात्मा

**रसालंकारमुख्यत्वभेदेनेदं भवेद्द्विधा।**
**सरसाख्यं च चित्राख्यं स्वरम्भोरूशरीरवत्॥ २८॥**

नारायणोऽपि यस्य ब्रह्मनिष्ठस्य चिन्तनं करोति, किं वाच्यं तस्य माहात्म्यमिति धिग्धिगिदं दृश्यसुखाभासजातमतो निरतिशयशमवतैवाद्वैततत्त्वावबोधपूर्वकं सर्वदा भाव्यमिति तमेवेत्याद्युत्तरार्धेन ध्वन्यते। तत्र सकलदृश्यसुखमालम्बनम्। तत्रानादरोऽनुभावः। ब्रह्मनिष्ठैकमहत्त्वबुद्धिर्विभावः। स्मृतिः संचारीभावः। एतैः पुष्टः प्रपञ्चौदासीन्यलक्षणो निर्वेदाख्यः स्थायिभावोऽत्र शान्तनामा रसः स्पष्ट एव। एवंलक्षणमपि अल्पाक्षरा विचित्रार्था ख्यातिरक्षरसंहतिः' इति चन्द्रालोकोक्तेरल्पाक्षररूपद्वितीयचरणेन समुद्रमथनादिलक्ष्मीस्वयंवरात्मकविस्तृतेतिहासस्य सूचनात्तदत्र विशदमेव। तथा 'आचतुष्टयमासप्तं यथेष्टैरष्टमादिभिः। समासः स्यात्पदैर्न स्यात्समासः सर्वदापि च। पाञ्चाली किंच लाटीया गौडीया च यथारसम्। वैदर्भी च यथासंख्यं चतस्रो रीतयः स्मृताः'। इति च तद्वचनादत्र सर्वथा समासाभावान्मधुरतमशान्तरसोपयुक्ता वैदर्भी रीतिः स्फुटैव। तद्ब्रमणीति रूपकमलंकारोऽपि। एवं काव्यलिङ्गादिकमप्यूह्यम्। अपि चात्र मधुरा वृत्तिः—'मधुरायां समाक्रान्ता वर्गस्था पञ्चमैर्निजैः। लकारश्च लसंयुक्तो ह्रस्वव्यवहितौ रणौ' इत्यपि तदुक्तेरत्र यमित्यादौ तथात्वात्। तस्माद्युक्तमेवेदमुदाहरणमिति ॥ २७ ॥ एवं साधारण्येन सप्रपञ्चं सोदाहरणं काव्यलक्षणमभिधायाधुना सामान्यतः प्रसिद्धान् ध्वन्यादिरूपांस्तद्भेदानभिधातुं सरसत्वादिभेदेन सदृष्टान्तं प्रथमं तद्द्वैविध्यमाह—**रसेति**। इदं पूर्वप्रकृतं काव्यं रसमुख्यत्वलक्षणः अलंकारमुख्यत्वलक्षणश्च यो भेदस्तेन क्रमात् सरसाख्यं सरसं काव्यमिदमिति लोकप्रसिद्धसरससंज्ञं तथा चित्राख्यं चित्रं काव्यमिदमिति। व्यवहारसिद्धचित्रसंज्ञं च स्वरम्भोरूशरीरवत् स्वीयाङ्गनाङ्गवत् द्विधा द्विप्रकारं भवेदित्यन्वयः। यथा निरुक्तयुवत्याः शरीरं हि शृङ्गाररसालम्बनतया तत्प्राधान्येन सरसमित्युच्यते, मुक्ताहाराद्यलंकाराश्रयतया तत्प्राधान्येन चित्रमिति चोच्यते तद्वत्प्रकृतकाव्यमपि शृङ्गारादिरसप्राधान्येन सरसं उपमाद्यलंकारप्राधान्येन चित्रमिति च लोकादौ व्यवह्रियत इत्यर्थः। अत्र शृङ्गारो रसः। उपमालंकारः। नचेयमभिनवकल्पनेति वाच्यम्। शब्दचित्रं वाच्यचित्रमित्यादावलंकारप्रधानस्यैव काव्यप्रकाशादौ चित्रपदवाच्यतादर्शनात्। 'इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद्ध्वनिर्बुधैः कथितः' इति तदुक्तध्वन्याद्युत्तमकाव्यस्य रसप्राधान्याविनाभावेन सरसताया अवश्यवाच्यत्वाच्च। तस्माद्युक्तैवेयं कल्पनेति भावः। नच रसालंकारयोः साम्येन तृतीयोऽपि कश्चित् काव्यभेदः स्यादिति शङ्क्यम्। अत्यन्तसाम्यस्य कुत्राप्यसंभवात्। एवमेव सरसभेदादावपि। अत्र मुख्यत्वेत्युक्त्या गुरुमध्यगतेति पूर्वं सप्तदशश्लोकटीकायां मयोदाहृते रसगङ्गाधरध्वन्युदाहरणे नतभ्रूलतिकमिति रूपकालंकारस्य गुणभावेन सत्वेऽपि नाव्याप्तिः। तथा 'हृदये खेलतोरुच्चैस्तन्वङ्ग्याः स्तनयोरिव' इति चन्द्रा-

**तत्राद्यं तु द्विधा व्यङ्ग्यप्रधानगुणभावतः ।**
**प्रथमं ध्वनिसंज्ञं स्यान्नानाभेद्युत्तमोत्तमम् ॥ २९ ॥**

---

लोकीयोपमोदाहरणे गौणत्वेन श्रृङ्गाररससत्वेऽपि नाव्याप्तिः । अत्र स्वपदेन स्वधर्मः शेषेण योग्यता च सूचिता ॥ २८ ॥ तत्र प्रथमोद्दिष्टस्य सरसस्यापि द्वैविध्यं प्रतिजानीते—**तत्रेति** । तत्र सरसचित्रकाव्ययोर्मध्ये इत्यर्थः । तुशब्दः पुनरर्थे । आद्यं सरसाख्यम् । तत्र हेतुं वदन् द्विविधयोस्तयोर्लक्षणमपि संक्षिपति—**व्यङ्ग्येति** । प्रधानं च गुणश्च प्रधानगुणौ तयोर्भावौ व्यङ्ग्यस्य प्रधानगुणभावौ ताभ्याम् । व्यङ्ग्यं प्राधान्येन व्यङ्ग्यगुणभावेन चेत्यर्थः । तयोर्मध्ये प्रथमस्य व्यङ्ग्यप्राधान्यवतः सरसकाव्यभेदस्य ध्वनित्वमुत्तमोत्तमत्वं चाभिदधंस्तद्भेदानामनेकविधत्वमपि विधत्ते-**प्रथममिति** । तस्माद्व्यङ्ग्यप्राधान्यवत्त्वं ध्वनित्वमुत्तमोत्तमत्वं चेति तल्लक्षणं फलितमित्यर्थः । तत्र गुणीभूतव्यङ्ग्ये उत्तमत्वेन वक्ष्यमाणे व्यभिचारवारणाय प्राधान्येति । ननु—'इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद्ध्वनिर्बुधैः कथितः' इति काव्यप्रकाशेऽस्योत्तमत्वमेवोक्तं त्वया तूत्तमोत्तमत्वमुच्यत इत्यभिनवमिदमितिचेन्न । तदाशयं विवृण्वद्भिर्जगन्नाथपण्डितैरेवमेव रसगङ्गाधरे प्रतिपादितत्वात् । तथाहि तत्र काव्यलक्षणं तद्धेतुं चाभिधायोक्तम् । तच्चोत्तमोत्तमोत्तममध्यमाधमभेदाच्चतुर्विधमिति । नच केचिदिमानपि चतुरो भेदानगणयन्त उत्तममध्यमाधमभावेन त्रिविधमेव काव्यमाचक्षते तत्रार्थचित्रशब्दचित्रयोरविशेषेणाधमत्वं युक्तं न वक्तुम् । तारतम्यस्य स्फुटमुपलब्धेरित्यादिना तत्रैव प्रत्युत काव्यप्रकाशखण्डनोपलब्धेः क्व नाम तस्य तद्विवरणशङ्कापि । ततस्त्वदुक्तिस्तदनुसारिण्यपि साहित्यशास्त्रे महामान्येन काव्यप्रकाशेन साकं विरुद्धैवेति वाच्यम् । तस्य पूर्वोत्तरतात्पर्यपर्यालोचने तु निरुक्तरीतेरेव तत्संमतत्वात् । तथाहि काव्यप्रकाशे तावत् 'शब्दचित्रं वाच्यचित्रमव्यङ्ग्यं त्ववरं स्मृतम्' इति सूत्रव्याख्याने अव्यङ्ग्यमिति स्फुटप्रतीयमानार्थरहितमित्यव्यङ्ग्यपदार्थो व्याख्यातः । तेन तत्र स्पष्टतयावभासमानचमत्कारजनकतावच्छेदकावच्छिन्नरसलक्षणव्यङ्ग्यार्थराहित्यादेवोक्तध्वन्यादिकाव्यभेदापेक्षयाऽधमत्वं सिद्धम् । तस्मादनयोः शब्दचित्रार्थचित्राख्यभेदयोरपि मध्ये यत्र अस्फुटस्यापि निरुक्तार्थस्येतरापेक्षयाधिक्यं स काव्ये भेदस्ततोऽधिकः इति कुतो नास्य संमतं स्यात् । नन्वेवं तर्हि किमिति तत्र साधारण्येनोभयोरप्यवरत्वमुक्त, किमिति वा अर्थचित्रापेक्षया अधमस्य शब्दचित्रस्यैव प्रथममुद्देशः कृत इति चेन्न । अवान्तरतारतम्येऽपि निरुक्ताव्यङ्ग्यत्वस्योभयोरपि साधर्म्येण वर्तमानत्वात् । उद्देशक्रमस्य तु 'तददोषौ शब्दार्थौ' इति साधारणकाव्यलक्षणे शब्दस्यैवार्थबोधहेतुत्वेनाभ्यर्हिततामात्रसूचकत्वेन तद्रीत्यात्राप्यर्थचित्रापेक्षयोत्तमत्वरूपदोषानाधायकत्वाच्च । अतएव निरुक्तशब्दार्थचित्रयोरपि गूढं रसवत्त्वमस्त्येवेति यथायोग्यं तयोरेवान्तरतम्यं सूरिभिरूह्यमिति स्वकीयाशयोद्घाटनार्थमेव प्रथमोल्लासे निरुक्तमपि शब्दचित्रादिभेदयुगं षष्ठोल्लासे पुनः प्रतिपादितं मम्मटभट्टैः ।

**कनकं कामिनीं चापि कोविदः कोऽद्य कामयेत् ।**
**अलं काव्यामृतास्वादैरानन्दैकरसस्य मे ॥ ३० ॥**

तद्यथा 'शब्दार्थचित्रं यत्पूर्वं काव्यद्वयमुदाहृतम् । गुणप्राधान्यतस्तत्र स्थितिः शब्दार्थचित्रयोः' इत्यादिना सप्रमाणं सोदाहरणं च तत्रोक्तकाव्यभेदद्वयमुक्त्वान्ते यद्यपि सर्वत्र काव्येऽन्ततो विभावादिरूपतया रसपर्यवसानं तथापि स्फुटरसस्यानुपलम्भादव्यङ्ग्यमेतत्काव्यद्वयमुक्तमिति चोक्तं कण्ठत एव रसवत्त्वमस्मिन् काव्यद्वये । तस्माच्छब्दचित्रापेक्षया अर्थचित्रे सरसताधिक्यस्य 'विनिर्गतं मानदमात्ममन्दिराद्भवत्युपश्रुत्य यदृच्छयापि यम् । ससंभ्रमेन्द्रद्रुतपातितार्गलानिमीलिताक्षीव भियाऽमरावती' इत्यादौ काव्यप्रकाशीयोदाहरणे स्पष्टतरमुपलभ्यमानवत्त्वात्तस्य मध्यमत्वे वक्तव्ये ततोऽधिकरसे गुणीभूतव्यङ्ग्यरूपे तत्पूर्वतने काव्यभेदविशेषे तूत्तमत्वं वाच्यमेव । ततः प्रथमस्यास्य रसवत्तमस्य ध्वनिसंज्ञस्य कुतो नोत्तमोत्तमतेति सहृदयैरेव निवेदनीयम् । अतएव मयोभयैकवाक्यतासंपादनाय रसालंकारेति पूर्वश्लोके काव्यप्रकाशीयतात्पर्यानुसारेण सरसं चित्र चेति काव्यभेदद्वयमुक्त्वाथात्र रसगङ्गाधरीयरीत्या भेदचतुष्टयं वक्तुं सरसस्य प्रथमभेदस्य द्विधात्वं प्रतिज्ञाय तत्र हेतुव्यपदेशेन तयोर्लक्षणमपि संक्षिप्य तत्राद्यस्य ध्वनित्वमुत्तमोत्तमत्वं चोक्तमिति दिक् । एवमग्रेऽपि विरोधपरिहारः कल्प्यः । यत्तु त्वया केचिदित्यादिना काव्यप्रकाशखण्डनमुदाहृतं तत्तु ये तावदेवं काव्यप्रकाशाशयं मदुक्तमविज्ञायापाततस्तदुक्तभेदत्रयाभिमानिनस्तत्परमेवेति सर्वं सुस्थम् ॥ २९ ॥

उक्तलक्षणं व्यङ्ग्यप्राधान्यशालिध्वन्यभिधमुत्तमोत्तमं काव्यमुदाहरति—**कनकमिति** । अद्य कमलासनान्तदृश्यमिथ्यात्वदार्ढ्योदयकाले कः कोविदः 'विद्वान्विपश्चिद्दोषज्ञः सन्सुधीः कोविदो बुधः' इति कोशोक्तेः कः पण्डितः । कनकं सुवर्णं तथा कामिनीमपि अङ्गनामपि । अत्र अपिशब्देन यावत्स्त्रीगुणविशिष्टायाः स्वकीयतरुणीरूपायास्तस्याः सर्वैर्ब्रह्मादिभिरपि कामितत्वात्कनकापेक्षया तस्यां सुखहेतुत्वाधिक्यं द्योतितम् । कामयेत् वाञ्छाविषयीकुर्यादित्यर्थः । मृगजलवत्तयोरपि मृषात्वान्न कोपि विवेकी तत्कामनां कुर्यादिति भावः । अत्र कोविदपदं "साभिप्राये विशेष्ये तु भवेत्परिकराङ्कुरः । चतुर्णां पुरुषार्थानां दाता देवश्चतुर्भुजः' इत्युक्तेः परिकराङ्कुरसूचकम् । तेन यतः कोविदः अतो नैवोक्तकामनां कुर्यादिति रहस्यं द्योतितम् । यदा अन्योपि कश्चिद्विपश्चित्कनककामिन्यौ नैव कामयेत्तदा अहं न कामये इति किमु वक्तव्यमिति विरक्तिः सूचिता । न केवलमेतावदेव किंतु 'मुने मन्दारमञ्जर्यस्तरङ्गा वाऽमृताम्भसः । न तथा ह्लादयन्त्यन्तर्यथा सज्जनसूक्तयः' इति योगवासिष्ठवचनात्सज्जनसूक्तिशब्दिततादृक्काव्यस्य कल्पद्रुममञ्जरीभ्योऽपि तथा सुधाब्धितरङ्गेभ्योऽप्यधिकतमानन्दहेतुत्वोक्तेस्तदपि निरुक्तहेतोरेव नैव मह्यं रोचत इत्याह—**अलमिति** । मे ब्रह्मविदः काव्यामृतास्वादैः काव्यपीयूषपानरसानुभवैः अलम् । 'अलं भूषणपर्याप्तिशक्तिवारणवाचकम्' इत्यमरोक्तेः पर्याप्त-

मित्यर्थः । दिव्यसरसशब्दसुधापानैरपि न किंचित्प्रयोजनमिति भावः । अत्रामृतरूपकेण तस्य कनकाद्यपेक्षयाऽदरणीयत्वं ध्वन्यते । 'स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम्' इति श्रुतेर्निरुक्तकाव्योपलक्षितयावच्छब्दब्रह्माभ्यासरूपे धर्मे तथा पूर्वार्धोक्तकनककामिनीशब्दितार्थकामयोश्चानादरे हेतुं वदन् स्वं विशिनष्टि—**आनन्देति** । 'रसो वै सः' 'एको देवः' 'विज्ञानमानन्दं ब्रह्म' इत्यादिश्रुतिभ्यः अद्वैतानन्दचिदेकरूपस्येत्यर्थः । तस्मात् 'एतावदरे खल्वमृतत्वम्' इति श्रुतेर्मोक्षस्यात्मतत्त्वाभिन्नत्वात्तद्रूपस्य ममैव बुद्धिवृत्तिविशेषप्रतिफलितसुखाभासैः 'एष ह्येवानन्दयाति' 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इति च श्रुतौ स्पष्टमुपपादितैर्धर्मादिपुरुषार्थैर्न किमपि प्रयोजनमित्याशयः । अत्रानन्दैकरसस्येत्यनुभावेन कनककामिनीकाव्यामृतास्वादरूपालम्बनविभावेन कोविद इत्युद्दीपनविभावेन स्मृत्यादिसंचारिभावेन च समुचितेन परिपुष्टः किंशब्दालंशब्दाभ्यां धर्मादिपुमर्थत्रयोपलक्षितयावद्द्वैते निर्वेद एवाभिव्यज्यते तेनात्र रूपकाद्यलंकारापेक्षया शान्ताख्यस्य रसस्य प्राधान्यात्सरसत्वं, तत्रापि कनकादिकामुकविद्वदाक्षेपस्य स्वस्मिन्नद्वैतानन्दत्वेन काव्यामृतास्वादालंभावस्य च वाच्यार्थस्यापेक्षया निरुक्तव्यङ्ग्यार्थस्यैवाधिकचमत्कारकारित्वात्प्रधानीभूतव्यङ्ग्यत्वं, तेन ध्वनिसंज्ञत्वं, ततश्चोत्तमोत्तमत्वं सिद्धम् । अनुभावादीनां स्वरूपं त्वग्रे तत्तत्प्रकरणे वक्ष्यामः । उक्तं हि काव्यप्रकाशादौ—'व्यक्तः स तैर्विभावाद्यैः स्थायीभावो रसः स्मृतः' इति । 'निर्वेदस्थायीभावाख्यः शान्तोऽपि नवमो रसः' इति च । नन्वत्र पूर्वार्धे कनकं केति ककारस्य ककारानन्तर्यं किंचिदश्राव्यं' तथा कोविदः क इति जिह्वामूलीयप्रयोगोऽपि शान्तरसाऽनुचित एवेति दोषद्वयसत्त्वान्नैवास्योक्तलक्षणकाव्यत्वम् । तदुक्तं रसगङ्गाधरे—'वर्णानां स्वानन्तर्यं सकृदेकपदत्वे किंचिदश्रव्यम् । यथा 'ककुभः सुसुरभिः विततगात्रः पललमिवाभाति' इत्यादौ । असकृच्चेदधिकं यथा—'विततततरुस्तरुरेष भाति भूमौ' । एवं भिन्नपदत्वेपि यथा—'शुक करोषि कथं विजने रुचिं' इति । तथा तत्रैव मधुररसेषु वर्जनीयानुपक्रम्य जिह्वामूलीयोपध्मानीयानामिति तत्र तस्य संग्रहः कृतः । तस्मादयुक्तमेतदुदाहरणमिति चेन्न । किंचिदश्रव्यस्यादोषत्वात् । नोचेत्तत्रैव पूर्वग्रन्थे प्रसादाख्यगुणोदाहरणयोः कथं तदुक्तम् । तद्यथा—'चिन्तामीलितमानसो मनसिजः सख्यो विहीनप्रभाः प्राणेशः प्रणयाकुलः पुनरसावास्तां समस्ता कथा । एतत्त्वां प्रतिवेदयामि मम चेदुक्तिं हितां मन्यसे मुग्धे मा कुरु मानमाननमिदं राकापतिर्जेष्यति' इत्यत्र सामान्यतो वर्जनीयमसकृत् मिममेतिमकाराख्यवर्णस्य भिन्नपदत्वे स्वानन्तर्यं तथा ननमित्येकपदत्वेऽपि तत् । तथा प्रभाः प्राणेशः प्रणयाकुलः पुनरित्युपध्मानीयप्रयोगोऽपि । एवं 'वाचा निर्मलया सुधामधुरया यां नाथ शिक्षामदास्तां स्वप्नेऽपि न संस्पृशाम्यहमहं भावावृतो निस्त्रपः । इत्यागःशतशालिनं पुनरपि स्वीयेषु मां बिभ्रतस्त्वत्तो नास्ति दयानिधिर्यदुपते मत्तो न मत्तोऽपरः' इत्यत्र यांयामिति 'यदि दैवज्ञोक्तं स्वकीयभविष्यदायेव ज्ञातव्यं

नतु तस्यापि तदन्वेषणीयम्' इति न्यायेन दोषतादवस्थ्यमेवेतिचेन्न । प्रकृते वक्तुरद्वैतानन्दरूपतया श्रव्यप्रयोगाननुसंधानस्य प्रत्युत गुणत्वाद्दोषत्वस्य तु दूरोत्सारितत्वाच्च। अतएव रसगङ्गाधरेऽपि शान्तरसोदाहरणे—'मलयानिलकालकूटयो रमणीकुन्तलभोगिभोगयोः । श्वपचात्मभुवोर्निरन्तरा मम जाता परमात्मनि स्थितिः' इत्युक्त्वाऽत्रेत्यादिना तदालम्बनाद्यभिधाय यद्यपि प्रथमार्धे उत्तमाधमयोरुपक्रमाद्वितीयार्धे अधमोत्तमवचनं क्रमभङ्गमावहति तथापि वक्तुर्ब्रह्मात्मकतया उत्तमाधमभावज्ञानवैकल्यं संपन्नमिति द्योतनाय क्रमभङ्गो गुण एवेत्युक्तम् । मम तूक्तरसगङ्गाधरोदाहरणेऽप्युक्तक्रमभङ्ग एव नास्ति, तत्रापि उत्तमाधमक्रमस्यैव श्वपचेत्यादावपि सत्त्वात् । तथाहि 'मकरध्वज आत्मभूः' इत्यमरादात्मभुवः कामस्य श्वपचशब्दवाच्यचाण्डालापेक्षयाप्यधमत्वं तु चाण्डालस्यापि क्वचिदपि गुरुतल्पगमनप्रेरकत्वाप्रसिद्धेर्मदनस्य तु चन्द्रं तारायां गुरुपत्न्या रमयितुस्तत्प्रसिद्धेर्युक्तमेवेति गोदैव बोधयति । यद्वा मदनस्य देवत्वेन चाण्डालापेक्षयाधमत्वध्वननमनुचितमेव निवृत्तस्यापि वक्तुरिति केषांचित्प्रवृत्तानां श्रद्धाजडानामाशङ्का चेत्पूर्वार्धेपि शृङ्गारस्योद्दीपनालम्बनविभावयोर्मलयानिलरमणीकुन्तलयोर्निरुक्तवक्रदृशा कालकूटभोगिभोगापेक्षया अधमत्वमेवेति नैव क्रमभङ्गः क्व पुनस्तद्वारणमिति दिक् । वस्तुतस्तु कनकं कामिनी चेत्यत्र निरुक्ताश्रव्यत्वलक्षणो दोष एव नास्ति । ककारयोरनुस्वारेण व्यवधानात् । तस्मान्न किंचिदेतत् । यत्तु कोविदः क इति जिह्वामूलीयप्रयोगस्य शान्तरसानुचितत्वेन दोषत्वमुक्तं तदपि न । रसगङ्गाधर एव मधुररसेषु वर्जनीयानुक्त्वा अन्ते असकृत्प्रयोगं नैकट्येन वर्जयेदित्युक्तत्वेन तेषां सकृत् प्रयोगे त्वदोषत्वस्यार्थत एव सिद्धत्वात् । अत एव काव्यप्रकाशे शान्तरसोदाहरणे सकृज्जिह्वामूलीयप्रयोगः । तद्यथा 'अहौ वा हारे वा कुसुमशयने वा दृषदि वा मणौ वा लोष्ठे वा बलवति रिपौ वा सुहृदि वा । तृणे वा स्त्रैणे वा मम समदृशो यान्तु दिवसाः क्वचित्पुण्येऽरण्ये शिवशिवशिवेति प्रलपतः' इति। तस्मान्न कोऽप्यत्र दोषलेशोऽपीति युक्तमेवेदमुदाहरणम्। यथा वा मदीयनिरञ्जनमञ्जर्याम्—'मधुरैरलमङ्गनाङ्गसङ्गैरपि संगीतसुधाम्बुधेस्तरङ्गैः । अधुना रमते मनो मदीयं परमानन्दघने गतद्वितीये' इति । अत्रापि निर्वेद एव प्राधान्येन व्यज्यते वाच्यार्थादिकं तु तत्र गुणीभूतमेव । यथावा तत्रैव–'रे बालकोकिल कलैरलमुत्पलाक्षि लोलैरलं तव विलोचनयोर्विलासैः । माकन्दगन्धलहरीभिरपीह वायो स्वान्तं तु मेऽद्य परमात्मनि शान्तिमेति' । यथावा—'किं मन्दमन्दहसितैरसितैरपाङ्गैरुन्मीलदिङ्गितवचोमृतपूरभङ्गैः । बाले वयं तु निगमान्तमतेन तृप्ताश्चेतो न मायिकसुखे विनियोजयामः' इति । अत्र यद्यपि मधुररसेषु तु दीर्घसमासेत्यादिना रसगङ्गाधरे दीर्घसमासस्य शान्तरसादौ वर्जनीयत्वोक्तेस्तृतीयचरणे तत्सत्वं दोष इव भाति तथापि मलयानिलेत्युक्ततदुदाहरण एव पूर्वार्धे तत्सत्वात्किं मयैवापराद्धं तथापि यदि वक्तुरद्वैतनिष्ठत्वेनानुसंधानाभाव एव तत्र शरणं तर्हि प्रकृतेऽपि तदेवास्त्विति

**द्वितीयं तूत्तमं ज्ञेयमष्टधा परिकीर्तितम् ।**
**विवेकोदयतः सूर्यस्तमश्चन्द्रः कलङ्कितः ॥ ३१ ॥**
**द्विधान्यमपि भूर्येव मध्यमं चाधमं क्रमात् ।**
**गुणप्रधानभावेन मिथः शब्दार्थयोः स्थितेः ॥ ३२ ॥**

---

दिक् । अत्रार्धद्वयं क्रमात् शब्दार्थालंकारयोर्गुणीभावाभिप्रायेणेति ज्ञेयम् । रूपकपरिकरावलंकारौ । शेषं तु प्रागुक्तदिशात्रापि योज्यमित्यलं विस्तरतः ॥ ३० ॥ अथ क्रमप्राप्तं गुणीभूतव्यङ्ग्यलक्षणं द्वितीयं सरसकाव्यभेदमुद्दिश्य तस्योत्तमत्वं वक्ष्यमाणलक्षणमष्टविधभेदभिन्नत्वं च विधत्ते—**द्वितीयं त्विति** । वैलक्षण्यावद्योती तुशब्दः । परिकीर्तितं काव्यप्रकाशादौ स्पष्टं उपपादितमित्यर्थः । एतेनोक्तकल्पनायाः समूलत्वं सूचितम् । तस्माद्गुणीभूतव्यङ्ग्यत्वमुत्तमकाव्यत्वमिति तल्लक्षणं सिद्धम् । तदुदाहरति—**विवेकोदयत इति** । विवेकः ब्रह्मात्मैक्यावबोधस्तस्योदयेन विचारितमहावाक्यादधिकारिणि प्रादुर्भावेनेत्यर्थः । सार्वविभक्तिकत्वात् तृतीयार्थस्तसिः । अयंभावः—सूर्यचन्द्रयोर्मनसि तमोपहारकत्वशान्तिकारकत्वगर्वः प्रागतीवासीत्, यदा प्रभृति संसारेऽस्मिन्नुक्तविवेकोदयः कस्मिंश्चिदधिकारिणि संपन्नस्तदारभ्यैव तस्यैवोक्तधर्मद्वयं निरतिशयमुभावपि यथा क्रममवेक्ष्य स्वावमानात्संतापकलङ्कभागिनौ तौ संपन्नौ नतु तयोः पूर्वं तमत्वं कलङ्कितत्वं चासेति । तेनैवंजातीयकव्यङ्ग्यार्थस्यात्र विवेकोदयमात्रेण सूर्यचन्द्रयोस्तमस्त्वादिरूपवाच्यार्थापेक्षयाधिकचमत्कारहेतुत्वाभावाद्गुणीभूतव्यङ्ग्यत्वं तथा स्पष्टत्वादूढव्यङ्ग्यत्वमपि बोध्यम् । उत्तमत्वं तु व्यङ्ग्यार्थसत्त्वायुक्तमेव । तस्मान्निरतिशयाविद्यातमःशामकः शान्तिदायकश्च विवेक एवादरणीय इति ध्वनितम् । यथावा मदीयाद्वैतामृतमञ्जर्याम्–'रसभरितापि गतरसा चतुरतराप्यतुलमन्थरोत्थाने । विलसति मतिरेकान्ते शान्तस्येयं रतान्तकान्तेव' इति । अत्रोक्तमतिरप्युक्तकान्तातुल्यैवेति किं कान्तयेति निर्वेदलक्षणं व्यङ्ग्यं तु गौणमेवेति । अत्र शान्त एव रसः, गम्योत्प्रेक्षालंकारः । तल्लक्षणं तु अत्राग्रे वक्ष्यते ॥ ३१ ॥ एवं सरसकाव्यभेदद्वयमुक्त्वाथ चित्रकाव्यस्यापि द्वैविध्यं प्रतिजानीते—**द्विधेति** । अन्यं चित्राख्यं द्विधा द्विप्रकारम् । तस्य द्विविधस्यापि प्रत्येकं बहुप्रकारत्वं विधत्ते—**भूर्येवेति** । वक्ष्यमाणोपमादिनानाविधभेदभिन्नमेवेत्यर्थः । किं तद्द्विविधत्वमित्यत आह—**मध्यमं चेति** । तत्र हेतुं वदंस्तल्लक्षणे अपि द्योतयति—**गुणेति** । शब्दार्थयोः सुबन्तादेः शक्तस्य वा पदस्य तद्वाच्यस्यार्थस्य चेत्यर्थः । इदमेव भेदद्वयं काव्यप्रकाशादौ शब्दचित्रं वाच्यचित्रमित्युक्तम् । मिथः परस्परं गुणप्रधानभावेन गुणप्रधानयोर्भावस्तेन गुणत्वेन प्रधानत्वेन चेत्यर्थः । स्थितेः विद्यमानत्वादित्यर्थः । एवं चार्थप्राधान्ये सति गुणीभूतशब्दत्वं मध्यमकाव्यत्वं शब्दप्राधान्ये सति गुणीभूतार्थत्वमधमकाव्यत्वं चेति तयोर्लक्षणे फलिते इत्यर्थः । अत्र प्रधा-

**हंसा लसन्ति ते तीरे गौरीस्मेरा इवेश्वरे ।**
**रिङ्गत्तुङ्गतरङ्गाङ्गि गङ्गे निःसङ्कतास्तुमे ॥ ३३ ॥**
**तद्धेतुस्तत्स्वरूपानुकूला शब्दाद्युपस्थितिः ।**
**सा देवतादिकृपया शास्त्राभ्यासादितोथवा ॥ ३४ ॥**
**गोक्षीराब्धेः शिवगुरुविबुधसहायोऽच्युतः समुद्दध्रे ।**
**हेत्वादिनिर्णयपरं धन्वन्तरिसंज्ञकं प्रथमरत्नम् ॥ ३५ ॥**

---

नत्वं चमत्कारजनकत्वं गुणत्वं तु तदनुकूलत्वमेव ज्ञेयम् ॥ ३२ ॥ क्रमेणोदाहरति—**हंसा इति** । ईश्वरे शिवे गौरीस्मेराः पार्वतीस्मितकान्तयः । गङ्गातीरस्य सितसिकतामयत्वेन शुक्लत्वाच्छिवसाम्यम् । अत्रोपमालंकाररूपार्थस्यैव चमत्कारित्वादनुप्रासादिशब्दालंकारस्य तु तदनुकूलत्वादर्थचित्राख्यं मध्यमकाव्यत्वम् । यथा-वाऽस्मदीयनीतिशतपत्रे—'तारुण्यारोपितगुणे सुन्दरीभ्रूशरासने । नम्रत्वमेव संपाद्य जगज्जयति मन्मथः' इति । **रिङ्गदिति** । रिङ्गन्तश्चलन्तः अतएव तुङ्गाः पृथुला ये तरङ्गास्तन्मयं अङ्गं शरीरं यस्यास्तत्संबुद्धौ । अत्रानुप्रासरूपशब्दालंकारस्यैव प्राधान्याच्छब्दचित्राख्याधमकाव्यत्वमेव । एतादृशकाव्यस्य भूरिप्रसिद्धत्वान्नोदाहरणान्तरं मयोच्यते । एवं ध्वन्यादिचतुर्विधं काव्यं सिद्धम् ॥ ३३ ॥ एवं ध्वन्यादिरूपं काव्यं चतुर्विधपुरुषार्थप्रयोजकत्वेन प्रेक्षावतां परमादरणीयमित्युक्त्वाऽधुना कथमेतदनुपमं हितसाधनं कर्तुं सामर्थ्यमाविर्भूयादिति शिष्याशङ्कायां तदुपायमुपदिशति—**तद्धेतुरिति** । तस्य निरुक्तध्वन्यादिकाव्यस्य हेतुः। कारणमित्यर्थः । तस्य काव्यस्य रूपं ध्वन्यादिलक्षणं वपुस्तस्मै अनुकूला या शब्दाद्युपस्थितिः शब्दानां रामादिपदानां अर्थानां अनन्तकल्याणगुणाधिकरणपरमेश्वरादिरूपाणां उपस्थितिः स्फूर्तिरित्यर्थः । सैव कथं स्यात्तत्राह—**सेति** । प्रथमादादिपदात्सद्गुरुमहापुरुषादेर्ग्रहः, द्वितीयेन तु लौकिककौशलादेरिति ॥ ३४ ॥ इदानीं प्रकरणनाम स्वनाम च श्लेषेण कथयन्नुपसंहरति—**गोक्षीराब्धेरिति**। गोर्वाण्याः क्षीराणीव क्षीराणि सारांशास्त एवापः उदकानि धीयन्ते यस्मिन् स तथा । वाक्सारीभूतसाहित्यशास्त्रदुग्धाम्बुधेः सकाशादित्यर्थः । पक्षे गावः आविर्भविष्यमाणचन्द्रस्य किरणाः कामधेनवो वा तद्विशिष्टो यः क्षिराब्धिस्तस्मादित्यर्थः । **शिवेति** । शिवः शंकरः गुरवः, श्रीमन्नारायणशास्त्रिप्रभृतयः, विबुधाः पण्डितास्ते सहाया यस्य स तथा । पक्षे गुरुर्बृहस्पतिः, विबुधा देवाः, अच्युतः प्रकृतग्रन्थकृत् पक्षे विष्णुः । अत्रास्मच्छब्दाप्रयोगस्तस्मिन् कर्तृत्वाभावोऽस्येश्वरप्रेरणाजन्यत्वं च सूचितम् । हेत्वादिनिर्णयेति, हेतुः 'काव्यकारणम्' । आदिना तत्प्रयोजने स्वरूपे तेषां यो निर्णयो विवेकेनावधारणं तत्र परं सादरमित्यर्थः । पक्षे हेत्वादयः कफादितज्जन्यरोगाः । शेषं स्पष्टम् ॥ ३५ ॥

इति स्वकृतसाहित्यसारव्याख्यायां सरसामोदसमाख्यायां प्रथमप्रकरणं संपूर्णम् ।

---

## ऐरावतरत्नम् २.

**काव्याविर्भूतिहेत्वादिप्रोच्यैवमथ बोधये।**
**द्विजोक्तशब्दाद्युक्त्यैव स्वरसज्ञं सती यथा॥ १॥**

अथारभ्यमाणप्रकरणस्य पूर्वप्रकरणेन सह संगतिं सूचयन् वृत्तानुवादपूर्वकं शब्दार्थस्वरूपनिर्णयविवरणं प्रतिजानीते—**काव्येति**। अहमित्यध्याहारः । एवं पूर्वप्रकरणोक्तरीत्या काव्याविर्भूतिहेत्वादिकाव्यस्य प्रागुक्तलक्षणप्रबन्धस्य आविर्भूतिः वाल्मीक्यादिमुखत इव स्ववदनतः प्रादुर्भावः । एतेन सत्कार्यवादः सूचितः । तथाच बीजरूपेण यावच्छब्दब्रह्ममायावच्छिन्ने ब्रह्मणि वर्तत एव परंतु तत्तत्सामग्रीसमवधानेन प्रादुर्भवतीति तात्पर्यम् । तेनान्तर्याम्येव तत्कर्तेति सिद्धम् । अतएवात्राहंपदाप्रयोगः । तस्य हेत्वादि हेतुस्वरूपप्रयोजनादि, पक्षे 'शुक्रो दैत्यगुरुः काव्यः' इत्यमरोक्तेर्ब्राह्ममुहूर्ते संजातस्य शुक्रोदयस्य यद्धेत्वादिदीपपाण्डिमत्वादि प्रातःसामीप्यव्यञ्जकमित्यर्थः । अत्रादिपदात्तर्कादिग्रहः । प्रोच्य प्रकर्षेणानेकग्रन्थरहस्यग्रथनलक्षणेनोत्कर्षेणोक्त्वेत्यर्थः । पक्षे 'अभूत्प्राची पिङ्गा रसपतिरिव प्राश्य कनकं गतच्छायश्चन्द्रो बुधवर इव ग्राम्यसदसि । परिक्षीणास्तारा नृपतय इवानुद्यमपरा न राजन्ते दीपा द्रविणरहितानामिव गुणाः'इत्यादिश्लोकपठनलक्षणेन। शास्त्रीयादिचातुर्यरूपेणोत्कर्षेणोक्त्वेतियावत् । अथ निरुक्तोक्त्यनन्तरम् द्विजोक्तशब्दाद्युक्त्यैव द्विजाः काव्यप्रकाशकारमंमटभट्टादयः प्राचीना अलंकारशास्त्राचार्या ब्राह्मणास्तैरुक्ताः स्वस्वग्रन्थे प्रतिपादिताः ये शब्दादयः रामादिशब्दादयः । आदिपदेनार्थग्रहः । तेषां या उक्तिः स्वरूपकथनं तयेत्यर्थः । एवकारेण निर्मूलाभिनवकल्पनव्यावृत्तिः।पक्षे द्विजाः कोकिलादयः पक्षिणः। 'दन्तविप्राण्डजा द्विजाः इति कोशः । तैरुक्ताः प्रत्यूषकाले स्वाभाव्येनोच्चारिता ये शब्दाः कुहूरित्यादिरवास्ते द्विजोक्तशब्दाः । आदिपदाद्गोवत्सध्वनिग्रहणम् । तेषां या उक्तिः कथनं 'भोः प्राणनाथाः श्रीमद्भिर्व्युत्थातव्यं विमुच्य माम्।ब्राह्मे मुहूर्ते कूजन्ति कोकिला धेनुवत्सकाः' इत्याद्याकारा योक्तिस्तयेत्यर्थः । अवधारणेन निरुक्तश्लोकस्थपूर्वार्धकथनव्यावृत्तिः तस्योत्तरार्धोक्तपूर्वोदाहृतश्लोकोक्तपदार्थैर्व्यञ्जनयैवोक्त्यौचित्यादन्यथाऽसतीत्वापादकामर्यादासंभवाच्च । स्वरसज्ञं स्वस्य स्वकीयग्रन्थस्य यो रसज्ञस्तं गुणज्ञमित्यर्थः । एतेन मूढमत्सरिणोर्व्युदासः । एवमित्यनुकृष्य योज्यम् । तथाच वक्ष्यमाणं शब्दादीत्यर्थः । पक्षे भोः प्राणेत्यादिव्युत्थानकथनम् । बोधये ज्ञापयामीत्यर्थः । शब्दादिज्ञानकौशलशालिनं करोमीतियावत् । पक्षे स्वस्या अधररसज्ञम् । तत्रानुरूपो दृष्टान्तः सतीति । अत्र सतीपदेनोक्तबोधनार्हत्वं ध्वनितम् । अयं भावः-पूर्वप्रकरणे शब्दसमूहविशेषः काव्यमिति तत्सामान्यलक्षणे सिद्धे तत्र शब्दादिस्वरूपजिज्ञासायामवसरसंगत्यात्र तद्विवरणं क्रियत इति । ननु स्वरसजिज्ञासुमित्येव वाच्यं ज्ञस्य बोधनानुपयोगादिति चेन्न । स्वस्य रसं परोक्षं जानातीत्यभिप्रेतत्वेन बुभुत्सोरपि ग्रहणाद्बुधस्य तूक्तगुणप्रकाशनार्थमेव ग्रहणम् ।

त्रिधा वृत्तिभिदा शक्तिलक्षणाव्यञ्जनाह्वया ।
मुग्धमध्यप्रगल्भाख्यावस्थया स्त्रीव भाति वाक् ॥ २ ॥
बोद्धव्योऽस्मात्पदादर्थोऽयमित्याद्याकारिकेशितुः ।
इच्छापि संकेताख्यात्र शक्तिरित्याहुरौहिकाः ॥ ३ ॥
अर्थप्रतीतिजनने स्वतः सामर्थ्यलक्षणम् ।
शब्देनार्थस्य संबन्धं शक्तिं मीमांसका जगुः ॥ ४ ॥

---

शृङ्गारो रसः । उपमालंकारः ॥ १ ॥ तत्र शक्त्याद्यपरनामकाभिधादिवृत्तिभेदात्रिविधः शब्द इत्याह—**त्रिधेति** । शक्त्यादीनां लक्षणं तत्रैवाग्रे वक्ष्यते । तत्राङ्कुरितयौवना मुग्धा, समानलज्जामदना मध्या, पतिमात्रकेलिकलापकोविदा प्रगल्भा, चेति रसमञ्जर्यामुक्तं यन्मुग्धादीनां लक्षणं तद्रूपमुग्धाद्यानामवस्था तयेत्यर्थः। अवस्थानां त्रैविध्येऽपि जात्यभिप्रायेणैकवचनम् । स्त्रीत्यत्र साध्व्येव । तस्या एव लोकादौ स्वार्थप्रकाशनार्हत्वेन वागुपमात्वसंभवादिति । 'आख्याह्वे अभिधानं च' इत्यमरः । शेषं स्पष्टम् ॥ २ ॥ एवं शब्दस्य वृत्तिभेदात्रैविध्यं प्रतिज्ञाय तत्र प्रथमोद्दिष्टत्वाच्छक्तिवृत्तिं व्युत्पादयितुं मतभेदेन तस्या अनेकविधत्वात्प्रथमं तार्किकमतेन तां लक्षयति—**बोद्धव्य इति** । ईशितुः परमेश्वरस्य संकेताख्या संकेतनाम्नीत्यर्थः । अपिना तन्निष्ठज्ञानकृत्योः संग्रहः । अत्र लोके वेदे च औहिकाः ऊहयन्तीत्यौहिकाः । तार्किका इत्यर्थः । तदुक्तं न्यायसिद्धान्तमञ्जर्याम् । स च संकेतोऽस्मात्पदादयमर्थो बोद्धव्य इत्याकारिकेच्छा हन्तैवं पामरादिसंकेतिता अपि शब्दा अभिधायकाः स्युरितिचेन्न । नहि संकेतमात्रमभिधा किं त्वीश्वरसंकेत इति ॥ ३ ॥ एवं तार्किकसंमतं शब्दशक्तिलक्षणमभिधायाथ मीमांसकमतां तां लक्षयति—**अर्थेति** । अर्थप्रतीतिजनने रामशब्दश्रवणोत्तरं दाशरथ्यात्मकपदार्थानुभवोत्पत्तावित्यर्थः । स्वतः स्वाभाव्येन सामर्थ्यलक्षणं सामर्थ्यशब्दितं व्युत्पन्नस्य स्वश्रवणमात्रेणैवावश्यमर्थज्ञानजननदक्षत्वरूपमित्यर्थः । उक्तं हि संक्षेपशारीरके श्रीमत्सर्वज्ञात्ममुनीश्वरचरणैर्व्यवहारे भट्टनयानुसारेण—'व्युत्पन्नस्य हि बुद्धिजन्म सहसा वाक्यश्रुतौ दृश्यते' इति । एतादृशं शब्देन रामादिशब्देन सह अर्थस्य दाशरथ्याद्यर्थस्य संबन्धं बोध्यबोधकतारूपमभिधेयाभिधायक भावात्मकं वा संबन्धमेव शक्तिं शक्तिशब्दाभिधेयं मीमांसकाः पूर्वमीमांसका भाट्टा इत्यर्थः । जगुः स्वस्वग्रन्थेषु प्रतिपादयामासुरित्यर्थः । तथा चोक्तं भाट्टरहस्ये—नहि 'अस्मात्पदादयमर्थो बोद्धव्यः' इत्याकारकेच्छारूपं तात्पर्यं वेदे संभवति । अतस्तत्रातिरिक्तः शब्दनिष्ठो धर्मविशेष एव तात्पर्यं भट्टमते वाच्यमिति । नच तात्पर्यस्यैव लक्षणमुक्तं नतु शक्तेरिति वाच्यम् । यत्परः शब्दः स शब्दार्थ इति न्यायात्तात्पर्यशब्देन तस्या एवात्र ग्राह्यत्वात् । अभिधा शक्तिः सामर्थ्यं तात्पर्यमित्यनर्थान्तरम् । ननु तत्राप्युदाहृतग्रन्थे तार्किकसंमतशक्त्यतिरिक्तः शब्दनिष्ठो धर्मविशेष एव शक्तिलक्षणत्वेन संमतस्तत्कथं त्वदुक्त-

**तत्र लाक्षणिके शब्देऽपीश्वरेच्छास्त्यतोऽखिला ।**
**उच्छिद्येल्लक्षणातोऽत्र मीमांसकमतं मतम् ॥ ५ ॥**
**सा जातियुक्तव्यक्तौ स्याज्जातिमात्रे तथा क्रमात् ।**
**मतद्वये तथाप्यन्त्या युक्ता लाघवतोऽभिधा ॥ ६ ॥**
**किंच कार्यान्विते शक्तिमाहुः प्राभाकरा न तत् ।**
**युक्तं गौरवतः किंतु लाघवात्साऽन्वितैकगा ॥ ७ ॥**

---

लक्षणैकमत्यमिति चेन्न । विभावने तु तस्य मदुक्तलक्षणमात्रपर्यवसन्नत्वात् । तथाहि नहीत्यादिग्रन्थेन वेदस्यानादित्वेनापौरुषेयत्वादुक्तेच्छारूपतात्पर्यस्य तत्राभाव इत्यवश्यं वक्तव्यं तेन तत्रार्थप्रतीतिजनने स्वत एव सामर्थ्यमित्यर्थसिद्धमेव । तदेवात्र मया पूर्वार्धे कथितमिति कुतो वैमत्यावकाशः । एवं तर्हि तृतीयचरणो व्यर्थ एवेति चेत् सत्यं, तथापि तस्य तत्परिष्कारार्थत्वेनोपयुक्तत्वात्सांगत्यमेव निरुक्तसामर्थ्ये मे तु शब्द एव तिष्ठतीति तस्य शब्दनिष्ठधर्मविशेषत्वमप्यर्थादेव लब्धमिति सर्वमवदातम् । शब्देनार्थस्येत्युपलक्षणमर्थेन वाशब्दस्येत्यस्यापि । अत एवोक्तं रसगङ्गाधरे—'शक्त्याख्योऽर्थस्य शब्दगतः शब्दस्यार्थगतो वा संबन्धविशेषोऽभिधेति ॥ ४ ॥ तदत्र मतद्वये किं श्रेय इति चेदन्त्यमेवेत्याह—**तत्रेति** । मतद्वयमध्य इत्यर्थः । उपलक्षणमिदं मतान्तराणामपि । तानि च गौरवभियाऽत्रानुपन्यस्तान्यप्याकरतो ज्ञेयानि । नन्वाद्यमेव कुतो नाङ्गीक्रियत इति चेत्तत्र हेतुमाह—**लाक्षणिक** इत्यादिना । गङ्गायां घोष इत्यादौ शब्देऽपीत्यर्थः । अपिशब्देन लाक्षणिकभिन्नशब्द एवोक्तेच्छासत्त्ववादव्युदासः । ईश्वरस्य विभुत्वेन तदिच्छायाः सर्वत्र सत्त्वात् । दीधितिकृन्मते शब्दाश्रयीभूतस्याकाशस्येश्वरानतिरिक्तत्वेनतदिच्छाशब्दयोः सामानाधिकरण्यात्कार्यमात्रं प्रतीश्वरेच्छायाः साधारणकारणत्वाच्च लक्षणोच्छेदप्रसङ्ग इत्याशयः । निगमयति । **अतइति** । अत्र लोके वेदे च मतं निर्दोषव्यवहारघटकत्वेन प्रकृतालंकारशास्त्रेऽपि संमतमित्यर्थः ॥५॥ अस्त्वेवं शक्तिस्वरूपविवरणं परंतु किंविषयिणी सेत्याकाङ्क्षायां क्रमेण तद्विषयभेदं तार्किकादिमते प्रदर्श्य प्रकृते मीमांसकसंमतमेव तद्विषयमादरणीयतयोपपादयति—**सेति** । सा पूर्वोक्तलक्षणा शब्दशक्तिः जातियुक्तव्यक्तौ गोत्वविशिष्टे गवि तथा जातिमात्रे गोत्व एव क्रमादनुक्रमेण मतद्वये तार्किकमते जातिविशिष्टव्यक्तौ मीमांसकमते च जातावेव स्यादित्यन्वयः । तदुक्तं न्यायसिद्धान्तमञ्जर्याम् । तस्मात् गोत्वविशिष्ट एव शक्तिरिति मीमांसान्यायप्रकाशेऽपि । यच्च यस्मात्प्रतीयते तत्तस्य वाच्यं यथा गोशब्दस्य गोत्वमिति । एवं मतद्वयं निरूप्य तत्र लाघवान्मीमांसकमतं स्वादरणीयमित्याह—**अन्त्येत्यादिना** ॥ ६ ॥ प्रसङ्गात्प्राभाकरमतमुपन्यस्यति—**किंचेति** । कार्यान्विते गामानयेत्यादावानयनादिक्रियान्विते गवादावित्यर्थः । तत्खण्डनं प्रतिजानीते—**न तदिति** । तत्र हेतुमाह—**गौरव इति** । इति तर्हि क सेत्याकाङ्क्षायां सयुक्तिकं स्वसिद्धान्तं बोधयति–**किंत्वित्यादिना** । सा शब्द-

**सा पुनस्त्रिविधा रूढियोगतन्मिश्रभेदतः।**
**समुदायैकशक्तिर्या सैव रूढिर्यथा शिवः॥ ८॥**
**योगोऽवयवमात्रस्य शक्तिर्यद्वृत्प्रबोधकः।**
**उभयोः संकरो योगरूढिर्नारायणो यथा॥ ९॥**
**तत्राप्याद्या चतुर्धा स्यान्महाभाष्यानुसारतः।**
**वक्ष्यमाणभिदा ज्ञेयं शिष्टं द्वयमपि द्विधा॥ १०॥**
**गौः शुक्लोऽथ चलो डित्थ इति शब्दा वदन्त्यमी।**
**जातिं गुणं क्रियां द्रव्यमिति पातञ्जलं मतम्॥ ११॥**
**विभक्त्यन्तं पदं प्राहुः पाणिनीयमतानुगाः।**
**शक्तिमेव तदित्यूचुस्तार्किका अस्तु चोभयम्॥ १२॥**
**योगः पदार्थयोरेको धातुप्रत्यययोः परः।**
**चित्रगुर्देशिको योगरूढिः श्रीशो हरिस्तथा॥ १३॥**

---

शक्तिः अन्वितैकगा। दशमस्त्वमसीत्यादावन्वयघटितार्थमात्रविषयिणीत्यर्थः॥ ७॥ अथ तस्या अपि त्रैविध्यमभिधत्ते—**सा पुनरिति**। तत्र हेतुं वदंस्तद्भेदानुद्दिशति—**रूढीति**। तन्मिश्रो योगरूढिः। तत्र क्रमेण सोदाहरणानि तल्लक्षणानि संक्षिपति—**समुदायैके**त्यादिना सार्धेन। समुदायोऽक्षरसमूहः॥ ८॥ **अवयवेति**। अवयवाः पदार्थाः। नराणां जीवानां समूहो नारं तदयनं व्यापकत्वेनात्मत्वेन च स्थानं यस्य स तथा॥ ९॥ एवं रूढ्यादित्रयं निरूप्याथ रूढेश्चातुर्विध्यं प्रतिजानीते—**तत्रापीति**। तत्रापि। निरुक्तरूढ्यादित्रयमध्येऽपीत्यर्थः। आद्या रूढिः। उक्तं हि महाभाष्ये–'गौः शुक्लश्चलो डित्थ इत्यादौ चतुष्टयी शब्दानां प्रवृत्तिः' इति। योगादेरपि प्रत्येकं द्वैविध्यं प्रतिजानीते—**शिष्टमिति**। वक्ष्यमाणभिदा द्विधा ज्ञेयमिति संबन्धः॥ १०॥ प्रतिज्ञातमहाभाष्यमर्थतः पठन्नुक्तचातुर्विध्यं सोदाहरणं विवृणोति—**गौरित्यादिना**। इति अमी शब्दा इति योज्यम्। पतञ्जलेरिदं पातञ्जलम्॥ ११॥ अथ क्रमप्राप्तं प्रतिज्ञातयोगादिभेदद्वैविध्यं वक्तुं तदुपयोगित्वेन पदस्वरूपं मतभेदपूर्वकमाह—**विभक्त्यन्तमिति**। तत्र तव किं संमतमिति चेद्दोषाभावादुभयमपीत्याह—**अस्त्विति**। चोऽप्यर्थे। उभयमप्यस्तु का नः क्षतिरिति तात्पर्यम्॥ १२॥ एवं पदलक्षणमभिधाय पदार्थयोर्योगादिभेदेन योगतन्मिश्रयोः सोदाहरणं प्रत्येकं द्विविधत्वमाह—**योग इत्यादिना**। **चित्रगुरिति**। चित्राः विचित्रार्थद्योतिकाः गावः वाचो यस्य स तथेति प्रथमभेदस्योदाहरणम्। दिशत्युपदिशतीति देशिक इति द्वितीयस्येत्यर्थः। **योगरूढिरिति**। योगरूढिसंज्ञकः शक्तिभेदोऽपि। तथा निरुक्तयोगाख्यभेदवत्पदार्थयोर्योगेन प्रकृतिप्रत्यययोर्योगेन च द्विधेति योज्यम्। तयोः क्रमेणोदाहरणे

**साकाङ्क्षायोग्यतासत्तितत्कुलं वाक्यमुच्यते ।
यथा गामानयेत्यादि तदखण्डमुदीरितम् ॥ १४ ॥
आकाङ्क्षान्वयबोध्यन्यपदापेक्षा पदस्य या ।
विधेयधर्मसामर्थ्यं पदार्थे योग्यता मता ॥ १५ ॥
आसत्तिरविलम्बेन पदानां कथनं भवेत् ।
एतद्विना घटं सिञ्चाग्निनेत्यादि न बोधकृत् ॥ १६ ॥
केचित्त्वाहुरयोग्यत्वनिश्चयं प्रतिबन्धकम् ।
ततो न वह्निना सिञ्चेदिति वाक्यान्मतिर्भवेत् ॥ १७ ॥
असमाप्तार्थकं खण्डवाक्यं यो गौस्तमाहर ।
क्वचिदेकपदेऽप्येतद्दृश्यत्वादिति भो इति ॥ १८ ॥**

---

**श्रीशो हरिरिति** ॥ १३ ॥ एवं पदतदर्थं शक्तिनिरूपणप्रसङ्गात्संक्षिप्यावसरप्राप्तं वाक्यं लक्षयति—**साकाङ्क्षेति** । आकाङ्क्षादिस्वरूपमत्रैवाग्रे वक्ष्यते । तत्कुलं तेषां निरुक्तलक्षणानां पदानां कुलम् । कदम्बमित्यर्थः । उदाहरति—**यथेति** । इदमेवाखण्डवाक्यमित्याह—**तदिति** ॥ १४ ॥ ननु किं तदाकाङ्क्षादित्रयमित्याशङ्कायां तल्लक्षयति—**आकाङ्क्षेत्यादिना** क्रमात्सार्धेन । या पदस्य घटमित्यादिशब्दरूपस्य अन्वयबोध्यन्यपदापेक्षा । अन्वयं बोधयति ज्ञापयतीति तथा तादृशं यदन्यपदं आनयेत्यादिपदं तस्य अपेक्षा वाञ्छा सैवाकाङ्क्षेत्यर्थः । **विधेयेति** । विधेयः उपदेशः यो धर्मस्तस्य सेचनादिरूपस्य पदार्थे जलादौ यत्सामर्थ्यं सैव योग्यतेत्यर्थः ॥ १५ ॥ **आसत्तिरिति** । स्पष्टार्थः । एतत्त्रयं विनाप्यस्तु शाब्दबोधः को दोष इति चेत्तत्राह—**एतदिति** । एतत् उक्तलक्षणं आकाङ्क्षादित्रयं विना घटं इति पदं सिञ्चेतिपदेन सह साकाङ्क्षं नास्ति । सेकस्य वृक्ष एवोपयोगात्, घटे तदनुपयोगाच्च । किंतु निराकाङ्क्षमेवेत्यत्र न शाब्दबोधः । तस्मादिदं निराकाङ्क्षतोदाहरणम्, अग्निना सिञ्चेत्ययोग्यतोदाहरणमिति बोध्यम् । आदिपदादनासत्त्युदाहरणमपि दीर्घकालेन पदोच्चारणलक्षणं कल्प्यम् ॥ १६ ॥ योग्यताविषये मतान्तरमाह—**केचित्त्विति** । शाब्दबोध इति शेषः ॥ १७ ॥ नन्वस्त्वेवमाकाङ्क्षादिविशिष्टमखण्डवाक्यं, तथाप्येतस्याखण्डत्वोक्त्यार्थात्सखण्डवाक्यमप्येकमस्तीति सूचितमतः किंलक्षणं तदित्याशङ्कायां तल्लक्षयति—**असमाप्तेति** । न समाप्तः पर्यवसन्नः अर्थो यस्य तत्तथा । साशङ्कमित्यर्थः । अत्र पदकदम्बमित्यध्याहारः । उदाहरति—**य इति** । अत्र को वा गौरित्याशङ्कायाः सत्वाल्लक्षणसमन्वयः । न केवलमस्य पदसमुदाय एवापेक्षितः किंतु क्वचिदेकपदेऽप्येतल्लक्षणं संभवतीत्याह—**क्वचिदिति** । एतदखण्डवाक्यलक्षणं चेत्यर्थः । क्रमेणोदाहरणे **दृश्यत्वादिती**त्यादिना । अत्र कथं द्वैतं मिथ्येति हेत्वाकाङ्क्षापूरकविशिष्टार्थोपपादकत्वेन पञ्चम्यन्तत्वादेकपदत्वेऽपि वाक्यत्वं भो इत्यत्रार्थसमाप्तेरभावात्कि भो रामेति संबोधनं भो कृष्णेति वेत्याशङ्कासत्वाच्च खण्डवाक्यत्वमि-

**पाणिनीयमतेनोक्तं विभक्त्यन्तं पदं हि यत् ।**
**तत्र सुप्प्रत्ययात्मानः प्रथमाद्या विभक्तयः ॥ १९ ॥**
**अषष्ठीप्रथमास्वेव तासु कारकता मता ।**
**अनन्याधीनता यद्वद्योगभूमिषु सप्तसु ॥ २० ॥**
**नियतोपस्थितावुच्चैः कृष्णो लिङ्गाधिके तटम् ।**
**द्रोणो व्रीहिर्मितावेकः संख्यायां प्रथमा मता ॥ २१ ॥**

---

त्यर्थः ॥ १८ ॥ अथैकपद इत्युक्त्या पूर्वोक्तपदलक्षणस्मरणात्प्रसङ्गतस्तद्विवरणार्थं सिंहावलोकनन्यायेन तदनुवादपूर्वकं सुब्विभक्तीरुद्दिशति—**पाणिनीयेत्यादिना ।** सुबिति सुप्प्रत्ययरूपा इत्यर्थः । शेषं स्पष्टम् ॥ १९ ॥ तत्रापि कारकत्वं तावत्कासांचिदेवेत्याह—**अषष्ठीति ।** तासु पूर्वोक्तप्रथमाद्यासु सप्तसु सप्तसंख्याकासु विभक्तिषु मध्य इत्यर्थः । अषष्ठीप्रथमास्वेव न विद्येते षष्ठीप्रथमे यासु तास्वेव । षष्ठीप्रथमातिरिक्तास्वेवेत्यर्थः । तत्र दृष्टान्तमाह—**अनन्येति ।** अनन्याधीनता अपराधीनता योगभूमिषु । शुभेच्छादियोगशब्दितचित्तनिरोधपूर्वकब्रह्मज्ञानसाधनादिदशास्वित्यर्थः । ताश्च भूमिकाः श्रीमद्वसिष्ठेन दर्शिताः—'ज्ञानभूमिः शुभेच्छा स्यात्प्रथमा समुदाहृता । विचारणा द्वितीया तु तृतीया तनुमानसी । सत्वापत्तिश्चतुर्थी स्याततोऽसंसक्तिनामिका । पदार्थाभाविनी षष्ठी सप्तमी तुर्यगा स्मृता' इति । तत्र शुभेच्छायाः प्रथमायाः मुमुक्षारूपत्वेन, 'प्रत्यग्विविदिषां बुद्धेः कर्माण्युत्पाद्य शुद्धितः । कृतार्थान्यस्तमायान्ति प्रावृडन्ते घना इव' इति वार्तिकवचनानुसारेणान्तर्यामिप्रेरितनिष्कामकर्माख्यपराधीनत्वसंभवात्तथा पदार्थाभाविन्याः षष्ठ्या अपि—'भूमिकापञ्चकाभ्यासात्स्वात्मारामतया भृशम् । आभ्यन्तराणां बाह्यानां पदार्थानामभासनात् । परप्रयुक्तेन च हि प्रयत्नेनावबोधनम् । पदार्थाभाविनी नाम षष्ठी भवति भूमिका' इत्यपि वासिष्ठवाक्यादेव परप्रयत्नमात्रव्युत्थानरूपत्वेन पराधीनत्वसंभवाच्च तद्भिन्नासु द्वितीयादियोगभूमिषु पूर्वपूर्वस्या उत्तरोत्तरहेतुत्वेनान्याधीनत्वं युक्तमेवेति भावः ॥ २० ॥ एवं सदृष्टान्तं कारकसंज्ञां द्वितीयादीनां विभक्तीनामभिधायाथ क्रमेण प्रथमादिविभक्त्यर्थान्कथयन्नादौ प्रथमाया अर्थमाह—**नियतोपस्थिताविति ।** प्रथमा उच्चैः कृष्णः इति नियतोपस्थितौ, तथा तटं इति लिङ्गाधिके, तथा द्रोणो व्रीहिः इति मितौ, तथा एकः इति संख्यायामपि मतास्तीति योजना । उच्चैरित्यलिङ्गकस्य नियतोपस्थितिकाख्यस्य सूत्रोक्तप्रातिपदिकार्थस्योदाहरणम् । कृष्ण इति नियतलिङ्गस्येति ज्ञेयम् । नियतोपस्थितौ नियता निश्चिता उपस्थितिः शब्दश्रवणमात्रेणैव ज्ञानं यस्य तस्मिन् शक्यार्थ इत्यर्थः । एवं तटं इत्युदाहरणे अनियतलिङ्गत्वेन निरुक्तप्रातिपदिकार्थे सत्यपि लिङ्गाधिके लिङ्गमात्राधिक्येऽपीत्यर्थः । तद्वत् द्रोणो व्रीहिः, द्रोणाख्यपरिमाणविशेषपरिमिताः शालयः, जात्यभिप्रायेणैकवचनम्, इत्यस्मिन्नुदाहरणे मितौ पूर्ववत्परिमाणमात्राधिक्येऽपीत्यर्थः । तथा एकः इत्यु-

**कर्तुः क्रियातः संप्राप्तुमभीष्टात्मनि कर्मणि।**
**स्याद्द्वितीया मृगाक्षीव हरिं भजति भक्तराट्॥ २२॥**
**स्वतन्त्रे कर्तरि तथा करणेऽत्यन्तसाधके।**
**तृतीया खलु रामेण बाणेनाभिहतो मृगः॥ २३॥**
**नमः स्वस्तिस्वधास्वाहादानतादर्थ्ययोगतः।**
**शिवाय नम इत्यादौ चतुर्थी भवति ध्रुवम्॥ २४॥**

---

दाहरणे संख्यायां संख्यामात्रेऽपि मता। पाणिन्याद्याचार्याणां संमतास्तीत्यर्थः। उपलक्षणमिदं संबोधनस्यापि। तस्माच्छक्यादय एव प्रथमाविभक्त्यर्था इति सिद्धम्। तथाच सूत्रं 'प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा' इति। विस्तरस्तु सिद्धान्तकौमुद्यादौ द्रष्टव्यः॥२१॥ द्वितीयाविभक्त्यर्थं कथयति—**कर्तुरिति**। कर्मणीत्यतः प्राक्तनेन कर्मस्वरूपम्। तत्र दृष्टान्तमाह—**मृगाक्षीवेति**। यथा कर्तुः अग्निहोत्रादिक्रियामात्रप्रधानस्य गृहस्थस्य क्रियातः ताम्बूलदानादिलौकिकव्यापारतः संप्राप्तुं सम्यग्यथाभिलषितं प्राप्तुं लब्धुं अभीष्टात्मनि वाञ्छितस्वरूपे कर्मणि विलासव्यापारे 'पत्नी पाणिगृहीता च द्वितीया सहधर्मिणी' इत्यमरोक्तेर्द्वितीया नाम पाणिगृहीता धर्मपत्न्येवेत्यर्थः। यद्वा प्रथमपत्न्यपेक्षया नवा द्वितीयैव मृगाक्षी हरिणनयना तरुणीत्वेन दक्षा भवतीत्यध्याहारस्तद्वदुक्तलक्षणे कर्मणि द्वितीया विभक्तिः स्यादिति संबन्धः। अत्रापि सूत्रे 'कर्तुरीप्सिततमं कर्म' इति, 'कर्मणि द्वितीया' इति च उदाहरति—**हरिमिति**॥ २२॥ तृतीयार्थमाह—**स्वतन्त्र इति**। तथाच सूत्राणि 'स्वतन्त्रः कर्ता','साधकतमं करणं','कर्तृकरणयोस्तृतीया' इति च। उदाहरति—**रामेणेति**। पक्षे कर्तरि पुरुषे स्वतन्त्रेऽपराधीने सति तथा तस्य करणे साधनेऽप्यत्यन्तसाधके अवश्यकार्यकारिणि च सति तृतीया खलु भुक्तिमुक्तिभ्यामन्या विपत्तिरूपा तदपेक्षया तृतीयैवावस्था भवतीत्यर्थः। तत्र निदर्शनं रामेणेति। सुवर्णमृगस्य लोकाप्रसिद्धत्वेन तदासक्त्यनौचित्येऽपि स्वातन्त्र्यादिना तत्संभवेन तज्जन्योक्ततृतीयावस्थादर्शनादतः शास्त्राचार्यपारतन्त्र्यमेव सर्वदा हितैषिभिः परिपालनीयं नतु क्षणमात्रमपि स्वातन्त्र्याद्यवलम्बनीयमित्याशयः॥ २३॥ अथ चतुर्थीविभक्त्यर्थं कथयति—**नम इति**। एतेषां स्वाहान्तानामेव शब्दानां साक्षाद्योगेन, तथा दानस्य कर्मणा योगेन, तथा तादर्थ्यस्य योगेन च चतुर्थीविभक्तिः शिवाय नम इत्यादावुदाहरणे ध्रुवं भवतीत्यर्थः। आदिपदेन सर्वस्मै स्वस्ति, पितृभ्यः स्वधा, अग्नये स्वाहा, विप्राय गां ददाति, मुक्तये हरिं भजतीत्यादि। पक्षे नमः 'प्रणमेद्दण्डवद्भूमावाश्वचाण्डालगोखरम्' इत्यादिश्रीमद्भागवतोक्तं नमनं, तथा स्वस्ति अहिंसया सकलजीवकल्याणं, स्वधा पितृयज्ञः, स्वाहा देवयज्ञः, दानं अन्नादेः प्रसिद्धमेव। तादर्थ्ययोगः ब्रह्मैकप्राप्त्यर्थित्वेन मनोनिरोधः। एतैः साधनैः कृत्वा शिवाय नम इति मन्त्रोपासनपूर्वकमादिशब्दोक्ततत्त्वसाक्षात्कारे

**भेदावधौ वनाद्याति प्रकृतौ ब्रह्मणः प्रजाः ।**
**हेतौ तु वह्निमान्धूमादित्यादौ पञ्चमी स्मृता ॥ २५ ॥**
**स्वस्वामिभावादौ शेषे कृद्योगे कर्तृकर्मणोः ।**
**षष्ठी शंभोर्गणः शौरेः कृतिः कर्ता स्मृतेर्मुनिः ॥ २६ ॥**
**आधारे विषये व्याप्येऽन्यक्रियालक्षकक्रिये ।**
**सप्तमी कमले हंस आस्त इत्यादिके भवेत् ॥ २७ ॥**
**अपदार्थोऽपि वाक्यार्थस्तात्पर्याख्यः समुल्लसेत् ।**
**तत्र यस्मिन्मते भाट्टे प्रथितोऽभिहितान्वयः ॥ २८ ॥**

---

सति चतुर्थी जाग्रदाद्यपेक्षया चतुर्थसंख्याका तुरीयावस्था ध्रुवं निश्चितं भवति इत्यर्थः ॥ २४ ॥ एवं पञ्चमीमप्याह—**भेदावधाविति** । अपादानपदवाच्ये विश्लेषस्यावधिभूते वस्तुनि पञ्चमी वनाद्यातीत्यादौ, तथा प्रकृतौ उपादाने ब्रह्मणः चतुर्मुखात्, यद्वा मायिनः परमात्मनः प्रजाः प्रजज्ञिरे इत्यादौ । तथा हेतौ वह्निमान्धूमादित्यादौ स्मृता। पाणिनिना कथितेत्यर्थः ॥ २५ ॥ अथ षष्ठ्यर्थं स्फुटयति—**स्वेति** । स्वस्वामित्वादिसंबन्धसामान्यरूप इत्यर्थः । शेष इति तान्त्रिकी संज्ञा। कृद्योगे कृत्प्रत्ययोगे तु कर्तृकर्मणोः कर्तरि कर्मणि च षष्ठी स्यादित्यर्थः। तथाच सूत्रे 'षष्ठी शेषे' 'कर्तृकर्मणोः कृति' इति च क्रमेणोदाहरति—**शंभोरित्यादिना** । पक्षे शेषे अनन्ताख्ये नागराजे षष्ठी प्रागुक्तलक्षणा परतो व्युत्थानशालिनी षष्ठीनाम्नी योगभूमिकास्तीत्यर्थः । तत्र हेतुगर्भे विशेषणे । कीदृशे। स्वस्वामिभावादौ स्वस्मिन्नद्वैतात्मन्येव स्वामिभावादिनियन्तृत्वपुरुषार्थत्वादिर्यस्य स तथा। तत्त्वज्ञ इत्यर्थः । पुनः कीदृशे । कर्तृकर्मणोः कृद्योगे कर्ता ज्ञानक्रियाश्रयः प्रमाता, कर्म ज्ञेयं दृश्यं तयोर्मध्ये कृद्योगे करोति स्वसंकल्पेन द्वैतं रचयतीति कृदज्ञात आत्मा तत्रैव ज्ञातत्वेन योगश्चित्तनिरोधो यस्य स तथा। योगीन्द्र इत्यर्थः । अत एवायं शंभोः शिवस्य गणः । वाहनत्वेन नन्दिकेश्वरवद्भूषणत्वेनापि सेवकविशेष इत्यर्थः । शौरेः विष्णोः कृतिः । पृथ्वीधारणरूपक्रियाविशेष एवेत्यर्थः । तथा मुनिः पतञ्जलिः सन् स्मृतेर्महाभाष्यादेः कर्ता । निर्मातेत्यर्थः ॥ २६ ॥ तद्वत्सप्तमीमप्याह—**आधारे इति** । अन्येति अन्यक्रियायाः लक्षिका क्रिया यस्य तस्मिन् तस्य क्रियया क्रियान्तरं लक्ष्यते तत्रेत्यर्थः । आदिपदान्मोक्षे इच्छास्ति, सर्वस्मिन्नात्मास्ति, गोषु दुह्यमानासु गतः, इति ग्राह्यम् ॥ २७ ॥ एवं विभक्त्यन्तं पदमिति मतेन प्रथमादिविभक्तिविशिष्टानां पदानामर्थानभिधायाधुना वाक्यार्थं कथयन्मतभेदेन तद्वैविध्यमभिधत्ते—**अपदार्थोऽपीत्यादि**सार्धेन। अपदार्थोऽपि निरुक्तसप्तविभक्त्यन्तपदानामर्थाद्भिन्नोऽपि तात्पर्याख्यः तात्पर्यसंज्ञकः वाक्यार्थः तत्र भाट्टे पूर्वमीमांसावार्तिककारा भट्टास्तेषामिदं तस्मिन्मते समुल्लसेदाविर्भवेदित्यर्थः । तत्र केत्यत आह—**यस्मिन्निति** । शेषेण यस्मिन् अभिहितान्वयः पदैरभिहितानां शक्त्यादिवृत्त्या प्रबोधितानां पदार्थानां अन्वयः संबन्धः प्रथितः प्रसिद्धोऽस्ती-

**यत्रान्विताभिधानं स्यान्न तु तत्र स भिद्यते।**
**उपक्रमादिभिर्लिङ्गैस्तात्पर्यं वक्तुराशयः ॥ २९ ॥**
**मुखमेवेन्दुरित्यादावालंकारिकदर्शने।**
**शाब्दबोधश्चमत्कारी योग्यताविरहेऽपि यः ॥ ३० ॥**
**स तु तच्छास्त्रसंस्कारवतामेवोपजायते।**
**नान्येषां प्रतिबद्धाग्नेर्दाह उत्तेजके यथा ॥ ३१ ॥**
**एवं चोत्तेजकाभावशालिनो बाधनिश्चितेः।**
**अभावस्य च हेतुत्वं शाब्दबोधेऽत्र संमतम् ॥ ३२ ॥**
**पदज्ञानैककरणात्पदार्थस्मृतिवर्त्मना।**
**शक्तिधीसहकारेण शाब्दबोधः प्रजायते ॥ ३३ ॥**

---

त्यर्थः ॥ २८ ॥ मतान्तरमाह—**यत्रेति**। अन्विताभिधानं अन्वितानां संबद्धानां पदार्थानामेव पदैरभिधानं बोधनं तद्यत्र स्यात् भाट्ट मत इत्यनुषज्ज्यते। तुशब्दो वैलक्षण्यावद्योती। तत्र निरुक्तमते सः वाक्यार्थः न भिद्यते। पदार्थेभ्यो भिन्नो न भवतीत्यर्थः। तदुक्तं काव्यप्रकाशे–'पदार्थानां समन्वये तात्पर्यार्थो विशेषवपुरपदार्थोऽपि वाक्यार्थः समुल्लसति' इत्यभिहितान्वयवादिनां मतम्। वाच्य एव वाक्यार्थ इत्यन्विताभिधानवादिनः' इति। अथ कथं तात्पर्यं ज्ञेयमित्यत आह—**उपक्रमेति**। लिङ्गैर्द्योतकैः। तत्स्वरूपमाह—**वक्तुरिति** ॥ २९ ॥ ननु भवत्वेवं वाक्यलक्षणादिकं तथापि न योग्यतादिकमेव नियमेन वाक्यार्थज्ञानेऽपेक्षितं, वदनमेव चन्द्र इत्यादौ मुखे चन्द्रकार्यकारित्वाभावेन योग्यताराहित्येऽपि शाब्दबोधदर्शनादितिचेन्न। तत्रालंकारशास्त्रसंस्कारवतामेव शाब्दबोधदर्शनात्तद्भिन्नानां तददर्शनाच्च। तस्मायोग्यताभावस्य शाब्दबोधप्रतिबन्धकत्वेऽपि निरुक्तसंस्कारस्य तत्रोत्तेजकत्वादेव शाब्दबोध इत्याशयेनाह—**मुखमेवेत्यादिद्वाभ्याम्**। चमत्कारी चमत्कारवान्। आह्लादक इतियावत् ॥ ३० ॥ **सत्विति**। तुशब्दः शङ्काव्यावृत्त्यर्थः। तत्र दृष्टान्तः **प्रतिबद्धेति**। प्रतिबद्धो मण्यादिना निरुद्धदाहशक्तिः सचासावग्निश्च तस्मात्। प्रतिबन्धविशिष्टाद्वह्नेरित्यर्थः।यथा उत्तेजके मन्त्रादिरूपे निरुक्तशक्तिप्रतिबन्धमोचके सत्येव दाहो जायते नान्यथा तद्वत्प्रकृतेऽपीति ॥ ३१ ॥ फलितमाह—**एवंचेति**। मुखमेवेन्दुरित्यादौ बाधनिश्चयेऽप्युक्तोत्तेजकसत्त्वेन शाब्दबोधदर्शनादुत्तेजकाभावविशिष्ट एव बाधनिश्चयाभावः शाब्दबोधे हेतुर्नतु केवल इति नियम्यत इति तात्पर्यम्। स्पष्टमन्यत् ॥ ३२ ॥ न केवलमेतावदेव शाब्दबोधे कारणं किंतु कारणान्तरमपीति तद्दर्शयंश्छाब्दबोधप्रक्रियां संक्षिपति—**पदेति**। पदानां रामादिपदानां ज्ञानमेव एकं मुख्यं करणमसाधारणं कारणं तस्मादित्यर्थः। **पदार्थेति**। पदार्थाः सीतारमणादयस्तेषां स्मृतिस्तद्वर्त्मना। तन्मार्गेणेत्यर्थः। **शक्तीति**। शक्तिधीः

**बाला युवानो वृद्धाश्च कपोता युगपत्खले ।**
**कणावचयलोभेन निपतन्ति यथा क्षणात् ॥ ३४ ॥**
**पदार्थास्तद्वदेवैतेऽन्वयं यान्ति परस्परम् ।**
**संसर्गसंज्ञे वाक्यार्थे कृष्णोऽस्तीत्यादिवाक्यजे ॥ ३५ ॥**
**छत्री चैत्रोऽटतीत्यादौ विशिष्टे तु यथा पुरम् ।**
**सैनिकक्रमतो राजा प्रविशेत्तद्वदन्वयः ॥ ३६ ॥**
**शक्तिग्रहो व्याकरणाद्यष्टभिः साधनैर्भवेत् ।**
**प्रत्येकमेव पृथ्व्याद्यैर्ध्यातै रूपैरिवेशितुः ॥ ३७ ॥**
**तत्र व्याकरणादैन्द्रमित्यादौ तद्धविष्यसौ ।**
**गवयो गौरिवेत्यादौ गवये तूपमानतः ॥ ३८ ॥**

---

शक्तिज्ञानं तल्लक्षणो यः सहकारः सहायस्तेनेत्यर्थः ॥ ३३ ॥ तत्र स्मृतानां पदार्थानामन्वयो द्विविधः। ऐककालिकः क्रामिकश्च । संसर्गाख्ये वाक्यार्थे प्रथमः । विशिष्टाख्ये तु चरम इति । तत्राद्यं खलेकपोतन्यायघटितं सोदाहरणमाह— **बाला इत्यादिद्वाभ्याम्** । कपोताः पारावताः । 'पारावतः कलरवः' इत्यमरोक्तेः। खले धान्यसंमर्दनभूमिविशेषे ॥ ३४ ॥ प्रकृते योजयति—**पदार्था इति** । ॥ ३५ ॥ अन्त्यमपि राजपुरप्रवेशन्यायघटितं तद्वदेवाह—**छत्रीति** । वैलक्षण्यार्थस्तुशब्दः ॥ ३६ ॥ एवं शक्तिस्वरूपं, तत्प्रसङ्गात्पदस्वरूपं, तत्प्रसङ्गाद्वाक्यादिस्वरूपं, तत्प्रसङ्गाद्विभक्तिसप्तकार्थस्वरूपं, तत्प्रसङ्गाद्वाक्यार्थस्वरूपं, तत्प्रसङ्गाच्छाब्दबोधप्रक्रियां च संक्षिप्याधुना किं शक्तिग्रहस्य निरुक्तशाब्दबोधमूलीभूतस्यैव साधनमित्याकाङ्क्षायां 'शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्यव्यवहारतश्च । वाक्यस्य शेषाद्विवृतेर्वदन्ति सांनिध्यतः सिद्धपदस्य वृद्धाः' इति प्राचां वचनानुसारेण तस्याष्टविधत्वं प्रतिजानीते—**शक्तिग्रह इति** । किमेतैः समुच्चितैः। नेत्याह—**प्रत्येकमिति** । तत्र दृष्टान्तमाह—**पृथ्व्याद्यैरिति** । शक्तिग्रह इत्यनुकर्षणीयम् । यथा ईशितुः पृथ्व्याद्यैः अष्टभिः रूपैः प्रत्येकमेव ध्यातैः शक्तिग्रहो भवत्येवं व्याकरणाद्यष्टभिः साधनैः प्रत्येकमेव शक्तिग्रहो भवेदित्यष्टभिरित्यप्यनुकृष्य प्रत्येकमित्यपकृष्यापि योज्यम् । ईशितुः शिवस्य पृथ्व्याद्यैः । तदुक्तं श्रीमद्भगवत्पूज्यपादचरणारविन्दैः श्रीदक्षिणामूर्तिस्तवे—'भूरम्भांस्यनलोऽनिलोऽम्बरमहर्नाथो हिमांशुः पुमानित्याभाति चराचरात्मकमिदं यस्यैव मूर्त्यष्टकम्' इति । एतेषां प्रत्येकं ध्यानादेवाणिमादिरूपायाः सिद्धेर्ग्रहः समुच्चितध्याने तु सार्वात्म्योपासनाद्ब्रह्मप्राप्तिरेवेति युक्तमेव लापितं प्रत्येकमेव ध्यातैरिति । अत्र विस्तरस्तु तद्वार्तिके मानसोल्लाससंज्ञके द्रष्टव्यः ॥ ३७ ॥ प्रतिज्ञातमुपनिबध्नाति सोदाहरणं क्रमेण—**तत्रेत्यादिचतुर्भिः** । ऐन्द्रमिति श्रौतं पदम् । असौ शक्तिग्रहः तद्धविषि । इन्द्रदैवत्ये हविर्द्रव्य इत्यर्थः । तथाच सूत्रं

सुपर्वादिपदानां तु देवादौ कोशतोऽस्ति सः ।
लक्ष्मीः श्रीपदवाच्येति ज्ञेयोऽसावाप्तवाक्यतः ॥ ३९ ॥
गामानयेति वाक्येन व्यवहाराद्गवादिषु ।
यूपं तक्षत्यत्र काष्ठविशेषे वाक्यशेषतः ॥ ४० ॥
सहस्रपत्रं कमलमित्यादौ विवृतेरपि ।
रौत्याम्रे पिक इत्यादौ प्रसिद्धपदसंनिधेः ॥ ४१ ॥
इति साधनतः शक्तिग्रहाज्जात्यादिरष्टधा ।
सिद्धः शक्यपदार्थोऽत्र रूढादित्रयभेदतः ॥ ४२ ॥

---

'सास्य देवता' इति।गवय इति स्पष्टोऽर्थः॥३८॥**सुपर्वादीति**।'सुपर्वाणः सुमनसस्त्रिदिवेशा दिवौकसः' इत्यमराख्यकोशसकाशादित्यर्थः। सः सुपर्वादिपदानां शक्तिग्रह इत्यर्थः । **लक्ष्मीरिति** । 'श्रीर्वेषरचना शोभा भारती सरलद्रुमे । लक्ष्म्यां त्रिवर्गसंपत्तौ वेषोपकरणे मतौ' इति विश्वोक्तेः । 'श्रीहरिं परमानन्दमुपदेष्टारमीश्वरम्' इत्यपरोक्षानुभूतिश्लोके श्रीशब्दस्य कोऽर्थः प्रकृत इति शिष्यजिज्ञासोत्तरं श्रीपदवाच्यात्र लक्ष्मीरेवेत्याचार्यवचने असौ शक्तिग्रह आप्तवाक्यतो ज्ञेय इति ॥ ३९ ॥ **गामिति** । वृद्धेन गामानयेत्युक्ते मध्यमवृद्धः सास्नादिमदाकृतिविशेषमानयतीति तद्वाक्येन योयं व्यवहारस्तस्माद्व्युत्पित्सोर्बालस्य गवादिपदानां गवादिषु शक्तिग्रहो भवतीति भावः । **यूपमिति** । 'यूपं तक्षत्यष्टास्त्रीकरोति' इति श्रुतौ तक्षतीत्यादिवाक्यशेषाद्युपपदस्य तक्षणादिसंस्कारविशिष्टकाष्ठविशेषे शक्तिग्रह इति ॥ ४० ॥ **सहस्रपत्रमिति** । कमलपदार्थस्य सहस्रपत्रमित्यनेन यत्सहस्रसंख्याकदलविशिष्टं तत्कमलमिति विवरणमस्तीति तत एवात्र शक्तिग्रह इत्याशयः । **रौतीति** । अत्र आम्रपदस्य प्रसिद्धस्य संनिधेः पिकपदस्य कोकिले शक्तिग्रहः । नतु भ्रमरेपि । तस्य तत्र मकरन्दादिलोभेनोक्तशब्दकर्तृत्वसंभवेऽपि मालत्याद्यासक्तत्वस्यापि संभवेन तदेकोपजीवित्वाभावात्तस्य तु तन्मात्रोपजीवित्वाच्चेति ॥ ४१ ॥ एवं सोदाहरणानि शक्तिग्रहसाधनान्यभिधाय तत्फलीभूतत्वेन सिद्धं वाक्यपदार्थं प्रागुक्तं सर्वं पिण्डीकृत्य तमष्टविधत्वेन परिगणयन्नुपसंहरति—**इतीति** । इति पूर्वोक्तव्याकरणादिप्रकारेण साधनतः । साधनैरित्यर्थः । जात्यादिः प्रागुक्तजातिगुणक्रियाद्रव्यरूपः । **शक्येति** । शक्यत इति शक्यः शक्तिवृत्त्या प्रतिबोध्यः स चासौ पदार्थश्चेति कर्मधारयः । अभिधाविषयीभूतो गवादिपदार्थ इतियावत् । ननु जात्यादिभेदाच्चातुर्विध्यमेव भाति तत्कथमष्टविधत्वप्रतिज्ञेत्यत आह—**अत्रेति** । अस्मिन्ग्रथे । तत्र हेतुः—**रूढेति** । रूढयौगिकयोगरूढभेदादित्यर्थः । अयंभावः । रूढः पदार्थो जात्यादिर्गौः शुक्ल इत्यादिनोक्तश्चतुर्विधः । तथा यौगिकं पदार्थद्वयं योगः पदार्थयोरेक इत्यादिना योगरूढपदार्थद्वयं चोक्तमिति युक्तमेव तथा निगमनप्रतिज्ञानमिति ॥ ४२ ॥

**संसर्गादिश्च वाक्यार्थोऽ प्येवं पञ्चविधो भवेत् ।**
**अखंडौ च सखण्डौ च तात्पर्याख्योऽपि चेतसः ॥ ४३**
**स कोऽपि विषयो नास्ति यत्र व्यङ्ग्यं न भासते ।**
**इति ध्वनिकृदुक्तेस्ते सर्वेऽपि व्यञ्जका यथा ॥ ४४ ॥**
**वनं विचित्रमुत्फुल्लं राधे त्वद्वदनं तु न ।**
**नोदकः पुष्पबाणश्चेत्कृष्णः किमिति खिद्यति ॥ ४५ ॥**

---

तर्हि वाक्यार्थः कतिविध इतिचेत्तत्संख्यामाह—**संसर्गादिरिति** । तत्र द्विभागमाह—**अखण्डौ चेति** । संसर्गश्च विशिष्टश्चेत्येतौ कृष्णोऽस्ति छत्री चैत्रोऽटतीत्युदाहृतावखण्डौ वाक्यार्थावित्यर्थः । **सखण्डौ चेति** । बहुपदीयैकपदीयो यो गौस्तमाहरेति दृश्यत्वादिति चोदाहृतौ तथेत्यर्थः । इत्येवंसंख्यया सः प्रतिज्ञातपञ्चविध इत्यर्थः ॥ ४३ ॥ ननु भवत्वेवं पदार्थाष्टकं वाक्यार्थपञ्चकं च किं तावतेतिचेत् तत्रालंकारिकसंमतिपूर्वकं तद्गणनायाः प्रयोजनमाह—**स कोऽपीति** । विषयो वागिन्द्रियादेर्गोचरः पदादिशब्दादिवस्तुविशेषः । चेष्टादीनामपि व्यञ्जकत्वस्याग्रे वक्ष्यमाणत्वायुक्तमेव ध्वनिकारप्रतिज्ञानमिति तात्पर्यम् । व्यङ्ग्यं व्यज्यत इति व्यङ्ग्यं वक्ष्यमाणव्यञ्जनाख्यवृत्तिविषयं वस्त्वित्यर्थः।**ध्वनीति**। 'प्रथमं ध्वनिसंज्ञं स्यात्' इति पूर्वप्रकरणोक्तध्वनिनामकोत्तमोत्तमकाव्यपञ्चात्मकं ग्रन्थविशेषं करोतीति तथा तस्योक्तिर्वचनं तस्या इत्यर्थः। प्रकृतमाह—**ते सर्वेऽपीति** । ते प्रागुक्ताः सर्वेऽपि जात्यादिपदार्थाः संसर्गादिवाक्यार्थाश्चेत्यर्थः । कथं व्यञ्जकत्वं तेषामित्याशङ्कायां तदुदाहरणं प्रतिजानीते—**यथेति** ॥ ४४ ॥ तत्र क्रमेण जात्यादिपदार्थाष्टकस्य व्यङ्ग्योदाहरणान्याह—**वनमिति** । इदं हि मानवतीं राधिकां प्रति श्रीकृष्णप्रेषितदूतीवचनम् । अयि राधे, इदं वृन्दावननामकं वनं अरण्यं ननूपवनं तस्य वसन्तं विनापि चतुरतरमालाकारप्रयत्नेन कदाचिद्विविधपुष्पविकासशालित्वसंभवादित्यर्थः । अत्र वनपदेन गोत्वादिवद्वनत्वरूपा जातिः शक्या व्यक्तिलाभस्त्वाक्षेपादित्युपपादितमेवाधस्तात्सा जातियुक्तेत्यादिना । तेन यावद्वनानां लाभः । विचित्रं विशेषेण ननु सामान्येन । तादृशचित्रत्वस्यान्यकालेऽपि संभवादित्यर्थः । चित्रं विविधमालतीतमालचम्पकबन्धूकपाटलबकुलादिद्रुमकुसुमविकासेनानेकवर्णमित्यर्थः । एतादृशत्वे हेतुः—**उत्फुल्लमिति** । उत्सम्यक्परमेश्वरविहारार्थं भृत्यत्वेन परमानुकूलवनदेवतावसन्तादिनिरतिशयप्रयत्नवशादनुपमरमणीयत्वेनेत्यर्थः । ननु साधारण्येन । तथात्वस्य यत्किंचिद्वृक्षादिनिष्ठत्वेन सार्वदिकत्वात् । फुल्लं विकसितमस्तीत्यर्थः । ननु किमेतावता प्रकृत इत्यत आह—**तद्वनमिति** । तुशब्दः शङ्काव्यावृत्त्यर्थः । त्वद्वदनं पुनः निरुक्तवनविकासे सत्यपि नैव संफुल्लं भवतीति योजना । त्वद्वदनं तव वदनं त्वन्मुखमित्यर्थः । नैव फुल्लं निरुक्तवनविकासस्योद्दीपकस्य सत्त्वेऽपि मानापहानेन नैव मुदितमित्यर्थः । यदा वसन्तादिसकलकामोद्दीपकसामग्रीसत्वे-

ऽप्येतावत्कालं मया प्रार्थनासहस्रे क्रियमाणेऽपि त्वया मानो नैव त्यक्तस्तदाथ कोऽन्यस्त्वद्वशीकरणेऽस्त्युपायस्तस्मादुपेक्षैव वरमिति भावः । ननु तर्हि कृष्णस्य कथं कामव्यथानिराकृतिरिति चेत्तत्राह—**नोदक** इत्युत्तरार्धेन । नोदकः नोदयतीति तथा । कृष्णाभिसरणादौ प्रेरक इत्यर्थः । एतादृशः पुष्पबाणः पुष्पाण्येव कुसुमान्येव बाणाः शराः यस्य स तथा कुसुमशरः स्मर इत्यर्थः । उक्तं हि—'अरविन्दमशोकं च चूतं च वनमल्लिका । नीलोत्पलं च पञ्चैते पञ्चबाणस्य सायकाः' इति । एवमभ्यन्तर एव रत्यादौ प्रेरकः कामश्चेत्कृष्णः किमिति कस्माद्धेतोः खिद्यति । विरहव्यथां प्राप्नोतीत्यर्थः । निरुक्ताखिलवनविकासेन कामबाणीभूतानामनन्तकुसुमानामौज्ज्वल्यतमत्वात्तैरेवान्तरिमां सहस्रधाभिविध्य स तावदधुनैव श्रीकृष्णं प्रत्यभिसारयिष्यतीत्यनुचित एव तस्य खेदः प्रत्युतोपकरीत्याह । क्षणमात्रेणैव तस्य निरतिशयानन्दो भविष्यतीति भावः । अत्र वनमिति वनत्वरूपजात्या वनत्वावच्छिन्नसकलवनानां संग्रहादुद्दीपनविभावसामग्रीरूपपुष्पाख्यस्मरशराधारीभूतवनात्मकनिषङ्गपौष्कल्यं, यद्वानेकानां जडानामपि वनानां जडस्यापि वसन्तकालस्य प्रभावेन विकासोऽभूत्परं त्वेकस्याः परममृदुलचित्ताया अपि तव मदुपलक्षिताभिश्चतुरतराभिरनेकसखीभिः प्रार्थनसहस्रे क्रियमाणेऽप्येतादृशवसन्ताद्युद्दीपकशतसत्त्वेऽपि चाद्यापि प्रसन्नताख्यविकासलेशोऽपि नैव भवतीति विलक्षणं सौन्दर्यादिगर्वितत्वं त्वयीति दूत्यातिशयोऽवा व्यज्यते । विचित्रमिति निरुपम्येन चित्ररूपाख्यगुणेन निरुक्तकामबाणानां विविधरूपशालित्वेनावश्यप्रकृतनायिकावशीकरणनिपुणत्वं तथा उत्फुल्लमिति विकासरूपक्रिययापि तेषामेव शाणनिघर्षणजनितौज्ज्वल्यशालिप्रसिद्धसायकवन्निशिततमत्वमपि द्योत्यते । राधे इति द्रव्येण त्रैलोक्यपूज्यस्यापि भगवतः प्रीतिपात्रत्वात्तस्यां महामहिमत्वं तथा त्वद्वदनमिति पदार्थयोगात्मकयौगिकपदार्थेन त्वत्संबन्धिमुखमेव न प्रसन्नं त्वं तु निजाभ्यन्तरे सुप्रन्नैवासीति श्रीकृष्णविषयकगूढप्रेमवैपुल्यशालित्वमपि ध्वनितम् । एवं नोदकमिति प्रकृतिप्रत्यययोगात्मकयौगिकपदार्थेन कामे प्रेरकत्वोक्तेरनायासेनेष्टसिद्धिः श्रीकृष्णस्य भवित्रीति तथा पुष्पबाण इति पदार्थयोगात्मकयोगरूढपदार्थेन मदने कुसुमैकायुधत्वोक्तेः प्राक्सूचितवसन्तोल्लसितपुष्पाख्यतदायुधसमृद्धेस्तस्य प्रबलतरत्वं च सूचितम् । कृष्ण इति प्रकृतिप्रत्यययोगात्मकयोगरूढपदार्थेन 'कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः । तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते' इति श्रुतेरद्वैतानन्दरूपे तस्मिन्वस्तुतः कामव्यथाजनितखेदाद्यभावेऽपि भक्तजनदृष्टया लीलामनुष्यनाट्येन तथातथा व्यवहरतीवेति विचित्रं भक्तिवैभवमिति । यद्वा ब्रह्मत्वेन कामस्याप्ययमन्तर्नियन्तैव प्रकृतनायिकायाश्चेति द्रुतमेवेमां वशीकरिष्यत्येवेति युक्त एवास्य खेदानौचित्यवाद इति व्यक्तम् । अत्र राधे इत्यन्तपदचतुष्टयेन जात्यादिरूढाख्यपदार्थचतुष्टयोदाहरणानि ततस्त्वद्वदनं नोदक इति च यौगिकपदार्थद्वयोदाहरणे

**शेते रक्तोत्पले चन्द्रस्तत्र धाराधरौ झषौ ।
सिञ्चतो हेमवल्लीं तां भो वाच्यं किमतः परम् ॥ ४६ ॥**

ततः पुष्पबाण इति कृष्ण इति च योगरूढपदार्थद्वयोदाहरणे इति क्रमादुदाहरणाष्टकं बोध्यम् । अत्र राधाख्यालम्बनविभावेन वसन्ताद्युद्दीपनविभावेन खेदात्मकानुभावेन नायिकागतगर्वाभिधव्यभिचारिभावेन च परिपोषितो निरुक्तनायिकाविषयको भगवदाश्रितरत्याख्यस्थायिभावात्माविप्रलम्भः शृङ्गारः समस्तपद्येन ध्वनितः । तदिदमुत्तमोत्तमं काव्यम् । काव्यलिङ्गपरिकराङ्कुरावलंकारौ । एवं धर्माद्यप्यूह्यम् ॥ ४५ ॥ एवं शक्यपदार्थाष्टकोदाहरणान्यभिधायाधुना क्रमप्राप्तानि पूर्वोपन्यस्तवाक्यार्थपञ्चकोदाहरणान्यपि कथयति—**शेत इति** । इदं तु श्रीकृष्णं प्रति विरहिण्या राधिकया प्रेषितसख्या वचनम् । भोभगवन्, रक्तोत्पले कोकनदसदृशे तत्करे चन्द्रः सुधादीधितिसदृशं तन्मुखं शेते । शयनवन्निश्चेष्टं तिष्ठतीत्यर्थः । अनेन संसर्गाख्याखण्डवाक्यार्थेन निरुक्तनायिकायां चिन्तातिशयो व्यज्यते । सचिन्तत्वावस्थायामेव तथावस्थानस्य प्रायेण लोके प्रसिद्धत्वात् । न केवलं सचिन्तत्वेनावस्थितिमात्रं किंतु निरतिशयशोकोऽपीत्याह—**तत्रेत्यादिपादद्वयेन** । तत्र निरुक्तचन्द्रपदलक्षिते तद्वदने धाराधरौ धारायाः जलधारायाः धरौ धारणकर्तारौ जलधरावित्यर्थः । 'धाराधरो जलधरः' इत्यमरः । पक्षे अश्रुजलधाराधरावित्यर्थः । एतादृशौ झषौ मत्स्यौ तत्सदृशे लोचने वर्तेते इत्यर्थः । अनेन तु विशिष्टाख्याखण्डवाक्यार्थेन तत्रैव शोकातिशयः सूच्यते । धाराधरत्वरूपविशेषणेन तन्नयनयोः सतताश्रुप्रवाहशालित्वोक्तेः । किंच तस्याः परमशुष्कावयवत्वमपि संपन्नं ततो ग्लानिरपि भूयसीत्याह—**सिंचत इति** । तां हेमवल्लीं सिञ्चत इत्यत्र वाक्ये अर्थसमासेरभावात् तां कां कौ वा सिञ्चत इत्याकाङ्क्षासत्वाच्च असमासार्थकं खण्डवाक्यमिति प्रागुक्तलक्षणं खण्डवाक्यत्वमेव तां प्रकृतां हेमवल्लीं हेम्नः सुवर्णस्य वल्ली लता तां तत्समानशरीरयष्टिकां राधिकामित्यर्थः । सिंचतः धाराधरौ झषावित्यनुकर्षणीयम् । एवंच निरन्तराश्रुधाराशालिनी तन्नयने विरहानलम्लानानि ततो निःसत्वतया निलीनानि च तदङ्गानि तदुज्जीवनार्थमिव निषिञ्चत इत्यर्थः । अनेनोक्तरीत्या बहुपदीयखण्डवाक्यार्थेन तस्यां मूर्च्छितत्वं विरहेणातिकार्श्यं च ध्वनितम् । क्वचिदेकपदेऽप्येतदिति खण्डवाक्यत्वस्य क्वचिदेकपदेऽपि सत्वमुक्तमित्यत्र तदर्थस्यापि व्यञ्जकत्वमुदाहरति—**भो इति** । इदं भो इति कस्य संबोधनमित्याकाङ्क्षासत्वेनार्थासमासेर्लक्षणसमन्वयः । भो भगवन्नित्यर्थः । अनेनैकपदीयखण्डवाक्यार्थेन संबोध्यस्यात्र नामाग्रहणादेतादृश्याः परमसुन्दर्याः सकलगुणगणरमणीयायास्त्वदेकपरायास्त्वद्वियोगेन जीवितमात्रशेषाया नायिकायास्त्वमीदृशीमप्यवस्थां विज्ञाय्यापि यतस्तत्समीपगमनं न संपादयस्यतस्त्वदीयं नामापि न ग्राह्यमिति भगवद्विषयः सख्युपालम्भो द्योतितः । अतएवेतः परं त्वया साकं संभाषणमपि

**नानार्थवाचके शब्दे शक्तिग्रहनियामकाः ।**
**संयोगादय एवात्र ज्ञेयाः प्राचीनसंमताः ॥ ४७ ॥**
**हरिः सशङ्खचक्रोऽत्र संयोगाद्विष्णुरुच्यते ।**
**अशङ्खचक्रो हरिरित्यत्रेन्द्रः स्याद्वियोगतः ॥ ४८ ॥**
**श्रीरामलक्ष्मणावत्र सीतेशः साहचर्यतः ।**
**हरिर्नागं हिनस्त्यत्र विरोधात्सिंहदन्तिनौ ॥ ४९ ॥**

---

न कर्तव्यमित्याशयेन तात्पर्याख्यं वाक्यार्थं व्यञ्जकत्वेनोदाहरति—**वाच्यमि-त्यादि**शेषेण । अतः परं निरुक्तरीत्या तस्याः प्राणान्तावस्थाकथनानन्तरं किं वाच्यं । न कोऽपि वक्तव्यांशोऽवशिष्ट इत्यर्थः । 'उपक्रमादिभिर्लिङ्गैस्तात्पर्यं वक्त्राशयः' इति तात्पर्यस्य प्रागुक्तलक्षणत्वेन प्रकृते शेते रक्तोत्पले चन्द्र इत्याद्युपक्रमादिलिङ्गैर्निरुक्तनायिकाविरहातिशयकथनात्मकेनानेन तात्पर्यसंज्ञकवाक्यार्थेन त्वयेतः परं शीघ्रमेव तां प्रत्युपागन्तव्यमिति व्यक्तं भवति । एवं चात्र पूर्वार्धेन चन्द्रस्य रक्तोत्पले शयनरूपसंबन्धमात्रकथनात्प्रथमपादे संसर्गसंज्ञकस्तथा द्वितीयपादे च झषधाराधरयोर्विशेष्यविशेषणभावकथनाच्च विशिष्टसंज्ञको वाक्यार्थ इत्युभयविधावखण्डौ तावुक्तौ । उत्तरार्धे तु तृतीयचरणेन बहुपदीयः खण्डवाक्यार्थस्तथा भो इत्येकपदीयोऽप्यसाविति खण्डवाक्यार्थद्वयं शेषेण तात्पर्याख्योऽप्यसावुक्त इत्येवं पञ्चविधोऽसौ बोध्यः । अत्रापि रसादिकं प्राग्वदेवोह्यम् । अलंकारस्तु रूपकातिशयोक्तिः । तदुक्तम्—'रूपकातिशयोक्तिः स्यान्निगीर्याध्यवसानतः । पश्य नीलोत्पलद्वन्द्वान्निःसरन्ति शिताः शराः' इति ॥ ४६ ॥ ननु भवत्वेवं शक्त्यादिव्यवस्था शक्यपदार्थादिविषयिणी सोदाहरणा, तथापि वनमित्यादि प्रागुक्तोदाहरणश्रवणेन स्मृतस्य नानार्थस्य शब्दस्य कथं शक्तिग्रहनियम इत्यतः प्राचीनोक्तानि संयोगादीनि चतुर्दशैव तन्नियामकानि विज्ञेयानीत्याह—**नानार्थवाचक इति** । तेच यथा—'संयोगो विप्रयोगश्च साहचर्यं विरोधिता । अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य संनिधिः । सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः । शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः' इति । **प्राचीनेति** । प्राचीनानां मंमटभट्टादीनां संमताः । प्रमाणीभूता इत्यर्थः ॥ ४७ ॥ तेषां क्रमेणोद्देशपूर्वकमुदाहरणान्याह—**हरिरित्यादिसप्तभिः** । सशङ्खचक्रः शङ्खश्च चक्रं च शङ्खचक्रम् । 'द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्' इत्यनुशासनादत्र सेनाङ्गत्वादेकवद्भावः । तेन सहितस्तथा । अत्र शङ्खचक्रेण सह हरेः संयोगात् 'यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु । शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु' इत्यमराद्धरिशब्दस्यानेकार्थत्वेऽपि विष्णुरेवोच्यत इत्यर्थः । असुरसमरे विष्णुतुल्यत्वेनेन्द्रस्यैव सत्वात्प्राप्तिपूर्वको हि निषेध इति स्याच्छङ्खचक्रवियोगस्य तत्रैव संभवादशङ्खेत्युदाहरण इन्द्र एव प्राह्य इत्याह—**अशङ्खेति** ॥ ४८ ॥ **श्रीरामेति** । रामो जामदग्न्योऽपीति साहचर्यान्नियमः॥ ४९ ॥ **स्थाणुमिति** ।

**स्थाणुं भवच्छिदे पश्येत्यत्र शंभुः प्रयोजनात् ।**
**सैन्धवं स्वानयेत्यत्र क्षारः प्रकरणाद्भवेत् ॥ ५० ॥**
**माधवस्तुष्यतीत्यत्र लिङ्गान्नारायणः खलु ।**
**देवस्त्रिपुरहेत्यत्र शिवोऽन्यपदसन्निधेः ॥ ५१ ॥**
**मधुना कोकिलो मत्तोऽत्र सामर्थ्याद्वसन्तकः ।**
**औचित्यात्सा मुखं यातीत्यत्र सांमुख्यमुच्यते ॥ ५२ ॥**
**हंसः सरसि भातीति देशयोगान्मरालकः ।**
**चित्रभानुः स्फुरत्यत्र दिवार्को निशि पावकः ॥ ५३ ॥**

---

'स्थाणुः कीले स्थिरे हरे' इति विश्वोक्तेः स्थाणुशब्दो नानार्थः । भो देवदत्त, त्वं भवच्छिदे संसारध्वंसार्थं स्थाणुं पश्य विलोकयेत्याद्युदाहरणे स्थाणुशब्देनात्र संसारध्वंसरूपप्रयोजनाच्छंभुरेव ज्ञेय इत्यर्थः । **सैन्धवमिति** । स्वानय । सुष्ठु यथाविधि आनयेत्यर्थः । इत्यत्रोक्तोदाहरणे सैन्धवशब्दो हि योगेन सिन्धोः सकाशादुत्पन्ने लवणे, तथा सिन्धुदेशसमुद्भूतेऽश्वेऽपि वर्तेत इति नानार्थकस्ततः क्षारशब्दितं लवणमेव भोजनस्य प्रकरणाद्ग्राह्यमित्यर्थः । भोजनप्रकरणसूचकं त्वत्र स्वानयेति पदेन यथाविध्यानयनविधानमेव । 'लवणं व्यञ्जनं चैव घृतं तैलं तथैव च । लेह्यं पेयं च विविधं हस्तदत्तं न भक्षयेत्' इति पैठीनसिवचनेन भट्टोजिदीक्षितैः स्वाह्निके लवणपरिवेषणं तु हस्तेतरेणैव कार्यमिति तद्विधानसूचनात् ॥ ५० ॥ **माधव इति** । 'माधवस्तु वसन्ते स्याद्वैशाखे गरुडध्वजे' इति विश्वान्माधवशब्दोऽनेकार्थः । तत्र तुष्टितलिङ्गस्य जडे वसन्तादावसंभवात्ततो नारायण एव माधवपदवाच्य इत्यर्थः । **देव इति** । त्रिपुरहा त्रिपुरं त्रिपुरासुरं हन्ति नाशयतीति तथा । इत्यत्रोदाहरणे अन्यपदस्य त्रिपुरहेतिपदस्य सन्निधेः 'देवः सुरे धने यक्षे' इति विश्वादनेकार्थेनापि देवपदेन शिव एव ग्राह्य इत्यर्थः । तत्कथितत्रिपुरहननस्यान्यत्रासंभवादिति ॥ ५१ ॥ **मधुनेति** । 'मधु क्षौद्रे जले क्षीरे मद्ये पुष्परसे मधुः । दैत्ये चैत्रे वसन्ते च जीवाशोके मधुद्रुमे' इति विश्वान्मधुशब्दो नानार्थः । अतोऽत्र मधुपदेन कोकिलस्य मादकत्वसामर्थ्यं वसन्त एव वर्तेत इति स एव ग्राह्यः । यद्वा कोकिलाधिकरणकमदरूपकार्यतानिरूपितकारणताशालित्वं वसन्त एवेति वा तस्यैव ग्रहः । **औचित्यादिति** । सा नायिका । मुखशब्दस्य वदनसांमुख्योभयवाचकत्वेऽपि वदने तावदागमनकर्मत्वस्यानुचितत्वात्सांमुख्ये तु तत्संभवादत्रौचित्यात्तदेवोच्यत इत्यर्थः ॥ ५२ ॥ **हंस इति** । 'रविश्वेतच्छदौ हंसौ' इत्यमराद्धंसपदं नानार्थम् । मरालकः श्वेतच्छदः प्रसिद्ध एव पक्षिविशेषः । **चित्रभानुरिति** । 'द्युमणिस्तरणिर्मित्रश्चित्रभानुर्विरोचनः' इत्यमरात्सूर्योऽपि चित्रभानुपदवाच्यस्तथा चित्रभानुर्विभावसुरित्यमेरपि तत एव तत्पदवाच्यस्तथापि दिवा चेदर्कः निशि चेत्पावक इति कालो-

**मित्रमस्तीत्यत्र सुहृद्व्यक्त्या मित्रः प्रभाकरः।**
**इतः सदैन्यः प्राप्तश्रीरिति चेष्टावशात्स्वयम्॥ ५४॥**
**यत्र द्वितीयाद्यर्थस्याप्यस्ति प्रकरणं स्फुटम्।**
**तत्राभिधैव तत्रापि यथा पञ्चनलीरणे॥ ५५॥**
**निजदर्शनमात्रेण निर्मूलितमलावलेः।**
**निराशः शोभते नित्यं तीर्थराजस्य सेवनात्॥ ५६॥**

---

दाहरणमिदमित्यर्थः॥ ५३॥ **मित्रमिति**। व्यक्तिः मुखाद्याकारः। **इत इति**। अयं देवदत्तः सदैन्योऽपि इत इति हृदयेऽङ्गुलिं निधाय प्राप्तश्रीर्जात इति कश्चित्प्रभुर्वदति। तत्र हृदयेऽङ्गुलिनिधानरूपचेष्टया देशाद्यनेकवाचिनोऽपीतः पदस्यात्र स्वयं वक्षैवार्थ इत्यर्थः। काव्ये स्वराभावात्ताननुदाहृत्यैव काव्यप्रकाशे आदिपदोक्ता चेष्टैवोक्तेति॥ ५४॥ नन्वस्त्वेवं संयोगादिवशादनेकार्थकशब्दस्थले शक्तिग्रहनियमस्तथापि यत्रार्थद्वयमपि प्रकरणादिप्राप्तं भवति तत्र कथं व्यवस्थेत्याशङ्क्य तत्रोभयत्रापि सकृदुच्चारितशब्दस्यैव शक्तिग्रहादेवेति समाधत्ते— **यत्रेति**। आदिपदात्तृतीयार्थादेः संग्रहः। स्फुटमित्यनेन कल्प्यमानतया गूढस्य व्यावृत्तिः। प्रकरणत्वं तूपक्रान्तार्हत्वमेव। तेन न ग्रन्थविशेषेऽतिव्याप्तिः। **तत्राभिधैवेति**। प्रथमस्तत्रशब्द उदाहरणपरः। तत्रोदाहरण इत्यर्थः। द्वितीयस्तु द्वितीयाद्यर्थपरः। तत्रापि द्वितीयाद्यर्थेऽप्यभिधैव शक्तिवृत्तिरेव विज्ञेयेति योजना। अभिनवैवेयं कल्पनेति शङ्कोपशान्तयेऽत्र प्राचामुदाहरणमाह सप्रतिज्ञम्— **यथेति**। नलरूपधराणां नलसहितानामिन्द्राग्नियमवरुणानां पञ्चनलानां समाहारः पञ्चनली तस्याः ईरणं श्रीहर्षकृतनैषधीयचरितत्रयोदशसर्गे—'ब्रूमः किमस्य वरवर्णिनि वीरसेनोद्भूतिं द्विपद्बलविजितवरपौरुषस्य। सेनाचरीभवदिभाननदानवारिवासेन यस्य जनिता सुरभीरणश्रीः' इत्यादिश्लोकेष्विन्द्राद्यन्यतमस्य नलस्य च वर्णनं तस्मिन्नित्यर्थः। अत्रोभयोरपि स्पष्टमेव प्रकरणमित्युभयत्रापि गत्यन्तराभावाच्छक्तिरेव परं त्वीदृशस्थले संस्कारोद्बोधक्रमादेव शाब्दबोधक्रम इत्यवधेयम्॥ ५५॥ एवं प्रकृतानुकूलं प्राचामुदाहरणमभिधायाधुनादिपदद्योतिततृतीयाद्यर्थघटितं तादृग्वर्णनस्थलं स्वयमुदाहरति—**निजेति**। निराशः निर्गता आशा विषयतृष्णा यस्य स तथा। योगीन्द्र इत्यर्थः। स तावन्नित्यमखण्डं तीर्थराजस्य सेवनात् शोभत इत्यन्वयः। 'तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु' इति विश्वोक्तेरत्र चरमभिन्नानां शास्त्राद्यखिलार्थानामपि निराशपदद्योतितस्य प्रकरणस्य सत्त्वात्तत्रापि शक्तिरेव। तथाच तीर्थराजस्य शास्त्रशिरोमणेर्वेदान्तस्य पक्षे यज्ञश्रेष्ठस्य 'यज्ञानां जपयज्ञोऽस्मि' इति श्रीमद्भगवद्वचनात्प्रणवादिजपस्य। पक्षे क्षेत्रक्षितिपतेः प्रयागस्याविमुक्तस्य वा, पक्षे उपायशब्दितसाधनाधिपतेः 'तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः। कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन' इतिच तद्वचनादेवाद्वैतब्रह्मणि चित्तनिरोधात्मकस्य योगस्य। पक्षे उपाध्यायशब्दवाच्य-

**अन्यथानुपपत्त्यापि श्रुतस्यार्थद्वयावभा ।**
**यत्र तत्राप्यर्थयुगेऽप्यभिधैवास्ति तद्यथा ॥ ५७ ॥**
**द्विजिह्वराजजिह्वाग्ररसास्वादेन मोदसे ।**
**सद्गुरो करुणाकल्पतरो मां किमुपेक्षसे ॥ ५८ ॥**
**अथारोपेण या शाब्दी शक्यसंबद्धबोधिका ।**
**तात्पर्यानुपपत्त्यैव वृत्तिः सा लक्षणोच्यते ॥ ५९ ॥**

---

गुरुवरस्य ब्रह्मोपदेष्टुः सेवनात्क्रमेण चिन्तनादनुष्ठानाभिवसनादभ्यसनादाराधनाच्च शोभते । सततं भ्राजत इत्यर्थः । तत्र हेतुं वदंस्तीर्थराजं विशिनष्टि—**निजदर्शनेति** । स्वप्रत्यक्षमात्रेण निर्मूलितेति । निर्मूलिता विध्वंसिता मलानां दोषाणामावलिः पङ्क्तिर्येन तस्य ॥ ५६ ॥ एवं यत्र श्रुतार्थस्यान्यथानुपपत्त्यावश्यमर्थद्वयावभासो वर्तते तत्र स्थलेऽप्युभयोरप्यर्थयोः शक्तिवृत्तिरेव बोध्येत्यभिधत्ते—**अन्यथेति** । अपिशब्दोऽत्रानुपदोक्तप्रकरणहेतुकार्थद्वयशक्तिसमुच्चयार्थः । श्रुतस्येति पदमन्यथानुपपत्त्येत्यनेन संबध्यते । श्रुतस्य लोकादौ ज्ञातस्यार्थस्यान्यथा प्रकारान्तरेणानुपपत्त्या। अघटमानतयेत्यर्थः । एवं यत्र यस्मिन्नुदाहरणे अर्थद्वयावभा अर्थयुगलस्य भानं वर्तते तत्रापि स्थले अर्थयुगेऽपि भासमानार्थयुग्मेपि अभिधैवास्ति शक्तिवृत्तिरेव भवति तत् निरुक्तार्थद्वयशक्तिस्थलं यथा अमुना वक्ष्यमाणप्रकारेण ज्ञेयमित्यर्थः ॥ ५७ ॥ तदुदाहरति—**द्विजिह्वेति** । अयि सद्गुरो, एवं चोद्धारकान्तररा हित्येनोपेक्षकत्वानर्हत्वं ध्वनितम् । त्वम् द्विजिह्वेति द्वे जिह्वे रसने येषां तेषां सर्पाणां राजा शेषावतारः पतञ्जलिः तस्य या जिह्वा तस्याः रसस्तद्ग्रथितग्रन्थमुख्यांशीभूतं योगशास्त्रं तस्यास्वादः तदुक्ताभ्यासानुभवस्तेनेत्यर्थः । पक्षे द्विजिह्वाः मिथ्याभाषिणः । सूचका इतियावत् । स्पष्टमन्यत् । मोदसे । उन्मन्यवस्थया तुष्यसीत्यर्थः । एतेन सद्गुरुत्वमेव समर्थितं भवति । पक्षे पिशुनशिरोरत्नवाक्सारतुष्टस्य तवेषदपराधित्वान्मदुपेक्षानुचितैवेति सूचितम् । यद्वा शिवाभिन्नत्वात् गरलतृप्तस्य तवेयमयुक्तेति वा । एवमपि नैवोद्धारणोत्साह इत्याशङ्क्य विशिनष्टि—**करुणेति** । करुणामयः कल्पतरुरिव सद्यः प्रार्थितदातृत्वात्कल्पतरुस्तत्संबुद्धौ । अत्र श्रुतं यत्त्वोपेक्षणानर्हत्वं तदन्यथानुपपत्त्या पतञ्जलिपिशुनाधिपरूपार्थद्वयभानं भवतीति तत्रावश्यमुभयत्रापि शक्तिरेव वक्तव्येति लक्षणसमन्वयः ॥ ५८ ॥ एवं शक्तिशक्यादिविचारं सप्रपञ्चं निरुच्याथोद्देशप्राप्तं लक्षणादिविचारं विधास्यन्नादौ तल्लक्षणं संक्षिपति—**अथेति** । अथ निरुक्तशक्त्यादिविवेचनानन्तरमित्यर्थः । आरोपेण अतस्मिंस्तद्धीलक्षणेनाध्यासेन बाधकालीनेच्छाजन्यज्ञानात्मकेनाहार्यारोपेण वेत्यर्थः। शाब्दी शब्दसंबन्धिनी नतु वस्तुतः। कुतः गङ्गायां घोष इति गङ्गापदप्रत्यायितः प्रवाहस्तीरं लक्षयतीति हेतोरर्थधर्म एव लक्षणा नतु शब्दधर्मः परंतु शब्दान्वयव्यतिरेकगम्यत्वात्तत्रारोप्यत एवेति । अतएवोक्तं काव्यप्रकाशेऽपि–'मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात् ।अन्यार्थो लक्ष्यते यत्सा लक्षणारोपितक्रिया'इति । एतादृशी तात्पर्यानु-

**यदुक्तं शक्यसंबन्धो लक्षणेति वदन्त्विह ।**
**शक्यस्य स्रोतसस्तीरे संयोगः स कथं नु सा ॥ ६० ॥**

---

पपत्त्येव 'उपक्रमादिभिर्लिङ्गैस्तात्पर्यं वक्तुराशयः' इति प्रागुक्तलक्षणस्य तात्पर्यस्य या अनुपपत्तिः यष्टीः प्रवेशयेत्यादौ यष्टीनां प्रवेशान्वयसंभवेऽपि प्रयोजनाभावाद्यष्टिधरप्रवेशन एव यत्तात्पर्यं तस्य प्रकारान्तरेणाघटमानता तयेत्यर्थः । अवधारणं तु गङ्गायां घोष इत्यत्रान्वयानुपपत्तेरपि लक्षणाबीजत्वसंभवेऽप्युक्तस्थले व्यभिचारात्तद्व्युदासार्थमेव । **शक्येति** । शक्यं गङ्गादि तेन संबद्धं तीरादि तस्य बोधिका ज्ञापिकेत्यर्थः । तदुक्तं पूर्वमीमांसावार्तिके–'मानान्तरविरोधे तु मुख्यार्थस्यापरिग्रहे । मुख्यार्थेनाविनाभूते प्रवृत्तिर्लक्षणेष्यते' इति । एतादृशी या वृत्तिः शब्दनिष्ठो धर्मविशेषः सा लक्षणोच्यत इति संबन्धः । एवं चारोपितशाब्दवृत्तित्वे सति तात्पर्यानुपपत्तिमात्रेण शक्यसंबद्धबोधकत्वं लक्षणात्वमिति तल्लक्षणं फलितम् । यष्टीः प्रवेशयेत्यत्र लाक्षणिकायष्टिपदायष्टिरूपशक्यार्थस्मृतावतिव्याप्तिव्यावृत्तये सत्यन्तम् । तत्रैकसंबन्धिज्ञानमपरसंबन्धिस्मारकमिति न्यायात्तात्पर्यानुपपत्तिमात्रेण शक्यो यो यष्टिपदार्थस्तेन संबद्धा ये यष्टिधराः पुरुषास्तद्बोधकत्वस्य सत्वात् । सत्यन्तनिवेशे तूक्तांशसत्वेऽपि स्मृतित्वादुक्तवृत्तित्वं नास्तीति नातिव्याप्तिः । एवं तर्हि पूर्वदलमेवास्तु लक्षणं, किं गौरवापादकेनोत्तरदलेनेति चेन्न । गङ्गायां घोष इत्यत्र पावनत्वादयो धर्मास्तटे नियमेन प्रतीयन्ते तद्धेतुभूतायां लक्षणामूलव्यञ्जनावृत्तावतिव्याप्त्यापत्तेः, कुतः तस्यां लक्षणामूलत्वेनारोपितशाब्दवृत्तित्वस्य सत्वात् । लक्षणाया अर्थधर्मत्वं तु सद्य एवोक्तम् । नन्वेवमपि लक्षणे तात्पर्येत्यादितृतीयान्तं मास्त्वेव गौरवादिति चेत्सत्यम् । तथापि गङ्गायां घोष इति वाक्यान्मत्स्योपस्थितिः किमिति न भवतीति प्रश्नापत्तिः । नच तथापि श्वेतो धावतीत्यादौ लक्षणायामव्याप्तिः । अन्वयानुपपत्तेरेव तत्र लक्षणाबिजत्वादिति वाच्यम् । धावतीत्युपसंहारे गमनस्याश्वादिविषयकतात्पर्यस्यानुपपत्तेस्तत्रापि सत्वात् । तर्हि विनिगमकाभावाद्गङ्गायां घोषः शोणो धावति मञ्चाः क्रोशन्तीत्याद्यनेकोदाहरणेषु दृष्टत्वादन्वयानुपपत्तेरेवास्तु तद्बीजत्वमित्यपि नाशङ्क्यम् । एतेष्वप्युदाहरणेषूक्तयुक्त्या तात्पर्यानुपपत्तेरप्यनुगतत्वेन छत्रिणो यान्ति, कुन्ताः प्रविशन्ति, काकेभ्यो दधि रक्ष्यतां, विषं भुङ्क्ष्वेत्यादिषु चान्वयानुपपत्तेरसत्त्वेन तात्पर्यानुपपत्तेरेव सत्वात् तस्या एव सर्वत्र तद्बीजत्वमिति सर्वमवदातम् ॥ ५९ ॥

अथ शक्यसंबन्धो लक्षणेति लाघवात्तार्किकाद्युक्तं लक्षणमेव किमिति नाद्रियत इत्याशङ्कायां तस्य लघुत्वेऽपि विचारे क्रियमाणे तत्स्वीकर्तुरपि लघुत्वमेवापततीति द्योतयितुं तदनुवदति—**यदुक्तमिति** । तथाचोक्तं न्यायसिद्धान्तमञ्जरीकारैः 'स्वशक्यसंबन्धो लक्षणा । अस्तिहि गङ्गापदशक्यः प्रवाहविशेषस्तत्संबन्धस्तीरे' इति । विवृतं चेदं तर्कप्रकाशकारैः—**स्वशक्येति** । स्वं लाक्षणिकं पदं तस्य यच्छक्यं तत्संबन्धो लक्षणेत्यर्थः । इदमेवोपपादयति—**अस्तीति** । गङ्गायां

**यो हि लक्षकधर्मोऽसौ लक्ष्यधर्मः कथं भवेत्।**
**नहि राधाकटाक्षस्य तैक्ष्ण्यं कुञ्जेऽपि दृश्यते ॥ ६१ ॥**
**तत्सोऽर्थगोऽपि शब्दैकान्वयादेर्लक्ष्यबोधतः।**
**आह्लादकत्ववच्छब्देऽप्यस्तीत्येव तदाशयः ॥ ६२ ॥**

---

घोष इत्यादौ स्वं गङ्गापदं तच्छक्यः प्रवाहस्तसंबन्धः संयोगादिरूपस्तीरेऽस्तीति गङ्गायामिति पदस्य तीरे लक्षणेत्यर्थः इति। रसगङ्गाधरकारा अप्येवमेवाहुः—शक्यसंबन्धो लक्षणेति। इह भवदुक्ते लक्षणालक्षणरूपे विषये इत्यर्थः। अत्र किं वक्तव्यमिति चेदस्य मत्प्रश्नस्योत्तरमेवेत्याशयेन तमेव प्रश्नमुपन्यस्यति—**शक्यस्येत्**युत्तरार्धेन।स निरुक्तः संबन्धः सा लक्षणा कथं नु स्यादिति योजना। नु इति वितर्के। कथमित्याक्षेपे। संयोगादेः संबन्धस्य लक्ष्यधर्मत्वेन लक्षकधर्मरूपलक्षणावृत्तित्वं कथमपि वक्तुमशक्यमेवेत्यर्थः॥६०॥तदेवोपपादयति—**योहीति**।अत्र यद्यपि प्रकृतविपरीत एवोद्देश्यविधेयभावः प्रतीयते। तथाहि प्रकृते तावत् शक्यसंबन्धं लक्ष्यधर्ममेवोद्दिश्य तत्र लक्षणाशब्दितं लक्षकधर्मत्वमेव विधीयत इति। तथापि न क्षतिः। घटः पटो न भवतीत्युक्ते पटो घटो न भवतीत्यपि यथा लोकेऽर्थादेव सिद्ध्यति तद्वत्प्रकृतेऽपि विवक्षितत्वादिति तत्त्वम्। लक्षको गङ्गादिशब्दः तस्य धर्मो लक्षणेति प्रसिद्धमेव नोचेल्लक्षणायां शब्दवृत्तित्वभङ्गापत्तिः स्यात्। असौ लक्षणाख्यो लक्षकशब्दधर्मः लक्ष्यधर्मः लक्ष्यस्य तीरादेः प्रवाहादिना साकं संयोगादिरूपो धर्मः कथं भवेत्, शक्यसंबन्धो लक्षणेति निरुक्तलक्षणा लक्षणमात्रेण स्यात्किं लक्ष्यानुरोधेन लक्षणं कार्यं नतु लक्षणानुरोधेन लक्ष्यमपि व्यवस्थाप्यमिति न्यायो नैव भवेदित्यर्थः। तत्र व्यतिरेकिणं दृष्टान्तमाह—**नहीति। राधेति**। राधायाः कटाक्षः श्रीकृष्णं प्रति यमुनापुलिनादौ वृन्दावनगतनिकटवर्तिमालतीकुञ्जाख्यविलाससंकेतस्थानसूचकलोचनव्यापारविशेषस्तस्येत्यर्थः। तैक्ष्ण्यं स्मरशरसहस्रादप्यधिकविकलतापादकत्वेनातिदुःसहत्वमित्यर्थः। कुञ्जे निरुक्तलतागृहे दृश्यते नहि। नैवानुभूयत इत्यर्थः। अत्र अपिशब्देनेदं सूचितम्। यदि लक्षकधर्मस्य लक्ष्यधर्मतापि स्याच्चेदुक्तकटाक्षेऽपि निरुक्तसंकेतलक्ष्यत्वात्तद्धर्मस्य निरुक्ततैक्ष्ण्यस्य निरुक्तरीत्या लक्षीभूतं कुञ्जधर्मत्वमपि दृश्येत तत्तु न दृश्यत इति नैवेदमुचितमिति। अत्रैवं प्रयोगः—लक्षणाख्यो लक्षकगङ्गादिशब्दधर्मः शक्यसंबन्धो लक्षणेति तल्लक्षणवशात्तीरप्रवाहसंयोगादिरूपः संयोगस्य द्विष्ठत्वेन तीरादेर्लक्ष्यस्य धर्मो नैव भवितुमर्हति लक्षकधर्मत्वात् राधाकटाक्षतैक्ष्ण्यवदिति। नच लक्षकधर्मस्याप्यनित्यत्वादेर्लक्ष्येऽपि दर्शनादप्रयोजकत्वमितिवाच्यम्। लक्ष्यबोधकेति हेतौ विशेषणीयत्वात्। तस्माद्विचार्यमिति ॥ ६१ ॥ नन्वेवं यदि प्राचां ग्रन्थान्दूषयसि तर्हि त्वया 'दुनोति नानया पूर्वसुमनोहृदयं गिरा' इत्यादिस्वप्रतिज्ञां भञ्जयता स्वात्मैव दूषितः स्यादिति चेत्सत्यम्। यदि मया तद्ग्रन्थेषु दूषणं दीयते किंतु तदाशयविवरणार्थमेव किंचिदाक्षिपामीत्याशयेन तद्व्यवस्थापयति स्वोक्तलक्षण-

**तथाच वृद्धसिद्धान्तसुगन्धेद्धधिया मया ।**
**साध्वेवोक्तं पिकेनेव तद्विकासेच्छुनाधुना ॥ ६३ ॥**

---

बीजत्वेन प्राचामेव लक्षणं तदाशयं विशदयन्—**तदिति ।** तत्तस्मात्पूर्वोक्ता-लक्ष्यबोधकस्य लक्षकधर्मस्वधर्मत्वानुपपत्तिरूपात्कारणादित्यर्थः । सः शक्यसंबन्धः अर्थगोऽपि संयोगादिरूपत्वेन प्रवाहादिपदार्थनिष्ठोऽपि शब्दैकान्वयादेः गङ्गादिशब्द-मात्रान्वयव्यतिरेकाभ्यामित्यर्थः । तौ च गङ्गायां घोष इत्यादिशब्दश्रवण एव लक्षणया तीरे घोष इत्यादिशाब्दबोधो जायते तदभावे तु नेत्याकार-कावेव । लक्ष्यबोधतः लक्ष्यस्य तीरादेर्बोधतः शाब्दबोधाद्धेतोरित्यर्थः । आह्लादकत्ववत् पुत्रस्ते जात इति वाक्यश्रोतुः पुत्रजन्मरूपार्थावबोधेनाह्लादो जायत इति तदाह्लादकत्वं यद्यप्युक्तार्थनिष्ठमेव तथापि शब्दान्वयव्यतिरेकाभ्यां यथा शब्दनिष्ठत्वेनापि लोके व्यवह्रियते नोचेदाह्लादकोऽयं शब्दः श्रुत इति व्यवहारो न स्यात्तद्वदित्यर्थः । शब्देऽपि गङ्गादिशब्देऽप्यस्ति वर्तत इत्यर्थः । इत्येव अयमेव तदाशयस्तेषां पूर्वाचार्याणामाशयोऽभिप्राय इत्यर्थः । अयं भावः—शक्यसंबन्धो लक्षणेति तेषां राद्धान्तः । तत्र शक्यस्य गङ्गादिपद-निष्ठशक्तिविषयस्य यः संबन्धस्तीरादिना सह संयोगादिधर्मविशेषः स लक्षणे-त्यक्षरार्थः । स धर्मस्तावद्यद्यप्यर्थनिष्ठ एव तथापि निरुक्तशब्दान्वयव्यतिरेक-वशाच्छब्दनिष्ठोऽपि वक्तव्यस्तथा च तस्य धर्मस्यार्थनिष्ठत्वेन संबन्धसाधा-रणत्वं शब्दनिष्ठत्वेन लक्षणात्वं च संभवत्येव । आह्लादकत्वदृष्टान्तेनार्थ-निष्ठस्यापि धर्मस्य यच्छब्दनिष्ठत्वं सर्वत्रानुभूयते तदप्यारोपादेवान्यथानुपपत्त्या-ङ्गीकार्यं नोचेत्प्रकारान्तरेण तस्य सुतरामसंभवात् । एवं चारोपितशाब्दवृत्तित्वे सतीत्यादि मत्परिष्कृतलक्षणमेव पर्यवसन्नमिति । नचायमेव प्राचामाशय इति त्वया कथं निर्णीयत इति वाच्यम् । अन्यथाऽनुपपत्तेरेव तत्साधक-त्वात् । उक्तं हि श्रीमद्वार्तिकाचार्यचरणैः—'अन्यथानुपपत्तिश्चेदस्ति वस्तुप्रसा-धिका । पिनष्टयदृष्टिवैमत्यं सैव सर्वबलाधिका' इति । नन्वेवमप्येकस्य संयोगादेः पदार्थान्तरे आरोपितत्वेन रूपभेदः कार्यभेदश्च क्व दृष्ट इति चेन्न । शुक्तिशक-लबहुलालोकसंयोगे तथा दृष्टत्वात् । तथाहि शुक्त्यालोकसंयोग एवेदं रजतमिति भ्रमे रजतालोकसंयोगत्वेनापि भासते रजतग्रहणप्रवृत्तिहेतुश्च भवतीति प्रसिद्धमेव । तस्मान्निरुक्तमेव तत्तात्पर्यमिति दिक् ॥ ६२ ॥ एवं प्राचां रहस्यं प्रकाश्य स्वोक्तं लक्षणालक्षणं निगमयति—**तथाचेति ।** तथाच एवं पूर्वाचार्यतात्पर्ये सिद्धे सति अधुना प्रकृतलक्षणानिरूपणावसरे अद्येत्यर्थः । मया यदुक्तं लक्षणालक्षणं अथारोपेण शाब्दीत्यादिना कथितं तत्साध्वेव शक्यसंबन्धो लक्षणेति प्राचीनोक्तलक्षणपरिष्कारत्वेन तदविरुद्धत्वेन च रमणीयमेवेत्यर्थः । तत्रानुरूपं दृष्टान्तमाह—**पिकेनेवेति ।** कोकिलेनेवेत्यर्थः । एतेन यथा कोकि-

**गौणी शुद्धा विरुद्धा च तथा लक्षितलक्षणा।**
**चतुर्धाऽसौ निरूढेति प्रयोजनवतीति च ॥ ६४ ॥**
**प्रत्येकं द्विविधा सापि निरूढत्वं तु पूर्वतः।**
**सत्प्रयोगप्रवाहत्वं व्यङ्ग्यज्ञानं प्रयोजनम् ॥ ६५ ॥**
**तत्र गौणीनिरूढानुकूलः कुशल इत्यपि।**
**सादृश्यगुणयोगेनानुगुणश्च विवेचकः ॥ ६६ ॥**

---

लस्य तिर्यक्त्वेन नीचत्वेऽपि तदुक्तेः सहृदयप्रियत्वमेवं ममाल्पज्ञत्वेनाप्रौढत्वेऽपि मद्वचसो विपश्चिदादरणीयत्वं बालभाषितत्वाद्भविष्यत्येवेति द्योतितम्। नन्वेवं बाल्यं चेत्किमिति प्रवर्तसे ग्रन्थरचन इत्यतो विशिनष्टि—**वृद्धेति तद्विकासेति** च विशेषणाभ्याम्। वृद्धाः विद्यादिवृद्धाः ये पूर्वाचार्यास्तेषां ये सिद्धान्ताः निर्णयाः तेषां यः सुगन्धः साधुलेशस्तेन इद्धा समृद्धा धीर्बुद्धिर्यस्य तेनेत्यर्थः। एतेन स्वस्यासामर्थ्येऽपि तत्प्रसादादेव किंचित्प्रावीण्यं सूचितम्। पक्षे वृद्धा पल्लवादिसमृद्धाः एतादृशा ये सिद्धाः फलदानोन्मुखाः आम्रास्तेषां अन्ताः अग्राणि तेषां वासन्तिकाम्राग्राणां यः सुगन्धः आमोदः तेन इद्धा वारंवारं कलरवोद्युक्ता धीर्यस्य तेनेत्यर्थः। तथा तद्विकासेच्छुना तेषां उक्तसिद्धान्तानां यो विकासस्तदिच्छुना तद्वाञ्छकेनेत्यर्थः। एतेन सारग्राहित्वं ध्वनितम्। पक्षे आम्रविकासाभिलाषिणेत्यर्थः ॥ ६३ ॥ एवमविरोधं संसाध्याथ लक्षणाभेदानुद्दिशति—**गौणीति**। सादृश्यसंबन्धवती गौणी, सादृश्यादिभिन्नसंबन्धवती शुद्धा। स्पष्टमन्यत्। इति भेदैरसौ पूर्वोक्ता लक्षणा चतुर्धा चतुःप्रकारा बोध्येत्यध्याहृत्य योजना। एवमुक्तायाश्चतुर्विधाया अपि तस्याः पुनर्द्वैविध्यमुद्दिशति—**निरूढेतीति** ॥ ६४ ॥ ननु किंनाम निरूढत्वं किंच प्रयोजनवत्त्वमित्याकाङ्क्षायां प्रथमं निरूढां लक्षयति—**निरूढत्वं त्विति**। तुशब्दः शङ्कोपशमार्थः। पूर्वतः अनादितः। सत्प्रयोगप्रवाहत्वं सतां पण्डितानां यः प्रयोगप्रवाहः प्रयोगपरंपरा तत्त्वं। निरूढलक्षणात्वमित्यर्थः। अथ क्रमप्राप्तं प्रयोजनवतीलक्षणं सूचयितुं प्रयोजनस्वरूपमाह—**व्यङ्ग्यज्ञानमिति**। व्यङ्ग्यस्य वक्ष्यमाणव्यञ्जनाख्यवृत्तिविषयस्यार्थस्य ज्ञानं बोध एव प्रयोजनं तद्युक्ता या लक्षणा सा प्रयोजनवतीति भावः। एतेन निरूढलक्षणायां निरुक्तं प्रयोजनं नैवास्तीति ध्वनितम् ॥ ६५ ॥ एवं लक्षणाष्टकमध्ये निरूढायास्तावद्गौण्यादिभेदचतुष्टयं क्रमेणोदाहरति—**तत्र गौणी**त्यादिचतुर्भिः। अनुकूल इति अनेनैव निर्वाहे कुशल इति व्युत्पत्तिदार्ढ्यार्थम्। सादृश्येति लक्षणसमन्वयार्थम्। सादृश्याख्यः कूलानुगतत्वादिरूपशक्यसाम्यरूपो यो गुणो धर्मस्तद्योगेनेत्यर्थः। अनुगुण इति अनुकूलपदेन निरूढेनैकवस्तुनिष्ठत्वसादृश्यगुणयोगादनुगुणो लक्ष्यते तथा कुशलपदेन कुशान् लाति तृणान्तरत्यागेनादत्त इति व्युत्पत्त्या सारग्राहित्वसादृश्यगुणयोगेन विवेचको लक्ष्यत

**शुद्धा निरूढानीलाख्ये घटाख्ये च पदे क्रमात्।**
**गुणजात्योर्वाचकेऽपि गुणी व्यक्तिश्च लक्ष्यते ॥ ६७ ॥**
**विरुद्धा तु निरूढेयं दर्शो भद्राथ मङ्गलः।**
**अदर्शोदय एवात्र लक्ष्यन्ते तद्विरोधिनः ॥ ६८ ॥**
**द्विरेफेति पदे रेफौ भ्रमरेति पदे ततः।**
**भृङ्ग एवं निरूढैषा ज्ञेया लक्षितलक्षणा ॥ ६९ ॥**
**प्रयोजनवती गौणी शुद्धा चापि पुनर्द्विधा।**
**आरोपाध्यवसानाभ्यां चतुःसंख्यास्तु ता यथा ॥ ७० ॥**
**गौणी प्रयोजनवती सारोपा चन्द्रआननम्।**
**गौर्वाहीक इति ज्ञेया रूपकालंकृतौ हिता ॥ ७१ ॥**

---

इति प्रयोजना ॥ ६६ ॥ **शुद्धेति**। नील इति नीलाख्ये पदे तथा घट इति घटाख्ये पदे क्रमादनुक्रमेण गुणजात्योर्वाचकेऽपि यद्यपि नीलपदं नीलरूपाख्यगुणवाचकं तथा घटपदं पूर्वोक्तरीत्या जातिशक्तिवादस्यैव स्वीकारात् जातिवाचकमेव तथापि तत्र नीलपदे नीलरूपवान् गुणी घटपदे च कम्बुग्रीवादिरूपा व्यक्तिरेव लक्ष्यतेऽत इयं शुद्धा निरूढा लक्षणेत्यर्थः ॥ ६७ ॥ **विरुद्धा त्विति**। दर्शः अमावास्या, भद्रा प्रसिद्धैव विष्टिसंज्ञान्तरा, मङ्गलः भूमिपुत्रः। अदर्शोदय एवेति। न दृश्यते सूर्यप्रविष्टत्वाच्चन्द्रो यस्मिन्नित्यदर्शः।'दर्शः सूर्येन्दुसङ्गमः' इत्यमरः। एवमादिपदान्न विद्यते भद्रं कल्याणं यथा तथा नास्ति मङ्गलं शुभं यस्मादिति तद्विरोधिन एव लक्ष्यन्तेऽत इयं विरुद्धा निरूढेत्यर्थः। तुशब्दो वैलक्षण्यार्थः। अत्र दर्शादिपदेष्वित्यर्थः ॥ ६८ ॥ **द्विरेफेतीति**। द्विरेफेति पदे रेफद्वयं शक्यं। तच्च भ्रमरेतिपदे वर्तत इति द्विरेफपदेन भ्रमरपदं लक्ष्यते। ततो भृङ्गो ज्ञायत इति एषा निरूढा लक्षितलक्षणा द्विरेफपदलक्षितं भ्रमरपदं तद्वाच्ये भृङ्गे द्विरेफपदस्य लक्षणेति तथा ज्ञेया बोध्येत्यर्थः ॥ ६९ ॥ एवं निरूढलक्षणायाः सोदाहरणं गौण्यादिभेदचतुष्टयं स्पष्टीकृत्याधुना क्रमप्राप्तं प्रयोजनवत्यास्तावद्भेदचतुष्टयं गौण्यादिरूपं निरूपयंस्तत्रापि प्रथमं तद्भेदद्वयमपि सारोपसाध्यवसानत्वभेदात्पुनर्द्विविधमिति तत्पूर्वदल एव चातुर्विध्यं संपन्नमित्याह—**प्रयोजनवतीति**। आरोपाध्यवसानाभ्यां युक्तासतीति शेषः। आरोप्यमाणारोपविषययोः पृथङ्निर्देशेऽप्यभेदकथनमारोपः। आरोपविषयस्यारोप्यमाणस्वरूपेणैवोक्तिरध्यवसानम्। ताः निरुक्तभेदभिन्नाश्चतुर्विधा लक्षणाः। यथा अनेन वक्ष्यमाणप्रकारेण सोदाहरणा विज्ञेया इत्यर्थः ॥ ७० ॥ तत्र प्रयोजनवतीं गौणीं सारोपामुदाहरति—**गौणी प्रयोजनवतीति**। अत्र गौणीति पदं प्रयोजनवतीतिपदोत्तरं बोध्यम्। प्रयोजनवत्या एव भेदचतुष्टये प्रथमस्य गौण्याख्यभेदस्य कथ्यमानत्वात्। इत्थं विन्यासस्तु पूर्वश्लोकादस्य झटिति वैजात्यसूचनार्थ एव। चन्द्र आननमित्यनेनैव निर्वाहे गौरित्याद्युदाहरणान्तरं तु दार्ढ्यार्थमेव। वाहीको

**इयमेवाननं चन्द्र इति चेदुच्यते यदा ।**
**तदाभिधीयते कैश्चित्सा विचक्षणलक्षणा ॥ ७२ ॥**
**सैव साध्यवसाना तु गौरेवायमिति स्फुटा ।**
**चन्द्र एवेदमित्यादौ रूपकातिशयोक्तिकृत् ॥ ७३ ॥**
**प्रयोजनवती शुद्धा सारोपायुर्घृतं त्विति ।**
**सैव साध्यवसाना चेदायुरेवेदमित्यपि ॥ ७४ ॥**
**उन्मादो मृत्युरात्तोक्तिरेवामृतमिति क्रमात् ।**
**हेत्वलंकारबोधायोपयुक्तास्ति द्विधाप्यसौ ॥ ७५ ॥**

---

वाहीकदेशोद्भवः पुरुषः । तत्र गौरिति वृषभवाचकं पदं चन्द्रपदवज्जाड्यमान्द्यादिसादृश्यगुणयोगाल्लाक्षणिकम् । तत्र चन्द्रवदाह्लादकत्वगुणयोगात्स्त्रीमुखे कामोद्दीपकत्वमस्तीति व्यङ्ग्यार्थज्ञानं प्रथमोदाहरणे यथा प्रयोजनमेवमुक्तपुरुषोऽनादरणीय इत्याद्यत्रापि तदस्त्येव । आरोपस्तूक्तलक्षणात्स्फुट एवेति सारोपेयम् । एवं सिंहो देवदत्तः, अग्निर्माणवकः, आदित्यो यूपः, यजमानः प्रस्तरः, प्रेयसी प्राणाः, विद्या धनं इत्याद्युदाहरणान्तराणि ज्ञेयानि । न केवलमुक्तव्यङ्ग्यज्ञानमेव प्रयोजनमस्याः किंत्वन्यदपीत्याह—**रूपकेति** ॥ ७१ ॥ एतस्या एवोदाहरणं व्यत्ययेन विन्यस्तं चेन्नामान्तरमपि चन्द्रालोककारैः कृतमित्याह—**इयमेवेति** । विस्तरस्तु नातीवोपयुक्त इति तत्रैव ज्ञेयः ॥ ७२ ॥ एवं प्रयोजनवत्याः प्रथमभेदात्मिकां गौणीं सारोपत्वेन निरूप्य यथोद्देशक्रमवशात्तामेव साध्यवसानत्वेनापि समुदाहरति—**सैवेति** । प्रयोजनवती गौणी लक्षणैवेत्यर्थः । अध्यवसानलक्षणं तु पूर्वमेवोक्तम् । तेन सहितेत्यर्थः । तुशब्दो वैलक्षण्यावद्योती । अयं कश्चिज्जडः पुरुषः गौरेव वृषभ एवेत्यर्थः । अत्र गोपदशक्यवृषभनिष्ठजाड्यादिगुणानां पुरुषविशेषे सत्वाद्गोत्वारोपविषयस्य वाहीकदेशीयस्य पुंसः आरोप्यमाणगोस्वरूपेणैवोक्तत्वात्सारोपत्वं सादृश्यसंबन्धघटितत्वाद्गौणत्वं चेति लक्षणसमन्वयः । प्रयोजनवत्त्वं तु प्राग्वदेव इति । निरुक्तोदाहरण इत्यर्थः । स्फुटा स्पष्टेति यावत् । तदेव दृढीकर्तुमुदाहरणान्तरमाह—**चन्द्र एवेति** । आदिशब्दादिमे नीलोत्पले एवेत्यादि बोध्यम् । एतस्या अपि प्राग्वत्प्रयोजनान्तरमाह—**रूपकेति** । तदुक्तम्—'रूपकातिशयोक्तिः स्यान्निगीर्याध्यवसानतः । पश्य निलोत्पलद्वन्द्वान्निःसरन्ति शिताः शराः' इति । निगीर्य उपमेयमन्तः कृत्वेत्यर्थः।इदं पुरोदृश्यमानं वस्तु चन्द्र एवेत्यत्रोपमेयस्य रमणीमुखस्यान्तर्धानपूर्वकं चन्द्रत्वाध्यवसानात्तथात्वमिति ॥७३॥ ततः क्रमप्राप्ते प्रयोजनवत्यां शुद्धायामपि सारोपत्वसाध्यवसानत्वे समुदाह्रियेते—**प्रयोजनवती**त्यादिना । अत्र सादृश्यादिभिन्नसंबन्धवत्त्वाच्छुद्धत्वम् । अन्यत्सर्वं प्राग्वत् । आयुःसाधनत्वाद्घृतादावायुष्ट्वारोपः । इदं घृतमित्यर्थः । एवं लाङ्गलं जीवनमित्याद्यूहनीयम् । स्पष्टमन्यत् ॥ ७४ ॥ नन्वनया कोवाऽलंकारः सिद्ध्यतीतिचेत्सोदाहरणं तमाह—**उन्माद इति** । उन्मादः प्रमादः स तावन्मृत्युहेतु-

**शुद्धा प्रयोजनवती समस्तव्यस्तताभिदा ।**
**पुनर्द्विधापि सादृश्यान्यसंबन्धैरनेकधा ॥ ७६ ॥**
**व्यस्तकोटौ तु जहती लक्षणार्पणसंज्ञिका ।**
**गङ्गायां घोष इत्यत्रात्यन्तं वाच्यस्तिरस्कृतः ॥ ७७ ॥**

---

त्वात्तथा । इदं सारोपायास्तस्या उदाहरणं हेत्वलंकारबोधार्थम् । **आप्तेति ।** आप्तो यथार्थवक्ता तस्योक्तिर्वचनं तदेवामृतममृतप्राप्तिहेतुत्वादित्यर्थः । इदं तु सारोपायाः । शेषमतिरोहितार्थम् ॥ ७५ ॥ एवं शुद्धायाः प्रयोजनवत्याः प्रतिज्ञातं सारोपत्वादिभेदद्वयमुदाहृत्य पुनस्तस्यामेव समस्तत्वादिभेदाद्वैविध्यं विधत्ते— **शुद्धेति ।** समस्तत्वं समासघटितत्वम् । व्यस्तत्वं तच्छून्यत्वमिति यावत् । न केवलमेतावदेव किंतु द्विविधाया अपि तस्यास्तत्तत्संबन्धभेदेन नानाविधत्वमस्तीत्याह—**अपिसादृश्येति** शेषेण । अपिशब्दो निरुक्तसमस्तत्वादिद्वैविध्यसमुच्चयार्थः । तेन समस्तव्यस्तताभिदा द्विविधा शुद्धा प्रयोजनवती लक्षणासादृश्यान्यसंबन्धैरनेकधाप्यस्तीति योजना । गौण्यां प्रयोजनवत्यां सादृश्यसंबन्धोऽस्तीति तत्रातिव्याप्तिवारणाय सादृश्यान्येतिसंबन्धविशेषणम् । उपलक्षणमिदं वक्ष्यमाणायां विरुद्धाख्यप्रयोजनवत्यां लक्षणायां विद्यमानस्य विरोध्यविरोधिभावसंबन्धस्य तथा तादृश्यां लक्षितलक्षणायां वर्तमानस्य दूरान्वितत्वसंबन्धस्यापि ॥ ७६ ॥ एवं ब्राह्मणाः सन्ति, छत्रिणो यान्ति, यष्टीः प्रवेशय, काकेभ्यो दधि रक्ष्यतां, गाश्चारयति, रथो गच्छतीत्यादि । तत्र प्रयोजनाधिक्याद्व्यस्तकोटिनिष्ठानेव दिङ्मात्रेण कतिचित्तद्भेदानुद्देशपूर्वकमुदाहरति—**व्यस्तकोटौ त्विति ।** तुशब्दः पुनरर्थे । जहती जहल्लक्षणेत्यर्थः । लक्षणार्पणसंज्ञिकेत्येकं पदम् । लक्षणमिति अर्पणमिति च संज्ञा यस्याः सा तथा । एतत्संज्ञाद्वयं तु तान्त्रिकत्वेन पारिभाषिकमेव । उक्तं हि काव्यप्रकाशे लक्षणां प्रकृत्य–'स्वसिद्धये पराक्षेपः परार्थं स्वसमर्पणम् । उपादानं लक्षणं चेत्युक्ता शुद्धैव सा द्विधा' इति । अस्यायमर्थः—कुन्ताः प्रविशन्तीत्यादौ स्वशब्दवाच्यानां कुन्तानां जडत्वेन प्रवेशासंभवात्तदर्थं पराः कुन्तानां धारणकर्तारः पुरुषाः आक्षिप्यन्ते उपादीयन्ते यत्र यदुपादानमेतन्नाम्न्यजहल्लक्षणेयमिति । तथा गङ्गायां घोष इत्यादौ तटस्य घोषाधिकरणतासिद्धये स्वशब्दितगङ्गाशब्दः स्वार्थमर्पयति जहाति यत्र तदियं लक्षणनाम्नी जहल्लक्षणेति । चन्द्रालोके त्वस्या अर्पणसंज्ञाप्युक्ताऽस्मिन्नेव प्रकरणे— 'उपादानार्पणद्वारे द्वे चान्ये इति षड्विधा । कुन्ता विशन्ति गङ्गायां घोषो निवसतीति च' इति । नचात्रार्पणद्वारेति संज्ञा नत्वर्पणेतीति वाच्यम् । नामैकदेशग्रहणे नामग्रहणमिति न्यायेन तत्सिद्धेः । गङ्गायामिति इत्यत्रोदाहरणे वाच्यः वाच्यार्थः प्रवाहः अत्यन्ततिरस्कृतवाच्यनामा ध्वनिरनया सिध्यतीत्यर्थः । उदाहरणं तु तस्येदमेव । तथाहि—अत्र तीरे यत्पावनत्वं प्रतीयते तदुक्तध्व-

**अजहत्यप्युपादाननाम्नी श्वेतोऽभिधावति ।**
**अनयार्थान्तरे संक्रमितवाच्योऽत्र सूच्यते ॥ ७८ ॥**
**जहत्यजहती सोऽयं गोपीनाथ इतीरिते ।**
**तथा तत्त्वमसीत्यादौ भागत्यागाभिधाप्यसौ ॥ ७९ ॥**

---

निरूपमेवेति भावः । एवं मञ्चाः क्रोशन्ति नौरेषा रौति लोहं दहतीत्याद्यूह्यम् ॥ ७७ ॥ एवमजहल्लक्षणामाह—**अजहत्यपीति** । तत्रापि संज्ञान्तरमाह—**उपादानेति** । तामुदाहरति—**श्वेत इति** । अस्याः प्रयोजनमाह—**अनयेति** । अत्रापि यः श्वेतोऽश्वो धावति तमानयेत्यादितद्वपुः ॥ ७८ ॥ अथ जहदजहल्लक्षणामुदाहरति—**जहत्यजहतीति** । श्रीकृष्णस्य मथुरां प्रति गमनानन्तरं कालान्तरे कदाचिद्गोकुलवासिजनानां भगवतो दर्शने जाते सति ततः कस्याश्चिद्गोपिकायाः परममहोत्साहवशात्कः श्रीकृष्ण इति निकटवर्तिन्यपि भगवत्येव भ्रान्तायाः संदेहनिरासार्थं कयाचिद्गोपिकयाङ्गुलिनिर्देशे सानुशयं सोऽयं गोपीनाथ इति वाक्य ईरिते उच्चारितेऽत्र तच्छब्दस्य पूर्वपरामर्शित्वेन वृन्दावनादिदेशकैशोरादिवयोविशिष्टस्य भगवतो वाचकत्वात्तथायमिति पदस्य एतद्देशकालविशिष्टस्य वाचकत्वाविशिष्टयोः परस्परविरुद्धत्वेनाभेदासंभवादत्र निरुक्तलक्षणया तदिदंशब्दवाच्यार्थयोरुक्तरूपयोः परित्यागेन श्रीकृष्णस्वरूपमात्रयोर्लक्ष्यांशयोरेव ग्रहेण गोपीनाथपदार्थाभेदघटकशाब्दबोधो भवतीत्यत्र जहत्यजहती लक्षणेत्यर्थः । एवमस्याः लौकिकमुदाहरणमभिधाय वैदिकमप्याह—**तथेति** । तृतीयपादेन। तत्त्वमसीति शिष्यं प्रति गुरोरद्वैतात्मतत्त्वोपदेशवाक्यम् । तत्रापि तच्छब्दस्य पूर्वपरामर्शित्वेन 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं' 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः' इति प्रागुपक्रान्तजगज्जन्मादिकारणत्वविशिष्टब्रह्मवाचकत्वात्त्वंपदस्य च स्थूलादिदेहविशिष्टात्मवाचकत्वात्परस्परं विरुद्धधर्माक्रान्तत्वेनासिपदद्योतितस्याखण्डाभेदस्यासंभवादुक्तलक्षणयैव पदार्थद्वयेऽपि निरुक्तवाच्यार्थयोः परित्यागेनोभयत्रापि चिन्मात्रयोर्लक्ष्यांशयोर्ग्रहादेकमेवाद्वितीयमित्युपक्रमादिद्योतिततात्पर्यव्यङ्ग्यस्याखण्डैकरसस्याद्वैतचिन्मात्ररूपस्य ब्रह्मात्मैक्यस्य सिद्धिर्भवति । पराक्रान्तं चात्र भूरितरं श्रीमद्भाष्यकारभगवत्पूज्यपादपादारविन्दप्रमुखैः पूर्वाचार्यैः श्रीमच्छारीरकमीमांसाभाष्यप्रभृतिषु गुरुलघुनिबन्धकदम्बेषु । आदिपदेनाहं ब्रह्मास्मीत्यादीन्येवंजातीयकानि महावाक्यानि गृह्यन्ते । एतस्या एव नामान्तरमाह—**भागेति** । नन्वनया को वा व्यङ्ग्यार्थः सिद्ध्यति अत्यन्ततिरस्कृतवाच्यादेस्तस्य जहत्यादित एव सिद्धत्वादिति चेत्किं लोके पृच्छसि वेदे वा। नाद्यः । सोऽयमित्याद्युदाहृते लौकिकवाक्ये प्राक्तनविलासस्मारकत्वेन बहुदिनलब्धोऽधुनायं यथेच्छं कटाक्षच्छटादिविषयीकर्तव्य इत्यादिवस्तुरूपस्यैव तस्य सिद्धत्वात् । नाप्यन्त्यः । यावद्दृश्यध्वंसरूपमोक्षाख्यस्यैव तस्य तत्रापि स्फुटत्वाच्चेति सर्वं शिवम्

**स्थूणेन्द्रार्थेन्द्र इत्यादौ तादर्थ्यादौपचारिकी ।**
**स्वस्वामिभावसंबन्धाद्राजकीयः पुमान्नृपः ॥ ८० ॥**
**हस्ताग्रमात्रेऽग्रहस्तोऽवयवावयवित्वतः ।**
**अतक्षापि तथा तक्षा तात्कर्म्यादभिधीयते ॥ ८१ ॥**
**अङ्गुल्यग्रे करीत्याभिमुख्याद्देशोऽवदद्घटम् ।**
**वाचकत्वाद्घटपदेऽत्रेति नानाविधास्ति सा ॥ ८२ ॥**
**समस्तकोटावथ ता बहुव्रीहौ तु चित्रगुः ।**
**इत्यादौ यद्येकदेशान्वयः स्वीक्रियते तदा ॥ ८३ ॥**
**लक्षणा गोपदस्यास्ति गोमत्येवान्वयो गवि ।**
**ज्ञेयश्चित्रपदार्थस्येत्येवं तत्र व्यवस्थितिः ॥ ८४ ॥**

---

॥ ७९ ॥ एवं सर्वसंमतान्व्यस्तकोटिनिविष्टाञ्जहल्लक्षणादींस्तद्भेदानुदाहृत्य पुनर्द्विधापि सादृश्यान्यसंबन्धैरनेकधेति प्राक्प्रतिज्ञातं तत्र के ते संबन्धा इत्याकाङ्क्षायां तेषामानन्त्येऽपि दिक्प्रदर्शनार्थमेव कांश्चित्तान्सोद्देशमुदाहरति—**स्थूणेत्या**दिभिस्त्रिभिः । 'स्थूणा स्तम्भेऽपि वेश्मनः' इत्यमरोक्तेः स्तम्भविशेषः स्थूणाशब्दवाच्यः । साच क्वचिद्यज्ञादिकर्मविशेषे इन्द्रार्था इन्द्राय निवेदिता भवतीति । तस्यां इन्द्र इति पदप्रयोगो लाक्षणिक एवेति । तत्र तादर्थ्यरूपात्संबन्धादेव सेत्यर्थः। एतस्या औपचारिकीत्युपचारवशैकजन्यत्वात्संज्ञापि । अग्रिमस्थलपञ्चकेऽपीयमेव संज्ञा ज्ञेयेत्याशयः । आदिपदेन लोके द्रव्यांशविभागावसरे अयं द्रव्यांशो देवदत्तोऽयं विष्णुमित्र इत्याद्युदाहार्यम् । **स्वेति** । 'स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने' इत्यमरोक्तेः स्वशब्देनात्मीयोऽत्र ग्राह्यः ॥ ८० ॥ **हस्तेति** । हस्ताग्र एवेत्यर्थः । **अवयवेति** । अवयवावयविभावसंबन्धेनेत्यर्थः । **अतक्षापीति** । अपि तथेति निरुक्तौपचारिकलक्षणोदाहरणसमुच्चयार्थमेव तात्कर्म्यादिति । तस्य तक्ष्णः कर्म यस्य तद्भावस्तस्मात्तद्व्यापारशालित्वादित्यर्थः ॥८१॥ **अङ्गुल्यग्र इति** । केनचिद्बालेन क्व करीति पृष्टे सति तन्मातुरिदं वाक्यम् । तत्र अङ्गुल्यग्रपदेनाभिमुख्यसंबन्धाद्देशविशेषो लक्ष्यत इत्यर्थः । **अवददिति** । चैत्रः घटं अवददित्यत्र वाक्ये वाचकत्वाद्घटपदे लक्षणेत्यर्थः । उपसंहरति—**इतीति** । सा पूर्वं प्रतिज्ञाता लक्षणेत्यर्थः । **नानेति** । उपलक्ष्योपलक्षकत्वादिभिः शाखायां चन्द्रः काकवन्तो देवदत्तस्य गृहा इत्यादौ प्रसिद्धैरनेकविधसंबन्धैर्बहुप्रकारेत्यर्थः ॥ ८२ ॥ अथ समस्तकोटिनिविष्टानां तासां निरूपणमारभते—**समस्तेति** । अथशब्दः प्रकरणान्तरारम्भार्थः समस्तकोटौ समासघटितलाक्षणिकपदपङ्क्तावित्यर्थः। ताः लक्षणाः ब्रुवे इति शेषः । तत्र बहुव्रीहौ तामुदाहरति—**बहुव्रीहौ त्विति** । तुशब्दः पुनरर्थे । चित्रगुरित्युदाहरणम् । तत्र चित्राः गावो यस्येति बहुव्रीहिः । अत्र हि मतद्वयं न्यायविदां चित्रादेः पदार्थैकदेशस्यान्वयस्वीकारोऽस्वीकारश्चेति । तत्राद्यमुपन्यसति—**यदीति** ॥ ८३ ॥ तेन प्रकृते व्यवस्थामाह—**लक्षणेति** ।

**नैव स्वीक्रियतेऽसौ चेत्तदा सा चित्रगोमति ।**
**तात्पर्यग्राहकं चित्रपदमित्येष निर्णयः ॥ ८५ ॥**
**तथा तत्पुरुषे राजपुरुषोऽस्तीत्युदाहृतौ ।**
**लक्षणा राजसंबन्धिन्येव पूर्वपदे मता ॥ ८६ ॥**
**अप्यर्धपिप्पलीत्यादौ ज्ञेयोत्तरपदेऽपि सा ।**
**तथैवास्त्यव्ययीभावेऽप्युपकुम्भमिति ह्यसौ ॥ ८७ ॥**
**समाहाराभिधे द्वन्द्वे समाहारोऽनुभूयते ।**
**तदाहिनकुलं पश्येत्यादौ परपदेऽस्तु सा ॥ ८८ ॥**
**इतरेतरयोगाख्यतद्वाधेनैकशेषके ।**
**पितरौ श्वशुरौ चेति सा पित्रादिपदेष्विति ॥ ८९ ॥**
**अथ प्रयोजनवती विरुद्धा धन्य एव सः ।**
**किं वक्तव्यमिहेत्यादावधन्यो लक्ष्यतेऽनया ॥ ९० ॥**

---

गोमत्येव गोविशिष्टपुरुष एवेत्यर्थः । चित्रपदार्थस्यान्वयो विज्ञेय इति संबन्धः । उपसंहरति—**इत्येवमिति** । तत्रोक्तस्थले । व्यवस्थितिर्व्यवस्थेत्यर्थः ॥ ८४ ॥ अन्त्यमुपन्यस्य तेनापि प्रकृते व्यवस्थापयति—**नैवेति** । असौ निरुक्तैकदेशान्वयः सा गोपदस्य लक्षणेत्यर्थः । तर्हि चित्रपदं व्यर्थमितिचेत्तत्राह—**तात्पर्येति** । उपसंहरति—**इत्येष इति** । निर्णयः सिद्धान्तः । पूर्वाचार्याणामिति शेषः ॥८५॥ एवं तत्पुरुषे तामुदाहरति–**तथा तत्पुरुष इति** । राज्ञः पुरुष इति षष्ठीतत्पुरुषः समासः । पूर्वपदे राजपद इत्यर्थः।स्पष्टमन्यत्॥८६॥तस्यैवोदाहरणान्तरमाह–**अप्यर्धेति** । अपिशब्दः समुच्चयार्थः । अर्धपिप्पली पिप्पल्याः अर्धमिति अर्धपिप्पली । इत्युदाहरणे सा लक्षणा उत्तरपदेऽपि पिप्पलीति पदे । तत्संबन्धिनि ज्ञेयेत्यर्थः । अत्र 'पुंस्यर्धोऽर्धं समेंऽशके' इति कोशाद्यदि विषमांशो विवक्षितश्चेत्पिप्पल्याः अर्ध इति पुंलिङ्गं प्रयोज्यम् । अपिशब्देन तत्पुरुषे पूर्वपद एव लक्षणेति न सार्वत्रिको नियम इति सूचितम् । ततोऽव्ययीभावे तामुदाहरति—**तथैवेति** । उत्तरपद एवेत्यर्थः । कुम्भस्य उप इत्युपकुम्भं इत्युदाहरणे असौ कुम्भपदस्य कुम्भसंबन्धिन्येव लक्षणेत्यर्थः । हिरवधारणे ॥ ८७ ॥ अथ द्वन्द्वे तामुदाहरति क्रमेण समाहाराख्ये इतरेतरयोगाख्ये च—**समाहारे**त्यादिद्वाभ्याम् । परपदे नकुलपदे सा लक्षणा । अहिनकुलयोः समाहारोऽहिनकुलमिति समाहारेस्त्वित्यर्थः । अत्र तदेति पदेन यदि समाहारो नानुभूयते प्रकृतवाक्येन तदा नैवात्र लक्षणेत्याशयो ध्वनितः । आदिपदेन पाणिपादं भेरीमृदङ्गमित्यादि ॥ ८८ ॥ **इतरेतरेति** । चशब्दात् शिवौ युवानावित्यादि ज्ञेयम् । इत्युदाहरणे सा लक्षणा पित्रादिपदेषु माता च पिता च पितरावित्याद्येकशेषवशान्मात्रादिविषयिणी बोध्येत्यर्थः । इतिशब्दः समासलक्षणोपसंहारी ॥ ८९ ॥ ततः क्रमप्राप्तां विरुद्धां प्रयोजनवतीमुदाहरति—**अथेति** । आनन्तर्यार्थोऽथशब्दः । एवं शुद्धायाः प्रयो-

**व्याजस्तुतिरलंकारः सिध्यत्यस्याः प्रसादतः ।**
**प्रयोजनवती तद्वदेषा लक्षितलक्षणा ॥ ९१ ॥**
**वैदेहीमवलोक्यैव स्तब्धो रघुकुलोद्वहः ।**
**वैदेहीति पदे लक्ष्यो विदेहस्तत्पिता ततः ॥ ९२ ॥**
**विदेहकैवल्यानन्दो लक्ष्यः स्तब्धत्वकारकः ।**
**कारणं काव्यलिङ्गाख्यालंकृतेरियमीक्ष्यते ॥ ९३ ॥**
**विशिष्टलक्ष्याद्यप्यन्यच्चन्द्रालोककृतां मते ।**
**प्रयोजनविशिष्टाया गौण्या भेदचतुष्टयम् ॥ ९४ ॥**

---

जनवत्याः प्रकरणसमाप्त्युत्तरमित्यर्थः । **धन्य एवेति ।** इयमपकारिणं प्रति कस्यचिदन्यनिकटे उक्तिः । आदिपदात् 'गच्छ गच्छसि चेत्' इत्यादि ग्राह्यम् । स्फुटमेवान्यत् ॥९०॥ अस्याः प्राग्वत्प्रयोजनान्तरमाहार्धेन—**व्याजस्तुतिरिति ।** तदुक्तम्—'उक्तिर्व्याजस्तुतिर्निन्दास्तुतिभ्यां स्तुतिनिन्दयोः । कः स्वर्धुनि विवेकस्ते पापिनो नयसे दिवम् । साधु दूति पुनः साधु कर्तव्यं किमतः परम् । यन्मदर्थे विलूनासि दन्तैरपि नखैरपि' इति । अथ लक्षितलक्षणां तामुदाहरति—**प्रयोजनवतीति** द्वयेन । तद्वत्प्राग्वदित्यर्थः । एषा अग्रे अनुपदमेव वक्ष्यमाणेत्यर्थः ॥९१॥ **वैदेहीमिति ।** विदेहस्य जनकस्य ह्यपत्यं तां जानकीमित्यर्थः । अवलोक्यैव विवाहोत्सवे वीक्ष्यैव न त्वालिङ्गयापीत्यर्थः । एतेन तस्यामतिसुन्दरत्वं ध्वनितम् । स्तब्धः 'स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः । वैवर्ण्यमश्रुप्रलय इत्यष्टौ सात्विकाः स्मृताः' इत्युक्तेः कामोत्कर्षेण सात्विक स्तम्भाख्यभावविकारं प्राप्त इति यावत् । रघुकुलेति साभिप्रायम् । रघुवंशावतंसः श्रीरामोऽपीत्यर्थः । एतेनेन्द्रवज्रपातसहिष्णोः रघोर्वंशोत्पन्नतोऽपि श्रीरामः सीताकटाक्षाक्षेपक्षमो नाभूदिति तस्यां निरुपमत्वं व्यज्यते । ननु किमेतावता प्रकृत इत्यत आह—**वैदेहीति ।** उक्तवाक्य इत्यर्थः । **तत्पितेति ।** निरुक्तव्युत्पत्त्या तस्याः सीतायाः पिता जनितेत्यर्थः । स्मर्यत इति शेषः । ततः उक्तस्मरणानन्तरम् ॥९२॥ **विदेहेति ।** अद्वैतब्रह्मानन्द इत्यर्थः । **स्तब्धत्वेति ।** सप्तम्यां भूमौ तादृगानन्देनैव स्तब्धत्वदृष्टेस्तद्धेतुरित्यर्थः । अत्रापि प्राग्वत्प्रयोजनान्तरमाह—**कारणमिति ।** तदुक्तम् —'समर्थनीयस्यार्थस्य काव्यलिङ्गसमर्थनम् । जितोऽसि मन्द कन्दर्प मच्चित्तेऽस्ति त्रिलोचनः' इति । स्पष्टमन्यत् ॥ ९३ ॥ अथ जयदेवसंमतं गौण्याः प्रयोजनवत्याः पूर्वोक्तभेदान्तर्भूतमपि चमत्कारावहत्वेन पृथग्भेदचतुष्टयं स्पष्टयितुमवतारयति—**विशिष्टेति ।** आदिपदेन विशिष्टलक्षकादिग्रहः । अपिः समुच्चयार्थः । **चन्द्रालोकेति ।** बहुवचनं पूजार्थम् । जयदेवकवीनामित्यर्थः । तथाचोक्तं तत्रैव—'लक्ष्यलक्षकवैशिष्ट्याद्द्विविधापि पुनः पुनः । सरसं काव्यममृतं विद्यास्थिरतरं धनम् । तथा सहेतुरतथा भेदभिन्ना च कुत्रचित् । सौन्दर्येणैष कन्दर्पः सा च मूर्तिमती रतिः' इति । अस्यार्थः—लक्ष्यवैशिष्ट्याल्लक्षकवैशिष्ट्याच्चेति । शिष्टं स्पष्टमेव॥९४॥

**विशिष्टलक्ष्या त्वेषास्ति शान्तः पुरुष ईश्वरः ।**
**विशिष्टलक्षका साध्वी निश्चला श्रीरुदाहृता ॥ ९५ ॥**
**सहेतुलक्षणा बुद्ध्या स तु साक्षाद्बृहस्पतिः ।**
**निर्हेतुलक्षणा विद्या शक्रसंपत्तिरुच्यते ॥ ९६ ॥**
**वाक्यार्थोऽपि चतुर्धैवं विज्ञेयः सप्रयोजनः ।**
**गौणः शुद्धो विरुद्धश्च क्रमाल्लक्षितलक्ष्यकः ॥ ९७ ॥**
**इन्दाविन्दीवरे भातः सेयमस्त्यम्बुजेक्षण ।**
**गच्छ गच्छसिचेत्कृष्ण दूति त्वं भुङ्क्ष्व रे विषम् ॥९८॥**

तत्र विशिष्टलक्ष्यामुदाहरति—**विशिष्टेति** । वैलक्षण्यार्थस्तुशब्दः । अत्र शान्तत्वविशिष्टः पुरुष एवेश्वरपदलक्ष्य इति विशिष्टलक्ष्यत्वं तथा शान्तिगुणयोगादज्ञाननाशकत्वादितत्साधर्म्येण गौणीत्वमेव 'तस्मादात्मज्ञमर्चयेद्भूतिकामः' इति श्रुतिचोदितं निरुक्तपुरुषे परमपूज्यत्वलक्षणं व्यङ्ग्यं प्रयोजनमप्यस्तीति तद्वत्त्वमिति लक्षणसमन्वयः । एवमग्रेऽपि ज्ञेयम् । रूपकालङ्कारः । प्रयोजनान्तरं तु स्फुटमेव । विशिष्टलक्षकामेवमुदाहरति—**विशिष्टलक्षकेति** । अत्र साध्वी लक्ष्या । शेषं लक्षकं तद्विशिष्टमेव ॥ ९५ ॥ अथ सहेतुलक्षणामुदाहरति—**सहेत्विति** । ततो निर्हेतुकां तामुदाहरति—**निर्हेत्विति** । उच्यत इति बुधैरिति शेषः ॥९६॥ एवं लाक्षणिकसर्वपदत्वेन लाक्षणिको वाक्यार्थोऽपि गौणत्वादिभेदैश्चतुर्विधोऽस्तीत्याह—**वाक्यार्थोऽपीति** ॥ ९७ ॥ क्रमेण तमुदाहरति—**इन्दाविति** । इदं हि गोप्यन्तरमुपभुज्य वृन्दावने राधिकामन्वेष्टुं प्रवृत्तस्य श्रीकृष्णस्य दूरात्कुञ्जविशेषे तन्मुखमालक्ष्य स्वसहचरं प्रति वाक्यम् । इन्दौ शारदराकासुधाकरे इन्दीवरे नीलोत्पले भातः स्फुरत इत्यर्थः । अत्रेन्दुपदेन मुखमिन्दीवरपदेन नेत्रे भात इति चाञ्चल्यत्वाह्लादकत्वनीलत्वमनोहारित्वरूपैः साधर्म्यैः क्रमेण लक्ष्यन्ते । तेन सुनयन सुप्रसन्नमिदं कामिनीवदनमस्तीत्येको वाक्यार्थोऽपि लक्ष्य एव सिध्यतीत्ययं गौणो लाक्षणिको वाक्यार्थः संपन्नः । अत्र तद्विषयिणी भगवतो रतिस्तथा रूपकातिशयोक्त्यलङ्कृतिश्च व्यञ्जनया प्रयोजनमस्येति प्रयोजनतापि।ततः सोऽवलोक्य तां राधात्वेन निश्चित्य भगवन्तं प्रति समुपदिशति—**सेयमिति** । भो अम्बुजेक्षण, अम्बुजायाः पद्मायाः ईक्षणं साभिलाषमवलोकनं यस्मिन्निति तत्सम्बुद्धौ । एतेन त्रैलोक्यसुन्दरी लक्ष्मीरपि यत्र सर्वदा साभिलाषावलोकनशालिनी येन कटाक्षतोऽपि नेक्ष्यते सोऽपि श्रीकृष्णस्तावद्वृन्दावने कुपितत्वेन निलीनां राधिकामन्वेष्टुं प्रवृत्तः सन्क्वचिद्दूरात्तदाननं समवेक्ष्य रूपकातिशयोक्त्या वर्णयतीति किं वर्णनीयं तत्सौन्दर्यमिति व्यज्यते । हे कमलेक्षण श्रीकृष्ण, सा प्रागेतावत्कालमनुष्ठितभवत्कर्तृकान्वेषणविषया राधिका । इयं प्रत्यक्षं पुरोऽवभासमाना अङ्गुलिनिर्देश्या अस्ति । वर्तत इत्यर्थः । अत्रापि वाक्ये प्रागुक्ता सेयमित्यादिवाक्यवद्भागत्यागापरनाम्नी जहदजहत्स्वार्थाख्या सर्वपदलक्षणैव राधा-

**इत्यष्टाविंशतिविधः संग्रहादुपपादितः।**
**लक्ष्यः पदार्थो रूढोऽत्र चतुर्धान्यः प्रयोजनी ॥ ९९ ॥**
**व्यङ्ग्येन रहिता रूढाविति प्राचां वचोवशात्।**
**चतुर्विधस्य रूढस्य न व्यङ्ग्याख्यं प्रयोजनम् ॥ १०० ॥**

---

भिन्नपिण्डमात्रबोधनतात्पर्यानुपपत्तेर्बीजत्वेन वैशिष्ट्ये वाक्यस्य तात्पर्याभावात्तत्कालाद्येनत्कालादिविशिष्टयोर्विरोधाच्च। तस्मादयं लाक्षणिकसर्वपदत्वेन लाक्षणिकः श्रीकृष्णस्य राधाप्रत्यक्षताबोधनेनाभिनवानन्दव्यञ्जनरूपप्रयोजनसत्वात्सप्रयोजनस्तत्कालादिविशिष्टयादेर्वाच्यार्थस्याधेयस्य राधिकाव्यक्तिमात्रे आधारतायाः सत्वादाधाराधेयभावाख्यस्य सादृश्यादिभिन्नसबन्धस्य सत्वेन शुद्धोऽपि वाक्यार्थः सिद्ध इत्याशयः। अथ परमामुत्कयेन द्रुत तामुपगतं ततः क्रोधात्तयाऽवधीरितमतो गन्तुमुद्युक्तं तं प्रति सा वक्ति—**गच्छेति**। प्रेयआदिसंबोधनाभावात्कृष्णेति प्रत्यक्षसबोधनाच्च खण्डितात्वेन क्रोधातिशयो व्यज्यते। भो कृष्ण, त्वं गच्छसि चेद्गच्छेत्यन्वयः। तदत्र गमनाभाव एव तात्पर्यान्मागच्छेति विरुद्धः प्रागुक्तरीत्या लाक्षणिको नायकविषयकनायिकाश्रितरतिरूपव्यङ्ग्याख्यप्रयोजनसत्वात्सप्रयोजनश्च वाक्यार्थः सिद्ध इति भावः। ततः सा निकटवर्तिनीं दूतिकां प्रति भर्त्सयति—**दूतित्वमिति**। रे इति नीचसंबोधने। अरे दूति,त्वं विषं गरलं भुङ्क्ष्व भक्षयेत्यर्थः। अत्रोपक्रमादिना गरलाशने तात्पर्याभावेन त्वयि जीवत्यां सत्यां मामय विहाय बल्लव्यन्तरासक्तोऽभूदिति धिग्धिक्तव दौत्यचातुर्यम्। अतो व्यर्थं जीवितं नैव धारणीयं किंतु यथायमन्यस्यामितः परमासक्तो न स्यात्तथा चातुर्यं प्रकाशनीयमिति तात्पर्यान्मौर्ख्यत्यागे लक्षणेत्ययं लक्षितलक्ष्यात्मकः पूर्वोक्तरीत्या लाक्षणिकः पुरो वक्ष्यमाणस्य 'अविचार्यप्रवृत्तिर्या शीघ्रं चपलतास्ति सा' इति चपलतारूपभावस्य सत्वेन प्रयोजनश्च वाक्यार्थः सपन्न इति तात्पर्यम्। रसादिकं तूक्तदिशोह्यम् ॥ ९८ ॥ एव लक्षणाभेदादिकं प्रपञ्च्य सुखबोधाय सर्वाल्लक्ष्यपदार्थानेकीकृत्य तत्संख्यां कथयन्नुपसहरति—**इतीति**। इतिशब्दो लक्षणानिरूपणोपसंहारार्थः। नन्वन्येऽप्येवं संबन्धादिभेदैः सहस्रधा लक्षणाभेदाः संभवन्ति तत्कथमष्टाविंशतिविधत्वगणना युक्तेति चेत्तत्राह—**संग्रहादिति**। संक्षेपादित्यर्थः। उपपादितः संबन्धादियुक्तिभिः सोदाहरणं निर्णीत इत्यर्थः। ननु प्रतिज्ञामात्रेण कथित इतियावत्। तत्र सप्रयोजनस्य व्यञ्जकत्वात्तदुदाहरणानि पूर्वं तत्र तत्रोक्तान्यपि पुनरेकीकृत्य व्यक्तीकर्तुं रूढादिभेदाभ्यां तं विभजति—**रूढ इत्यादिशेषेण**। अत्र निरुक्ताष्टाविंशतिसंख्याकलक्ष्यपदार्थमध्ये चतुर्धा प्रागुक्तभेदेन चतुर्विधस्वरूप इत्यर्थः। अन्यः उर्वरितः प्रयोजनी निरुक्तप्रयोजनवानस्तीति शेषः ॥ ९९ ॥ ननु कुतोऽस्य न प्रयोजनमित्यत आह—**व्यङ्ग्येनेति**। प्राचो काव्यप्रकाशकारिकाकाराणामाचार्याणामित्यर्थः। वचोवशात्। 'वशमायत्ततायां स्याद्वशमिच्छुप्रभुत्वयोः' इति विश्वोक्तेर्वाक्याधीनत्वा-

**चतुर्विंशतिधा शिष्टस्ततो गौणादिभेदतः।**
**लक्ष्यश्चतुर्धा व्याख्यार्थोऽप्यखिलो व्यञ्जकः क्रमात्॥१०१॥**
**कालिन्दीकबरीभारः सीमन्तस्ते सरस्वती।**
**गङ्गेव मौक्तिकालिश्च पुष्पाण्यस्मन्मनोरथाः॥ १०२॥**
**कामपल्लव एवायं भाले ते तिलकः प्रिये।**
**कर्णावाक्रमतो नेत्रे शोणश्चलति रोषतः॥ १०३॥**

---

द्धेतोरित्यर्थः ॥ १०० ॥ न केवलमवशिष्टश्चतुर्विंशतिविध एव सप्रयोजनोऽपि तु गौणादिभेदेन वाक्यार्थोऽपि चतुर्धैवमित्यनुपदमेवोक्तश्चतुर्विधो लक्ष्यात्मको वाक्यार्थोऽपि प्रागुक्तक्रमेण व्यञ्जकोऽस्तीत्याह—**चतुर्विंशतिधेति** ॥ १०१ ॥ अथ प्रतिज्ञानुक्रमेण लक्ष्याणां पदार्थानां वाक्यार्थानां च व्यङ्ग्योदाहरणान्यष्टाविंशतिसंख्याकान्याह—**कालिन्दीत्यादि**सप्तभिः। इदं हि मानिनीं भवानीं प्रति भगवतोऽनुनयतः श्रीशंकरस्य वचनम्। हे गौरि, कालिन्दी कलिन्दनाम्नः पर्वतस्य कन्या यमुनेत्यर्थः । कबरीभारः कार्ष्ण्यादिसाधर्म्येणोक्तनदीरूपस्तव केशपाशोऽस्तीत्यर्थः। एतेन नद्याः प्रकृत्यैव क्वचित्सरलत्वात्' क्वचित्कुटिलत्वाच्च तत्केशेष्वपि तथात्वं द्योतितम्। तदिदं प्रयोजनवतो गौणस्य सारोपस्य लक्ष्यपदार्थस्योदाहरणम्। ततस्तमेव भङ्ग्यन्तरेणोदाहरति—**सीमन्त इति**। तत्र सिन्दूरापूरणेनारक्तत्वात्स्वभावतः सूक्ष्मत्वादिना स्फुटत्वाच्च सरस्वतीनदीरूपत्वम् । तेनात्र प्राचीसरस्वतीत्वारोपेण तद्धम्मिल्लचूडामणौ सूर्यत्वं सूचितम्। इदं तु विचक्षणलक्षणालक्ष्योदाहरणम् । अथ साध्यवसानोदाहरणमाह—**गङ्गेवेति**। मौक्तिकालिः अलंकारविशेषत्वेन गुम्फितमुक्ताफलपङ्क्तिरित्यर्थः । गङ्गेव शुक्लत्वादिगुणैर्भागीरथ्येवेत्यर्थः। एतेनात्र स्वगतगङ्गाधरत्वसाधर्म्यादवश्योपभोग्यत्वं तथाखिलेन प्रयागरूपत्वोक्त्या सेवनीयतमत्वं च ध्वनितम्। अत्रोदाहरणत्रयेऽपि रूपकमेव। एवं शुद्धसारोपोदाहरणमाह—**पुष्पाणीति** । गुम्फितानि मालत्यादिकुसुमानि । **अस्मदिति**। प्रयागे हि पूजार्थं भक्तजनैः समर्पितानि पुष्पाणि तत्तन्मनोरथसंपादकत्वेनायुर्घृतन्यायेन तद्रूपाण्युच्यन्ते, तद्वत्प्रकृते त्वन्मस्तकेऽपि निरूपितरीत्या प्रयागरूपत्वसिद्धेस्तान्यप्यस्मन्मनोरथहेतुत्वेन तद्रूपाणि संपद्यन्त इत्यर्थः। अत्र पुष्पाणां स्वमनोरथपूरकत्वं वदता भगवता श्रीशंकरेण भो प्रेयसि, कामस्य कुसुमायुधत्वेन स्मरशरीभूतानि पुष्पाणि यदा त्वया स्वसंतोषेणैवालंकारार्थमेव शिरोरुहेषु ग्रथितानि तदा तानि त्वां शीघ्रमेवोद्दीपनादिना मद्वशीकरिष्यन्त्येवेति स्वाशयो द्योतितः ॥ १०२ ॥ अथ तमेव साध्यवसानमुदाहरति—**कामेति**। हे प्रिये, यः ते तव भाले ललाटे तिलकः कुङ्कुमतिलकोऽस्ति। अयं कामपल्लव एव मया स्वभाललोचनाग्निना प्राग्दग्धो यः कामस्तस्य योऽङ्कुररूपः पल्लवो मनस्याविर्भावस्तद्धेतुत्वात्तथेत्यर्थः । तद्भालगतकाश्मीरतिलकमवलोक्य कामान्तकस्यापि मम मनसि कामोदयो भवतीति भावः। पल्लवशब्देनेह सस्यादीनामिवाङ्कुर

**सेयं दृक्सुखमानन्दस्ताम्बूलोऽयं तवाधरः ।**
**स्पृशेऽहमग्रहस्तेन कपोलौ शशिभास्करौ ॥ १०४ ॥**
**कदम्बाग्रे घनं पश्य नोनो वदसि किं वृथा ।**
**श्रवणौ रत्नताटङ्कौ त्वकुर्वौ नृपकर्णकम् ॥ १०५ ॥**

एव न तु वृक्षादीनामिव किसलयमर्पाति न रक्तत्वसाम्याद्गौणत्वापत्तिः । अत्रोदाहरणद्वयेऽपि हेत्वलकार एव । ततो जहल्लक्षणालक्ष्यमुदाहरति—**कर्णाविति ।** नेत्रे कर्तृणी कर्णौ कर्मणी आक्रमतः । कर्णोल्लङ्घनासभवात्तत्सामीप्यमुल्लङ्घयत इत्यर्थः । एतेन विशाललोचनात्व व्यज्यते । अत्रात्यन्ततिरस्कृतवाच्यो ध्वनिः वाच्यार्थाभूतश्रोत्रत्यागेन तत्सामीप्यस्य लक्ष्यत्वादिति । एवमजहल्लक्षणालक्ष्यमप्युदाहरति—**शोण इति ।** अरुणवर्णस्य रोषतश्चलनासंभवाच्छोण आरक्तस्तवाधरो रोषतः मानजनितकोपाद्धेतोश्चलति । कम्पत इत्यर्थः । एतेन मानातिशयो व्यज्यते । अत्रार्थान्तरसंक्रमितवाच्यो ध्वनिः ॥ १०३ ॥ अथ जहदजहत्स्वार्थालक्ष्योदाहरणमाह—**सेयमिति ।** या पूर्वं कामसजीवन्यभूत्सा निरुक्तगुणवती इय दृष्टा दृक् दृष्टिरस्तीत्यर्थः । अत्रोक्तविशेषयोः क्षणिकत्वेन तत्र तात्पर्याभावात्स्वभावतः सुप्रसन्नदृष्टिमात्रवर्णने तात्पर्यायुक्तवोक्तलक्षणत्वाशयः । एतेन यद्यप्यधुना रोषवर्तीव तव दृष्टिः स्फुरति तथापि नासौ वास्तविकी । औपाधिकधर्मशालित्वात् । प्राचीनकामाकुलत्वदृष्टिवदित्यनुमानेन पारमार्थिकस्त्वयि कोपोऽस्तीत्यनुनयो द्योतितः । अथ तादर्थ्यलक्ष्यमुदाहरति—**सुखमिति ।** आनन्दप्रयोजक तव सुख भवतीति तादर्थ्यादौपचारिकमेवात्रानन्दत्वमित्यर्थः । अतस्तूर्णं चुम्बन देहीऽति ध्वनितम् । एव स्वस्वामिभावसबन्धलक्ष्यमुदाहरति—**ताम्बूलोऽयमिति ।** अय सिद्धीकृत्य मया त्वत्प्रसादनार्थं करे धृतस्ताम्बूलस्तव अधरोऽस्ति। त्वदधर एवास्य स्वामीति राजकीयपुरुषे राजायमिति व्यवहारवदत्रापि तथात्वमित्यर्थः । एतेन स्वस्मिन्नत्यादरनत्व सूचितम् । तथावयवावयविभावसबन्धलक्ष्यमप्युदाहरति—**स्पृशेऽहमग्रहस्तेनेति ।** अग्र चासौ हस्तश्चेति कर्मधारयादुक्तसबन्धेन हस्तस्याग्ररूपेऽवयवे हस्तपद लाक्षणिकम् । एतेन तत्कपोलयोरतुलमृदुलत्व ध्वनितम् । नोचेदग्रपदप्रयोगो न कृतः स्यात् । तस्मात्स्वहस्तस्य पुरुषसबन्धित्वेनैव कठिनत्वात्तस्याग्रस्वरूपेणाङ्गुल्येकदेशेनानुनयार्थं स्पर्शनकथनाद्युक्तमेवैतदिति । एव तात्कर्म्यलक्ष्यमुदाहरति—**कपोलाविति ।** तस्याः कपोलयोस्तमोपहरणलक्षणतत्कर्मकर्तृत्वात्तत्व तेन निरुपमलावण्यवत्त्व व्यज्यते । नत्वत्र रूपकम् । एकत्र किमिति शशिपदद्योतितकार्ष्ण्यवैशिष्ट्यमन्यत्र किमिति भास्करशब्दसूचितचण्डरुचित्वप्रश्नावकाशात्प्रकृतानुपयोगाच्च स्पष्टमन्यत् ॥ १०४ ॥ अथ सांमुख्यलक्ष्यमुदाहरति—**कदम्बेति ।** हे गौरि, त्व कदम्बाग्रे पुरोवर्तिकदम्बतरोरग्रे अग्रभागस्य समुखमित्यर्थः । घन मेघं पश्य विलोकयेति यावत् । एतेन प्रावृट्कालागमाद्युद्दीपनविभावसामग्रीसूचनेनाधुनैव त्व स्वयमेव स्मरपार-

वश्येन मत्सरणी भविष्यसीति ततो वरं तत्पूर्वमेव मत्प्रार्थनाङ्गीकरणमिदमिति द्योतितं। समासोक्त्यलंकारोऽयम् । तदुक्तम्—'समासोक्तिः परिस्फूर्तिः प्रस्तुतेऽप्रस्तुतस्य चेत् । अयमैन्द्रीमुखं पश्य रक्तश्चुम्बति चन्द्रमाः' इति । घनपदान्मेघश्यामस्य कृष्णस्य स्फूर्तेस्तथात्वम् । तथा वाच्यवाचकसंबन्धलक्ष्योदाहरणमाह—**नोनो वदसीति ।** यथा घटं वदतीत्यत्तत्र वाच्यो घटः वाचकं घटपदं तत्संबन्धेन घटशब्दस्य जातिशक्त्याक्षेपलब्धायां घटव्यक्तौ शक्तत्वेऽपि तात्पर्यानुपपत्त्या तद्वाचकं घटपदं वदतीत्यर्थवशाद्धटपदे लक्षणा तद्वन्नोनो इति निषेधवाचकयोः पदयोर्वारंवारं निषेधं वदसीत्यर्थे तात्पर्याभावात्तद्वाचकं पदमेव वदसीत्यत्र तत्स-त्वाच्च निरुक्तसंबन्धेन तद्वाच्यार्थीभूतं निषेधं विहाय तद्वाचकयोः पदयोरेव लक्षणेत्यर्थः । तथा भो प्रिये, त्वं नो नो इति वृथा किमिति वदसीत्यन्वयः । तस्मादहमुक्तघनं नैव पश्यामीत्यर्थकं वीप्साघटितं निषेधवाचकं नोनो इति पदद्वयं वृथा प्रागुक्तरीत्या तवावश्यं क्षणान्तरे मदेकपरायणत्वसंभवात्क्षणिकमानवशेन निष्फलं । किमिति कस्माद्धेतोर्वदसि भाषस इत्यर्थः । तस्मादद्यैव मद्वचनमङ्गी-कुर्विति तात्पर्यम् । एवं चात्र वशीकारसामग्रीपौष्कल्यादितः परमाग्रहानौचित्य-मेवेति ध्वनितम् । अथ बहुव्रीहिलक्ष्यमुदाहरति—**श्रवणाविति ।** रत्नमये हीरकादिप्रचुरे ताटङ्के कर्णभूषणे ययोस्तावित्यतद्गुणसंविज्ञानोऽयं बहुव्रीहिः।रत्नमय-त्वगुणस्य चित्रगवादिवत्ताटङ्कनिष्ठत्वेन श्रवणसंबन्धितया संविज्ञानाभावादित्यर्थः । अत्रैकदेशान्वयस्वीकारपक्षे प्रागुक्तरीत्या ताटङ्कपदस्य ताटङ्कवति लक्षणा रत्न-पदस्य तु ताटङ्कयोरन्वयः । तदस्वीकारपक्षे तु रत्नताटङ्कवत्येव ताटङ्कपदस्य लक्षणा रत्नपदं तु तात्पर्यग्राहकमिति भावः । एतेन 'को बधिरो यः शृणोति नहि तानि' इति प्रश्नोत्तररत्नमालावचनान्निरुक्तभूषणेनैव तव श्रवणौ रमणीयौ नतु मदुक्तहितश्रोतृत्वेनेति व्याजस्तुत्यलंकारो व्यज्यते ।एवं तत्पुरुषलक्ष्यमुदाहरति—**त्वद्भ्रुवाविति ।** तव भ्रुवाविति षष्ठीतत्पुरुषः । अत्र त्वत्पदे त्वत्संबन्धि-नि लक्षणा । तेन यदि त्वयि न रोषस्तर्हि त्वदधीनयोरेवानयोः प्रकृत्या न तयोरपि भ्रुवोः किमित्युन्नतता संपन्नेत्यतो वचसैव केवलं कोपं गोपयसीत्यु-पालम्भः सूचितः । तुशब्दः पुनरर्थे । उपकर्णकं भ्राजत इति योजना । अत्रो-पकर्णकमित्यन्तं न श्लोकसमाप्तिः किंतु शैलज इत्यन्तमेव । तथाप्यङ्कप्रक्षेप-स्तावद्वृत्थेत्यन्तं यदर्धमेव रचितं तदनुरोधेनैवेति बोध्यम् । एवंच कर्णयोरुपेत्यु-पकर्णकमित्यव्ययीभावसमासेन कर्णपदे तत्संबन्धिनि लक्षणेति तदुदाहरणमे-तत् । अत्र भ्रुवोः स्त्रीत्वात्कर्णयोः पुंस्त्वात्त्वदधीने एव ते त्वयैव यतस्तत्सा-मीप्यं प्रापिते तस्मात्त्वमपि द्रुतमेव मत्समीपमायास्यसीति वस्तु ध्वनितम् । अथ द्वन्द्वलक्ष्यमुदाहरन् समाहारद्वन्द्वस्याहिनकुलमित्यादिरूपस्य पाक्षिकलक्ष्य-त्वात्तमुदाहृत्यैवेतरेतरयोगद्वन्द्वलक्ष्यमेवोदाहरन्भ्रुवौ विशिनष्टि—**पितराविति ।** रतेर्जनकावित्यर्थः । अत्र पितृपदे मातरि अजहत्स्वार्था लक्षणा । तेन स्वस्मिन्स्व-

भ्राजतः पितरौ रत्यास्त्वं श्लाघ्यैवासि शैलजे ।
बाहू सकञ्चुकौ कामनिषङ्गौ ते प्रकोष्ठकौ ॥ १०६ ॥
पद्मनाले हेममये हस्तौ कोकनदे रुचा ।
त्वत्कङ्कणालिः कंदर्पवीरचक्रावलिः शिवे ॥ १०७ ॥
कम्बोरधस्तु हेमाद्री सोऽयं मध्यस्तवाङ्गने ।
मालिङ्गनालिङ्गसिचेत्त्यजाम्यजिनमप्यहम् ॥ १०८ ॥

दर्शनात्कामाकुलत्वं सूचितम् । विरुद्धलक्ष्यमुदाहरति—**त्वमिति** । उक्ताभ्रंशादश्लाघ्येत्यर्थः । अत्र मुग्धात्वं व्यज्यते । लक्षितलक्ष्योदाहरणमाह—**शैलज इति** । अत्र शैलपदेन पर्वतस्तत्पिता ततो जडत्वं धर्मोऽत्र लक्ष्यत इत्यर्थः । एतेन बुद्धिहीनत्वं ध्वनितम् ॥ १०५ ॥ विशिष्टलक्ष्यमुदाहरति—**बाहू इति** । हे गौरि ते सकञ्चुकौ दिव्यकञ्चुकसहितौ बाहू भुजौ कामनिषङ्गौ मदनतूणीरौ स्फुरत इति शेषः । अत्र कञ्चुकविशिष्टौ भुजौ कामनिषङ्गपदलक्ष्यौ । कुतः तादृशावेव तावुद्दिश्य तथात्वविधानादिति लक्षणसमन्वयः । एवंच तद्दर्शनाद्भूरितरं मम स्मरपारवश्यं जातमिति द्रुतमेवालिङ्गय मामिति प्रार्थनं ध्वनितम् । अत्र सरलत्वपुष्टत्वदिव्यवसनावेष्टितत्वादिसाधर्म्येण तद्भुजयोः कामनिषङ्गरूपत्वोक्तिवशाद्रूपकमलंकारः । एवंविशिष्टलक्षकमुदाहरति—**प्रकोष्ठकाविति** । ते प्रकोष्ठकौ कूर्पराधःप्रदेशौ । अत्राप्यङ्कप्रक्षेपः प्राग्वदेव ज्ञेयः । श्लोकसमाप्तिस्तु रुचेत्यन्तमेव । तौ हेममये सुवर्णमये पद्मनाले भासत इति शेषः । अत्र हेममयत्वविशिष्टयोः पद्मनालयोर्लक्षकत्वेन विशिष्टलक्षकत्वम् । तेन गौरत्वसुरभित्वसुकुमारत्वादिकं तयोर्ध्वनितम् । अलंकृतिस्तु सैवात्र सर्वत्र । अथ सहेतुलक्ष्यमुदाहरति—**हस्ताविति** । त इति पदमत्रापि संबध्यते । तथाच तव हस्तौ रुचा अरुणकान्त्या कोकनदे रक्तोत्पले भात इत्यर्थः । अत्र हस्तयोः कोकनदपदलक्ष्यत्वे रुचेति हेतुः । तेन तत्र सुरभित्वाद्यावेदनात्तस्याः पद्मिनीत्वं सूचितम् ॥ १०६ ॥ एवं निर्हेतुलक्ष्यमप्युदाहरति—**त्वत्कङ्कणेत्यर्धेन** । हे शिवे गौरि, तव कङ्कणानि वज्रमणिवलयानि तेषामालिः पङ्क्तिः सा तावत्कंदर्पवीरचक्रावलिः कंदर्पः कामस्तन्नामा यो वीरस्तस्य यानि चक्राणि सुदर्शनादिवत् प्रसिद्धान्यायुधानि तदावलिस्तच्छ्रेणिरस्तीत्यर्थः । अत्र हेत्वभावः स्फुट एव । तेन स्वस्मिन्कामातुरत्वं व्यज्यते ॥ १०७ ॥ एवं चतुर्विंशतिभेदभिन्नं सप्रयोजनं संक्षेपतो लक्ष्यपदार्थमुदाहृत्याधुनोद्देशगौणादिभेदेन चतुर्विधं वाक्यार्थमुदाहरति—**कम्बोरिति** । कबोः शङ्खस्य अधः अधोभागे हेमाद्री काञ्चनपर्वतौ वर्तेते इत्यर्थः । अत्र कम्बुपदेन त्रिरेखाङ्कितत्वादिगुणयुक्ततया कण्ठस्तथा हेमाद्रिपदेन कठिनत्वभास्वरत्वपीनत्वोच्चत्वादिसाधर्म्यात्स्तनौ च लक्ष्येते । तथाच हे अङ्गने, शङ्खरूपात्तव कण्ठादधोभागे कनकाचलरूपौ कुचौ विद्येते इति वाक्यार्थोऽपि लक्ष्य एव निरूढगुणयोगाद्गौणश्च सिद्धः । तेनात्र

**अशक्यालक्ष्यसंबोधादमन्दानन्ददायिनी ।**
**दृशोश्चुम्बनतः किं न व्यञ्जनारञ्जनं जनाः ॥ १०९ ॥**

---

तस्यामभिनवयुवतीत्वं द्योतितम् । अत्र रूपकातिशयोक्तिरलंकारः । एवं शुद्धमुदाहरति—**सोऽयमिति** । स यः पूर्वं विपरीतसुरतादौ मया लालितः । अयं तव मानवतीत्वेन प्रत्यक्षोऽपि दुःसाध्यः प्रसिद्ध एव त्रिवल्यादिविराजितो मध्यप्रदेशो वर्तत इत्यर्थः । अत्र स्वस्य कामुकत्वेन बलात्काररतोद्युक्तमनस्त्वादुक्तविशेषयोस्तात्पर्याभावेन जघनोपलक्षकत्वेन मध्यमात्र एव तात्पर्याल्लक्ष्य एव वाक्यार्थः सच सादृश्यादिभिन्नसंबन्धघटितत्वाच्छुद्धोऽपीत्यर्थः । एतेन त्वया शीघ्रं प्रमुदितव्यमिति द्योतितम् । अथ विरुद्धस्य तस्योदाहरणमाह—**मालिङ्गेति** । अत्रालिङ्गेति वाक्यार्थो विरुद्धलक्षणालक्ष्यः । तेन पुनरप्यालिङ्गनप्रार्थनमेव व्यज्यते । एवं लक्षितलक्ष्यमपि तमुदाहरति—**त्यजामीति** । अहं अजिनमपि परिहितचर्मापि त्यजामि । विसृजामीत्यर्थः । एतेन मम दीर्घं दुकूलादिकं वसनं नास्त्येव किंतु व्याघ्रादेश्चर्मरूपं स्वल्पं वर्तते तदपि त्यजामीति शीघ्रं दिग्वसनत्वं मया संपाद्यत इति वाक्यार्थो लक्षितलक्ष्य एव । तेनेतः परं न प्रसीदसि चेद्बलात्सुरतं करिष्यामीत्यतुलौत्कण्ठ्यं सूचितम् ॥ १०८ ॥ एवमुद्देशक्रमानुसारेणाष्टादशसंख्याकस्य लक्ष्यार्थस्य व्यङ्गयोदाहरणान्यभिधायाधुना व्यञ्जनावृत्तिनिरूपणस्यावसरप्राप्तौ सत्यां ननु किं व्यञ्जनाख्यवृत्त्यन्तरस्वीकारेण गौरवापादकेन प्रत्युत यानि 'गच्छ गच्छसि चेत्कान्त' इत्यादीनि व्यञ्जनोदाहरणानि तेषु सर्वेष्वपि तात्पर्यानुपपत्त्या लक्षणावृत्त्यैव निर्वाहसंभवेन लाघवमेव । तस्माद्विफल एव तृतीयवृत्तिस्वीकाराभिनिवेशस्तवेत्याशङ्कां शमयंस्तल्लक्षणसूचनेन तामुपपादयति—**अशक्येति** । हे जनाः, व्यञ्जनादृशोश्चुम्बनतः भवतां रञ्जनं न भवति किमित्यध्याहृत्य योजना । अत्र हे जनाः, इति जनत्वावच्छिन्नयावन्मनुष्यसाधारणसंबोधनं त्वस्याः सकललोकानुभवगोचरीकर्तुमेव । व्यञ्जना व्यञ्जयति द्योतयत्यर्थमिति तथा दृशोः शक्यलक्ष्यज्ञानयोः चुम्बनतः चुम्बनवल्लेशतोऽवलम्बनमात्रेणेत्यर्थः । भवतां युष्माकं रञ्जनं संतोषणं तत्साधनत्वाल्लाङ्गूलं जीवनमिति न्यायेन तत्त्वव्यपदेशः । रञ्जनशब्दिताह्लादनहेतुत्वात्तद्रूपेत्यर्थः । एतादृशी न भवति किम् । अपितु भवत्येवेत्यर्थः । एतेन कार्यकारणयोरभेदोपचाराद्धेत्वलंकारो ध्वनितः । यावदुक्तरीत्या स्वयमेव आनन्दनरूपा सा तद्धेतुः स्यादिति किमु वक्तव्यमिति कैमुतिकन्यायसिद्धमेवोक्तवृत्तौ सर्वजनानां सामान्येनानन्दकत्वमिति तत्त्वम् । अथाधिकारिविशेषेषु विशेषतस्तस्यास्तद्विशेषणेनाभिधत्ते—**अशक्येति** पूर्वार्धेन । अशक्यः शक्तिवृत्त्यविषयः । तथा अलक्ष्यः लक्षणावृत्त्यगम्यः योऽर्थस्तस्य यः सम्यक् प्रमात्वेन बोधो ज्ञानं तस्मात् । शक्त्यादिविषयकप्रमारूपहेतोरित्यर्थः । **अमन्देति** । अमन्दाः अजडाः । सहृदया इति यावत् । तेषां य आनन्दो हर्षस्तद्दायिनी र-

सिकाह्लाददात्रीत्यर्थः । साधारणसर्वजनानां कार्यकारणयोरविवेकात् शक्तिलक्षणाभ्यां भिन्नायां तृतीयायामेतस्यां व्यञ्जनाख्यवृत्तावेव रञ्जनहेतुभूतायामपि रञ्जनत्वबुद्धिराश्चर्यदर्शनाद्युक्तैव । रसिकानां तु कार्यकारणविवेकान्न तथा किंतु शक्यगम्यवस्तुप्रमाद्वारा निरुक्तवृत्तिरानन्दहेतुरेव भवतीति भावः । पक्षे हे जनाः भो रसिकाः, व्यञ्जना अजहत्स्वार्थलक्षणया निरुक्तवृत्तिप्रधाना काव्यवाणीत्यर्थः । शेषं तु दृशोरित्याद्युत्तरार्धस्थं प्राग्वदेव । शक्यः शक्तिजन्यः 'अग्निहोत्रं जुहुयात्' इति 'न सुरां पिबेत्' इति च राजाज्ञावत्सामर्थ्यसंजातो वैदिकोपदेशस्तद्भिन्नोऽशक्यस्तथा । लक्ष्यः शक्यसंबन्धो लक्षणेत्युक्तेः 'इतिहासपुराणाभ्यां वेदार्थमुपबृंहयेत्' इतिवचनाच्छक्यस्योक्तरीत्या वैदिकोपदेशस्य विवेच्यविवेचकभावसबन्धघटितेतिहासाद्युपदेशस्तदितरोऽलक्ष्यः । एतादृशः यः 'परमिममुपदेशमाद्रियध्वं निगमवनेषु नितान्तचारखिन्नाः । विचिनुत भवनेषु बल्लवीनामुपनिषदर्थमुलूखले निबद्धम्' इति कर्णामृते । तथा पूर्वकादम्बर्यामपि चन्द्रापीडं प्रति यौवराज्याभिषेकात्पूर्वं शुकनासाख्यमन्त्र्युपदेशः—'केवलं तु निसर्गत एवाभानुभेद्यमरत्नालोकोच्छेद्यमप्रदीपप्रभापनेयमतिगहनं तमो यौवनप्रभवं, अपरिणामोपशमो दारुणो लक्ष्मीमदः, कष्टमनञ्जनवर्तिसाध्यपटलमैश्वर्यतिमिरान्धत्वं, अशिशिरोपचारहार्योऽतितीव्रो दर्पज्वरोष्मा, सततममूलमन्त्रदम्यो विषमो विषयविषास्वादमोहः, नित्यमस्नानशौचशोध्यो बलवान्रागमलोपलेपः, अजस्रमक्षपावसानप्रबोधा घोरा च राज्यसुखसंपातनिद्रा भवतीत्यतो विस्तरेणाभिधीयसे । गर्भेश्वरत्वमभिनवयौवनत्वमप्रतिमरूपत्वममानुषशक्तित्वं चेति महती खल्वियमनर्थपरम्परा । सर्वाविनयानामेकैकमप्येतेषामायतनं किमुत समवायः । यौवनारम्भे च प्रायः शास्त्रजलप्रक्षालननिर्मलापि कालुष्यमुपयाति बुद्धिः । अनुज्झितधवलापि सरागैव भवति यूनां दृष्टिः । अपहरति च वात्येव शुष्कपर्णमुद्भूतरजोभ्रान्तिरतिदूरमात्मेच्छया यौवनसमये पुरुषं प्रकृतिः । इन्द्रियहरिणहारिणी च सततमतिदुरन्तेयमुपभोगमृगतृष्णिका । नवयौवनकषायितात्मनश्च सलिलानीव तान्येव विषयस्वरूपाणि समास्वाद्यमानानि मधुरतराण्यापतन्ति मनसः, नाशयति च दिङ्मोह इवोन्मार्गप्रवर्तकः पुरुषमत्यासङ्गो विषयेषु । भवादृशा एव भवन्ति भाजनमुपदेशानाम् । अपगतमले हि मनसि स्फटिकमणाविव रजनिकरगभस्तयो विशन्ति सुखमुपदेशगुणाः । गुरुवचनममलमपि सलिलमिव महदुपनयति श्रवणस्थितं शूलमभव्यस्य । इतरस्य तु करिण इव शङ्खाभरणमाननशोभासमुदयमधिकतरमुपजनयति' इत्यादिरूपः श्रीमन्महारामायणाख्यार्षकाव्यमूलकस्तत्रतत्र प्रसिद्धकाव्योपदेशः । शेषं पूर्वार्धेतु प्राग्वदेव । वैदिकाद्युपदेशविलक्षणश्चायं सर्वत्र सुखद इत्यादिप्रागुक्तरीत्या विरतानन्दप्रदकाव्योपदेशस्य दृढतमप्रमया सहृदयप्रमोददात्रीत्यर्थः । पक्षे भो युवजनाः, दृशोर्नेत्रयोः चुम्बनतः । कामशास्त्रविहितनयनचुम्बनेनेत्यर्थः । व्यञ्जना विगतं अञ्जनं कज्जलं यस्याः एतादृशी स्वसुन्दरी-

**गच्छ गच्छसि चेत्कान्तेत्यादिवाक्यादिकेष्वपि ।**
**पद्मिनीं पश्य पश्येति गङ्गायां घोष इत्यपि ॥ ११० ॥**
**प्रेमौत्कट्यं विचित्रश्री पावनत्वं तथा तटे ।**
**क्रमात्प्रतीयते यत्तद्धटेत्किं व्यञ्जनां विना ॥ १११ ॥**

---

त्यर्थः । शेषमुक्तार्थमेव । न केवलमस्याः, सौन्दर्ययौवनाद्युत्कर्षेण सुरतसुखोत्कर्षलक्षणतृतीयपुरुषार्थहेतुत्वमेव किंतु परंपरयोर्वरितपुमर्थप्रयोजकत्वमप्यस्तीत्याह— **अशक्येति** । शक्यः सामर्थ्यजन्यो नृपोपदेशः तद्भिन्नोऽशक्यः । तथा लक्ष्यः शाखायां चन्द्र इत्यत्र चन्द्रलक्षिकायाः शाखाया औदासीन्यशालिसुहृदुपदेशः तद्भिन्नोऽलक्ष्यः, एतादृशोपदेशकर्तृत्वस्य कान्तायामेव सत्वाद्युक्तमेवोक्तव्याख्यानम् । तथात्वं सुन्दरीखेशहृदयमित्यादिना प्रागेवोक्तम् । शिष्टं तु समानमेव । पक्षे **हे** मुमुक्षुजनाः, व्यञ्जयति द्योतयत्यद्वैतात्मतत्त्वमिति व्यञ्जना उपनिषत् । दृशोस्तत्त्वंपदार्थज्ञानयोः चुम्बनतः । अवलम्बनेनेत्यर्थः । **अशक्येति** । तदुक्तं श्रीमदाचार्यचरणारविन्दैः—'शब्दशक्तेरचिन्त्यत्वाच्छब्दादेवापरोक्षधीः । प्रसुप्तः पुरुषो यद्वै...नैवावबुध्यते'इति । तस्माच्छक्तिवृत्तिलक्षणावृत्यु...गम्याद्वैतब्रह्मात्मतत्वस्य दृढतमापरोक्षज्ञानाद्धेतोरित्यर्थः । **अमन्देति** । मन्दो जडस्तद्भिन्नोऽमन्दः स्वप्रकाशः परमात्मा स चासावानन्दो निरतिशयनिर्विकल्पसुखोत्कर्ष इति कर्मधारयः । शेषं तु यथापूर्वम् । तस्मादशक्या लक्ष्यार्थसंबोधकशब्दवृत्तित्वं व्यञ्जनात्वमिति तल्लक्षणं सिद्धम्।शक्तिवृत्तौ लक्षणावृत्तौ चातिव्याप्तिवारणाय क्रमेणाशक्येत्यर्थान्तम् । शक्यत्वाद्यवच्छिन्नेतरार्थसंबोधकशब्दवृत्तित्वं वा तत्त्वं।आदिना लक्ष्यत्वग्रहः । बोधकत्वस्य वृत्त्यान्वयः । यत्तु 'गच्छ गच्छसि चेत्कान्त' इत्यादिसकलव्यञ्जनोदाहरणेषु तात्पर्यानुपपत्त्या लक्षणैवास्तु लाघवार्तिक वृत्त्यन्तरस्वीकारेणेति शङ्कितं। तन्न । अनुभवविरोधात्फलमुखगौरवस्यादोषत्वाच्च । तथाहि अस्तं गतः सवितेति देवदत्तेन यज्ञदत्तं प्रत्युक्ते सति निकटवर्तिन्याः स्वान्तःपुरचारिण्याः स्वतरुण्याः शीघ्रं स्वकान्तसुरतलाभसंभावनेनानन्दनिर्भरो यो जायते तत्र तावत्तात्पर्यं वक्तुराशय इति पूर्वोक्तलक्षणस्य तात्पर्यानुपपत्तिरूपलक्षणाबीजस्याभावेन लक्षणावृत्तेरसंभवाच्छक्तिवृत्तेस्तु सुदूरोत्सारितत्वाच्चान्वयव्यतिरेकाभ्यां चोक्तशब्दश्रवणोत्तरक्षणावच्छेदेनैवोक्तस्थले निरुक्तानन्दादेरनुभवसिद्धत्वादवश्यं निरुक्तवृत्तिरेव स्वीकर्तव्येति तत्त्वम् । विस्तरतस्त्वनुपदमेव वक्ष्याम इति दिक् । अत्र शान्तशृङ्गारौ रसौ । श्लेषोऽलंकारः । स्वीया प्रौढा नायिका । चतुरतरो नायकः ॥ १०९ ॥

तदेवोपपादयति—**गच्छ गच्छसिचेत्कान्तेति** द्वाभ्याम् । 'गच्छ गच्छसिचेत्कान्त पन्थानः सन्तु ते शिवाः । ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान्' इति तर्कप्रकाशकारोदाहृतव्यञ्जनावृत्तिवाक्योदाहरणं बोध्यम् । आदिपदाच्छक्तिमूलायास्तथा लक्षणायाश्च तस्याः पदोदाहरणे बोध्ये । ते एव स्पष्टयति— **पद्मिनीमित्याद्युत्तरार्धेन** क्रमेण ॥ ११० ॥ **प्रेमौत्कट्यमिति** । गच्छ गच्छ-

**अत्र नैयायिको वक्ति तात्पर्यानुपपत्तितः।**
**सर्वत्र लक्षणातोऽत्र तत्सत्वात्सैव तेऽस्त्विति ॥ ११२ ॥**

सि चेत्कान्तेत्यत्र प्रेमात्मकव्यं। तथा पद्मिनीं पश्य पश्येत्यत्र विचित्रस्त्री। तथा गङ्गायां घोष इत्यत्रापि तटे पावनत्वं च क्रमात्प्रतीयते तत् व्यञ्जनां विना घटेत्किमिति योजना। नच गच्छेत्यादिविरोधलक्षणामूलकमिति व्यञ्जनाया वाक्योदाहरणे तथा गङ्गायां घोष इति जहत्स्वार्थलक्षणामूलकव्यञ्जनायाः पदोदाहरणेऽपि लक्षणयैव तथा पद्मिनीमिति शक्तिमूलकव्यञ्जनायाः पदोदाहरणे च शक्त्यैवोक्तार्थप्रतीतिरस्त्विति वाच्यम्। गच्छेत्यत्र विरोधिलक्षणयापि मागा इत्यर्थस्यैव प्रतीतेस्तथा गङ्गायामित्यत्रापि जहत्स्वार्थया तीरस्यैव प्रतीतेः पद्मिनीमित्यत्रापि नानार्थवाचकशब्दशक्तिग्रहनियामकसंयोगादिप्रागुक्तचतुर्दशान्यतमाभावेन गोशब्दन्यायेन प्रसिद्ध्या कमलिन्यामेव शक्तिसंभवाच्च। तस्माद्व्यञ्जनैवोक्तोदाहरणेष्वावश्यकीत्याशयः ॥ १११ ॥ तत्र तार्किकाशङ्का व्युत्थापयति—**अत्रेति।** एवं व्यञ्जनाख्ये वृत्त्यन्तरे सिद्धे सतीत्यर्थः। नैयायिकः न्यायं न्यायशब्दितयुक्तिप्रधानं कणादगौतमीयान्यतरशास्त्रं अधीते स तथा। तार्किक इत्यर्थः। सर्वत्र गङ्गायां घोष इत्याद्यखिलोदाहरणेष्वित्यर्थः। लक्षणातात्पर्यानुपपत्तितः यष्टीः प्रवेशयेत्यादौ भोजनार्थं यष्टिधरप्रवेशनरूपस्य वक्तुराशयलक्षणस्य तात्पर्यस्य या अनुपपत्तिः यष्टिमात्रप्रवेशने असंपन्नता तस्याः हेतोरेव यष्ट्यादिपदानां यष्टिधरादिषु लक्षणावृत्तिर्यतः सर्वैर्वादिभिः स्वीक्रियते। अतः हेतोः अत्र गच्छ गच्छसि चेत्कान्तेत्यादिवाक्यादिषु भवत्संमतव्यञ्जनोदाहरणेष्वपि तत्सत्वात्तस्याः तात्पर्यानुपपत्तितः सत्वात् कान्तगमनाभावकान्तातात्पर्येण गमने तदसंभवस्य विद्यमानत्वाद्धेतोरित्यर्थः। ते व्यञ्जनावादिनः सैवलक्षणैव अस्तु संमता भवतु, नतु गौरवदूषितं वृत्त्यन्तरमिति वक्ति। भाषत इत्यर्थः। तथाचोक्तं न्यायसिद्धान्तमञ्जर्याम् 'व्यञ्जना च न वृत्त्यन्तरम्। लक्षणयैव तदर्थसिद्धेरिति। तर्हि तात्पर्यानुपपत्तिरेव सर्वत्र लक्षणाबीजमस्तु। साचेहाप्यस्तीति च। विवृतं चेदं तर्कप्रकाशकारैः। ननु स्वायत्ते शब्दप्रयोगे किमित्यवाचकं प्रयुञ्जामह इति न्यायेन तटे घोष इति विहाय गङ्गायां घोष इति लक्षणामुखप्रयोगे बीजकाङ्क्षायां शैत्यपावनत्वादिप्रतीतिरेव प्रयोजनत्वेनावसीयते। साच कृत्स्नवृत्त्या नोपपादयितुं शक्येति व्यञ्जनाख्यातिरिक्ता वृत्तिरुपेयेत्यत आह—**व्यञ्जना चेति।** तथा चेयं यदि लक्षणात्मिका तदा शक्तिलक्षणातिरिक्तत्वाभावः। यदिच लक्षणात्मिका न तदा वृत्तिरित्यतिरिक्तवृत्तित्वाभावसत्वमव्याहतम्। तेन न सिध्यसिद्धिव्याघातः। कथं तर्हि शैत्यपावनत्वादिप्रतीतिरित्यत आह—**लक्षणयैवेति।** **तदर्थेति।** व्यङ्ग्यार्थप्रतीत्युपपत्तेरित्यत आह—**सर्वत्रेति।** गङ्गायां घोष इत्यादावपीत्यर्थः। अस्तु को दोष इत्यत आह—**सा चेहापीति।** सा च तात्पर्यानुपपत्तिश्चेहापि गच्छगच्छसीत्यादिव्यञ्जनास्थलेऽपि अस्तीति। अत्र

**तत्रोच्यतेऽत्र तात्पर्यं गमनाभाव एव ते ।**
**प्रेमौत्कट्यप्रतीतिस्तु ततः सिद्ध्येत्कथं वद ॥ ११३ ॥**
**तत्राप्यस्तीति चेत्तर्हि नानातात्पर्यतापतेत् ।**
**उक्तभानान्यथापत्त्या ततो वृत्त्यन्तरं वरम् ॥ ११४ ॥**

---

कान्तगमनाभावतात्पर्यविषयः तदनुपपत्तिगमनबोधकपदस्य गमनाभावे लक्षणयैवोपपत्तौ नातिरिक्तवृत्त्यन्तरकल्पनं गौरवादिति भाव इति ॥ ११२ ॥ तत्र समाधातुं प्रतिजानीते—**तत्रेति** । समाधानमिति शेषः । किं तदित्याकाङ्क्षायां तदेवाह—**अत्रेत्यादिना** । अत्र 'गच्छ गच्छसि चेत्कान्त' इत्युदाहरण इत्यर्थः । ते लक्षणावादिनस्तार्किकस्य तव मत इत्यर्थः । गमनाभाव एव तात्पर्यमस्तीत्यन्वयः । अन्ययोगव्यवच्छेदार्थमवधारणम् । तत्त्वनुपदमेवोक्तं तर्कप्रकाशकृत्संमत्यात्र गमानाभाव एव तात्पर्यविषय इति । किं तत इत्यत आह—**प्रेमेत्युत्तरार्धेन** । ततः प्रकृतवाक्ये गमनाभावस्यैव तात्पर्यविषयत्वेन तस्यैव लक्ष्यत्वावश्यकतया निरुक्तवाक्यसकाशादित्यर्थः । या प्रेमौत्कट्यप्रतीतिर्जायते सा कथं सिद्ध्येदिति भो तार्किक' त्वं वदेत्यध्याहृत्य योज्यम् । कान्तविषयककामिन्याश्रयकानुरागापरनामकचित्तवृत्तिविशेषस्य यदौत्कट्यं आधिक्यं तस्य या प्रतीतिर्निरुक्तवाक्यार्थपर्यालोचनेनानुभवः । शेषं स्फुटमेव । यदि गौरवभिया व्यञ्जनावृत्तिं न स्वीकुरुषे तर्हि निरुक्ततात्पर्यरीत्या लक्षणया गमनाभावसिद्धावपि प्रेमौत्कट्यानुभवसिद्धिर्न स्यादतस्तदर्थं सा वश्यमङ्गीकार्येति तात्पर्यम् । एतेन लक्षितलक्षणापि परास्ता तात्पर्याभावादिति ॥ ११३ ॥ नन्वेवं तर्हि प्रेमौत्कट्यकथनेऽपि तस्यास्तात्पर्यं स्वीकार्यमिति वाच्यम् । अनेकविधतात्पर्यत्वापत्तेः, 'यत्परः शब्दः स शब्दार्थः' इति न्यायविरोधाच्च । तस्मात्प्रेमौत्कट्यानुभवान्यथानुपपत्त्या तदर्थं व्यञ्जनाख्यवृत्त्यन्तरोररीकरणमेव रमणीयमिति निरूपयति—**तत्राप्यस्तीति चेदिति** । निरुक्ततात्पर्यमिति शेषः । **उक्तभानेति** । ततः प्रेमौत्कट्येऽपि तात्पर्यस्वीकारपक्षे नानातात्पर्यत्वलक्षणदोषसद्भावाद्धेतोः उक्तभानान्यथापत्त्या उक्तं प्रतिपादितं यत्प्रेमौत्कट्यस्य भानं अनुभवस्तस्य अन्यथा प्रकारान्तरेण या आपत्तिः अनुपपत्तिरसंभवरूपदोष इति यावत् तेन हेतुना वृत्त्यन्तरं शक्त्यादिभिन्नव्यञ्जनाख्यं वृत्त्यन्तरमित्यर्थः।वरं स्वीकर्तुं योग्यमेवास्तीति संबन्धः।ननु तर्हि गमनाभावे तात्पर्यात्तत्र लक्षणा तथा प्रेमौत्कट्यस्याप्युक्तवाक्यश्रवणोत्तरं प्रतीतेस्तत्र व्यञ्जनेत्येकस्मिन्वाक्ये वृत्तिद्वयस्वीकृत्यापत्तिरिति चेन्न । तस्यादोषाभावत्वात् । नोचेद्गङ्गायां घोष इत्यादि सर्वत्र लक्षणादिस्थले गङ्गादिशब्दशक्योपस्थितिं विना तत्संबन्धस्य लक्ष्यत्वानुपपत्तेस्तदुपस्थित्यर्थं तत्र शक्तिस्वीकृतावपि दोषत्वानपायात्क नाम लक्षणापि स्यात् । तस्माद्युक्तमेवात्र व्यञ्जनास्वीकरणमिति तत्त्वम् ॥ ११४ ॥ एवं तात्पर्याख्य-

**यत्तु नार्थके शब्दे शून्ये प्रकरणादिना ।**
**अर्थान्तरेऽभिधैवेति तात्पर्यग्रहमात्रतः ॥ ११५ ॥**

वाक्यार्थघटितवाक्यस्थले शक्तिलक्षणाभ्यां भिन्नां व्यञ्जनावृत्तिमुपपाद्य नानार्थकपदस्थलेऽपि तामुपपादयितुं तत्रापि तार्किकाशङ्कामनुवदति—**यत्त्विति** । तुशब्दः कक्षान्तरार्थः । नानार्थके शब्दे अनेकार्थके सैन्धवादिपदे अधिकरणे प्रकरणादिनानार्थशब्दशक्तिग्रहनियामकप्रागुक्तसंयोगादिचतुर्दशसंख्याकानि यानि निमित्तानि तैः शून्ये रहिते एतादृशे अर्थान्तरे इतरार्थे विषये तात्पर्यग्रहमात्रतः तात्पर्यग्रहमात्रेण । अन्यार्थेऽपि तात्पर्यग्राहकान्तरकल्पनेनेति यावत् । यत्तार्किकैरुक्तमिति योजना । तथाचाह मञ्जरीकार एव । 'नानार्थस्थले तावदर्थविशेषप्रत्यये प्रकरणादिकं निर्णायकम् । तथाच प्रकरणादिशून्यार्थान्तरं प्रतीयते तत्र नाभिधामूलम् । सहकार्यभावात् । नापि लक्षणा । अयोगात्सिद्धं वृत्त्यन्तरेणेति चेन्न । प्रकरणादीनामननुगततया सहकारित्वानुपपत्तेः । तात्पर्यग्राहकत्वेनैषामनुगम इति चेत्तर्हि लाघवात्तात्पर्यग्रह एव सहकार्यस्तु सचेह्राप्यस्तीति । अत्र तर्कप्रकाशकृद्व्याख्यापि नानार्थेति सैन्धवमानयेत्यादौ, अर्थविशेषेति गमनादिरूपार्थप्रत्यये प्रकरणादि गमनप्रकरणादि निर्णायकमिति शक्तावच्छेदकैक्ये सति शक्यतावच्छेदकनानात्वमेव नानार्थत्वम् । तत्र सैन्धवमानयेत्यादौ भोजनप्रकरणं शक्याविशेषाल्लवणस्येवाश्वादेरपि प्रतीत्यापत्त्या अभिधया नानार्थविषयकशाब्दबोधे जननीये प्रकरणादिकं सहकारि अवश्य वाच्यमिति भावः । प्रकरणादिशून्येति । गमनादिप्रकरणशून्याश्वादिरूपार्थान्तरार्थमित्यर्थः । तत्र अर्थान्तरप्रत्यये अभिधाशक्तिः सहकारीति प्रकरणरूपसहकार्यभावादित्यर्थः । लक्षणा मूलमित्यनुषज्ज्यते । अयोगात् लक्षणाया अयोगात् । मुख्यार्थान्वयानुपपत्त्या हि लक्षणाकल्पनम् । प्रकृते च तदसंभवेन न लक्षणेति भावः । अतोऽर्थान्तरप्रत्ययानुरोधेन तथाप्रतीत्यर्थं व्यञ्जनारूपवृत्त्यन्तरमावश्यकमिति भावः । नानार्थस्थलेऽर्थान्तरप्रतीतिः शक्त्यैव । नच प्रकरणाभावेन सहकार्यभाव इति वाच्यम् । तस्य सहकारित्वासंभवादिति न वृत्त्यन्तरमिति समाधत्ते—**प्रकरणादीनामिति** । सहकारित्वेति नानार्थविषयकशब्दत्वावच्छिन्नं प्रति प्रकरणादीनां न कारणता तत्तत्प्रकरणानामननुगमेन व्यभिचारादित्यर्थः । तत्तत्प्रकरणानामननुगमेऽपि तात्पर्यग्राहकत्वेनानुगमान्न व्यभिचार इति शङ्कते—**तात्पर्येति** । **लाघवादिति** । नानार्थविषयकशाब्दत्वावच्छिन्नं प्रति तात्पर्यग्रहजनकत्वेन कारणत्वापेक्षया लाघवात्तात्पर्यग्रहत्वेनैव हेतुतास्त्विति न प्रकरणादीनां सहकारितेति भावः । नन्वस्तु तात्पर्यग्रह एव सहकारी तथापि तत्स्वरूपसहकार्यभावादेव कथमभिधया पदार्थप्रतीतिरित्यत आह—**स चेति** । तात्पर्यग्रहश्चेत्यर्थः । **इहापीति** । प्रकरणादिशून्यार्थान्तरस्थलेऽपीत्यर्थः । **अस्तीति** । नानार्थस्थले शक्त्या एका-

**तत्रान्यार्थे तु तात्पर्यग्राहकान्तरकल्पनात्।**
**तात्पर्यस्य ग्रहः कल्प्यस्ततः सैवास्तु लाघवात्॥ ११६॥**
**घटं गुणं च संपाद्य वाप्याः पेयं जलं ततः।**
**निर्वेधं निकटस्थायां गङ्गायां को न वित्पिबेत्॥ ११७॥**

---

र्थप्रत्ययानन्तरमपरार्थप्रतीतिस्तत्रापि तात्पर्यग्रहोऽस्त्येवेत्यर्थः। तात्पर्यग्रह एवार्थविशेषप्रत्यायकः परंतु यत्रार्थे प्रकरणं तत्र प्रथमत एव तात्पर्यग्रहा-दादावेव तदर्थप्रतीतिरपरार्थे तु तात्पर्यग्राहकान्तरात्तात्पर्यग्रहे सत्यपरार्थप्र-तीतिरिति कृतं वृत्त्यन्तरस्वीकारेणेति हृदयमिति। नन्वेवं नानातात्पर्यापत्ते-रित्यध्वनैव दत्तोत्तरत्वात्पुनरपीयं कल्पना तत्समत्वेन श्वपुच्छन्यायमेवा-नुसरेदिति वाच्यम्। वैषम्यात्। तथाहि पूर्वोदाहरणे तावत् कान्ताया एव गमनाभावे प्रेमौत्कट्यद्योतने च तात्पर्यं प्रकरणादिवशात्कल्प्यमिति युक्त एव नानातात्पर्यापत्तिरूपो दोषः। इह तु यत्र प्रकरणादिकं तत्र प्रथमं तात्पर्य-ग्रहात्तदर्थप्रतीत्यनन्तरमपरार्थप्रतीतौ तात्पर्यग्राहकान्तरं प्रकल्प्य ततस्तत्र तात्पर्यग्रहात्तदुपपत्तिरिति स्फुट एव भेद इति। ततो नात्र व्यञ्जना किंतु शक्तिरेवेति॥ ११५॥ एवं तार्किकोक्तिमनूद्याथ तां श्लथयति—**तत्रेति।** तुशब्दः प्रतिपादितकल्पनानिरासार्थः। तत्र निरुक्ततार्किककक्षाविषये अन्यार्थे अश्वाद्यर्थे। **तात्पर्येति**। तात्पर्यस्य यद्ग्राहकान्तरं भोजनादिप्रकरणभिन्नम-न्यत्किंचिन्निमित्तं तस्य यत्कल्पनं तस्मात् तत्रापि तात्पर्यस्य ग्राहकनिमित्ता-न्तरकल्पनाद्धेतोरित्यर्थः। **तात्पर्यस्येति**। अन्यार्थे तात्पर्यस्य ग्रहः कल्प्य इति संबन्धः। नन्वस्त्वेवं का हानिरित्यत आह—**तत इति**। तात्पर्यग्रा-हकान्तरादिकल्पनस्य गौरवपराहतत्वादित्यर्थः। नन्वस्त्वेवं गौरवं का क्षतिः फलमुखगौरवस्यादोषत्वं त्वयैव पूर्वमङ्गीकृतमिति चेत्सत्यम्। तथापि सैन्धव-मानयेत्यादौ भोजनादिप्रकरणाल्लवणादौ शक्तिग्रहवदश्वादौ शक्तिग्रहेति तात्पर्य-ग्राहकान्तरं कल्पनीयम्। तदेव तु न संभवति। भोजनप्रकरणे गमनादिरूपस्य तस्यासंभवात्, यथाकथंचित्संभवेऽपि श्रोतुः शक्तिग्रहस्य संदिग्धत्वेन युगपदु-भयानयनस्य तूष्णीमवस्थानस्य वा प्रसङ्गाच्च। नचायं दोषस्त्वत्पक्षेऽपि तुल्य इति वाच्यम्। एतादृशस्थले व्यङ्ग्यार्थे तात्पर्याभावात्केवलं प्रतीयमानस्या-न्यार्थस्यैव निर्वाह्यत्वादतो लाघवाद्व्यञ्जनैवाङ्गीकार्येति सिद्धान्तयति—**सैवेति।** अतएवोक्तं काव्यप्रकाशे—'अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते। संयो-गाद्यैरवाच्यार्थधीकृद्व्यापृतिरञ्जनम्' इति॥ ११६॥ तदेवार्थान्तरन्यासेन दृढीकु-र्वंस्तदनङ्गीकारिणं तार्किकमन्यमुपहसति—**घटं गुणं चेति। विदिति।** निर्वेधं गाङ्गं जलं निकटे वर्तत इति ज्ञानवानित्यर्थः। एतेनाज्ञव्युदासः। अत्र वित्पदेन विवेककुशलस्य तार्किकस्य तवेदमनुचितमिति द्योतितम्॥ ११७॥

**यच्चोपपादि गङ्गायां घोष इत्यत्र तीरगे।**
**पावनत्वेऽपि तज्ज्ञप्त्यै लक्षणैवेति लाघवात्॥ ११८॥**

एवमभिधामूलां व्यञ्जनामुपपाद्य लक्षणामूलां तां प्रतिपादयितुं गङ्गायां घोष इत्यादौ लाक्षणिकपदोदाहरणे तीरे पावनत्वादिप्रतीत्याधायकव्यञ्जनावृत्तौ तार्किकोक्तदूषणं तत्सिद्धान्तकथनेनानुवदति—**यच्चेति**। चोऽप्यर्थकः। यदप्युपपादीति योजना। तार्किकैरिति शेषः। उपपादि। स्वसंमतयुक्तिभिः प्रतिपादितमित्यर्थः। किं तदित्यत आह—**गङ्गायामित्यादिना**। अत्रेति गङ्गायां घोष इत्यस्मिन्नुदाहरण इत्यर्थः। तीरगे तीरनिष्ठे पावनत्वेऽपि। पवित्रीकर्तृत्वरूपधर्मविशेषेऽपीत्यर्थः। उपलक्षणमिदं शैत्यादेरपि। तदिति पावनत्वादिज्ञानार्थम्। लाघवाल्लक्षणैवास्तु नतु व्यञ्जनाख्यं वृत्त्यन्तरं गौरवादित्यर्थः। इति यदुपपादीति संबन्धः। इतिशब्दस्तार्किकसिद्धान्तसमाप्त्यर्थः। उक्तं चैवमेव मञ्जर्याम् 'गङ्गायां घोष इत्यादौ लक्षणाप्रयोजनं शैत्यपावनत्वादिप्रतीतिः। नच तत्प्रतीतिर्लक्षणासाध्या। प्रयोजनाभावात् लक्षणायाश्च प्रयोजनवत्त्वनियमादिति चेन्न। लक्ष्यप्रतीतेरेव प्रयोजनत्वात्। तथापि प्रयोजनान्तरं तत्र नास्तीति चेत्ततः किम्। लक्षणाया हि प्रयोजनवत्त्वेन नियमो नतु लक्ष्यप्रतीत्यतिरिक्तप्रयोजनवत्त्वेन गौरवादप्रयोजकत्वाच्च' इति। विवृतं च तर्कप्रकाशे लक्षणाप्रयोजन गङ्गापदस्य तीरे लक्षणाप्रयोजनम्। **शैत्येति**। 'स्वायत्ते शब्दप्रयोगे किमित्यवाचकं प्रयुञ्जामहे' इति न्यायात्। गङ्गातटे घोष इति विहाय यद्गङ्गायां घोष इति लक्षणया प्रयोगस्तच्छैत्यपावनत्वादिप्रतीत्यर्थमेवेत्युन्नीयते। लक्षणायाः प्रयोजनवत्त्वनियमादिति भावः। तत्प्रतीतिः शैत्यपावनत्वादिप्रतीतिः लक्षणेति शैत्यपावनत्वादौ लक्षणासाध्ये इत्यर्थः। प्रयोजनाभावात् प्रयोजनान्तराभावादित्यर्थः। प्रयोजनाभावेऽपि लक्षणायां को दोष इत्यत आह—**लक्षणायाश्चेति**। यथा गङ्गापदस्य तीरे लक्षणायां लक्ष्यप्रतीत्यतिरिक्तशैत्यपावनत्वादिप्रतीतिः प्रयोजनं तथा शैत्यपावनत्वे लक्षणायां तस्याः प्रयोजनाभावाल्लक्षणया अनिर्वाहेण प्रयोजनप्रतिपत्तये व्यञ्जनाख्यवृत्तिरादरणीयेति भावः। शैत्यपावनत्वादौ लक्षणैव। नच तस्याः प्रयोजनाभावः। शैत्यपावनत्वादिप्रतीतेरेव प्रयोजनत्वादिति समाधत्ते—**लक्ष्येति**। तथापि लक्ष्यप्रतीतेः प्रयोजनत्वेऽपि प्रयोजनान्तरं लक्ष्यप्रतीत्यतिरिक्त प्रयोजनान्तरम्। ततः किं लक्ष्यप्रतीत्यतिरिक्तप्रयोजनाभावे किमनिष्टमित्यर्थः। ननु लक्षणायाः लक्ष्यप्रतीत्यतिरिक्तप्रयोजनवत्त्वनियमभङ्ग एवानिष्टमित्यत आह—**लक्षणाया हीति**। ननु गौरवेऽप्यन्यत्र दृष्टत्वात्तथा कल्पनीयम्। नह्यत्र कार्यकारणभावे गौरवादित्यत आह—**अप्रयोजकत्वाच्चेति**। नहि यत्र कुत्रचित्तद्दर्शनमात्रेणैव तादृशनियमावधारणं मानाभावादिति भावः। तथाच लक्षणयैव प्रयोजनप्रतीतिनिर्वाहेण वृत्त्यन्तरकल्पनमितीति। विस्तरस्त्वाकरेऽ-

**तत्रानवस्थाभीत्या तज्ज्ञप्तिरेव प्रयोजनम् ।**
**वाच्यमेवं कुतो नात्र द्विःप्रयोजनतादिधीः ॥ ११९ ॥**

नुसंधेयः । तस्मात् गङ्गायां घोष इत्यादिलक्षणायां शैत्यपावनत्वादि यत्प्रयोजनमस्ति तदनुभवार्थं तत्रापि लक्षणैव लाघवात्स्वीकार्या नतु गौरवदुष्टा व्यञ्जनापीति तार्किकतत्त्वम् ॥ ११८ ॥ एवं गङ्गायां घोष इत्यादिलाक्षणिकव्यञ्जनास्थले तत्खण्डकं तार्किकमतमुपन्यस्य तन्निरासार्थं भूमिकां रचयति— **तत्रेति** । निरुक्तरीत्या तार्किकैः स्वमतं यदुपपादितं तस्मिन्नित्यर्थः । **अनवस्थेति** । तथाहि गङ्गायां घोष इत्यत्र स्वायत्ते शब्दप्रयोगे किमित्यवाचकं प्रयुञ्जामह इति त्वदुदाहृतन्यायादेव तीरे घोष इति विहाय तीरे पावनत्वादिप्रतीत्यर्थं गङ्गायां घोष इति प्रयोज्यते । तत्र पावनत्वादिप्रतीतिरेव गङ्गापदस्य तीरे लक्षणायाः प्रयोजनं सिद्धम् । तदपि लाघवाल्लक्षणयैव भवति नतु व्यञ्जनयेत्युक्तं । तत्र लक्षणायाः सर्वत्र निरूढेतरत्वावच्छेदेन प्रयोजनवत्त्वनियमात्पावनत्वादौ लक्षणाया अपि प्रयोजनान्तरं किंचिदुच्येत चेत्तत्प्रतीत्यर्थमपि लक्षणान्तरं तत्रापि प्रयोजनान्तरमित्याकारा या अनवस्था तद्भीत्या तदप्राप्त्यर्थमिति यावत् । तथा चोक्तं काव्यप्रकाशे—'एवमप्यनवस्था स्याद्या मूलक्षयकारिणी' इति । तेन किं तत्राह—**तज्ज्ञप्तिरेवेति** । तस्य पावनत्वादेः ज्ञप्तिर्ज्ञानमेव पावनत्वादिलक्षणाया अपि प्रयोजनं वाच्यम् । तार्किकेण त्वया वक्तव्यमित्यर्थः । ननु भ्रान्तोऽसि त्वं मञ्जर्यादावुक्तमेव तथा लक्ष्यप्रतीतेरेव प्रयोजनत्वादिति तत्किं न दृष्टं भवता यदेवं वदसीति चेत्सत्यम् । तथापि तत्खण्डनार्थमेव मया तदनूदितमित्याशयेन फलितमाह— **एवमिति** । निरुक्तरीत्या पावनत्वादावपि लक्षणाया एव स्वीकृत्या तत्प्रतीतेरेव प्रयोजनत्वाङ्गीकारे सतीत्यर्थः । तत्रानुभवविरोधरूपं दूषणं मनसि निधाय पृच्छति कुत इत्यादिनाग्रिमश्लोकपूर्वार्धान्तेन । तीरे पावनत्वज्ञानमेकं लाक्षणिकपदप्रयोगस्य प्रयोजनं । तथा पावनत्वे लक्षणाया अपि तदेव प्रयोजनमिति द्विविधम् । **अत्रेति** । गङ्गायां घोष इति प्रकृतोदाहरणे पावनत्व इत्यर्थः । द्विःप्रयोजनतादिधीः कुतो न जायत इति योजना । द्विःप्रयोजनतादिधीः द्वे च ते प्रयोजने च द्विःप्रयोजने तयोर्भावो द्विःप्रयोजनता सा आदिर्मुख्या यस्य गङ्गापदस्य तीरे पुनः पावनत्वादावपि लक्षणेति लक्षणाद्वयस्य तद्द्विःप्रयोजनतादि तस्य धीः ज्ञानम् । अनुभव इत्यर्थः । स कुतो न जायते कस्माद्धेतोर्न भवतीति प्रश्न इत्यर्थः । अयं भावः—किं गङ्गापदनिष्ठा एकैव लक्षणा तीरं पावनत्वादिकं च लक्षयति लक्षणान्तरं वा । नान्त्यः । तस्या एव व्यञ्जनात्वाभिधानात् । केवलं नाम्नैव विवादापत्त्या मन्मतस्यैव सिद्धत्वाच्च । नापि प्रथमः । अननुभवपराहतत्वात् । तथाहि । यदि गङ्गापदनिष्ठैकैव लक्षणा तीरं पावनत्वं च लक्षयति तर्हि तत्र पावनत्वादितज्ज्ञानं च प्रयोजनमस्तीत्य-

क्रमाद्वा युगपद्वापीत्युच्यतां तार्किकाधिपैः ।
तीरे घोषः पावनं च तदित्येवाखिलानुभूः ॥ १२० ॥
नन्वस्तु पावनत्वादिविशिष्टे तीर एव सा ।
तद्वाच्यमुक्ततीरस्य प्रतीतिर्लक्षणाफलम् ॥ १२१ ॥
ततो विशिष्टतीरत्वस्याज्ञातत्वात्पुरा कथम् ।
लक्ष्यतावच्छेदकत्वानुपपत्तिर्न वाऽपतेत् ॥ १२२ ॥
तस्माद्गङ्गापदे तीर एव ग्राह्यात्र लक्षणा ।
पावनत्वे तु सत्कार्या व्यञ्जनैव विपश्चिता ॥ १२३ ॥

नुभवः कुतो न भवतीति वाच्यमिति ॥ ११९ ॥ ननु जायत एवोक्तस्थले द्विःप्रयोजनत्वादिबुद्धिर्नेति केनोच्यत इति चेत्किं सा क्रमेण जायते युगपद्वा । तत्र नाद्य इत्याह—**क्रमाद्वेति** । गङ्गायां घोष इति वाक्यश्रवणोत्तरम् । जहल्लक्षणया तीरे घोष इत्येव ज्ञानं जायते, तदुत्तर तत्र पावनरूपमेकमेव लाक्षणिकपदप्रयोगस्य प्रयोजनमपि प्रतीयत इति सर्वानुभवसिद्धं, तत्कथं क्रमेण प्रयोजनद्वयत्वादिबुद्धिर्भवदुक्तिमात्रेण स्वीकार्येति तात्पर्यम् । नान्त्य इत्याह— **युगपद्वापीति** । अत्राप्युक्तानुभवविरोध एव हेतुर्बोध्यः । तस्मादस्मिन्प्रश्ने किमुत्तरं तदुपपादनीयं तार्किककोविदैः श्रीमद्भिरित्याह—**इत्युच्यतामिति** । अत्र तार्किकाधिपैरित्युक्त्या ममात्रोत्तरप्रदानासामर्थ्येऽप्यनेकतर्ककुशलास्त-दास्यन्तीत्युक्तिः प्रत्युक्ता । 'नहि श्रुतिशतमपि घटं पटयितुमीशते' इति न्याया-दनुभवान्यथाकरणस्य तार्किकचक्रवर्तिनामपि दुर्लभत्वादिति भावः । तमेवा-नुभवमभिनयति—**तीर इति** ॥ १२० ॥ एवं चेत्तर्हि पावनत्वादिविशिष्टे एव तीरे लक्षणास्त्विति शङ्कते—**नन्विति** । सा लक्षणेत्यर्थः । एवं च न कोऽपि दोष इत्याशयः । तत्र गूढाभिसंधिरुत्तरमाह—**तद्वाच्यमिति** । तत्तस्मिन्पक्षे उक्त-तीरस्य पावनत्वादिविशिष्टतटस्य प्रतीतिरुपस्थितिः लक्षणाफलं वाच्यमित्यन्वयः ॥१२१॥ ननु कात्रापत्तिरुच्यत एवास्माभिर्निरुक्ततीरप्रतीतिर्लक्षणाफलत्वेनेति तदभि-संधिमजानानस्य शङ्कां शमयन्स्वाभिसंधिमुद्घाटयति—**तत इति** । ततः विशिष्टतीर-ज्ञानस्यैवोक्तरीत्या लक्षणाफलत्वाद्विशिष्टतीरत्वस्य पावनत्वादिविशिष्टतटत्वस्येत्यर्थः । पुरा निरुक्तलक्षणाजन्योक्तलक्ष्यज्ञानात्पूर्वम् । अज्ञातत्वादननुभूतत्वात् । **लक्ष्यतेति** । लक्ष्यं पावनत्वादिविशिष्टं तीरं तस्य भावो लक्ष्यता तस्याः यदवच्छेदकं यावल्लक्ष्यसं-ग्राहकत्वेन परिच्छेदकत्वानियामकं सामान्यविशिष्टतटत्वादिरूपं तस्य भावो लक्ष्य-तावच्छेदकत्वं तस्य या अनुपपत्तिः असंपन्नतानिरुक्तलक्ष्यानुभवात्प्रागघटमानेत्यर्थः । सा कथं न वा पतेत् । दोषत्वेन न प्राप्ता स्यादपि तु स्यादेवेत्यर्थः । नहि लक्ष्यताव-च्छेदकज्ञानं विना लक्षणा भवतीति नियमात्तद्विनैव तदधिकारे तदनुपपत्तेर्दो-षत्वं युक्तमेवेति तत्त्वम् ॥ १२२ ॥ एवं परमतं निरस्य स्वसिद्धान्तं बोधयति— **तस्मादिति** । निरुक्तयुक्तिभिस्तार्किकादिमतस्य तुच्छत्वादित्यर्थः । अत्र प्रकृतोदा-

**किंच वक्त्राशयवपुस्तात्पर्यं वाच्यमेकधा।**
**अन्यथा वाक्यभेदस्यापत्तिं को वा निवारयेत्॥ १२४॥**
**तथा चोदेति सवितेत्यादिवाक्यश्रुतेः परम्।**
**तत्तच्छ्रोतृविभेदेन शक्यादेर्भिन्न एव यः॥ १२५॥**
**व्युत्थातव्यं प्रियाश्लेषादित्याद्याकारकः शतम्।**
**शाब्दबोधो भवत्येष कथं वृत्त्यन्तरादृते॥ १२६॥**

---

हरणे गङ्गापदे गङ्गायामिति शब्दरूपे इत्यर्थः। तीर एव नतु पावनत्वादावित्यर्थः। विपश्चिता गुणदोषविवेकशालिना विदुषेत्यर्थः। लक्षणा तात्पर्यानुपपत्तिमात्रेण शक्यसंबद्धबोधिका आरोपितशाब्दवृत्तिः ग्राह्या। स्वीकार्येति यावत्। तु पुनः पावनत्वे। उपलक्षणमिदं शैत्यादेरपि। पावयितृत्वादावित्यर्थः। व्यञ्जनैव अशक्यार्थसंबोधकशब्दैरेवेत्यर्थः। अवधारणेन लक्षणाऽग्रहनिरासः। सत्कार्या आदरणीयेत्यर्थः। अयमाशयः—यदि वृत्त्यन्तराङ्गीकारगौरवभियात्र लक्षणैवेत्याग्रहस्तर्हि तात्पर्यद्वयं प्रयोजनद्वयं तथैकस्यावृत्तेरर्थद्वयबोधकत्वमावृत्तिर्वा कल्पनीयेति महद्गौरवं तदपेक्षयोक्तवृत्त्यङ्गीकृतिरेव रमणीयेति॥ १२३॥ तत्रैवयुक्त्यन्तरमप्याह—**किंचेति**। **वक्त्राशयेति**। वक्तुर्बोद्धुर्य आशयो रहस्यं तदेव वपुः स्वरूपं यस्य तत्। वक्तुराशयस्तात्पर्यमिति सर्वसंमतत्वात् तात्पर्यं वक्तुराशय इत्यत्रापि प्रागुक्तत्वादुक्तलक्षणं यत्तात्पर्यं तदेकधा एकरूपं वाच्यं वक्तव्यमित्यर्थः। तेन कथं तीरे पावनत्वे च लक्षणासिद्धे तीर एव तात्पर्यात्तत्रैव लक्षणा स्यान्नतु पावनत्वेऽपि। तस्मात्तत्र व्यञ्जनाङ्गीकरणं युक्तमेवेत्याशयः। नच कोऽयं नियमो यत्तात्पर्यस्यैकविधत्वमेवेति। तदस्तु तस्य बहुविधत्वमपि का नः क्षतिरिति वाच्यम्। वाक्यभेदापत्तेः। तस्मादुक्तरीतिरेवावदातेत्याशयेनोक्तवैपरीत्ये दोषं विशदयति—**अन्यथेति**। उक्तवैपरीत्ये तात्पर्यस्य बहुविधत्वे सतीत्यर्थः। **वाक्येति**। वाक्यस्य गङ्गायां घोष इति वाक्यस्य भेदः गङ्गातीरे घोष इति पावनत्वादिशालिनि गङ्गायाः तीरे घोष इत्याद्याकारको विभेदस्तस्येत्यर्थः। स्पष्टमन्यत्॥ १२४॥ तत्राप्याग्रहेण तार्किकोक्तिमात्रश्रद्धाजडं प्रति विस्पष्टतयावश्यं व्यञ्जनाख्यं वृत्त्यन्तरं व्युत्पादयितुं तत्रान्यथापत्तिं सोदाहरणां विवृणोति—**तथाचेति**। इदं हि युक्त्यन्तरसमुच्चयार्थमव्ययद्वयम्। 'उदेति सविता' सूर्यः उदेति उदयं प्राप्नोति इति वाक्यश्रुतेः निरुक्तं देवदत्ताद्युच्चरितं यद्वाक्यं तस्य श्रवणादित्यर्थः। परं अनन्तरं तत्तदिति ते च ते श्रोतारश्चेति कर्मधारयः। तेषां यो विभेदो भिन्नत्वं तेनेत्यर्थः। ननु निरुक्तस्थलेऽपि शक्यादिरेवास्तु शाब्दबोध इत्यत आह—**शक्यादेरि**त्यादिना॥ १२५॥ ननु किमित्यसौ शक्यादिभिन्न इत्याशङ्कायां तत्स्वरूपं कथयंस्तत्र हेतुमाह—**व्युत्थातव्यमि**त्यादिना। प्रियाश्लेषात् प्रियायाः यावत्स्त्रीगुणवैशिष्ट्येन स्वप्रीतिविषयीभूतायाः स्वसुन्दर्याः य-

**नच संभावनैवेयं नतु निर्णय इत्यपि ।**
**शब्दान्वयादिना तत्र शाब्दत्वस्यैव निश्चितेः ॥ १२७ ॥**
**ततो निमित्तादिभिदा सिद्धा दृष्टिद्वयेतरा ।**
**धीरैकगम्या वदने व्यञ्जना च स्मितद्युतिः ॥ १२८ ॥**

---

आश्लेषः आलिङ्गनं तस्मात् । इयं हि ल्यब्लोपे पञ्चमी । स्वरमण्यालिङ्गनं विहायेत्यर्थः । यद्वा यथाश्रुतैवास्तु पञ्चमी तथापि न क्षतिः । स्त्रीयालिङ्गनसकाशादुत्थातव्यम् । शौचादिनित्यकर्मार्थं व्युत्थानं संपादनीयमित्यर्थः । कान्तपक्षे तु प्रियस्य स्वरमणस्येति व्याख्येयम् । इतिशब्दः शाब्दबोधानुवादसमाप्त्यर्थः । आदिपदेन अध्ययनायाद्य विलम्बः संपन्न इति तूर्णं स्नानादि विधेयमित्यादेः संग्रहः । शतमनेकविधः । नचात्रापि लक्ष्यत्वमेव । वक्तुराशयस्यैकविधत्वेन तद्भिन्ननानाविधशाब्दबोधेषु तात्पर्यानुपपत्तिरूपस्य लक्षणाबीजस्याभावादिति भावः । शेषं स्पष्टमेव ॥ १२६ ॥ ननु निरुक्तप्रकारेण तत्तदधिकारिभेदान्नानाविधानुभवकथनं यत्कृतं तत्संभावनामात्रमेव नतु तथा निर्णेतुं शक्यं, तेन कथं तत्र शाब्दत्वं येन तन्निर्वाहार्थं वृत्त्यन्तरमवश्यमङ्गीकार्यमित्याशङ्कयोदितः सवितेति शब्दश्रवण एव तत्तदधिकारिषु तथा तथानुभवस्याप्रत्यक्षत्वात्तदभावे तदभावाच्च ततः किमिति नोक्तानुभवनिर्णयशक्यता, येन तत्र संभावनामात्रत्वेन तन्निर्वाहकवृत्त्यन्तरानङ्गीकृत्यापत्तिरिति । समाधत्ते—**नचेति** । इयं व्युत्थातव्य प्रियाश्लेषादित्याद्यनेकानुभवकल्पनारूपा संभावनैव निश्चयशून्यैककोटिकज्ञप्तिरेवास्तीति शेषः । तु पुनः निर्णयः निश्चयः न नैवास्ति । परबुद्धेरप्रत्यक्षत्वादेवं निश्चेतुं केन शक्यत इत्यर्थः । इत्यपि । इतिशब्दः पूर्वपक्षसमाप्त्यर्थः । अपिशब्दः समुच्चयार्थः । एवमपि नच वाच्यमित्यव्याहृत्यसंबन्धेनैव वक्तव्यमित्यर्थः । तत्र हेतुमाह—**शब्देत्युत्त**रार्धेन । तत्र निरुक्तानुभवेषु निश्चिते निर्णीतत्वादित्यर्थः । तस्माद्युक्तमेवात्र वृत्त्यन्तरस्वीकरणमिति तत्त्वम् । एतेन वस्तुतो व्यञ्जनायां गच्छ गच्छसीत्यत्र मा गा इत्यत्रास्यास्तात्पर्यमुन्नीयते संभाव्यते वा नतु मा गा इति निर्णीयते इति कृत वृत्त्यन्तरेणेति मञ्जरीकारोक्तिरपि परास्ता । ममापि जन्म तत्रैवेत्यादिवाक्यशेषात्तत्रापि तथा निर्णयस्यैव दृष्टत्वादित्यलं पल्लवितेन ॥ १२७ ॥ एवं परमतनिराकरणपूर्वकं व्यञ्जनावृत्तौ संक्षेपतो युक्तिजातमुपपाद्य तां तुल्ययोगितया निगमयति—**तत इति** । निरुक्तयुक्तिलक्षणहेतुभ्य इत्यर्थः । हेत्वन्तरमप्याह—**निमित्तेति** । आदिपदात्फलादेः संग्रहः । निमित्तफलादिभेदेनेत्यर्थः । तथाहि शक्तिग्रहे तावत् व्याकरणादिकं तथा नानार्थकशक्तौ संयोगादिकं च निमित्तमिति प्रागेवोक्तम् । फलं तु तत्र शक्यार्थबोध एव तद्वल्लक्षणायामपि तात्पर्यानुपपत्तिरेव निमित्तमित्यपि लक्षण एव तस्याः कथितम् । फलं तु तत्र लक्ष्यार्थबोध एव । एवं व्यञ्जनायामपि निमित्तं सहृदयनिष्ठवासनाविशेषपरिपाक एवेत्यपि तदुपक्रमे अमन्दानन्ददायिनीति पदेन,

**पदं वाक्यं पदार्थश्च वाक्यार्थो धातुरव्ययः ।**
**सुप् तिङ् च प्रातिपदिकं कालो वचनमेव च ॥ १२९ ॥**

तथाचोपसंहारेऽपि धीरैकमिति पदेन च सूचितम् । फलं तु तत्र व्यङ्ग्यार्थबोध एव । एवंच स्फुट एव निमित्तादिभेदो वृत्त्यन्तराङ्गीकारप्रयोजक इत्याशयः । पक्षे दृष्टिद्वयस्य निमित्तमवलोकनेच्छाफलं तु रूपिज्ञानम् । तथा स्मितद्युतेर्निमित्त प्रियदर्शनादिफलमपि रोमाञ्चादिप्रसिद्धमेवेति तत्रापि युक्त एव निमित्तादिभेदः । **दृष्टीति** । अत्र दृष्टिपदवाच्याभ्यां शक्यलक्ष्यज्ञानाभ्यां लक्षणया तद्धेतुभूतं शक्तिलक्षणाख्यवृत्तिद्वयं विवक्षितं तत इतराभिन्नेत्यर्थः । पक्षे 'लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी । दृग्दृष्टी' इत्यमरोक्तेर्लोचनद्वयभिन्नेत्यर्थः । एतादृशी तथा । **धीरैकेति** । धियं बुद्धिमीरयन्ति सूक्ष्मतमार्थे प्रेरयन्ति ते तथा तैः एकं केवलं गम्या प्राप्या द्वयभिन्नेत्यर्थः । सहृदयमात्रवेद्येति यावत् । पक्षे रसिकमात्रविज्ञेयेत्यर्थः । एतादृशी वदने भाषणे तत्रत्यपदादावित्यर्थः । पक्षे मुखे । व्यञ्जना एतन्नाम्नी पूर्वोक्तलक्षणा तृतीया शब्दवृत्तिः । तथा स्मितद्युतिः स्मितस्य मन्दहास्यस्य द्युतिः मुखविकासप्रसृतसूक्ष्मदन्तकान्तिरित्यर्थः । सिद्धा निर्विवादाभूदित्यन्वयः । अत्र धीरैकगम्येत्यनेन यदीयं निरुक्तयुक्तिभिर्व्यञ्जनाख्या तृतीया शब्दवृत्तिरस्ति तर्हि किमिति तार्किकचक्रवर्तिभिरपि शितिकण्ठदीक्षितादिभिरसौ नैव स्वीकृतेत्युक्तिः प्रत्युक्ता । तेषां द्रव्यादिविचारांशे तथात्वेऽपि शब्दादिविचारादावतथात्वात् । तत्र वैयाकरणादीनामेव पटुत्वाच्च । अत एवोक्तं नागोजीभट्टलघुमञ्जूषायां तल्लक्षणादि सा च वृत्तिस्त्रिविधा । शक्तिर्लक्षणा व्यञ्जना चेतीत्युपक्रम्य शक्तिलक्षणयोर्लक्षणादिकं सप्रपञ्चं निरुच्य मुख्यार्थबाधग्रहनिरपेक्षबोधजनको मुख्यार्थसंबन्धसाधारणः प्रसिद्धाप्रसिद्धार्थविषयको वक्त्रादिवैशिष्ट्यज्ञानप्रतिभाद्युद्बुद्धः संस्कारविशेषो व्यञ्जना । अतएव निपातानां द्योतकत्वं स्फोटस्य व्यङ्ग्यता च हर्यादिभिरुक्ता । द्योतकत्वं च क्वचित्समभिव्याहृतपदीयशक्तिव्यञ्जकत्वमिति वैयाकरणानामप्येतत्स्वीकार आवश्यकः । एषा च शब्दतदर्थपदपदैकदेशवर्णरचनाचेष्टादिषु सर्वत्र तथैवानुभवात् वक्त्रादिवैशिष्ट्यज्ञानं व्यङ्ग्यविशेषबोधे सहकारीति न सर्वत्र तदपेक्षेत्यन्यत्र विस्तर इति । अत्रायं प्रयोगः—व्यञ्जनाशब्दे शक्तिलक्षणाख्यवृत्तिद्वयभिन्ना वृत्तिरस्ति । चतुरैकगोचरत्वे सति तन्निमित्तादिभिन्ननिमित्तादिमत्त्वात् । मुखे दृष्टिद्वयभिन्नस्मितद्युतिवदिति । घटादौ व्यभिचारवारणाय सत्यन्तम् । तावन्मात्रोक्तौ ब्रह्मणि स इति समस्तमुपात्तम् । तस्मात्तृतीया व्यञ्जनाख्या शब्दवृत्तिः सिद्धेति भावः ॥ १२८ ॥ एवं सोपन्यासं व्यञ्जनावृत्तिमुपपाद्य न केवलमियं शब्द एव तिष्ठति किंत्वर्थादावपि इति बोधयितुं तत्स्थानानां वक्ष्यमाणैर्भेदैरानन्त्येऽपि व्युत्पत्तिसौकर्याय प्रसिद्धानि तानि संक्षिप्योद्दिशति—**पदमित्यादि**चतुर्भिः । ससंख्यं पदं श्रीराम इत्यादि, वाक्य-

अपि पूर्वनिपातश्च विभक्तिः कापि तद्धितः ।
निपाताश्चादयः प्राद्या उपसर्गास्तथैव च ॥ १३० ॥
सर्वनामाव्ययीभाव इमनिच्प्रत्ययस्तथा ।
आधारः कर्मभूताख्यो वर्णाश्च रचनास्तथा ॥ १३१ ॥
प्रबन्धाश्च कविप्रौढोक्ती रसो वस्त्वलंकृतिः ।
संकरश्चापि संसृष्टिरिति दिग्दृक्स्थलेऽस्ति सा ॥ १३२ ॥
अभिधालक्षणामूलत्वभिधासौ द्विधा यथा ।
राधया माधवेऽकारि स्वमुखामृतभद्युतिः ॥ १३३ ॥
सामान्यतो द्विधा व्यङ्ग्यमपि गूढादिभेदतः ।
सती विकसिता सद्यः प्राणेश्वरनिरीक्षणात् ॥ १३४ ॥

मस्त गतः सवितेत्यादि, पदार्थः सीताकान्तादिः, वाक्यार्थः सूर्यकर्तृकस्वादर्शन-कर्मकगमनानुकूलव्यापरविशेषादिः, धातुर्भूप्रभृतिः, सुप्तिङौ प्रसिद्धौ । प्रातिपदिकं रामेत्यादि, कालो भूतादिः वचनमेकवचनादि ॥ १२९ ॥ चक्रचीवरमित्यादौ 'अल्पाच्तरं पूर्वम्' इत्यादिशास्त्रसिद्धश्चक्रपदस्य पूर्वनिपातः प्रसिद्ध एव । विभक्तिः कापीति । अत्र कापीत्ययेन 'कालाध्वनोरत्यन्तसंयोगे द्वितीया' 'अपवर्गे तृतीया' इत्यादिशास्त्रविहितो विभक्तिविशेष इत्यर्थः । तद्धितः अङ्गकमित्यादौ कप्रत्ययादिः ॥ १३० ॥ इमनिच् तरुणिमेत्यादौ प्रसिद्धः । **आधार इति** । अधिवसति शिवमौलिं गङ्गेत्यादौ प्रसिद्ध एव । वर्णादिकं त्वग्रे मूल एव स्फुटीभविष्यति ॥ १३१ ॥ **दिगिति** । अष्टाविंशतिस्थले ॥ १३२ ॥ एवं निर्दिष्टस्थानायास्तस्याः सामान्यतो द्वैविध्यं बोधयति—**अभिधेति** । शक्तिमूलत्वलक्षणामूलत्वरूपभेदाभ्यामित्यर्थः । असौ पूर्वोक्तरूपा व्यञ्जना । द्विधा द्विःप्रकारा भवतीत्यर्थः । उभयरूपां तामुदाहरति संक्षेपेण—**यथेत्यादिना** क्रमेणैकेनैव वाक्येन । राधया प्रसिद्धया, पक्षे 'राधा विशाखा' इत्यमराद्विशाखयेत्यर्थः । माधवे लक्ष्मीरमणे । श्रीकृष्ण इत्यर्थः । पक्षे 'वैशाखे माधवो राधः' इत्यमराद्वैशाखे मासीत्यर्थः । **स्वेति** । स्वस्याः यन्मुखं तदेव अमृतभः सुधादीधितिः तस्य या द्युतिः निजवदनेन्दुकान्तिरित्यर्थः । पक्ष स्वस्याः मुखमिव मुखमेतादृशो यः अमृतभश्चन्द्रस्तस्य द्युतिः वैशाखराकायां विशाखाख्यतारानिकटवर्तित्वेन चन्द्रस्य युक्तमेव तन्मुखस्वरूपमिति तत्कौमुदीत्यर्थः । अकारि कटाक्षेण तदीक्षणार्थं क्षणं तत्सांमुख्यसंपादनेन प्रसारितेत्यर्थः, पक्षे, तदानीं तस्य पूर्णत्वाद्विस्तारितेत्यर्थः । अत्र राधामाधवपदाभ्यामनेकार्थकत्वेनोपमार्थप्रकृतोपयुक्तश्लेषात्सूचितविशाखादौ शक्तिमूलव्यञ्जनैव । उक्तस्थले शक्तिनियामकसंयोगाद्यभावात् । तथा स्वमुखेत्यादौ तिर्यगवलोकने जहल्लक्षणा तथा प्रतीयमानरतौ तन्मूला व्यञ्जनैवेति भावः ॥ १३३ ॥ अथ व्यङ्ग्यार्थमपि द्वैविध्येन संक्षिपति—**सामान्यत इति** । एतेन तद्विस्तरस्त्वग्रे भविष्यतीति द्योतितम् । **गूढादीति** । आदिपदादगूढम् । तदुदाहरति—**सतीत्युत्तरार्धेन** क्रमेण

**एवं साधारणः सिद्धो व्यङ्ग्यार्थोऽयं चतुर्विधः ।**
**शक्त्यादिमूलगूढादिभेदात्सव्यञ्जकोऽपि च ॥ १३५ ॥**
**स्वोत्साहस्तु फलत्येव श्रेयांसि सकलान्यपि ।**
**अपर्णाऽन्योपदेशात्किं प्रापैक्यं प्रेयसोऽनिशम् ॥ १३६ ॥**
**गोक्षीराब्धेः शिवगुरुविबुधसहायोऽच्युतः समुद्दध्रे ।**
**शब्दार्थविवृतिकरणं द्वितीयमैरावताभिधं रत्नम् ॥ २ ॥**

---

प्राग्वदेव । अत्र विकसितेति पदे फुल्लत्वरूपपुष्पधर्मोक्तेः पद्मिनीत्वेन सुगन्धस्मितवती बभूवेति व्यङ्ग्यं गूढम् । प्राणेश्वरेति पदे तत्सर्वस्वं त्वरूपं व्यङ्ग्यमगूढमेवेति तात्पर्यम् । सत्यादि निरुक्तदिशा स्वयमूह्यादिति शिवम् ॥ १३४ ॥ ततः सुबोधार्थं निरुक्तव्यङ्ग्यार्थं संपिण्डीकृत्य गणयन्नुपसंहरति—**एवमिति ।** साधारणः सामान्यः । तेन वक्ष्यमाणास्तद्विशेषाः सन्तीति सूचितम् । तत्र हेतुमाह—**शक्त्यादीति ।** शक्तिमूलगूढागूढव्यङ्ग्यो लक्षणामूलगूढागूढव्यङ्ग्यौ चेति चतुर्विधभेदसत्त्वादित्यर्थः । 'सर्वेषां प्रायशोऽर्थानां व्यञ्जकत्वमपीष्यते' इति काव्यप्रकाशकारिकोक्तेस्तस्यापि व्यञ्जकत्वं विधत्ते—**स इति ।** योयं चातुर्विध्येन संप्रति निर्दिष्टः सामान्यतो व्यङ्ग्यार्थः व्यञ्जक इति न केवलं व्यङ्ग्य एवायं किंतु व्यङ्ग्यान्तरावद्योतकोऽपीत्यर्थः । अपिचेति निपातौ समुच्चयार्थौ । नचैवं व्यङ्ग्यार्थस्यापि व्यञ्जकत्वेऽनवस्थेति शङ्क्यम् । यावदर्थानुभवान्यथानुपपत्तिमात्रादेव तथात्वस्येष्टत्वेनाग्रे धावनस्यानुपयुक्तत्वात् । तस्माद्युक्तमेवोक्तव्यञ्जकत्वमिति तत्त्वम् ॥ १३५ ॥ क्रमेण तमुदाहरति—**स्वेति ।** इदं हि मानिनीं राधां प्रति भगवत्प्रेषितदूतीवाक्यम् । अक्षरार्थस्तु स्फुट एव । तस्मात्तदुत्साहं विना मदुपदेशो विफल एवेति भावः । अत्र फलतीत्यत्र फलनिष्ठपरिपाकपूर्वकमधुररसदातृत्वस्य सोत्साहे शक्तिमूलगूढव्यञ्जनया ध्वननात्स एव त्वया संपाद्य इति द्योतनादाद्यो व्यङ्ग्यो व्यञ्जकश्चार्थः । संपन्नः एवं द्वितीयपादेऽपि श्रेयसां साङ्गत्वसूचकसकलपुमर्थसाधना अपि चतुर्विधपुमर्थाः स्वोत्साहैकसाध्या इति तन्मूलागूढव्यञ्जनया द्योतनात्तस्मात्त्वया न तदनादरहेतुनामानेन स्वार्थध्वंसः कार्य इति सूचनाद्वितीयोऽपि, तथा अपर्णेति पदेन त्वया निरुक्तोत्साहार्थं परमं तपः कर्तव्यमिति यो लक्षणामूलगूढव्यङ्ग्यार्थव्यञ्जनात्तेनेतः परमहं नैवोपदिशामीत्यौदासीन्यस्य सूचनात्तृतीयोऽपि तद्वदैक्यमित्यत्रार्धाङ्गभाक्त्वपूर्वकनिरतिशयानन्दत्वस्य तन्मूलागूढव्यञ्जनया ध्वननात्ततस्त्वमपि विमूढैवासि यच्छुष्कमानेनेदृक्सुखमपि त्यजसीति धिक्कारव्यञ्जनादन्त्योऽपि सिद्ध इत्याशयः । अर्थान्तरन्यासोऽलंकारः॥१३६॥ **शब्देति ।** पक्षे शब्दो घण्टानाम् । अर्थः संपत् ॥ १३७ ॥

इति ऐरावताभिधं द्वितीयं प्रकरणं संपूर्णम् ।

---

# इन्दिरारत्नम् ३

**योक्ता व्यञ्जकता शक्याद्यर्थत्रय्या इति क्रमात् ।**
**तत्र वक्त्रादिदशकं निमित्तमधुनोच्यते ॥ १ ॥**
**वक्तोपदेश्यःकाकुश्च वाक्यं वाच्योऽन्यसंनिधिः ।**
**तथा प्रकरणं देशः कालश्चेष्टेति तत्क्रमः ॥ २ ॥**

---

अथ तृतीयं प्रकरणमारभमाणस्तस्य प्राक्तनप्रकरणेन सह संगतिं वक्तुं तदुक्तांशं संक्षेपेणानुवदति—**योक्तेति** । इतिशब्दः पूर्वोक्तानुवादी । निरुक्तरीत्येत्यर्थः । या क्रमात् अनुक्रमेण शक्याद्यर्थत्रय्याः शक्यलक्ष्यव्यङ्ग्यसंज्ञकार्थत्रयस्येत्यर्थः । पक्षे शक्यः कर्तुमकर्तुमन्यथा वा कर्तुं शक्यो धर्मः स आदिः प्रथमो येषामेतादृशा ये अर्थाः पुरुषार्थाः धर्मार्थकामाख्यास्तेषां या त्रयी तस्या इत्यर्थः । व्यञ्जकता व्यङ्ग्यार्थद्योतकता । उक्ता प्रतिपादितेत्यर्थः । पक्षे मोक्षाख्यस्याद्वैतब्रह्मात्मतत्त्वस्य चरमपुरुषार्थात्मकव्यङ्ग्यार्थस्य सूचकता 'धर्मे सर्वं प्रतिष्ठितम्' इति, 'रातेर्दातुः परायणम्' इति, 'प्रजातिरमृतमानन्द इत्युपस्थः' इति च श्रुत्या कथितेत्यर्थः । किं तेनेत्यत आह—**तत्रेति** । निरुक्तव्यञ्जकतायामित्यर्थः । **वक्त्रेति** । वक्ष्यमाणमित्यर्थः । पक्षे श्रोत्रादीनां सर्वेषामपीन्द्रियाणां निमित्तत्वावच्छिन्नत्वलक्षणकरणत्वसाधारण्येऽपि वक्त्रपदेन लक्षणया रसनेन्द्रियस्यैव प्रथमग्रहस्तु तद्गोलके रसनेतरवाक्त्वगाख्येन्द्रियद्वयस्यापि सत्त्वादिति बोध्यम् । तेन ज्ञानेन्द्रियपञ्चकं कर्मेन्द्रियपञ्चकं चेत्यर्थः । निमित्तं निमित्तत्वावच्छेदेन प्रत्येक निमित्तकारणमित्यर्थः । अधुना अद्य तृतीयप्रकरणावसरे । उच्यते कथ्यत इत्यर्थः । अयं भावः—पूर्वप्रकरणे यच्छक्याद्यर्थानामर्थान्तरव्यञ्जकत्वमुक्तं तत्र किंचिन्निमित्तमस्ति न वा । नान्त्यः । अतिप्रसङ्गात् । आद्ये तत्किमेकविधं बहुविधं वा । अन्त्येऽपि किं तत्समुचितमसमुचितं वेत्याशङ्कायां तत्र वक्त्रादीनि 'वक्तृबोद्धव्यकाकूनाम्' इत्यादिकाव्यप्रकाशकारिकादिप्रसिद्धानि प्रत्येकं विभिन्नानि दश निमित्तानि सन्तीति तत्कथनं प्रतिज्ञातमिति । पक्षे नच 'यच्छ्रोत्रेण न शृणोति' इत्यादिश्रुतेः । 'सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम्' इति स्मृतेश्च कथमिन्द्रियाणां धर्मादिकर्तृकब्रह्माद्वैतरूपमोक्षव्यञ्जने निमित्तत्वमिति वाच्यम् । यद्यपि अविद्याध्वंसद्वारा ज्ञानस्यैव साक्षात्तद्व्यञ्जकत्वेऽपि 'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' इति न्यायेन धर्मादीनां चित्तशुद्ध्यादिपरम्परया तद्व्यञ्जने श्रोत्रादीनामपि द्वारत्वरूपनिमित्तत्वसंभवात् । तेनात्रोपमात्वेन प्रकृतोपयुक्तश्लेषोऽलंकारः ॥ १ ॥ किं तदिति चेत्तदुद्दिशति—**वक्तेति** । उपदेश्यः संबोध्यः 'काकुः स्त्रियां विकारो यः शोकभीत्यादिभिर्ध्वनेः' इत्यमरोक्तेः कण्ठध्वनेर्विकारः काकुः वाच्यः प्रतिपाद्यः पदार्थः । **अन्येति** । अन्यस्य तटस्थस्य वक्तृबोद्धव्येतरपुरुषस्य संनिधिर्नैकट्यम् ।

**अयि क्षीरोदपुत्रीमे मीनावेव तवेक्षणे।**
**अत एव पुरा मीनोऽप्यभूः कामोऽपि तद्ध्वजी ॥ ३ ॥**
**मयापि क्रियमाणेऽपि पादसंवाहनेऽपि वः।**
**न निद्रापगमोऽद्यापि किं कूर्मतनुसंस्कृतेः ॥ ४ ॥**

---

स्पष्टमन्यत् ॥ २ ॥ अथ क्रमेण दशभिरुदाहरणैर्दशावतारलीलाः संक्षेपतः सूचयन्प्रथमं वक्तृनिमित्तकमर्थस्य व्यञ्जकत्वमुदाहरति—**अयीति**। इदं हि भगवतः सुरतावसरे लक्ष्मीं प्रति भाषितम्। अयीति कोमलसंबोधने। तत्रेदृशस्यैवोचितत्वात्। **क्षीरोदेति**। इदं हि साभिप्रायम्। तत्र नानाविधमत्स्यानां भूरिसत्त्वादित्यर्थः। इमे तव ईक्षणे त्वदीये नयने मीनावेव। मत्स्यावेव भवत इत्यर्थः। अत्र नेत्रे उद्दिश्य तत्र श्यामत्वचपलत्वसरसत्वतदाकारत्वादिमत्स्यधर्मसत्त्वेन तत्ताविधानात्क्षीरसमुद्रोत्पन्नायास्तव युक्तमेव मीननयनात्वमिति भावः। तेनात्र भगवतो वक्तृत्ववशात्तत्सौन्दर्यवर्णनेन स्वस्य तस्यां रतिरिति ध्वनितम्। अन्यस्य वक्तृत्वे तु नोक्तव्यञ्जनसिद्धिरिति लक्षणसंगतिः। तत्रैव व्युत्पत्तिदार्ढ्यार्थमुदाहरणान्तरमप्याह—**अतएवे**त्युत्तरार्धेन। यतो मन्नेत्रयोर्मीनत्वेनातिसुन्दरत्वमस्मादेव हेतोरित्यर्थः। भो भगवंस्त्वमित्यध्याहारः। एतत्पदत्रयस्य कण्ठतोऽनुक्त्या तस्यां लज्जातिशयः प्रागल्भ्यं च द्योत्यते। पुरा कृतयुगे मीनोऽप्यभूः। परमेश्वरत्वेन स्वस्य परमार्थतो निरावरणचिद्रूपत्वेऽपि लोकदृष्ट्या मीनस्वरूपधारणेन मीनवदाचरितमित्यर्थः। अपिना मन्नेत्रेक्षणलोभाद्भवता तिर्यक्त्वमपि स्वीकृतमिति स्वस्यां धन्यत्वं ध्वनितम्। अन्यथा प्रथमं मत्स्यरूपमेव कुतो धृतं नत्वन्यरूपमपि। तेन तद्रूपस्य सुन्दरतरत्वेन मन्नेत्रयोस्तथात्वं भवदुक्तं युक्तमेवेति भावः। तत्र हेत्वन्तरमप्यस्तीत्याह—**कामोऽपीति**। मदनोऽपीत्यर्थः। अपिशब्देन तस्य भुवनसुन्दरत्वप्रसिद्धिः सूचिता। तद्ध्वजी तदङ्कितो मत्स्यचिह्नितो यो ध्वजः सोऽस्यास्तीति तथा। मत्स्याङ्कितध्वजो बभूवेत्यर्थः। एतेन स्वस्यां सौन्दर्यगर्वितात्वं व्यज्यते। किंच मीनोऽप्यभूरित्युक्त्या भवतः सर्वज्ञत्वेन मन्नेत्रयोर्मीनत्वस्य मदवाप्तेः प्रागेव ज्ञातत्वात्साजात्यं विना महति क्षीराब्धौ तदुपलब्धेर्दुर्लभत्वात्तदर्थमेव भवता तथा कृतमित्यपि सूचितम् ॥ ३ ॥ तत उपदेश्यनिमित्तकमर्थस्य व्यञ्जकत्वमुदाहरति—**मयापीति**। इदं हि निद्रोपरमेऽपि रमाविनोदार्थं निद्रामिषेण निमीलितलोचनं श्रीनारायणं प्रति तस्या वचनम्। भो भगवन्, मया त्रैलोक्यसुन्दर्या लक्ष्म्यापि। एतेन स्वस्यां तस्य सुरतोद्दीपनसामग्रीप्राचुर्यं सूचितम्। तत्रापि वः युष्माकम्। आदरार्थे बहुवचनम्। पादसंवाहनेऽपि पादयोश्चरणयोः संवाहनं स्वपाणिपद्माभ्यामभिमर्शनं तस्मिन्नपि। अनेनोक्तसामग्रीसत्त्वेऽपि तव मानिनीत्वादिसत्त्वं चेन्नित्यतृप्तस्य मम क नाम लग्न्यासक्तिरिति युक्तैव निद्रेत्युक्तिः प्रत्युक्ता। प्रत्युत संनिकर्षातिशयादुक्तसामग्रीदार्ढ्यमेव

सर्वसहा नवोढापि हिमहेमाचलस्तनी ।
अहहेति स्वभावेन वराहेणोद्धृताऽवदत् ॥ ५ ॥
त्वगादिनद्धमङ्गं मे नृहरे किं लिहस्यहो ।
दशमस्य रसस्यैवास्वादायेत्यजयद्वचः ॥ ६ ॥

ध्वनितम् । तत्रापि क्रियमाणेऽपि नतु करिष्यमाणत्वेन कथ्यमानेऽपि । एवंच परमौत्सुक्यं द्योतितम् । अद्यापि पाणिग्रहमारभ्य भूरितरकाले गते सत्यपीत्यर्थः । एतेन स्वानुरागस्य क्षणिकत्वं व्युदस्तम् । एवमपि निद्रापगमः वः इत्यत्राप्यनुकर्षणीयम् । युष्मन्निद्राविराम इत्यर्थः । कूर्मतनुसंस्कृतेः अनुपदमेव समुद्रमथने मन्दराद्रिधारणार्थं धृतकूर्मावतारसंस्कारादित्यर्थः । तज्जातेर्हि निद्राधिक्यस्य लोके प्रसिद्धत्वात् । 'निन्द्रालोः कमठाकृतेर्भगवतः श्वासानिलाः पान्तु वः' इति श्रीमद्भागवतोक्तेश्च युक्तैवेयं कल्पनेत्याशयः । नाभूत्किमिति वितर्के । तस्मादितः परं विनोदं विहाय सपदि मदीयकामपूर्तिरेव कर्तव्येति भावः । तेनात्र ध्वनितायां श्रीरतौ निमित्तमुपदेश्यो भगवानेव । अन्यथा तदसंभवादिति रहस्यम् । यथावा मदीये नीतिशतपत्रे—'तारुण्यारोपितगुणे सुन्दरीभ्रूशरासने । नम्रत्वमेव संपाद्य जगज्जयति मन्मथः' इति । अत्र रसादिकं तु काव्यसामान्योदाहरणव्याख्यानोक्तदिशा स्वयमेवोह्यम् ॥ ४ ॥ इदानीं काकुनिमित्तकमुक्तव्यञ्जकत्वमुदाहरति—**सर्वसहेति** । इदं हि साभिप्रायम् । सर्वसहनकर्तृत्वेन प्रसिद्धापीत्यर्थः । नवोढा । पृथ्व्यात्मिका नूतनोद्वाहिता दयितेत्यर्थः । एतेन वक्ष्यमाणकाकौ हेतुर्द्योतितः । वराहेण क्रोडरूपिणा विष्णुनेत्यर्थः । उद्धृतासती दन्ताग्रेणोर्ध्वीकृता सतीत्यर्थः । एवंच व्यथोत्कर्षोऽपि तत्प्रयोजक इति सूचितम् । स्वभावेन नववधूत्वप्रकृत्येत्यर्थः । अहहेत्यवदत् । निरुक्तहेतोः शोकभीत्यादिजनितध्वनिविकारात्मककाक्वाख्यधर्मान्वितानहहेति निपातसञ्ज्ञान्वर्णानकूजयदित्यर्थः । नववधूत्वमेवोपपादयंस्तां विशिनष्टि—**हिमेति** । अय भावः—यथा काचिन्नवोढा तावच्छृङ्गाररचनप्रावण्याभावाच्चाञ्चल्याच्चैकमेव स्तनं चन्दनेनालेपयति तदा तस्याश्चन्दनलेपाच्छुक्ल एकः स्तनो भात्यपरस्तु गौरत्वात्पीत एव, तद्वदियं हिमाचलस्य शुक्लत्वाद्धेमाचलस्य पीतत्वाच्चोभयोरपि परमकठिनत्वात्तत्स्तनीत्वेन युक्तैव नववधूरिति । अत्रोक्तकाक्वाख्यनिमित्तेन स्वस्यां सर्वसहात्वेऽपि तद्दन्तक्षतासहिष्णुतया सौकुमार्यं ध्वनितम् । यथावा गीतगोविन्दे—'विपुलपुलकपालिस्फीतसीत्कारमन्तर्जनितजडिमकाकुव्याकुलं व्याहरन्ती । तव कितव विधायामन्दकन्दर्पचिन्तारसजलधिनिमग्ना ध्यानलग्ना मृगाक्षी' इति ॥ ५ ॥ ततो वाक्यनिमित्तकं निरुक्तव्यञ्जकत्वमुदाहरति—**नृहरे इति** । इदं हि पूर्वार्धात्मकं हिरण्यकशिपुं हत्वा परमभक्तं प्रह्लादं स्वाङ्के संस्थाप्योपाधिनैसर्गिकत्वात्प्रेम्णा तदङ्गानि जिह्वया लिहन्तं भगवन्तं प्रति तद्वाक्यम् । अयि नृहरे, त्वं त्वगादिनद्धं त्वगादिभिश्चर्मादिभिर्धातुभिर्नद्धं निब-

**दक्षिणाशासमायातः सदा संयमनाग्रणीः ।**
**फुल्लनीलोत्पलश्यामः कामं भूमापि वामनः ॥ ७ ॥**

द्रुमित्यर्थः । एतादृशमपि मे अङ्गं शरीरं मस्तकादिगात्रमितियावत् । 'अङ्ग गात्रान्तिकोपायप्रतीकेषु प्रधानके' इति विश्वः । अहो इत्याश्चर्ये । किं लिहसि । भूयः स्वरसनया किमित्यास्वादयसीवेत्यर्थः । निरुक्तधातुमात्रमयत्वेनैतस्यात्यन्तजुगुप्सितत्वान्नेदमस्य परमप्रेम्णा गोवत्सन्यायेन लिहनं नित्यानन्दैकरसस्य लक्ष्मीविलासस्य भगवतो भवतोऽस्त्युचितमिति तात्पर्यम् । ततः श्रीनृसिंहः किं लिहसीति प्रह्लादपृष्टमुक्ताङ्गास्वादनप्रयोजनमाह—**दशमस्ये**त्यादिना । दशमस्य शृङ्गारादिनवरसापेक्षया दशमसंख्याकस्येत्यर्थः । रसस्य भक्तिसंज्ञकस्येत्यर्थः । वक्ष्यति च—'रसं भक्त्याख्यमप्याहुर्भक्ताः शाण्डिल्यवर्त्मगाः' इति । पक्षे मधुरादेरित्यर्थः । एवकारेण प्रयोजनान्तरव्युदासः । अयमाशयः—अये प्रह्लाद, यत्त्वया पृष्टं भो नृहरे, त्वगादिसप्तधातुमयं मदङ्गं कस्मै प्रयोजनाय लिहसीति, तत्रेदमुत्तरम्—तव स्थूलमपि शरीरं हृद्गतभक्त्युद्रेकात्सर्वदा रोमाञ्चादिसात्विकभाववत्त्वेन भक्तिरसमयमेवेति तदास्वादनार्थमेव तल्लिहामि न त्वन्यप्रयोजनार्थमिति । **इतीति** । निरुक्ता वाक् भगवतः प्रह्लादं प्रति प्रत्युत्तररूपा वाणीत्यर्थः । अजयत् । निखिलशब्दब्रह्मतोऽप्युत्कर्षेणावर्ततेत्यर्थः । अत्र प्रह्लादभक्तेरनुपममहिमत्वं व्यङ्ग्यम् । तच्च निरुक्तवाक्यनिमित्तकमेव ॥ ६ ॥ अथ वाच्यनिमित्तकं तदुदाहरति—**दक्षिणेति** । इदं हि शुक्रस्य बलिं प्रति सूचकं वचनम् । अयं सदा संयमनाग्रणीरपि कामं भूमापि यतः दक्षिणाशासमायातः अतः कामं फुल्लनीलोत्पलश्यामः वामनश्च बभूवेत्यन्वयः । हे बले, अयं पुरोवर्ती नतु परोक्षः, सदा निरन्तरं नतु क्षणमात्रम्, संयमनाग्रणीः संयमयन्ति नियमयन्ति इन्द्रियाणीति संयमनाः योगिनस्तेषां मध्ये अग्रणीर्मुख्य इत्यर्थः । पक्षे संयमयति शिक्षयति पापिष्ठानिति संयमनः यमस्तस्याग्रणीः पुरोवर्ती दूत इत्यर्थः । एतेन लोकदृष्ट्यायं योगीन्द्रोऽपि तव सर्वस्वापहारकत्वात्काल एवेति द्योतितम् । एवमपि कामं अत्यन्तं भूमापि । 'यो वै भूमा तत्सुखम्' इति छान्दोग्यश्रुतेः 'भूमा संप्रसादादध्युपदेशाच्च' इति शारीरकसूत्राच्च अद्वैतानन्दैकरसः परमात्मापीत्यर्थः । एतेनास्य साधनावस्थैव वर्तते नतु फलावस्थापीत्युक्तिः परास्ता । तथाच वस्तुतोऽयं परमात्मापि लीलया सगुणत्वेऽपि सकलयोगीश्वरचक्रवर्तीति निवृत्तिसामग्रीपौष्कल्यं ध्वन्यते । यतः हेतोः दक्षिणाशासमायातः दक्षिणायाः यजमानदत्तवित्तादेः या आशा भावीष्टानुसंधानात्मिका मनोवृत्तिस्तया समायातस्त्वद्यज्ञवाटं प्रति सम्यक् प्राप्तः । पक्षे दक्षिणदिक्सकाशादागत इत्यर्थः । अतः हेतोः कामं इत्युक्तार्थम् । **फुल्लेति** । विकचेन्दीवरः नीलः वामनः खर्वश्च बभूवेत्यर्थः । उक्तरूपस्यापि निरुक्ताशया कालिमा नीचता च संपन्नेति भावः । अत्रोक्तकालत्वव्यञ्जनं प्रतिपाद्य वामननिमित्तकमेव

तर्पितापि मया क्ष्मेयं क्षत्रस्त्रीनेत्रवारिभिः ।
पुनस्तद्बीजपादैः सा प्रत्यहं ताप्यते बत ॥ ८ ॥
स्वहन्तुश्चापि निर्भङ्गं विज्ञायैव स्मरोऽकरोत् ।
सीताभ्रूधनुषी कोटिगुणसाम्राज्यशालिनी ॥ ९ ॥
माकन्दगन्धमाधुर्यं मिलिन्दानन्दमन्दिरम् ।
कलिन्दनन्दिनीमन्दानिलं वृन्दावनं हरे ॥ १० ॥

---

तस्मात्त्वयास्मै न किमपि देयमित्याशयः । वित्ताशा हि महतोऽपि लाघवहेतुरिति तत्प्रागभावपरिपालकं तदेव रक्षणीयमिति ॥ ७ ॥ एवमन्यसंनिधिनिमित्तकं तदुदाहरति—**तर्पितेति** । इदं तु दिग्विजयमेकविंशतिवारं भूमेः क्षत्रशून्यत्वकरणेन संपाद्य क्वचिद्रत्नाकरतीरे मध्याह्ने स्थितस्य परशुरामस्य कंचिन्निकटवर्तिनं मुनिं प्रति भाषितम् । भो मुनीन्द्र, मया महामहिम्ना भार्गवरामेण । एतेन गर्वातिशयः सूचितः । इयं प्रत्यक्षक्ष्मा पृथ्वी क्षत्रस्त्रीनेत्रवारिभिः यावत्क्षत्रियदयिताश्रुभिः तर्पितापि तृप्तिं नीतापि। शीतलीकृतापीत्यर्थः। बतेति खेदे । सा पूर्वोक्तविशेषणविशिष्टा पृथ्वी तद्बीजपादैः तस्य क्षत्रियकुलस्य यद्बीजं सूर्याख्यं निदानं तस्य पादैः किरणैः । अत्र पादपदात्परमासह्यत्वं ध्वनितम् । पुनः अनन्तरं प्रत्यहं नतु क्षणमात्रं ताप्यते । संतप्तीक्रियत इत्यर्थः । तस्मादनेन भानुना सावधानेन भाव्यमिति भावः । अत्रान्यस्य सूर्याभितप्तभूभागाभिधस्य तटस्थस्य संनिधानादितः परं तं प्रति स्वरोषविषयत्वं द्योतितम् ॥ ८ ॥ ततः प्रकरणनिमित्तकं तदुदाहरति—**स्वहन्तुरिति** । स्मरः कामः स्वहन्तुः मदनान्तकस्य शम्भोरित्यर्थः । चापनिर्भङ्गं कोदण्डखण्डनं विज्ञायैव ज्ञात्वैव । अत्रैवकारेण रामस्य स्वशत्रोरपि धनुर्भञ्जकत्वेनात्यन्तमजय्यत्वात्तदुपेक्षानर्हत्वेन तज्जयसामग्रीसंपादनप्रवृत्तौ कामे द्रुतत्वं व्यज्यते । सीताभ्रूधनुषी जानकीभ्रुकुटिद्वयसूचकं द्विवचनम् । **कोटीति** । कोटयः असंख्या ये गुणाः परमोल्लासेनोच्चत्वादयः प्रमोदाद्यवद्योतकास्तैर्यत्साम्राज्यं सर्वाधिक्यं तेन शालिनी शोभमाने इत्यर्थः । पक्षे कोटीस्तदग्रभागान्प्राप्तौ यौ गुणौ प्रत्यञ्चे ताभ्यां यत्साम्राज्यं तेन शालिनी इत्यर्थः । एतादृशे अकरोच्चकारेत्यर्थः । अत्र सीतायाः श्रीरामविषयकरतिव्यञ्जकप्रमोदः प्रकरणेन ध्वन्यते ॥ ९ ॥ अथ देशनिमित्तकं तदुदाहरति—**माकन्देति** । इदं हि श्रीकृष्णं प्रति राधिकावाक्यम् । हे हरे, इदं वृन्दावनं संप्रति माकन्दगन्धमाधुर्यं माकन्दानामाम्राणां यो गन्धः तत्कुसुमगन्धस्तेन माधुर्यं यस्मिंस्तत् । आम्रसौरभ्यरम्यमित्यर्थः । आम्रकुसुमसौरभ्यस्यापि मिष्टत्वेन तत्संपर्कादुक्तवनस्यापि तथात्वमिति तात्पर्यम् । अतएव मिलिन्दानन्दमदिरं मिलिन्दाः भ्रमरास्तेषां य आनन्दः हर्षस्तस्य मन्दिरं स्थानमित्यर्थः । एवं चोक्तविशेषणाभ्यां पार्थिवशोभाभरो ध्वनितः । अथाप्यं वायवीयं च तमाह—**कलिन्देति** । कलिन्दनामा कश्चित्पर्वतः तस्य नन्दिनी यमुना तत्संबन्धी यः मन्दानिलः

**अद्य जिज्ञासुभिर्ब्रह्मध्यानमेव निषेव्यताम् ।**
**इति दर्शयितुं नूनं बुद्धो योगीश्वरोऽभवत् ॥ ११ ॥**
**इतो म्लेच्छोच्छलद्रक्तसिक्तं दिग्दन्तिमण्डलम् ।**
**इति नन्दकनिर्देशोऽवतादविरतं सतः ॥ १२ ॥**

---

मन्थरसमीरः स यत्रेति तथा । एतादृशमस्तीति शेषः । तस्मादिदं वसन्तैकान्तादिनिखिलोद्दीपनविभावसामग्रीयुक्तत्वेनातिरमणीयं विलासस्थलमतोऽत्र रमस्व मया सहाधुनेति भावः । अत्र हरे इति संबोधनान्मन्मथव्यथाहरणनिपुणत्वं ध्वनितम् । तथा मिलिन्देति पदेन भ्रमरवत्त्वापि कृष्णत्वात्त्वत्सुखनिदानमिदं स्थानमिति सूचितम् । एवं कलिन्दनन्दिनीपदेनापि तद्वद्वृषभानुनन्दिन्याः मम संबन्धि मन्दानिलतुल्यसंचारचारुतरमित्यतोऽपि तथास्तीति द्योतितम् । तेनाहं पितृगृहवासिन्येव संप्रत्यस्मि नतु श्वशुरगृहवासिनीति यथेच्छक्रीडायामवसरबाहुल्यं व्यज्यते । अत्र देशनिमित्तकमेवेदं राधोत्कण्ठाव्यञ्जनमिति हृदयम् । यथावा काव्यप्रकाशे—'उद्देशोऽयं सरसकदलीश्रेणिशोभातिशायी कुञ्जोत्कर्षाङ्कुरितरमणीविभ्रमो नर्मदायाः । किंचैतस्मिन्सुरतसुहृदस्तन्वि ते वान्ति वाता एषामग्रेसरति कलिताकाण्डकोपो मनोभूः'इति ॥ १० ॥ ततः कालनिमित्तकं तदुदाहरति—**अद्येति** । कलियुगे इत्यर्थः । जिज्ञासुभिरद्वैतात्मतत्त्वं ज्ञातुमिच्छुभिर्मुमुक्षुभिरिति यावत् । ब्रह्मध्यानमेव ब्रह्मणः सच्चिदानन्दाद्वैतात्मवस्तुनः ध्यानं तत्र 'प्रत्ययैकतानता ध्यानम्' इति पातञ्जलसूत्रोक्तलक्षणमुक्तलक्षणे ब्रह्मणि विजातीयप्रत्ययशून्यसजातीयप्रत्ययप्रवाहीकरणमेवेत्यर्थः । अवधारणमत्र 'पार्थ एव धनुर्धरः' इत्यादिवदन्ययोगव्यवच्छेदकमेव । तेन कर्मादिसाधनान्तरप्रत्याख्यानं फलितम् । निषेव्यतां नितरां सेवनीयमित्यर्थः । कलौ द्रव्यादिशुद्ध्यसंभवेनाग्निहोत्रादिकर्मणां साङ्गत्वासंभवात्तत्त्वानुसंधानमेव मुमुक्षुभिः सर्वदा कर्तव्यमिति भावः । नूनं निश्चितम् । बुद्धः बुद्धावतारः योगीश्वरः योगीन्द्रः तस्योक्तरूपत्वेन योगसाधने स्वप्रयोजनाभावेऽपि लोकानुग्रहार्थमेव स्वयं तथानुष्ठानपरो बभूवेति भावः । तस्मात्कलावद्याद्वैतात्मचिंतनं विना नान्या गतिरिति कालरूपनिमित्तेन व्यज्यते । नच कृतादावप्येतदेव जिज्ञासूनां साधनमिति वाच्यम् । 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इति 'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' इतिच श्रुतिसूत्राभ्यां कर्मादेर्विहितत्वेन तदानीमुक्तध्यानादिसद्भावेन तेषां साङ्गत्वसंभवात् । तस्माद्युक्तमेवोक्तध्यानं संप्रतीति दिक् ॥ ११ ॥ इदानीं चेष्टानिमित्तकं तदुदाहरति—**इत इति** । इदं हि भगवन्, इतः परं कलावत्र परमोन्मत्तानां सर्वत्र प्रसृतानां म्लेच्छानां कथं क्षयो भविष्यतीति पृच्छन्तं कंचिन्नारदायन्यतमभक्तं प्रति भगवतो वचनम् । भो भक्त, म्लेच्छोच्छलद्रक्तसिक्तं दिग्दन्तिमण्डलं इतः भविष्यति इति नन्दकनिर्देशः । सतः अविरतं अवतादिति संबन्धः । म्लेच्छानां यवनादीनां

**गोक्षीराब्धेः शिवगुरुविबुधसहायोऽच्युतः समुद्दध्रे ।**
**अर्थव्यक्तिनिमित्तं तृतीयमिदमिन्दिराह्वयं रत्नम् ॥ १३ ॥**

## इति तृतीयरत्नं समाप्तम्।

---

उच्छलत् शस्त्रप्रहारेण युद्धे शिरश्छेदादिकाले उद्गमत् यद्रक्तं रुधिरं तेन सिक्तं सिञ्चितं एतादृश दिशां प्राच्याद्यष्टहरितां ये दन्तिनः ऐरावतादयो गजास्तेषां मण्डलं चक्रवालमित्यर्थः । इतः अनेन पुरोवर्तिना खड्गविशेषेणेत्यर्थः । भविष्यति स्यात् इति निरुक्तप्रकरेण नन्दकनिर्देशः।'शङ्खो लक्ष्मीपतेः पाञ्चजन्यश्चक्रं सुदर्शनम् । कौमोदकी गदा खड्गो नन्दकः' इत्यमरोक्तेर्नन्दकाख्यस्य खड्गस्य निर्देशः कराङ्गुल्या प्रदर्शनं स तावत् अविरतं निरन्तरं सतः साधून् अवताद्रक्षत्वित्यर्थः । अनेन नन्दकेनाहं शीघ्रमेव म्लेच्छान्निर्मूलयिष्यामीति प्रतिज्ञापुरःसरं कराङ्गुल्या निकटवर्तिनन्दकनिदर्शकः परमेश्वरकर्तृकश्चेष्टाविशेषः पण्डितान् सर्वदा पालिति कविकर्तृकमाशीःप्रार्थनं मङ्गलार्थमेव प्रकरणसमाप्तावस्तीति तत्त्वम्।अत्र म्लेच्छोच्छेदने भगवता कालान्तरे कल्क्यवतारेण विधास्यमाने शीघ्रत्वप्रतिज्ञया सांप्रतं पृच्छकभक्ताश्वासनव्यञ्जनं तावदितःपदद्योतितचेष्टानिमित्तकमेव बोध्यम् । किंच अयि क्षीरोदपुत्रि, मे इत्यादिषु दशसु वक्त्राद्युदाहरणेषु क्रमेण 'शृङ्गारः करुणो भीतिर्भक्तिरद्भुत एव च । रौद्रो वीरश्च हासश्च शान्तो बीभत्स इत्यमी' । इति दश रसा ज्ञेयाः। यथावा काव्यप्रकाशे-'मुखं विकसितस्मितं वशितवक्रिम प्रेक्षितं समुच्छलितविभ्रमा गतिरपास्तसस्था मतिः । उरो मुकुलितस्तनं जघनमंसबन्धोद्धुरं[1] बतेन्दुवदनातनौ तरुणिमोद्गमो मोदते' इति ।'द्वारोपान्तनिरन्तरे मयि तया सौन्दर्यसारश्रिया प्रोल्लास्योरुयुगं परस्परसमासक्तं समासादितम् । आनीतं पुरतः शिरोंशुकमधः क्षिप्ते चले लोचने वाचस्तत्र निवारितं प्रसरणं संकोचिते दोर्लते'। इतिच। किंचात्र प्रत्येकं शक्यादीनां त्रयाणामप्यर्थानां व्यञ्जकत्वमूह्यमिति । एवं वक्तृबोद्धव्यवैशिष्ट्यादिभेदभिन्नानि यद्यप्यनेकानि सन्ति निमित्तान्तराणि तथाप्यनतिप्रयोजकत्वाद्गौरवभयाच्च नोदाहृतानि । अपिचोक्तवक्त्राद्युदारहणेषु क्वचिदन्योदाहरणतापि सभवेत्तथापि स्वारसिकाप्राधान्यादेव तत्तदुदाहरणत्वाभिधानमिति रहस्यम् ॥१२॥

उपसंहरति—**गोक्षीरेति । अर्थेति** । अर्थैः शक्याद्यैर्या व्यक्तिर्व्यञ्जना तस्याः निमित्तानि यस्मिंस्तत्। पक्षे अर्थो धनं तस्य व्यक्तौ प्राकट्ये निमित्तम् । **इन्दिरेति** । इन्दिरा लक्ष्मीरिति आह्वयः नाम यस्य तत्तथा । शेषं त्वतिरोहितार्थम् ॥ १३ ॥

इति स्वकृतसहित्यसारव्याख्यायां सरसामोदसमाख्यायां तृतीयप्रकरणं संपूर्णम् ।

---

1 अंसबन्धेन अवयवानां दृढबन्धेन उद्धुरं विलक्षणरतियोग्यम् । यद्वांसबन्धो रतिबन्धविशेषस्तत्र योग्यमिति काव्यप्रदीपोद्योतकाराः ।

# दक्षिणावर्तकम्बुरत्नम्ः ४

**प्रासङ्गिकं समाप्यैवं ध्वनिभेदानथ ब्रुवे ।**
**सरसैः पदविन्यासैरुपागम इव श्रियः ॥ १ ॥**

पूर्वप्रकरणेन सहास्य सांगत्यमाह—**प्रासङ्गिकमिति** । अहमित्यध्याहार्यम् । श्रियः लक्ष्म्याः उपागम इव उप विष्णुसमिपे आगमः विलासार्थमागमनं तद्वदित्यर्थः । पक्षे वसनभूषणादिरचनप्रकारेणेतियावत् । प्रासङ्गिकं प्रसङ्गे भवं प्रासङ्गिकम् । स्मृतस्योपेक्षानर्हत्वलक्षणप्रसङ्गप्राप्तमित्यर्थः । समाप्य समाप्तिं नीत्वेत्यर्थः। तथाहि प्रकरणे तावत्काव्यस्य प्रयोजनं लक्षणं स्वरूपभेदो हेतुश्च सोदाहरणमुक्तस्तत्र तल्लक्षणे निर्दोषशब्दार्थगुणवत्त्वोपक्षेपाच्छब्दार्थस्वरूपेण स्मृतं तद्विवरणंद्वितीयप्रकरणे प्रपञ्चितं, तत्र शक्यायर्थानामपि व्यञ्जकत्वमभिहितं, तत्र निमित्तजिज्ञासायां तानि सोदाहरणं तृतीयप्रकरणे कथितानीति प्रथमप्रकरणोत्तरं मध्ये यत्प्रसङ्गप्राप्तमर्थजातं तत्परिसमाप्येति भावः । पक्षे प्रकृष्टः प्राथमिकत्वेन निरुपमो यः सङ्गो भगवत्सुरतप्रसङ्गः तत्र योग्यत्वेन भवं स्वशरीरालंकरणं समाप्य सम्यक्संपाद्येत्यर्थः । अथ अव्ययानामनेकार्थत्वेन प्रतिबन्धकीभूतशिष्यजिज्ञासानिवृत्तौ सत्यामवश्यवक्तव्यत्वमवसर इति तर्कप्रकाशोक्तावसरसङ्गत्येत्यर्थः । एवंच तत्र निर्दोषेति पूर्वं कृते काव्यलक्षणे तदुत्तरं तद्भेदा एव वक्तव्याः परंतु तत्र प्रतिबन्धकीभूताः के ते शब्दादय इति कथंवा तेषां व्यञ्जकत्वं कानिच तत्र निमित्तानीति शिष्यजिज्ञासा जाता तन्निवृत्तौ सत्यामिति यावत् । अनन्तरं ध्वनिभेदान् ध्वनिसंज्ञकोत्तमोत्तमत्वेन प्रथमप्रकरणोक्तस्य काव्यस्य भेदानित्यर्थः । पक्षे मञ्जीरमञ्जुशिञ्जितभेदानितियावत् । सरसैः शृङ्गारादिरसयुक्तैः, पक्षे गजवत् समदं मन्दं च हंसवत्सविलासं सोल्लासं च गतिवशादालम्बनोद्दीपनविभावात्मा यः शृङ्गाराख्यो रसस्तेन सहितैरित्यर्थः । एतेनात्र रसविचारप्राचुर्यं, पक्षे लक्ष्म्यां निरुपमचातुर्यं सूचितम् । एतादृशैः पदविन्यासैः सुबन्तादिपदरचनैः, पक्षे पदयोश्चरणयोर्ये विन्यासाः स्थापनविशेषास्तैरित्यर्थः । ब्रुवे वच्मीत्यर्थः । नचेदं शृङ्गारालम्बनविभावादेरपि शृङ्गारत्वकथमनुचितमिति शङ्क्यम् । तस्य तद्धेतुत्वेन लाङ्गलं जीवनमिति तद्युक्ततमत्वात् । किंचात्र ग्रन्थकृता स्वस्य लक्ष्म्युपागमोपमानप्रदानाद्गर्विते एवायमितिचेन्न । एवं चेत्तेनाहंपदविन्यासो मूले किमिति न कृत इति प्रश्नसंभवात् । तस्मात्तदप्रयोगात्प्रत्युतामानित्वमेव । तेन स्वस्मिन् ध्वनितमिति ध्येयम् । लक्ष्म्युपागमोपमानप्रदानं तु प्राक्तनप्रकरणस्येन्दिराख्यरत्नत्वाभिधानात्काव्यगुणावहमेव । शब्दादिविचारस्य तत्प्रासङ्गिकस्य च पूर्वप्रकरणयोः सिद्धत्वादधुना काव्यलक्षणानुसारेण दोषादिनिरूपणावसर एव तथापि धर्मिज्ञानायैवं । अत्रोपमानध्वनितः शृङ्गारो रसः । उपमालंकारः । गुणादिकं तूक्तदिशा स्वयमेवोह्यम् ॥ १ ॥ ननु कोऽसौ ध्वनिरित्याकाङ्क्षायां प्रथमप्रकरणोक्तत्वेन

उत्तमोत्तमकाव्याख्यो यो ध्वनिः प्रागुदाहृतः ।
असंख्यातोऽप्यसौ शक्तिलक्षणामूलतो द्विधा ॥ २ ॥
यत्रान्यपरमेवेष्टं वाच्यं स प्रथमो मतः ।
अविवक्षितवाच्याख्यो द्वितीयोऽपि विपश्चिताम् ॥ ३ ॥
रसो वस्त्वप्यलंकार इति भेदात्त्रिधादिमः ।
तत्रालक्ष्यक्रमव्यङ्ग्यो रससंज्ञो ध्वनिर्भवेत् ॥ ४ ॥
वस्त्वलंकारसंज्ञौ तु लक्ष्यव्यङ्ग्यक्रमौ मतौ ।
शब्दार्थशक्तिमूलत्वभेदात्तौ द्विविधौ पुनः ॥ ५ ॥

---

तं स्मारयति—**उत्तमोत्तमेति** । ननु तस्य तु त्वया तत्रैव नानाभेयुत्तमोत्तममित्यनेनासंख्यत्वप्रतिज्ञानात्कथमधुना तद्भेदकथनप्रतिज्ञानं युज्यत इत्यत आह—**असंख्यातोऽपीति** । अपिना व्युत्पत्तिसौकर्याय केषांचिदेव तद्भेदानामथ कथनं प्रतिज्ञातं नतु निखिलानामपीति स्वाशयः सूचितः । नन्वेवमपि न निस्तारः कतिपयानां तद्भेदानां तु प्रागेव द्वितीयप्रकरणे अभिधालक्षणामूलत्वभिदासौ द्विधा यथेत्यादिना व्यञ्जनादिभेदोक्त्याभिहितत्वादितिचेन्न । विशेषविधानार्थं तयोरेवात्रानूद्यत्वादित्याशयेन शक्तीति ॥ २ ॥ एवं प्रतिज्ञातध्वनिभेदान्वक्तुं तमनूद्य तद्वैविध्यं कथितम् । अधुना द्विविधस्यापि तस्य क्रमेण तान्त्रिकं संज्ञान्तरमाह—**यत्रेति** । प्रथमः शक्तिमूलो ध्वनिः । इष्टं वक्तुमिष्टम् । अन्यपरं व्यङ्ग्यनिष्ठं वाच्य वाच्यार्थजातं यत्र स तथा । **अविवक्षितेति** । अविवक्षितं वक्तुमनिष्टं वाच्यं यत्र सा आख्या संज्ञा यस्य स तथेत्यर्थः । एतादृशः द्वितीयोऽपि लक्षणामूलध्वनिरपि विपश्चितां पूर्वाचार्याणां मतः संमतोऽस्तीत्यन्वयः । तदुक्तं काव्यप्रकाशकारिकाकारैः—'विवक्षितं चान्यपरं वाच्यं यत्रापरस्तु सः' इति । 'अविवक्षितवाच्यो यः' इति च एतत्संज्ञाद्वयं क्रमादभिधालक्षणामूलध्वन्योरेवेति तट्टीकादावेव स्पष्टम् ॥ ३ ॥ तत्रापि शक्तिमूलस्य विवक्षितान्यपरवाच्याख्यस्य ध्वनेः पुनस्त्रैविध्यं रसादिभेदाद्विधत्ते—**रस इति** । तदुक्तं रसगङ्गाधरे—'द्विविधो ध्वनिरभिधामूलो लक्षणामूलश्च । तत्राद्यस्त्रिविधो रसवस्त्वलंकारध्वनिभेदात्' इति । तत्र शक्तिमूलस्य विवक्षितान्यपरवाच्याख्यस्य रसध्वनेः प्राग्वदेव तान्त्रिकीं संज्ञां विधत्ते—**तत्रेति । अलक्ष्येति** । न लक्ष्यत इत्यलक्ष्यः अज्ञेयः क्रमो यस्य एवंरूपो व्यङ्ग्यो यत्र स तथा । अयं भावः—विभावानुभावव्यभिचारिभावैः परिपुष्टः स्थायीभाव एव रस इत्यस्ति क्रमः । उक्तं हि—'व्यक्तः स तैर्विभावाद्यैः स्थायीभावो रसः स्मृतः' इति । परंतु स यत्र काव्ये व्यज्यमानस्य रसस्य परिपोषात्कार्यकारणयोर्भेदावभासावभावान्नैवानुभूयते स्पष्टतरं तादृशस्य रसध्वन्याह्वयस्य काव्यस्यालक्ष्यक्रमव्यङ्ग्य इति संज्ञा यौगिक्यन्वर्थिकैवेति ॥ ४ ॥ एवं वस्त्वलंकाराख्ययोः शक्तिमूलयोर्विवक्षितान्यपरवाच्ययोर्ध्वन्योरपि तद्विपरीतां संज्ञां विधत्ते—**वस्त्विति** । लक्ष्यः व्यङ्ग्यस्य रसस्यापरिपोषात्क्रमः कार्य-

द्विधान्त्योऽर्थांतरे वाच्यसंक्रमाच्च तिरस्कृतेः।
इत्येते सप्त सामान्या ध्वनिभेदाः स्वरा इव ॥ ६ ॥
सीतारामौ समुद्वाहे स्वेदाम्बुकणिकान्वितौ।
किंचित्तरङ्गितापाङ्गौ रत्यनङ्गाविवेङ्गतः ॥ ७ ॥

---

कारणभावक्रमो ययोस्तौ तथेत्यर्थः। तदुक्तं काव्यप्रकाशकारिकाकारैः—'कोऽप्यलक्ष्यक्रमव्यङ्ग्यो लक्ष्यव्यङ्ग्यक्रमः. परः' इति। विवृतं चैवमेव तट्टीकादौ रसगङ्गाधरे चापि। विस्तरभयात्तु मयात्र दिङ्मात्रमेवोदाह्रियत इति। तत्रापि पुनरिमौ शक्तिमूलौ विवक्षितान्यपरवाच्याख्यौ लक्ष्यव्यङ्ग्यक्रमसंज्ञौ वस्त्वलंकाराभिधौ ध्वनी शब्दार्थशक्तिमूलत्वभेदेन द्विविधावित्याह—**शब्दार्थेति**। तदुक्तं रसगङ्गाधरे—'अर्थसंलक्ष्यक्रमध्वनिर्निरूप्यते। स च तावद्द्विविधः। शब्दशक्तिमूलोऽर्थशक्तिमूलश्चेति' इति ॥ ५ ॥ एवं क्रमप्राप्तस्याविवक्षितवाच्याख्यस्य लक्षणामूलध्वनेरपि द्वैविध्यं विधत्ते। अन्त्यः लक्षणामूलः। तदुक्तं काव्यप्रकाशकारिकासु—'तत्र वाच्यं भवेद्ध्वनौ। अर्थान्तरे संक्रमितमत्यन्तं वा तिरस्कृतम्' इति तिरस्कृतेर्वाच्यात्यन्ततिरस्कारादित्यर्थः। तदयं संग्रहः—'शक्तिमूलो विवक्षितान्यपरवाच्योऽलक्ष्यक्रमव्यङ्ग्यो रसध्वनिः ॥ १ ॥, शक्तिमूलो विवक्षितान्यपरवाच्योऽपि शब्दशक्तिमूलो लक्ष्यव्यङ्ग्यक्रमो वस्तुध्वनिः ॥ २ ॥, शक्तिमूलो विवक्षितान्यपरवाच्यो लक्ष्यव्यङ्ग्यक्रमोऽर्थशक्तिमूलो वस्तुध्वनिः ॥ ३ ॥, शक्तिमूलो विवक्षितान्यपरवाच्योऽपि शब्दैकशक्तिमूलो लक्ष्यव्यङ्ग्यक्रमोऽलंकारध्वनिः ॥ ४ ॥, शक्तिमूलो विवक्षितान्यपरवाच्योऽप्यर्थैकशक्तिमूलो लक्ष्यव्यङ्ग्यक्रमोऽलंकारध्वनिः ॥ ५ ॥, लक्षणामूलो विवक्षितवाच्यत्वेनार्थान्तरसंक्रमितवाच्यो ध्वनिः ॥ ६ ॥, लक्षणामूलोऽविवक्षितवाच्यत्वेनात्यन्ततिरस्कृतवाच्यो ध्वनिरिति ॥ ७ ॥, उपसंहरति—**इतीति**। स्वरा निषादाद्याः ॥ ६ ॥ एतेषां सप्तानामपि ध्वनीनां क्रमेणोदाहरणान्याह। सप्तकाण्डरामायणार्थमपि संक्षेपतः कथयन् **सीतारामावि**त्यादिसप्तभिः। तत्रेदं शक्तिमूलस्य विवक्षितान्यपरवाच्यस्यालक्ष्यक्रमव्यङ्ग्यस्य रसध्वनेरुदाहरणम्। सीतारामौ जानकीजगन्निवासौ समुद्वाहे 'विवाहोपयमौ समौ। तथा परिणयोद्वाहोपयामाः पाणिपीडनम्' इत्यमरोक्तेर्विवाह इत्यर्थः। सम्यक्त्वं च सर्वसद्गुणपूर्णत्वमेव। अतएव किंचित्तरङ्गितापाङ्गौ किंचित् ईषत्। एतेनोभयोरपि कुलीनत्वाल्लज्जातिशयो व्यज्यते। संजातास्तरङ्गा इव कनीनिकासंचारेण तरङ्गा येषु तादृशा अपाङ्गाः नेत्रान्ताः ययोस्तौ स्वल्पं परस्परं कटाक्षशालिनावित्यर्थः। एतेन अन्योन्यसौन्दर्यरागात्सादरावलोकनाभिलाषो ध्वनितः। अतएव स्वेदाम्बुकणिकाञ्चितौ स्वेदो घर्मस्तत्संज्ञकं यदम्बु उदकं तस्य याः कणिकाइव कणिकाः सूक्ष्मबिन्दवस्तैरञ्चितौ। पूजितावित्यर्थः। उद्वाहे तावदक्षतारोपणं प्रसिद्धमेव। एतयोस्तु पाणिग्रहणात्प्रागेवान्तःपटापसारणक्षणे घर्मजलमौक्तिककणिकाभिरेव तत्संपन्नमित्यञ्चितपदेन द्योतितम्। एतादृशौ सन्तौ रत्यनङ्गा-

**वनं गन्तुं समुद्युक्तं पतिं जनकनन्दिनी ।**
**कटाक्षैः पूजयामास नीलोत्पलदलैरिव ॥ ८ ॥**

विव रतिमदनाविव इङ्गतः परस्परं मन्दस्मितादिचेष्टां कुर्वाते इत्यर्थः । अयंभावः—सीतायास्तावद्भगवतो रामचन्द्रस्य प्राथमिकदर्शनवशादुभयोः सौन्दर्योत्कर्षाच्च सादरावलोकनेच्छायां सत्यामपि लज्जापारवश्यादन्तःपटापसारणोत्तरमेव किंचित्कटाक्षच्छटाभिरन्योन्यमवलोक्य 'स्तम्भः' खेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः । वैवर्ण्यमश्रुप्रलय इत्यष्टौ सात्विकाः स्मृताः' इति रसतरङ्गिणीकारोदाहृतभरतवचनोक्तखेदाख्यसात्विकभावसंपन्नौ सन्तौ श्रीसीतारामाख्यौ दंपती रतिस्मरवद्दरस्मेरं कुरुत इति । अत्र रतिस्मरयोरुपमानं तु निरुक्तकाले निरुक्तव्यापारकरण एव न तु सौन्दर्यांशेऽपि । तेनानयोर्लोकोत्तरसुन्दरत्वं सूचितम् । एवंचात्र सीतारामाख्यालम्बनविभावेन परिणयाख्योद्दीपनविभावेन खेदाख्यसात्विकभावेन किंचित्पदद्योतितव्रीडाख्यव्यभिचारिभावेन तरङ्गितेति कटाक्षानुभावेन च परिपुष्टो रतीत्यादिना स्मितादिचेष्टाविशेषांशोपमानेन ध्वनितो रत्याख्यः स्थायीभाव एव शृङ्गाररसः सूचितः । तस्मान्निरुक्तरसध्वनेर्निरुक्तसीतादिशब्दशक्तिमूलत्वाद्वाच्यार्थानां सर्वेषामत्रोक्तव्यङ्ग्यार्थमात्रपरत्वेन विवक्षितत्वादुक्तविभावादीनां व्यञ्जकानां तथा व्यङ्ग्यस्योक्तरसस्यात्र पौर्वापर्यक्रमसत्त्वेऽपि तस्य कालसौक्ष्म्यादिना दुर्लक्ष्यत्वेनालक्ष्यक्रमव्यङ्ग्यत्वादुदाहृतपद्ये निरुक्तरसध्वनित्वलक्षणसमन्वयः । किंचेह वाच्यार्थापेक्षया निरुक्तव्यङ्ग्यस्यैव चतुरचमत्कारकारित्वेन प्राधान्यात्प्रागुक्तलक्षणोत्तमोत्तमकाव्याख्यध्वनित्वं बोध्यमिति दिक् । उत्सुकावेवात्र नायिकानायकौ । संभोगः शृङ्गारः । पूर्णोपमाहेतुपरिकरादयोऽलंकाराः ॥ ७ ॥ अथ तमेव वस्तुध्वनित्वेन लक्ष्यक्रमव्यङ्ग्यं तत्रापि शब्दशक्तिमूलमुदाहरति—**वनमिति** । जनकनन्दिनीति साभिप्रायम् । जनकं विदेहं नन्दयतीति तथा । 'अभयं वै जनक प्राप्तोसि' इति श्रुतेः श्रीमद्याज्ञवल्क्याख्ययोगीन्द्रचक्रवर्तिचूडामणेः सकाशादभिजाततत्त्वविद्योऽपि सीरध्वजाख्यः पिता यामेव दुहितरं प्राप्यानन्दी भवति सा वैदेहीत्यर्थः । एतेन शीलपौष्कल्यं ध्वन्यते । अतएव वनं गन्तुं समुद्युक्तं पितृप्रतिज्ञापरिपालनार्थं भरताय राज्यं दत्वा दण्डकारण्यमभिजिगमिषुमित्यर्थः । एतादृशं पतिं 'धवः पतिः प्रियो भर्ता' इत्यमरात्स्वप्रियं श्रीराममित्यर्थः । कटाक्षैः तिर्यगवलोकनैः, नतु मा विहाय कथं गच्छसीति रोषात्संमुखं क्रूरदृष्ट्येति भावः । तत्रापि नीलोत्पलदलैरिव पूजयामास नतु केवलं व्यलोकयदित्यर्थः । वनं प्रति प्रस्थानावसरे मङ्गलार्थं पूजनस्यौचित्यात्कटाक्षाणां च सरसत्वकोमलत्वनीलकान्तिमत्त्वादिसाधर्म्येण नीलोत्पलदलतुल्यत्वाच्च युक्तैव निरुक्तोत्प्रेक्षेति तात्पर्यम् । अत्र यदि श्रीमद्भिर्वनं प्रति गम्यते तर्ह्यहमपि दास्यनुयातुमाज्ञाप्येति वस्तु ध्वनितम् । तत्रोक्तव्यङ्ग्ये कटाक्षनिष्ठकारणतानिरूपितकार्यतालक्षणः क्रमः सहृदयैः स्पष्टं लक्ष्यत एवेति लक्ष्यक्रमव्यङ्ग्येति तथा कटाक्षैरिति बहुवचनान्तकटाक्षपदाद्भूय-

**खरदूषणसंहर्ता वैदेहीप्राणवल्लभः ।**
**सुमित्रानन्दनानन्दी सदा रामो मुदावतु ॥ ९ ॥**

त्वसूचनेन पूजेति पदादादरातिशयव्यञ्जनेन च शब्दशक्तिमूलत्वमपि बोध्यम् । शेषं तु प्राग्वदेवोह्यम् । अत्र विरहकातरा नायिका । उदासीनो नायकः । विप्रलम्भः शृङ्गारः। उत्प्रेक्षापरिकरपरिकराङ्कुरादयोऽलंकाराः ॥ ८ ॥ एवं अर्थशक्तिमूलं तमुदाहरति—**खरेति** । खरदूषणाभिधयोः प्रसिद्धयोः राक्षसयोः संहर्ता विध्वंसक इत्यर्थः । पक्षे रलयोः सावर्ण्यात्खलाः सर्वेऽपि भेदवादिनस्तत्कृतानि यानि दूषणानि 'द्वैतं सत्यं कार्यकारित्वात् व्यतिरेके वन्ध्यासुतवत्' इत्यादिरूपाणि तेषां संहर्ता 'द्वैतं मिथ्या दृश्यत्वान्मृगजलवत्' इत्यादिभिर्वोक्तहेतोः सत्प्रतिपक्षत्वापादकादियुक्तिसहस्रैर्निवारक इत्यर्थः । एतेनाधर्मप्रवर्तकनाशकत्वाद्धर्मप्रतिष्ठापकत्वोक्त्या श्रीरामे धर्माख्यपुरुषार्थदातृत्वं ध्वनितम् । **वैदेहीति** । वैदेही जानकी प्राणवत् वल्लभा प्रिया यस्य, यद्वा वैदेह्याः सीतायाः प्राण इव वल्लभः प्रेयानित्यर्थः । पक्षे विदेहस्य देहभानशून्यस्य सप्तमीं भूमिकां प्राप्तस्य योगिनः इयं वैदेही तुरीयावस्था सा प्राणवल्लभा प्राणवत्प्रेयसी यस्येत्यर्थः । एवंचानेन कामाख्यपुरुषार्थप्रदत्वं सूचितम् । **सुमित्रेति** । सुमित्रानन्दनो लक्ष्मणः तेन आनन्दी । प्रमोदशालीत्यर्थः । पक्षे सुमित्राणि प्रियसुहृदः अनन्दनाः न नन्दयन्ति ते अनन्दनाः अतोषकाः शत्रव इति यावत् । सुमित्राणि च अनन्दनाश्चेति द्वन्द्वः । तेष्वानन्दी 'सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु । साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते' इति स्मृतेः । सुहृदादिसर्वत्र ब्रह्माद्वैतदृष्ट्यैवानन्दी 'रसं ह्येवायं लब्ध्वानन्दी भवति' इति श्रुतेर्ब्रह्मानन्दवानित्यर्थः । एतेनार्थसंज्ञकपुरुषार्थवितरणप्रवीणत्वं द्योतितम् । तद्यथा कलहप्रागभावपरिपालकैक्याधीना हि निखिलार्थसंपत्तिरिति प्रसिद्धमेव । तदत्र सुमित्रानन्दनपदध्वनितसापत्नबन्धुना सह्यप्यैक्यावबोधकानन्दित्वोक्त्या, पक्षे शत्रुमित्रयोः साम्यभावेन सर्वत्र प्रमोदवत्त्वोक्त्या च सिद्धमेवेति । तथाचोदाहृतं काव्यप्रकाशे—'जितेन्द्रियत्वं विनयस्य कारणं गुणप्रकर्षो विनयादवाप्यते । गुणप्रकर्षेण जनोऽनुरज्यते जनानुरागप्रभवा हि संपदः' इति । एतादृशो रामः रमन्ते योगिनो यस्मिन्निति सच्चिदानन्दरूपः श्रीरघुवीरः सदा अखण्डं मुदा हर्षेण आयासं विनैव । लीलामात्रेणेत्यर्थः । अवतु रक्षतु । अस्मानिति शेषः । पक्षे सदाराम इत्येकं पदम् । सतां साधूनामाराम इव आरामो विहारस्थानम् । श्रीगुरुरित्यर्थः । शेषं प्राग्वदेव । एवं च मोक्षाख्यपुरुषार्थप्रतिपादकत्वमपि व्यञ्जितम् । अत्र यतो वैदेहीप्राणवल्लभः अतः खरदूषणसंहर्ता । तत्किं कामक्रोधवान् । न । यतः सुमित्रानन्दनानन्दीति हेतुहेतुमद्भावो बोध्यः । पक्षे खरेति पदेन वादित्वं प्राप्तमतो वैदेहीति । तत्रापि मुमुक्षुत्वनुपयुक्तमतः सुमित्रेति ज्ञेयम् । तथाचात्र श्लेषालंकारेण ध्वनितोपमालंकारात्मकार्थशक्त्या रामश्रीगुरोरभेद एवास्तीति वस्तु ध्वनितम् । अन्यत्सर्वमुक्तदिशा प्राग्वदेवोह्यम् ।

**वेदान्ता अपि यं गन्तुं यतन्तेऽनन्तचिन्तया।**
**अहो सोऽपि कपिं बन्धुं योजयामास सूचयन् ॥ १० ॥**
**जगत्प्राणसुतोक्तेन पीतेन श्रोत्रपात्रतः।**
**दृष्टा सीतेति वाक्येन रामोऽप्यमरतामगात् ॥ ११ ॥**

---

अत्र धीरललितोदात्तशान्तो नायकः। स्वीया प्रगल्भा नायिका। वीरशृङ्गारहास्यशान्तरसाः। श्लेषपरिकरादयोऽलंकाराः ॥ ९ ॥ अथ शक्तिमूलविवक्षितान्यपरवाच्यत्वेऽपि शब्दशक्तिमूलं लक्ष्यव्यङ्ग्यक्रममलंकारध्वनिमुदाहरति—**वेदान्ता अपीति**। अहो इत्याश्चर्ये। वेदान्ता अपि उपनिषद्भागा अपि। एतेन वेदान्तानां महामहिमत्वं ध्वनितम्। यं परमात्मानं गन्तुमवगाहितुं विषयीकर्तुमिति यावत्। अनन्तचिन्तया अगणितमननपरम्परयेत्यर्थः। यतन्ते प्रयत्नं कुर्वन्ति नतु केवलमभिलषन्त्येवेत्यर्थः। सोऽपि निरुक्तमाहात्म्यः परमात्मा श्रीरामोऽपि कपिं सुग्रीवं प्रति कपिमेव सूचयन्निति कपिपदावृत्त्यान्वयः कार्यः। तेन सुग्रीव त्वं प्रावृट्काले गतेऽपि मत्कृतसंकेतानुसारेण सीताशोधनार्थं नैव प्रयतस इति कृतघ्नत्वादुन्मत्तत्वाच्च मर्कटजातीयगुणवानेवासि नतु खरदूषणहन्तृमैत्रीपात्रमसीति द्योतयन्सन्नित्यर्थः। बन्धुं अपेरत्रापकर्षः। लक्ष्मणाख्यभ्रातरमपीत्यर्थः। एतेन श्रीरामे सीताविरहातुरत्वेन तदन्वेषणलक्षणकार्याकुलत्वं द्योतितम्। योजयामास नियोजितवानित्यर्थः। श्रुतिशिरोऽनवगोचरोऽपि परमेश्वरो भक्तभरणार्थमति दैन्यमपि नाटयतीति महदद्भुतं भक्तिवैभवमिति भावः। अत्र वेदान्तेत्यादिपदैः शक्तिवृत्त्यैव महानुभावभावनीयमाहात्म्यस्य भगवतः प्रोक्तदैन्यमनुचितमेवेतिवदद्भिर्विषमालंकारो ध्वनितः। शिष्टं तु पूर्ववदेव बोध्यम्। अत्रानन्तगुणः करुणो नायकः। शान्ताद्भुतभक्तिकरुणा रसाः। असंभवालंकारः ॥ १० ॥ ततस्तमेवार्थशक्तिमूलमुदाहरति— **जगत्प्राणेति**। 'समीरमारुतमरुज्जगत्प्राणसमीरणाः' इत्यमराज्जगत्प्राणो वायुस्तस्य सुतो हनुमान् तेनोक्तेन कथितेनेत्यर्थः। अत्र यद्यपि प्रभञ्जनेत्यपि वक्तुं शक्यं, तथापि तस्य प्रकृतविरुद्धार्थसूचकत्वात्तद्विहाय जगत्प्राणेत्युक्तम्, तेन विश्वात्मनो रामचन्द्रस्य जानकीविरहमहाव्याधेः सकाशादुज्जीवनार्थं जगत्प्राणसुतवचनामृतं युक्तमेवेति ध्वनितम्। तत एव श्रोत्रपात्रतः श्रवणमणिचषकाभ्यामित्यर्थः। पीतेन प्राशितेनेति यावत्। अस्ति सीतेति। सीतेति पदं प्रथममुच्चारितं चेत्किं मृतेति वदिष्यत्यग्रे इत्याद्याशङ्कया द्वितीयपदश्रवणतः प्रागेव श्रीरामः स्वधाम प्राप्स्यतीति संभावनया प्रथममस्तिपदं प्रयुज्यैव ततः सीतेति पदघटितेन वाक्येनेत्यर्थः। रामोऽपि अत्रापिना रमन्ते योगिनो यस्मिन्निति विग्रहो बोध्यः। सच्चिदानन्दाद्वैतात्मरूपत्वेन नित्यामृतस्वप्रकाशपरमात्मापि भक्तभावनया हर्षाद्यपि नाटयतीति विचित्रं भक्तितत्त्वमिति द्योतितम्। अमरतां मरणहीनतां नतु अस्वप्रतामित्यर्थः। अगाल्लभदिति यावत्। निरुक्तवाक्यश्रवणेन प्राप्तजीवितत्वात्तद्धर्षवशात्कालान्तरेऽपि मृत्युशून्य एव बभूवेति भावः।

**राक्षसोत्तप्तरक्तेन रक्तेन युधि धावता ।**
**रावणस्य हृताः प्राणाः सीताशोकाग्निना सह ॥ १२ ॥**
**भरतानन्दसंदोहवेलावृद्धिमुपेयुषी ।**
**कल्लोलैरुल्लसद्रामचन्द्रमप्यभ्यषेचयत् ॥ १३ ॥**

---

अत्र पीतेनेति श्रोत्रेति अमरेति च पदैरर्थशक्त्या निरुक्तवाक्यस्यामृतत्वसूचनाद्रूपकं लुप्तोपमा वालंकारो ध्वनितः । अन्यत्सर्वं प्राग्वदेव । अत्र विरही नायकः । विप्रलम्भः शृङ्गारः । भक्तिः शान्तश्च रसः । परिकरपरिकराङ्कुरादयोऽलंकाराः ॥११॥ एवं शक्तिमूलान्पञ्च ध्वनिभेदानुदाहृत्याधुना क्रमप्राप्तं लक्षणामूलं ध्वनिभेदद्वयमविवक्षितवाच्यापरनामकं समुदाहरन्प्रथमं तावदजहल्लक्षणामूलमर्थान्तरसंक्रमितवाच्यं ध्वनिभेदमुदाहरति—**राक्षसेति** । राक्षसानां यत् उत्तप्तं क्रोधाग्निज्वलितशरीरनिःसृतत्वलक्षणेनोत्कर्षेण तप्तमुष्णं यद्रक्तं रुधिरं 'रुधिरेऽसृग्लोहितास्ररक्तक्षतजशोणितम्' इत्यमरः । तेनेत्यर्थः । रक्तेन अरुणवर्णेन युधि धावनपूर्वकं रावणप्राणहरणादिकार्यकारित्वस्यारक्तवर्णस्य सुतरामसंभवादजहत्स्वार्थलक्षणया निरुक्तशोणितकर्तृकारक्तवर्णगुणकेन श्रीरामबाणेनेत्यर्थः । एते व्यधिकरणे एव कर्तरि तृतीये । एतादृशेन बाणेन युधि संग्रामे धावता महावेगवत्तरत्वाद्धावनमिव कुर्वता सतेत्यर्थः । रावणस्य प्राणाः सीताशोकाग्निना सहैव हृताः स्युरिति संबन्धः । उक्तप्राणानां वायुविशेषत्वादुक्तशोकाग्नेस्तत्सखत्वात्तेन सहैव तदपहरणं श्रीरामबाणेन युक्तमेव कृतमिति तात्पर्यम् । एतेन राक्षसेति तज्जातिवाचकपदाद्रक्तेनेत्येकवचनाच्चैकेनापि श्रीरामबाणेन निखिलरक्षःक्षपणपूर्वकं रावणप्राणहरणं सीताशोकोपशमनं तुल्यकालमेव कृतमित्यद्भुतं श्रीरघुवीरपौरुषमिति रक्तपदनिष्ठाऽजहत्स्वार्थलक्षणया ध्वनितम् । तेनेदमर्थान्तरे रक्तपदार्थादितरस्मिन् शरे संक्रमितवाच्यत्वादुक्तध्वन्युदाहरणमिति लक्षणसमन्वयः । अत्र धीरोदात्तो नायकः । रौद्रो रसः । सहोक्त्यलंकारः । तदुक्तम्—'सहोक्तिः सहभावश्चेद्भासते जनरञ्जनः । दिगन्तमगमत्तस्य कीर्तिः प्रत्यर्थिभिः सह' इति ॥ १२ ॥ एवं शोणो धावतीतिवदजहत्स्वार्थाख्यलक्षणामूलमर्थान्तरसंक्रमितवाच्याभिधं ध्वनिभेदमुदाहृत्याथ गङ्गायां घोष इत्यादिवत् जहत्स्वार्थाख्यलक्षणामूलमत्यन्ततिरस्कृतवाच्याभिधं सप्तमत्वेन चरमं तमुदाहरन्नुत्तरकाण्डार्थं संक्षिपति—**भरतानन्देति** । भरतः श्रीरामभ्राता प्रसिद्ध एव तस्य ये आनन्दाः हर्षास्तेषां यः संदोहः 'समूहे निवहव्यूहसंदोहविसरव्रजाः' इत्यमरात्समुदायस्तस्य वेला समुद्रतीरमर्यादाभूमिः । 'वेला काले जलनिधेस्तीरे वीरविकारयोः । अक्लिष्टमरणे रागे सीम्नि वा विबुधस्त्रियाम् । भोजनेऽपीश्वराणां स्यात्' इति विश्वोक्तेर्वेलापदं यद्यप्यनेकार्थकमेव, तथाप्यत्र कल्लोलपदसमभिव्याहाराद्रामे चन्द्ररूपत्वाभिधानाच्च समुद्रमर्यादापरमेव गृह्यते । तस्यैव चन्द्रदर्शने कल्लोलैर्वृद्धिसंभवादिति ज्ञेयम् । नन्वस्तु नामैवं तथापि समुद्रमर्यादासावुक्तानन्दसंदोहसंब-

न्धिनी कथं संभवेत्कथं वा कल्लोलैर्वृद्धिं च प्राप्नुवन्ती श्रीरामचन्द्रमभिषिञ्चेदिति चेन्न । जहल्लक्षणयात्र समुद्रस्यैव वेलाशब्देन विवक्षितत्वात् । ननु तत्रापि 'स्वायत्ते शब्दप्रयोगे किमित्यवाचकं प्रयुञ्जामहे' इति न्यायाद्भरतानन्दसंदोहसिंधुर्वृद्धिमुपागमन्निति प्रथमचरणानुगुणवर्णघटितमपि विवक्षितार्थानुकूलं च प्रयोगं त्यक्त्वा लाक्षणिकं वेलापदं किमिति प्रयुक्तमिति चेद्बाढम् । निरुक्तानन्दसंदोहसिंधोः शक्तिवृत्त्यैवाभिधाने वाक्यशेषेण तस्य वृद्धिद्वारा श्रीरामलक्षणचन्द्राभिषेचनवर्णनं मर्यादोल्लङ्घनं विनानुपपन्नं स्यात् । नहि द्विलक्षयोजनदूरं चन्द्रमण्डलं वर्धमानोऽपि समुद्रो विना वेलातिक्रमणमभिषेक्तुमलम् । तथात्वे हृष्टो हि प्रमाद्यति प्रमत्तो हि धर्ममतिक्रामतीति श्रीमद्भगवद्गीताभाष्ये श्रीमद्भगवत्पूज्यपादपादारविन्दवचनादुक्तानन्दसंदोहस्यासात्विकत्वापत्तिः स्यात् । तस्मादुत्तरार्धप्रथितातिशयोक्त्यनुप्राणितसमासोक्तिलुप्तोपमारूपकान्यथानुपपत्त्या निरुक्तानन्दसंदोहसिंधोरपरिच्छिन्नवृद्धिशालित्वमनुल्लङ्घितमर्यादत्वं चेत्युभयमपि ध्वनयितुमेवेदं लाक्षणिकं वेलापदं प्रयुक्तम् । तेन वेलायाः वृद्ध्यसंभवाद्यद्यपि सिंधुरेव वृद्धिं प्राप्तस्तथापि स यथा यथा ववृधे तथा तथा तन्मर्यादाप्यवर्धदिति द्योतनायैव वेलावृद्धिमुपेयुषीत्युक्तिरिति सिद्धम् । तत्र कल्लोलैरिति पदं देहलीदीपन्यायेनोभयत्रापि संबध्यते । तथाच भरतानन्दसंदोहवेलाकल्लोलैर्वृद्धिमुपेयुषी सती उल्लसद्रामचन्द्रमपि कल्लोलैरभ्यषेचयदिति योजना । कल्लोला इव कल्लोला उत्सवाख्यमनोवृत्तिविशेषास्तैरित्यर्थः । वृद्धिं वर्धनं उपेयुषी प्राप्नुवती सतीत्यर्थः । **उल्लसदिति** । उल्लसति प्रतिज्ञातसंकेतावसर एवागमनात्परमभक्तस्य भरतस्य दर्शनाच्च स्मितादिना विकसतीति तथा स चासौ रामश्चेत्युल्लसद्रामः सएव चन्द्रः चन्दयत्याह्लादयति भक्तानिति चन्द्रः नतु विधुः तमपीत्यर्थः । चन्द्रपक्षे उल्लसन्नुदयं प्राप्नुवन्निति व्याख्येयम् । अपिशब्देनातिशयोक्तिध्वननाद्भरतानन्दस्यापरिमितत्वं सूचितम् । तेन तद्भक्तेरपि निरुपमत्वं व्यज्यते । कल्लोलैरित्युक्तार्थम् राज्याभिषिक्तमकारयदित्यर्थः । पक्षे स्नापयामासेति यावत् । श्रीरामदर्शनेन मुदितो भरतस्तं प्रति तद्राज्यं निवेदितवानिति तत्त्वम् । अत्र वेलेति पदे जहल्लक्षणया निरुक्तसिंधोरमितवृद्धित्वेऽप्यनुल्लङ्घितमर्यादत्वाद्भरते सात्विकभक्तशिरोमणित्वं ध्वनितम् । तेन वाच्यस्य वेलापदार्थस्यात्यन्ततिरस्काराल्लक्षणसंगतिरिति दिक् । अत्र प्रसन्नो नायकः । भक्तिरेव रसः । रूपकलुप्तोपमासमासोक्त्यतिशयोक्त्यादयोऽलंकाराः । यथावा काव्यप्रदीपकर्तुः—'आधूतसस्वेदकरोत्पलायाः स्मितावरुद्धप्रतिकूलवाचः । प्रियो विहायाधरमायताक्ष्याः पपौ चिराय प्रतिषेधमेव' इति । अत्र यद्यपि तेनात्यन्ततिरस्कृतवाच्यध्वनिप्रसङ्ग उपकृतं बहु तत्रेत्यादिप्रकाशप्रसिद्धं पद्यमुदाहृत्यायं प्रभेदो न केवलं विरोधिलक्षणायां किंत्वन्यत्रापीत्यवतार्य यथा ममेति सम्प्रतिक्रमिदमुदाहृत्यात्र पपाविल्यनेन सोत्कण्ठनिरीक्षणं लक्ष्यम् । उत्कण्ठातिशयो

**विभावाद्यैरपाज्ञानचिद्वेद्यः स्थाय्यसौ रसः ।**
**यद्वा तत्संयुतिव्यक्तस्थाय्युपाधिचिदेव सः ॥ १४ ॥**

व्यङ्ग्य इति व्यङ्ग्यमुक्तं, तथापि मया तु स्वेदस्मितानुमितदृढतरानुरागायाः प्रकृतनायिकायाः प्रणयप्रकोपनिमित्तकं निषेधमेव संभोगनिवारणमेव अधरं विहाय चिराय पपौ प्राशितवानिति योजनां विधाय यदा संभोगनिषेधः प्राशितः कुम्भसंभवेनाम्भोधिवत्स्वोऽन्तरेव ध्वंसितस्तदा तत्प्रतियोग्यालिङ्गनाधरपानादिः संभोगः साधित इति विरोधिलक्षणया लक्ष्यते । तेन च तस्यां गूढप्रेमातिशयः सौन्दर्यादिगुणातिशयश्च व्यज्यत इत्युच्यत इति क्षन्तव्यं सहृदयैः ॥ १३ ॥ एवं सामान्यतः सप्तध्वनिभेदानुदाहरतात्रालक्ष्यक्रमव्यङ्ग्यस्य विवक्षितान्यपरवाच्यस्य शक्तिमूलस्य प्रथमस्य ध्वनिभेदस्य रसध्वनित्वमुक्तं स किंलक्षणो रस इत्याशङ्कायां तल्लक्षणं प्राचीननवीनमतभेदेन संक्षिपति—**विभावाद्यैरिति** । विभावादीनां स्वरूपं तूक्तं काव्यप्रकाशमूले—'कारणान्यथ कार्याणि सहकारीणि यानि च । रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः । विभावा अनुभावाश्च कथ्यन्ते व्यभिचारिणः' इति । अत्राप्यग्रे वक्ष्यामः । एवंच रत्यादेः स्थायिभावस्य कारणत्वं विभावत्वं कार्यत्वमनुभावत्वं सहकारित्वं व्यभिचारिभावत्वमिति सामान्यतस्तल्लक्षणं फलितम् । ते विभावाः कान्ताद्यालम्बनविभावाश्चन्द्रिकाद्युद्दीपनविभावाश्च आद्या मुख्याः स्थाय्यभिव्यक्तिकारणत्वेन प्रधानीभूता येषां कटाक्षाद्यनुभावादीनां तैरित्यर्थः । **अपाज्ञानेति** । अपगतं दीपानयने तम इव अभिभूतमज्ञानं यस्याः एतादृशी या चित् साक्षिचैतन्यं तया वेद्यः दृश्य इत्यर्थः । अतएव असौ प्रत्यक्षः स्थायी रत्यादिः स्थायिभावः रसो भवतीत्यर्थः । अयं भावः—आलम्बनविभावाः सुन्दर्यादयस्तथोद्दीपनविभावाश्चन्द्रिकादयोऽपि यदा बाह्यास्तदा प्रत्यक्षादिप्रमाणगम्याः । यदा तु स्वप्नमनोराज्ययोस्तु आन्तरा एव तदा साक्षिचिन्मात्रभास्याः । उपलक्षणमेतदनुभावादेरपि । तत्रापि कटाक्षादीनामसात्विकानामनुभावानां स्तम्भादीनां सात्विकानां च तेषां बाह्यत्वात्तथा प्रमोदादीनां तेषां तथानिर्वेदादीनां व्यभिचारिभावानामप्यान्तरत्वाच्च । तत्रेन्द्रियार्थसंनिकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारिव्यवसायात्मकं प्रत्यक्षमिति व्यावहारिकप्रत्यक्षलक्षकपारमर्षसूत्रान्निरुक्तालम्बनविभावादीनां बाह्यानां पदार्थानां चक्षुरादीन्द्रियैः सह संनिकर्षो यदा भवति तदा तत्प्रत्यक्षमुत्पद्यत इति नियतम् । तत्रेन्द्रियार्थसंनिकर्षे सति चक्षुर्द्वारान्तःकरणवृत्त्यवच्छिन्नं चैतन्यं बहिरागत्य विषयावच्छिन्नचैतन्याकारतां प्राप्नोति । ततो विषयावच्छिन्नचैतन्याज्ञानापसरणेन तत्स्फूर्तिर्भवतीति सिद्धान्तप्रक्रिया । एवमान्तराणामपि तेषां साक्षिचितैव प्रत्यक्षमिति निरुक्तविभावादित्रयसंयोगेन जनिता लौकिकमानसव्यापारवशादात्मनिष्ठानन्दांशावरणस्य तात्कालिकापसरणेन साक्षिचिदेवान्तःकरणे वासनात्मकतयावस्थितं रत्यादिस्थायिभावं भासयतीति स एवोक्तरीत्या सुखहेतुत्वाद्रस

**रसो वै स रसं लब्ध्वाऽनन्दयं स्यादिति श्रुतेः ।**
**पक्षश्चरम एवात्र परमः परमास्पदम् ॥ १५ ॥**

इति । **यद्वेति** । अनेनास्मिन्मते वक्ष्यमाणश्रुत्यैकवाक्यत्वाभावादस्वरसः सूचितः । **तत्संयुतीति** । तेषामुक्तकान्ताद्यालम्बनादिविभावादीनां संयुतिः संयोगस्तेन व्यक्तः पूर्वं संस्कारात्मना मनसि स्थितोऽप्युक्तसामग्र्या प्रकटीभूतः यः स्थायी रत्यादिः स्थायीभावः स एवोपाधिः स्फटिकस्येव संनिहितकुङ्कुमं स्वधर्मारोपको यस्याः सा तथा एतादृशी चिदेव सच्चिदानन्दाद्वैतात्मसंविदेव सः रसो भवतीत्यर्थः । तस्माद्विभावादिसामग्र्या तात्कालिकापसरितानन्दावरणचिद्विषयस्थायिभावत्वं रसत्वमिति प्राचां मते विभावादिसंयोगाभिव्यक्तस्थाय्युपहितचित्त्वं तत्त्वमिति नवीनानां मतेऽपि च तल्लक्षणमस्तीत्याशयः । अत्र प्रथमे लक्षणविभावादिसामग्र्येति सुबोधार्थमेव सर्वदा रसोत्पत्त्यापत्तिवारणाय तात्कालिकेति । चिद्विषयस्थायिभावत्वमित्येवोक्तौ तत्र सुखाभावापत्तेः सुखहेतुत्वेन प्रसिद्धे तत्राव्याप्तेः समुदितमुपात्तम् । एवं द्वितीयेऽपि चित्त्वमित्युपहितचित्त्वमिति चोक्तौ ब्रह्मणि जीवादौ चातिव्याप्तिरिति विशेषणम् । तथाचोक्तं रसगङ्गाधरे । इत्थं चाभिनवगुप्तमम्मटभट्टादिग्रन्थस्वारस्येन भग्नावरणचिद्विशिष्टो रत्यादिस्थायिभावो रस इति स्थितम् । वस्तुतस्तु वक्ष्यमाणरतिस्वारस्येन रत्याद्यवच्छिन्ना भग्नावरणा चिदेव रस इति । नचात्र प्राचीनसंमतलक्षणे चिद्विशिष्टत्वमुक्तं नतु चिद्विषयत्वं त्वया तु तथोक्तमिति कथं न विरुद्धमिति वाच्यम् । चिद्विषयत्वस्यैव चिद्विशिष्टत्वादन्यथा नीलादेरिव चितो जडत्वापत्तेश्च । तस्मादेवंजातीयकं तदाशयमेव स्फुटयता मयात्र चियुक्त इति वक्तव्ये चिद्विषय इत्येव प्रथमलक्षण उक्तम् । आनन्दस्तु चरमलक्षणे चित्वादेवेति कि विरुद्धमिति दिक् ॥ १४ ॥

नन्वस्त्वेवं मतद्वयं तथापि कः पक्षः श्रेयानित्याशङ्क्य श्रुत्यनुसारित्वादन्त्य एवेत्याह—**रसो वै स इति** । वै निश्चयेन सः 'यद्वै तत्सुकृतम्' इत्यन्तेन ग्रन्थेन ब्रह्मवल्ल्युपनिषदि यः पूर्वं प्रकृतः परमात्मा स तावद्रसः रसयति स्वस्वरूपानन्देन सुखयति जनानिति तथेत्यर्थः । अतएव 'रसमिति रसं ह्येवायं लब्ध्वानन्दी भवति' इति तैत्तिरीयारण्यकब्रह्मवल्ल्युपनिषच्छ्रुतेरत्र चरम एव पक्षः परम इति संबन्धः । अयं जीवः । रसं ब्रह्मानन्दं लब्ध्वा निरस्तकामत्वेनान्तर्मुखे मनसि स्पष्टप्रतिबिम्बितत्वेन प्राप्येत्यर्थः । आनन्दी सुखी भवतीत्यर्थः । अत्र निरुक्तपक्षद्वये । परमः श्रेयानित्यर्थः । न केवलमन्तिमपक्षाङ्गीकारे श्रुत्यैकवाक्यत्वमात्रलाभः किंत्वन्यदप्यस्तीत्यभिप्रायेण तं विशिनष्टि—**परमेति** । परा ब्रह्मविद्यारूपा मा लक्ष्मीर्येषां ब्रह्मविदां तेषामास्पदं तदभिमताद्वैतैकपर्यवसायित्वेन प्रियत्वान्निवासस्थानमित्यर्थः । तस्मादन्तिमपक्षे श्रुत्यनुग्रहस्तत्त्वज्ञानं च संपद्यत इति स एवोपादेय इत्याशयः । नचोक्तश्रुतिः सुकृतशब्दितपुण्यकर्मपरैवास्त्वित्यपि शङ्क्यम् । पूर्वाचार्यैरेवमव्याख्याततत्वात्प्रत्युत मदुक्तार्थस्यैव तैः सूचितत्वाच्च । तथा चाहुरनु-

श्वा यथा चर्वयन्नस्थि ततः स्वमुखशोणितम्।
मत्वा तदीयं रमते तद्वियोगे च खिद्यति ॥ १६ ॥
तथैवानादिसंस्कारैर्जीवः शब्दादिकं भजन्।
तल्लाभेन तदिच्छाया ध्वंसेऽन्तर्मुखमानसे ॥ १७ ॥
प्रतिबिम्बितमानन्दं ब्रह्मैवात्मानमद्वयम्।
तदीयत्वेन मत्वाथ सुखदुःखे व्रजत्यलम् ॥ १८ ॥
इच्छोपशम एवातो व्यञ्जको व्यवधानतः।
सुदृशां मुकुरो यद्वत्स्वरूपानन्दवारिधेः ॥ १९ ॥

---

भूतिप्रकाशे श्रीमद्विद्यारण्यगुरुचरणाः प्रकृतश्रुतिव्याख्यानावसर एव—'मूढस्य मधुरादिः स्याद्रसो ब्रह्मविवेकिनः। मधुरादिभुगानन्दी ब्रह्मविच्च तथा सुखी' इति ॥ १५ ॥ नन्वेवं यदि ब्रह्मानन्द एवोक्तोपाध्यवच्छिन्नो रसपदवाच्यश्चेत् 'व्यक्तः स तैर्विभावाद्यैः स्थायीभावो रसः स्मृतः' इति काव्यप्रकाशमूले, तथा 'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः'इति भरतसूत्रेऽपि कथं तस्योत्पत्तिरुक्ता। ब्रह्मानन्दरूपस्य तस्य 'जहात्येनां भुक्तभोगामजोऽन्यः' इति श्रुतेरनादित्वेनोत्पत्तिशून्यत्वात्र चोपहितस्य तस्य घटाकाशवत्साऽपि संभवतीत्यपि वाच्यम्। तथापि ब्रह्मानन्दरूपस्य रसस्य सिद्धान्ते जीवानां स्वरूपत्वेन तदर्थं तेषां बहिरप्रवृत्त्यापत्तेरित्याशङ्कोपशमनार्थं गूढाभिसंधिः प्रथमं दृष्टान्तमुपक्षिपति—**श्वा यथेति** ॥ १६ ॥ अथ दार्ष्टान्तिके योजयन् गूढाभिसंधिमुद्घाट्योक्ताशङ्कां समाधत्ते—**तथैवेति युग्मेन। शब्दादिकमिति**। शब्दस्पर्शरूपरसगन्धाभिधं विषयजातमित्यर्थः। भजन्सेवयन्। तल्लाभेन तस्य शब्दादेर्विषयस्य यो लाभः प्राप्तिस्तेनैत्यर्थः। तदिच्छायाः शब्दादिवाञ्छायाः ध्वंसे नाशे सतीत्यर्थः। अन्तर्मुखमानसे परावृत्तचित्तरूपोपाधाविति यावत् ॥ १७ ॥ **प्रतिबिम्बितमिति**। यथा निश्चलनिर्मले जले आकाशं स्पष्टं प्रतिफलति तद्वदित्यर्थः ॥ १८ ॥ एवं तर्हि निरुक्तदृष्टान्तवशात्कान्ताद्यालम्बनविभावादीनां रसव्यञ्जकत्वं भ्रान्त्यैव। वस्तुतस्तु प्रत्यगभिन्नाद्वैतब्रह्मरूपानन्दस्यैव रसत्वादिच्छाध्वंसस्यैव रसत्वादिच्छाध्वंसस्यैवोक्तरीत्या तद्व्यञ्जकत्वाच्चेति सिद्धम्। तत्तु पूर्वाचार्यतात्पर्येण सह सुतरां विरुद्धमेवेति चेत्सत्यम्। पूर्वाचार्यैस्त्वलंकारशास्त्रप्रक्रियानुरोधादेव लौकिकदृष्ट्या तथोक्तमिव भाति। विचारे क्रियमाणेन्ततो गत्वा तेषामप्येतदेव संमतम्। ननु तर्हि तीर्थकारैरप्येतदेवाद्वैतमतं कुतो नोक्तमिति चेद्गुडजिह्विकान्यायेन स्थूलारुन्धतीन्यायेन च मूढजनानां श्रुतियुवतिकबरीभारनिगूढे चिद्रत्ने झटिति दृढतरं प्रबोधासंभवात्परंपरया तत्र तेषां प्रवेशनार्थमेवेति गृहाण। अतएवोक्तं हरिणा—'उपायाः शिक्ष्यमाणानां बालानामुपलालनाः। असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते' इति। सर्वेषां शास्त्राणामद्वैतात्मन्येव पर्यवसानं त्वत्रैवाग्रे संक्षेपतो वक्ष्यते। नचास्त्वन्यशास्त्राणां तथात्वं, प्रकृतालंकारादिशास्त्र-

**बाढमेवं घटेतापि यद्युक्ता संभवेत्स्थितिः ।**
**सैव विप्रतिपन्नास्ति वादिवैमत्यदर्शनात् ॥ २० ॥**
**आत्मा देहो मृतिर्मोक्षस्तत्त्वं भूतचतुष्टयम् ।**
**प्रत्यक्षमेव मानं चेत्याहुर्लोकायता मुहुः ॥ २१ ॥**
**विज्ञानं क्षणिकं सोपप्लवसंतानरूपकम् ।**
**निरुपप्लवसर्वज्ञसंतानो जीव ईश्वरः ॥ २२ ॥**

---

जीवातुभूतस्य कामशास्त्रस्य कथं तथात्वमिति चेद्वैराग्यद्वारैवेत्याशयेनोक्तप्रक्रियया फलितं व्युत्पादयति—**इच्छोपशम एवेति** । अतः उक्तयुक्तेः अव्यवधानत इति च्छेदः । सुदृशां पण्डितानां । पक्षे मृगाक्षीणाम् । **स्वरूपेति ।** स्यानन्दाब्धेरित्यर्थः । पक्षे सर्वावयवसौन्दर्यहर्षोदधेरिति यावत् । अव्यवधानतः साक्षाद्यद्वन्मुकुर आदर्शो व्यञ्जकस्तद्वद्व्यञ्जक इत्यन्वयः । तथाचोक्तं महिम्नस्तवव्याख्याने श्रीमधुसूदनाचार्यैः । तत्र वात्स्यायनेन पञ्चाध्यायात्मकं कामशास्त्रं प्रणीतं तस्य च विषयवैराग्यमेव प्रयोजनमिति ॥ १९ ॥ एवं निरुक्ताद्वैतसरणिं वादिवैमत्यवशादसंभावयंस्तद्दर्शयितुं तां किंचिदङ्गीकरोति—**बाढमिति** । इदमर्धाङ्गीकारेऽव्ययम् । तत्र हेतुं वदंस्तदेवासंभावनं सूचयति—**यदीति** । उक्ताश्वा यथेत्यादि चतुःश्लोकी प्रतिपादितेत्यर्थः । कुतस्तदसंभवसूचनमित्याशङ्कायां सप्रतिज्ञं तत्र हेतुमाह—**सैवेति** । विप्रतिपन्ना संदिग्धा । **वादीति** । विमतस्य विवादग्रस्तस्य भावो वैमत्यं वादिनां वैमत्यं तस्य यद्दर्शनं अनुभवनं तत इत्यर्थः ॥ २० ॥ ननु के ते वादिन इत्यतः प्रथमं चार्वाकापरनामकलोकायतमतमुपन्यसति—**आत्मेति** । तदुक्तं वेदान्तकल्पलतिकायाम् । तत्र लोकायतिकास्तावत्प्राकृतलोकानुसारिणो मनुष्यत्वादिविशिष्टभूतचतुष्टयसंघात एव चैतन्यं मन्यमाना नानागमपुराणानुमानादिमानान्तरप्रसिद्धमपि देहादिव्यतिरिक्तं चेतनं बन्धमोक्षभागिनमशुद्धबुद्धयोऽपलपन्ति नाप्रत्यक्षं प्रमाणमिति वदन्त इति ॥ २१ ॥ ननु यदि प्रत्यक्षभिन्नं प्रमाणमेव नास्तीति चेत्तर्हि चार्वाकस्य तव भोजनादावपि प्रवृत्तिर्न स्यात् । इष्टसाधनताज्ञानाभावात्प्रवृत्तित्वावच्छिन्नकार्यतावच्छेदकावच्छिन्नं प्रतीष्टसाधनत्वावच्छेदकावच्छिन्नज्ञानस्यैव कारणताया नियतत्वाच्चेत्यादियुक्त्या निरुक्तमतस्य दुष्टत्वादनुमानस्यापि प्रामाण्यवादिनां बौद्धानां मतचतुष्टयं स्पष्टयन् प्रथमं योगाचाराख्यस्य विज्ञानवादिनो बुद्धशिष्यविशेषस्य मतमाह—**विज्ञानमिति** द्वाभ्याम् । सोपप्लवसंतानरूपकं उपप्लवः सकलो रागद्वेषादिरूपः प्रपञ्चोपसर्गस्तेन सहितो यः संतानः प्रवाहः स एव रूपं आकारो यस्य एतादृशं क्षणिकं प्रतिक्षणविनश्वरं विज्ञानं बुद्ध्याख्यं विशिष्टं ज्ञानमेव जीवस्तथा तदेवोक्तरूपं क्षणिकविज्ञानमेव निरुपप्लवसर्वज्ञसंतानः निर्गतः उपप्लवः निरुक्तोपसर्गो यस्मादेतादृशो यः सर्वज्ञः निखिलवित्स चासौ संतानः प्रवाहश्चेति तथा निरुक्तसंतानरूपं

**भिन्नाभिन्नो जगद्भ्रान्तिर्मुक्तिश्चेशे विलीनता ।**
**योगाचारमते मानं प्रत्यक्षं चानुमानकम् ॥ २३ ॥**
**ज्ञानानुमेयं क्षणिकं बाह्यं सौत्रान्तिका जगुः ।**
**स्वलक्षणं तदन्वक्षं चेति वैभाषिका अपि ॥ २४ ॥**
**मतद्वयेऽपि शिष्टं तु योगाचारमतं मतम् ।**
**शून्यं माध्यमिकाः प्राहुरन्यत्सर्वं भ्रमात्मकम् ॥ २५ ॥**
**जीवः पुर्यष्टकी देहमात्रो मुक्तिस्तु तस्य या ।**
**सततोर्ध्वगतिः सेति दिक्पटाः प्रोचुरार्हताः ॥ २६ ॥**

---

सदित्यर्थः ईश्वरः ॥ २२ ॥ सच जीवेन जगता च सह भिन्नाभिन्नो भेदसहिष्ण्वभेदलक्षणतादात्म्यशाली जात्यादिवद्भवतीत्यन्वयः । स्फुटमेवान्यत् । उक्तं हि सिद्धान्तबिन्दावीश्वरं प्रकृत्य 'परिणामी नित्यः सर्वज्ञो भिन्नाभिन्न इति जैनाः' इति, क्षणिकः सर्वज्ञः' इति सौगता इति च । वेदान्तकल्पलतिकायामपि—'विज्ञानवादिनस्तु क्षणिकं विज्ञानस्कन्धं देहेन्द्रियादिव्यतिरिक्तमात्मत्वेन मन्यमानाश्चतुर्विधनैरात्म्यभावनया तस्य सोपप्लवविज्ञानसंतानस्यात्यन्तोपरमं वा निरुपप्लवसर्वज्ञसंतानान्तर्भावं वा मोक्षमिच्छन्ति' इति ॥ २३ ॥ ननु यदि विज्ञानमेवस्वप्नवद्घटादिकमिव समवभासते तदपि क्षणिकमेवेति चेत्तर्हि सोऽयं घट इति प्रत्यभिज्ञानं स्याद्दीपज्वालावदत्यन्तसादृश्यात्कथंचित्तदुपपत्तावपि तदर्थं तव प्रवृत्त्यनापत्तेर्भोग्यस्यासत्वाद्भोक्तुः क्षणिकत्वाच्चेत्याशङ्क्यानुमेयक्षणिकभोग्यसत्त्ववादिनः सौत्रान्तिकसंज्ञस्य सुगतापरशिष्यस्यापि मतं संक्षिपति—**ज्ञानानुमेयमि**त्यर्धेन । बाह्यं क्षणिकमपि वस्तु विद्यते ज्ञानगम्यत्वाद्व्यतिरेके वन्ध्यापुत्रवदिति प्रयोगः । एवं तर्हि घटं पश्यामीत्यनुभवस्य का गतिः किंचोक्तरूपस्यापि बाह्यस्य किं लक्षणमिति चेत्तत्र प्रत्यक्षत्वाद्यङ्गीकर्तुः वैभाषिकाभिधस्य वैनाशिकतृतीयशिष्यस्यापि सिद्धान्तं बोधयति—**स्वलक्षणमि**त्यर्धेनैव । स्वं तत्तद्घटादित्वमेव लक्षणं यस्य तत्तथेत्यर्थः । तत् बाह्यम् । अन्वक्षं प्रत्यक्षं चेति वैभाषिका अपि जगुरित्यनुकृष्य संबन्धः । तथाचाहुः श्रीभाष्यरत्नप्रभाकाराः 'सौत्रान्तिको वैभाषिको योगाचारो माध्यमिकश्चेति चत्वारः शाक्यशिष्यास्तेष्वाद्ययोर्बाह्यार्थानां परोक्षत्वापरोक्षत्वमविवादेप्यस्तित्वसंप्रतिपत्तेः' इति ॥ २४ ॥ अस्त्वेवं यथाकथंचिन्मतद्वयेऽपि जगद्व्यवस्था जीवेशमानमोक्षाख्यपदार्थचतुष्टयं तु कथमिति चेद्विज्ञानवादिवदेवेत्याह—**मतद्वयेऽपी**त्यर्धेन । शिष्टमुर्वरितं जीवादीत्यर्थः । नन्वेतावतापि भोक्तृभोग्ययोः क्षणिकत्वदूषणं तु तदवस्थमेवेत्यतो माध्यमिकनामधेयस्य शाक्यशिष्यस्यैव राद्धान्तमभिधत्ते—**शून्यमिति** । सर्वं भ्रमः दृश्यत्वात्स्वप्नवदतः शून्यमेव तत्त्वमिति प्राहुरित्यर्थः । उक्तं हि श्रीमधुसूदनसरस्वतीभिः 'माध्यमिकाः पुनः शून्यमात्रमात्मानमुपयन्तो न किंचिदपि तत्त्वमस्तीति शून्यभावनाप्रकर्षपर्यन्तात्तत्त्वज्ञानाच्छून्यभावमेवापवर्गमाहुरिति ॥ २५ ॥ एवं क्षपणकमतचतुष्टयं संक्षिप्य तत्र चरमोपन्यस्तमते यत्स-

**इति नास्तिकषट्तन्त्र्यां चार्वाकाणां गुरुर्गुरुः ।
बुद्धश्चतुर्जिनानामप्यर्हन्दिग्वाससामभूत् ॥ २७ ॥**

वंस्यापि शून्यमेव तत्त्वमित्युक्तं तच्छून्यं किं त्वया, ज्ञातं न वा । नाद्यः । तज्ज्ञातुस्तव ततः पार्थक्येन सिद्धत्वापत्त्या तद्भिन्नात्मसिद्धापत्तेः । नाप्यन्त्यः । अज्ञातवस्तुसाधकत्वेन अप्रामाणिकत्वादित्याद्यस्वरसादार्हतापरनामकानां दिगम्बराणां मतमुपक्षिपति—**जीव इति** । 'कर्मेन्द्रियाणि खलु पञ्च तथा पराणि बुद्धीन्द्रियाणि मनआदिचतुष्टयं च । प्राणादिपञ्चकमथो वियदादिकं च कामश्च कर्म च तमः पुनरष्टमी पूः' इति श्रीमत्संक्षेपशारीरकोक्तं कर्मेन्द्रियपञ्चकादिकं पुर्यष्टकमस्यास्तीति पुर्यष्टकी एतादृशः देहमात्रः शरीरमात्रपरिमितः जीवः आत्मास्तीत्यर्थः । तु पुनः तस्योक्तलक्षणस्य जीवस्य या सततोर्ध्वगतिः सततं ऊर्ध्वगतिः निरन्तरोर्ध्वगमनमिति यावत् । सा मुक्तिर्भवतीति दिक्पटाः दिगम्बराः आर्हताः प्रोचुरिति योजना । तदुक्तं वेदान्तकल्पलतिकाकारैः—'आर्हताः स्वदेहेन्द्रियव्यतिरिक्तं देहपरिमाणमात्मानमुपगम्य तस्य पुर्यष्टककर्माष्टकपरिवेष्टितस्यार्हतशास्त्रोक्तेन तपसाऽत्मैकाकारसमाधिपरिपाकेन चाष्टविधबन्धप्रध्वंसे सति सुखैकतानस्य निरावरणज्ञानस्य संततोर्ध्वगमनमलोकाकाशगमनं वा मोक्षमाचक्षते' इति ॥२६॥ एवमुक्तनास्तिकषट्दर्शनीमुपसंहरंस्तत्प्रणेतॄनाह—**इतीति** । इति उक्तप्रकारायां नास्तिकषट्तन्त्र्यां षण्णां षट्संख्याकानां तन्त्राणां शास्त्राणां समाहारः षट्तन्त्री तस्यामित्यर्थः । चार्वाकाणां लोकयतिकानां गुरुस्तन्मतोपदेष्टा गुरुः 'गीष्पतिर्धिषणो गुरुः' इत्यमराद्बृहस्पतिरित्यर्थः । अभूदित्यपकृष्य योज्यम् । तथाचोक्तं शिवाद्वैतविवेकस्य षट्तन्त्रीसाराख्यचतुर्थपरिच्छेदप्रथमश्लोकटीकायां चार्वाकशास्त्रप्रणेता बृहस्पतिरिति । अपिच बुद्धः 'बुद्धो नाम्ना जिनसुतः कीकटेषु भविष्यति' इति श्रीमद्भागवतोक्तेर्बुद्धावतारो विष्णुरित्यर्थः । चतुर्जिनानां चत्वारश्च ते जिनाश्चेति कर्मधारयस्तेषाम् । उक्तचतुर्विधक्षपणकानामित्यर्थः । गुरुरित्यनुकर्षणीयम् । अभूदित्यत्रापि ज्ञेयम् । एवं दिग्वाससां दिगम्बराणां अर्हन् एतन्नामा नृपविशेषः गुरुरभूदित्यन्वयः । तथाहि श्रीमद्भागवते पञ्चमस्कन्धे निरूपितमृषभदेवदेहविलयकथनोत्तरम्—'यस्य किलानुचरितमुपाकर्ण्य कोङ्कवेङ्ककुटकानां राजा अर्हन्नामोपशिक्ष्य कलावधर्म उत्कृष्यमाणे भवितव्येन विमोहितः स्वधर्मपथमकुतोभयमपहाय कुपथपाषण्डमसमञ्जसं निजमनीषया मन्दः प्रवर्तयिष्यते' इति । एतेषां षण्णामपि नास्तिकत्वं तु 'अस्तिनास्तिदिष्टंमतिः' इति सूत्रोक्तरीत्या बोध्यम् । तत्रेश्वरपरलोकादिकं नास्तीति मतिसत्त्वाल्लोकायतानाम्, नास्ति वेदप्रामाण्यादिकमिति मतिसत्त्वाद्योगाचारादित्रिविधबौद्धानां, परलोकादिकमखिलमेव शून्यान्यन्नास्तीति मतिसत्त्वान्माध्यमिकानां, नास्तीश्वरवेदप्रामाण्यादिकमिति मतिसत्त्वाद्दिगम्बराणां च नास्तिकत्वमवधेयम् । एवं चैतेषामपि मते लोकायतवदीश्वराभावः परमाणुचातुर्विध्यमेव जगत्तत्त्वं च सौगतवन्मानद्वै-

**द्रव्यादिसप्तकं मेयं जड आत्मा गुणी विभुः ।**
**सेशोपासनतस्तेषां साधर्म्यादिजबोधतः ॥ २८ ॥**
**नववैशेषिकगुणध्वंसः कणभुजोऽमृतम् ।**
**मानादिषोडशार्थानामुद्देशादिभिरात्मनोः ॥ २९ ॥**

विध्यमात्रत्वमपि बोध्यम् । अत्रैतेषां प्रत्येकं तत्तच्छास्त्रोक्तानि मुक्तिसाधनानि तु नातीवोपयुक्तानीति मया नैवोपन्यस्तानीति । ननु भगवता विष्णुना सुराचार्येण च कथमिदं वेदविरुद्धशास्त्रप्रणयनमकारीति चेदसुरव्यामोहनार्थमेवेति जानीहि । किंबहुना वेदान्तपातञ्जलेतरास्तिकशास्त्राणामप्यंशतस्तथात्वमस्त्येव । तथाचोक्तं सप्तशतीव्याख्याने नागोजिभट्टैः । पाद्मे पार्वतीपरमेश्वरसंवादे—'शृणु देवि प्रवक्ष्यामि तामसानि यथाक्रमम् । येषां श्रवणमात्रेण पातित्यं ज्ञानिनामपि । प्रथमं हि मयैवोक्तं शैवं पाशुपताभिधम् । यच्छक्त्यावेशितैर्विप्रैः संप्रोक्तानि ततः परम् । कणादेन तु वै प्रोक्तं शास्त्रं वैशेषिकं महत् । गौतमेन तथा न्यायं सांख्यं तु कपिलेन वै । द्विजन्मना जैमिनिना पूर्ववेदप्रकाशकम् । निरीश्वरेण वादेन कृतं शास्त्रं महत्तरम् । धिषणेन तथा प्रोक्तं चार्वाकमतिगर्हितम् । दैत्यानां नाशनार्थाय विष्णुना बुद्धरूपिणा । वेदार्थवन्महाशास्त्रं मायावादमवैदिकम् । मयैव कथितं देवि जगतां नाशकारणात्' इति ॥ २७ ॥ एवं नास्तिकषट्दर्शनीमतान्युपन्यस्येदानीमास्तिकषट्दर्शनीमतोपन्यासमारभमाणः सन्मध्यपरिमाणत्वेनाभिमतस्यार्हतसंमतात्मनो ध्रुवं विनाशित्वात्तद्विभुत्ववादिनः कणादस्य मतमाह—**द्रव्यादि** इति सार्धेन । द्रव्यगुणकर्मसामान्यविशेषसमवायाभावाख्यपदार्थसप्तकमिति यावत् । मेयं प्रमाविषयमित्यर्थः । जडोऽचिद्रूपः । गुणी संख्यापरिमाणपृथक्त्वसंयोगविभागबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्काराख्यचतुर्दशगुणवानित्यर्थः । तत्र बुद्ध्यादयोऽष्टावात्ममात्रवर्तिनो गुणाः शेषास्तु द्रव्यान्तरवर्तिनोऽपीति ज्ञेयम् । विभुर्महत्परिमाणवान् । एतादृश आत्मा जीवोऽस्तीत्यन्वयः । अत्र कणभुज इति पदं प्रत्येकं योज्यम् । कणादस्य मत इत्यर्थः । सेशोपासनतः ईश्वरोपासनसहितादित्यर्थः । तेषां द्रव्यादिसप्तपदार्थानां साधर्म्यादिजबोधतः साधर्म्यवैधर्म्यजनितज्ञानाद्धेतोरिति यावत् ॥ २८ ॥ **नवेति** । नवसंख्याकाः ये आत्मनो बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाख्याः वैशेषिकाभिधा गुणाः । तदुक्तम् 'रूपं गन्धो रसः स्पर्शः स्नेहः सांसिद्धिको द्रवः । बुद्ध्यादिर्भावनान्तश्च शब्दो वैशेषिका गुणाः' इति । तेषां यो ध्वंसो नाशः प्रागभावासहवृत्तिरुच्छेद इत्यर्थः । स तावत्कणभुजो मते अमृतं कैवल्यं भवतीति संबन्धः । अत्र जीवेश्वरजगन्मोक्षतत्साधनाभिधवस्तुपञ्चकोक्तावपि प्रमाणानुक्तेः पूर्वोक्तं प्रत्यक्षानुमानाख्यं प्रमाणद्वयमेवैतेषां कणादानामपि संमतमिति द्योतितम् । तदुक्तं षट्तन्त्रीसारटीकायां कणादं प्रकृत्य अयं प्रमाणद्वयवादित्वात्पूर्वस्माच्छ्रेयानिति । निरुक्तमुक्तिप्रक्रिया तूक्ता श्रीमधुसूदनसरस्वतीभिः । काणादास्तु देहेन्द्रियादिव्यतिरिक्तं

**बोधादिपारम्पर्येण दुःखस्यानुदयोऽमृतम् ।**
**मानं चतुर्विधं चेति प्रोच्यते गौतमानुगैः ॥ ३० ॥**
**नित्यादेः कृतितोऽन्यस्य त्यागादारब्धभोगतः ।**
**मोक्षं कर्मक्षयं ज्ञानं विनैकभविका जगुः ॥ ३१ ॥**

---

विभुमात्मानं नवविशेषगुणाश्रयं कल्पयन्तो जल्पन्ति । द्रव्यगुणकर्मसामान्यविशेषसमवायानां षण्णां पदार्थानां साधर्म्यवैधर्म्याभ्यां यत्तत्त्वज्ञानं तत्पूर्वकादात्मतत्त्वसाक्षात्कारादीश्वरोपासनासहितानां नवानां वैशेषिकगुणानां प्रागभावासहवृत्तिः प्रध्वंस एवात्मनः कैवल्यमितीति अहो शब्दप्रामाण्यमनङ्गीकुर्वतां वैशेषिकाणां कथं नामास्तिकत्वमित्याद्यस्वरसात्तत्प्रामाण्यवादिनां नैयायिकानां मतमुपन्यसति—**मानादीति** सार्धेनैव । प्रमाणप्रमेयादिषोडशपदार्थानामितियावत् । उद्देशादिभिः उद्देशलक्षणपरीक्षाभिरित्यर्थः । आत्मनोः जीवात्मपरमात्मनोः ॥ २९ ॥ **बोधादीति** । ससाधनाज्जीवादिसाक्षात्कारात्सवासनमिथ्याज्ञाननिवृत्तौ तत्कार्याणां रागद्वेषमोहानां निवृत्तिरित्यादिपरम्परयेति यावत् । अमृतमिति च्छेदः । चतुर्विधं प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीति पारमर्षसूत्रोक्तचतुःप्रकारकमित्यर्थः । स्फुटमेवान्यत् । तथाचाहुर्वेदान्तकल्पलतिकाकृतः । नैयायिकास्तु प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानामुद्देशलक्षणपरीक्षाभिरात्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गाख्यद्वादशविधप्रमेयनिष्कर्षेणात्मद्वयसाक्षात्काराच्छ्रवणमनननिदिध्यासनपूर्वकात्सवासनमिथ्याज्ञाननिवृत्तौ तत्कार्याणां रागद्वेषमोहानां निवृत्तिस्ततस्तत्कार्ययोर्धर्माधर्मयोस्ततः पूर्वार्जितकर्मणां कार्यव्यूहपूर्वकभोगेन क्षयाच्छरीरान्तरानारम्भस्ततो बाधनालक्षणस्यैकविंशतिप्रभेददुःखस्यात्यन्तिकविमोक्षोऽपवर्ग इति कल्पयन्तीति । अत्र मते जीवेशजगद्रूपं तु प्राग्वदेव बोध्यम् ॥ ३० ॥ अन्यथानुपपत्तिश्चेदस्ति वस्तुप्रसाधिकेत्यादिभगवत्सुरेश्वराचार्यचरणारुणनलिनवचनात्पीनो देवदत्तो दिवा न भुङ्क्ते इत्याद्युदाहरणसहस्रसिद्धस्यार्थापत्त्यादिप्रमाणद्वयस्यापलापादुक्तमतेऽप्यस्वरसात्प्रमाणषट्कवादिनां मीमांसकानां मतत्रयमुपन्यसन्प्रथमं तत्रापि जघन्यमेकभविकानां सिद्धान्तं बोधयति—**नित्यादेरिति** । 'नित्यं सदा यावदायुर्न कदाचिदतिक्रमेत् । इत्युक्त्यातिक्रमे दोषश्रुतेरत्यागचोदनात् । फलाश्रुतेर्वीप्सया च तन्नित्यमिति कीर्तितम्' इति कालमाधवोदाहृतनित्यत्वबोधकनिमित्ताष्टकान्यतमघटितत्वे सति श्रुत्यादिविहितं संध्यावन्दनादि नित्यं कर्मेत्यर्थः । आदिना नैमित्तिकस्य जातेष्ट्यादिकर्मणः संग्रहः । कृतितः सर्वदा यथाकालमव्यङ्गमनुष्ठानादित्यर्थः । अन्यस्य काम्यादेरित्यर्थः । **आरब्धेति** । प्रारब्धस्य सुकृतादेर्भोगादितियावत् । ऐकभविकाः एकजन्ममात्रसाधनेन मुक्तिमानिनो मीमांसकविशेषा इत्यर्थः । ज्ञानं विनैव कर्मक्षयं मोक्षं जगुरितिसंबन्धः । तथाचोक्तं श्रीमधुसूदनसरस्वतीभिः । अपरे तु ऐकभविकन्यायेन आत्मज्ञानमन्तरेणापि निषिद्धका-

**नेशः सकर्मकाज्ज्ञानाद्विहितात्कर्मनाशजः ।**
**मोक्षो देहादिसंबन्धध्वंसः प्राभाकरैर्वृतः ॥ ३२ ॥**
**आत्मा तु जडबोधात्मा ज्ञानकर्मसमुच्चयात् ।**
**नित्याज्ज्ञानात्सुखं नित्यं मोक्षो भाट्टमते मतः ॥ ३३ ॥**
**इति मीमांसकत्रय्याः प्रयान्त्याश्चानुजैमिनिम् ।**
**मानषट्कमभीप्सन्त्याः प्रोक्तमेतन्मतत्रयम् ॥ ३४ ॥**

---

म्ययोरननुष्ठानान्नित्यनैमित्तिकानुष्ठानाच्च नागामिकर्मोत्पादः विद्यमानस्य चोपभोगेन क्षयात्सकलकर्मोच्छेदलक्षणमपवर्गमाहुरिति । अत्र जीवेश्वरजगद्रूपाणि तु प्राग्वदेव प्रमाणान्यपि तथैव तत्राप्यन्यथानुपपत्त्यपरनाम्न्यर्थापत्तिरभावापरनामिकानुपलब्धिश्चेति प्रमाणद्वयमधिकं बोध्यम् ॥ ३१ ॥ ननु 'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इत्यादिश्रुतिसहस्रैर्मुक्तेः ज्ञानैकसाध्यत्वोक्तेः कथं ज्ञानं विनैव तत्सिद्धिमयं स्वीकुरुते । किंचास्त्वेवं नित्यादिकर्मव्यवस्था तथापि प्रारब्धक्रियमाणाभ्यामन्यस्य सर्ववैदिकसंमतस्य संचिताख्यस्य पुण्यादेः कथं वा नाश इत्याद्यरुच्या ज्ञानमपि मोक्षसाधनत्वेनाङ्गीकर्तुः प्राभाकरस्य मतं संक्षिपति—**नेश इति** । विहितात् 'तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः' इत्यादिविधिचोदितादित्यर्थः । ज्ञानादात्मज्ञानादिति यावत् । प्राभाकरैः प्रभाकराभिधस्य गुर्वपरनाम्नो भट्टशिष्यस्य मतानुयायिनः प्राभाकरास्तैरित्यर्थः । ईशः न वृतः नैव स्वीकृतः । तथा उक्तहेतोरुक्तलक्षणो मोक्षस्तु वृत इति योजना । तदुक्तं सिद्धान्तबिन्दौ वेदान्तकल्पलतिकायां च 'नास्ति सर्वज्ञत्वाद्युपेते ब्रह्माम्नायस्य क्रियापरत्वेन तत्र तात्पर्याभावात्किंतु 'वाचं धेनुमुपासीत' इतिवज्जगत्कारणं परमाण्वादि वा जीवो वोपास्यः' इति मीमांसका इति प्राभाकरा अपि वैदिककर्मानुष्ठानाद्विहितात्मज्ञानपूर्वकाद्देहेन्द्रियादिबन्धस्य धर्माधर्मपरिक्षयनिमित्तमात्यन्तिकोच्छेदं मोक्षं मन्यन्त इति च । इहापि जीवजगत्प्रमाणस्वरूपं प्राग्वदेव ॥ ३२ ॥ अत्राप्यभावस्य पुमर्थतानौचित्यरूपास्वरसात्तद्विरुद्धं भाट्टमतमुपन्यस्यति—**आत्मा त्विति** । एतदप्युक्तं तत्रैव 'जडबोधात्मक इति भाट्टाः' इति । भाट्टास्तु 'ज्ञानकर्मसमुच्चयादेवात्मनो जडबोधात्मकस्य नित्यज्ञानं नित्यसुखं चोदेति, ततश्च विषयविशेषानपेक्षया नित्यज्ञानेन नित्यसुखाभिव्यक्तिर्मुक्तिः' इत्याहुरिति च । अत्रापि ईशजगत्प्रमाणानि प्राभाकरवदेव । अक्षरार्थस्तु स्फुट एवेति ॥ ३३ ॥ एवमुक्तमीमांसकमतत्रयमुपसंहरंस्तदाचार्यं तत्संमतप्रमाणसंख्यां च कथयति—**इतीति** । जैमिनिमेतन्नामानं मुनिमनुप्रयान्त्यास्तदनुसारिण्याः मानषट्कं प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्ध्याख्यषट्संख्याकप्रमाणानि अभीप्सन्त्याः वाञ्छन्त्याः इति निरुक्तैकमभिकादिप्रकारेण मीमांसकत्रय्याः त्रिविधमीमांसकानामेतदुक्तरूपं मतत्रयं प्रोक्त-

**चतुर्विंशतितत्त्वानि प्रधानादीनि नेश्वरः।**
**आत्मा चिद्विश्वकर्त्री तु प्रकृतिस्तद्विवेकतः ॥ ३५ ॥**
**दुःखसंरोधनं मुक्तिरिति सांख्याख्यकापिलाः।**
**क्लेशाद्यमृष्टश्चिद्रूपः सर्वज्ञो नित्य ईश्वरः ॥ ३६ ॥**

---

मिति योजना ॥ ३४ ॥ ननु परस्परविरुद्धधर्मयोः क्वापि सामानाधिकरण्यादर्शनान्ममाद्य बुद्धिः शुद्धेत्यादिना खात्मनः स्वभानेऽन्यानपेक्षत्वलक्षणचिदेकरूपत्वानुभवाच्च कथं तस्य जडबोधात्मकत्वमिति भाट्टमतेऽप्यस्वरसात्तस्य चिन्मात्रत्ववादिनां वेदान्तिनामपि मतात्तथा ख्या प्रकथन इति स्मृतेस्तार्किकमतादपि पृथक्प्रकारेण सांख्यानां मतमुपन्यसति—**चतुर्विंशती**त्यादिना सार्धेन। प्रकृतिमहत्तत्त्वाहंकारशब्दस्पर्शरूपरसगन्धश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाक्पाणिपादपायूपस्थप्राणापानव्यानोदानसमानान्तःकारणाख्यानि दृश्यवस्तूनीत्यर्थः। ईश्वरः न नास्तीति यावत्। तथा आत्मा जीवः चित् चिद्रूप इत्यर्थः। ईशाभावश्चेत्कि जगत्कारणमित्यत आह—**विश्वेति**। तुशब्दः शङ्काशान्त्यै। प्रकृतिः सत्त्वरजस्तमोगुणात्मकं प्रधानमेव जगतः परिणाम्युपादानमस्तीत्यर्थः। **तद्विवेकत इति**। तेषामात्मान्तपञ्चविंशतितत्त्वानां यो विवेकः चतुर्विंशतिसंख्येभ्यः प्रकृत्यादिभ्यस्तेभ्यो भिन्नत्वेनासङ्गचिद्रूपस्य पुरुषस्य बोधस्तेनेत्यर्थः ॥ ३५ ॥ **दुःखेति**। दुःखस्याध्यात्मिकादेस्त्रिविधतापस्य सम्यक्पुनरुदयशून्यं यद्रोधन सकोचनं तदेव मुक्तिरिति सांख्याख्यकापिलाः सांख्यापरनामकाः कपिलाचार्यमतानुयायिनो वादिनो वदन्तीत्यन्वयः। चतुर्विंशतितत्त्वानि पञ्चविंशः पुरुषश्चोक्तः सांख्यसप्तत्याम् 'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त। षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः' इति। अस्यार्थः—मूलप्रकृतिर्विश्वस्यादिकारणमविकृतिर्न कस्यापि विकारोऽस्ति किंत्वनादिरेव सेत्यर्थः। एवं महदाद्याः सप्तमहत्तत्त्वादिगन्धान्ताः प्रकृतिविकृतयः पूर्वोक्तप्रकृतेः पयसो दध्यादिवद्विकारा इति यावत्। षोडशकः श्रोत्राद्यन्तःकरणान्तषोडशसंख्याकतत्त्वसङ्घः विकारः शब्दादिपञ्चतन्मात्रपरिणाम इत्यर्थः। तु पुनः पुरुष आत्मा कस्यापि प्रकृतिः कारणमपि न भवति विकृतिः कार्यमपि न भवतीति। श्रीमधुसूदनसरस्वत्योऽप्याहुः—'भोक्तैव केवलं बोधात्मक इति सांख्याः' इति। सांख्यास्तु प्रकृतिपुरुषविवेकादनाद्यविवेकनिवृत्तौ तं पुरुषं प्रति चरिताधिकारायाः प्रकृतेर्न पुनस्तद्भोगार्था प्रवृत्तिरिति त्रिविधदुःखस्यैकान्तात्यन्तनिरोध एव स्वभावात्केवलस्यापि पुरुषस्य कैवल्यमित्याहुरिति च। विस्तरस्तु सांख्यभाष्यादौ ज्ञेय इति दिक्। ननु 'यः पृथिव्यां तिष्ठन्' इत्याद्यन्तर्यामिब्राह्मणादिषु प्रसिद्धस्य परमेश्वरस्य कथमपलापः समुचित इत्याद्यरुच्या तदङ्गीकारिणां पातञ्जलानां मतमाह—**क्लेशाद्यमृष्ट इति**। आदिपदात्कर्मादि। तथाच सिद्धान्तबिन्दौ परमेश्वरं प्रकृत्य 'क्लेशकर्मविपाकाशयैरपरामृष्टो नित्यज्ञानादिरूपः प्रधा-

अष्टाङ्गयोगतो मुक्तिरिति पातञ्जलं मतम् ।
ईशः पशुपतिर्मुक्तिस्तत्सामीप्यं तदीज्यया ॥ ३७ ॥
तच्छास्त्रसिद्धयेत्याहुः केचित्पाशुपताभिधाः ।
ईशस्तु वासुदेवोऽभूज्जीवः संकर्षणस्ततः ॥ ३८ ॥
तस्मान्मनोऽपि प्रद्युम्नोऽनिरुद्धोऽहं ततोऽभवत् ।
पाञ्चरात्राद्युक्तधर्माद्विष्णुलोके गमोऽमृतम् ॥ ३९ ॥
जीवोऽणुस्तु भ्रमोऽलीक इति माध्वाः प्रपेदिरे ।
सर्ववित्परिणामीशो भिन्नाभिन्नश्च जीवतः ॥ ४० ॥
नित्यः कार्यस्य जीवस्य कारणे परमेश्वरे ।
शरणागतिमुख्याच्च ज्ञानकर्मसमुच्चयात् ॥ ४१ ॥

---

नांशसत्वगुणप्रतिफलिततया सर्वज्ञः संसारिपुरुषविलक्षण एवेति पातञ्जलाः' इति ॥ ३६ ॥ **अष्टाङ्गेति** । इदमप्युक्तं वेदान्तकल्पलतिकायाम् । पातञ्जलास्तु प्रकृतिपुरुषविवेकेनाभ्यासवैराग्यादिपरिपाकाद्यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसंप्रज्ञातसमाधिपूर्वकात्परमेश्वरप्रसादजात्पञ्चविधानां चित्तवृत्तीनां निरोधादेव धर्ममेघशब्दितादसंप्रज्ञातसमाधेः कैवल्यमिति कल्पयन्तीति । अत्र जगज्जीवमुक्तिस्वरूपाणि तु सांख्यसंमतान्येव । प्रसङ्गात्तदेकदेशिनां पाशुपतपाञ्चरात्रिकरामानुजाख्यानां मतानि वैमत्यप्राचुर्यार्थं कथयन्प्रथमं पाशुपतमतमुपक्षिपति—**ईश इति** ॥ ३७ ॥ **तच्छास्त्रेति** । तदुक्तं श्रीमधुसूदनाचार्यैः । पाशुपतास्तु 'यथोक्तात्पाशुपतधर्माचरणात्पशुपतिसमीपगमनमेव पुनरावृत्तिरहितं मोक्ष इत्याहुः' इति । तच्छास्त्रं त्वत्रानुपयोगाद्विस्तरभयाच्च नोदाहृतम् । अत्र जीवजगद्रूपं तु प्राक्तनमेवेत्यलं पल्लवितेन । ततः क्रमप्राप्तं माध्वराद्धान्तमुद्घाटयति—**ईशस्त्वित्यादिद्वाभ्याम्** । पूर्वस्माद्वैलक्षण्यावद्योती तुशब्दः ॥ ३८ ॥ **तस्मादिति** । अभूदिति पदं त्वत्रानुकर्षणीयम् । गमः गमनम् । अमृतमिति च्छेदः । कैवल्यमित्यर्थः ॥ ३९ ॥ **जीव इति** । उक्तं हि सिद्धान्तबिन्दौ वेदान्तकल्पलतिकायां च 'भगवान्वासुदेव ईश्वरो जगत्कारणं तस्मादुत्पद्यते संकर्षणाख्यो जीवः, तस्मान्मनः प्रद्युम्नस्ततोऽहंकारोऽनिरुद्धस्तेन कार्यत्वाज्जीवस्य तेन सह न ब्रह्मणो वासुदेवस्यात्यन्ताभेदः' इति पाञ्चरात्रिका इति 'यथोक्तविष्णुभक्तिधर्माचरणाद्विष्णुलोकगमनमेव मोक्षः' इति वैष्णवा इति च। अत्र जगद्रूपं तु प्रागवदेव। एवं विशिष्टाद्वैतवादिनामपि मतं संक्षिपति—**सर्वविदित्यादियुग्मेन** ॥ ४० ॥ **नित्य इति** । इदं पूर्वान्वयि । **शरणेति** । 'मामेकं शरणं व्रज' इति स्मृतेः 'शरणं गृहरक्षित्रोः' इत्यभिधानाच्छरणं रक्षितारमीश्वरं प्रत्यासमन्तादनन्यभावेन सर्वत्यागपूर्वकं गमनं शरणागतिः सा मुख्या यत्र तस्मादित्यर्थः ॥ ४१ ॥

सवासनविभेदांशध्वंसो मोक्षस्त्रिदण्डिनाम् ।
एवमन्येऽप्यलं सन्ति तत्तद्वाद्येकदेशिनः ॥ ४२ ॥
अत्रोच्यतेऽखिलं द्वैतं नास्तिकादिमतं मृषा ।
दृश्यत्वात्स्वप्नवत्तत्साधुकोकाऽद्वैतिपद्धतिः ॥ ४३ ॥

---

**सवासनेति** । त्रिदण्डिनां त्रिदण्डधारणविशिष्टसंन्यासिनामित्यर्थः । तदाहुः श्रीमधुसूदनदेशिकाः । त्रिदण्डिनस्तु जीवब्रह्मणोर्भेदाभेदमभ्युपेत्य ज्ञानकर्मसमुच्चयाभ्यासादेव कारणात्मके ब्रह्मणि कार्यात्मकजीवस्य कर्मवासनाभेदसहितभेदांशनिवृत्तिर्मोक्ष इति वदन्तीति । अत्रापि जगत्स्वरूपं तथैव । न केवलमेवं योगिनामेवैकदेशिनः किंतु सर्वेषामपि सन्ति भेदवादिनां तथापि तत्तन्मतोपन्यासस्त्वनुपयोगविस्तरकातरत्वाभ्यामेव न कृत इत्याशयेनोपसंहरति—**एवमि**त्यर्धेन ॥४२॥ एवं परस्परविभिन्नसिद्धान्तेषु सकलभेदवादिमतेषूपन्यस्तेषु सत्सु सिद्धान्ती तावत्तत्खण्डनाय भूमिकामारचयन् प्रतिजानीते—**अत्रोच्यत इति** । नास्तिकादिमतमखिलं द्वैतं पक्षः । तत्र मिथ्यात्वापरपर्यायं मृषात्वं साध्यम् । दृश्यत्वं हेतुः । स्वप्नो दृष्टान्त इत्यर्थः । नच द्वैतं सत्यं कार्यकारित्वात् । यन्नैवं न तदेवं, यथा शशविषाणमिति हेत्वन्तरेणोक्तदृश्यत्वहेतोः सत्प्रतिपक्षत्वमिति वाच्यम् । मिथ्यात्वेन संमतस्वप्नसुन्दर्यादेरपि कार्यकारित्वदर्शनात्त्वदुक्तहेतोरेवाप्रयोजकत्वाच्छशविषाणाख्यदृष्टान्तस्यापि वाचारम्भणमात्रतया द्वैतान्तःपातित्वेन पक्षत्वाच्च । यदि चेदं दृष्टान्तस्य पक्षान्तःपातित्वं त्वय्यपि समानमेवेति वदसि चेत्तर्हि 'पिशाचः पिशाचभाषयैव बोधनीयः' इति न्यायेन भेदाभिमानिनं त्वां प्रति बोद्धुमेव प्रवृत्तत्वेन तव सत्यत्वेन संमतं यावद्द्वैतं तावन्मात्रस्यैव पक्षीकरणाय नास्तिकादीति पक्षे विशेषणस्य दत्तत्वात्तत्कुतो न पश्यसि, तस्मात्स्वप्नस्य त्वत्संमतसत्यद्वैतभिन्नत्वेन मदुक्तं दृष्टान्तवैचित्र्यान्नेयं दृष्टान्तस्य पक्षान्तःपातित्वसाम्यत्वप्रतिबन्द्यापत्तिः । एतेन साध्याप्रसिद्धिरपि निरस्ता । एवं चान्वयव्यतिरेकान्यतरदृष्टान्तराहित्याद्भवदुपन्यस्तहेतोरनुपसंहारित्वमपि । किंचायं सोपाधिकत्वेन व्याप्यत्वासिद्धोऽपि उपाधिश्चात्राधिष्ठानज्ञानानिवर्त्यत्वमेव । तथाच यत्र यत्र सत्यत्वं तत्राधिष्ठानज्ञानानिवर्त्यत्वं मन्मते ब्रह्मणि त्वन्मते घटादौ चेति साध्यव्यापकता । यत्रयत्र कार्यकारित्वं तत्राधिष्ठानज्ञानानिवर्त्यत्वं तु नास्त्येवोभयमतेऽपि रज्जुसर्पादौ त्वधिष्ठानज्ञाननिवर्त्यत्वेन तदभावात्साधनाव्यापकतेति । अपिच मदुक्तहेतुनैवास्य सत्प्रतिपक्षत्वं केन वार्यते । तथा 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं' इति, 'वाचारम्भणं विकारो नामधेयं' इति, 'नेह नानास्ति किंचन' इति च श्रुतिसहस्रैस्तथा यदि मिथ्यात्वं न स्यात्तर्हि दृश्यत्वमपि न स्यादित्यादिभिस्त्वत्पादपद्मविकासनार्कैस्तर्कैश्च बाधितत्वमपि । नच दृश्यत्वहेतोरप्यस्तु बाधितत्वमिति शङ्क्यम् । तद्बाधकप्रमाणाभावात्, 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति' इति बार्हदारण्यकादिवाक्यादेः

**श्रीशांकरे मतेऽत्रास्ति यावच्छास्त्रसमन्वयः ।**
**अद्वैतात्मन्यसौ मोक्षस्तज्ज्ञानाद्यज्यते यतेः ॥ ४४ ॥**

---

प्रत्युत तत्साधकस्यैव सत्वाच्च । नच प्रमाणाभावोऽयमसिद्धः । तत्रेदं वक्तव्यम्— किं तद्बाधकं प्रत्यक्षमनुमानं शब्दो वा । नाद्यः अनुपलब्धेः । न द्वितीयः निरस्तत्वात् । न तृतीयः तथा श्रुत्याद्यभावात् । व्यवहारान्यथानुपपत्तेस्तु स्वप्नेन्द्रजालादिदृष्टान्तैरेव परास्तत्वादनुपलब्धेरपि ममेदमज्ञानं ममेदामन ? इत्यारभ्य घटं पश्यामि इत्यन्तमपरोक्षं ज्ञाते, तथा स्वर्गे सुधास्तीत्यादिपरोक्षत्वेन ज्ञाते, तथा न जाने मेरुगुहासु किमस्तीत्याद्यज्ञाते चेति सर्वस्यापि जगतः साक्षिभास्यत्वानुभवपराहतत्वान्नैव संभवोऽपि । तस्मादत्र न कोऽपि शङ्कालेशः । निगमयति—**तस्मादिति** । निरुक्तरीत्या निखिलभेदवादिनां भ्रान्तत्वात्प्रागुक्ता अद्वैतिपद्धतिर्वेदान्तिनां सरणिरेव युक्ता संगतास्तीति संबन्धः ॥ ४३ ॥ ननु यद्येवं तर्हि सुरगुरुप्रभृतीनां महानुभावानामपि वाचः किमिति मिथ्याभूतं भेदघटितं देहात्मवादादि तत्तच्छास्त्रसिद्धान्तं प्रतिपादयांबभूवुरिति चेत्सत्यम् । अनधिकारिव्यामोहनार्थमेव तेषां तथा तथा प्रवृत्तत्वेन तत्र तत्र तात्पर्याभावात् । अत एवोक्तं भगवता सांख्यभाष्यकारेण । अस्तु वा पापानां प्रतिबन्धार्थमास्तिकदर्शनेष्वपि अंशतः श्रुतिविरुद्धार्थव्यवस्थापनं तेषु तेष्वंशेष्वप्रामाण्यं चेतीति । क्वतर्हि तेषां मुख्यं तात्पर्यमिति चेदद्वैतब्रह्मण्येवेत्याह— **श्रीशांकर इति** । श्रीमत्षड्गुणैश्वर्यसंपन्नं यत् शंकरः 'चतुर्भिः सह शिष्यैस्तु शङ्करोऽवतरिष्यति' इति पुराणवचनात्साक्षाच्छिव एव भगवान् शंकराचार्यः तस्येदं तस्मिन् । भाष्यकारीय इत्यर्थः । मते सिद्धान्ते । अत्र स्वप्रकाशत्वेन नित्यापरोक्ष इति यावत् । एतादृशे अद्वैतात्मनि द्वैतशब्दितदृश्यशून्ये प्रत्यगभिन्ने नित्यशुद्धबुद्धमुक्तस्वप्रकाशपरमानन्दघने सत्यज्ञानानन्ताद्वैतात्मपरिपूर्णे ब्रह्मणि विषय इत्यर्थः । **यावच्छास्त्रेति** । यावतां शास्त्राणां मीमांसाद्यखिलदर्शनानां समन्वयः सम्यग्वास्तविकतात्पर्येण योऽन्वयः पर्यवसानपरिपाकः सोऽस्तीति योजना । श्रीमद्भगवत्पूज्यपादमते तावत्स्वयंप्रकाशमाने प्रत्यगभिन्ने ब्रह्मण्येव सर्वदर्शनपर्यवसानं भवतीति भावः । तथाचोक्तं सूतसंहितायां यज्ञवैभवखण्डीयाष्टमाध्याये षडक्षरमन्त्रविचारं प्रकृत्य तदर्थमद्वैतं ब्रह्मैव निर्णीय 'वेदाः सर्वे पुराणानि स्मृतयो भारतं तथा । अन्यान्यपि च शास्त्राणि तथा तर्काश्च सर्वशः । शैवागमाश्च विविधा आगमा वैष्णवा अपि । अन्यागमाश्च विदुषामनुभूतिस्तथैव च । अस्मिन्नर्थे स्वसंवेद्ये पर्यवस्यन्ति नान्यथा' इति । विवृतं चेदं श्रीमन्माधवाचार्यैरेवमेव । श्रुतिस्मृतिपुराणादयोऽप्यस्मिन्नर्थे पर्यवस्यन्ति । इतोऽन्यथात्वं न शङ्कनीयमित्याह—**वेदा इत्यादिना** । अत्र हि प्रपञ्चस्य मिथ्यात्वं जीवपरमात्मनोरेकत्वं तस्य चात्मनः सच्चिदानन्दरूपत्व-

मद्वितीयत्वं चेत्येतावन्मन्त्रार्थत्वेन प्रतिपादितम् । एतस्मिन्नर्थे तावद्वेदान्तानां तदनुसारिणां स्मृतीतिहासपुराणानां चेदमर्थ्यमविवादम् । अन्येषामपि तैर्थिकानामीदृग्विधव्यवहारमकुर्वतां प्रायेणैतदभिमतमेव । तथाहि तत्र सांख्यपातञ्जलशैवास्तावदात्मनः सच्चिद्रूपत्वमङ्गीकुर्वते । यद्यपि व्यवहारदशायां प्रकृतिप्राकृतलक्षणप्रपञ्चस्य सत्यत्वमात्मनानात्वं च व्यवहरन्ति तथापि कैवल्यदशायां स्वरूपप्रकाशव्यतिरेकेण तस्य सर्वस्यानवभानं वर्णयन्ति । आत्मयाथात्म्यज्ञानलक्षणायाः प्रकृतिपुरुषविवेकख्यातेर्हि कैवल्यं तथाविधज्ञानोत्तरकालं प्रकृतिप्राकृतार्थात्मकं जगत्सर्वथा न भातं चेत्तदस्तित्वं कथं निश्चीयेत । ज्ञेयसिद्धेर्ज्ञानाधीनत्वादत आत्मयाथात्म्यज्ञानेन निवर्तितमेव । तत्तस्मात्प्रपञ्चज्ञानस्य ज्ञाननिवर्त्यत्वेन मिथ्यात्वमवश्यमभ्युपगन्तव्यम् । ज्ञाननिवर्त्यानां शुक्तिरूप्यादीनां मिथ्यात्वदर्शनात् । किंच 'कृतार्थं तं प्रति नष्टमप्यनष्टं तत्साधारणत्वात्' इति पातञ्जलं सूत्रम् । अनेन च प्रकृतिप्राकृतिकात्मकं जगन्मुक्तापेक्षया नष्टं तदितरापेक्षया विद्यमानमेवेति पुरुषविशेषापेक्षया तस्याभावसद्भावौ प्रतिपाद्येते । तच्च तन्मिथ्यात्वे कल्पते । पुरुषविशेषमपेक्ष्यैकस्यैव वस्तुनः सद्भावाभावयोः शुक्तिरूप्यादौ दर्शनात् । तत्र हि काचकामलादिदोषदूषितनेत्रः पुरुषः शुक्तौ रूप्यसद्भावं प्रतिपद्यते । तदितरस्तु शुक्तिस्वरूपमेव जानन् तत्र रूप्याभावमवगच्छति । नहि पारमार्थिकं घटादि पुरुषविशेषं प्रति सद्भावासद्भावौ युगपत्प्राप्नोति । तस्मात्स्वरूपज्ञानपर्यन्तमनुवर्तमानस्य तत ऊर्ध्वमप्रतिभासमानस्य प्रपञ्चस्य वेदान्तिनामिव सांख्यानामप्यविशेषान्मिथ्यात्वं सिद्धम् । अथापि कस्मान्न व्यवहरन्तीति चेत् श्रोतुर्बुद्धिसमाधानार्थमिति ब्रूमः । स खलु प्रथमत एव सर्वं मिथ्येत्युक्ते कथमेतद्घटत इति व्याकुलितमनस्को भवेत् । तन्माभूदिति सत्यत्वव्यवहार एव केवलम् । आत्मनानात्वस्य जीवेश्वरभेदस्य च मुक्तावनभातत्वेनैव प्रपञ्चवन्मिथ्यात्वम् । यदि व्यवहारदशायामेक एवात्मेत्यविधीयेत तदा तत्तदुपाधिपरिकल्पनेन जीवेश्वरव्यवस्था सुखदुःखादिव्यवस्था च प्रयाससमर्थनीया स्यादित्यभिप्रायेणैव तन्नानात्ववर्णनम् । मुक्तौ तु वेदान्तिनामिव सांख्यादीनामपि केवलात्मस्वरूपप्रतिभास एव संमत इति परमार्थतो द्वितीयत्वमात्मनः सिद्धम् । व्यवहारमात्रे औपाधिकं स्वाभाविकमिति केवलं विवादः । आनन्दरूपत्वं च पातञ्जलसूत्रभाष्यकारोदाहृतत्वाज्जैगीषव्योपाख्यानादवगम्यते । जैगीषव्यो हि परमयोगीश्वरो योगमहिम्ना अणिमाद्यष्टैश्वर्यं प्राप्य बहून्ब्रह्मसर्गान्संस्मृत्य तत्र सर्वत्रोपरतो दिव्यज्ञानेन साक्षात्कृते स्वात्मतत्त्वे कृतप्रणिधानः परमर्षियोगैश्वर्यप्राप्तास्वणिमादिषु किं सुखमनुभूतं त्वयेति पृष्टे न किंचिदिति प्रत्युक्तवान् । अणिमाद्या विभूतिः केवलसुखात्मिका कथमेवं वदसीति पृष्टः समवोचत् । सत्यं सांसारिकसुखापेक्षया अणिमाद्यैश्वर्यमधिकसुखावहं कैवल्यापेक्षया तु दुःखावहमेवेति । एवं चात्यन्तानुकूलवेद्यत्वमात्मन उक्तं भवति ।

एतदेवात्मन आनन्दरूपत्वं नाम । तथाप्यानन्दरूप इति न व्यवहरन्ति । सुखेष्वेवानन्दशब्दस्य व्युत्पत्तेः । इत्थं नैयायिकवैशेषिकादीनामपि मते ज्ञानान्मोक्षः मुक्तस्य स्वव्यतिरिक्तात्मानात्मलक्षणजगतो प्रतिपत्तिः समानैवेति तैरपि सांख्यादिवदात्मद्वितीयत्वं प्रपञ्चमिथ्यात्वं चावश्यमङ्गीकार्यम् । ब्रह्मेन्द्रादिपदादपि श्रेयस्त्वेन मुक्तेः प्रार्थ्यमानत्वादत्यन्तानुकूलवेद्यत्वं च । ननु तेन च गुणानामत्यन्तोच्छेदो मोक्ष इति मुक्तौ ज्ञानस्याप्यभावमिच्छन्ति । सत्यम् । आत्मस्वरूपचैतन्यस्यात्यन्तनिर्विकल्पकत्वात्तेषामनवभानाभिमानः । अतएव शून्यवादिनोऽनवभानमात्मैव नास्तीति प्रतिपन्नाः शास्त्रदृष्ट्या प्रातर्गजाभावज्ञाने सत्येव यथा लौकिकजनस्यादर्शनाभिमानः ग्राहकविज्ञानस्यात्यन्तनिर्विकल्पकत्वात् । एवमेवात्मचैतन्यस्यात्यन्तनिर्विकल्पकत्वाल्लौकिकज्ञानाभावविषयमेव मुक्तौ ज्ञानराहित्यवर्णनम् । शून्यवादेऽप्ययमेवाभिप्रायो योज्यः । विज्ञानवादिनस्तु क्षणिकविज्ञानप्रवाह आत्मेति वर्णयन्ति तेषां मतेऽपि संवृतस्य विषयोपप्लवस्य विद्यया विनिवृत्तौ विशुद्धविज्ञानसंतानोदयो विमुक्तिः । उक्तंहि 'धीसंततिः स्फुरति निर्विषयोपरागा' इति । संतानो नाम नानाव्यक्तीनां नैरन्तर्येण वर्तमानत्वं । तच्चानुभवदशायां सैवेयं ज्वालेतिवदेकत्वेनानुभूयमानत्वम् । तथाचानुभवत आत्मन ऐक्ये सिद्धे युक्त्या यत्तस्य लक्षणभङ्गसमर्थनं तद्बाह्यार्थक्षणिकत्वसाधनाय यत्सत्तत्क्षणिकमिति व्याप्तेरनैकान्तिकत्वपरिहारेण समर्थनार्थम् । नच प्रयोजनवशाद्वस्तुनोऽन्यथात्वं शास्त्रकर्ता कथं प्रतिपादयेदिति शङ्कनीयम् । यतो भाट्टाः 'स्वप्रकाशविज्ञानाकार एव घटादिर्न तु बाह्यः' इति बाह्यार्थास्तित्वमपलपतो बौद्धान्निराकर्तुं स्वानुभवसिद्धं ज्ञानस्य स्वप्रकाशत्वं परित्यज्य नित्यानुमेयतामाहुः । तथा सति हि घट इत्यादिज्ञानेषु ज्ञानव्यक्तेरप्रत्यक्षत्वात्प्रत्यक्षत्वेन प्रतीयमानो घटाद्याकारो बाह्यार्थस्तस्यैवेति तेषामभिप्रायः । एवं विज्ञानवादिनोऽपि योऽहमद्राक्षं स एवेदानीं स्पृशामीति पूर्वोत्तरक्षणयोरेकत्वप्रतिसंधानेनात्मनः स्थायित्वे स्वानुभवसिद्धे यत्क्षणभङ्गसमर्थनं तदुक्तप्रयोजनायैवेति अस्मदुक्तार्थतात्पर्यं नैव व्याहन्यते । मीमांसकानां शास्त्रं तु भिन्नविषयत्वाद्यथोदीरितमात्मस्वरूपं न विरुणद्धि । तथाहि वेदाप्रामाण्यवादिनो बौद्धान्निराकृत्य तत्प्रामाण्यं समर्थयमाना भाट्टाः प्राभाकराश्च वेदोक्तं यागहोमादिकं निर्वर्त्य स्वर्गादौ तत्फलमुपभोक्तुं देहातिरिक्तः कश्चिदात्मा कर्ता भोक्तास्तीति तन्नास्तित्ववादिनश्चार्वाकादीन्निराचक्रुः । कर्तृत्वभोक्तृत्वविशिष्टात्मरूपप्रतिपादनस्यैव स्वशास्त्रप्रतिपाद्ययागदानाद्यौपयिकत्वात्तावन्मात्रस्वरूपमात्मनस्तैः प्रतिपादितम् । नत्वौपनिषदं कर्तृत्वभोक्तृत्वादिसर्वविक्रियारहितं रूपम् । तदवगमस्य स्वशास्त्रे प्रयोजनाभावात् प्रत्युताकर्त्रात्मज्ञाने सति कर्मस्वधिकारभङ्गप्रसङ्गाच्च । तदुक्तं भगवद्भिर्भाष्यकारैः–अनुपयोगादधिकारविरोधाच्च । ननु कर्त्रात्मस्वरूपप्रतिपादनं तदतिरिक्तात्मस्वरूपास्तित्वनिषेधपरं कस्मान्न भवति तदस्तित्वाङ्गीकारादिति ब्रूमः । तत्र तावद्ब्रह्मचार्याः 'इत्याह

तस्मान्निधाय तत्रैव स्वाभिसंधिं बुधः सुधीः ।
शास्त्रादिषु स्वधर्मेण शृङ्गारादीन्भजत्वलम् ॥ ४५ ॥
नित्यानन्दात्मभत्वानि सिद्धान्यत्र चिदंशतः ।
रत्याद्यंशेन भास्यत्वमनित्यत्वमपि स्फुटम् ॥ ४६ ॥
शान्तशृङ्गारकरुणाहास्याद्भुतभयानकाः ।
वीरबीभत्सरौद्राश्च लोके नव रसाः स्मृताः ॥ ४७ ॥
त्रयस्त्रयः क्रमादेते विज्ञेयाः सात्त्विकादयः ।
आद्यदादिवदेकैकत्रिकेऽपि च पुनस्तथा ॥ ४८ ॥

---

नास्तिक्यनिराकरिष्णुरात्मास्तितां भाष्यकृदत्र युक्त्या । दृढत्वमेतद्विषयश्च बोधः प्रयाति वेदान्तनिषेवणेन' इति । गुरुमतानुसारिणा भवनाथेनाप्युक्तमर्थवादाधिकरणे । अथवा वेदान्तानां चोदनैकवाक्यता 'अथातो ब्रह्मजिज्ञासा'इति शास्त्रान्तरस्थितेरिति । तस्मान्मीमांसकानामपि उपनिषदेकसमधिगम्यमद्वितीयब्रह्मात्मैकत्वमभिमतमेवेति तच्छास्त्रमप्यस्मदुक्तेऽर्थे पर्यवस्यति । एवं शास्त्रान्तरमागमान्तरं चास्मिन्नेवार्थे योजनीयमिति । तथा असावद्वैतात्मा मोक्षः कैवल्यस्वरूपः तज्ज्ञानात् तद्विषयकदृढतमसाक्षात्कारान्निमित्तादित्यर्थः । यतेः संध्यावन्दनमारभ्य निदिध्यासनान्तयतनशीलस्य मुमुक्षोः व्यज्यते सकार्यकाविद्याध्वंसद्वारा कण्ठचामीकरन्यायेन प्रकटो भवतीत्यर्थः ॥ ४४ ॥ इत्थं प्रासङ्गिकं समाप्य तस्य प्रकृते साङ्गत्यमाह—**तस्मादिति** । अद्वैतब्रह्मण एव मुख्यरसत्वसिद्धेरित्यर्थः । सुधीः शोभना सत्वप्राधान्येनान्तरविचारचतुरा धीर्यस्य स तथा । जिज्ञासुरित्यर्थः । एतादृशः बुधः शास्त्रतात्पर्यपरायणः । तत्रैवोक्तरूपे रस एव स्वाभिसंधिं निजतात्पर्यं निधाय अचलीकृत्य शास्त्रादिषु रसशास्त्रादिषु आदिना लोकसंग्रहः । स्वधर्मेण नतु यथेष्टाचारेण शृङ्गारादीन् रसानलं पर्याप्तं भजत्वनुभवत्वित्यर्थः । अत्र सुधीरिति बुध इति चोभयं तु क्रमेण विद्यामदप्रमाणाद्यसंभावनादिदोषद्वयनिरासार्थमेव ॥ ४५ ॥ ननु यदि निरुक्तरूप एव रसस्तर्हि तस्य सत्यं ज्ञानमित्यादिस्मृतेर्नित्यत्वादिकमवश्यं वक्तव्यम् । तत्त्वनुपपन्नमेव । उत्पन्नो रसः नष्टो रसः सम्यगद्यानुभूतो रस इत्याद्यनुभवविरोधादिति चेन्न । यद्वा तत्संयुतीति द्वितीयलक्षणलक्षितस्य स्थाय्युपहितचित एव पक्षद्वयम् एवात्रेत्यादिना प्राक्तनग्रन्थेन प्रकृतरसतयाङ्गीकृतत्वात् । तथाचांशभेदेनोभयव्यवस्थापीत्याह—**नित्येति** । नित्यश्च आनन्दश्चात्मभः स्वप्रकाशश्चेति तथा तेषां भावा इत्यर्थः । अत्र स्थाय्युपहितचिद्रूपे रसे । उक्तं हि रसगङ्गाधरे—चिदंशमादाय नित्यत्वं स्वप्रकाशत्वं च सिद्धम् । रत्याद्यंशमादायानित्यत्वमितरभास्यत्वं चेति ॥ ४६ ॥ एवं रससामान्यलक्षणं निर्वर्ण्य तद्भेदानुद्दिशति—**शान्तेति** ॥ ४७ ॥ ननु 'शृङ्गारहास्यकरुणारौद्रवीरभयानकाः । बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः' इति काव्यप्रकाशाद्युक्तभरतकारिकाक्रमं विहाय कोऽयं विलक्षण एव क्रमस्त्वयोरीक्रियत इत्य-

**निर्वेदोऽथ रतिः शोको हासोऽथो विस्मयो भयम् ।**
**उत्साहोऽथ जुगुप्सा च क्रोधश्चेति पुरातनैः ॥ ४९ ॥**

तत्तद्बीजमाह—**त्रयस्त्रय इति** । एते प्रतिपदमुक्ताः शान्तादयो रसाः क्रमात् त्रयस्त्रयः सात्त्विकादयः सात्त्विका राजसास्तामसाश्चेत्यर्थः । विज्ञेया बोध्या इति यावत् । पुनरेकैकत्रिकेऽपि सात्विकादिभेदं सदृष्टान्तं स्पष्टयति—**जाग्रदादिव-दिति** । तथा प्राग्वत्सात्विकादयो विज्ञेया इत्यर्थः । तदयं क्रमः—सात्विकसात्विकः शान्तः, सात्त्विकराजसः शृङ्गारः, सात्विकतामसः करुणः, राजससात्विको हास्यः, राजसराजसोऽद्भुतः, राजसतामसो भयानकः, तामससात्विको वीरः, तामसराजसो बीभत्सः, तामसतामसो रौद्र इति । जाग्रदादिप्रत्येकं त्रैविध्यमुक्तं श्रीमधुसूदनसरस्वतीभिः सिद्धान्तबिन्दौ 'प्रमाज्ञानं जाग्रज्जाग्रत् । शुक्तिरजतादिविभ्रमो जाग्रत्स्वप्नः । श्रमादिना स्तब्धीभावो जाग्रत्सुषुप्तिः । एवं स्वप्ने मन्त्रादिप्राप्तिः स्वप्नजाग्रत् । स्वप्नेपि स्वप्नो मया दृष्ट इति बुद्धिः स्वप्नस्वप्नः । जाग्रद्दशायां कथयितुं न शक्यते स्वप्नावस्थायां यत्किंचिदनुभूयते तत्स्वप्नसुषुप्तिः । एवं सुप्त्यवस्थायामपि सात्विकी या सुखाकारा वृत्तिः सा सुषुप्तिजाग्रत् । तदनन्तरं सुखमहमस्वाप्समिति परामर्शस्तत्रैव या राजसवृत्तिः सा सुषुप्तिस्वप्नः । तदनन्तरमेव दुःखमहमस्वाप्समिति परामर्शोपपत्तिः । एवं तामसीवृत्तिः सुषुप्तिसुषुप्तिः । तदनन्तरं गाढमूढोऽहमासमिति परामर्श इति ॥ ४८ ॥ एतेषां स्थायिभावानप्युपादानत्वेनाभ्यर्हितत्वादुद्दिशति—**निर्वेद**इत्यादिना सार्धेन । तत्र 'सत्वात्संजायते ज्ञानं रजसो लोभ एव च । प्रमादमोहौ तमसो भवतोऽज्ञानमेव च' इति श्रीमद्भगवद्वचनादेवमेतेषां व्यवस्था । विवेकेन दृश्यौदासीन्यं निर्वेदः । तस्य सदसज्ज्ञानमात्रघटितत्वेन शुद्धसात्विकत्वादुक्तरूपशान्तरसोपादानत्वम् । उक्तं हि रसगङ्गाधरे—'नित्यानित्यवस्तुविचारजन्मा विषयविरागाख्यो निर्वेदः' इति। तथा स्त्रीपुंसयोरन्योन्यमन्यतरालम्बनः क्वचिदुभयालम्बनो वा प्रेमाभिधश्चित्तवृत्तिविशेषो रतिः । अस्य तु ज्ञानघटितत्वेऽपि लोभहेतुत्वादुक्तरूपशृङ्गारोपादानत्वम् । यत्तु पण्डितरायैः स्त्रीपुंसयोरन्योन्यालम्बनप्रेमाख्यश्चित्तवृत्तिविशेषो रतिभाव इति तल्लक्षणमुक्तं तत्र 'किंद्रुतपदं प्रयासि प्रतीच्छ मुग्धे च्युतमलंकारम् । मृगयाम्यच्युतमेव भ्रष्टैरेतैर्न मे हानिः' इत्यादावेकतररतौ अव्याप्तिरिति वदन्तीति तदाशय एवायं मयात्र प्रकटितः । इष्टविच्छेदजन्यो रत्यनवच्छिन्नो मनोविकारः शोकः । विप्रलम्भशृङ्गारे अतिव्याप्तिवारणाय रतीत्यादि । तथाचाह रसतरङ्गिणीकारः—'इष्टविश्लेषजनितो रत्यनालिङ्गितः परिमितो मनोविकारः शोकः' इति । अस्य च मोहपूर्वकज्ञानविशेषघटितत्वादुक्तरूपकरुणारसोपादानत्वम् । कुतूहलकृतो विकासो हासः । एतस्य लोभपूर्वकज्ञानघटितत्वादुक्तरूपहास्यरसोपादानत्वम् । चमत्कारदर्शनादिजन्मा चित्तवृत्तिविशेषो विस्मयः । तदुक्तं रसगङ्गाधरे—अलौकिकवस्तुदर्शनादिजन्मा आश्चर्याख्यो विस्मय इति । एतस्यातिलोभपूर्वकत्वादुक्ताद्भुतहेतुत्वम् ।

**स्थायिभावाः क्रमादेते शान्तादीनां प्रकीर्तिताः।**
**स्थायित्वं वासनात्वेऽपि मुहुर्व्यक्तत्वमिष्यताम् ॥ ५० ॥**
**एतेषां कारणानि स्युर्विभावा द्विविधा अपि।**
**अनुभावास्तु कार्याणि सहाया व्यभिचारिणः ॥ ५१ ॥**
**आलम्बनविभावाश्च तथैवोद्दीपनाभिधाः।**
**अनुभावा अथ तथा क्रमाद्बोध्याश्चतुर्विधाः ॥ ५२ ॥**

---

स्वप्रतिकूलानुसंधानजं भयम् । अस्याज्ञानपूर्वकलोभहेतुत्वादुक्तरूपभयानकरसोपादानत्वम् । सामर्थ्यजन्य औन्नत्यनामा मनोविकार उत्साहः । अयं च ज्ञानपूर्वकप्रमादैकत्वादुक्तरूपवीररसोपादानम् । अहृद्यदर्शनादिजा चित्तवृत्तिर्जुगुप्सा । अस्याः प्रमादलोभपूर्वकत्वात्तादृशबीभत्सरसोपादानत्वम् । अभिलाषविच्छेदजो वृत्तिविशेषः क्रोधः । अस्य च मोहमूलत्वे सति प्रमादघटितत्वादुक्तरूपरौद्ररसोपादानत्वमिति ॥ ४९ ॥ एवमुद्दिष्टानामेतेषां स्थायिभावत्वमभिधत्ते—**स्थायी**त्यर्धेन । एवं स्थायिभावानुक्त्वा तत्सामान्यं लक्षयति—**स्थायित्व**मित्यर्धेन । तदुक्तं रसगङ्गाधरे—नन्वचित्तवृत्तिरूपाणामेषामाशुविनाशित्वेन स्थिरत्वं दुर्लभं, वासनारूपतया स्थिरत्वं तु व्यभिचारिष्वतिप्रसक्तमिति वाच्यम् । वासनारूपाणामेषां मुहुर्मुहुरभिव्यक्तिरेव स्थिरपदार्थत्वात् । यदाहुः—'विरुद्धैरविरुद्धैर्वा भावैर्विच्छिद्यते न यः । आत्मभावं नयत्याशु स स्थायी लवणाकरः । चिरं चित्तेऽवतिष्ठन्ते संबन्ध्यन्तेऽनुबन्धिभिः । रसत्वं ये प्रपद्यन्ते प्रसिद्धाः स्थायिनोऽत्र ते' इत्यादिना । तस्मान्मुहुः प्रकटवासनाविशेषत्वं स्थायित्वमिति तल्लक्षणं फलितम् । अत्र संचारिभावेष्वतिव्याप्तिवारणाय मुहुरिति । तथा निगूढसंस्कारादौ तद्वारणाय प्रकटेत्यादि ॥ ५० ॥ नन्वस्त्वेवं स्थायिभावलक्षणं तथाप्येतेषामपि मुहुराविर्भावे किंचिन्निमित्तमस्ति न वा । नाद्यः । मुहुःशब्दितसततप्राकट्याभावप्रसङ्गात् । नान्त्योऽपि । अनन्तासु चित्तवृत्तिष्वेतेषामेव किमिति सातत्येन प्राकट्यमिति प्रश्नापत्तेरित्यत आह—**एतेषामिति** । कारणानि निमित्तकारणानीत्यर्थः । तदुक्तं काव्यप्रकाशमूले 'कारणान्यथ कार्याणि सहकारीणि यानि च । रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः । विभावा अनुभावाश्च कथ्यन्ते व्यभिचारिणः' इति । तस्मान्मुहुःशब्दस्य पौनःपुन्यार्थकत्वेन सातत्यपरत्वविरहान्नोक्तशङ्कावकाश इत्याशयः । विभावयन्ति प्रकटयन्ति स्थायिन इति व्युत्पत्त्या स्थायिनिमित्तत्वं तत्त्वमित्यादीनि तेषां लक्षणान्यूह्यानि—**द्विविधा इति**। आलम्बनत्वोद्दीपनत्वोपाधिभ्यां द्वैविध्यं बोध्यम् ॥ ५१ ॥ तत्रोद्दिष्टं विभावद्वैविध्यं स्पष्टयति—**आलम्बने**त्यर्धेन । निरुक्तं तद्रूपं रसतरङ्गिण्याम् 'यमालम्ब्य रस उत्पद्यते स आलम्बनविभावः । यो रसमुद्दीपयति स उद्दीपनविभावः' इति । एवं प्रतिज्ञाताननुभावानपि स्फुटयितुं तत्संख्यां ख्यापयति—**अनुभावा** इत्यर्धेन ।

**कायिका मानसास्तद्वदाहार्याः सात्त्विका अपि ।**
**श्रवणाद्याः प्रमोदाद्या रामत्वाद्या नटे क्रमात् ॥ ५३ ॥**
**इत्यसंख्यास्त्रयोऽथाष्टौ स्तम्भाश्रुस्वरभङ्गकाः ।**
**कम्पवैवर्ण्यरोमाञ्चलयस्वेदा इमेऽन्तिमाः ॥ ५४ ॥**
**संचारिणां तु लक्ष्मादि वक्ष्याम्यग्रे यथाक्रमम् ।**
**ननु प्राचां क्रमो नैवमित्याशङ्का भवेदतः ॥ ५५ ॥**
**शृङ्गारहास्यकरुणा रौद्रवीरभयानकाः ।**
**बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः ॥ ५६ ॥**
**निर्वेदस्थायिभावाख्यः शान्तोऽपि नवमो रसः ।**
**इति सूत्राविसृत्यैव निरूप्यन्ते क्रमादिमे ॥ ५७ ॥**
**व्यक्तः स तैर्विभावाद्यैः स्थायीभावो रसः स्मृतः ।**
**इति वाक्यवशादादौ स्थायिलक्ष्मादि कथ्यते ॥ ५८ ॥**
**यूनोः समो वा विषमोऽन्योन्यं रागो रतिः स्मृता ।**
**शिवावैक्यं गतौ दूति कृष्णः किं मां स्मरत्यपि ॥ ५९ ॥**

---

॥ ५२ ॥ उक्तं चातुर्विध्यं केन भेदेनेत्यतस्तद्विशदयति—**कायिका** इत्यर्धेन । काये देहे भवाः कायिकाः, मनसि भवाः मानसाः, बाधकालीनेच्छाजन्यज्ञानरूपा आहार्याः, सत्वगुणप्राधान्येन भवाः सात्विका इत्यर्थः । तेषामेव क्रमात्स्वरूपाणि वदन्कायिकादीनां त्रयाणामेव दिङ्मात्रेण रूपमुपन्यस्यति—**श्रवणाद्या** इत्यर्धेन । वेदान्तस्यैव श्रवणं शान्तरसे कायिकोऽनुभावः । आद्यपदेनैकान्तवाससाधुसमागमादिः प्रमोदो ब्रह्मानन्दः । आदिपदात्समाध्यादि । नटे नर्तके वेषधारिणि शैलूषे रामत्वाद्याः निरुक्तरसव्यञ्जकयोगवासिष्ठाख्यमहारामायणाभिनये इति भावः । आद्यपदाद्वसिष्ठत्वादिः ॥५३॥ तत्र हेतुमाह—**इतीति**। तर्हि सात्विकानां किमस्ति संख्या तत्रोमिति वदंस्तामाह—**अथेति** । अथशब्दो राश्यन्तरसूचकः । स्तम्भः शरीरादितादस्थ्यम् । सत्वगुणेत्यादि सर्वत्र चित्तैकाग्र्यं लयः ॥ ५४ ॥ **संचारिणां त्विति** । इदं हि क्रमप्राप्तव्यभिचारिभावनिरूपणसमाधानार्थम् । प्राचामेव रसनिरूपणक्रममनुसर्तुं तत्र हेतुत्वेन शङ्कामुत्थापयति—**नन्वित्यर्धेन** ॥ ५५ ॥ उक्तनिरूपणं सप्रमाणं प्रतिजानीते—**शृङ्गारेत्यादियुग्मेन** ॥ ५६ ॥ सृत्या सरण्या ॥ ५७ ॥ एवं रसप्रपञ्चने प्रतिज्ञाते तत्प्रसङ्गेन तन्मूलीभूतस्थायिभावलक्षणादिनिरूपणं सप्रमाणमवतारयति—**व्यक्त इति** । **इतीति** । उक्तप्रकारकाव्यप्रकाशकारिकावशादित्यर्थः । स्थायिभावस्य प्राधान्यादिति यावत् । **लक्ष्मादीति** । 'चिह्नं लक्ष्म च लक्षणम्' इत्यमराल्लक्षणमित्यर्थः । आदिनोदाहरणसंग्रहः ॥ ५८ ॥ तत्र 'रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा । जुगुप्सा विस्मयश्चेति स्थायिभावाः प्रकीर्तिताः' इत्युक्तेः प्रथमं शृङ्गारस्य स्थायिभावं रत्याख्यं लक्षयति—**यूनोरित्यर्धेन** । तरुणयोः स्त्रीपुंसयोरित्यर्थः । बालयोर्वृद्ध-

**हासः कुतूहलकृतो विकासः परिकीर्तितः ।**
**प्रातः कज्जललिप्तास्यां वीक्ष्य राधां मुमोद सः ॥ ६० ॥**
**शोको वृत्तिरभीष्टस्य ध्वंसजा रत्यमण्डिता ।**
**रुरोद हन्त गान्धारी विनाश्रुभिरपुत्रिणी ॥ ६१ ॥**
**विच्छेदादभिलाषस्य वृत्तिः क्रोधोऽभिधीयते ।**
**रेऽब्धे रामस्य बाणोऽयं मृजोऽपि घटजो न किम् ॥६२॥**

---

योश्च प्रायेण रागानुपलब्धेः क्वचिदुपलब्धावप्युक्तरसस्थायित्वस्य तत्राभावाद्यूनोरित्युक्तम् । एवंच यूनोरन्योन्यस्मिन् समो वा विषमो वाऽनुरागो रतिरिति तल्लक्षणम् । तत्र पुत्रादिविषयकेऽनुरागेऽतिव्याप्तिवारणायान्योन्यस्मिन्निति । एकतरानुरागे तुल्यानुरागे चाव्याप्तिनिरासार्थं विषमादिपदम्।एवंच तुल्यानुरागत्वं समरतिलक्षणमेकतरानुरागत्वं विषमरतित्वं चेति तल्लक्षणे बोध्ये।तमुदाहरति—**शिवावि**त्यवशिष्टार्धेन । हे दूति,शिवौ पार्वतीपरमेश्वरौ। ऐक्यं भेदराहित्यम् । अर्धनारीत्वेनैकदेहत्वमिति यावत् । गतौ प्राप्तौ । प्रेम्णेति शेषः । एवंच कृष्णः मां स्मरत्यपि किम् । तस्मादेतावत्कालं मदुपेक्षणात्तत्प्रेम मयि नास्त्येव किंत्वहमेव तदनुरागिणी । नोचेत् शिवयोरिवावयोरप्यैक्यं किमिति न जातमासीदिति भावः । अत्र प्रथमं समप्रेमोदाहरणं द्वितीयं विषमप्रेमोदाहरणमिति बोध्यम् । यथावा गोवर्धनाचार्याः—'प्रणयकुपितप्रियापदलाक्षासंध्यानुबन्धमधुरेन्दुः । तद्वलयकनकनिकषग्रावग्रीवः शिवो जयति' इति । भवभूतिरप्युत्तररामचरिते रामवाक्येन 'सेयं ममाङ्गेषु सुधारसच्छटासुपूरकर्पूरशलाकिका दृशोः । मनोरथश्रीर्मनसः शरीरिणी प्राणेश्वरी लोचनगोचरं गता' इति च ॥ ५९ ॥ एवं क्रमेणावशिष्टानपि हासादिस्थायिभावानष्टभिः पद्यैः पूर्वोत्तरार्धाभ्यां संलक्ष्योदाहरति—**हास** इत्यादिना । कुतूहलेति पदं तु 'हसितमपि शून्येन मनसा'इति भर्तृहरिवचनात्कोपप्रच्छादकमुखविकासेऽतिव्याप्तिव्यावृत्तये । तत्र कुतूहलकृतत्वाभावादिति भावः । प्रातरित्युदाहरणम् । सः श्रीकृष्णः । एतेन निशि नवनीतादिचौर्यावसरे स्वेन तन्मुखे कज्जलं लापितमिति ध्वनितम् ॥ ६० ॥ **शोक इति**। अभीष्टस्य ध्वंसजा रत्यमण्डिता वृत्तिश्चित्तपरिणामविशेषः शोक इत्यन्वयः । रतीति विशेषणाद्विप्रलम्भशृङ्गारे न व्यभिचारः । तत्र रत्यमण्डितत्वाभावादिति । रुरोदेति गान्धारी । हन्तेति खेदे।अपुत्रिणी मृतैकोत्तरशतपुत्रत्वेन पुत्रहीना सतीत्यर्थः । अश्रुभिर्विनैव पातिव्रत्यवशान्निबद्धनेत्रतया अश्रुसत्वेपि तत्प्राकट्याभावाल्लोकदृष्ट्या नेत्रोदकैर्विनैव रुरोद शुशोचेति योजना । यथावा रसतरङ्गिण्याम्—'विरहज्वरमूर्च्छया पतन्तीं नयनेनाश्रुजलेन सिच्यमानाम् । समवेक्ष्य रतिं विनिश्वसन्तीं करुणाकुलितो बभूव शंभोः' इति । अत्र नयनेनेत्येकवचनं तु संमुखस्थितशिवनेत्रयोः सूर्यचन्द्रत्वात्तत्सूर्यकिरणैरेतदेकनेत्राश्रूणां शोष्यमाणत्वादेव ॥ ६१ ॥ **विच्छेदादिति** । अभिलाषस्य वाञ्छाविशेषस्य विच्छेदाद्धेतोर्या मनसो वृत्तिः स क्रोधोऽभिधीयत इति संबन्धः ।

उत्साहः शक्तिसंभूता वृत्तिरौन्नत्यनामिका ।
धीरे सति विचारेऽत्र कः स्मरः कामिघस्मरः ॥ ६३ ॥
प्रतिकूलोपलम्भेन जाता वृत्तिर्भयं स्मृतम् ।
चकम्पे यष्टिकाहस्तां यशोदां वीक्ष्य माधवः ॥ ६४ ॥
अहृद्यदर्शनाद्युत्था चित्तवृत्तिर्जुगुप्सनम् ।
ईश्वरोऽप्यसुरास्राणि नृहरिः किं दधौ गले ॥ ६५ ॥
चित्रवस्तुपरिज्ञानजन्या वृत्तिस्तु विस्मयः ।
ब्रह्मापि तृणवद्यस्यामहो केयं गुरोः कृपा ॥ ६६ ॥
दृश्यौदास्यं विवेकेन दृढं निर्वेद उच्यते ।
श्रियोऽप्यधरपीयूषपानैरलमलं मम ॥ ६७ ॥

---

**रेऽब्धे इति** । इदं हि समुद्रं प्रति श्रीरामवचनम् । रे इति नीचसंबोधने । अरे समुद्र, अयं धनुष्यारोपितत्वेन प्रत्यक्षः रामस्य मम बाणः शरः भूजोऽपि पृथिव्याः सकाशादुत्पन्नोऽपि । अपिशब्देन पृथ्वीजन्यो घटोऽपि भवति । तथा किं तेन मदुदकशोषणं कर्तुं शक्यत इति तत्साम्येनैतस्याप्यवहेलनं मा कुर्विति द्योतितम् । यतः एतादृशोऽप्ययं घटजः कुम्भसंभवो भगवानगस्तिमुनिः स न भवति किम् । अपितु भवत्येवेत्यर्थः । अगस्त्येन यथा निखिलाब्धिशोषणं निमेषमात्रेणैव कृतं तथैवायं करिष्यतीति सावधानो भवेति भावः । तत्र रामस्येति पदेन रामाख्यजगदेकवीरसंबन्धित्वं हेतुर्ध्वनितः ॥ ६२ ॥ **उत्साह इति** । औत्कव्यापरपर्यायमौन्नत्यं प्रायो यावज्जीवेष्वपीत्यतो विशिनष्टि—**शक्तीति** । शक्तिः सामर्थ्यम् । **धीर इति** । अचल इत्यर्थः । **कामीति** । कामिनां स्त्रैणानां घस्मरः । 'भक्षको घस्मरोऽद्मरः' इत्यमरवचनाद्भक्षक इत्यर्थः । एतादृशः स्मरः कामः कः । न किंचित्कर इति यावत् । इदं तु वक्ष्यमाणज्ञानवीरोत्साहोदाहरणं बोध्यम् ॥ ६३ ॥ **प्रतिकूलेति** । स्वस्य प्रतिकूलं विरोधि यद्वस्तु तस्य य उपलम्भः प्राप्तिस्तेनेत्यर्थः । **चकम्प इति** । मथनपात्रभञ्जनकाल इति शेषः ॥ ६४ ॥ **अहृद्येति** । न हृद्यं रम्यमहृद्यं निन्द्यं तस्य यद्दर्शनादि । आदिना श्रवणादिग्रहः । तस्मादुत्तिष्ठत्युत्पद्यत इति तथा अमङ्गलवस्तुदर्शनश्रवणादिजन्येत्यर्थः । **ईश्वरोऽपीति** । अत्रापिना प्रयोजनाभावः सूचितः । नृहरिः ना पुरुषः स चासौ हरिः सिंहश्चेति तथा नरसिंह इत्यर्थः । **असुरेति** । असुरस्य हिरण्यकशिपोरस्राणि रक्तकर्दमितमांसखण्डानि तान्यपि गले स्वकण्ठे किं दधौ किमिति धृतवानित्यर्थः । तदनुचितमिदमस्येति रहस्यम् ॥ ६५ ॥ **चित्रेति** । मनस इति प्राग्वत् । **ब्रह्मापीति** । यस्मान्मद्वैतं ब्रह्मापि तृणवत्सुलभमित्यर्थः। यद्वा ब्रह्मा विधातापि तृणवत्तुच्छ इति यावत्॥६६ **दृश्येति** । दृश्यं द्वैतं तत्र औदास्यम् । उदासीनत्वमित्यर्थः । श्मशानश्रावणयोर्वैराग्यत्वव्यावृत्तये विवेकेनेति दृढमिति च । **श्रियोऽपीति** । लक्ष्म्या अपीत्यर्थः । एवं चोर्वश्यादीनां कैव कथेति द्योतितम् । वीप्सया दार्ढ्यम् ॥ ६७ ॥

**स्त्रीपुंसालम्बनो ज्योत्स्ना मध्वाद्युद्दीपनस्तथा ।**
**तदीक्षाद्यनुभावश्च हर्षादिसहकार्यपि ॥ ६८ ॥**
**रत्याख्य एव स्थाय्यत्र शृङ्गारोऽसौ द्विधा मतः ।**
**संभोगो विप्रलम्भश्च गुप्तौ स्पष्टौ च तौ पुनः ॥ ६९ ॥**
**कौमुद्यां सह गोपालैः स्वाङ्गणे मुदितं हरिम् ।**
**व्याजादुपगता राधा चकर्षापाङ्गरिङ्गणैः ॥ ७० ॥**

---

एवं स्थायिभावान्निरूप्य पूर्वप्रतिज्ञातत्वेनावसरप्राप्तान्रसान्विवृण्वन्प्रथममुक्तक्रमानुसारेण शृङ्गारं प्रपञ्चयति—**स्त्रीपुंसालम्बन** इत्यादियुग्मेन । स्त्री च पुमांश्च स्त्रीपुंसौ युवानौ तावेवालम्बनमाश्रयो यस्य स तथा । एतेनास्यालम्बनविभावः स्फुटितः । **ज्योत्स्नेति** । ज्योत्स्ना चन्द्रिका च मधुर्वसन्तश्च तौ आदी मुख्यौ येषामुपवनगमनादीनां तान्युद्दीपनानि यस्य सः । एवं तद्विभावानभिधायानुभावमाह—**तदीक्षादीति** । तयोः स्त्रीपुंसयोः या परस्परमीक्षा साभिलाषावलोकनं तदादि मुख्यं येषां मणितरोमाञ्चादीनां तेऽनुभावा यस्य स तथेत्यर्थः । तद्व्यभिचारिणः सूचयति—**हर्षादीति** । हर्षादयः सहकारिणः संचारिभावा यस्य सः । तथापिशब्दौ समुच्चये । तथाच भरतसूत्रम् 'विभावानुभावव्यभिचारसंयोगाद्रसनिष्पत्तिः' इति ॥ ६८ ॥ **रत्याख्य एवेति** । तत्तूदाहृतं प्रागेव व्यक्तः सतैरिति । तस्य द्वैविध्यं विधत्ते—**असाविति** । तत्प्रकारावाह—**संभोग इति** । यूनोर्दर्शनादिजः सुखविशेष इत्यर्थः । विप्रलम्भो विरहः । तदुक्तं काव्यप्रकाशे-तत्र शृङ्गारस्य द्वौ भेदौ संभोगो विप्रलम्भश्चेति । यूनोः संयोगकालावच्छिन्नरतिः संभोगः, वियोगकालावच्छिन्नरतिर्विप्रलम्भ इति वा तल्लक्षणमस्तु । तयोः पुनः प्रत्येकं भेदद्वयमभिधत्ते—**गुप्ताविति** । परकीयाविषयत्वं गुप्तत्वम् । स्वकीयाविषयत्वं स्पष्टत्वम् । तल्लक्षणादिकं लग्ने स्फुटीभविष्यति इति दिक् ॥ ६९ ॥ तथाच गुप्तः संभोगः, गुप्तो विप्रलम्भः, स्पष्टः संभोगः, स्पष्टो विप्रलम्भः, इति सामान्यतश्चतुर्विधः शृङ्गारः सिद्धः । सोऽपि यूनोः समो वा विषम इति प्रतिपदोक्तरत्याख्यस्थायिभावस्य समत्वादिना द्वैविध्याद्द्विप्रकारक इत्यष्टभेदभिन्नः संपन्न इति । तत्राद्यमुदाहरति—**कौमुद्यामिति** । शरद्राकाचन्द्रिकायामित्यर्थः । गोपालैः स्ववयस्यैर्गोपबालैः सह स्वाङ्गणे स्वगृहाजिरे मुदितं चन्द्रिकाद्युद्दीपनदर्शनतो हृष्टं हरिं श्रीकृष्णं राधा व्याजात्किंचिन्निमिषादुपगता समीपं प्राप्ता सतीत्यर्थः । अपाङ्गरिङ्गणैः अपाङ्गयोः रिङ्गणानि गतिविशेषास्तैश्चकर्ष तं आकर्षितवतीति योज्यम् । निरुक्तचन्द्रिकायां मित्रैः सह प्रसन्नं कृष्णं प्रति किंचित्कार्यच्छलेनोपेत्य तं कटाक्षैरलोभयदिति भावः । अत्र मुदितश्रीकृष्णाख्योत्तमतमनायकरूपस्यालम्बनस्य कौमुदीलक्षणस्योद्दीपनस्य वीक्षणविशेषाख्यस्यानुभावस्य व्याजादुपगमनाक्षिप्तस्य व्रीडौत्सुक्यादेर्व्यभिचारिणश्च संयोगात्परिपुष्टश्चकर्षेति पदध्वनितो राधानिष्ठः श्रीकृष्णविषयको रत्याख्यः स्थाय्ये-

वोक्तश्रृङ्गारो व्यज्यते। सह गोपालैः स्वाङ्गण इति पदत्रयं तु तन्मोदे हेतुं सूचयन् तस्य कैशोरावस्थामपि द्योतयति। रिङ्गणपदस्यायमाशयः। यथा बालस्तावद्रिङ्गन्सन्नकस्मादेव चापल्यवशात्किंचिद्वस्तुजातं पश्यतामपि जनानां दृष्टिं वञ्चयित्वैवाकर्षति तद्वद्राधा निजापाङ्गाभ्यां पश्यतामपि गोपालानां दृष्टिं वञ्चयित्वाऽकस्मादेव श्रीकृष्णमनः समाकर्षितवतीति। ननु कथमेवं संभवेद्यतस्तत्सुहृदस्तत्र बहवः स्थिता एवेति तैर्ज्ञातमेवेदं भवेदिति चेन्न। गोपालपदेनैव दत्तोत्तरत्वात्। यतस्ते गोपालनमात्रपटवो ननु श्रृङ्गारचातुरीधुरीणाः। नोचेत्कौमुद्यां सह मित्रैः स्वैरिति विन्यासः कृतः स्यात्। किंच रिङ्गणैरिति पौनःपुन्यसूचकबहुवचनेन चाञ्चल्यं नायिकाक्ष्णोस्तथा तस्याः श्रीकृष्णे प्रेमातिशयोऽप्यावेद्यते। अन्यथा रिङ्गणादित्येवोच्येतेति। अत्र हि प्रागुक्तमाधुर्यादिसमुचितषाड्गुण्ये सति सकलशब्दार्थदोषशून्यत्वरूपकाव्यसामान्यलक्षणवत्त्वं रसमुख्यत्वरूपसरसकाव्यत्वं व्यङ्ग्यप्रधानत्वाख्यमुत्तमोत्तमकाव्यत्वाभिधं सामान्यतो ध्वनित्वं शक्तिमूलविवक्षितान्यपरवाच्यालक्ष्यक्रमव्यङ्ग्यरसध्वनित्वं गुप्तसंभोगश्रृङ्गारवत्त्वं चेति पञ्चलक्षणी बोध्या। उक्तदोषराहित्ये सति धर्मरसलक्षणरीत्यलंकृतिवृत्त्याख्यगुणषट्कवत्त्वात्। हरति स्वगुणैः सकलसुन्दरीमनांसीति 'राध साध संसिद्धौ' इति धातुसूत्राद्राधयति संसाधयति चातुर्यैः स्वेष्टमिति च व्युत्पत्त्या साभिप्रायविशेष्याख्यपरिकराङ्कुरालंकारात्, तथा ज्वराद्याधिभौतिकदुःखसत्त्वे परमसुन्दर्यादेरपि तृणत्वापत्तेरतो मुदितमिति विशेषणस्यापि हेतुघटितत्वेन 'अलंकारः परिकरः साभिप्राये विशेषणे' इत्याद्युक्तलक्षणपरिकरालंकाराच्चोक्तरसस्य प्राधान्यात्, चकर्षेतिपदस्याकर्षणकरणलक्षणवाच्यार्थापेक्षया राधाकर्तृकश्रीकृष्णकर्मकनेत्रान्तव्यापारकरणकप्रलोभनरूपव्यङ्ग्यार्थस्यैवाधिकचमत्कारकारिकत्वात्, कौमुद्यादिपदेषु लक्षणाभावविवक्षितान्यपरवाच्यार्थत्वाल्लक्ष्यक्रमव्यङ्ग्यत्वेभ्यः निरुक्तनायिकायाः परकीयात्वेनोक्तरसस्य तद्विषयत्वस्त्रीपुंसदर्शनादिजनितसुखविशेषत्वाभ्यां चेति। नन्वस्त्वेवं लक्षणसमन्वयोऽन्येषां लक्षणानाम्। तथापि राधायाः परकीयात्वेनात्र गुप्तसंभोगश्रृङ्गाररसत्वं साधितं तदनुपपन्नम्। गुप्तत्वे परकीयामात्रविषयत्वस्य नियतत्वाभावात्, स्वकीयायामपि लज्जाभयपराधीनरतिलक्षणायां मुग्धापरनामधेयायां नवोढायां तथा समानलज्जामदनत्वलक्षणायां मध्याभिधायां च तत्सत्त्वात्। तत्राद्योदाहरणं रसगङ्गाधरे यथा—'शयिता सविधेऽप्यनीश्वरा सफलीकर्तुमहो मनोरथान्। दयिता दयिताननाम्बुजं दरमीलन्नयना निरीक्षते' इति। 'समीपे निकटासन्नसंनिकृष्टसनीडवत्। सदेशाभ्याशसविधसमर्यादसवेशवत्। उपकण्ठान्तिकाभ्यर्णाऽभ्यग्रा अप्यभितोऽव्ययम्' इत्यमरात्सविधे समीप इत्यर्थः। द्वितीयोदाहरणं काव्यप्रकाशे अमरुककवेः पद्यमुदाहृतं यथा—'शून्यं वासगृहं विलोक्य शयनादुत्थाय किंचिच्छनैर्निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम्। विश्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं

**हैयंगवीनमोषाय कृष्णोऽन्तःपुरमागतः ।**
**आभीरतरुणीं सुप्तां दृष्ट्वा पुलकितोऽभवत् ॥ ७१ ॥**

---

लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता' इति । तस्मात् 'जायापत्योर्मिथोरत्यावृत्तिः शृङ्गार उच्यते । संयोगो विप्रलम्भश्चेत्येष तु द्विविधो मतः । तौ तयोर्भवतोर्वाच्यौ बुधैर्युक्तवियुक्तयोः । प्रच्छन्नश्च प्रकाशश्च पुनरेष द्विधा मतः' इत्यभियुक्तोक्तेः प्रच्छन्नपदवाच्यं गूढत्वमेव त्वया गुप्तपदेनोररीकृत्यात्रापि गोपालानां निरुक्तराधाकृष्णचेष्टिताज्ञानात्तथात्वमस्त्येवेति लक्षणसंगतिः कार्येति चेत्सत्यम्, तथापि प्रच्छन्नत्वं किमुभयभिन्नागोचरत्वमन्यतरागोचरत्वं वा । आद्ये उभयैकगोचरत्वस्य तदर्थत्वेनोषायाः स्वाप्निककान्तोपलम्भोत्तरक्षणजन्ये विप्रलम्भेऽव्याप्तेः । अन्त्ये इतरगोचरत्वस्यानिवारितत्वेन प्रकाशत्वापत्तेः । तस्मात्प्राचीनवाक्येऽपि प्रच्छन्नपदेन परकीयाविषयत्वमेव वाच्यम् । अतएव रसमञ्जर्यां तावद्गुप्ताविदग्धालक्षिताकुलटानुशयानानां परकीयायामेवान्तर्भाव इत्युक्तम् । किंचान्यत्रापि प्रच्छन्नाख्यसंभोगविप्रलम्भयोरुदाहरणे परकीयाविषये एवोक्ते । यथा—'भ्रमभ्रुकुटि सस्मितं नमितकंधरं प्रोल्लसत्कपोलपुलकावलि श्वसितकम्पितोरोजकम् । उदञ्चितभुजायुगग्रथितकेशपाशं पुरो गुरोरपि हरिः सुखं सपदि राधयाऽलोक्यते' इति, 'समानकुलशीलयोः समरुचोः परायत्तयोः परस्परविलोकनाकुलितचेतसोः प्रेयसोः । तनुत्वमधिविन्दतोर्बहुविधं विधिं निन्दतोरशक्यविनिवेदना विरहवेदना वर्धते' इतिच । नचेदं विषमानुरागस्यैवोदाहरणं निरुक्तरीत्या राधाया एव रतेरत्र व्यज्यमानत्वात्तथाच प्राक्प्रतिज्ञातसमानुरागकगुप्तसंभोगशृङ्गारस्यैव तद्भेदाष्टके प्रथमत्वात् कथमत्र तदुदाहरणत्वमिति वाच्यम् । निरुक्तहरिपदव्युत्पत्त्यैव तथात्वसिद्धेः । एवंच यतोऽनेन भगवता स्वकीयानन्तसौन्दर्यादिगुणगणैस्तस्याः स्वस्मिन्रतिर्ध्याजागमनादिकार्यलिङ्गकानुमानेन प्रागेवोत्पादितेति सिद्धम् । अतएवेदमप्यर्थात्सिद्ध्यति यत्स्वस्य तस्यां निरतिशया रतिरिति । नोचेदाकर्षणपदद्योतितसंमोहनरूपकार्यस्य विना स्वरतिमनुपपन्नत्वापत्तेः । तस्माद्राधालम्बना कौमुद्युद्दीपना मोदसंचारिभावा संमोहानुभवा भगवद्गता रतिरप्यत्र व्यज्यत इति समानुरागकस्यैवोक्तरसस्येदमुदाहरणमिति दिक् । अत्र परकीया क्रियाविदग्धा प्रौढाभिसारिका नायिका । हर्षितो ललितश्च नायकः । समानुरागको गुप्तसंभोगः शृङ्गारः । परिकरपरिकराङ्कुरावलंकारौ । यथावा रसतरङ्गिण्याम्—'निद्राणे क्षणमुन्नमय्य वदनं कान्ते कुचान्तस्पृशि स्रस्तव्यस्तदुकूलदर्शितवलिप्रव्यक्तनाभिश्रियः । राधाया दरघूर्णदुत्पलदलद्रोणीमदद्रोहिभिर्दृक्कोणस्य तरङ्गितैर्विरचितो दीर्घायुरेव स्मरः' इति ॥ ७० ॥ अथ तमेव विषमानुरागकमुदाहरति—**हैयंगवीनेति** । 'तत्तु हैयंगवीनं यत् ह्योगोदोहोद्भवं घृतम्' इत्यमरोक्तेः नवगोघृतमित्यर्थः । तस्य मोषश्चौर्यं तदर्थमिति यावत् । अन्तःपुरं स्त्रीणां निद्रादिस्थानमित्यर्थः । 'गोपे

**मधुना मधुरोद्याने जानकीं रघुनन्दनः।**
**उल्लसन्तीं समालिङ्ग्य किमनङ्गमचिन्तयत्॥ ७२॥**
**स्वं हीरमन्दिरे कान्तं दूरतः प्रतिबिम्बिते।**
**वैदेही वीक्ष्य पाद्याय स्वेदपूर्णाञ्जलिर्बभौ॥ ७३॥**

गोपालगोसंख्यगोधुगाभीरबल्लवाः' इत्यमरादाभीरो गोपस्तस्य तरुणी काचिद्गोपयुवतिस्तामित्यर्थः। पुलकितः संजातरोमाञ्च इति यावत्। स्पष्टमेवान्यत्। अत्रान्तःपुरपदवाच्यरहःस्थानदर्शनेनोद्दीपितः सुप्तपदाक्षिप्तव्यत्यस्तवसनमुग्धबल्लव्यालम्बनः तद्दर्शनपुलकोद्गमानुभावितस्तदन्यथापत्तिसिद्धहर्षसंचारी श्रीकृष्णनिष्ठो निरुक्तगोपीविषयकरत्याख्यः स्थाय्येव प्रहर्षणालंकारात्प्राधान्येन ध्वनितः। तत्र नायिकायाः सुप्तत्वाद्विषमानुरागत्वं स्पष्टमेव। अत्र तरुणीपदेन सुप्तपदेन च विवसनकुचकनककलशादि तत्तदवयवानां प्रशस्तमवेक्षणादुक्तकामाकुलत्वार्हत्वं कृष्णपदेन श्यामवर्णत्वान्निशि चौर्यायान्तःपुरप्रवेशार्हत्वं च व्यज्यते। अवान्तरपञ्चलक्षण्याः समन्वयस्तु प्रागुक्तदिशैव कार्यः। अत्र मुग्धा परकीया नायिका। प्रहृष्टो नायकः। विषमानुरागको गुप्तसंभोगः शृङ्गारः। प्रहर्षणमलंकारः। तत्तूक्तं कुवलयानन्दकारिकासु—'वाञ्छितादधिकार्थस्य संसिद्धिश्च प्रहर्षणम्। दीपमुद्योजयेद्यावत्तावदभ्युदितो रविः' इति॥ ७१॥ ततः क्रमप्राप्तं स्पष्टसंभोगाख्यं समानुरागकं तमुदाहरति—**मधुनेति**। वसन्तेनेत्यर्थः। **मधुरेति**। मधुरं विकसितत्वेन सुन्दरं मधुरगन्धि वा एतादृशं यदुद्यानमुपवनं तस्मिन्नित्यर्थः। उल्लसन्तीं हृष्यन्तीमित्यर्थः। एतादृशीं जानकीं समालिङ्ग्य गाढमाश्लिष्य रघुनन्दनः श्रीरामः अनङ्गं कामं अचिन्तयत्किं ध्यातवान्किमित्यन्वयः। तदालिङ्गनेन स्तब्धोऽभूदिति भावः। एतेन स्तम्भाख्यः सात्त्विकानुभावः सूचितः। अत्र प्रथमपादेनोद्दीपनविभावो द्वितीयेनालम्बनविभावश्चतुर्थेन सात्त्विकानुभावः समालिङ्ग्येति कायिकानुभावः शेषेण संचारिभावः समुन्नितैरेतैः सीतारामयोः परस्परं समरत्याख्यः स्थायिभावश्चोत्प्रेक्षालंकारापेक्षया मुख्यत्वेन ध्वन्यते। निरुक्तसामग्र्यैव कामस्य समुद्दीप्तत्वसंभवेन तद्ध्यानकल्पनस्य स्तम्भतश्चमत्काराधिक्यानाधायकत्वादिति। अत्र प्रगल्भा स्वीया नायिका। स्तब्धो नायकः। स्वकीयाविषयत्वेन स्पष्टः संभोगाख्यः समानुरागकः शृङ्गारः। उत्प्रेक्षालंकारः। यथावा भानुमिश्राः—'स्तम्भेन चाटुवचनानि पराहतानि पाणिः पयोधरगतो जडतां जगाम। लक्ष्म्याः परंतु पृथुवेपथुरेव नीवीं विस्रंसयन् सुहृदभून्मधुसूदनस्य' इति॥ ७२॥ इयमेव विषमानुरागकमुदाहरति—**स्वमिति**। वैदेही विदेहस्यापत्यं स्त्री सीतेत्यर्थः। एतेनैकान्ते तस्यास्तत्वानुसंधानशीलत्वेन वक्ष्यमाणप्रतिबिम्बेऽपि सत्यत्वभ्रमार्हत्वं द्योतितम्। हीरमन्दिरे हीराख्यप्रसिद्धशुक्ररत्नमये स्वीयविलासनिलय इत्यर्थः। एवं चोद्दीपनविभावः प्रतिबिम्बनार्हत्वं च सूचितम्। दूरतः ततो दूरवर्तिसदःस्थानादितः प्रतिबिम्बितं आगच्छन्त-

**नन्दमन्दिरमाविष्टे कृष्णे सायं सगोधने ।**
**बल्लवीनां विनिश्वासैः संताप्यन्ते तदालयाः ॥ ७४ ॥**
**किमुद्धवसमाधानैर्जातो दोषोदयः खलु ।**
**इत्युक्त्वा हन्त कान्तेति रुदन्ती राधिकापतत् ॥ ७५ ॥**

---

मिव प्रतिफलितम् । एतादृशं स्वं स्वकीयं कान्तं सर्वगुणसुन्दरं निजरमणं श्रीरामचन्द्रमित्यर्थः । एतेन परपुरुषत्वस्याप्रसन्नत्वस्य च व्युदासः । वीक्ष्य अवलोक्य । निरुक्तस्वाभाव्येन प्रतिबिम्बमिदमित्यनुसंधानराहित्यात्सत्यमेवागतं मत्वेत्यर्थः । अनेनालम्बनविभावो ध्वनितः । पाद्याय पादक्षालनोदकार्थं त्वरमाणा सतीति शेषः । एतेनावेगाख्यो व्यभिचारिभावः सतीधर्मश्चावेदितः । अतएव स्वेदपूर्णाञ्जलिः स्वेदेन सात्विकानुभावाख्यघर्मेण पूर्णो भरितोऽञ्जलिस्तद्दर्शनाव्यवहितोत्थानक्षण एव विरचितकरसपुटो यस्याः सा तथेत्यर्थः । एतादृशी बभौ शुशुभे इत्यन्वयः । कामाकुला बभूवेति भावः । एवं चात्र परिपूर्णा रतिरेव भ्रान्तिमदाद्यलंकारापेक्षया मुख्यत्वेन व्यज्यते । अत्र पूर्वोक्तैव नायिका । भ्रमात्मको नायकः । स्पष्टसंभोगाख्यो नायिकामात्रनिष्ठत्वेन विषमानुरागकः शृङ्गारः । भ्रान्तिमदतिशयोक्तिपरिकराङ्कुरादयोऽलंकाराः । यथावा भाणे–'मन्दस्मितेन मधुराधरपल्लवेन कुम्भोन्नमत्कुचभरेण कृशोदरेण । विद्युन्निभाङ्गलतया च विचिन्त्यमाना चेतो धिनोति च धुनोति च चञ्चलाक्षी' इति ॥ ७३ ॥ एवं संभोगचतुष्टयमुदाहृत्याथ विप्रलम्भचतुष्टयमुदाहरन् प्रथमं समानुरागकं गुप्तविप्रलम्भमुदाहरति—**नन्देति** । अत्र पूर्वार्धेऽक्षरार्थः स्पष्ट एव । बल्लवीनामिति । गोपीनामित्यर्थः । विनिश्वासैः विशेषेण दुःखोत्कर्षेण ये निश्वासाः उष्णश्वासास्तैः तदालयाः । 'गृहाः पुंसि च भूम्न्येव निकायनिलयालयाः' इत्यमरात् तासां गोपीनां गृहा इत्यर्थः । संताप्यन्ते संतप्तीक्रियन्त इति यावत् । कृष्णविरहात्ताः संतप्ता बभूवुरिति भावः । अत्र सायपदवाच्यप्रदोषकालेनोद्दीपितः श्रीकृष्णालम्बनो विनिःश्वासानुभावः । संतापाक्षिप्तशोकसहचारी काव्यलिङ्गाद्यलंकारापेक्षया चमत्कारकारित्वेन रत्याख्यः स्थाय्येव मुख्यत्वेन व्यज्यते । किंचैवं सगोधन इति विशेषणे श्लेषेण गोशब्दितगोपीनेत्राण्येव सर्वस्वत्वेन धनानि तैः स्वान्तःकरणवर्तिभिः सह वर्तत इति व्युत्पत्त्या गोप्यालम्बना चिन्तासहचारिणी कृष्णपदद्योतितविरहकालिमानुभावा भगवन्निष्ठा रतिरपि ध्वनिता । अत्र परकीया विरहिण्यो नायिकाः । विरहचिन्तातुरो नायकः । उभयरतित्वेन समानुरागकः परकीयाविषयत्वेन गुप्तविप्रलम्भः शृङ्गारः । श्लेषकाव्यलिङ्गातिशयोक्त्योऽलंकाराः । यथावा रसगङ्गाधरे—'नयनाञ्चलावमर्शं या न कदाचित्पुरा सेहे । आलिङ्गितापि जोषं तस्थौ सागन्तुकेन दयितेन' इति ॥ ७४ ॥ अथ तमेव विषमानुरागकमुदाहरति—**किमिति** । इदं हि उद्धवं प्रति राधिकावचनं पूर्वार्धात्मकम् । भो उद्धव, त्वत्कृतैस्तत्त्वोपदेशादिरूपैः समाधानैः सांत्वनैः, पक्षे दोषापकरणपूर्वक-

**शिवयोर्देहभेदोऽपि देहार्धत्वस्य कारणम् ।**
**बत मौलीन्दुकुन्दाभकलालोकनतोऽप्यभूत् ॥ ७६ ॥**

हितकथनैः किम् । न किंचित्प्रयोजनमित्यर्थः । ननु कुत एवमित्यत आह— **जात इति** । दोषोदयः दोषः प्रदोषः दोषा रात्रिर्वा तस्य तस्याः वा उदयः । आविर्भाव इत्यर्थः । पक्षे अतिव्याप्त्यादिदोषः तस्योदयः प्राप्तिरिति यावत् । स जातः खलु । संपन्न एवेत्यर्थः । अयं भावः—यद्यपि त्वया तावत्सहस्रशः समाधानानि कृतान्येव तथापि यथाकथंचिद्गृहकृत्यादिव्यापारशतैर्वासरे नीतेऽपि विरहिणीकालरात्रिरियं रात्रिस्तावत्कथं नेयेति विफलान्येव भवत्कृतसमाधानानीति यथा दोषापाकरणार्थमेवाखिलशास्त्रादौ समाधानानि विधीयन्ते खलु तदुदय एव प्रत्युत संपन्ने सति तानि व्यर्थान्येव तद्वदिति । **इतीति** । निरुक्तप्रकारेण राधिका उद्धवं प्रति उक्त्वा हन्त इति खेदे । हे कान्त भो सकलकल्याणगुणमणिगणार्णव गोपीरमण श्रीकृष्णेति दीर्घस्वरमुच्चैरुच्चार्य रुदन्ती रोदनं कुर्वन्ती सती अपतत् भूमौ निपपात । शोकातिशयेन मूर्च्छिता बभूवेत्यर्थः । अत्र श्रीकृष्णालम्बना दोषागमोद्दीपना स्मृतिशोकमूर्छादिसहचारिणी कम्पवैवर्ण्यरोदनाद्यनुभावा राधिकानिष्ठा रतिरेव श्लेषाद्यलंकारापेक्षया प्राधान्येव ध्वन्यते । परकीयविषयत्वेन गुप्तत्वं नायिकैकनिष्ठत्वाद्विषमत्वं च बोध्यम् । अत्र परकीया विरहिणी प्रगल्भा नायिका । ललितो नायकः । विषमानुरागको गुप्तविप्रलम्भः शृङ्गारः । श्लेषकाव्यलिङ्गपरिकराङ्कुरादयोऽलंकाराः । यथावा गोवर्धनाचार्याः–'अनुरागवर्तिना तव विरहेणोग्रेण सा गृहीताङ्गी । त्रिपुररिपुणेव गौरी वरतनुरर्धावशिष्टैव' इति ॥ ७५ ॥ ततोऽनुक्रमप्राप्तं समानुरागकं स्पष्टविप्रलम्भमुदाहरति— **शिवयोरिति** । श्रीमत्पार्वतीपरमेश्वरयोः देहभेदोऽपि वस्तुतश्चिदेकरसत्वाद्भ्रमभावनयावभासमानशरीरभेदोऽपीत्यर्थः । अपिशब्दाल्लोकप्रसिद्धदेशान्तरगमनादिरूपवियोगपदवाच्यविभेदे किं भविष्यतीति को वेदेति प्रेमौत्कव्यं ध्वनितम् । बतेति खेदे । **मौलीति** । कलाभ्यां चूडालंकृतशशिकलाभ्यामिति श्रीमद्भगवत्पूज्यपादपादारविन्दवचनान्मौल्योः परस्परकिरीटयोः ये इन्द्वोः कुन्दाभे कुन्दकलिकावत्सूक्ष्मे नतु परिपुष्टे एतादृशे ये कले षोडशभागौ तयोः आलोकनं अवलोकनं अन्योन्यकर्तृकमीक्षणं तस्मादपीत्यर्थः । अत्राप्यपिना शरद्राकासुधाकरादिनिखिलोद्दीपनविभावदर्शने तु किं स्यादिति नैव जान इति निरतिशयत्वं प्रेम्णः सूचितम् । **देहार्धेति** । देहयोः परस्परशरीरयोः यदर्धत्वं तस्य कारणं हेतुरभूदित्यन्वयः । अहो गौरीश्वराभ्यां तावद्देहभेदात्मकविरहोऽपि परस्परमुकुटचन्द्ररेखावलोकनात्सोढुमशक्य इत्यर्धदेहत्वमेव दुःखातिशयात्संपादितमत एव तयोरेकमर्धनारीश्वराख्यं रूपं संपन्नमिति तात्पर्यम् । अत्रोक्तेन्दुकलावलोकनोद्दीपिता परस्परालम्बनानिरुक्तदेहार्धत्वरूपकार्श्यानुभावात्तदाक्षिप्तचिन्तादिसंचारिणी गम्योत्प्रेक्षालंकारापे-

**घनं तमालमाविद्युद्वल्ल्या वलयितं यदा।**
**विलोक्यामूर्च्छि रामेण कामोऽपि करुणस्तदा॥ ७७॥**
**वैरूप्यफुल्लवक्त्रत्वावहित्थाद्यैरनुक्रमात्।**
**विभावाद्यैर्युतो हासः स्थायी हास्यरसः स्मृतः॥ ७८॥**

---

क्षयाऽन्योन्यरतिरेव प्राधान्येन व्यज्यते। अत्र विरहिणावेव नायिकानायकौ। समानुरागकः स्वीयाविषयत्वात्स्पष्टविप्रलम्भः शृङ्गारः। गम्योत्प्रेक्षालंकारः। यथावा- 'कुक्कुटे कुर्वति क्वाणमाननं श्लिष्टयोस्तयोः। दिवाकरकराक्रान्त शशिकान्त इवाबभौ' इति॥ ७६॥ अथ तमेव विषमानुरागकमुदाहरति—**घनमिति**। यदा यस्मिन्सीतावियोगकाले रामेण श्रीरघुवीरेण घनं मेघाख्यतमालं नीलत्वात्तमालद्रुमरूपं आसमन्तात् या विद्युत्सैव वल्ली तया वलयितं वेष्टितमित्यर्थः। एतादृशं विलोक्यामूर्च्छि मूर्च्छितम्। विद्युद्यथेयं मेघमालिङ्ग्य कनकवल्लीव तमालवृक्षमिव तिष्ठति यथा विद्युद्वल्लीव गौराङ्गी तन्वी जानकी घनतमालवत्सरसं मृदुलं नीलं मां कदाऽलिङ्गिष्यतीति तत्स्मृत्यादिदुःखोद्रेकान्मूर्च्छां गतमिति यावत्। तदा तस्मिन्क्षणे कामोऽपि कामयते निर्दयत्वेन जगज्जयति तथा विश्वजिगीषुत्वेन निष्करुणः पञ्चबाणोऽपीत्यर्थः। अपिना कारुण्याभावपौष्कल्यं द्योतितम्। करुणः सदयोऽभवदिति शेषः। तदानीं कामस्य सदयतयैव श्रीरामदेहसत्त्वं नोचेत्तस्यापि विरह एव स्यादतो ज्ञायते तदा तस्य तथात्वमिति तत्त्वम्। अत्राघनाद्यवलोकनोद्दीपनः सीतालम्बनो मूर्च्छासहचारी तदाक्षिप्तरोमाञ्चाद्यनुभावः श्रीरामगतो रत्याख्यः स्थाय्येव रूपकाद्यपेक्षया मुख्यतया व्यज्यते। किंचेह विरहिणावेव नायिकानायकौ। रामरतेरेव ध्वननाद्विषमानुरागकः स्वकीयाविषयत्वेन स्पष्टविप्रलम्भः शृङ्गारः। रूपककाव्यलिङ्गपरिकराङ्कुरा अलंकाराः। यथावा प्रसन्नराघवाख्ये नाटके—'सौमित्रे ननु सेव्यतां तरुतलं चण्डांशुरुज्जृम्भते चण्डांशोर्निशि का कथा रघुपते चन्द्रः समुन्मीलति। वत्सैतद्विदितं कथं नु भवता धत्ते कुरङ्गं यतः क्वासि प्रेयसि हा कुरङ्गनयने चन्द्रानने जानकि' इति। यथावा- मरुशतके—'लिखन्नास्ते भूमिं बहिरवनतः प्राणदयितो निराहाराः सख्यः सततरुदितोच्छूननयनाः। परित्यक्तं सर्वं हसितपठितं पञ्जरशुकैस्तवावस्था चेयं विसृज कठिने मानमधुना' इति॥ ७७॥ एवं शृङ्गारं निरूप्य क्रमप्राप्तं हास्यं निरूपयितुं तं लक्षयति—**वैरूप्येति**। वैरूप्यं विपरीतरूपत्वं तथा फुल्लवक्त्रत्वं विकसितवदनत्वं तथा अवहित्था आकारगोपनं 'अवहित्थाऽऽकारगुप्तिः' इत्यमरोक्तेः। तत्र तत्र साचेति तथा ताः आद्याः मुख्या येषां आनन्दाश्रुपातादीनां ते तथा तैरित्यर्थः। एतादृशैः अनुक्रमात् यथाक्रमेण विभावाद्यैः उद्दीपनविभावकायिकानुभावव्यभिचारिभावैरिति यावत्। युतः पुष्टः हासस्थायी हासाख्यः। प्रागुक्तलक्षणः स्थायिभाव इत्यर्थः। हास्येत्यादि स्पष्टमन्यत्॥ ७८॥

**विभावजः स्वनिष्ठोऽसौ परनिष्ठोऽन्यहास्यजः ।**
**पुनः स्मितादिषड्भेदैः क्रमाद्द्वादशधा यथा ॥ ७९ ॥**
**शार्दूलकृत्तिमावृत्य भीषयन्तं गजाननम् ।**
**गुहं वीक्ष्योल्लसद्वक्त्रौ बभूवतुरुमाहरौ ॥ ८० ॥**
**श्रीकपोले निजच्छायां भृङ्गभ्रान्त्यापसारयन् ।**
**तयोन्मीलितया दन्तकान्तिकुन्दैश्चितो हरिः ॥ ८१ ॥**

---

तस्य स्वनिष्ठत्वादिना द्वैविध्यमुद्दिश्य तल्लक्षयति—**विभावज इति**। आलम्बनादिविभावजन्य इत्यर्थः। पुनस्तस्य द्विविधस्यापि भेदान्तराणि विधत्ते—**पुनरिति**। असावित्यनुकर्षणीयम्। तथाचाहुः शार्ङ्गदेवाः—'आत्मस्थः परसंस्थश्चेत्यस्य भेदद्वयं मतम्। आत्मस्थो द्रष्टुरुत्पन्नो विभावेक्षणमात्रतः। हसन्तमपरं दृष्ट्वा विभावश्चोपजायते। योऽसौ हास्यरसस्तज्ज्ञैः परस्थः परिकीर्तितः। उत्तमानां मध्यमानां नीचानामप्यसौ भवेत्। त्र्यवस्थः कथितस्तस्य षड्भेदाः सन्ति चापरे। स्मितं च हसितं प्रोक्तमुत्तमे पुरुषे बुधैः। भवेद्विहसितं चोपहसितं मध्यमे नरे। नीचेऽपहसितं चातिहसितं परिकीर्तितम्। ईषत्फुल्लकपोलाभ्यां कटाक्षैरप्यनुल्बणैः। अदृश्यदशनो हास्यो मधुरः स्मितमुच्यते। वक्त्रनेत्रकपोलैश्चेदुत्फुल्लैरुपलक्षितः। किंचिल्लक्षितदन्तश्च तदा हसितमिष्यते। सशब्दं मधुरं कालगतं वदनरागवत्। आकुञ्चिताक्षं मन्दं च विदुर्विहसितं बुधाः। निकुञ्चितांसशीर्षश्च जिह्मदृष्टिविलोकनः। उत्फुल्लनासिको हासो नाम्नोपहसितं मतम्। अस्थानजः साश्रुदृष्टिराकम्पस्कन्धमूर्धजः। शार्ङ्गदेवेन गदितो हासोऽपहसिताह्वयः। स्थूलः कर्णकटुध्वानो बाष्पपूरप्लुतेक्षणः। करोपगूढपार्श्वश्च हासोऽतिहसितं मतम्' इति। एवंच स्वनिष्ठानि स्मितहसितविहसितोपहसितापहसितातिहसितानि तथा परनिष्ठानि च तानीति भेदैरसौ द्वादशविधः संपन्न इत्यर्थः। एवं द्वादशविधस्य तस्यानुक्रमेणोदाहरणानि प्रपञ्चितुं प्रतिजानीते-**क्रमादिति** ॥७९॥ तत्र स्वनिष्ठं स्मितमुदाहरति—**शार्दूलेति**। 'शार्दूलद्वीपिनौ व्याघ्रे' इत्यमरात् 'अजिनं चर्म कृत्तिः स्त्री' इत्यपि च ततो व्याघ्रस्य चर्मेत्यर्थः। आवृत्य प्रावरणमिव सकलस्वाङ्गाच्छादकत्वेन गृहीत्वा। गजाननं करिवदनं प्रति नतु गणपतिम्। अतएव भीषयन्तं भीषयति सिंहस्य करिवैरित्वाद्व्याघ्रस्य च तत्तुल्यत्वात्तच्चर्मप्रावरणपूर्वकं तद्वद्गर्जनादिना भयं जनयतीति तथा तमित्यर्थः। एतादृशं गुहं स्कन्दं वीक्ष्य उल्लसद्वक्त्रौ उल्लसती विकसती वक्त्रे मुखे ययोस्तावेतादृशौ उमाहरौ गौरीश्वरौ बभूवतुरिति संबन्धः। अत्र गजाननं भीषयन्व्याघ्रवद्घुर्घुरध्वनिर्गुह आलम्बनविभावः। शार्दूलकृत्तिप्रावरणमुद्दीपनं विकसद्वदनत्वमनुभावः। हास्यपृथुध्वन्याद्यभावाक्षिप्तावहित्थाख्याकारगुप्तिर्व्यभिचारिभावश्चैतैः पुष्टो हासाख्यः स्थाय्येव विभावमात्रजत्वेन स्वनिष्ठः पूर्वोक्तस्मितलक्षणवत्त्वेन स्मिताभिधो हास्यरसः स्वभावोक्त्यलंकारापेक्षया मुख्यतया व्यज्यते ॥ ८० ॥ एवं स्वनिष्ठं हसितमुदाहरति—**श्रीति**। श्रियो लक्ष्म्याः

**मातः कन्दुकलीलार्थमिमं चन्द्रं प्रदेहि मे।**
**इति कृष्णवचः श्रुत्वा यशोदा विचकासह ॥ ८२ ॥**
**नवनीतमुषं कृष्णमनुधावनतः पथि।**
**पतितां गोपिकां प्रेक्ष्य प्रफुल्ला घोषयोषितः ॥ ८३ ॥**
**वामनं भिक्षुकं दृष्ट्वा व्यावल्गन्परिचारिकाः।**
**बलिपत्न्याः पयोराशेर्लहर्यः शशिनं यथा ॥ ८४ ॥**
**गोपकन्याम्बरहरं कदम्बस्थं यदूद्वहम्।**
**साञ्जलीस्ताः समालोक्य सोल्लुण्ठा बल्लवार्भकाः ॥ ८५ ॥**
**नूत्नरत्नगृहे सीतां स्वबिम्बासंख्ययोषिताम्।**
**दर्शनाद्विकचां दृष्ट्वा रामः कान्तमुखोऽभवत् ॥ ८६ ॥**
**प्रातः परिदधत्कुञ्जे रभसाद्राधिकांशुकम्।**
**तामुद्यदास्यामालोच्य कृष्णोऽभूद्विकसन्मुखः ॥ ८७ ॥**

कपोले चितः पूजितः। अत्र भ्रान्तिरूपके अलंकारौ। शिष्टं तूक्तदिशैव लक्षणानुगम्यम् ॥ ८१ ॥ अथ स्वनिष्ठं विहसितमुदाहरति—**मातरिति**। विचकास विहसितवतीत्यर्थः। शेषमतिरोहितार्थम् ॥ ८२ ॥ एवं स्वनिष्ठमुपहसितमुदाहरति—**नवनीतेति**। घोषयोषितः 'घोष आभीरपल्ली स्यात्' इत्यमरात् घोषस्य गोपगृहस्य संबन्धिन्यो योषितः स्त्रिय इत्यर्थः। प्रफुल्लाः उपजहसुरित्यर्थः ॥ ८३ ॥ ततः स्वनिष्ठमपहसितमुदाहरति—**वामनमिति**। बलिपत्न्याः परिचारिकाः वामनं खर्वरूपधरं हरिं भिक्षुकं भिक्षमाणं दृष्ट्वा व्यावल्गन् अपहासं चक्रुरित्यर्थः। तत्रानुरूपं दृष्टान्तमाह—**पयोराशेरिति**। समुद्रस्य लहर्यो वीचयः शशिनं कलङ्किनं चन्द्रं दृष्ट्वा यथा व्यावल्गन् तद्वदित्यर्थः ॥ ८४ ॥ एवमेव स्वनिष्ठमतिहसितमुदाहरति—**गोपेति**। ताः गोपकन्याः साञ्जलीः अञ्जलीपुटकरणेनानाच्छादितगुह्या इत्यर्थः। सोल्लुण्ठाः अतिहासवन्तः इत्यर्थः। बभूवुरिति शेषः। अत्र प्रथमोदाहरणद्वये हास्यस्य शिवादिदेवतारूपोत्तमाधिकारिनिष्ठत्वं द्वितीयोदाहरणद्वये च यशोदादिप्रौढस्त्रीरूपमध्यमाधिकारिनिष्ठत्व तृतीये चोदाहरणद्वये निरुक्तदास्यादिरूपनीचाधिकारिनिष्ठत्वं च बोध्यम् ॥ ८५ ॥ एवं स्वनिष्ठस्मिताद्युदाहरणषट्कमभिधाय परनिष्ठं तदभिदधत्प्रथमं परनिष्ठ स्मितमुदाहरति—**नूत्नेति**। नूत्नं नवीनं यद्रत्नगृहं मणिमयं क्रीडागार तस्मिन्नित्यर्थः। **स्वेति**। स्वस्याः बिम्बानि प्रकृतगृहरत्नभित्त्यादौ प्रतिबिम्बानि तद्रूपाः अतएव याः असंख्ययोषितः रत्नानां तत्रस्थानामगणितत्वादनन्तकान्तास्तासामित्यर्थः। दर्शनाद्वीक्षणात् विकचां सस्मेरां एतादृशीं सीतां ज्ञात्वा रामः श्रीरघुवीरः कान्तमुखः कान्तं सस्मितं मुखं यस्य तथा अभवदिति योजना ॥ ८६ ॥ तद्वत्परनिष्ठं हसितमुदाहरति—**प्रातरिति**। रभसात् 'रभसो वेगहर्षयोः' इत्यभिधानाद्वेगादित्यर्थः।

चन्द्रचूडगणान्दृष्ट्वा मेनोद्वाहोत्सवे मुहुः ।
स्फुरद्दच्चन्द्रिका दृष्टा प्रसन्नेन हिमाद्रिणा ॥ ८८ ॥
जले सदसि भूभ्रान्त्या च्युते दुर्योधने भृशम् ।
विलोक्य द्रौपदीं भ्राजदाननामनुगास्तथा ॥ ८९ ॥
कृष्णवंशीरवावेगाद्राधिकां श्लथशाटिकाम् ।
निरीक्ष्योत्फुल्लवक्त्राः स्युर्गोप्यस्तदनु बालकाः ॥ ९० ॥
दशास्ये वालिना नीते ताराद्याः सर्ववानरीः ।
अवेक्ष्य लुठतीः सर्वे प्लवङ्गा अभवंस्तथा ॥ ९१ ॥
आशाच्छेदविनष्टेष्टाश्रुपातम्लानतादिभिः ।
शोकस्थायिविभावाद्यैः पुष्टः स्यात्करुणारसः ॥ ९२ ॥
स्वविभावैः समुत्पन्नः स्वनिष्ठः स उदीरितः ।
परनिष्ठोऽन्यदीयानां विभावानां विबोधतः ॥ ९३ ॥

---

**राधिकेति** । राधिकायाः अंशुकं परिधानीयं वसनमित्यर्थः । तां राधिकां उद्यदास्यां उद्यत् उदयं प्रापत् विकसदिति यावत् एतादृशं आस्यं मुखं यस्यास्तामित्यर्थः । आलोच्य दृष्ट्वा इदमुत्तमगतपरनिष्ठहास्यरसोदाहरणद्वयम् ॥ ८७ ॥ ततः परनिष्ठं विहसितमुदाहरति—**चन्द्रेति** । मेना हिमाचलपत्नी गौर्याः उद्वाहोत्सव इत्यध्याहृत्य योज्यम् । **स्फुरदिति** । स्फुरन्ती भासमाना दतां दन्तानां चन्द्रिका यस्याः सा तथेत्यर्थः । प्रसन्नेन हसतेत्यर्थः ॥ ८८ ॥ एवं परनिष्ठमुपहसितमुदाहरति—**जल इति** । सदसि राजसूये मयकृतसभायां जले भूभ्रान्त्या पृथ्वीभ्रमेणेत्यर्थः । दुर्योधने भृशं अत्यन्तं च्युते पतिते सतीत्यर्थः । **भ्राजदिति** । भ्राजदुपहासवशाद्दीप्यमानं आननं मुखं यस्यास्तां अनुगास्तदनुवर्तिन्यः स्त्रियोऽपि तथा उपहसितवत्यः स्युरित्यर्थः । इदं तु मध्यमगतपरनिष्ठहास्योदाहरणयुगम् ॥ ८९ ॥ अथ परनिष्ठमपहसितमुदाहरति—**कृष्णेति** । कृष्णवंशीरवेण यः आवेगोऽभिसरणसंभ्रमस्तस्माद्धेतोरित्यर्थः । **श्लथेति** । श्लथा गलद्बन्धा शाटिका यस्यास्तादृशीं राधां निरीक्ष्य गोप्यः तदनु बालकाः गोपबालाश्च उत्फुल्लवक्त्राः विकसितमुखाः बभूवुरित्यन्वयः ॥ ९० ॥ एवं परनिष्ठमतिहसितमप्युदाहरति—**दशास्य इति** । लुठतीः हास्याधिक्येन भूमौ विस्खलतीः । सर्वे प्लवङ्गाः वानराः अवेक्ष्य तथा निरुक्तहासवन्तः अभवन्निति संबन्धः । इदं नीचगतपरनिष्ठहास्यरसोदाहरणयुगं बोध्यम् ॥ ९१ ॥ एवं हास्यं प्रपञ्च्याथोद्देशक्रमप्राप्तं करुणं विवृण्वंस्तं लक्षयति—**आशेति** । अत्र आशाच्छेद उद्दीपनम् । विनष्टेष्ट आलम्बनम् । अश्रुपातोऽनुभावः । म्लानता व्यभिचारिभावः । आदिपदाज्जडतादेर्ग्रहः । एतैर्विभावाद्यैः पुष्टः शोकस्थायी पूर्वोक्तलक्षणः शोकाख्यः स्थायीभाव एव करुणः रसो भवतीति योजना । 'तस्मादाशाच्छेदादिविभावादिपुष्टशोकस्थायित्वं करुणत्वमिति तल्लक्षणं फलितम् ॥ ९२ ॥ तस्य द्वैविध्यम-

**कान्तेऽनङ्गतया शान्ते रतिर्हेमलताश्रुभिः।**
**घनैः सिक्तापि नोत्तस्थौ कृपावल्या सहेशितुः॥ ९४॥**
**दाक्षायण्या परित्यक्ते शरीरे शंकरभ्रमात्।**
**वीक्ष्यैव किमु संतापैः कामेनापि हुतं वपुः॥ ९५॥**
**अपराधितदुत्कर्षनिष्ठुरोक्त्युग्रतादिभिः।**
**विभावाद्यैश्चितः क्रोधस्थायी रौद्रो रसः स्मृतः॥ ९६॥**
**प्रस्खलत्कुम्भकर्णास्रपानोन्मादितपत्रिणि।**
**रामे स्थिते क्व तेऽस्त्राणि तिष्ठ रे दुष्टराक्षस॥ ९७॥**

---

भिदधंस्तत्र हेतुमाह—**स्वविभावैरिति**। स्वस्य विभावैरालम्बनादिविभावैरित्यर्थः। उक्तं हि रसतरङ्गिण्याम्—'स च करुणः स्वनिष्ठः परनिष्ठश्च। स्वशापस्वबन्धनस्वक्लेशस्वानिष्टैर्विभावैः स्वनिष्ठः परेष्टनाशपरशापपरबन्धनपरक्लेशादीनां दर्शनश्रवणस्मरणैर्विभावैः परनिष्ठः' इति॥ ९३॥ तत्राद्यमुदाहरति—**कान्त इति**। स्वरमणे मदने अनङ्गतया शिवनेत्राग्निना अङ्गशब्दितशरीरस्य भस्मीभूतत्वात्स्थूलदेहराहित्यतयेत्यर्थः। शान्ते उपशान्तवन्निश्चेष्टे संजाते सतीत्यर्थः। **रतीति**। एतेनास्यां गौरत्वसुकुमारत्वसुरभित्वादिध्वनितम्। घनैः अश्रुरूपैर्मेघैः ईशितुः शिवस्य। अत्र सिक्तापीत्यपिना मूलोच्छेदः सूचितः। तेन पातिव्रत्यातिशयश्च। एवं चात्रोक्तविभावाद्यैः पुष्टः करुणरस एव रूपकालंकारापेक्षया प्राधान्येन व्यज्यते॥ ९४॥ द्वितीयमुदाहरति—**दाक्षायण्येति**। सतीनाम्न्या दक्षकन्ययेत्यर्थः। परित्यक्ते सतीति यावत्। स्वपितृयज्ञ इति शेषः। हुतं शंभुनेत्राग्नाविति शेषः। अत्र कामेनापीत्यपिशब्देन विरहिशासने समुत्सुकस्य मदनस्यापि शिवशोकावलोकनेनोक्तकारुण्यं स्वप्राणत्यागकरणान्तमपि संजातं यदा तदान्येषां तत्स्यादिति किमु वक्तव्यमिति तदतिशयः सूचितः। तेनेह दाक्षायणीमृतिशोचच्छंकरालम्बनस्तच्छ्रमेक्षणोद्दीपनः संतापानुभावो मरणव्यभिचारी निरुक्तशोकाख्यः स्थाय्येवोत्प्रेक्षालंकारापेक्षयाधिक्येन व्यज्यते। यथावा भानुमिश्राः—'अनुवनमनुयातं बाष्पवारि त्यजन्तं मृदितकमलदामक्षाममालोक्य रामम्। दिनमपि रविरोचिस्तापमन्तः प्रसूते रजनिरपि च धत्ते तारकाबाष्पबिन्दून्' इति॥९५॥ ततः क्रमागतं रौद्रं लक्षयति—**अपराधीति**। अत्रापराध्यालम्बनम्। तदुत्कर्ष उद्दीपनम्। निष्ठुरोक्तिरनुभावः। उग्रतापदवाच्योऽमर्षः संचारी च चितः पुष्टः। स्पष्टमन्यत्॥ ९६॥ तमुदाहरति—**प्रस्खलदिति**। प्रकर्षेण शिरश्छेदनान्महाप्रवाहरूपोत्कर्षेण स्खलत् गलत्कुम्भकर्णस्य अस्रं 'रुधिरेऽसृग्लोहितास्ररक्तक्षतजशोणितम्' इत्यमरात्रुधिरं तस्य पानेनोन्मादिताः पत्रिणः गृध्रादयः पक्षिणो बाणा वा येन तस्मिन्नित्यर्थः। एतादृशे मयि रामे स्थिते सति रे दुष्ट राक्षस रावण, ते अस्त्राणि आग्नेयाद्यस्त्राणि क्व किं करिष्यन्ति। न किमपीतियावत्। अतस्त्वं तिष्ठ संग्रामान्मा पराङ्मुखो भवेत्यर्थः। इदंहि कृताग्नेयाद्य-

**प्रभावस्थैर्यगर्वाद्यैर्विभावादिभिरुन्नतः ।**
**उत्साहस्थायिभावः स्याद्वीरो द्वादशधा तु सः ॥ ९८ ॥**
**युद्धदानदयाधर्मसत्यविद्यातपोबलैः ।**
**त्यागयोगक्षमाज्ञानैस्तदुपाधेर्विभेदतः ॥ ९९ ॥**
**क्षत्रध्वान्तशरद्भास्वद्गर्वहृद्भ्राजदोजसा ।**
**कः संगरेऽर्भकः पार्थः शक्तं मध्वन्तकोऽद्य ॥ १०० ॥**

अत्रप्रयोग रावणं प्रति श्रीरामवाक्यम् । अत्रापराधिरावणालम्बनः क्व तेऽस्त्राणीत्याक्षिप्ततदुत्कर्षदर्शनोद्दीपनः प्रस्खलदिति रेदुष्टेति च निष्ठुरोक्त्यनुभावस्तिष्ठेत्यमर्षसहचारी क्रोधस्थाय्याख्यो रौद्रः परिकरालंकारतः प्रधानभावेन ध्वन्यते । यथावा रसगङ्गाधरे—'नवोच्छलितयौवनस्फुरदखर्वगर्वज्वरे मदीयगुरुकार्मुकं गलितसाध्वसं वृश्चति । अयं पततु निर्दयं दलितदृप्तभूभृद्गलस्खलद्रुधिरघस्मरो मम परश्वधो भैरवः' इति ॥ ९७ ॥ अथ वीरं प्रपञ्चयितुमादौ तं लक्षयति—**प्रभावेति** । प्रभावः सामर्थ्यविशेषः तद्युक्तौ यौ स्थैर्यगर्वौ धैर्याभिमानौ आद्यौ येषां प्रति भाव्याद्यालम्बनविभावादीनां तैरित्यर्थः । एवं चात्र प्रभावपदस्य स्थैर्यपदापेक्षया बहुक्चत्वेऽपि न क्षतिः । तस्य विशेषणत्वात् । यद्यपि स्थैर्यगर्वप्रभावाद्यैरित्यपि विन्यासः कर्तुं शक्यत एव तथापि विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिरिति काव्यप्रकाशोदाहृतभरतसूत्रोक्तक्रमभङ्गापत्तेः । तस्माद्युक्त एवोक्तविन्यास इत्याशयः । उन्नतः परिपुष्टः एतादृशः उत्साहस्थायिभावः उत्साहाख्यो यः स्थायिभावः स वीरः स्यादित्यन्वयः । अत्र प्रभावः सामर्थ्योपरपर्याय उद्दीपनविभावः । स्थैर्यं चानुभावः । गर्वः संचारिभावः । अस्यानेकविधत्वात्सर्वत्र साधारण्येनैकविधालम्बनासंभवात्कण्ठतस्तदनुक्तिः । एते चोद्दीपनविभावादयस्तु सामान्यत एवोक्ता इति बोध्यम् । एतेन प्रभावादिपरिपुष्टोत्साहत्वं वीरत्वमिति तल्लक्षणं सिद्धम् । ततस्तत्प्रकारान्प्रतिजानीते—**द्वादशधेति** । तुशब्दः पुनरर्थे ॥ ९८ ॥ तत्र हेतुमाह—**युद्धेति** । तदुपाधेरुत्साहस्येत्यर्थः । नच रसतरङ्गिण्यां वीरमुपक्रम्य सच त्रिविधः । युद्धवीरदानवीरदयावीरभेदादिति त्रिविधस्यैव तस्योक्तेः कथं द्वादशधा स्यादिति वाच्यम् । रसगङ्गाधरे युद्धदानदयाधर्मसत्यविद्याक्षमाबलभेदैरष्टविधस्यापि तस्योपलब्धत्वेन धर्मादिवत्तपस्त्यागयोगज्ञानाख्यानां भेदानामप्यनिराकार्यत्वात् । अतो युक्तमेवेदं द्वादशविधत्वं तस्येति दिक् ॥ ९९ ॥ तत्र युद्धवीरमुदाहरति—**क्षत्रेति** । इदं हि श्रीकृष्णं प्रति भीष्मवाक्यम् । क्षत्रं क्षत्रियकुलं तदेव ध्वान्तं प्रायो रजःप्रकृतिकत्वेन सांध्यतया अन्धतमसं तस्य यः शरद्भास्वान् तन्नाशकः शरत्कालीनार्करूपी भार्गवरामस्तस्य यो गर्वः अम्बाम्बालिकाद्यर्थं युद्धाभिमानस्तं हरति निरुक्तयुद्धे पराजित्य दूरीकरोतीति तथा । अतएव भ्राजद्दीप्यमानं ओजः उक्तगुरुप्रसादलब्धैकधनुर्धरत्वरूपं तेजो यस्य तेनेत्यर्थः । एतादृशेन भीष्मेण मया सहेत्यध्याहारः । एतेन स्वनामास्म-

**आचार्य किं ब्रवीषि त्वं सामान्यायापि याचते।**
**शिरश्छित्त्वापि दास्येऽहं किंपुनः श्रीगदाभृते ॥ १०१ ॥**

च्छन्दयोरनुच्चारणात्पूर्वार्धध्वनितस्थैर्यादेरतिशयः स्वस्मिन्नुत्तमनायकत्वेन सूचितः। संगरे संग्रामे अर्भकः बालकः एतादृशः यतः पार्थः पृथायाः कुन्त्याः पुत्रः नतु धनंजयः एतादृगर्जुनः कः। न किमपीत्यर्थः। अतः हे मध्वन्तक मधोर्महाप्रभावस्य कैटभभ्रातुर्मधुनाम्नो दैत्यस्य अन्तकः कालस्तत्संबुद्धौ । भोमधुमथनेत्यर्थः। नतु रमारमणेति यावत्। एतादृशस्त्वं शस्त्रं सुदर्शनाद्यायुधं उद्धध उत्कर्षेण परमैश्वर्यप्रकाशनलक्षणप्रकर्षेण धारयेत्यर्थः। अहो येन मया महैश्वर्यवतः क्षत्रियकर्तुः स्वगुरोः श्रीभार्गवरामस्यापि संग्रामं कर्तुं गर्वभङ्गः संपन्नस्तस्मिन्नपि भीष्मे मयि धानुष्कधुरीणतां प्रकटयितुमयं शिशुः सव्यसाची चतुरः कथं वा भविष्यतीत्यतो भो मधुमर्दन, भवतैव सुदर्शनं धृत्वा निजैश्वर्यं प्रदर्शनीय, भारतयुद्धेऽहं नैव शस्त्रं धारयिष्यामीति प्रतिज्ञा तु त्याज्यैवेति भावः। अत्र मधुसूदनालम्बितः संगरपदद्योतितार्जुनकृतकोदण्डटङ्कारादिरूपप्रतिवीरप्रभावोद्दीपितः क्षत्रेत्यादिपूर्वार्धसूचितस्थैर्यानुभावितः क इत्याद्यवशिष्टतृतीयपादपदव्यञ्जितगर्वसंचारितः शस्त्रमित्यादिचतुर्थचरणावेदितः समरोत्साह एव परिकराद्यलंकारापेक्षया मुख्यत्वेन ध्वन्यते। यथावा रसतरङ्गिण्याम्—'संग्रामाङ्गणमागते दशमुखे सौमित्रिणा विस्मितं सुग्रीवेण विचिन्तितं हनुमता व्यालोलमालोकितम्। श्रीरामेण परंतु पीनपुलकस्फूर्जत्कपोलश्रिया सान्द्रानन्दरसालसानि दधिरे बाणासने दृष्टयः' इति। रसगङ्गाधरेऽपि—'रणे दीनान्देवान्दशवदन विद्राव्य वहति प्रभावप्रागल्भ्यं त्वयि तु मम कोऽयं परिकरः। ललाटोद्यज्ज्वालाकवलितजगज्जालविभवो भवो मे कोदण्डच्युतविशिखवेगं कलयतु' इति ॥ १०० ॥ दानवीरमुदाहरति—**आचार्येति**। इद हि वामनरूपिणे साक्षाच्चक्रिणे किमपि मा देहीति भाषन्तं भार्गवं प्रति बलेर्वचनम्। भो आचार्य अयि दैत्यकुलगुरो शुक्र, त्वं एतस्मै वामनरूपधारिणे शार्ङ्गिणे किंचिदपि नैव त्वया देयमित्यादिवाक्यं किं ब्रवीषि। कुत्सितं ब्रवीषीत्यर्थः। तत्र हेतुः। सामान्यायापीत्यादित्रिपाद्या। यतः अह बलिः सामान्याय साधारणायापि याचते याञ्चां कुर्वते जनाय शिरः स्वकीय मस्तकमपि नतु यस्य कस्यचिदित्यर्थः । तत्रापि च्छित्वापि स्वहस्तधृतखड्गेन विच्छिद्यापीतियावत् । दास्ये दास्यामीत्यर्थः । पुनः श्रीगदाभृते श्रीमान् षड्गुणैश्वर्यसपन्नः यः गदाभृत् विष्णुस्तस्मा इत्यर्थः । दास्य इति किमु वक्तव्यमित्यन्वयः । अत्र श्रीगदाभृदालम्बनम्। आचार्यवचनोक्ततत्प्रभाव उद्दीपनम्। सामान्यायेत्यादि दास्य इत्यन्तेन स्थैर्यम्। अहमित्यादिना गर्वश्चानुभवव्यभिचारिणौ च तैरेतैः पुष्टो दानोत्साहरूपः स्थाय्येव किं पुनरित्यादिपदध्वनितः काव्यलिङ्गाद्यलंकारापेक्षया प्रधान इति दिक्। यथावा पण्डितराजस्य 'कियदिदमधिकं मे यद्द्विजायार्थयित्रे कवचमरमणीयं कुण्डले चार्पयामि।

**शङ्खचूडाद्य नन्दन्तु नागास्तव कुटुम्बिनः।**
**तर्पयामि गरुत्मन्तं प्राणैर्जीमूतवाहनः॥ १०२॥**
**हन्ताहं रन्तिदेवोऽद्य कथं ब्राह्मणतोषणम्।**
**विनाऽसंख्योपवासेऽपि पारये भुङ्क्ष्व तत्सुखम्॥१०३॥**

अकरुणमवकृत्य द्राक्कृपाणेन निर्यद्बहलरुधिरधारं मौलिमावेदयामि' इति ॥१०१॥ दयावीरमुदाहरति—**शङ्खेति** । हे शङ्खचूड निरुक्तनामन्नागविशेष, अद्य तव कुटुम्बिनः भवत्पित्रादिरूपाः संबन्धिनः नन्दन्तु हृष्यन्त्वित्यर्थः । तत्र **हेतु**-माह—**तर्पयामी**त्युत्तरार्धेन । जीमूतवाहनः एतन्नामा गन्धर्वविशेषः **अहं** प्राणैः। तदालयीभूतस्वदेहेनेत्यर्थः। गरुत्मन्तं गरुड तर्पयामीति सबन्धः। अयं भावः—पुरा सकलनागकुलं हन्तुमुद्युक्तं गरुडं प्रति सर्वैस्तैः प्रत्यहमेक नागं पीनं युवान भवते दास्याम इति प्रतिज्ञाय तदनुमोदनवशात्किंचित्कालं तथैवानुष्ठितम्। ततः कदाचित्कस्यचिज्जरटनागस्य शङ्खचूडाख्ये निरुक्तरूप एकस्मिन्नेव पुत्रे तद्राजाज्ञावशाद्गरुडाय दीयमाने रुदतां तत्पित्रादीनां विलपन व्योम्नि विमानगेन जीमूतवाहनाभिधगन्धर्वेण श्रुत्वा तत्प्रतिनिधित्वेन स्ववपुस्तस्मै दत्त्वा स निर्मोचितः। ततः सतुष्टस्य गरुडस्य प्रसादात्स्वयमपि दिव्यदेहोऽभूदित्यादि नागानन्दनाम्नि नाटके कथाजातमभिनीतम्। तेनेद शङ्खचूडनागं प्रति जीमूतवाहनगन्धर्ववचनं बोध्यमिति। अत्र शङ्खचूड आलम्बनम्, तत्पित्रादिविलपनमर्थतःसिद्धमुद्दीपनम्, प्राणपदध्वनित स्थैर्यमनुभावः, स्वनामग्रहणसूचितगर्वः सहचारीति तैः पुष्टोदयोत्साह एव कुटुम्बिपदोक्तपरिकरालंकारादाधिक्येन द्योत्यते। यथावा रसगङ्गाधरे—'न कपोतकपोतक नव स्पृशतु श्येन मनागपि स्पृहा। इदमद्य मया समर्पितं भवते चारुतरं कलेवरम्' इति ॥ १०२॥ धर्मवीरमुदाहरति—**हन्तेति**। हन्तेति खेदे। भो विप्र, रन्तिदेवः अहं असंख्योपवासेऽपि ब्राह्मणतोषण ब्राह्मणस्य तव तोषणं तृप्तिकरणं अद्य कथ पारये पारणं कुर्याम्। न कथमपि पारणां करिष्यामीति यावत्। तत्तस्मात्त्वं सुखं यथा स्यात्तथा भुङ्क्ष्व यथेच्छ भोजनं कुर्वित्यन्वयः। तथाचोपाख्यात श्रीमद्भागवते नवमस्कन्धे—कश्चित्तावद्रन्तिदेवनामा राजर्षिः परमधर्मिष्ठ आकाशिकोपजीवनोऽष्टचत्वारिंशत्संख्याकोपवासेषु संजातेषु सत्स्वकस्मात्प्रातःकाले भगवन्मायया घृतपयःप्लुतः संयावः पानीयं चाकाशादेव सप्राप्त। तत एको ब्राह्मणोऽतिथिः प्राप्तः। तस्मै ततो यावत्तत्तृप्तिभागं ददौ ततोऽन्यः शूद्र एकस्तथैव भोक्तुं समागतस्तस्मा अपि तथैव तद्भागं ददौ। तदनन्तरं कश्चिच्छ्वपतिः श्वभिः सह तथैवोपेतस्तस्मै तु सर्वमवशिष्टमन्नं ददौ। तदूर्ध्वमुदकमात्रमुर्वरितं प्राशितुं यावदुद्युक्तस्तावता कश्चित्पुल्कसस्तृषितः संययौ तस्मै तदपि ददाविति तद्धर्मकाष्ठया संतुष्टाः तत्परीक्षार्थं परमात्ममायया तथागता अपि ब्रह्मादयस्त्रिलोकपतयो देवाः प्रकटीभूय त्वं वरं वृणीष्वेति तैः प्रलोभितोऽपि नैव किंचिदयाचदित्यादि तत्रेदं प्रथमागतं विप्रं प्रति तद्वाक्यम् ॥ १०३ ॥

**निघ्नन्तु रिपवो बन्धून्मया सह सुतानपि।**
**द्रौपदीमपि तत्रापि धर्मः किमनृतं वदेत्॥ १०४॥**
**चतुरास्यः सहस्रास्यो हयास्योऽप्यथ वा स्वयम्।**
**वदत्वखण्डमत्रापि पुरोऽस्मि कृपया गुरोः॥ १०५॥**
**विष्ण्वाद्या अपि पश्यन्तु प्रभावं कौशिकस्य मे।**
**सृष्टिमेव नवां कुर्वे ब्रह्मर्षित्वस्य का कथा॥ १०६॥**

सत्यवीरमुदाहरति—**निघ्नन्त्विति**। इदं हि द्रोणपर्वणि तद्वधार्थे कंचिदश्वत्थामाख्यं गजं भीमसेनेन मारयित्वा मुख्याश्वत्थाम्नि द्रोणपुत्रे क्वचित्किंचित्कार्योद्देशेन गते सति द्रोणनिकटस्थसकलसेनायामश्वत्थामा मृत इति सामान्यतः प्रख्यातिं कारयित्वा चिरजीवी मत्पुत्रः कथं मृतः कथं वा यमेन नीत इति संदेहाद्द्रोणेन सर्वसैनिकान्प्रति पृष्टेऽपि ते सर्वे मृत इत्येवावदन्'।अतस्तत्राप्यश्रद्दधानतया सत्यवादिनं धर्मं प्रति पृष्ट्वा अनेनापि तथैवोक्ते सत्ययं स्वकलेवरं रथ एव स्थापयित्वा समाधिमहिम्ना यमलोकं विशोध्य यावदायास्यति तावदेतन्मस्तकं धृष्टद्युम्नद्वारा च्छेदयिष्यामीति कपटं मनसि निधायाश्वत्थामा त्वत्पुत्रो मृत इत्येव त्वया वक्तव्यमित्युपदिशन्तं श्रीकृष्णं प्रति युधिष्ठिरस्य वचनम्—भो भगवन्, रिपवः दुर्योधनादयः शत्रवः बन्धून्भीमादीन्सोदरान्मया सह सुतान् पुत्रानपि तथा द्रौपदीमपि निघ्नन्तु। तत्रापि धर्मः अयं अनृतं मिथ्यावाक्यं वदेत्किम्। किंशब्दोऽयमाक्षेपे। तेन नैव वदेदिति योजना। अत्र श्रीकृष्ण आलम्बनम्, तदुक्ततत्प्रभाव उद्दीपनम्, तत्रापीत्यन्तद्योतितस्थैर्यमनुभावः, धर्मपदसूचितो गर्वः सहचारी चेत्येतैः पुष्टः सत्योत्साह एव परिकराङ्कुरालंकारतः प्राधान्येन ध्वन्यते॥ १०४॥ विद्यावीरमुदाहरति—**चतुरास्य इति**। इय हि माध्यस्थं प्रति कस्यचित् श्रीमत्सद्गुरुचरणारविन्दैकप्रसादमकरन्दनन्दितमनोमिलिन्दस्य करकलिताखिलशब्दब्रह्मणः पण्डितधुरीणस्योक्तिः। भो विद्वन्, अद्य चतुरास्यश्चतुर्मुखः। ब्रह्मेतियावत्। सहस्रास्यः शेष इत्यर्थः। अथवा स्वयं हयास्यो हयग्रीवः शब्दब्रह्माधिष्ठात्री श्रीनारायणस्य तुरंगवदना मूर्तिरपि। अखण्डं निरन्तरं नतु क्षणमात्रं वदतु विवादं करोतु। अत्राप्येवसत्यप्यहं गुरोः स्वाचार्यस्य कृपया पुरः तदग्र एवास्मि नतु विमुखीभविष्यामीत्यर्थः। अत्र माध्यस्थकथितप्रतिवाद्यालम्बितस्तद्वर्णिततत्प्रभावोद्दीपितोऽत्रापीत्यन्तद्योतितस्थैर्यानुभावितः पुरःपदसूचितगर्वसहकारी विद्योत्साह एव काव्यलिङ्गालंकारान्मुख्यतया व्यज्यते। अयमेव पाण्डित्यवीर इत्युच्यते। यथावा रसगङ्गाधरे—'अपि वक्ति गिरां पतिः स्वयं यदि तासामधिदेवतापि वा। अयमस्मि पुरो हयाननस्मरणोल्लङ्घितवाङ्मयाम्बुधिः' इति॥ १०५॥ तपोवीरमुदाहरति—**विष्ण्वाद्या अपीति**। एषा तु सकलदेवर्षिसभायां विश्वामित्रोक्तिः। भो सदस्याः, कौशिकस्य मे प्रभावं सामर्थ्यं विष्ण्वाद्या अपि देवाः पश्यन्त्वित्यन्वयः। अपिना तदितरेष्विन्द्रादिष्वनादरो ध्वनितः। यतः अहं

**श्रीरामस्याद्य नाज्ञेति नोचेल्लङ्कां क्षणादहम् ।**
**उत्पाट्याकमठं नेष्ये लाङ्गूलेनैव तत्पदम् ॥ १०७ ॥**
**असंख्यातवसन्तेषु कामकोटिशतेष्वपि ।**
**आश्लिष्टोऽपि त्वया रम्भे शुकः स्वप्ने रमेत किम् ॥ १०८॥**
**व्युत्थापितोऽपि संस्कारैरहमुद्दालको यदि ।**
**आ कैवल्यं समाधेस्तु नैव व्युत्थानमाप्नुयाम् ॥ १०९ ॥**

---

यत्र पक्षे नवां नूतनां सृष्टिमेव कुर्वे करोमि तत्र पक्षे ब्रह्मर्षित्वस्य का कथा । न कापीत्यर्थः । अत्र स्वप्रतिस्पर्धिवसिष्ठालम्बितः प्रत्यक्षतत्प्रभावसमुद्दीपितश्चतुर्थचरणसूचितस्थैर्यानुभावितः परिशिष्टत्रिपादीध्वनितगर्वसंचारी तपउत्साहएव काव्यार्थापत्त्यलंकारतः प्रधानतया द्योत्यते ॥ १०६ ॥ यत्नवीरमुदाहरति—**श्रीरामेति** । इयं हि रावणं प्रति मरुत्सुतोक्तिः । रे रावण, अद्य श्रीरामस्य मां प्रति तथा आज्ञा नास्तीति हेतोरेवाहमुदासीनोऽस्मि । नोचेदहं लङ्कां लाङ्गूलेन पुच्छेनैव आकमठं कमठात् आ इति । कूर्मपृष्ठ मर्यादीकृत्येति यावत् । क्षणात् क्षणमात्रेण उत्पाट्य उन्मूल्य तत्पदं तस्य श्रीरामस्य पदं पादपद्मं प्रति नेष्ये नेष्यामीति संबन्धः । अत्र रावणालम्बनस्तद्वचनवर्णिततत्प्रभावोद्दीपनः प्रथमपादद्योतितस्थैर्यानुभावः शिष्टत्रिपादीध्वनितगर्वसहचारी बलोत्साह एव काव्यलिङ्गालंकारतो मुख्यतया व्यज्यते । यथावा पण्डितरायाणाम्—'परिहरतु धरां फणिप्रवीरः सुखमयतां कमठोऽपि तां विहाय । अहमिह पुरुहूतपक्षकोपो निखिलमिदं जगदण्डकं वहामि' इति ॥१०७॥ त्यागवीरमुदाहरति—**असंख्यातेति** । हे रम्भे, शुकः व्यासपुत्रः असंख्यातवसन्तेषु उद्दीपनार्थं प्राप्तेष्वित्यर्थः । अपिच कामकोटिशतेष्वपि मनःक्षोभणार्थमुद्युक्तेषु सत्स्वपि इति यावत् । त्वया आश्लिष्टोऽप्यालिङ्गितोऽपि सन्नित्यर्थः । स्वप्नेऽपि इत्यपिशब्दोऽत्रानुकृष्य योज्यः । त्वयि रमेत क्रीडेत किम् । अपितु नैव रमेतेत्यर्थः । एव चैतद्वशीकारार्थं त्वद्व्यापारवैयर्थ्यमेवेति भावः । अत्रापिशब्दद्वयेनातितमस्त्यागः सूचितः । इदं हि रम्भां प्रति शुकस्यैव वचनम् । अत्रास्मच्छब्दाग्रहणादहंकाराभावो ध्वनितः । तथा चात्र रम्भालम्बितो वसन्तादितत्सामग्रीप्रभावोद्दीपितः किंशब्दाक्षिप्तस्थैर्यानुभावितः शुकेति स्वनामग्रहणबोधितगर्वव्यभिचारी च त्यागोत्साह एवातिशयोक्त्यलंकारापेक्षया प्राधान्येन ध्वन्यते । यथावा भर्तृहरिकृतवैराग्यशतके—'मातर्लक्ष्मि भजस्व कंचिदपरं मत्काङ्क्षिणी मास्म भूर्भोगेषु स्पृहयालवस्तव वशे का निःस्पृहाणामसि । सद्यः स्यूतपलाशपत्रपुटिकापात्रे पवित्रीकृते भिक्षासक्तुभिरेव संप्रति वयं वृत्तिं समीहामहे' इति ॥ १०८ ॥ योगवीरमुदाहरति—**व्युत्थापितोऽपीति** । एषा ह्युद्दालकनाम्नः कस्यचियोगवासिष्ठोपाख्यातस्य द्विजेन्द्रस्य ब्रह्मज्ञानोत्तरं यावत्प्रारब्धं सप्तम्याख्ययोगभूमावेव निर्विकल्पसमाधिपरिपाकेन स्थास्यामीति वासनया समाधिं कृत्वा मध्ये संस्कारवशाद्व्युत्थाने सति स्वमनःप्रत्येवोक्तिः । हे मनः, त्वया अहं संस्कारैः व्युत्थापितोऽपि

**मातरुर्वशि षण्ढत्वशापेऽपि मम न क्षतिः ।**
**स्मरदग्धृप्रतिद्वन्द्वी तद्वशः स्यात्किमर्जुनः ॥ ११० ॥**
**दृश्येन्द्रजाललक्षाण्यप्याकल्पमपि कल्पय ।**
**प्रारब्धमुग्ध तत्रापि चिदानन्देऽस्ति किं मयि ॥ १११ ॥**
**एवमन्येऽपि तद्भेदा बुधैरूह्याः सतां मताः ।**
**नचैवमस्यासंख्यत्वं दोषस्तस्येप्सितत्वतः ॥ ११२ ॥**
**संपद्रूपकलागानाऽहिंसैश्वर्यैकवित्वतः ।**
**श्रद्धाभक्त्यादिभिश्चास्य तथैवानुभवो यतः ॥ ११३ ॥**

असंप्रज्ञातसमाधेः प्रच्यावितोऽपि यद्यहमुद्दालकः एतच्छर्मा स्यां तदा तु आकैवल्यं कैवल्यपर्यन्तं समाधेर्निर्विकल्पकसमाधेः सकाशात् व्युत्थानं नैवामुयां प्राप्स्यामीत्यन्वयः।अत्र स्वमन एवालम्बनं,संस्कारपदध्वनिततत्प्रभाव एवोद्दीपनम्,अपिशब्दसूचितस्थैर्यमनुभावः, उद्दालकादिपदावेदितगर्वो व्यभिचारी च । एतैः पुष्टो योगोत्साहाख्यः स्थाय्येव स्वभावोक्त्यलंकारतो मुख्यतया व्यज्यते ॥ १०९ ॥ क्षमावीरमुदाहरति—**मातरिति** । इदं त्वर्जुनस्योर्वशीं प्रति वाक्यम् । पूर्वार्धे तु स्फुटमेव—**स्मरेति** । स्मरः कामस्तद्दग्धा तस्य दाहकः शिवः तस्य प्रतिद्वन्द्वी प्रतिभट इत्यर्थः । **तदिति** । तस्य स्मरस्य वशः । पराधीन इत्यर्थः । प्रसिद्धमेवेद सर्वं महाभारतादौ । अत्रानादृतोर्वश्यालम्बनस्तदुक्तशापप्रभावोद्दीपनः क्षत्यभावमूचितस्थैर्यानुभाव उत्तरार्धध्वनितगर्वसहचारी क्षमोत्साह एव परिकरालकारात् प्राधान्येन द्योत्यते ॥ ११० ॥ ज्ञानवीरमुदाहरति—**दृश्येति** । इय हि विचित्रसंकटं प्राप्तस्य कस्यचिद्ब्रह्मनिष्ठस्य स्वमनस्येव स्वप्रारब्धमुद्दिश्योक्तिः । रे प्रारब्धमुग्ध प्रारब्धकर्माभिध मूर्ख, त्व दृश्येन्द्रजाललक्षाणि दृश्यमेवेन्द्रजालं तस्य लक्षाणि । अनन्तकोटिद्वैतभ्रमकदम्बानीत्यर्थः । तान्यपि आकल्पमपि ब्रह्मकल्पपर्यन्तमपि कल्पय आभासयेत्यर्थः । तत्रापि चिदानन्दे अद्वैतस्वप्रकाशसदात्मसुखे मयि प्रतीचि किमस्ति। नैव किमपि विकारजात भवतीति संबन्धः। अत्र प्रारब्धालम्बितस्तदापादितसंकटविशेषप्रभावोद्दीपितः पूर्वार्धध्वनितस्थैर्यानुभावितोऽस्मच्छब्दद्योतितगर्वसचारितश्चात एव पुष्टस्तत्त्वज्ञानोत्साह एव रूपकाद्यलंकारात्प्रधानतया व्यज्यते ॥ १११ ॥ दिङ्मात्रेणैव मयैते भेदा उक्ता नत्वेतावन्त एवेति संख्यानियमेनापीत्यतोऽन्येपि शिष्टेष्टास्ते रसिकैर्यथासभव कल्पनीया एवेत्याह—**एवमिति** । तत्रातिप्रसङ्गमाशङ्क्य परिहरति—**नचैवमिति** । अस्य प्रकृतवीररसस्य असंख्यत्वं दोषः स्यादिति न । कुतः तस्य असंख्यत्वस्य ईप्सितत्वतः इष्टत्वादिति योजना । रसभेदबाहुल्येन तद्विपुलत्व हि अलंकारार्यवालंकारिकाणामिति तात्पर्यम् ॥ ११२ ॥ नन्विदमनुभवविरुद्धमित्यत आह—**संपदिति** ।

**मन्दोदरि कुबेरस्य रावणे गणनैव का ।**
**यस्य मे किंकरायन्ते संक्रन्दनमुखाः सुराः ॥ ११४ ॥**
**सखि तिष्ठतु सा राधा सत्यभामास्म्यहं किल ।**
**यदियं मत्तनुच्छाया गौरीमपि परा जयेत् ॥ ११५ ॥**
**दूरे मयस्तु नो येन विश्वकर्मापि गण्यते ।**
**को वा तस्य परीक्षेत कुशलः शिल्पकल्पनाम् ॥ ११६ ॥**
**गन्धर्वाप्सरसां तत्र कर्तुं वार्तापि शक्यते ।**
**भारत्यपि द्रवीभूताऽलापलेशेन यस्य मे ॥ ११७ ॥**

---

आदिपदात्कान्तिवीरादेर्ग्रहः ॥ ११३ ॥ तत्र सपत्नीरमुदाहरति—**मन्दोदरीति** । इयं हि मन्दोदरीं प्रति रावणोक्तिः । अत्र हि रसाविष्टचेतस्तया 'आत्मनाम गुरोर्नाम नामातिकृपणस्य च । श्रेयस्कामो न गृह्णीयाज्ज्येष्ठापत्यकलत्रयोः' इति धर्मशास्त्रनिषिद्धमपि स्वकलत्रनामग्रहणं कृतं तेन रसपरिपोष एव संपन्न इति प्रकृते युक्तमेव तदित्याशयः । 'सक्रन्दनो दुश्च्यवनः' इत्यमरात्सक्रन्दन इन्द्रः । अक्षरार्थस्तु स्फुट एव । एवंचेहार्थाक्षिप्तमन्दोदरीकृतकुबेरसंपदुत्कर्षवर्णनोद्दीपितस्तत्सपदालम्बित उत्तरार्धध्वनितस्थैर्यानुभावितः पूर्वार्धसूचितगर्वसहचारी चोत्साह एव स्वसपत्नसबन्धी काव्यलिङ्गालंकारतः प्राधान्येन व्यज्यते ॥ ११४ ॥ रूपवीरमुदाहरति—**सखीति** । अत्र राधावलम्बनम्, अर्थात्सखीकृततद्रूपाधिक्यवर्णनमुद्दीपनम्, उत्तरार्धसूचितस्थैर्यमनुभावः, स्वनामग्रहणद्योतितगर्वो व्यभिचारी चेत्येतैः पुष्टो रूपोत्साह एव परिकराङ्कुराद्यलंकारापेक्षया मुख्यतया वेद्यते । परेति च्छेदः छायाविशेषणम् । स्पष्टमेवावशिष्टम् ॥११५॥ कलावीरमुदाहरति—**दूर इति । मयस्त्विति** । इदं तु कंचित्प्रति कस्यचित्कलावतः शिल्पिनो जल्पनम् । मयो राजसूये धर्मराजस्य सभाकर्ता प्रसिद्ध एवासुरविशेषः । शिल्पं करकौशलम् । सरलमेवान्यत् । एवं चेह मयालम्बनस्तदुत्कर्षाकर्णनोद्दीपनो नो येनेत्यादिपूर्वार्धशेषसूचितस्थैर्यानुभावः को वेत्याद्युत्तरार्धध्वनितगर्वसंचारी च शिल्पाख्यकलोत्साह एव काव्यार्थापत्त्याद्यलंकारतो मुख्यतया द्योत्यते ॥ ११६ ॥ गानवीरमुदाहरति—**गन्धर्वेति** । यस्य मे आलापलेशेन 'स्यादाभाषणमालापः' इत्यमरादभितः सुस्वरं यद्भाषण तल्लेशेन तदंशेन नतु तत्साकल्येन भारती भगवती सरस्वत्यपि द्रवीभूता उदकत्वमेव प्राप्ताऽभूत्तत्र मयि गन्धर्वाप्सरसां वार्तापि भो सदस्य, त्वया कर्तुं शक्यते । काक्का नैव शक्यत इत्यर्थः । इदं तु सदसि सदस्यविशेष प्रति कस्यचिदभिनवसंगीतशालिनो वचः । अत्र चित्ररथादितुल्यमेवेदं गीतमिति तदुक्तार्थाक्षिप्तचित्ररथाद्युपमाध्वनिततदुत्कर्षोद्दीपितो गन्धर्वाद्यालम्बन उत्तरार्धोक्तातिशयोक्तिसूचितस्थैर्यानुभावो वार्तापीत्यपिशब्दद्योतितगर्वसहचारी च गानोत्साह एवोक्तालंकृतितः प्राधान्येन व्यज्यते ॥ ११७ ॥ अहिंसावीरमुदा

**ये वादेनापि हिंसन्ति ते जैनाः किमहिंसकाः ।**
**अहं तु मनसाप्येनं नैव हिंस्यां कदापि च ॥ ११८ ॥**
**कायव्यूहादिवार्तेयं भुशुण्डाग्रेऽपि युज्यते ।**
**ब्रह्माण्डरचना येन बहुवारमवेक्षिताः ॥ ११९ ॥**
**वागियं कालिदासीया भवभूतेः पुरोऽपि मे ।**
**वल्मीकजन्मनैवेह यस्योदरनिबन्धनम् ॥ १२० ॥**
**वेदाः शतं प्रजल्पन्तु नारायणमिहाधिकम् ।**
**सतीव मन्मतिः कान्ताच्चन्द्रचूडाच्चलेच्च किम् ॥ १२१ ॥**

हरति—**ये वादेनापीति** । इयं हि जैनमते तावदहिंसा परमरमणीयेति वादिनं प्रति कस्यचिद्यतेरुक्तिः । वादेन क्षणिकत्वादिकथाविशेषेण हिंसन्ति सामान्यतार्किकादीन्खण्डयन्तीत्यर्थः । स्पष्टमन्यत् । शिष्टं तूक्तदिशैवोह्यम् ॥ ११८ ॥ ऐश्वर्यवीरमुदाहरति—**कायेति** । इदं तु योगवासिष्ठप्रसिद्धभुशुण्डकाकस्य कंचियोगैश्वर्यं वर्णयन्त प्रति वचः । कायव्यूहोऽनेकदेहधारणमेककालमेवोपभोगार्थम् ॥ ११९ ॥ कवित्ववीरमुदाहरति—**वागियमिति** । इदं हि भोजसभायां भवभूतिवचनम् । इयं प्रत्यक्षा कालिदासीया कालिदाससंबन्धिनी भवभूतिनाम्नः कवेर्मे पुरोऽप्यस्ति । काक्वा न किंचिदेवेयमित्यर्थः । तत्रहेतुः **वल्मीकेत्युत्त**रार्धेन । इह लोके यस्य भवभूतेः । उदरनिबन्धन उदरोपलक्षितकटिबन्धन वल्मीकजन्मना वल्मीकनाम्नो महर्षेर्जन्म यस्य तेन भगवता वाल्मीकिना सहैवास्तीत्यर्थः । येन भवभूतिना श्रीवाल्मीकिनैव सह कविताविषये परिकरो बद्धस्तस्य ममाग्रेऽपि कालिदासस्येयं वाणी कथं वा प्रसतुमपि योग्या।तस्मादनेन नैव स्वकाव्यादिक मत्पुरः प्रकाशनीयमित्याशयः। अत्रैवकारेण सुतरां तदितरानादरः सूचितः । यद्वा सरस्वतीमुद्दिश्येदं गणपतेर्वास्तु वचः । तथाच भो षडानन, या मे आलिः दासी 'आलिः सखी वयस्या च' इत्यमरात्सखीव सहचर्याः बुद्धेर्दासी परिचारिकेत्यर्थः । सेयं वाक् सरस्वती भवभूतेः भवाच्छिवाद्भूतिः संभूतिरुत्पत्तिरिति यावत् । स्पष्टमन्यत् । शिवसुतस्य गणपतेरपि मे पुरः का । न किमपीत्यर्थः । कुत इत्यत आह—**वल्मीकेति** । वल्मीकेजेन्म यस्य । उपलक्षणमिद । प्रायेण नागो वल्मीक एवावतिष्ठते तस्माद्भगवता सहस्राननेन शेषेणैवेत्यर्थः । उक्तार्थमेवान्यत् । श्रीमद्गजाननस्य तुन्दबन्धो भुजंगमराजेनैवेति प्रसिद्धमेव । तस्मान्महाभाष्यकारोऽपि यस्योपस्करीभूतस्तस्य हेरम्बस्य मे पुरो मत्बुंदर्या अपि दासीय सरस्वती कथमपि नैव युक्तास्तीति तत्त्वम् ॥ १२० ॥ श्रद्धावीरमुदाहरति—**वेदा इति** । इय हि कंचिद्वैष्णवं पण्डितं प्रति श्रद्धालोः शैवस्योक्तिः । 'तत्व नारायणः परः'इत्यादिश्रुतेः'नारायणपरा वेदाः' इति वचनाच्च वेदाः इह लोके नारायणं विष्णु अधिकं सर्वोत्तमं शतं बहुवारमपि प्रजल्पन्तु वदन्त्वित्यर्थः । तथापि मन्मतिः कान्तात्स्वरमणात्सतीव साध्वीव चन्द्रचूडाच्छिवाच्चलेच्च किम् । नैव चलिष्यतीत्यर्थः । यथावा 'महेश्वरे वा जग-

**तात मृत्युभयं यस्य स किं भागवतो भवेत् ।**
**प्रह्लादोऽहं तु नामैकतत्परः किं पुनस्तराम् ॥ १२२ ॥**
**क्रूरेक्षादिविभावैश्च कम्पनाद्यनुभावकैः ।**
**मोहादिभिः सहायैश्च भयस्थायी भयानकः ॥ १२३ ॥**
**श्रुत्वा विद्युद्ध्वनिं राधा तद्वदेवाश्लिषद्घनम् ।**
**कृष्णमुत्कम्पमानाङ्गी त्रस्तबालमृगेक्षणा ॥ १२४ ॥**
**जुगुप्सास्थायिबीभत्सोऽनीक्ष्यज्ञानादिभिश्चितः ।**
**खादन्ति प्रेतमांसानि स्मशानेषु पिशाचकाः ॥ १२५ ॥**

---

तामधीश्वरे जनार्दने वा जगदन्तरात्मनि । न वस्तुतो विप्रतिपत्तिरस्ति मे तथापि भक्तिस्तरुणेन्दुशेखरे' इति । **कर्णामृतेऽपि**—'शैवा वयं न खलु तत्र विचारणीयं पञ्चाक्षरीजपपरा नितरां तथापि । चेतो मदीयमतसीकुसुमावभासं स्मेराननं स्मरति गोपवधूकिशोरम्' इति ॥ १२१ ॥ भक्तिवीरमुदाहरति—**तातेति** । हिरण्यकशिपुं प्रति प्रह्लादवचनमिदम् । स्फुट एवाक्षरार्थः । नचात्र धृतिवीरत्वं शङ्क्यम् । अत्र तद्व्यञ्जनाभावात् भक्त्युत्साहस्यैव ध्वननाच्च । तथाहि यतः अहं प्रह्लादः प्रकर्षेण ह्लादयति रलयोः सावर्ण्यात् ह्लादयति स तथा जगदानन्दकः । किंच पुनस्तरामत्यन्तनामैकतत्परः त्वत्कृतमृत्युभये समुपस्थितेऽपि यतोऽहं विश्वाह्लादकः श्रीहरिनामस्मरणैकपरायणोऽतोऽहमेव भागवत इति योजना ॥ १२२ ॥ एवं वीररसं प्रपञ्च्याथ क्रमप्राप्तं भयानकं लक्षयति—**क्रूरेक्षादीति** । क्रूरस्य भयंकरस्य वस्तुनः ये ईक्षादयः अवलोकनादयः । आदिपदाच्छ्रवणादेः संग्रहः । ते च ते विभावाः उद्दीपनादिविभावास्तैरित्यर्थः । तथा कम्पनाद्यनुभावकैः कम्पाद्यनुभावैः एवं मोहादिभिः सहायैः व्यभिचारिभावैश्च पुष्टः भयस्थायी भयमेव स्थायी यस्य स भयानको रस इत्यर्थः । एवंच क्रूरदर्शनादिविभावादिपुष्टभयस्थायित्वं भयानकरसत्वमिति तल्लक्षणं फलितम् ॥ १२३ ॥ तमुदाहरति—**श्रुत्वेति** । राधा विद्युद्ध्वनिं तडिन्नादं श्रुत्वा अतएव उत्कम्पमानाङ्गी उत्कर्षेण कम्पितगात्रेत्यर्थः । अतएव **त्रस्तेति** । त्रस्ताः भीताः ये बालमृगास्तदीक्षणवच्चकिते ईक्षणे लोचने यस्याः सा तथेत्यर्थः । एतादृशी च सती तद्वदेव विद्युल्लतेवैव घनं यथा स्यात्तथा परमगाढमित्यर्थः । यद्वा श्यामरूपतया घनरूपं कृष्णं आश्लिषत् समालिलिङ्गेत्यर्थः । घनमिति विद्युद्ध्वनेरपि विशेषणम् । अत्र विद्युद्ध्वनिश्रवणमालम्बनम्, तद्घनत्वमुद्दीपनम्, उत्कम्पनमनुभावः, चकितदृष्ट्याक्षिप्तमोहादिः संचारी चेत्येतैः पुष्टो भयाख्यः स्थाय्येव रूपकाद्यलंकारतः प्रधानभावेन ध्वन्यते । यथावा रसतरङ्गिण्याम्—'गोपी क्षीरघटीविलुण्ठनविधिव्यापारवार्ताविदोः पित्रोस्ताडनशङ्कया शिशुवपुर्देवः प्रकाश्य ज्वरम् । रोमाञ्चं रचयन् दृशौ मुकुलयन्प्रत्यङ्गमुत्कम्पयन्सीत्कुर्वंस्तमसि प्रसर्पति गृहं सायं समागच्छति' इति ॥ १२४ ॥ तद्वद्बीभत्सं लक्षयति—**जुगुप्सेति** । जुगुप्सा स्थायी यस्य स चासौ बीभत्स-

**मायिकादिविभावश्च रोमाञ्चाद्यनुभावकः।**
**मोहादिर्व्यभिचारी च विस्मयस्थायिकोऽद्भुतः॥ १२६॥**
**वटपत्रपुटे शेते कराब्जेन पदाम्बुजम्।**
**मुखाम्भोजे विनिक्षिप्य कोऽयमेकार्णवे शिशुः॥ १२७॥**
**द्वैतप्रबोधौदासीन्यमतिमुख्यैः सुपोषितः।**
**विभावाद्यैस्तु निर्वेदस्थायी शान्तो रसः स्मृतः॥ १२८॥**
**कदाप्यदृष्टदृश्यस्य भूम्नश्चिन्मात्रवस्तुनः।**
**अखण्डानन्दसिंधोर्मे करणीयं किमीहितम्॥ १२९॥**

---

धेति बहुव्रीहिगर्भितकर्मधारयः। तद्धेतूनाह—**अनीक्ष्येति**। ईक्ष्यं दर्शनीयं रमणीयं न भवतीत्यनीक्ष्यं प्रेतादि तस्य ज्ञानं आदि येषां तैरित्यर्थः। चितः उपचितः पुष्ट इति यावत्। तमुदाहरति—**खादन्तीति**। अत्र प्रेतमालम्बनम्, पिशाचकर्तृक तन्मांसखादनमुद्दीपनम्, तद्दर्शनादिजन्यो गात्रकम्पाद्यनुभावः उत्तमनिष्ठत्वेनार्थाक्षिप्तमवहित्थादिर्व्यभिचारि चलैतैः पुष्टा जुगुप्सैव स्वभावोक्त्यलंकारान्मुख्यत्वेन ध्वन्यते॥ १२५॥ एवमद्भुत लक्षयति—**मायिकादीति**। स्पष्टार्थः॥ १२६॥ तमुदाहरति—**वटपत्रेति**। इयं हि भगवन्मायां दृष्टवतो मार्कण्डेयस्यैकार्णवावसरे स्वमनस्येवोक्तिः। यः कराब्जेन पदाम्बुजं मुखाम्भोजे विनिक्षिप्य एकार्णवेऽपि वटपत्रपुटेऽपि शेते अयं शिशुः कः अस्तीत्यन्वयः। अत्र भगवदालम्बनस्तदीयोक्तलीलावलोकनोद्दीपनस्तदाक्षिप्तरोमाञ्चाद्यनुभावो मोहादिर्व्यभिचारी च विस्मय एव लुप्तोपमालंकारापेक्षया मुख्यत्वेन व्यज्यते। यथावा रसगङ्गाधरे—'चराचरजगज्जालसदनं वदनं तव। गलं गहनगाम्भीर्यं वीक्ष्यास्मि हृतचेतना' इति। इदं श्रीकृष्णमुखे विश्वं पश्यन्त्या यशोदाया एव वचनम्॥ १२७॥ अथावशिष्टं शान्तरसं लक्षयति—**द्वैतप्रबोधेति**। द्वैतं आलम्बनम्, प्रबोधो ब्रह्मसाक्षात्कार उद्दीपनम्, औदासीन्यमनुभावः' मतिर्व्यभिचारी च तन्मुख्यैर्विभावादिभिः सुपोषितः परिपुष्टः निर्वेदस्थायी निर्वेद एव स्थायी यस्य एतादृशः शान्तो रसः स्मृतोऽस्तीत्यन्वयः॥ १२८॥ तमुदाहरति—**कदापीति**। कस्मिंश्चिद्देशे कालेऽपीत्यर्थः। **अदृष्टेति**। न दृष्टं सत्यत्वेनानुभूतं दृश्यं ज्ञानोत्तरकालावच्छेदेन यावद्द्वैतं येन स तथेत्यर्थः। भूम्नः व्यापकस्य। **चिन्मात्रेति**। चिदेकरसवस्तुन इत्यर्थः। ननु भवत्वेवमद्वैतदृगेकस्वरूपत्वेन तत्त्वज्ञानोत्तरं त्रैकालिको द्वैतमिथ्यात्वबोधस्तथापि किं तावता दुःखनिवृत्तिसुखावाप्त्यन्यतरस्य पुरुषार्थस्य सिद्ध्यभावात्कर्तव्यतायास्तदर्थमुर्वरितत्वं सिद्धमेव तत्राह—**अखण्डेति**। अखण्डस्त्रिविधपरिच्छेदशून्यो य आनन्दः स एव सिंधुस्तस्येत्यर्थः। एतादृशस्य मे ब्रह्मविदः ईहितं इच्छितं करणीयं संपादनीयं किमस्ति। न किंचिदपीत्यर्थः। जीवन्मुक्तत्वेन कृतकृत्यत्वादिति भावः। इयं हि केनचित्सुहृदा सतीर्थ्येन भो मित्र, भवतामितः परं किं साधनजातं योगादिरूपक-

**एते रसाः पुनर्द्वेधा लौकिकालौकिकत्वतः।**
**आद्यास्तूक्ता द्वितीयाश्च यान्ति त्रिविधतां पुनः॥ १३०॥**
**स्वाप्ना मानोरथा औपनायिकाश्चेति तत्क्रमः।**
**स्वप्नेऽपश्यद्रमां कृष्णोऽस्म्यहं वीरो मनोरथैः॥ १३१॥**
**पदादिभिश्चमत्कारात्काव्ये चाभिनयादिभिः।**
**नाट्ये च सुधियां जात औपनायिक उच्यते॥ १३२॥**

तव्यमस्तीति पृष्टस्य ब्रह्मनिष्ठस्य रहसि व्यावहारिकदृशा तं प्रत्युक्तिः। परमार्थतस्त्वदृशा तु 'न निरोधो नचोत्पत्तिर्न बद्धो नच साधकः। न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता' इति श्रुतेर्न किंचिदेतत्। एतेन 'अहं मनुरभवं सूर्यश्च' इत्यादिश्रुतयो 'न मे पार्थास्ति कर्तव्यम्' इत्यादिस्मृतयोऽपि व्याख्याताः। सार्वात्म्यकर्तव्यताभावादेश्च व्यवहारदृशैव ताभिरुक्तत्वात्परमार्थे तु सर्वशब्दितदृश्यस्यैव राहित्येन तन्निरूपिततदात्मत्वस्यापि सुतरामसंभवादत एव सुप्त्यादाविव कर्तृत्वाभावस्यार्थसिद्धत्वाच्च। अत्र दृश्यमालम्बनं तन्मिथ्यात्वबोध उद्दीपनं च प्रथमपादेन, चतुर्थः पादेनौदासीन्यरूपोऽनुभावः, शेषेण मतिलक्षणः सचारी चेत्येतैः पुष्टो निर्वेद एव रूपकाद्यलंकारतः प्राधान्येन ध्वन्यते। यथावा श्रीमत्सदाशिवब्रह्मेन्द्रसरस्वत्यः— 'देशिकेन्द्रकृपाचन्द्रसमेधितचिदम्बुधौ। निमग्नोऽहं न पश्यामि मत्तोऽन्यद्वस्तु किंचन' इति॥ १२९॥ एवं नवरसानभिवर्ण्य पुनरेतेषां लौकिकत्वादिभेदेन द्वैविध्यं विधत्ते—**एत इति**। सयोगादिलौकिकसंनिकर्षजन्यत्वं लौकिकत्वं, ज्ञानाख्यालौकिकसंनिकर्षजन्यत्वमलौकिकत्वम्। तथाचोक्तं रसतरङ्गिण्याम्—सच रसो द्विविधः लौकिकोऽलौकिकश्चेति। लौकिकसनिकर्षजन्मा रसो लौकिकः। अलौकिकसंनिकर्षजन्मा रसोऽलौकिकः। लौकिकसंनिकर्षः षोढा विषयगतः। अलौकिकसंनिकर्षो ज्ञानं तेषु चानुभूतेषु ज्ञानमेतज्जन्माननुभूतेषु अपि तेषु प्राक्तनसंस्कारद्वारा ज्ञानमेव प्रत्यासत्तिः। अलौकिकरसस्त्रिधा स्वाप्निको मानोरथिक औपनायिकश्चेति। औपनायिकश्च काव्ये पदपदार्थचमत्कारे नाट्ये च। परंतु द्वयोरप्यानन्दरूपता। ननु मानोरथिको रसो न प्रसिद्ध इति चेत्सत्यम्। 'अस्माकं तु मनोरथोपरचितप्रासादवापीतटक्रीडाकाननकेलिकौतुकजुषामायुः परं क्षीयते' इत्यादौ मानोरथिकशृङ्गारश्रवणात्। शास्त्रेषु सुखत्रैविध्यगणनाच्च रसेन विना च सुखानुत्पत्तेरितीति॥ १३०॥ प्रतिज्ञातमलौकिकरसत्रैविध्यं विशदयति—**स्वाप्ना** इत्यर्धेन। स्वप्ने भवाः स्वाप्नाः।मनोरथे भावाः मानोरथाः। उपनायके काव्ये बुद्धिस्थत्वेन नाट्ये निकटवर्तिनटाभिन्नत्वेन भावितत्वात् समीपवर्तिनि नायके भवा औपनायिकाः। तत्र द्वावुदाहरति—**स्वप्न इ**त्यादिपादाभ्याम्॥ १३१॥ अन्त्यमुद्बोधयति—**पदादिभिरिति**। काव्ये पदादिभिस्तथा नाट्ये अभिनयादिभिश्च सुधियां चमत्काराद्यो रसो जातः स औपनायिक उच्यत इति संबन्धः॥ १३२॥

**एतेषां तु प्रधानत्वे ध्वनित्वं गुणभावतः।**
**रसालंकारता साच गौणव्यङ्ग्ये स्फुटीभवेत् ॥ १३३ ॥**
**रसं भक्त्याख्यमप्याहुर्भक्ताः शाण्डिल्यवर्त्मगाः।**
**खण्डयन्त्यपि तच्चान्य आलंकारिकमानिनः ॥ १३४ ॥**
**वस्तुतस्तूभयं श्लाघ्यं यो मद्भक्त इति स्मृतेः।**
**मुख्या भक्तिः पुनर्जीवन्मुक्तिरेवोच्यतां बुधैः ॥ १३५ ॥**
**एवं च शान्त एवान्तर्भावात्तत्खण्डनं तथा।**
**मण्डनं चात्मनिष्ठत्वाद्रसत्वाद्घटतेतराम् ॥ १३६ ॥**

एवं तद्विशेषमभिधायान्यमपि तत्र विशेषं 'तत्राद्यं तु द्विधा व्यङ्ग्यप्रधानगुणभावतः' इत्यादिना पुरा सूचितमपि पुनः स्फुटयति—**एतेषामिति**। उक्तं हि रसगङ्गाधरे—एषां प्राधान्ये ध्वनिव्यपदेशहेतुत्वं गुणीभावे तु रसालंकारत्वमिति । ननु ध्वनित्वमुक्तरीत्या स्पष्टमेव रसालंकारत्वं तु कथमिति चेद्गौणव्यङ्ग्यापरनामकोत्तमकाव्यनिरूपणे तस्योदाहरिष्यमाणत्वान्नात्र तत्प्रपञ्च्यत इत्याह—**साचेति** ॥ १३३ ॥ अथावसरप्राप्तत्वेन भक्तिरसमानिनां मतं संक्षिपति—**रसमिति**। शाण्डिल्यो हि भक्तिशास्त्रस्य सूत्रकारः तद्वर्त्मगाः 'अथातो भक्तिजिज्ञासा' इत्यादि तदुक्तमार्गानुसारिण इत्यर्थः। तथाचोक्तं भगवद्भक्तिचन्द्रिकामृतरसोल्लासे—'परत्रानासङ्गं जनयति रतिर्या नियमतः परस्मिन्नेवास्मिन्समरसतया पश्यत इमम्। परप्रेमाख्येयं भवति परमानन्दमधुरा परा भक्तिः प्रोक्ता रस इति रसास्वादनचणैः' इति। अधिकं तु तट्टीकादावेव बोध्यम् । अस्त्वेवं तर्हि सापि दशमो रस इति तत्राह—**खण्डयन्त्यपीति**। उक्तं हि काव्यप्रकाशमूले—'रतिर्देवादिविषया व्यभिचारी तथाञ्चितः। भावः प्रोक्तः' इत्यादिना। विस्तरस्तु रसगङ्गाधरादौ द्रष्टव्यः ॥ १३४ ॥ नन्वेवं तर्हि किं भक्तमतं श्लाघ्यमालंकारिकमतं वेति तत्राह—**वस्तुतस्त्विति** । कथमुभयश्लाघ्यत्वं तन्मतोक्तयुक्तिविरोधात्प्रत्युत सुंदोपसुंदन्यायेनोभयध्वंसापत्तेश्चेत्यतो गूढाभिसंधिः। प्रथमं मुख्यं भक्तिस्वरूपमेवोपपादयति—**यो मद्भक्त** इत्यादिना शेषेण। उक्तं हि भगवद्गीतासु—'अद्वेष्टा सर्वभूतानां मैत्रः करुण एवच। निर्ममो निरहंकारः समदुःखसुखः क्षमी। संतुष्टः सततं योगी यतात्मा दृढनिश्चयः। मय्यर्पितमनोबुद्धिर्यो मद्भक्तः स मे प्रियः' इति । श्रीमद्विद्यारण्यगुरवोऽपि जीवन्मुक्तिविवेक आहुः—'जीवन्मुक्तः स्थितप्रज्ञो विष्णुभक्तश्च कथ्यते' इति ॥ १३५ ॥ भवत्वेवं जीवन्मुक्तेरेव मुख्यभक्तित्वं किं तावतेत्यत आह—**एवंचेति** । जीवन्मुक्तेरेव मुख्यभक्तित्वसिद्धौ सत्यामित्यर्थः। शान्ते शान्तरसे। तत्खण्डनं आलंकारिकक्रियमाणं तस्याः रसान्तरत्वनिरसनम्। तथा आत्मनिष्ठत्वादद्वैतात्मविषयकवृत्तिविशेषत्वाद्धेतोः रसत्ववशात्तस्याः मण्डनं भक्तकृतपृथग्रसत्वोपपादनमपि घटतेतरां इति यावत् ॥ १३६ ॥

**तथाच को विरोधोऽत्र भक्तालंकारिकाध्वनोः।**
**अवराव्यभिचारित्वाद्भक्तिर्भावोऽस्तु का क्षतिः॥ १३७॥**
**निर्वेदेति रतिर्देवेत्यादि चोक्त्या पुरातनैः।**
**भावाः प्रोक्ताश्चतुस्त्रिंशद्विमीयन्ते क्रमेण ते॥ १३८॥**
**अवज्ञादिसमुत्पन्ना वृत्तिर्निर्वेद उच्यते।**
**ममाभिन्नसुतस्यापि यदि मौर्ख्यं किमायुषा॥ १३९॥**
**ग्लानिराध्यादिजा देहव्यापाराक्षमता मता।**
**बिससुप्ताऽगतं कृष्णं कटाक्षैरेव साऽयजत्॥ १४०॥**

---

एतावतापि मतद्वयमेवोपपादितम्। तथाचोक्तदोषतादवस्थ्यमेवेति तत्राह—**तथाचेति**। तथापि कथ विरोधाभाव इति शङ्कमानं स्वाभिसंधिमजानानं प्रति तमुद्घाटयति—**अवरेति**। अयं भावः—भक्तिर्हि द्विविधा मुख्याऽमुख्या च। तत्राद्यायाः आलंकारिकमते शान्तेऽन्तर्भावादन्त्यायाश्च भावत्वात्तत्खण्डनं, भक्तमते तु शान्तस्यैव तत्रान्तर्भावादाद्याया एव रसत्वोक्त्या तन्मण्डनं चेत्यविरोध इति। अतएव तत्र परेत्यादितद्विशेषणानि ॥ १३७ ॥ एवं रसान्निरूप्य तत्सहायीभूतान् भावान्निरूपयितुं पूर्वाचार्यसंमतिपूर्वकं तत्सङ्ख्यामाह—**निर्वेदेतीति**। तथाच काव्यप्रकाशे भरतकारिकाः—'निर्वेदग्लानिशङ्काख्यास्तथासूयामदश्रमाः। आलस्यं चैव दैन्यं च चिन्तामोहः स्मृतिर्धृतिः। व्रीडा चपलता हर्ष आवेगो जडता तथा। गर्वो विषाद औत्सुक्यं निद्रापस्मार एव च। सुप्तं विबोधोऽमर्षश्चाप्यवहित्थमथोग्रता। मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च। त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः' इति। तत्रैव 'रतिर्देवादिविषया व्यभिचारी तथाञ्जितः' इति च। व्यभिचारिभावसामान्यलक्षणं तूक्तं रसगङ्गाधरे भावान्प्रकृत्य—'विभावादिव्यज्यमानहर्षाद्यन्यतमत्वम्' इति व्यभिचारिभावत्वमिति शेषः ॥ १३८ ॥ तत्रोक्तोद्देशक्रमानुसारेण 'संचारिणां तु लक्ष्मादि वक्ष्याम्यग्रे यथाक्रमम्' इति। प्राक्प्रतिज्ञातं तल्लक्ष्मादिकथनं कुर्वन् विस्पष्टं प्रथम निर्वेदं लक्षयति—**अवज्ञादीति**। आदिपदात्तिरस्कारादेर्ग्रहः। एतच्चावज्ञादि परकृतमेव बोध्यम्। स्वकृतस्य तु तस्य विचारं विनाऽसंभवात्तदङ्गीकारे च शान्तस्थायिनि निर्वेदे अतिव्याप्तेस्तस्मायुक्तमेवात्र परकृतत्वमिति तत्त्वम्। ननु कथमेकस्यैव निर्वेदस्य स्थायित्वं व्यभिचारित्वं चेति चेन्न। लक्षणभेदेन भिन्नत्वस्योक्तत्वात्। तमुदाहरति—**ममेति**। यथावा रसतरङ्गिण्याम्—'क्षोणीपर्यटनं श्रमाय विदुषां वादाय विद्यार्जिता मानध्वंसनहेतवे परिचितास्ते ते नराधीश्वराः। विश्लेषाय कुरङ्गसुन्दरदृशामास्ये कृता दृष्टयः कुज्ञानेन मया प्रयागनगरे नाराधि नारायणः' इति॥१३९॥ ग्लानिं लक्षयति—**ग्लानिरिति**। आध्यादिजा मनोव्यथादिसंभूता। आदिना व्याध्यादिसंग्रहः। एतादृशी देहव्यापाराक्षमता शरीरव्यवहारेष्वसमर्थता ग्लानिर्मतास्तीत्यन्वयः। तामुदाहरति—**बिसेति**। बिसेषु कमलतन्तुषु सुप्ता शयाना। एतेन विरहदाहातिशयो

शङ्का तु किमनिष्टं मे स्यादित्थं वृत्तिरान्तरा।
अस्ताचलावलम्ब्येष भास्करोऽथ कथं भवेत्॥ १४१॥
परोत्कर्षासहिष्णुत्वमसूया मत्सराभिधा।
सति मद्वदनेऽपीन्दुर्दैवादेवोदितो हरे॥ १४२॥
अतिहर्षोत्तरा वृत्तिर्मद्याद्युत्थाथवा मदः।
जयी कामः शिवेऽप्येति बलः पानेन सुप्यति॥ १४३॥
देहव्यापारपैष्कल्यात्पराभूतिः श्रमः स्मृतः।
वृक्षमूलस्थरामाङ्के सीता निद्रापराभवत्॥ १४४॥
क्रियाऽनुन्मुखतालस्यं चित्ते गर्भश्रमादिजा।
विजये वक्तुमप्यद्य नेच्छा मे गर्भगौरवात्॥ १४५॥
दुःखादिजनिता चित्तवृत्तिर्दैन्यं स्वदोषकृत्।
हन्ताद्य मन्दया नन्दनन्दनो नादृतो मया॥ १४६॥

---

व्यज्यते। एतादृशी सा प्रसिद्धा राधा आगतं कृष्णं कटाक्षैरेव सप्रेमतिर्यगवलोकनैरेव नत्वर्घ्यपाद्यादिभिः अयजत्। अपूजयदित्यर्थः। एतेन तस्याः प्रत्युद्गमनार्थमुत्थानेऽप्यसामर्थ्यं ध्वनितम्। अत्र कटाक्षपदेनैतावान्विलम्बः किमिति संपादित इत्यनुचितकारित्वं नायके द्योतितम्॥ १४०॥ शङ्कां लक्षयति—**शङ्कात्विति**। आन्तरा अन्तःकरणजा ननु शब्दजा शब्दनिष्ठा शक्त्यादिवृत्तिः तज्जन्यार्थोपस्थितिरिति यावत्। उक्तं हि रसगङ्गाधरे—'किमनिष्टं मे भविष्यतीत्याकारश्चित्तवृत्तिविशेषः शङ्केति। तामुदाहरति—**अस्तेति**। इदं हि विरहिण्याः राधिकाया वचः ॥१४१॥ असूयां लक्षयति—**परेति**। तामुदाहरति—**सतीति**। अपिना गर्वातिशयः सूचितः। दैवादेवेत्यनेन मद्वदने सत्येतस्य कलङ्किनश्चन्द्रस्योदयेन नैव भाव्यं परंतु दैववशादेवास्योदयः संपन्न इत्यसहिष्णुत्वं ध्वनितम्। इयमपि सौन्दर्यगर्वितायास्तस्या एव हरिं प्रत्युक्तिः॥ १४२॥ मदं लक्षयति—**अतिहर्षेति**। क्रमेण लक्षणद्वयेऽप्युदाहरणद्वयमाह—**जयीति**। त्रैलोक्यविजयीत्यर्थः। एतेनातिहर्षः सूचितः। अतएव शिवे तद्विषयकजयसंपादनार्थमिति यावत्। एति गच्छति। अपिशब्देनात्र तस्य सर्वेश्वरत्वात्तत्रैतद्गमनमनुचितमिति द्योतितम्। बलो बलरामः॥ १४३॥ श्रमं लक्षयति—**देहेति**। पराभूतिः शरीरे व्यवहारपराङ्मुखतेत्यर्थः। तमुदाहरति—**वृक्षेति**। अत्र वृक्षमूलेति पदेन तस्यां मार्गश्रमः सूचितः॥ १४४॥ आलस्यं लक्षयति—**क्रियेति**। चित्ते गर्भश्रमादिना रतिश्रमादेर्ग्रहः। ईदृशी या क्रियानुन्मुखताव्यापारपरा वृत्तिस्तदालस्यमिति योजना। तदुदाहरति—**विजय इति**। इदं हि स्वसखीं प्रति गौरीवचः॥ १४५॥ दैन्यं लक्षयति—**दुःखादीति**। आदिना पश्चात्तापादिः। तदुदाहरति—**हन्तेति**। मया न आदृत इति संबन्धः। यथावा रसगङ्गाधरे—'हतकेन मया वनान्तरे वनजाक्षी सहसा विवासिता। अधुना मम कुत्र सा सती पतित-

इष्टाप्राप्त्यादिजनितं ध्यानं चिन्तेति कथ्यते।
आयास्यति कदा कृष्णो मथुरातोऽत्र मानदः ॥ १४७ ॥
मोहो भयादिजा वृत्तिर्याथार्थ्यानवधारिणी।
मुषित्वापसरन्मातर्नेत्यूचे भित्तिमेव सः ॥ १४८ ॥
स्मृतिः संस्कारजं ज्ञानं प्रत्यभिज्ञापि सैव नः।
हृदि राधा ममाद्यापि सेयं श्रीरेव रुक्मिणी ॥ १४९ ॥
दुःखेऽप्यदुःखबुद्धिर्वा संतोषो वा धृतिर्मता।
का चिन्तार्थेषु मे शंभोः पादाब्जं यदि मस्तके ॥ १५० ॥
व्रीडा स्त्रीणां पुमीक्षादेर्वृत्तिस्तेषां तु भङ्गतः।
विष्णुं दृष्ट्वा नतास्या श्रीः सोऽपि गङ्गासुतं तथा ॥ १५१ ॥

स्येव परा सरस्वती' इति ॥ १४६ ॥ चिन्तां लक्षयति—**इष्टेति**। आदिनानिष्टावाप्त्यादिग्रहः। तामुदाहरति—**आयास्यतीति**। इदं हि राधायाः स्वमनस्येव वचः यथावा भानुमिश्राः—'शंभुं ध्यायति शैलराजतनया किं नाम जानीमहे तस्यैवाक्षि तनूनपादिव तनौ तापः समुन्मीलति। अक्ष्णोरश्रुमिषेण गच्छति बहिर्गङ्गातरङ्गावलिः पाण्डिम्नः कपटेन चन्द्रकलिकाकान्तिः समुन्मीलति' इति ॥ १४७ ॥ मोहं लक्षयति—**मोह इति**। आदिपदादावेगादिः। **याथार्थ्येति**। यथार्थस्य भावो याथार्थ्यं सत्यत्वं तस्य अनवधारिणी अनिश्चायिकेत्यर्थः। तामुदाहरति—**मुषित्वेति**। सः श्रीकृष्णः मुषित्वा स्वेयीकृत्येत्यर्थः। नवनीतादीति शेषः। अपसरन्पलायन्सन्नित्यर्थः। हे मातः, न नैव मया चौर्यं कृतमिति मदान्धकारे निकटवर्ति गोप्यन्तरमन्दिरे यशोदायास्तत्रागमनशङ्कया तद्भयाद्भित्तिमेव ऊचे उक्तवानित्यन्वयः। यथावा रसतरङ्गिण्याम्—'अन्तःस्मेरसुवर्णकेतकदलद्रोणीद्युतिद्रोहिणीं लक्ष्मीं वीक्ष्य समुद्यदिन्दुवदनां क्षीराम्बुधेरुत्थिताम्। शंभुः स्तम्भशताकुलः शतमखः कर्तव्यमूढेन्द्रियः सोऽप्यज्ञानभुजंगपाशपतनो जातस्त्रिलोकीपतिः' इति ॥ १४८ ॥ स्मृतिं लक्षयति—**स्मृतिरिति**। नः अस्माकमित्यर्थः। तामुदाहरति—**हृदीति**। इदं हि भगवतः स्वरत्यागारे रुक्मिण्या सह विलसतः स्वमनस्येव वचः। तत्र प्रथमं दलं स्मृतेश्चरमं तु प्रत्यभिज्ञाया उदाहरणं बोध्यम्। यथावा भानुमिश्राः—'वन्दनाम्बुजलग्नदृष्टिपाते मयि बध्नत्यवतंसमंसमूले। दरकुञ्चितदृष्टिराधिकायाः स्मितकिर्मीरितमाननं स्मरामि। कालिन्दीसरसः समेत्य नभसः क्रोडे परिक्रीडते चक्रद्वन्द्वमिदं सुधाकरकलामाक्रम्य विस्फूर्जति। चन्द्रोऽपि स्मरचापचापलचमत्कारं समालम्बते तस्मात्सैव कदम्बकुञ्जकुहरे राधा परिभ्राम्यति' इति ॥ १४९ ॥ धृतिं लक्षयति—**दुःखेऽपीति**। तामुदाहरति—**केति** ॥ १५० ॥ व्रीडां लक्षयति—**व्रीडेति**। क्रमेणोदाहरति—**विष्णुमिति**। गङ्गासुतो भीष्मः ततः स्वप्रतिज्ञाभङ्गात्तद्दर्शनेन नतास्यत्वमित्याशयः। यथावा रसगङ्गाधरे—'कुचकलशयुगान्तर्मामकीनं नखाङ्कं सपुलकतनु मन्दं मन्दमालोकमाना।

अविचार्य प्रवृत्तिर्या शीघ्रं चपलतास्ति सा ।
विषमेव प्रयच्छेमं प्रह्लादं कुलकण्टकम् ॥ १५२ ॥
हर्षः सुखविशेषः स्यादिष्टप्राप्त्यादिसंभवः ।
दृष्टे श्रीगुरुपादाब्जे भावा अष्टौ ममाभवन् ॥ १५३ ॥
अनर्थातिशयाद्वृत्तिरावेगः संभ्रमाभिधा ।
अक्रूरो नयते कृष्णं क यामः स्मरतो वयम् ॥ १५४ ॥
जडतावश्यकर्तव्यार्थानुसंधानहीनता ।
सीता हनुमता दृष्टा यथार्थे भूमिसंभवा ॥ १५५ ॥
रूपादिना निजोत्कर्षाद्गर्वोऽन्यस्यावहेलनम् ।
मत्सौन्दर्यानुसंधानान्न ते गोवर्धन व्यथा ॥ १५६ ॥

---

विनिहितवदनं मां वीक्ष्य बाला गवाक्षे चकितनतनताङ्गी सद्म सद्यो विवेश' इति ॥ १५१ ॥ चपलतां लक्षयति—**अविचार्येति** । या अविचार्य शीघ्रं प्रवृत्तिः सा चपलतास्तीत्यन्वयः । तामुदाहरति—**विषमेवेति** । इदं हि कयाधुं प्रति हिरण्यकशिपोर्वचः । प्रयच्छ अर्पयेत्यर्थः ॥ १५२ ॥ हर्षं लक्षयति—**हर्ष इति** । तमुदाहरति—**दृष्ट इति** । अष्टौ प्रागुक्ताः स्तम्भादयः सात्विका अनुभावा इत्यर्थः । यथावा भानुमिश्राः—'पुलकितकुचकुम्भपालिराधा व्रजति मुकुन्दमुखेन्दुवीक्षणाय । विरचयति न मध्यभङ्गभीतिं गणयति नापि नितम्बगौरवाणि' इति । पण्डितराया अपि—'अवधौ दिवसावसानकाले भवनद्वारि विलोचने दधाना । अवलोक्य समागतं तदा मामथ रामा विकसन्मुखी बभूव' इति ॥१५३॥ आवेगं लक्षयति—**अनर्थेति** । अनर्थातिशयात्संभ्रमाभिधावृत्तिरावेग इति योजना । तमुदाहरति—**अक्रूर इति** । इयंतु गोपीनां स्वमनस्येव तदोक्तिः वयं स्मरतः कामसकाशात्पलाय्य क यामः गच्छाम इत्यर्थः । यथा वा रसगङ्गाधरे—'लीलया विहितसिन्धुलङ्घनः सोऽयमेति रघुवंशनन्दनः । दर्पदुर्विलसितो दशाननः कुत्र यामि निकटे कुलक्षये' इति॥१५४॥ जडतां लक्षयति—**जडतेति** । तामुदाहरति—**सीतेति** । यथावा पण्डितरायाः—'यदवधि दयितो विलोचनाभ्यां सहचरि दैववशेन दूरतोऽभूत् । तदवधि शिथिलीकृतो मदीयैरथ करणैः प्रणयो निजक्रियासु' इति ॥ १५५ ॥ गर्वं लक्षयति—**रूपादिनेति** । रूपादिना सौन्दर्यादिना । आदिपदाद्विद्यादि । निजोत्कर्षात् स्वमहत्वात् अन्यस्य अवहेलनमवज्ञाकरणं गर्व इति संबन्धः । तमुदाहरति—**मत्सौन्दर्येति** । इदं हि श्रीकृष्णं प्रति गोवर्धनोद्धरणलीलोत्तरं कदाचिद्विलासावसरे राधिकावाक्यम् । यथावा रसतरङ्गिण्याम्—'निष्पीते कलशोद्भवेन जलधौ गौरीपतेर्गङ्गया होतुं हन्त वपुर्ललाटदहने यावत्कृतः प्रक्रमः । तावत्तत्र मया विपक्षनगरीनारीदृगम्भोरुहद्वन्द्वप्रस्खलदश्रुवारिपटलैः सृष्टाः पयोराशयः' इति । परशुरामवाक्यमिदम् । यथावा रसगङ्गाधरे—'आ मूलाद्रत्नसानोर्मलयवलयितादा च कूलात्पयोधेर्यावन्तः सन्ति काव्यप्रणयनपटवस्ते विशङ्कं वदन्तु । मृद्वीकामध्यनिर्यन्मसृण-

**विषादस्त्वनुतापः स्यादिष्टासिद्ध्यादिजो हृदि ।**
**हन्ताक्षमाहं स्थित्यादौ कुञ्जमार्गे विधूदयात् ॥ १५७ ॥**
**औत्सुक्यमिष्टितप्राप्तौ विलम्बाद्यसहिष्णुता ।**
**कृष्णं कदाहं पश्यामि कदार्कोऽस्तं गमिष्यति ॥ १५८ ॥**
**निद्राजागरभोगान्ते लयो जातचितौ धियः ।**
**राधा न बुबुधे कुञ्जे प्रातः पिकरवैरपि ॥ १५९ ॥**
**मूर्च्छान्यनामा पस्मारो रुग्विशेषो भयादिजः ।**
**हतमिन्द्रजितं श्रुत्वा प्रकम्पश्रावणोऽपतत् ॥ १६० ॥**
**किंचिदङ्कुरितं चित्तं सुप्तं स्वप्नापराभिधम् ।**
**धिक्कृष्ण गच्छगच्छेति जल्पन्ती बोध्यतेऽन्यथा ॥ १६१ ॥**

---

झरझरीमाधुरीभाग्यभाजां वाचामाचार्यतायाः पदमनुभवितुं कोऽस्ति धन्यो मदन्यः' इति ॥ १५६ ॥ विषादं लक्षयति—**विषादस्त्विति** । आदिना अनिष्टप्राप्तेर्ग्रहः तमुदाहरति—**हन्तेति** । इयं हि निशि संकेतमभिसरन्त्याः राधिकायाः पथि चन्द्रोदये सति स्वमनस्येवोक्तिः । अक्षमा असमर्थास्मीत्यर्थः । आदिपदाद्गमनादेः संग्रहणम् ॥ १५७ ॥ औत्सुक्यं लक्षयति—**औत्सुक्यमिति** । तदुदाहरति—**कृष्णमिति** । इदं हि राधिकायाः सायं सखीं प्रति वचः । यथाहुर्भानुमिश्राः—'आद्यः कैरपि केलिकौतुकमनोराज्यैर्द्वितीयः पुनर्मल्लीकेसरचारुचम्पकनवाम्भोजस्रजां गुम्फनैः । काञ्चीकुण्डलहारहेमवलयन्यासैस्तृतीयस्ततो नीतः सुन्दरि वासरस्य चरमो यामः कथं यास्यति' इति ॥ १५८ ॥ निद्रां लक्षयति—**निद्रेति** । अज्ञातचितौ अविद्योपहिते ब्रह्मणीत्यर्थः । तामुदाहरति—**राधेति** । यथावा रसतरङ्गिण्याम्—'श्वासोल्लासप्रचलदधरोपान्तमामीलिताक्षं क्रीडाकुञ्जे तपनदुहितुः सुप्यतः श्रीमुरारेः । अन्तःस्मेरं निभृतनिभृतं कापि कर्णावतंसं काचिद्बाह्वोः कनकवलयं दाम मुष्णाति काचित्' इति ॥ १५९ ॥ अपस्मारं लक्षयति—**मूर्च्छेति** । आदिपदात्ताडनादि । तमुदाहरति—**हतमिति** । नचास्य वक्ष्यमाणव्याधावेवान्तर्भाव इति वाच्यं प्रयोजनादिभेदेन भिन्नत्वात् । तदुक्तं रसगङ्गाधरे—'तावदपस्मारं प्रकृत्य व्याधित्वेनास्य कथनेऽपि विशेषाकारेण पुनः कथनं वीरभयानकयोरस्यैव व्याधेरङ्गत्वं नान्यस्येति स्फोरणाय विप्रलम्भे तु व्याध्यन्तरस्यापि च इति ॥१६०॥ सुप्तं लक्षयति—**किंचिदिति**—तदुदाहरति—**धिगिति**। भगवतो मथुरां प्रति गमनोत्तरं कदाचिद्राधा तमागतं स्वप्ने दृष्ट्वा प्राक्तनस्वत्यागरोषवशात् हे कृष्ण, त्वां धिगस्तु । त्वं इतः गच्छ गच्छेति तदानीमेव जल्पन्ती सा अन्यया तस्याः सख्या इतरगोप्या बोध्यते । जागरं नीयत इति योजना । यथावा रसतरङ्गिण्याम्—'गच्छन्कच्छं तपनदुहितुः पिच्छगुच्छावतंसः पश्यन्नस्मद्वदनमसकृच्च क्षुधा कुञ्चितेन । स्निग्धापाङ्गं शिथिलचरणं नर्तितभ्रूविलासं स्वप्ने दृष्टः कमलकलि-

विबोधः प्रथमा स्फूर्तिरैन्द्रियिक्यथवात्मधीः ।
श्रीनेत्रे जलजैः फुल्ले कृतार्थोऽहं गतभ्रमः ॥ १६२ ॥
अमर्षश्छिन्नवृत्तिः स्यादन्यनानापराधजा ।
स्पृष्ट्वा दूरं हरौ याते राधा रक्तान्तलोचना ॥ १६३ ॥
अवहित्थं तु लज्जादिजन्यहर्षादिगोपनम् ।
रामेण कार्मुके भग्ने सीताऽपृच्छत्सखीं घनम् ॥ १६४ ॥
अधिक्षेपावमानादिजन्या ध्वंसेच्छुतोग्रता ।
विप्रलापैरलं चैद्योच्छलत्येतत्सुदर्शनम् ॥ १६५ ॥
शास्त्राद्यालोचनोत्पन्नमर्थनिर्धारणं मतिः ।
को मेऽनुबन्धो बन्ध्वादौ हन्त द्वैतेऽत्र कल्पिते ॥ १६६ ॥

---

कामण्डितो मेघखण्डः' इति । यथावा रसगङ्गाधरे—'अकरुण मृषाभाषासिन्धो विमुञ्च ममाञ्चलं तव परिचितः स्नेहः सम्यङ्मयेत्यनुभाषिणीम् । अविरलगलद्बाष्पां तन्वीं निरस्तविभूषणां क इव भवतीं भद्रे निद्रे विना विनिवेदयेत्' इति ॥१६१॥ विबोधं लक्षयति—**विबोध इति** । ऐन्द्रियिकी चक्षुरादीन्द्रियसंबन्धिनी प्रथमा आद्या स्फूर्तिः प्रतिभा विबोध इत्यन्वयः । अथवा आत्मधीः आत्मज्ञानं विबोध इति संबन्धः । उक्तंहि रसगङ्गाधरे विबोधं प्रकृत्य 'केचिदविद्याध्वंसजन्यममुमामनन्ति । तत्र मतद्वयेऽपि क्रमेण तमुदाहरति—**श्रीत्यादिपादद्वयेन** । अत्राब्जैः सममित्युक्त्या तेषां सूर्यविकासिनां प्रातरेव फुल्लत्वसंभवात् श्रीनेत्रयोर्विकसनमिदं जागरकालीनमेवेति ध्वनितम् । कृतार्थोऽहमिति चरमपक्षोदाहरणम्॥१६२॥ अमर्षं लक्षयति—**अमर्ष इति** । तमुदाहरति—**स्पृष्टेति** । अत्र मानानपनोद एव स्पर्शनं ततो दूरगमनं तदाक्षिप्तसंकेतागमनविलम्बश्चेत्याद्यपराधनानात्वं बोध्यम् ॥ १६३ ॥ अवहित्थं लक्षयति—**अवहित्थं त्विति** । 'अवहित्थाऽकारगुप्तिः' इत्यमरः । तदुदाहरति—**रामेणेति** ।श्रीरामेण कार्मुके हरशरासने भग्ने सति तज्जन्यहर्षगोपनार्थं सीता सखीं प्रति किमयं मेघध्वनिः संपन्न इति घनं अपृच्छदित्यर्थः ॥ १६४ ॥ उग्रतां लक्षयति—**अधिक्षेपेति** । अधिक्षेपस्तिरस्कारः । तामुदाहरति—**विप्रलापैरिति** । इयं हि भगवतः शिशुपालं प्रति राजसूयसभायामुक्तिः।'विप्रलापोविरुद्धोक्तिः'इत्यमरान्निन्दावचनैरित्यर्थः। उच्छलति त्वच्छिरश्छेदार्थं मत्प्रेरणं विनैव स्वयमेवोड्डानं करोतीत्यर्थः ॥ १६५ ॥ मतिं लक्षयति—**शास्त्रादीति** । आदिना तदनुकूलतर्कग्रहः । तामुदाहरति—**क इति** । अनुबन्धः प्रेमा । यथाहुर्भानुमिश्राः—'लाटी नेत्रपुटी पयोधरघटी क्रीडाकुटी दोस्तटी पाटीरद्रववर्णनेन कुधियामायुः परं क्षीयते । गोविन्देति जनार्दनेति जगतीनाथेति कृष्णेति च व्याहारैः समयस्तदेकमनसां पुंसां परिक्रामति' इति । पण्डितरायैरप्युक्तम्—'निखिलं जगदेव नश्वरं पुनरस्मिन्नितरां कलेवरम् । अथ तस्य कृते कियानयं

रोगादितो वियोगाद्वा तापो व्याधिरुदीरितः ।
ज्वरादहं कृशा राधा हृदि शैवलशालिनी ॥ १६७ ॥
उन्मादो विप्रलम्भादिजातान्यत्रान्यशेमुषी ।
एतावत्किं कृतं कृष्णेत्यालपत्यालिमेव सा ॥ १६८ ॥
मरणं विरहाद्युत्था तत्समा चेतसः स्थितिः ।
निश्चेष्टां राधिकां दृष्ट्वाप्युद्धवोऽभूदनुद्धवः ॥ १६९ ॥
त्रासस्तु चित्तविक्षोभो भीरोर्घोरेक्षणादिना ।
सीता शूर्पनखां वीक्ष्य राममालिङ्ग्य लीयते ॥ १७० ॥
वितर्कः संशयाद्यूर्ध्वं जात ऊहोऽभिधीयते ।
नैशो मयि प्रसादश्चेत्सतां सङ्गः कथं भवेत् ॥ १७१ ॥

क्रियते हन्त मया परिश्रमः' इति॥१६६॥ व्याधिं लक्षयति—**रोगादित इति** । क्रमेण द्विविधं तमुदाहरति—**ज्वरादिति** । इदं हि किमिति त्वं राधिकां नानयसीति पृच्छन्तं भगवन्तं प्रति दूतीवचनम् । हे श्रीकृष्ण, अहं ज्वरात्कृशास्मीत्याद्योदाहरणं, राधेत्याद्यन्त्योदाहरणमिति बोध्यम् । अयं भावः—ज्वरवशान्मया बहुदिनोत्तरमद्यैव राधिकागृहं गत्वा तस्याः कुशलं पृष्टं तदानीं सा तु त्वद्विरहतप्तत्वाद्धृदि वक्षःस्थापितशैवलवल्येवावलोकितेत्यतस्त्वयैवाद्य तत्र युक्त्या गन्तव्यं । तस्यास्तु व्युत्थानसामर्थ्यमपि नास्तीति । यथावा रसतरङ्गिण्याम्—'दातुं स्वीयमनर्घ्यदीधितिपदं तस्याः कुरङ्गीदृशः केयूरं कनकाङ्गुलीयकमिवानेतुं बहिर्गच्छति । अन्यत्कृष्ण निवेदयामि किमितो वेणीमिषात्कालियो दृष्ट्वा लोचनवारि कालियसरोभ्रान्त्या परिभ्राम्यति' इति ॥ १६७ ॥ उन्मादं लक्षयति—**उन्माद इति** । विप्रलम्भो विरहः । आदिना महाविपत्तिपरमानन्दादयो ग्राह्याः । 'शेमुषी मतिः'इत्यमराच्छेमुषी बुद्धिः,विप्रलम्भादिजा अतस्मिंस्तद्बुद्धिरुन्माद इत्यर्थः । तमुदाहरति—**एतावदिति** ॥ १६८ ॥ मरणं लक्षयति—**मरणमिति** । आदिपदाद्भयादि । मृत्युव्यावृत्तये तत्समेत्यादि । तदुदाहरति—**निश्चेष्टामिति** । उद्धवोऽपीति संबन्धः । अनुद्धवः 'मह उद्धव उत्सवः' इत्यमरादनुत्सव इत्यथः । यथावा रसगङ्गाधरे—'दयितस्य गुणाननुस्मरन्ती शयने संप्रति या विलोकितासीत् । अधुना खलु हन्त सा कृशाङ्गी गिरमङ्गीकुरुते न भाषितापि' इति ॥ १६९ ॥ त्रासं लक्षयति—**त्रासस्त्विति** । आदिशब्दाद्घोरशब्दश्रवणादेर्ग्रहः । तमुदाहरति—**सीतेति** । यथावाहुः पण्डितरायाः—'मा कुरु कशां कराब्जे करुणावति कम्पते मम स्वान्तम् । खेलन्न जातु गोपैरम्ब विलम्बं करिष्यामि' इति ॥ १७० ॥ वितर्कं लक्षयति—**वितर्क इति** । आदिना व्याप्यारोपादिः । तमुदाहरति—**नैश इति** । अत्र प्रसादालम्बितः सत्सङ्गोद्दीपितस्तदाक्षिप्तहर्षाद्यनुभावितश्च वितर्क एव परिकराङ्कुरालंकारापेक्षया प्राधान्येन ध्वन्यते । रसतरङ्गिण्यां त्वेष चतुर्धोक्तः । तद्यथा–वितर्कश्चतुर्विधः विचारात्मा संशयात्माऽनध्यवसायात्मा विप्रतिपत्त्यात्मा चेति । अन-

**रतिः प्रीतिस्तु देवादौ शिवं वन्दे गुरुं भजे ।**
**अर्चयामि मुनीन्ग्रामो नृपोस्तूपैहि पुत्र माम् ॥ १७२ ॥**

ध्यवसायः उत्कटकोटिकः संशयः । प्रत्येकमुदाहरणानि—'कालिन्दीविलुठत्कठोरकमठक्रूरं धनुः शाम्भवं रामो बालमृणालकोमलवपुर्वंशोऽवतंसो भुवः । व्याहारप्रखलाः खलाः क्षितिभृतां गोष्ठी गरिष्ठा पुनस्तस्मात्केवलमेष तिष्ठति मनःश्रेयस्करो भास्करः ॥ सौन्दर्यस्य मनोभवेन गणना लेखा किमेषा कृता लावण्यस्य विलोकितुं त्रिजगतीमेषा किमुद्गीविका । आनन्दद्रुमकन्दली नयनयोः किंवा समुज्जृम्भते राधायाः किमु वा स्वभावसुभगा रोमालिरुन्मीलति । कथय कथय केयं खञ्जनौ खेलयन्ती विहरति यमुनायाः पाथसि स्वर्णवल्लिः । अयमुदयति को वा शारदः शीतभानुस्तदुपरि तिमिराणामेष को वा विवर्तः ॥ इयं न विलसत्सुधाकरकलाधिका राधिका कर किरणमालिनः किमु सहेत तस्या वपुः । नवा कनकमञ्जरी वहति खञ्जरीटौ यतस्ततः स्मरमदालसा कथय केयमुन्मीलति' इति । यथावा रसगङ्गाधरे—'यदि सा मिथिलेन्द्रनन्दिनी नितरामेव न विद्यते भुवि । अथ मे कथमस्ति जीवितं न विनालम्बनमाश्रयस्थितिः' इति । यथावा प्रसन्नराघवे— 'सर्वस्वं नवयौवनस्य भवनं भोगस्य भाग्यं दृशोः सौभाग्यं मदविभ्रमस्य जगतः सारं फलं जन्मनः । आकूतं कुसुमायुधस्य हृदयं रागस्य तत्वं रतेः शृङ्गारस्य रहस्यमुत्पलदृशस्तत्किंचिदालोकितम्' इति ॥ १७१ ॥ अथावरभक्त्यपरनामिकां देवादिविषयिकां रतिं लक्षयति—**रतिरिति** । देवादौ तु रतिः प्रीतिरेवेत्यन्वयः । प्रीतित्वमेव देवादिविषयकरतित्वम् । नच शृङ्गारस्थायिभावाख्यरतावतिव्याप्तिः । तस्यां प्रीतिशब्दितानुरागत्वेऽपि 'यूनोः समो वा विषमोऽन्योन्य रागो रतिः स्मृता' इति प्रागुक्ततल्लक्षणरीत्या विशिष्टस्य तस्याभावात् । नहि ब्राह्मणमानयेत्युक्ते कश्चित्परिव्राजकमानयति । तत्र ब्राह्मण्यसत्वेऽपि विशिष्टब्राह्मणत्वान्न ब्राह्मणसामान्यशब्दशक्यता । नवा सास्नादिमत्त्वे सति चतुःस्तनीत्वं धेनुत्वमित्युक्तौ कामधेनावतिव्याप्तिः, तत्रोक्तलक्षणसत्वेऽपि कामपूरकत्वरूपविशेषसत्वात् । ननु तादृग्विशेषव्यावर्तकं निरुक्तलक्षणे किमस्तीति तत्र व्यभिचारो दुर्वार एवेति चेन्न । 'सर्वं वाक्यं सावधारणम्' इति न्यायेनावधारणस्यैवान्ययोगव्यवच्छेदार्थकत्वेन तथात्वात् । अतएव प्रकृतलक्षणे प्रीतित्वमेवेत्युक्तमिति दिक् । आदिपदाद्गुरुमुनिनृपपुत्राः । उपलक्षणमिदं बन्ध्वादेरपि । क्रमेण तामुदाहरति—**शिवमि**त्यादिना । यथावाहुः श्रीमधुसूदनसरस्वत्यः—'वंशीविभूषितकरान्नवनीरदाभात्पीताम्बरादरुणबिम्बफलाधरोष्ठात् । पूर्णेन्दुसुन्दरमुखादरविन्दनेत्रात्कृष्णात्परं किमपि तत्त्वमहं न जाने' इति । सिद्धान्तचन्द्रिकायां यथा—'पतितमपि पादपतितं पावनकरुणाकटाक्षगाङ्गसरैः । शोधयतु कैव जननीस्तन्यवियोर्मी विनेह गुरुमूर्ति' इति । यथावा शिशुपालवधे नारदं प्रति भगवद्वचनम्—'हरत्यघं संप्रति हेतुरेष्यतः शुभस्य पूर्वाचरितैः कृतं शुभैः । शरीरभाजां भवदीयदर्शनं व्यनक्ति कालत्रितयेऽपि योग्यताम्' इति । यथावा

**संचारिणस्त्रयस्त्रिंशदेते प्राधान्ययोगतः ।**
**भावध्वनित्वमायान्ति तथोक्तरतिरप्यसौ ॥ १७३ ॥**
**प्रागलक्ष्यक्रमव्यङ्ग्यः प्रतिज्ञातो रसध्वनिः ।**
**स तत्साधर्म्यतो भावादीनामप्युपलक्षकः ॥ १७४ ॥**
**रसभावतदाभासभावशान्त्यादिभेदतः ।**
**तत्सोऽष्टधाऽभवत्तत्र द्वावुक्तौ शिष्टमुच्यते ॥ १७५ ॥**
**असंमतावलम्बित्वादयोग्यविषयत्वतः ।**
**रसाभासास्तथा भावाभासाश्च स्युरनुक्रमात् ॥ १७६ ॥**

वासवदत्तायाम्—'सा रसवत्ता विहता नवका विलसन्ति चरति नो कङ्कः । सरसीव कीर्तिशेषं गतवति भुवि विक्रमादित्ये' इति । यथावा मदीये कृष्णलीलामृते—'अथ नन्द उपेत्य गोकुलं परिजिघ्रञ्छिरसि स्वनन्दनम् । अभिचुम्ब्य ननन्द वै यथा परमानन्दविदोऽपि नो तथा' इति ॥१७२॥ ननु देवादिविषयकरतेः कथं व्यभिचारिभावत्वम् । नहि सा शृङ्गाराद्यन्यतमे सचरति तत्साहाय्यार्थमिति चेत्केनोक्तमस्यां व्यभिचारित्वं किंतु 'निर्वेदेति रतिर्देवेत्यादि चोक्तया पुरातनैः । भावाः प्रोक्ताश्चतुस्त्रिंशत्' इति भावत्वमात्रं प्रागुक्तम् । नच तत एव व्यभिचारिसाहचर्यात्तत्सिद्धमिति शङ्क्यम्—'रसध्वनिभेदान्निरूप्य भावध्वनिभेदान्निरूपयितुमेव तत्र चतुस्त्रिंशत्सङ्ख्याकानामेव तेषां भावध्वनित्वाभिप्रायेण भावपदेनोद्दिष्टत्वस्य विवक्षितत्वादित्याशयेनैतेषां भावध्वनित्वे हेतुं विशदयति—**संचारिण इति** । प्राधान्येति सद्यः सहृदयाह्लादजनकत्वमेवात्र प्राधान्यं तद्योगत इत्यर्थः । अत एवोक्तं काव्यप्रकाशकारिकासु—'रतिर्देवादिविषया व्यभिचारी तथाञ्जितः । भावः प्रोक्तः' इति । अञ्चितत्वमत्र पूजितत्वापरपर्यायं प्राधान्यमेव । तथाच स्पष्टीकृतं मम्मटभट्टैरग्रे तदुदाहरणेन । अञ्चितव्यभिचारी यथा—'जाने कोपपराङ्मुखी प्रियतमा स्वप्नेऽद्य दृष्टा मया मा मा संस्पृश पाणिनेति रुदती गन्तुं प्रवृत्ता ततः । नो यावत्परिरभ्य चाटुशतकैराश्वासयामि प्रियां भ्रातस्तावदहं शठेन विधिना निद्रादरिद्रीकृतः' । अत्र विधिं प्रत्यसूयेति । असावुक्तरतिरपि भावध्वनिमुक्तहेतोरायातीति संबन्धः ॥ १७३ ॥ ननु 'तत्रालक्ष्यक्रमव्यङ्ग्यो रससंज्ञो ध्वनिर्भवेत्' इत्याद्युपक्रमे भावध्वनेरनुद्देशात्तद्विरुद्धमिदमित्यत्राह—**प्रागिति** । तत्साधर्म्यतः अलक्ष्यक्रमव्यङ्ग्यत्वसामान्येनेत्यर्थः ॥ १७४ ॥ ननु भावादीनामित्यत्रादिपदात्के ग्राह्या इति शङ्कायां तान्दर्शयन्नुक्तहेतोरलक्ष्यक्रमव्यङ्ग्यध्वनेरेवाष्टविधत्वमभिधाय तत्र रसाद्युक्त्यनुवादेनावशिष्टरसाभासादिभेदकथनं प्रतिजानीते—**रसेति**॥१७५॥ तत्र रसाभासं भावाभासं च लक्षयितुं क्रमेण हेतुद्वयं प्रकटयति—**असंमतेति । रसेति ।** एवं चानुचितालम्बनविभावत्वं रसाभासत्वमनुचितविषयत्वं भावाभासत्वं चेति तल्लक्षणं फलितम् । उक्तं हि रसगङ्गाधरे—'अनुचितविभावालम्बनत्वं रसाभासत्वम्' इति । अनुचितविषया भावाभासा इति च ॥ १७६ ॥ तत्र रसाभासमुदाहरति—

चिरं भूरितरोपायैरहल्याधरपल्लवम् ।
इन्द्रः संपीय सानन्दं कृतकृत्यः सुधापराट् ॥ १७७ ॥
रोहिण्यादिषु सर्वासु सतीषु रमणीष्वपि ।
चन्द्रस्तारात्वमारोप्य रमन्पुष्टोऽन्यथा क्षयी ॥ १७८ ॥
भावशान्तिस्तु पूर्वोक्तभावेष्वन्यतमक्षयः ।
सोऽपि चोत्पत्त्यवच्छिन्न एवं भावोदयोऽप्यसौ ॥ १७९ ॥
राधे ममाधरस्येदमारुण्यं त्वदपाङ्गयोः ।
स तदिच्छति चादातुमिति वाक्येन तद्गतम् ॥ १८० ॥

**चिरमिति** । अत्र बहुकालमनेकोपायाक्षिप्तनायिकासौन्दर्योत्कर्षोद्दीपितोऽहल्यालम्बितः कृतकृत्यत्वाक्षिप्तरोमाञ्चाद्यनुभावितो हर्षादिव्यभिचारितः परिकररूपकाद्यलंकारापेक्षया चमत्काराधिक्यजनकत्वेनेन्द्रनिष्ठोऽहल्याविषयकरत्याख्यः स्थाय्येव प्राधान्येन ध्वन्यते । अगम्यालम्बनत्वेनोक्तरतेराभासत्वं बोध्यम् । अतएव सुधापर डिति पदे समासोक्त्यलंकारेणेन्द्रस्य चूर्णपरिपालकराजत्वरूपमतिनीचत्वं सूचितम् ॥१७७॥ एवं भावाभासमप्युदाहरति—**रोहिण्यादिष्विति** । सर्वेत्यादिपदत्रयेण तासां यावत्स्त्रीगुणयुक्तत्वेन नायकस्यान्यस्त्रीस्मरणानौचित्यं द्योत्यते । एवं चात्र ताराख्यगुरुसुन्दरीस्मरणमेव हेत्वलंकारादिभ्यः प्राधान्येन ध्वनितम् । तस्य चानुचितविषयत्वेन भावाभासत्वं तेनात्र क्षयीति पदसूचितं नायकस्य महापातकित्वेन राजयक्ष्मशालित्वं व्यज्यते ॥ १७८ ॥ एवं रसाभासभावाभासौ प्रपञ्च्य क्रमप्राप्तत्वेन भावशान्तिं तद्वदादिपदगृहीतानां भावोदयभावसंधिभावशबलतानां मध्ये भावोदयं च लक्षयति—**भावशान्तिस्त्विति** । **पूर्वोक्तेति** । पूर्वोक्ता ये भावाः निर्वेदादयो व्यभिचारिभावाः तेष्वित्यर्थः । **अन्यतमेति** । अन्यतमस्य यस्य कस्यचिद्भावस्य क्षयो नाश एव भावशान्तिर्भवतीति संबन्धः । तत्रापि विशेषान्तरमाह—**सोऽपीति** । निरुक्तक्षयोऽपीत्यर्थः । उत्पत्त्यवच्छिन्नः उत्पत्तिकालावच्छिन्न एव ग्राह्यो नतु कालान्तरावच्छिन्नोपि । तस्यैव सहृदयाह्लादकत्वादिति भावः । एवंच स्वोत्पत्त्यवच्छेदेन निर्वेदाद्यन्यतमध्वंसत्वं भावशान्तित्वमिति तल्लक्षणं ज्ञेयम् । असौ प्रागादिपदद्योतितो भावोदयोऽप्येवमेवोक्तरीतिलक्षणलक्षित एवेति योजना । तस्मात्स्वोत्पत्त्यवच्छेदेन निर्वेदाद्यन्यतमोदयत्वं भावोदयत्वमित्याशयः ॥ १७९ ॥ तत्र भावशान्तिमुदाहरति—**राध इति** । इदं हि मानवतीं राधां प्रति भगवद्वचनम् । हे राधे, त्वदपाङ्गयोः त्वन्नेत्रकोणयोः इदं प्रत्यक्षं मम अधरस्य अधरोष्ठस्यैव आरुण्यमारक्तत्वमस्तीत्यन्वयः । नेदं तवापाङ्गयोः कोपजन्यमारुण्यं । परमसुशीलायास्तव सर्वसाधारण्येनापि कोपोद्रेकस्य स्वप्नेऽप्यसत्वात्तत्रापि मद्विषये तु सुतरां तदसंभवाच्च, किंतु त्वत्संमुख स्थितस्य ममैवाधरोष्ठनिष्ठं तन्मदधरचुम्बनार्थं त्वया तत्सौन्दर्यलुब्धत्वेन ताटस्थ्यात्स्वनेत्रयोस्तत्रैव नियोजितत्वेन तत्र प्रतिबिम्बितं बभूवेति भावः । एतेन स्वस्मिंस्तद्दोषमप-

**अनङ्गारिः शिरोगङ्गां वीक्ष्य गौर्या तिरस्कृतः ।**
**मापयात्वित्यपाङ्गेन परावृत्त्येक्षितः पुनः ॥ १८१ ॥**
**अन्योन्याभिभवे पट्वोरन्योन्यानभिभूतयोः ।**
**सामानाधिकरण्यं यद्भावसन्धिः स भावयोः ॥ १८२ ॥**

हृत्य स्वविषयकं तस्यां प्रत्युतौत्सुक्यमेवोद्दीपनविभावेन रोषप्रमोषार्थमारोपयितरि नायके चातुर्यातिशयः सूचितः । ननु किं तावताऽहं तु त्वां नैवोत्तरमपि दास्यामि पश्यामि चेत्यत आह—**स इति** । सः मदधरोष्ठः तत् त्वन्नेत्रयोः प्रतिबिम्बितत्वेनोक्तं निजारुण्यमित्यर्थः । आदातुं इच्छति वाञ्छति कामशास्त्रप्रसिद्धत्वन्नेत्रचुम्बनं कर्तुं ममाभिलाषोऽस्तीत्याशयः । इतिवाक्येन निरुक्तभगवद्वाक्यश्रवणमात्रेणेत्यर्थः । तत् रोषजन्यं राधानेत्रान्तारुण्यं गतं तदुपाधिभूतक्रोधोपरमेण नष्टमिति यावत् । इह निरुक्तश्रीकृष्णवाक्यश्रवणं विभावः । राधानेत्रान्तारुण्यनाशोऽनुभावः । ताभ्यामुत्पत्तिकालावच्छिन्नरोषापरनामकामर्षाख्यभावशान्तिरेव गम्योत्प्रेक्षाद्यलंकारतः प्राधान्येन ध्वन्यते । यथावा काव्यप्रकाशे—'तस्याः सान्द्रविलेपनस्तनयुगप्रश्लेषमुद्राङ्कितं किं वक्षश्चरणानतिव्यतिकरव्याजेन गोपाय्यते । इत्युक्ते क्व तदित्युदीर्य सहसा तत्संप्रमार्ष्टुं मया साश्लिष्टा रभसेन तत्सुखवशात्तन्व्यापि तद्विस्मृतम्'इति ॥ १८० ॥ एव भावोदयमप्युदाहरति—**अनङ्गारिरिति** । गौर्याः शिरो गङ्गा तच्छिरःस्थां त्रिपथगां वीक्ष्य अनङ्गारिर्मदनान्तकः शिवः तिरस्कृतो निर्भर्त्सित आसीदित्यन्वयः । लोके स्मरशत्रुत्वेन प्रख्यातकीर्तेस्तव मां वञ्चयित्वा शिरस्यपि गङ्गाख्याङ्गनास्थापनं किमुचितमिति सोपालम्भं शम्भुर्मात्सर्यरोषावेशात्पार्वत्या विनिन्दितोऽभूदिति भावः । **मापयात्विति** । अयं मा अपयातु मैव प्रतिगच्छतु इति एवमभिप्रायेण पुनः अनन्तरं परावृत्त्य पूर्वं तन्निर्भर्त्सनावसरे पराङ्मुखीभूतत्वादधुना किंचिद्ग्रीवां शिवाभिमुखीकृत्येत्यर्थः । अपाङ्गेन दक्षिणनेत्रकोणेन ईक्षितोऽवलोकित इति संबन्धः । अत्र सापराधहरतिरस्कारसंभावितततत्प्रतिगमनं विभावः । पुनः परावृत्त्य नेत्रान्तेन तदवेक्षणमनुभावः । ततो मापयात्विति पदसूचितः काव्यलिङ्गाद्यलंकारापेक्षया मुख्यत्वेनोत्पत्त्यवच्छिन्नौत्सुक्याख्यभावोदय एव व्यज्यते । यथावा काव्यप्रकाशे—एकस्मिञ्शयने विपक्षरमणीनामग्रहे मुग्धया सद्यः कोपपराङ्मुखग्लपितया चाटूनि कुर्वन्नपि । आवेगादवधीरितः प्रियतमस्तूष्णीं स्थितस्तत्क्षणान्माभूत्सुप्त इवेत्यमन्दवलितग्रीवं पुनर्वीक्षितः' इति । यथावा रसगङ्गाधरे—'वीक्ष्य वक्षसि विपक्षकामिनीहारलक्ष्म दयितस्य भामिनी । अंसदेशवलयीकृतां क्षणादाचकर्ष निजबाहुवल्लरीम्' इति ॥ १८१ ॥ एव लक्षितौ भावशान्तिभावोदयावुदाहृत्य 'भावस्य शान्तिरुदयः सन्धिः शबलता तथा' इति । काव्यप्रकाशकारिकावशात्क्रमप्राप्तं भावसंधिं लक्षयति—**अन्योन्येति** । यद्भावयोः सामानाधिकरण्यं स भावसंधिरिति संबन्धः । ननु व्याधिजडतयोः सामानाधिकरण्येऽपि न भावसंधित्वं दृष्टं विशिष्टचमत्कारानाधायकत्वादित्याशङ्क्य विशि-

**रामचन्द्रं समालोक्य पुलकावलिशालिनी ।**
**भूसुता संकुचन्नेत्रपद्मा फुल्लमुखाम्बुजा ॥ १८३ ॥**
**बाध्यबाधकभावेऽपि यद्वौदास्येऽपि मिश्रणम् ।**
**भावानां यत्तदेवात्र भावशाबल्यमीप्सितम् ॥ १८४ ॥**

नष्टि—**अन्योन्याभिभव इति** । अन्योन्यं परस्परं योऽभिभवः पराभवस्तत्र विषय इत्यर्थः । पट्वोः 'दक्षे तु चतुरपेशलपटवः सूत्थान उष्णश्च' इत्यमरात्समर्थयोरित्यर्थः । व्याधिजडतयोस्तु नान्योन्याभिभवपटुत्वं किंत्वनुकूलत्वमेवेति न तत्रातिव्याप्तिरिति तात्पर्यम् । ननु भवत्वेवं तथापि परस्पराभिभावकत्वेन सुन्दोपसुन्दन्यायादुभयोरपि भावयोर्ध्वंसापत्त्या कथं तत्संधित्वमित्यतः पुनर्विशिनष्टि—**अन्योन्यानभिभूतयोरिति** । परस्परपराभवमप्राप्तयोरित्यर्थः । एवंच परस्परपराभवक्षमत्वेऽप्यनभिभूतयोर्भावयोः सामानाधिकरण्यमेव भावसंधिरिति तल्लक्षणं सिद्धम् । एवमेवोक्तं पण्डितरायैः—'एवं भावसंधिरन्योन्यानभिभूतयोरन्योन्याभिभवनयोग्ययोर्भावयोः सामानाधिकरण्यम्' इति ॥ १८२ ॥ तमुदाहरति—**रामचन्द्रमिति** । योजना त्वत्र यथाश्रुतैव बभूवेति शेषः । तदिह श्रीरामे चन्द्ररूपकतया भूसुतेत्यत्र श्लेषेण लतात्वसूचकत्वात्तस्यास्तद्दर्शनतः पुलकावलिशब्दलक्षितप्रोन्मीलितपल्लवत्वं तदीयशीतकिरणनिःसृतहिमबिन्दुभिरभ्युक्षितत्वाद्युक्तमेवेति द्योतितम् । तथाच रामचन्द्रदर्शनवशाद्भूसुतायास्तावन्नेत्रपद्मसंकोचो मुखाम्बुजविकासश्च लोके यथा चन्द्रवीक्षणेन पद्मानां संकोचोऽम्बुजशब्दितकैरवाणां विकासश्च जायते तद्वदुपपन्न एवेत्यपि सूचितम् । एवं चेह श्रीरामदर्शनं विभावः, पुलकोद्गमनयनसंकोचवदनविकासा अनुभावाः, ततो व्रीडौत्सुक्ययोः संधिरेव रूपकाद्यलंकारतः प्राधान्येन ध्वन्यते । यथावा काव्यप्रकाशे—'उत्सिक्तस्य तपःपराक्रमनिधेरभ्यागमादेकतः सत्सङ्गप्रियता च वीररभसोत्फालश्च मां कर्षतः । वैदेहीपरिरम्भ एष च मुहुश्चैतन्यमामीलयन्नानन्दी हरिचन्दनेन्दुशिशिरस्पर्शो रुणद्ध्यान्यतः' इति । साहित्यदर्पणेपि—'नयनयुगासेचनकं मानसवृत्त्यापि दुष्प्रापम् । रूपमिदं मदिराक्ष्या मदयति हृदयं दुनोति मम चेदम्' इति । रसगङ्गाधरेपि—'यौवनोद्गमनितान्तशङ्किताः शीलशौर्यबलकान्तिलोभिताः । संकुचन्ति विकसन्ति राघवे जानकीनयननीरजश्रियः' इति ॥ १८३ ॥ अथ भावशबलतां लक्षयति—**बाध्यबाधकेति** । बाध्यबाधकभावेऽपि सति, यद्वा औदास्ये परस्परमौदासीन्ये सत्यपि यद्भावानां मिश्रणं अनेकेषां भावानां संमेलनं तदेव अत्र अलंकारशास्त्रे भावशाबल्यं ईप्सितं विपश्चितामभिमतमिति संबन्धः । अत्र सत्यन्तद्वयेनानुगुणानां भावानां व्युदासः । चपलताऽवेगोन्मादाख्यभावानां मेलनेऽपि परस्परानुकूलत्वेन चमत्काराजनकत्वात् । तस्माद्बाध्यबाधकत्वे सत्यौदासीन्ये वा सति भावानां संमेलनमेव भावशबलतेति तल्लक्षणं सिद्धम् । उक्तं हि रसगङ्गाधरे—तथा भावशबलत्वं भावानां बाध्यबाधकभावमापन्नानामुदासीनानां वा व्यामिश्रणमेव चमत्कृतिजनक-

**आयुर्गतं मम व्यर्थं किं वदिष्यन्ति साधवः ।**
**कदा वा स दयां कुर्याद्गौरीसहचरो मयि ॥ १८५ ॥**
**प्रागुद्दिष्टपदाद्यष्टाविंशतिव्यञ्जनास्थले ।**
**द्रष्टव्योऽष्टविधोऽप्येष शिष्टैर्दिङ्मात्रमुच्यते ॥ १८६ ॥**
**शंभो यत्नो वृथावर्धत्क्षोभणाय भवत्ययम् ।**
**कदेष्टं त्यागयोगाख्यं क्षणेन द्विजदेहके ॥ १८७ ॥**

ज्ञानगोचरत्वमिति यावदिति ॥ १८४ ॥ तदुदाहरति—**आयुरिति** । स्फुट एवाक्षरार्थः । अत्र प्रथमद्वितीयपादाभ्यां निर्वेदः शङ्का च तथोत्तरार्धेनौत्सुक्यं च गौरीत्यादिपरिकरालंकारतो मुख्यतया व्यज्यते । यथावा काव्यप्रकाशे—'क्वाकार्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा कोपानां[1] प्रशमायनः श्रुतमहो कोपेति कान्त मुखम् । किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा चेतः स्वास्थ्यमुपैहि कः खलु युवा धन्योऽधरं धास्यति' इति ॥१८५॥ एव रसादिभेदैरष्टविधोऽप्यलक्ष्यक्रमव्यङ्ग्यध्वनिरय द्वितीयरत्नोक्तेषु अष्टाविंशतिसंख्याकेष्वपि व्यञ्जनास्थलेषु बोद्धव्य इति विदधस्तद्बोधविधिदिक्प्रदर्शनं प्रतिजानीते—**प्रागिति** । शिष्टैः साहित्यशास्त्रकुशलैः । तानि च स्थलानि यथा—'पदं वाक्यं पदार्थश्च वाक्यार्थो धातुरप्यथ । सुप् तिङ् च प्रातिपदिकं कालो वचनमेवच । अपिपूर्वनिपातश्च विभक्तिः कापि तद्धितः । निपाताश्चादयः प्राद्या उपसर्गास्तथैव च । सर्वनामाऽव्ययीभाव इमनिच्प्रत्ययस्तथा । आधारः कर्मभूताख्यो वर्णाश्च रचनास्तथा । प्रबन्धाश्च कविप्रौढोक्ती रसो वस्त्वलंकृतिः । सकरश्चापि ससृष्टिरिति दिग्दृक्स्थलेऽस्ति सा' इति ॥१८६॥ तदेवोदाहरति—**शंभो यत्न** इत्यादिचतुर्भिः। अक्षरार्थस्तु पूर्वार्धे स्फुट एव । तत्र शभो इति पदोदाहरणम् । अत्र श भवत्यस्मादिति व्युत्पत्त्या स्वाभीष्टप्रदमीश्वरं प्रति स्वदीनत्वनिर्वेदन ध्वनितम् । अन्यथा सांबयत्न इत्युक्त स्यात् । यथावा काव्यप्रकाशे—'मुग्धे मुग्धतयैव नेतुमखिलः कालः किमारभ्यते मान धत्स्व धृतिं बधान ऋजुतां दूरीकुरु प्रेयसि । सख्यैव प्रतिबोधिता प्रतिवचस्तामाह भीतानना नीचैः शस हृदि स्थितो हि ननु मे प्राणेश्वरः श्रोष्यति' । अत्र भीताननेति । एवमवर्धदित्यन्त.वाक्योदाहरणम् । एतेन निर्वेदो ध्वन्यते । अत्रैवोभयोदाहरणयोरपि पदार्थोदाहरणत्वं वाक्यार्थोदाहरणत्वं धातूदाहरणत्वं च बोध्यम् । तद्यथा—'शंभुपदार्थः शिवस्तेन विरक्तेनेश्वर एव शरणीकरणीय इति द्योतितम् । अन्यथा बन्धो यत्नइत्यप्युच्येत । तथा वाक्यार्थोऽपि परमेश्वरं प्रति स्वकीयसमृद्धयत्नस्यापि वैयर्थ्यविनिवेदनरूपस्तेन भो भगवन्, अधुना भवतैव मत्संरक्षणं संसारसर्पतः कर्तव्यमिति कारुण्यं व्यज्यते । एवजातीयकान्युदाहरणान्तराणि प्रतिश्लोकं काव्यादौ सन्त्येवेति स्वयमेवोह्यदिशोह्यानि । एवं धातूदाहरणमपि

१ दोषाणाम् इति पाठः ।

**अपिच प्रेक्षणं तस्य स्वानन्दं स्वमहिम्नि च ।**
**आवसत्यमृताब्धिं यः शान्तः स्वान्ततरङ्गितम् ॥ १८८ ॥**

'शंभो यत्नो वृथा जातः' इत्युक्त्यापि निर्वाहे अवर्धदित्युक्त तेन 'वृधु वृद्धौ 'इति स्मरणादल्पत्वाभावः सूचितः । यथावा–'रते गौरीकरद्वन्द्वपिनद्धे नयनद्वये । जयति स्थगितं शंभोस्तार्तीयीकं विलोचनम्' । अत्र जिधातुना स्थगनव्यापारसाम्ये-नान्यनेत्रयोः कराभ्यां पिधानमस्य तु लोकोत्तरकर्मणेति तदेवोत्कृष्टमिति रत्युत्कर्षो व्यज्यते । अतएव जयतीत्युक्तं न शोभत इतीति । सुपमुदाहरति—**क्षोभणायेति** । अनेन चतुर्थ्याख्यसुप्प्रत्ययेन निरुक्तयत्नस्य दुःखैकप्रयोजकत्वं व्यज्यते । नतु क्षोभणेनेत्यप्युक्तम् । तथात्वेऽस्य फलकाले सुखहेतुत्वमपि संभाव्येत । तिङमुदाहरति—**भवतीति** । नतु भविष्यतीति । एवंच वर्तत एवास्योक्तयत्नस्य वैफल्यात्संतापहेतुत्वमिति विषादातिशयः सूचितः । यथावा काव्यप्रकाशे—'पथि पथि शुकचञ्चूचारुरागाङ्कुराणां दिशिदिशि पवमानो वीरुधां लासकश्च । नरिनरि किरति द्राक्सायकान्पुष्पधन्वा पुरिपुरि विनिवृत्ता मानिनीमानचर्चा' । अत्र किरतीति किरणस्य साध्यमानत्वं निवृत्तेति निवर्तनस्य सिद्धत्वं तिङा सुपा च तत्रापि क्तप्रत्ययेनातीतत्वं द्योत्यत इति । प्रातिपदिकमुदाहरति—**अयमिति** । नत्वसौ । एतेनापरोक्षत्वादत्यन्तासन्नत्वं द्योत्यते । कालमुदाहरति—**कदेति** । त्यागयोगाख्यं इष्टं क्षणेन द्विजदेहके विप्रशरीरके कदा स्यादित्यन्वयः । नत्वद्येत्यर्थः । एवंच तदाप्तावौत्कण्ठ्यं ध्वनितम् । वचनमुदाहरति—**इष्टमिति** । नत्विष्टान्यपि । एतेन मोक्षैकाभिलाषित्वं ध्वन्यते । पूर्वनिपातमुदाहरति—**त्यागेति** । अत्र त्यागस्याभ्यर्हितत्वेन प्राधान्यं ध्वन्यते । विभक्तिविशेषमुदाहरति—**क्षणेनेति** । नतु क्षण इति सप्तमी । तस्मादपवर्गे तृतीया । अपवर्गः फलप्राप्तिः । तस्यां द्योत्यायां कालाध्वनोरत्यन्तसंयोगे तृतीया स्यात् इति शास्त्रात्फलावश्यभावस्यात्रेष्टत्वात्तृतीयेत्यर्थः । तेनातुरत्वं व्यज्यते । तद्धितमुदाहरति—**द्विजेति** । कुत्सितो देहो देहकः द्विजस्य देहको द्विजदेहक इति व्युत्पत्त्या कप्रत्ययाख्यतद्धितेन द्विजशरीरस्य दुर्लभत्वेऽपि तत्र स्वस्य विरक्तत्वं दोषदर्शित्वेन द्योत्यते ॥ १८७ ॥ निपातमुदाहरति--**अपिचेति** । अपिच पुनश्च तस्य वक्ष्यमाणस्य परमात्मनः स्वानन्दं यथा स्यात्तथा स्वमहिम्नि च । चोऽवधारणे । स्वस्य प्रतीचः महिमाऽपरिच्छिन्नत्वं तत्रैव प्रेक्षणं प्रकर्षेण दृढापरोक्षभावेन यदीक्षणमनुभवनं ज्ञानमितियावत् । तत् कदा स्यादिति पूर्वश्लोकादनुकृष्य योज्यम् । अत्र अपिचेति निपाताभ्यां न केवलं वैराग्योपरमावेवापेक्षितावपितु बोधोऽपीति द्योतितम् । उपसर्गमुदाहरति—**प्रेक्षणमिति** । एतेनेक्षणे प्रकर्षस्तावद्दृढापरोक्षत्वरूपो ध्वनितः । यथावा काव्यप्रकाशे—'परिच्छेदातीतः सकलवचनानामविषयः पुनर्जन्मन्यस्मिन्ननुभवपदं यो न गतवान् । विवेकप्रध्वंसादुपचितमहामोहगहनो विकारः कोऽप्यन्तर्जडयति च तापं च कुरुते' । अत्र प्रशब्दस्योपसर्गस्येति सर्वनामानमुदाहरति—**तस्येति** । एवं

**सति श्रीयोगवासिष्ठशरद्राकासुधाकरे ।**
**शान्तिं यान्ति न किं कान्त्या जीवंजीवाः शुभद्विजाः१८९**
**चिदानन्दानुसन्धानात्कदा मन्दाकिनीतटे ।**
**अयं गुरुकृपापात्रं कांचिद्विघुत्सखीं त्यजेत् ॥ १९० ॥**

चानिर्वाच्यमहिमत्वं द्योतितम् । नोचेत्परोक्षत्वानुपपत्तेः । अव्ययीभावमुदाहरति—**स्वानन्दमिति** । ननु स्वानन्दे । तथाच निदिध्यासनकालीनासंप्रज्ञातादिसमाख्यानन्दपूर्वकत्वमात्मज्ञानस्य ध्वनितम् । इमनिच्प्रत्ययमुदाहरति—**स्वेति** । अत्र चेमनिचा स्वमाहात्म्यप्राक्तनावस्थातो व्यतिरेकेणाभिनवत्वं व्यज्यते । कर्मभूतमाधारमुदाहरति—**आवसतीति** । स कः । यः शान्तस्वान्ततरङ्गित शान्तं उपशान्तं स्वान्तमन्तःकरणमेव तरङ्गितं संजाततरङ्गरूपोऽवस्थाविशेषो यस्य तम् । निर्विकल्पमित्यर्थः । एतादृशं अमृताब्धिं कैवल्यसमुद्रं ननु क्षीरोद आवसति अधितिष्ठतीति संबन्धः । अत्र व्याप्तिः सूचिता । कर्मभूताधारस्थले तु व्याप्तिरवगम्यत इति काव्यप्रदीपोक्तेः । यथावा काव्यप्रकाशे–'तरुणिमनि कलयति कलामधिमदनधनुर्भ्रुवोः पठत्यग्रे । अधिवसति सकलललनामौलिमियं चकितहरिणचलनयना' इति । वर्णरचने उदाहरति—**शान्तेति** । माधुर्यव्यञ्जकत्वादेते वर्णाः शान्तरससूचका एव । तथा दीर्घसमासाभावाद्वैदर्भीनामिका रचनापि । विस्तरस्तु मूल एवाग्रे तत्प्रकरणे ज्ञेयः ॥ १८८ ॥ अथ प्रबन्धकविप्रौढोक्ती तथा रसवस्त्वलंकृतीश्चोदाहरति—**सतीति** । शुभद्विजाः सकलमोक्षसामग्रीशालितया शोभनाः ब्राह्मणाः, पक्षे रम्याः पक्षिणः । जीवाः आजीवमिति च्छेदः । यावद्देहपातमित्यर्थः । पक्षे जीवंजीवाः 'जीवंजीवश्चकोरकः' इत्यमराच्चकोरा इति यावत् । **श्रीति** । श्रीमान्महावाक्यार्थविचारकारित्वेन ब्रह्मविद्याप्रयोजकत्वान्निरतिशयशोभाशाली एतादृशः यः योगवासिष्ठः श्रीवाल्मीक्युक्तोत्तररामायणाख्यः द्वात्रिंशत्साहस्र्यात्मकः प्रसिद्ध एव ग्रन्थविशेषः स एव शरद्राकासुधाकरः शान्तिकारित्वतमोपहारित्वादिसाधर्म्यैः शरत्कालीनपूर्णेन्दुः तस्मिन्सति कान्त्या । 'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' इति श्रुतेः स्वस्वरूपचितेत्यर्थः । पक्षे कौमुद्या शान्तिं 'ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति'इति स्मृतेर्जीवन्मुक्तिरूपामुपरतिम्, पक्षे संतापक्षतिम् । न यान्ति किम् । अपितु यान्त्येवेत्यर्थः । एवंचात्र योगवासिष्ठवर्णनात्प्रबन्धोदाहरणं बोध्यम् । तत्र हि महाकाव्ये भूयस्तरः शान्तरसः सुप्रसिद्ध एव । तथा तत्रोक्तेन्दुरूपत्वेन कविप्रौढोक्त्युदाहरणत्वमपि । यथावा साहित्यदर्पणे—'पश्यन्त्यसंख्यपथगां त्वद्दानजलवाहिनीम् । देव त्रिपथगाऽत्मानं गोपयत्युग्रमूर्धनि' इति । रसस्तु ज्ञानवीराख्योऽत्र प्रागुक्तदिशैव ज्ञेयः । एवं वस्त्वपि भो मुमुक्षो, त्वया योगवासिष्ट एव ज्ञानार्थं तद्वाक्यार्थं च परिशीलनीय इति न किमित्याक्षेपेण व्यज्यते । अलंकृतिरप्यत्र रूपकादिनोपमाख्या द्योत्यते ॥ १८९ ॥ अथ संकरसंसृष्टी उदाहरति—**चिदानन्देति** । गुरुकृपापात्रं सद्गुरुप्रसादस्थलमिति यावत् । एतेन

**अथ प्राग्यश्चतुर्धोक्तो लक्ष्यव्यङ्ग्यक्रमध्वनिः ।**
**अर्थशक्तिजयोस्तत्र वस्त्वलंकारसंज्ञयोः ॥ १९१ ॥**

सकलमोक्षसाधनसामग्री सूचिता । एतादृशः अयं देहः नत्वहम् । एवंच ब्रह्मात्मानुभवदार्ढ्यं ध्वनितम् । नच देहस्य जडत्वात्तन्निर्देशोऽप्यनुचित एव । साभासस्यैव तस्य विवक्षिततवात् । कदा कस्मिन्काले तेनौत्कण्ठ्यं व्यज्यते । मन्दाकिनीतटे सुरसरित्तीरे । एतेन शान्तश्शृङ्गारयोरुभयोरप्युद्दीपनविभावः सूचितः । कांचित् अनिर्वचनीयगुणगणसंपूर्णां विद्युत्सखीं गौरत्वचपलत्वादिना विद्युल्लतावयस्यां निरुपमरमणीमित्यर्थः । अनेन त्यागाशक्यत्वं द्योतितम् । चिदानन्देति । ब्रह्मानन्दैकतानतयेत्यर्थः । नतु रोगादिनापि । तेन पुनः प्रेमानुदयकारणं बोधितं । त्यजेत् । गुरादिप्रेपितत्वेन वा स्वयमेव गुणलोभेन वा रन्तुमागतामपि प्रजह्यादित्यन्वयः । अत्र अयमिति कांचिदिति चार्थान्तरसंक्रमितवाच्ययो रसध्वन्योःसंकरः । तत्रायं पदवाच्यमपरोक्षविषयत्वमविहायैव साभासदेहस्याजहत्स्वार्थया श्वेतो धावतीतिवत् ग्रहणात्तथा कांचित्पदवाच्यमनियतस्त्रीत्वमपरित्यज्यैव लोकोत्तरगुणवत्तरुणीत्वस्य च ग्रहणात्तन्मूलयोः स्वात्मबोधत्यागाशक्यत्वरूपयोस्तयोः स्फुटतमत्वात् । एवं गुरुकृपापात्रमिति विद्युत्सखीमिति चात्यन्ततिरस्कृतवाच्ययोस्तयोः संसृष्टिः । तत्रापि पात्रपदशक्यं भाजनं विहायैव योग्यस्थलत्वस्य गङ्गायां घोष इत्यादिवल्लक्ष्यत्वात्तथा सखीपदवाच्यवयस्यारूपमर्थं विहाय गौरत्वादिगुणवत्यास्तरुण्या एव लक्ष्यत्वाच्च तन्मूलयोः सकलमोक्षसाधनसंपन्नत्वपरमदृढविरागपरिपूर्णैकहेयत्वरूपयोस्तयोः सत्त्वात् । संकरत्वं हि क्षीरनीरैक्यवदभासमानभेदत्वं संसृष्टित्वं तिलतण्डुलवन्मिश्रणेऽपि भासमानभेदत्वमिति तयोः सामान्यलक्षणे ज्ञेये । काव्यप्रदीपे तु तद्विशेषोऽप्युक्तः । तथाहि—'संशयेनाङ्गाङ्गिभावेन एकव्यञ्जकानुप्रवेशेन चेति त्रिविधः संकरः । उक्तप्रकारत्रयं विना संयोगः संसृष्टिः' इति । यथावा काव्यप्रकाशे—'स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घना वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः । कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे वैदेही नु कथं भविष्यति हहा हा देवि धीरा भव' । अत्र लिप्तेति पयोदसुहृदामिति चात्यन्ततिरस्कृतवाच्ययोः संसृष्टिः । ताभ्यां सह रामोऽस्मीत्यर्थान्तरसंक्रमितवाच्यस्यानुग्राह्यानुग्राहकभावेन रामपदलक्षणैकव्यञ्जकानुप्रवेशेन चार्थान्तरसंक्रमितवाच्यरसध्वन्योः संकर इति । साहित्यदर्पणेऽपि—'अत्युन्नतस्तनयुगा तरलायताक्षी द्वारि स्थिता तदुपयानमहोत्सवाय । सा पूर्णकुम्भनवनीरजतोरणस्रक्संभारमङ्गलमयत्नकृतं विधत्ते' । अत्र स्तनावेव पूर्णकुम्भौ दृष्टय एव नीरजतोरणस्रज इति रूपकध्वनिरसध्वन्योरेकाश्रयानुप्रवेशः संकरः । 'धिन्वन्त्यमूनि मदमूर्च्छदलिध्वनीनि धूताध्वनीनहृदयानि मधोर्दिनानि । निस्तन्द्रचन्द्रवदनावदनारविन्दसौरभ्यसौहृदसगर्वसमीरणानि' । अत्र निस्तन्द्रेत्यादिलक्षणामूलध्वनीनां संसृष्टिरिति ॥ १९० ॥

एवमित्येते सप्तसामान्याद्ध्वनिभेदाः स्वरा इवेत्यन्तग्रन्थेन पूर्वं प्रतिज्ञातध्वनिभे-

**ध्वन्योरेव स्वतोऽर्थस्य संभवित्वात्तथा कवेः ।**
**तन्निबद्धस्य नेतुश्च प्रौढवागेकसिद्धितः ॥ १९२ ॥**
**षड्भिरप्येवमेतैश्च वस्त्वलंकारयोः पुनः ।**
**ध्वननाद्द्वादशैते स्युर्भेदास्तेऽनुक्रमादिमे ॥ १९३ ॥**
**समुन्मीलन्ति माकन्दाः प्राहेति नतलोचना ।**
**प्रवसन्तं निजं कान्तं स्वरभङ्गाकुलाक्षरम् ॥ १९४ ॥**

दसप्तकमध्ये तावदलक्ष्यक्रमव्यङ्ग्याख्यं शक्तिमूलत्वेन विवक्षितान्यपरवाच्यापरनामकं रसध्वनिं सपरिकरं प्रपञ्च्यावसरसंगत्या लक्ष्यव्यङ्ग्यक्रमाख्यस्य शब्दार्थशक्तिमूलत्वाभ्यां वस्त्वलंकारत्वाभ्यां च चतुर्विधस्य ध्वनेर्निरूपणीयत्वात्तत्र शब्दशक्तिमूलयोस्तयोः प्रत्येकमेकविधत्वस्यैव संभवात्तदुदाहरणयोः सामान्यतः सप्तध्वन्युदाहरणावसर एवोक्तत्वादधुना तदुक्त्यनुपयोगादवशिष्टयोरर्थशक्तिमूलयोरेव तयोर्वक्ष्यमाणरीत्या प्रत्येकं षड्विधत्वसंभवाद्द्वादशानामपि तेषां कथनमुक्तानुवादपूर्वकं तद्भेदानपि बोधयन्प्रतिजानीते—**अथेत्यादि**त्रिश्लोकात्मकेन विशेषकेण। लक्ष्यव्यङ्ग्यक्रमध्वनिप्रकरणारम्भार्थोऽयमथशब्दः। तत्र चतुर्विधलक्ष्यव्यङ्ग्यक्रमध्वनौ। अर्थशक्तिजयोः अर्थशक्तिमूलयोः ॥ १९१ ॥ अर्थस्य व्यङ्ग्यार्थस्य स्वतः लोकादावप्युचितस्वभावेनेत्यर्थः। संभवित्वायुक्तत्वात्। तन्निबद्धस्य तेन कविना निबद्धस्य काव्यादौ ग्रथितस्य नेतुर्नायकस्य—**प्रौढेति**। प्रौढा मान्या या वाग्वाणी तयैव एका केवला सिद्धिर्यस्य तस्मात्। भावप्रधानो निर्देशः। कवेरथ च तदुक्तनायकस्य सरसोक्तिमात्रसिद्धत्वादित्यर्थः ॥ १९२ ॥ एवं एतैः षड्भिरपि भेदैः पुनः वस्त्वलंकारयोर्ध्वननादित्यग्रे निगदित एव संबन्धः। बुधैर्बोध्या इति शेषः ॥ १९३ ॥ तत्रायमुक्तध्वनिक्रमः। प्रथममर्थशक्तिमूलवस्तुध्वनयः षड्विधाः—स्वतःसंभविवस्तुना वस्तुध्वनिः १, तत्रैवालंकारेण वस्तुध्वनिः २, कविप्रौढोक्तिसिद्धवस्तुना वस्तुध्वनिः ३, तत्रैवालंकारेण वस्तुध्वनिः ४, कविनिबद्धनायकप्रौढोक्तिमात्रसिद्धवस्तुना वस्तुध्वनिः ५, तत्रैवालंकारेण वस्तुध्वनिरिति ६,। तथा तत्रैवालंकारध्वनयोऽपि षोढा—स्वतःसंभविवस्तुनालंकारध्वनिः १, तत्रैवालंकारेणालंकारध्वनिः २, कविप्रौढोक्तिसिद्धवस्तुनाऽलंकारध्वनिः ३, तत्रैवालंकारेणालंकारध्वनिः ४, कविनिबद्धनायकप्रौढोक्तिमात्रसिद्धवस्तुनाऽलंकारध्वनिः ५, तत्रैवालंकारेणालंकारध्वनिरिति ६,। तत्रार्थशक्तिमूलं स्वतःसंभविवस्तुना वस्तुध्वनिमुदाहरति—**समुन्मीलन्तीति**। नतलोचना नम्राक्षी। एतेन पातिव्रत्यप्राचुर्यं विरहशोकजमश्रुजलं मदीयमेतत्प्रवासगमनमङ्गलवेलायामनुचितमिति तद्गोपननिपुणत्वं च द्योतितम्। माकन्दाः आम्राः समुन्मीलन्ति सुविकसन्तीत्यर्थः। इत्युक्तप्रकारेण प्रवसन्तं प्रवासं जिगमिषुं निजं स्वकीयं न तु परपुरुषम्, कान्तं सर्वपुंगुणसंपन्नं रमणमित्यर्थः। स्वपतिं प्रतीतियावत्। स्वरभङ्गाकुलाक्षरं स्वरस्य कण्ठध्वनेर्यो भङ्गः कान्तवियोगासहिष्णुतया नाशस्तेन आकुलानि स्खलदवयवा-

**यमेवालम्ब्य लोकानां जीवितान्तमचीक्लृपत्।**
**चन्द्रहासोऽपि किं नासौ त्सरुतुल्योऽत्र मत्सरी॥१९५॥**

न्यक्षराणि यथा स्यात्तथा प्राहेत्यन्वयः। अत्र रसालसुविकसनान्यथानुपपत्तिसिद्धत्वादर्थशक्तिमूलं वसन्तागमरूपं कविकल्पितत्वादिराहित्येन स्वतःसंभवि यद्वस्तु तेन अयि प्राणनाथ, अस्मिन्विलासावसरे सर्वथैव प्रवासं प्रति श्रीमद्भिर्नैव गन्तव्यमिति वस्तु ध्वनितम्। तेनेह व्यङ्ग्यव्यञ्जकयोर्गृहैकावस्थानप्रार्थनसहकारविकाससिद्धवसन्तप्राप्तिरूपवस्तुनोः क्रमस्य सहृदयैर्लक्षितुं शक्यत्वाल्लक्ष्यव्यङ्ग्यक्रमत्वं बोध्यमिति दिक्। एवमग्रेऽपि अर्थशक्तिमूलत्वादिकमूह्यम्। यथावा रसगङ्गाधरे—'गुञ्जन्ति मञ्जु परितो गत्वा धावन्ति संमुखम्। आवर्तन्ते विवर्तन्ते सरसीषु मधुव्रताः'। अत्र मधुव्रतकर्तृकमञ्जुगुञ्जनाद्यैर्वस्तुभिः कविकल्पितत्वविरहेण च स्वतःसंभविभिरासन्नसरसिजोत्पत्तिध्वननद्वारा शरदागमनैकव्यरूपं वस्तु व्यज्यत इति। साहित्यदर्पणेपि—'दृष्टि हे प्रतिवेशिनि क्षणमिहाप्यस्मद्गृहे दास्यसि प्रायेणास्य शिशोः पिता न विरसाः कौपीरपः पास्यति। एकाकिन्यपि यामि तद्वरमितः स्रोतस्तमालाकुलं नीरन्ध्रास्तनुमालिखन्तु जरठच्छेदानलग्रन्थयः'। अनेन स्वतःसंभविना वस्तुमात्रेण तत्प्रतिपादिकाया भाविपरपुरुषोपभोगजनखक्षतादिगोपनरूपं वस्तुमात्रं व्यज्यत इति॥ १९४॥ उक्तकोटावेवालंकारेण वस्तुध्वनिमुदाहरति—**यमेवेति**। चन्द्रहासोऽपि चन्द्रइव शुचिः हासो यस्य स तथा सुप्रसन्नोऽपि कश्चिज्जन इत्यर्थः। एवंच खलसङ्गात्सात्त्विकोऽपि भ्रश्यतीति व्यज्यते। यद्वा चन्द्रहासः अपीति च्छेदः। सः प्रसिद्धः चन्द्रहा चन्द्रं हन्तीति तथा राहुरित्यर्थः। सोऽपि। एतेनातिदुष्टत्वेन प्रथितोऽपि राहुर्न विना केत्वाख्यस्वदेहरूपदुर्जनसङ्गममृतपाने वञ्चकत्वेन प्रवृत्तः स्वतोऽभूदतो दुःसङ्गः क्वापि मास्त्विति द्योत्यते। पक्षे खड्गोपि। एतेन खड्गे परप्राणहरणप्रावण्यप्रसिद्धावपि नास्य स्वतस्तथात्वमपितु बद्धमुष्टियोगादेवेत्यतो नैव हितैषिभिः स कार्य इति ध्वनितम्। यमेव मत्सरिणमेव पुरुषं, पक्षे मत्सरिणमेव केत्वाख्यदेहं, पक्षान्तरे खड्गमुष्टिमित्यर्थः। आलम्ब्य आश्रित्येतियावत्। अवधारणं त्वितरव्यावृत्त्यर्थम्। तस्मात्सकलदुर्जनेभ्योऽप्यधिकतरवर्जनीय एव मत्सरीति सूचितम्। अतएवोक्तं श्रीमद्भागवतेऽपि—'धर्मः प्रोज्झितकैतवोऽत्र परमो निर्मत्सराणां सताम्' इत्यत्र निर्मत्सरत्वमेव मुख्यत्वेन सतां विशेषणम्। लोकानाम्। सामान्यतः सकलजनानामित्यर्थः। जीवितान्तं जीवितं प्राणधारणं तस्यान्तो ध्वंसस्तम्। पुरुषपक्षे इष्टविनाशद्वारा, राहुपक्षे शनिवद्राहुफलमिति ज्योतिर्वित्प्रसिद्धेः शनिरशनिश्चेति काव्यप्रसिद्धेश्च विपद्द्वारा, खड्गपक्षे तु प्रहारद्वारैव अचीक्लृपत् भूयः समर्थोऽभूत्। संपादयामासेत्यर्थः। असावुक्तलक्षणः मत्सरी परोत्कर्षासहनं मत्सरः स यस्यास्तीति तथा। असूयावानित्यर्थः। अत्र जगति त्सरुतुल्यः खड्गमुष्टिरिव न भवति किम्' अपितु भवत्येवेत्यन्वयः। 'खड्गे तु निस्त्रिंशश्चन्द्रहासासि-

**बालानेत्रत्रिभागेण त्रिभागीभूतचेतसाम् ।**
**अन्तःशान्तिः क्व वेदान्तैः कल्पान्तेऽपि च हन्त नः १९६**
**तावद्वर्वर्ति सर्वत्र देवानां प्रियता जने ।**
**यावन्न देशिकेशानपादपद्मारुणोदयः ॥ १९७ ॥**

ष्टयः । कौक्षेयको मण्डलाग्रः करवालः कृपाणवत् । त्सरुः खड्गादिमुष्टौ स्यात्' इत्यमरः । तस्मान्मत्सरिणः परिहरणीया एवेति भावः । अत्र श्लेषानुप्राणितोपमालंकारेण मत्सरिणां सङ्गः स्वप्नेऽपि न कार्य इति वस्तु व्यज्यते । यथावा काव्यप्रकाशे—'दर्पान्धगन्धगजकुम्भकपाटकूटसंक्रान्तनिघ्नघनशोणितशोणरोचिः । वीरैर्व्यलोकि युधि कोपकषायकान्तिः कालीकटाक्ष इव यस्य करे कृपाणः' अत्रोपमालंकारेण सकलरिपुबलक्षयः क्षणात्करिष्यत इति वस्तु इति । साहित्यदर्पणेपि—'आपतन्तममुं दूराद्दूरीकृतपराक्रमः । बलोऽवलोकयामास मातङ्गमिव केसरी' । अत्रोपमालंकाररूपेण स्वतःसभविनार्थेन बलदेवः क्षणेन वेणुदारिणः क्षय करिष्यतीति वस्तु व्यज्यत इति । यथावा मदीये कृष्णलीलामृते—'स्तुतोऽप्यसौ सत्यवतीसुतादिभिर्बुधांस्तदामोदलवेन मोदये । न किं समुत्फुल्लवसन्तमालतीसुगन्धतस्तर्पयते सदागतिः' । अत्र वायुकर्तृकनिरुक्तमालतीसौरभ्येण बुधतृप्तिरूपस्वतःसंभविनैवार्थान्तरन्यासालंकारेण व्यासादिस्तुतस्यापि भगवतस्तत्कृतस्तवैकदेशावलम्बनेन श्रीकृष्णस्यैव वर्णनतो मत्कर्तृकबुधबुद्धिमोदन युक्ततरमेवेति वस्तु व्यज्यत इति ॥ १९५ ॥ अथ कविप्रौढोक्तिसिद्धवस्तुना वस्तुध्वनिमुदाहरति—**बालेति** । नः रागिणामस्माकं । हन्तेति खेदे । वेदान्तैः उपनिषद्भागैः कल्पान्तेऽपि ब्रह्मप्रलयेऽपि अन्तः अन्तःकरणे शान्तिरुपरतिः क्व । न क्वचिदपि भविष्यतीति योजना । एतेन निर्वेदातिशयः सूचितः । तत्र हेतुः—**बालानेत्रेति** । बाला मुग्धा सुन्दरी तस्याः नेत्रं तस्य यः त्रिभागः तृतीयोंशः । अपाङ्गदेश इति यावत् । तेन त्रिभागीभूतेति त्रिभागीभूत त्रिखण्डीभूत चेतोऽन्तःकरणं येषां तेषाम् । रमणीकटाक्षक्षुण्णमनसामित्यर्थः । अत्र स्वदोषदर्शित्वेन परमविवेकित्वान्निरुक्तशान्तेः सिद्धत्वेऽपि स्वस्य कवित्वेन स्वयमेव बालेत्यादिविशेषणकल्पितस्वरागित्वरूपवस्तुना कालान्तरेऽपि निरुक्तशान्तेः संपत्तिः स्वस्य दुःसाध्यैवेति वस्तु व्यज्यते । यथावा रसगङ्गाधरे—'तदवधि कुशली पुराणशास्त्रश्रुतिशतचारुविचारजो विवेकः । यदवधि न पदं दधाति चित्ते हरिणकिशोरदृशो दृशोर्विलासः' । अत्र कामिनीदृग्विलासे चेतसि पदमर्पितवति विवेकस्य नास्ति कुशलमिति वस्तुना दृग्विलासकर्तृकपदार्पणस्य लोकसिद्धत्वाभावात्कविप्रौढोक्तिनिष्पन्नत्वेन सुनिषण्णे तस्मिन्का कुशलचर्चा विवेकस्येति वस्तु व्यज्यत इति ॥ १९६ ॥ तत्रैव चालंकारेण वस्तुध्वनिमुदाहरति—**तावदिति** । 'देवानांप्रिय इति च मूर्खे' इत्यनुशासनाद्देवानांप्रियता मूर्खतेत्यर्थः । सा सर्वत्र जने तावदेव वर्वर्ति यावत् । **देशिकेशानेति** । देशिकाः गुरवस्तेषां मध्य ईशानः श्रेष्ठः

**सखि ते चरणद्वन्द्वपुनर्भवसवैभवम् ।**
**बालजैवातृकं मौलौ धत्ते दर्पकदर्पकः ॥ १९८ ॥**
**राधे त्वां तिलकं कर्तुं कृष्णाय शशिनो मिषात् ।**
**कामो ददाति कस्तूरिपूर्णं रजतभाजनम् ॥ १९९ ॥**
**धन्यास्ते ब्रह्मबोधोर्ध्वमपि धर्मं चरन्ति ये ।**
**अहं तु तमसि ध्वस्ते नैव पश्यामि किंचन ॥ २०० ॥**

---

सद्गुरुस्तस्य पाद एव पद्मं तदेवारुणस्तस्योदयः प्राकट्यं नास्तीति संबन्धः । अत्र कविप्रौढोक्तिसिद्धरूपकालंकारेण श्रीसद्गुरुचरणारविन्ददर्शने कस्यापि मौर्ख्यं नास्तीति वस्तुव्यक्तिः । यथावा साहित्यदर्पणे—'दशाननकिरीटेभ्यस्तत्क्षणं राक्षसश्रियः । मणिव्याजेन पर्यस्ता पृथिव्यामश्रुबिन्दवः' । अत्र कविप्रौढोक्तिसिद्धेनापह्नुत्यलंकारेण भविष्यद्राक्षसश्रीविनाशरूपं वस्तु व्यज्यत इति ॥ १९७॥ अथ कविकल्पितवक्तृप्रौढोक्तिसिद्धवस्तुना वस्तुध्वनिमुदाहरति—**सखीति** । इदहि गौरीं प्रति विजयावचः । हे सखि अयि वयस्ये गौरि, दर्पकदर्पकः मन्मथमथनोऽपि शिवः ते चरणद्वन्द्वपुनर्भवसवैभवं 'पुनर्भवः कररुहो नखोऽस्त्री नखरोस्त्रियां' इत्यमरात्पदयुगनखैः समानं वैभवं लावण्यैश्वर्यं यस्य तमित्यर्थः । एतादृशं बालजैवातृकं किशोरहिमकरं मौलौ धत्त इत्यन्वयः । अत्र कविकल्पितविजयाख्यवक्तृप्रौढोक्तिमात्रसिद्धेन भो गौरि, निरन्तरं त्वदनुनयार्थमेव त्वत्पदनखतुल्यरूपं चन्द्रं हरः शिरसि धारयतीति वस्तुना त्व मानमपसारयेति वस्तु व्यज्यते । यथावा साहित्यदर्पणे—'शिखरिणि क नु नाम कियच्चिर किमभिधानमसावकरोत्तपः । सुमुखि येन तवाधरपाटलं दशति बिम्बफल शुकशावकः' । अत्रानेन कविनिबद्धस्य कस्यचित्कामिनः प्रौढोक्तिरूपेण वस्तुना तवाधरः पुण्यातिशयलभ्य इति वस्तु प्रतीयत इति ॥१९८॥ तत्रैव चालंकारेण वस्तुध्वनिमुदाहरति—**राधे त्वामिति** । इयं हि मानवतीं राधिकां प्रति दूतिकोक्तिः । हे राधे, कामः कस्तूरीपूर्णं रजतभाजनं शशिनः मृगाङ्कस्य मिषात् छलात्कृष्णाय त्वां तिलकं कर्तुं ददातीति संबन्धः । अत्र कविनिबद्धदूतीरूपवक्तृप्रौढोक्तिसिद्धेन कैतवापह्नुत्यलंकारेण राकानायकोदयः संपन्नोऽतस्त्वया द्रुतं मानस्त्याज्य इति वस्तु द्योतितम् । यथावा साहित्यदर्पणे—'मालतीमुकुले भाति गुञ्जन्मत्तमधुव्रतः । प्रयाणे पञ्चबाणस्य शङ्खमापूरयन्निव' । अत्र कविनिबद्धवक्तृप्रौढोक्तिसिद्धेनोत्प्रेक्षालंकारेण कामस्यायमुन्माथनकालः प्राप्तस्ततकथं मानं न मुञ्चसीति वस्तु व्यज्यत इति ॥ १९९ ॥ एवं वस्तुव्यञ्जनकोटिनिविष्टं ध्वनिभेदषट्कमुदाहृत्याथैवमेवालंकृतिव्यञ्जनकोटिनिविष्टं तदुदाहरन् प्रथमं स्वतःसंभविवस्तुनालंकारध्वनिमुदाहरति—**धन्यास्त इति** । अपिशब्दात् 'किं प्रजया करिष्यामो येषां नोऽयमात्मायं लोकः' इत्यादिश्रुतियुक्तिसहस्रैः संन्यासस्यैव तत्त्वज्ञानोत्तरमुपपादितत्वात्तदुल्लङ्घित्वे कर्मजडत्वापत्तिः सूचिता । तुशब्दो वैलक्षण्यार्थः । तमसि अज्ञाने । तस्मिन्ध्वस्ते विचा-

**वैकर्तनांशवोऽश्नन्तस्तमांसि बिसिनीसखाः ।**
**शौकाशनीयतां यान्ति दलप्रालेयबिन्दुषु ॥ २०१ ॥**
**अविवेकं समालोक्य कामिन्यो भीरवोऽभवन् ।**
**मद्यं द्रवं बरीभर्ति पूतः क्लीबत्वमागतः ॥ २०२ ॥**

रितमहावाक्यजन्यदृढतमाद्वैतात्मतत्त्वसाक्षात्कारेण विनष्टे सति किंचन यावद्द्वैतलेशमपि नैव पश्यामि नैवानुभवामीत्यर्थः । स्पष्टमन्यत् । अत्र धर्मशीलज्ञानिनामेव धन्यत्वं न समाधिशीलस्य तस्य ममेति वस्तुना मानित्वात्स्वतःसंभविनाऽहमेव धन्यो नतु तेऽपीति व्यतिरेकालंकारो व्यज्यते । यथावा काव्यप्रकाशे—'धन्यासि या कथयसि प्रियसङ्गमेऽपि विश्रब्धचाटुकशतानि रतान्तरेषु । नीवीं प्रति प्रणिहिते तु करे प्रियेण सख्यः शपामि यदि किंचिदपि स्मरामि' । अत्र त्वमधन्या अहतु धन्येति व्यतिरेकालंकार इति ॥ २०० ॥ तत्रैवालंकारेणालंकारध्वनिमुदाहरति—**वैकर्तनांशव इति** । 'विकर्तनार्कमार्तण्डमिहिरारुणपूषणः' इत्यमराद्विकर्तनः सूर्यः तस्येमे वैकर्तनास्ते च तेंऽशवः किरणाः सौराः करा इत्यर्थः । तमांसि अश्नन्तः भक्षयन्तः सन्तः दलप्रालेयबिन्दुषु दलेषु पत्रेषु ये प्रालेयबिन्दवः हिमबिन्दवः तेषु शौकाशनीयतां अशितुं योग्यमशनीयं शुकानां कीराणां गणः शौकं तस्याशनीयं भक्ष्य तस्य भावस्तामित्यर्थः । तत्र किंसंबन्धीनि दलानीत्यत्र तान्विशिनष्टि—**बिसिनीति** । बिसिनीनां कमलिनीनां सखायः सुहृद इति तथा । पद्मिनीबन्धव इत्यर्थः । अत्र सूर्यकिरणास्तमांस्यश्नन्तः सन्त एव शौकाशनीयतां यान्तीति लोकसिद्धविरोधाभासालंकारेण कमलिनीदलगतहिमबिन्दुषु वैकर्तनांशवः शौकाशनीयतां यान्तीत्युक्त्या तेषां तमोऽश्नन्त इति सन्नन्तविशेषणादुषःकालीनत्वेनारुणवर्णत्वादुक्तहिमबिन्दूनां च शुक्लत्वादुभयसंमेलनेन कीराणां तत्र दाडिमबीजभ्रान्तिसंभवाद्भ्रान्तिनामकोऽलंकारः सूचितः । यथावा काव्यप्रकाशे—'गाढकान्तदशनक्षतव्यथासंकटादरिवधूजनस्य यः । ओष्ठविद्रुमदलान्यमोचयन्निर्दशन्युधि रुषा निजाधरम्' । अत्र विरोधालंकारेणाधरनिर्दशनसमकालमेव शत्रवो व्यापादिता इति तुल्ययोगिना मम क्षत्याप्यन्यस्य क्षतिर्निवर्ततामिति तद्बुद्धिरुत्प्रेक्ष्यतइत्युत्प्रेक्षाचेति ॥२०१॥ एवं कविप्रौढोक्तिसिद्धवस्तुनाऽलंकारध्वनिमुदाहरति—**अविवेकमिति** । बरीभर्ति पुनःपुनः पुष्णाति । स्पष्टमन्यत् । अत्राविवेकावलोकनात्तस्य स्वतोऽप्यधिकतरविपरीतकारित्वेन स्वस्य तद्गर्वभङ्गवशात् कामिन्यादिभिर्भीरुत्वादिकं समासादितमिति कविप्रौढोक्तिमात्रसिद्धेन वस्तुना कामिन्यादितोऽप्यविवेकस्तु विचित्र एवेति व्यतिरेकालंकारो व्यज्यत इति । यथावा साहित्यदर्पणे—'रजनीषु विमलभानोः करजालेन प्रकाशितं वीर । धवलयति भुवनमण्डलमखिलं तव कीर्तिसंततिः सततम्' । अत्र कविप्रौढोक्तिसिद्धेन वस्तुना कीर्तिसंततेश्चन्द्रकरजालादधिककालं प्रकाशकत्वेन व्यतिरेकालंकारो व्यङ्ग्य इति ॥ २०२ ॥ तत्रैवालंकारेणालंकारध्वनिमुदाहरति—

**तरुणीमृगनाभ्यक्तस्तनवल्मीकशायिना ।**
**दष्टोऽनङ्गभुजङ्गेन को जीवति जगत्त्रये ॥ २०३ ॥**
**स्मरस्मेराननाः कस्माद्भवत्यो नावलोकिताः ।**
**विभावर्यां जनैः स्वैरं गोप्यः कृष्णमुपागताः ॥ २०४ ॥**
**अय्यब्जे त्वत्कुचद्वन्द्वे मन्नखाङ्काः स्फुरन्त्यमी ।**
**स्वर्णाद्रिशृङ्गयोः प्रातस्तरणेः किरणा इव ॥ २०५ ॥**

---

**तरुणीति** । मृगनाभिना कस्तूर्या अक्तः अभ्यक्तः सुस्निग्धमालिप्तो यः स्तनः तरुण्याः यो मृगनाभ्यक्तस्तनः स एव वल्मीकं तत्र शेते निद्रातीति तथा तेनेत्यर्थः । एतादृशेन अनङ्गभुजङ्गेन स्मरोरगेण दष्टः कृतदंशः जगत्त्रयेऽपि कः पुरुषः जीवति अपि । न कोऽपि जीवतीति योजना । अत्र रूपकालंकारस्य कविप्रौढोक्तिमात्रसिद्धत्वात्तथा को जीवतीत्याक्षेपस्य च तथा—त्वात्ताभ्यामनङ्गभुजङ्गस्य प्रसिद्धभुजङ्गतो विशेषाध्यतिरेकालंकारो व्यज्यते । यथावा'स्थविरं या हसन्तीव स्थिता कविमुखाम्बुजे । निर्मिमीतेऽन्यदिव या वाणी जयति सा जगत्' । अत्र हसन्तीवेत्युत्प्रेक्षया अन्यदिवेत्युत्प्रेक्षया वा वाण्याः कवेर्वा व्यतिरेकालंकार इति ॥ २०३ ॥ अथ कविनिबद्धवक्तृप्रौढोक्तिसिद्धवस्तुनाऽलंकारध्वनिमुदाहरति—**स्मरेति** । इयं कृष्णसखविशेषस्य निशि वृन्दावने तमभिसृताः गोपीः प्रति प्रश्नोक्तिः । अक्षरार्थस्तु स्फुट एव । अत्र स्मरस्मेराननाः हे गोप्यः, भवत्यः विभावर्यां स्वैरं कृष्णमुपागता अपि जनैः कस्मान्नावलोकिता इति कविकल्पितगोपबालविशेषवक्तृप्रौढोक्तिसिद्धप्रश्नरूपवस्तुना तासां मुखेषु शरत्पूर्णचन्द्ररूपकालंकारव्यक्तिः । यथावा साहित्यदर्पणे—'सुभगे कोटिसंख्यत्वमुपेतं मदनाशुगैः । वसन्ते पञ्चता त्यक्ता पञ्चतासीद्वियोगिनाम्' । अत्र कविनिबद्धवक्तृप्रौढोक्तिसिद्धेन शराणां कोटिसंख्यत्वप्राप्त्या निखिलवियोगिमरणेन वस्तुना शराणां पञ्चता शरान्विमुच्य वियोगिनः श्रितेवेत्युत्प्रेक्षा व्यज्यत इति ॥ २०४ ॥ तत्रैवालंकारेणालकारध्वनिमुदाहरति—**अयीति** । इदं हि पुनः कामुकीं कमलां प्रति भगवद्वचनम् । अयि इति मृदुसंबोधने । अब्जे भो कमले, त्वत्कुचद्वन्द्वे अमी प्रत्यक्षाः मन्नखाङ्काः स्फुरन्ति । विभान्तीत्यर्थः । तत्रानुरूपं दृष्टान्तं ब्रुवन्नुषःकालत्वान्नायं सुरतसमय इति सूचयति—**स्वर्णेति** । अत्र कविकल्पितभगवदाख्यवैक्तृप्रौढोक्तिसिद्धोपमालंकारेण यतः प्रभातः समयः संपन्नोऽतः सुरतावसरोऽयं न भवतीति हेत्वलंकारो व्यज्यते । यथावा रसगङ्गाधरे—'दयिते रदनत्विषामिषादयि तेऽमी विलसन्ति केसराः । अपि चालकवेषधारिणो मकरन्दस्पृहयालवोऽलयः' । अत्र पूर्वोत्तरार्धवर्तिनीभ्यामपह्नुतिभ्यां न त्वं नारी किंतु नलिनीति तृतीयापह्नुतिर्व्यज्यत इति । यथावा राकागमे—'कान्तासहस्रभरिते हृदये सा न मात्यतः । तनूकरोति सुतनुस्तनून्यङ्गान्यपि द्रुतम्' । अत्र हेत्वलंकारेण तनोस्तनूकरणेऽपि तव हृदये न वर्तत इति विशेषोक्तिरिति ॥ २०५ ॥ इत्थं

**एवं पूर्वप्रतिज्ञातं यद्ध्वनेर्भेदसप्तकम् ।**
**तत्रालक्ष्यक्रमव्यङ्ग्यः शक्तिमूलो रसध्वनिः ॥ २०६ ॥**
**अर्थैकशक्तिमूलौ तौ वस्त्वलंकारगौ तथा ।**
**प्रपञ्चितास्त्रयोऽत्रैते शिष्टाः प्रागेव दर्शिताः ॥ २०७ ॥**
**चत्वारस्ते रसस्त्वेको द्वादशैते तथा पुनः ।**
**शब्दार्थोभयजोऽप्येकोऽयमस्त्यष्टादशेत्यमी ॥ २०८ ॥**
**भुजङ्गाहितसङ्गापि कुटिलापि कलङ्किनः ।**
**कला शिरोधिरूढेश न पादमपि मन्मतिः ॥ २०९ ॥**

---

यथाक्रमं द्वादश भेदानुदाहृत्य प्रथमोपक्रमसांगत्यमाह—**एवमिति** युग्मेन । एवमुक्तग्रन्थेन पूर्वं उपक्रमे यत् ध्वनेः उत्तमोत्तमकाव्यस्य भेदसप्तकं प्रतिज्ञातं 'इत्येते सप्त सामान्यात्' इत्यादिना प्रतिज्ञाविषयीकृतं तत्र तन्मध्ये अलक्ष्यक्रमव्यङ्ग्यः शक्तिमूलः रसध्वनिः ॥ २०६ ॥ तथा **अर्थैकशक्तिमूलौ वस्त्वलंकारगौ** तौ ध्वनी च एते त्रयः अत्र प्रपञ्चिताः विस्तरतः कथिताः । शिष्टाः शब्दशक्तिमूलौ वस्त्वलकारध्वनी लक्षणामूलावर्थान्तरसंक्रमितवाच्योऽत्यन्ततिरस्कृतवाच्यश्चेति चत्वारः प्रागेव दर्शिता इत्यन्वयः ॥ २०७ ॥ ननु प्रथमं तु सामान्यतः सप्तैव ध्वनिभेदा उपक्रान्तास्तत्र रसध्वनिभेदास्तु शृङ्गारादिभेदेन बहवः प्रपञ्चिताः, किंचात्र वस्तुध्वनिप्रकरणेऽत्यर्थशक्तिमूला एवैते द्वादश ध्वनिभेदाः कथितास्तथात्वे कथं नोपक्रमविरोधः। काव्यप्रकाशादौ तु दशसहस्र ध्वनिभेदाः किंचिदधिकाश्च परिगणितास्ततः प्राचीनैः सहापि विरोध इत्यत्राह—**चत्वार इति ।** ते पूर्वश्लोके उर्वरितत्वेनोक्ताः प्रथमोद्दिष्टध्वनिसप्तकगाः शब्दशक्तिमूलवस्तुध्वन्यादयश्चत्वारश्चतुःसंख्याका इत्यर्थः । तु पुनः रसः रसध्वनिः एकः सर्वोऽपि रसध्वनिरेकसंख्याक एवेत्यर्थः । उक्त हि काव्यप्रकाशमूले—'रसादीनामनन्तत्वाद्भेद एको हि गण्यते' इति । तथा एते अर्थशक्तिमूलवस्त्वलंकारध्वनिभेदत्वेनानुपदमुक्ताः द्वादश पुनः अयमधुनैव वक्ष्यमाणः शब्दार्थोभयजोऽपि शब्दार्थोभयशक्तिमूलोऽपि । अपिः समुच्चये । एकोऽस्ति इति एव मिलिताः अमी निरुक्ताः अष्टादश एतत्संख्याकाः ध्वनिभेदाः सन्तीत्यर्थः । एतदप्युक्तं तत्रैव—भेदा अष्टादशास्य तदिति । अवान्तरभेदास्त्वनुपयुक्तत्वान्नैवोक्ताः ॥ २०८ ॥ तमेव शब्दार्थोभयशक्तिमूलं ध्वनिमुदाहरति—**भुजंगेति ।** हे ईश शंभो, पक्षे राजन्, भुजङ्गाहितसङ्गापि भुजङ्गः शिवस्य सर्पभूषणत्वात्तच्छिरोभूषणीभूतः कश्चिन्नागविशेषः, पक्षे 'वेश्यापतिर्भुजङ्गः स्यात् खिङ्गः पाल्लविको विटः' इत्यमरात् जारः तेन आहितः कृतः सङ्गो यस्याः सा । यद्वा तस्य आहितः सङ्गो यया सा तथेत्यर्थः । एतेनाचारतो दुष्टत्वादनादरणीयत्वं ध्वनितम् । एतादृश्यपि तथा कुटिलापि वक्रापि, पक्षे दुःसाध्यापि पक्षान्तरे परच्छिद्रान्वेषिण्यपीत्यर्थः । अनेन शीलतोऽपि तद्व्यक्तम् । ईदृश्यपि कलङ्किनः चन्द्रस्य, पक्षे प्रख्यातदोषस्य पुंविशेषस्येत्यर्थः । एवं च कुलतोऽपि तत्सूचितम् । कला षोडशो भागः, पक्षे संगीतादिरूपा, पक्षान्तरे कं विषयसुखं लाति आदत्त इति कला जारिणी । तरुणी-

**अत्र सप्तदशैतेऽपि रसध्वन्युक्तया दिशा ।**
**यथासंभवमभ्यूह्या व्यञ्जनायाः स्थले बुधैः ॥ २१० ॥**
**गोक्षीराब्धेः शिवगुरुविबुधसहायोऽच्युतः समुद्दध्रे ।**
**दक्षिणकम्ब्वाख्यमपि स्फुटितबहुध्वनिचतुर्थरत्नमिदम् २११**

त्यर्थः । शिरः मस्तकं अधिरूढा त्वया निजोत्तमाङ्गे निहितेति यावत्, पक्षे शिरःकम्पनेनाभिनन्दिता, पक्षान्तरे सतीत्वभ्रान्त्या विषयलम्पटत्वेन वाभिवन्दितास्तीत्यर्थः । मन्मतिः मम भक्तस्य मतिर्बुद्धिः । पक्षे मम हितोपदेष्टुः कस्यचित्सचिवादेः मतिः । लौकिकादिविवेकज्ञानमितियावत् । पादमपि चरणमपि न नाधिरूढा भवति । पक्षे नैवाद्रीयत इत्यर्थः । तस्मान्मदङ्गीकरणं करणीयमेवेति भावः । अत्र शिवनरदेवाद्योरुपमानोपमेयभावो व्यङ्ग्यः । सच भुजङ्गकुटिलकलङ्किकलेशपदानां नानार्थकत्वेन परिवृत्त्यसहिष्णुत्वादन्येषां चातथात्वेन तत्सहिष्णुत्वादुभयेषामपि व्यञ्जकत्वेन शब्दार्थोभयशक्तिमूल एव । परिवृत्त्यसहिष्णुत्वं तु पर्यायान्तरोपादाने द्वितीयार्थाबोधकत्वमेव । नहि भुजङ्गपदे सर्पाख्यपर्यायान्तरे गृहीते वेश्यापत्यभिधद्वितीयार्थबोधकत्वं घटते । अतएव काव्यप्रकाशटीकायां सारबोधिन्यामीदृक्स्थले पदानां परिवृत्त्यसहिष्णुत्वं प्रतिज्ञाय तत्र पर्यायान्तरोपादानेऽपरार्थबोधासंभवादिति हेतुरुक्तः । तच्च नानार्थस्थल एव । तथाहि रसगङ्गाधरे—'तदित्थं नानार्थस्थलेऽनुरणनरूपव्यञ्जनं शब्दशक्तिमूलं शब्दस्य परिवृत्त्यसहिष्णुत्वादिति ध्वनिकारानुयायिनो वर्णयन्ति इति । अयंच शब्दार्थोभयशक्तिमूलो ध्वनिर्वाक्य एव नतु पदेऽपि । इदमप्युक्तं तत्रैव निरुक्तध्वनिमुदाहृत्य । अयंच वाक्यमात्रे । पदसमूहश्च वाक्यं । तेनास्य नानार्थघटितसमासविषयत्वेऽपि न विरोधः नतु शुद्धपदे तस्मिन्नानार्थयो रसावेशादिति । यथावा काव्यप्रकाशे—'अतन्द्रचन्द्राभरणा समुद्दीपितमन्मथा । तारकातरला श्यामा सानन्दं न करोति कम्' इति । रसगङ्गाधरेऽपि—'रम्यहासा रसोल्लासा रसिकालिनिषेविता । सर्वाङ्गशोभासंभारा पद्मिनी कस्य न प्रिया' इति । नच भुजङ्गादौ केवलरूढे कलंक्यादौ केवलयौगिके च भवतु नाम निरुक्तरीत्या व्यञ्जना, तथापि कलादौ योगरूढे सानुचितेति वाच्यं, तत्रापि रूढेतरार्थस्य तांविना रूढार्थबोधोत्तरघण्टाध्वन्यनुरणनरीत्यानुभवसिद्धत्वस्य सहृदयेषु सत्वेन तद्बाधापत्तेः। अत एवैवं निर्णीतं रसगङ्गाधरे—'योगरूढस्य शब्दस्य योगरूढ्या नियन्त्रिते । धियं योगस्पृशोऽर्थस्य या सूते व्यञ्जनैव सा' इति ॥ २०९ ॥ नतु भवत्वेवं ध्वनेरष्टादशत्वं तथापि रसध्वनिवदेतेषामपि यावद्व्यञ्जनास्थलवर्तित्वं कुतो नोदाहृतमिति चेत्तदतिदिशति—**अत्रेति ।** ग्रन्थे एते लक्ष्यव्यङ्ग्यक्रमादयः उभयशक्तिमूलादेर्वाक्यैकवृत्तित्वादिना यथासंभवमिति ॥ २१० ॥ उपसंहरति—**गोक्षीरेति । दक्षिणेति ।** दक्षिणावर्तो यः कम्बुः शङ्खः स्फुटितेति ध्वनयः उत्तमोत्तमकाव्यभेदाः, पक्षे रवाः ॥ २११ ॥

**इति साहित्यसारे दक्षिणावर्तकम्बाख्यं ध्वन्यपरनामकोत्तमोत्तमकाव्यस्वरूपनिरूपणात्मकं चतुर्थरत्नं संपूर्णम् ॥ ॥ ॥ ॥ ॥**

## अश्ववररत्नम् ५

**ध्वनेरनुगुणीभूतव्यङ्ग्यमावच्मि पञ्चमे।**
**रसालसरसास्वादमोदात्परभृतः कलैः ॥ १ ॥**
**तददो गूढमित्यादिप्राचीनोक्तेः समीक्ष्यताम्।**
**सुधीभिरष्टमूर्त्यैव सदोत्तममनुक्रमात् ॥ २ ॥**

पूर्वोत्तरप्रकरणयोः सगतिं वदन् वक्तव्य प्रतिजानीते—**ध्वनेरन्विति**। परभृतः परैः स्वेतरैः स्वाश्रमव्यवहारार्हैर्ब्राह्मणैर्भृतः भैक्षादियावन्निर्वाहमात्रवस्तुप्रदानेन पोषितः, पक्षे परैः काकैर्भृतः पालितः। कोकिल इत्यर्थः। 'वनप्रियः परभृतः कोकिलः पिक इत्यपि' इत्यमरः। एतादृशः अहमित्यध्याहारः। एवंच भगवत्प्राप्त्यर्थमपरिग्रहानहङ्कारित्वादिसाधनैर्यतमानित्वं सूचितम्। ध्वनेः ध्वन्याख्योत्तमोत्तमकाव्यस्य, पक्षे सहकारमञ्जर्यास्वादनेन कण्ठनिनादस्येत्यर्थः। अनु निरूपणानन्तरम्, पक्षे प्रादुर्भावोत्तरम्। पञ्चमे पञ्चमसंख्याके रत्ने, पक्षे 'पुष्पसाधारणे काले पिकः कूजति पञ्चमम्' इति वचनात्पञ्चमाख्यरागभेदविशेष इत्यर्थः। गुणीभूतव्यङ्ग्यं गुणीभूतं वाच्यार्थापेक्षयाऽधिकचमत्काराजनकत्वाद्गौणतां प्राप्तं व्यङ्ग्यव्यञ्जनावृत्तिसिद्धमर्थजातं यत्र तत्तथा गौणव्यङ्ग्याभिधमुत्तमकाव्यमित्यर्थः। पक्षे कुहूरिति कोकिलध्वनेरनुकरणं विनष्टेन्दुकलायाः अमावास्यायाश्च 'सा नष्टेन्दुकला कुहूः' इत्यमरादभिधानम्। तत्र वसन्तेऽधुना कामोत्कर्षादिन्दुकलावच्छान्तिपूर्वकमज्ञानतमःशामिकायाः स्वात्मविद्यायाः सुतरां विनष्टत्वात्सर्वत्र सर्वदा कुहूरेवास्तीति यद्व्यङ्ग्यम्। तत्तावत्तद्ध्वनिमाधुर्याग्रे गुणीभूतमेवास्तीति तादृशं शब्दजातमिति यावत्। कलैः मञ्जुलशब्दैः, पक्षे अव्यक्तमधुरध्वनिरित्यर्थः। **रसालेति**। 'रसो वै सः' इति श्रुतेः रसो ब्रह्म तेन ये अलसाः 'व्यापारे खिद्यते यस्तु निमेषोन्मेषयोरपि। तस्यालसधुरीणस्य सुखं नान्यस्य कस्यचित्' इत्यभियुक्तोक्तेर्ब्रह्मसुखानुसंधानेन प्रवृत्तिशून्याः ये जीवन्मुक्ताः तेषां यः रसः शान्तिसुख तस्य आस्वादः किंचिदनुभवस्तेन यो मोदो हर्षस्तस्माद्धेतोरित्यर्थः। एतेनायासाभावो व्यज्यते। पक्षे रसालः आम्रस्तस्य यः सरसः आस्वादो मञ्जरीभक्षणं तन्मोदात् आवच्मि किंचिद्वक्ष्यामीत्यन्वयः॥ १॥ एवं प्रतिज्ञातस्य गौणव्यङ्ग्याख्योत्तमकाव्यस्य सप्रमाणं प्रकारभेदमुद्दिशति—**तदद इति**। सुधीभिः पण्डितैरित्यर्थः। पक्षे मुमुक्षिभिः तत् प्रतिज्ञातकथनं गौणव्यङ्ग्याभिधमुत्तमकाव्यमित्यर्थः। अदः इदं वक्ष्यमाणत्वेन बुद्धिस्थमिति यावत्। अगूढमिति च्छेदः। **इत्यादीति**। 'अगूढमपरस्याङ्गं वाच्यसिद्ध्यङ्गमस्फुटम्। संदिग्धतुल्यप्राधान्ये काक्वाक्षिप्तमसुन्दरम्। व्यङ्ग्यमेवंगुणीभूतव्यङ्ग्यस्याष्टौ भिधा मताः' इति काव्यप्रकाशकारिकोक्तेरित्यर्थः। पक्षे 'तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यम्' इति च श्रुतेश्चिद्रूपत्वेन नित्यापरोक्षमपि निर्गुणत्वादिना परमसूक्ष्ममित्यर्थः। उत्तमं काव्यं, पक्षे निरतिशयानन्दरूपत्वेन परमपुरुषार्थीभूतं अद्वैतं ब्रह्मेत्यर्थः। अष्टमूर्त्यैव अगूढा-

**गूढमेव मुदे व्यङ्ग्यमङ्गनास्तनकुम्भवत् ।**
**न त्वगूढं रसज्ञानां युक्ता तेनास्य गौणता ॥ ३ ॥**
**तेष्वाद्यं सप्तधैवेष्टं व्यक्तव्यङ्ग्यादिभेदतः ।**
**विप्रकृष्टतयान्येषां विभेदानामसंभवात् ॥ ४ ॥**

---

पराङ्गवाच्यसिद्ध्यङ्गास्फुटसंदिग्धंतुल्यप्राधान्यकाक्वाक्षिप्तासुन्दरं अष्टविधमेव । पक्षे 'पृथिवी सलिलं तेजो वायुराकाशमेव च । सूर्याचन्द्रमसौ सोमयाजी चेत्यष्टमूर्तयः' इति वचनात्समष्टिव्यष्ट्यात्मकं सगुणरूपमेवेत्यर्थः । अनुक्रमात् कारिकोद्दिष्टक्रमेणेति यावत् । पक्षे यमनियमादियोगानुक्रमेणेत्यर्थः । सदा निरन्तरं समीक्ष्यतां द्रक्ष्यतामिति संबन्धः ॥ २ ॥ नन्वगूढव्यङ्ग्यस्य गौणत्वमनुचितमित्यत्राह— **गूढमेवेति** । रसज्ञानां मुदे भवतीति योज्यम् । पक्षे रसज्ञानां ब्रह्मविदां मुदे व्यङ्ग्यव्यञ्जनावृत्त्यैव महावाक्येन गम्यं गूढं निर्गुणमेव ब्रह्म भवति नत्वगूढ सगुणं, तेनास्य सगुणस्य गौणता युक्तेत्यादिप्राग्वत् ॥ ३ ॥ एवं गौणव्यङ्ग्यस्याष्टविधत्वे अगूढव्यङ्ग्यस्य गौणत्वे च सिद्धे तत्रापि प्रथमस्य तस्यापि सप्तविधत्वं व्यक्तव्यङ्ग्यत्वादिभेदैर्विधत्ते—**तेष्वाद्यमिति** । ते च व्यक्तव्यङ्ग्यादयो भेदाः । यथा—व्यक्तव्यङ्ग्यम् आर्थिकम् वाच्यचमत्कृति लक्ष्यव्यङ्ग्यम् क्रमत्वेन शब्दशक्तिमूलं तेनैवार्थशक्तिमूलं अर्थान्तरसंक्रमितवाच्यम् अत्यन्ततिरस्कृतवाच्यं चेति सप्तैव । ननु काव्यप्रकाशादावस्यार्थशक्तिमूलादिभेदत्रयमेवोक्तम् । व्यक्तव्यङ्ग्यादिभेदचतुष्टयं तु भवता कुतः कल्पितमिति चेन्न । तस्यापि पूर्वाचार्यसंमतत्वात् । उक्तंहि चन्द्रालोके श्रीजयदेवैरगूढव्यङ्ग्य प्रकृत्य—'व्यक्त एव क्वचिद्व्यङ्ग्यः क्वचिदर्थस्वभावतः । क्वचिच्चारुतरस्याग्रे स विमुञ्चति चारुताम् । अगूढं कलयेदर्थान्तरसंक्रमितादिकम्' इति । ननु 'यद्व्यज्यमानं मनसःस्तैमित्याय स नो ध्वनिः । अन्यथा तु गुणीभूतव्यङ्ग्यमापतति त्रिधा' इत्येतत्प्रथमकारिकायां सामान्येन गौणव्यङ्ग्यं यत्त्रिधात्वेन प्रतिज्ञात तल्लक्षणान्येव व्यक्त एवेति श्लोकेन विधायाथागूढमित्यादिनोक्तराशित्रयमध्य एव भेदाष्टकमुक्तमिति क्वोक्तकल्पनावसर इति चेन्न । एतट्टीकायामगूढत्वस्य त्रैविध्यमाहेति व्यक्त एवेति श्लोकावतरणासाङ्गत्यापत्तेः । तस्मादुक्तैवोक्तकल्पनेति । नच व्यक्त एवेत्यादिनाऽत्राप्यर्थान्तरसंक्रमितादेस्त्रिविधस्यैवागूढव्यङ्ग्यस्य विवृतत्वेन तद्भेदान्तरसंभावनापीति वाच्यम् । अर्थान्तरसंक्रमितादेर्लक्षणादिमूलव्यङ्ग्यस्य व्यक्तव्यङ्ग्यत्वाद्यसंभवात् । तट्टीकायां वाच्यान्यथानुपपत्तिलभ्यं यथेत्यवतार्य निःशेषच्युतचन्दनमित्युदाहृत्य अचारुव्यङ्ग्यं यथेत्यवतार्य 'सूक्ष्मे घने नैषधकेशपाशे निपत्य निःस्पन्दतरीभवद्भ्याम् । तत्रानुबन्धं न विमोच्य गन्तुमपारि तल्लोचनखञ्जनाभ्याम्' इति चार्थान्तरसंक्रमितादितोन्यभेदोदाहरणोक्तेश्च । नन्वेवमपि लक्ष्यव्यङ्ग्यक्रमत्वेन शब्दशक्तिमूलाख्यभेदे किं प्रमाणमिति चेन्न । काव्यप्रकाशकारादिभिरर्थशक्तिमूलाख्यतद्भेदोक्त्यन्यथानुपपत्त्यैव तस्य सिद्धत्वात् । नह्यर्थशक्तिमूलत्वसंभवे शब्दशक्तिमूलत्वासंभव

व्यक्तव्यङ्ग्यं तु तद्यत्र वाच्याद्व्यङ्ग्योऽपि नेतरः ।
सीते कृतधनुर्भङ्गमनङ्गं साङ्गमीक्षय ॥ ५ ॥
वाच्यार्थस्यान्यथापत्त्या सिद्धमार्थिकमुच्यते ।
प्रथमेव द्वितीयापि क्लीबे प्रायेण दृश्यते ॥ ६ ॥
वाच्येतिसुन्दरे व्यङ्ग्याज्ज्ञेयं वाच्यचमत्कृति ।
अबध्वैव निबध्नन्ति विचित्रा गुणिनां गुणाः ॥ ७ ॥
लक्ष्यव्यङ्ग्यक्रमत्वेन शब्दशक्तिसमुद्भवम् ।
सहकारोचितः किं तेऽप्यविकासो वनप्रिये ॥ ८ ॥

---

इति बालैरपि श्रद्धेयम् । तस्मादुक्तमेवोक्तभेदसप्तकम् । एवं तदन्येऽपि रसादयो ध्वनिभेदाः किमित्यत्र नोच्यन्त इत्यत्राह—**विप्रकृष्टेति** । अन्येषां भेदानां वाक्यार्थव्यवधानेन झटित्यवभासाभावाद्गूढत्वापत्तेरित्यर्थः ॥ ४ ॥ तत्र व्यक्तव्यङ्ग्यं लक्षयति—**व्यक्तव्यङ्ग्यं त्विति** । वाच्याद्वाच्यार्थात् । व्यङ्ग्योऽपि व्यङ्ग्यार्थोऽपि । तस्य सर्ववाच्याद्भिन्नत्वेन प्रसिद्धत्वेऽपि यत्र वाच्यतुल्य एव व्यङ्ग्यार्थस्तद्व्यक्तव्यङ्ग्यमगूढं गौणव्यङ्ग्यमित्यर्थः । एवमग्रेऽपि ज्ञेयम् । तदुदाहरति—**सीत इति** । अत्र सखीकर्तृकः सीतां प्रति श्रीरामवरणानुकूलः शौर्यसौन्दर्याद्यनन्तसद्गुणपरिपूर्णस्य तस्य सादरावलोकनोपदेशो व्यङ्ग्यः । स तावद्वाच्यार्थानतिरिक्त एवेति लक्षणसमन्वयः । यथावा—'दिनेषु गच्छत्सु नितान्तपीवरं तदीयमानीलमुखं स्तनद्वयम् । तिरश्चकार भ्रमरावलीढयोः सुजातयोः पङ्कजकोशयोः श्रियम्' इति ॥ ५ ॥ आर्थिकं लक्षयति—**वाच्येति** । तदुदाहरति—**प्रथमेवेति** । अत्र द्वितीयायाः सधर्मिण्याः पक्षे विभक्तेश्च प्रथमपत्न्या प्रथमाविभक्त्या च यत्साम्यं संभोगसुखराहित्यतौल्यं रूपतौल्यं च यद्व्यङ्ग्यं तत्क्लीबपदवाच्यस्य षण्ढस्य, नपुंसकलिङ्गस्य चान्यथापत्त्यैव सिद्धमिति बोध्यम् । प्रायःपदमर्जुनव्युदासार्थम् ॥ ६ ॥ वाच्यचमत्कृतिं लक्षयति—**वाच्य इति** । तदुदाहरति—**अबध्वैवेति** । बवयोः सावर्ण्यात्त्रीत्वं विनैवेत्यर्थः । अत्र गुणानामतिमनोहारित्वेनादरणीयत्वरूपाद्व्यङ्ग्यादुक्तवाच्यार्थस्यैवातिचारुत्वमिति । रज्जवो हि वेष्टनग्रन्थनाभ्यां बध्नन्ति सौन्दर्यादयोऽपि रमणीद्वारा चेति प्रसिद्धमेव । सौजन्यादयस्तु तद्विनापीत्यतो वैचित्र्यमेतेषामित्याशयः । यथावा—'सूक्ष्मे घने नैषधकेशपाशे निपत्य निष्पन्दतरीभवद्भ्याम् । तत्रानुबन्धं न विमोच्य गन्तुमपारि तल्लोचनखञ्जनाभ्याम्' इति ॥ ७ ॥ अथ लक्ष्यव्यङ्ग्यक्रमत्वेन शब्दशक्तिमूलमुद्दिशति—**लक्ष्येति** । तदुदाहरति—**सहकारेति** । 'वनप्रियः परभृतः कोकिलः पिक इत्यपि' इत्यमरात्कोकिले विषय इत्यर्थः । अत्र वनप्रिय इति पदशक्त्या वनविहारशीलत्वेनाग्राम्यत्वं व्यङ्ग्यं तदगूढमेवेति भावः॥८॥

**तेनैवार्थिकशक्त्युत्थमनुस्वानस्वरूपकम्।**
**किं न स्मरसि रे काम तं त्रिलोचनमीश्वरम्॥ ९॥**
**अजहल्लक्षणामूलमर्थान्तरगवाच्यकम्।**
**मृगाक्षीणां कटाक्षेण कामिनां विरहे ज्वरः॥ १०॥**
**जहतीमूलमत्यन्ततिरोभूतस्ववाच्यकम्।**
**केचिदेव जगत्यत्र सौजन्यालंकृताः परम्॥ ११॥**
**अपरस्य रसादेस्तदङ्गं दशविधं मतम्।**
**रसस्तु रसवद्भावः प्रेय आभासकौ तयोः॥ १२॥**
**ऊर्जस्वद्भावशान्त्यादिचतुष्कं तु समाहितः।**
**चतुर्भेदाः स्युरित्यष्टौ रसालंकारनामकाः॥ १३॥**

तेनैवार्थशक्तिमूलमप्युद्दिशति—**तेनैवेति**। लक्ष्यव्यङ्ग्यक्रमत्वेनैवेत्यर्थः। **आर्थिकेति**। आर्थिकी अर्थजा या शक्तिस्तत उत्तिष्ठतीति तथा। अर्थशक्तिमूलमित्यर्थः। **अन्विति**। घण्टादिनादवद्वाच्यार्थानुरणनरूपमिति यावत्। तदुदाहरति—**किमिति**। अत्र रे काम, शैवा वयं त्वया न पीडनीया इति व्यङ्ग्यं वाच्यार्थशक्तिमूलमगूढमेव। यथावा काव्यप्रकाशे—'अत्रासीत्फणिपाशबन्धनविधिः शक्त्या भवद्देवरे गाढं वक्षसि ताडिते हनुमता द्रोणाद्रिरत्राहृतः। दिव्यैरिन्द्रजिदत्र लक्ष्मणशरैर्लोकान्तरं प्रापितः केनाप्यत्र मृगाक्षि राक्षसपतेः कृत्ता च कण्ठाटवी'। अत्र केनाप्यत्रेत्यर्थशक्तिमूलानुस्वानरूपस्येति॥ ९॥ अथार्थान्तरसंक्रमितवाच्यं लक्षयति—**अजहदिति**। तदुदाहरति—**मृगेति**। अत्र कटाक्षेणेति विरहपदतात्पर्यानुपपत्त्या कटाक्षस्मृतिरूपेऽर्थान्तरे संक्रमितवाच्यमजहल्लक्षणयैव। तस्य चोक्तविरहासहिष्णुत्वेन रत्याख्यं व्यङ्ग्यमसहृदयानामपि वाच्यवद्गोचर इति॥ १०॥ एवमत्यन्ततिरस्कृतवाच्यं लक्षयति—**जहतीति**। जहल्लक्षणामूलमित्यर्थः। **अत्यन्तेति**। अत्यन्तं तिरोभूतं तिरस्कृतं स्ववाच्यं नैजशक्यार्थजातं यत्र तदित्यर्थः। तदुदाहरति—**केचिदेवेति**। अत्रालंकृतपदार्थस्तु 'अलंकारस्त्वाभरणम्' इति कोशाद्भूषणवैशिष्ट्यमेव शक्यो भवति, सतु सौजन्यपदवाच्ये सुशीलत्वे रत्नकुण्डलाद्याभरणत्वासंभवाद्बाधित एवेति रमणीयत्वं लक्षयति। तेनास्यात्यन्ततिरस्कृतवाच्यत्वम्। व्यङ्ग्ये चास्य निरुक्तालंकारवत्सौजन्यस्यावश्यसंपादनीयत्वं वाच्योपमानमेवेति गुणीभूतमिति लक्षणसंगतिः। यथावा काव्यप्रकाशे—'उन्निद्रकोकनदरेणुपिशङ्गिताङ्गा गायन्ति मञ्जु मधुपा गृहदीर्घिकासु। एतच्चकास्ति च रवेर्नवबन्धुजीवपुष्पच्छदाभमुदयाचलचुम्बि बिम्बम्'। अत्र चुम्बनस्यात्यन्ततिरस्कृतवाच्यस्येति॥ ११॥ अथ क्रमप्राप्तमपराङ्गाख्यं द्वितीयं गौणव्यङ्ग्यभेदमुद्दिश्य विशदीकृत्य च तत्प्रकारभेदान्दशविधत्वेन प्रतिजानीते—**अपरस्येत्यर्धेन**। मतं मंमटभट्टादीनां प्राचामिति शेषः। तानेव भेदानभिधत्ते—**रस इत्यादिसार्धद्वयेन**। तत्र

**अपि शब्दार्थयोः शक्तिमूले लक्ष्यक्रमात्मके।**
**वाच्यस्याङ्गे दशैवं तत्क्रमाज्ज्ञेयं विपश्चिता ॥ १४ ॥**
**अस्ति ध्वनिगुणीभूतव्यङ्ग्ययोः संकरादिकम्।**
**स्वभेदाद्यैरथाप्येषां प्राधान्याद्व्यपदेशनम् ॥ १५ ॥**
**हन्त भो कान्त पञ्चेषो मत्कुचाञ्चितकुङ्कुमैः।**
**किर्मीरितं त्वदङ्गं यत्तद्ध्यानकृतां गतम् ॥ १६ ॥**
**वन्दे पादारविन्दं तदैन्दिरं रागमन्दिरम्।**
**मिलिन्दायितमानन्दाद्यत्र मौकुन्दमौलिना ॥ १७ ॥**

रसादिभेदाष्टके रसवदाद्यलंकारविशेषभेदचतुष्टयत्वं विधत्ते—**रसस्त्वित्यादि**सार्धेन। तत्र गुणीभूतव्यङ्ग्यो रसो रसवदलंकारः, तथैव भावः, प्रेयोऽलंकारः, तयोरुक्तरसभावयोः आभासकौ रसाभासभावाभासौ, ऊर्जस्वदलंकारः। तु पुनः भावशान्त्यादिचतुष्कं भावशान्तिभावोदयभावसंधिभावशाबल्यं समाहितोऽलंकारः, इत्युक्तरूपाः रसादयोऽष्टौ रसालंकारनामकाश्चतुर्भेदाः रसवदादिचतुःप्रकाराः स्युरित्यन्वयः। तदुक्तं काव्यप्रकाशे-'एते च रसवदाद्यलंकाराः' इति ॥१२॥१३॥ एवं तद्भेदाष्टकमुक्त्वावशिष्टं भेदयुगं स्पष्टयति—**अपीति**। शब्दार्थयोः शक्तिमूले लक्ष्यक्रमात्मके लक्ष्यव्यङ्ग्यक्रमरूपे वाच्यस्य वाच्यार्थस्यापि अङ्गे अपराङ्गाभिधे गौणव्यङ्ग्ये भवत इति संबन्धः। अपिशब्देनात्र पूर्वोक्तरसाद्यष्टकस्य व्यज्यमानरसाद्यङ्गत्वमेव, प्रकृतभेदयुगे तु अभिधीयमानरसाद्यङ्गत्वमपीति द्योतितम्। उपसंहरति—**एवमिति**। विपश्चिता विदुषा एवमुक्तरीत्या तत्। अपराङ्गं गौणव्यङ्ग्य क्रमादनुक्रमेण दश ज्ञेयं दशसंख्याकं बोध्यमिति योजना ॥ १४ ॥ ननु ध्वन्युदाहरणेष्वपि क्वचिद्गुणीभूतव्यङ्ग्यस्य भेदाद्यैरेतदुदाहरणेष्वपि तेषां च क्षीरनीरवदस्फुटभानरूपः संकरस्तिलतण्डुलवत्स्फुटभेदभानरूपासंसृष्टिर्वा वर्तत एव, तत्कथं ध्वन्यादिसंज्ञानियम इतिचेत्प्राधान्यादेवेत्याह— **अस्तीति**। आद्यपदेनालंकारभेदग्रहः प्राधान्यात् अलौकिकचमत्काराविर्भावकधर्मविशेषत्वलक्षणमुख्यत्वादित्यर्थः। उक्तं हि काव्यप्रदीपे—'प्राधान्यं चातिशयितश्चमत्कारः' इति ॥ १५ ॥ तत्र प्रथमं व्यङ्ग्यरसस्याङ्गत्वेन गौणं व्यज्यमानरसाद्यमपराङ्गमुदाहरति—**हन्तेति**। किर्मीरितं 'चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे' इत्यमराच्चित्रितमित्यर्थः। इदं हि मदनदाहोत्तरं रतिवचः शोकरूपम्। तत्र प्रथमचतुर्थचरणाभ्यां व्यक्तकरुणस्य द्वितीयादिचरणसूचितः शृङ्गारोऽङ्गमिति ॥ १६ ॥ एवं क्रमागतं भावाङ्गत्वं रसस्योदाहरति—**वन्द इति**। तत् वक्ष्यमाणगुणकं ऐन्दिरं इन्दिरायाः इदं लक्ष्मीसंबन्धीत्यर्थः। पादारविन्दं चरणकमलं वन्दे नमस्करोमीत्यन्वयः। अहमिति शेषः। एतेन स्वस्मिन्नमानित्वादिस्वाभाव्यं बोधितम्। तत्किम्। यत्र मौकुन्दमौलिना मुकुन्दस्य विष्णोरयं मौकुन्दः स चासौ मौलिः किरीटश्चेति तथा तेन। भगवन्मस्तकेनेत्यर्थः। आनन्दात् लक्ष्म्यास्तदानीं मानि-

**जानक्यधररागेण रक्तं रावणमानसम्।**
**श्रीराम तव बाणेन तेनापि सह शोषितम्॥ १८॥**
**कौरवः कलयन्नेव कृष्णानयनखञ्जनौ।**
**निधनं गामितो येन कृष्णः पुष्णातु मामसौ॥ १९॥**

---

नीत्वेन स्वकराद्यङ्गस्य तदीयस्तनादिस्पर्शलाभदौर्लभ्येऽप्यनुनयार्थं प्रणामावसरे स्वशिरसस्तदङ्घ्रिसरोरुहस्पर्शमात्रेणैव संतोषादित्यर्थः। मिलिन्दायितं भृङ्गवदाचरितमिति संबन्धः। भ्रमरो यथा कमल एव सुगन्धादिलुब्धत्वेन तिष्ठति तद्वद्भगवताप्युक्तानन्दवशात्स्वशिरः श्रीपदकोकनद एव स्थापितमिति तत्त्वम्। अत एवोक्तपादपद्मं विशिनष्टि—**रागेति**। रागो हरिप्रेमा तस्य मन्दिरं अगारमित्यर्थः। नन्वधराद्यङ्गं नायकरागविषयतया वर्णितुमुचितं। चरणे तु तथात्वानौचित्यमेव कविसमये कामशास्त्रे च प्रायेणैवमप्रसिद्धत्वादनुभवपराहतत्वाच्चेत्याद्यस्वरसश्चेत्तर्ह्येवं व्याक्रियताम्। रागः रक्तिमा। शेषं प्राग्वदेव। एवंच षड्गुणैश्वर्यपरिपूर्णस्य श्रीनारायणस्यापि किमिति पद्मापादपद्मे स्वमस्तकस्थापनपूर्वकमपि प्रणतिप्रवृत्तिरित्युक्तिः प्रत्युक्ता। तस्यास्त्रैलोक्यसुन्दरीत्वात्। अहो यत्पादोऽपि निखिलारुणिमनिलयः किं वाच्यं तदितराङ्गसौष्ठवमिति। पादारविन्दमित्येकवचनं तु मानौत्कव्यरोषादर्धपद्मासनेनैकचरणनखकर्तृकभूलेखनस्वाभाव्यसूचनार्थमेव। शिरसो भ्रमररूपतापि परमादरद्योतनाय मुकुटं समुत्तार्य स्थापितत्वेन तत्केशादिश्यामत्वाद्युक्तैव। अत्र लक्ष्मीविषयककविरतिरूपे भक्त्यपरनामके भावे देवयोर्विप्रलम्भोऽङ्गम्। यथावा काव्यप्रकाशे—'कैलासालयभाललोचनरुचा निर्वर्तितालक्तकव्यक्तिः पादनखद्युतिर्गिरिभुवः सा वः सदा त्रायताम्। स्पर्धाबन्धसमृद्धयेव सुदृढं रूढा यया नेत्रयोः कान्तिः कोकनदानुकारसरसा सद्यः समुत्सार्यते' इति॥ १७॥ अथ भावस्याङ्गं रसाभासमुदाहरति—**जानकीति**। अत्र तेनापीति तच्छब्दोदितरक्तेन सह रावणमानसं भो श्रीराम, तव बाणेन शोषितमित्युक्त्या भगवद्विषयकरतिभावे जानक्याः जगन्मातृत्वेन तद्विषयकरावणानुरागरूपविप्रलम्भशृङ्गारवर्णनस्यानौचित्येनायं रसाभासोऽङ्गम्॥ १८॥ एवं क्रमागतं भावस्याङ्गं भावाभासमुदाहरति—**कौरव इति**। येन कृष्णेति कृष्णा द्रौपदी तस्याः नयने एव खञ्जनौ चपलत्वादिसाधर्म्यात्खञ्जरीटौ तौ कलयन् स्मरन्नेव सन् कौरवः दुर्योधनः निधनं मरणं गामितः गदायुद्धे भीमसेनं प्रति तद्गुरुरूपमर्मस्मृतिजननेन तद्वस्ततो मारित इत्यर्थः। असौ कृष्णः मां पुष्णात्विति योजना। अत्र भगवद्रत्याख्यभावे द्रौपद्याः पाण्डवपत्नीत्वेन मातृप्रायत्वाद्दुर्योधननिष्ठतन्नेत्रस्मृतिरूपभावस्यानुचितविषयत्वेनाभासत्वात्स तावदमुख्यत्वादङ्गमेव॥ १९॥ अथ भावस्यैवाङ्गीभूतां भावशान्तिमु-

**सुन्दरीमञ्जुमञ्जीरसिञ्जितैर्या टणत्कृतिः ।**
**कामचापस्य साऽऽदेष्टुः पद्माभाञ्जेक्षणाद्गता ॥ २० ॥**
**शरणीकरणीयोऽसौ रुक्मिणीरमणो नृणाम् ।**
**यं दृष्ट्वाग्रेऽर्चितं चैद्यो मद्योन्मत्त इवावदत् ॥ २१ ॥**
**स्तम्बेरमाननः सोऽव्याद्यन्नाममिहिरोदयात् ।**
**विघ्नोलूकाः पलायन्ते स्तब्धीभावं व्रजन्त्यपि ॥ २२ ॥**
**कान्तादृगन्तकुन्तेन द्रुतं क्लान्तं क्षतं च्युतम् ।**
**स्वान्तं येषां गतिस्तेषां त्वमेव मदनान्तक ॥ २३ ॥**
**आश्रयीभूय मुक्तानां स्थितं सद्वृत्तमण्डले ।**
**हिरण्यगर्भता प्राप्ता गुणेन ग्रथता तु नो ॥ २४ ॥**

दाहरति—**सुन्दरीति । कामेति ।** आसीदिति शेषः । आदेष्टुरिति च्छेदः । आदिशत्युपदिशतीति तथा तस्य श्रीगुरोरित्यर्थः । **पद्मेति ।** पद्ममिव चरण इव आ ईषत् भाति रक्तत्वमृदुत्वादिना शोभत इति तथा तच्च तदब्जं सरोजं चेति तस्येक्षणान्निकटवर्तित्वेनाकस्मात्स्नानादिकाले दर्शनादित्यर्थः । गता कामोपशमादपयातेति यावत् । अत्र पद्मदर्शनाद्गुरुचरणस्मृतिव्यङ्ग्यगुरुरत्याख्यभावे सुन्दरीक्षणजन्यमोहादिभावस्य शान्तिरङ्गम् ॥ २० ॥ एवं भावस्यैवाङ्गं भावोदयाख्यमप्युदाहरति—**शरणीकरणीय इति ।** अक्षरार्थस्तु स्फुट एव । अत्र भगवद्रत्याख्यभावस्यैव शिशुपालासूयाभिधभावोदयोऽङ्गम् ॥ २१ ॥ तद्भावस्यैवाङ्गं भावसंधिमप्युदाहरति—**स्तम्बेरमेति ।** 'इभः स्तम्बेरमः पद्मी' इत्यमरात्स्तम्बे इक्ष्वादिकाण्डे रमते क्रीडत इति स्तम्बेरमो गजस्तस्याननं यस्य स तथा गजानन इत्यर्थः । सः अव्यात् पायादित्यर्थः । त्वामिति शेषः । कः स इत्यत्राह—**यदित्यादिना ।** यस्य नामैव मिहिरः सूर्यस्तस्योदयादित्यर्थः । यन्नामोच्चारणमात्रेणेतियावत् । **विघ्नेति ।** विघ्ना एव उलूकाः दिवाभीता इत्यर्थः । स्फुटमन्यत् । अत्र भयमूलकपलायनव्यञ्जितावेगस्य तथा तद्विरुद्धायाः स्तब्धीभावपदध्वनितजडतायाश्च संधिरव्यादित्याशीःसूचितशिष्यादिरतिभावस्याङ्गम् । यथावा काव्यप्रकाशे—'असोढा तत्कालोल्लसदसहभावस्य तपसः कथानां विश्रम्भेष्वथ च रसिकः शैलदुहितुः । प्रमोदं वो दद्यात्कपटबटुवेषापनयने त्वराशैथिल्याभ्यां युगपदभियुक्तः स्मरहरः' इति ॥ २२ ॥ एवं तस्यैवाङ्गीभूतां भावशबलतामुदाहरति—**कान्तेति ।** कान्तादृगन्तोऽङ्गनापाङ्ग एव कुन्तो भुशुण्डाख्यायुधविशेषस्तेनेत्यर्थः । द्रुतं भीतं क्लान्तं ग्लानिं प्राप्तं क्षतं विद्धं च्युतं मूर्च्छितम् । शिष्टं स्पष्टमेव । अत्र क्रमात्त्रासग्लानिदैन्यापस्माराणां शबलता हररतिभावस्याङ्गम् ॥ २३ ॥ अथ क्रमप्राप्तं वाच्याङ्गभूतं लक्ष्यव्यङ्ग्यक्रमात्मकं शब्दार्थशक्तिमूलं प्रतिज्ञातापराङ्गं गौणव्यङ्ग्यभेददशकमध्येऽवशिष्टं भेदद्वयं क्रमेणोदाहरति—**आश्रयीभूयेत्यादिद्वयेन ।** गुणेन तन्तुना, पक्षे शान्त्यादिना ।

**अस्याः संफुल्लमालत्याः सौरभ्यसमयेऽप्ययम्।**
**अलिश्चञ्चल एवेति दृष्ट्वा दूति हरिं व्रज॥ २५॥**
**नर्ते वाच्यस्य यत्सिद्धिर्वाच्यसिद्धयङ्गमस्ति तत्।**
**इदमेकान्यवक्तृक्तपदगत्वभिदा द्विधा॥ २६॥**

मुक्तानां मौक्तिकानां, पक्षे सालोक्यादिमुक्तिं प्राप्तानाम्। एतेनाद्वैतात्मरूपकैवल्यव्युदासः। अन्यथा ब्रह्मता तु नो प्राप्तेति वक्ष्यमाणासाङ्गत्यापत्तेः विदेहमुक्तानामाश्रयीभवनमद्वैतब्रह्मतां विनानुपपन्नमेव। तस्माद्युक्तमेवोक्तमुक्तपदव्याख्यानमिति। आश्रयीभूय स्वस्मिंस्तद्ग्रथनात्तदवलम्बीभूत्वेत्यर्थः। पक्षे अध्यक्षीभूयेति यावत्। चतुराननो हि तल्लोकवासिनां सालोक्यादिमुक्तिभाजामीज्य इति प्रसिद्धमेव। अतः सद्वृत्तमण्डले सद्वृत्तयोः सुवर्तुलयोः स्तनयोर्यन्मण्डलं तस्मिन्नित्यर्थः। जात्यभिप्रायेणैव मण्डलमित्येकवचनं, पक्षे सद्वृत्तानां सनकादियोगीन्द्राणां यन्मण्डलं चक्रवालं तत्रेत्यर्थः। स्थितं मुक्ताहारत्वेनावस्थितमित्यर्थः। पक्षे पूज्यत्वेनावस्थायीति यावत्। तथा यद्यपि हिरण्यगर्भता हिरण्यानां तन्मयानां मणीनां यो गर्भस्तदन्तर्भागस्तस्य भावस्तथा। सुवर्णमण्यन्तर्वर्तितेत्यर्थः। पक्षे 'हिरण्यगर्भो लोकेशः स्वयंभूश्चतुराननः' इति कोशाच्चतुर्मुखतेति यावत्। प्राप्ता लब्धा तथापि तु ब्रह्मता नो लब्धेत्यनुकर्षादिकं विधायान्वयः। तस्माद्गुणत्यागं विना तावदद्वैतात्मत्वं नैवोपलभ्यत इति सएव कार्य इति तात्पर्यम्। इह पूर्वार्धेन विधात्रा सह सूचिताप्युपमा तृतीयपादेन वाच्यतां नीता च। तदङ्गं च शब्दशक्तिमूलानुरणनलक्षणोऽयं द्वितीयोऽर्थ इति लक्षणसंगतिः। यथावा काव्यप्रकाशे—'जनस्थाने भ्रान्तं कनकमृगतृष्णान्धितधिया वचो वैदेहीति प्रतिपदमुदश्रु प्रलपितम्। कृता लङ्काभर्तुर्वदनपरिपाटीषु घटना मयाप्तं रामत्वं कुशलवसुता न त्वधिगता' इति॥ २४॥ **अस्या इति**। अक्षरार्थस्तु स्फुट एव। अत्रार्थशक्तिमूलं राधायास्तारुण्येऽपि अलिवत्कृष्णस्तावच्चपलत्वेनास्यामनासक्त एवेति तं प्रबोधयितुं त्वं गच्छेति राधासख्या दूत्या ज्ञाप्यत इति व्यज्यमानं वस्तु भ्रमरमालतीवृत्तान्ताध्यारोपेण तदङ्गतयैव स्थितम्। तथाहि पूर्वोदाहृते भेदाष्टके तावत् व्यङ्ग्यार्थयोरेवाङ्गाङ्गीभावः, अस्मिन्भेदयुगे तु वाच्यर्थव्यङ्ग्यार्थयोरप्यसाविति ज्ञेयम्। यथावा काव्यप्रकाश एव—'आगत्य संप्रति वियोगविसंकुलाङ्गीमम्भोजिनीं क्वचिदपि क्षपितत्रियामः। एतां प्रसादयति पश्य शनैः प्रभाते तन्वङ्गि पादपतनेन सहस्ररश्मिः' इति॥ २५॥ एवं तददोऽगूढमित्यादि प्राचीनोक्तेरित्यत्र काव्यप्रकाशकारिकाभिहितं गौणव्यङ्ग्यस्याष्टविधत्वं प्रतिज्ञाय तत्रागूढापराङ्गयोर्भेदान्प्रपञ्च्याधुना वाच्यसिद्ध्यङ्गाख्यतद्भेदस्य क्रमागतत्वात्तत्स्वरूपं विवृण्वंस्तद्भेदयुगं सलक्षणं संक्षिपति—**नर्ते इति**। यस्य ऋते विना वाच्यस्य शक्यार्थस्य सिद्धिरन्वयोपपत्तिर्न भवति तद्वाच्यसिद्ध्यङ्गमस्तीत्यन्वयः। तस्माद्वाच्यसिद्धिनियतपूर्ववृत्तित्वं वाच्यसिद्ध्यङ्गत्वमिति तल्लक्षणं

**श्रुत्यन्तमपि संप्राप्य मलिनात्मैव लौल्यतः ।**
**मनः पश्याङ्गनापाङ्गस्त्वं चाप्यञ्जनरञ्जनात् ॥ २७ ॥**

फलितम् । ननु भवत्वेवं तल्लक्षणं तथापि तद्वैविध्य केन भेदेनेत्यत आह—**इदमित्युत्तरार्धेन** । इदं वाच्यसिद्ध्यङ्गं गौणव्यङ्ग्यम् । **एकेति** । एकश्च अन्यः वाच्यार्थ वक्तुः सकाशाद्भिन्नश्चेत्येकान्यौ तौ च तौ वक्तारौ चेति तथा ताभ्यामुक्ते उच्चारिते ये पदे तयोर्गच्छतस्ते तथा तयोर्भावस्तेन या भित्तयेत्यर्थः। अयं भावः—उक्तलक्षणं वाच्यसिद्ध्यङ्गं हि क्वचिद्यो वाच्यार्थस्य वक्ता स एव तत्सिद्धिहेतुभूतव्यङ्ग्यार्थघटकपदस्यापि वक्ता भवतीति तत्रेदमेकवक्तृकपदवाच्याङ्गसंज्ञकं भवति । क्वचित्तु वाच्यार्थवक्तुः सकाशादन्य एव कश्चिद्व्यङ्ग्यार्थघटकपदवक्ता भवतीति तत्रेदमन्यवक्तृकपदवाच्याङ्गसंज्ञकं च भवतीत्येवं धर्मद्वैविध्यात्तस्य द्विविधत्वं बोध्यमिति । एवमेवोक्तं काव्यप्रदीपे—वाच्यसिद्ध्यङ्गं द्विधा, एककर्तृकपदवाच्यगमन्यकर्तृकपदवाच्यगं चेति ॥ २६ ॥ तत्राद्यमुदाहरति—**श्रुत्यन्तमपीति** । इदं हि मुमुक्षोरेव संस्कारवशात्कामिनीनयनान्तासक्तं स्वचेतःप्रत्येव सोपालम्भं वचः । हे मनः, अङ्गनापाङ्गः कान्तादृगन्तः, त्वं च श्रुत्यन्तमपि कर्णान्तिकप्रदेशमपि, पक्षे वेदान्तशास्त्रमपि संप्राप्य सम्यक्, पुंवशीकरणनैपुण्यपूर्वकं लब्ध्वेत्यर्थः । पक्षे साधनचतुष्टयपूर्वकं श्रवणमननादिभिरुपेत्येति यावत् । लौल्यतः 'लोलश्चलसतृष्णयोः' इति कोशाच्चाञ्चल्यात्सतृष्णत्वाच्चेति क्रमात् पक्षद्वयेऽपि बोध्यम् । तथा **अञ्जनेति** । अञ्जनं कज्जलं तेन रञ्जनं रङ्गपूरणं तस्मात्, पक्षे अञ्जनवत्काष्र्ण्यात्तमोरूपमज्ञानं तेन रञ्जनं तत्कल्पितशब्दादिविषयेषु परितोषणं तस्मादित्यर्थः । अविद्यामूलकविषयपारवश्यादपीति यावत् । मलिनात्मैव असितरूप एवास्तीति त्वं पश्येति योजना । पक्षे रजस्तमःकलुषितस्वरूपमेवासीति त्वमेव पश्येति प्राग्वत् । इदमत्राकूतम्—रे मनः, त्वं यदि सौन्दर्यातिशयमारोप्य कान्ताकटाक्षे लुभ्यसि तर्हि मया त्वद्रोधसहस्रेऽपि साधिते त्वं कदाचिन्मां वञ्चयित्वा स्वाभिमतं यास्यस्येवातोऽहमेव त्वां तदवलोकनेऽनुमोदयामि परंतु यदि त्वत्तस्तत्र गुणाधिक्यं स्यात्तदा चक्षुर्व्यवधानमपि तृणीकृत्य तन्निरीक्षणाय यतितव्यमेव तत्तृक्तरीत्या नैव पश्यामोऽतस्त्वमात्मानमेव तथानुरागेणानिशं पश्य । यदत्र न चक्षुर्व्यवधानमपीत्युपालम्भध्वननाद्वेदान्तपरिशीलनेऽपि कज्जलरञ्जिते रक्तमांसमये तरुणीदृगन्तेऽद्य यदि तेऽनुरागस्तर्हि धिगस्तु त्वां विषयासक्तमविद्याग्रस्तमनुपमरजस्तमोविक्षिप्तं च । तस्मात्सर्वदा सावधानीभूय सर्वथा यावद्वैतरागत्यागोऽपि संपाद्यः किं पुनः कनककामिन्यादिविषयः स त्वयेति । अत्र श्रुतिपदे वेदः, लोलपदे सतृष्णत्वं, अञ्जनपदे अज्ञानं, रञ्जनपदे परितोषणं चेति श्रुत्यादिशब्दार्था व्यङ्ग्यास्ते च वर्ण्यधर्मैक्यकथनलक्षणस्य वाच्यस्यैव तुल्ययोगितालंकारस्य सिद्धेरङ्गम् । यथावा काव्यप्रदीपकारस्य—'तादृग्भूतरसप्रसादकतकक्षोदाम्बुधारायिता जीयासुः कविरत्नशाण भवतस्तास्ता वचोभङ्गयः । अर्थाश्रि-

**शैवानामपि हास्माकं कथं स्मरशरव्यथा ।**
**इति भक्तगिरा गौरीपतिः पुलकितोऽवतात् ॥ २८ ॥**
**तदस्फुटं विदग्धानामपि यन्न लघु स्फुटम् ।**
**एकधैवेदमाबोध्यं गूढव्यङ्ग्यापराभिधम् ॥ २९ ॥**
**मनःसत्वे तु विक्षेपस्तदसत्वे लयो ध्रुवम् ।**
**तत्सत्वासत्वनिर्मुक्तं मनः शंभोऽस्तु मे सदा ॥ ३० ॥**

ग्रहिणः पुरातनतरान्सद्यो नवान्कुर्वती याभिः कल्पमहौषधीभिरगदंकारायते भारती' इति । अत्र रसप्रसाद इत्यत्र जलप्रसादरूपोऽर्थो व्यङ्ग्यः, सच वाच्यायाः कतकक्षोदाम्बुधारोपमाया अङ्गमिति । अत्र वाच्यव्यङ्ग्यार्थघटकपदयोरेक एव वक्तेत्याद्योदाहरणत्वं ज्ञेयम् ॥ २७ ॥ द्वितीयमुदाहरति—**शैवानामपीति** । पद्योजना तु विस्पष्टैव । पूर्वार्धे व्यथेत्युत्तरमस्तीति तथोत्तरार्धे अवतादित्यस्य प्राक्त्वां मां जगद्धेत्यध्याहारमात्रं कर्तव्यम् । अवतात् रक्षत्वित्यर्थः । अत्र शैवेति स्मरारेस्तव सेवकानां त्वच्छत्रुकृता पीडा त्वयैव परिहरणीयेति । अपीति यतः सा पीडा वर्तत एवातः सुतरामिदमनुचितमेव परमेश्वरस्य भवत इति । हा इति अनुक्रोशश्चेत्यादिव्यज्यते । तच्चोत्तरार्धाभिहितार्थस्याङ्गं, नोचेद्गौरीपतावुक्त-पुलकितत्वानुपपत्तेः । नचास्य वाच्याङ्गत्वम् । निरुक्तव्यङ्ग्यैर्विना प्रकृतवाच्यव-पुषोऽप्यलाभात् तत्र तु आश्रयीभूयेत्यत्र गुणादिपदद्योतितशान्त्याद्यर्थव्यक्तिं विनापि निरुक्तचतुराननोपमायास्तथा अस्याः संफुल्लेत्यत्र मधुपमालतीवृत्तान्तस्य राधाकृष्णकथां विनापि सिद्धेश्च । अत्र व्यञ्जकपदवक्तुर्भक्ताद्वाचकपदवक्ता कश्चिदाशीःप्रदाताऽन्य एवेत्यस्य द्वितीयोदाहरणत्वं युक्तमेवेति । यथावा काव्य-प्रकाशे—'गच्छाम्यच्युत दर्शनेन भवतः किं प्रीतिरुत्पद्यते किंचैवं विजनस्थयोर्ह-तजनः संभावयत्यन्यथा । इत्यामन्त्रणभङ्गिसूचितवृथावस्थानखेदालसामाश्लि-ष्यन्पुलकोत्कराञ्चिततनुं गोपीं हरिः पातु वः' इति ॥ २८ ॥ अथ क्रमप्राप्त-मस्फुटं स्पष्टयति—**तदिति** । विदग्धानामपि सहृदयानामपीत्यर्थः । लघु शीघ्रम् । किमस्य प्राग्वज्ज्ञानालं नेत्याह—**एकधैवेति** । आबोध्यं सूरिभिर्वि-ज्ञेयमित्यर्थः । तस्य संज्ञान्तरमप्याह—**गूढेति** ॥ २९ ॥ तदुदाहरति—**मनः-सत्व इति** । मनसो हृदयाभिधस्य अन्तःकरणस्य यत्सत्वं विद्यमानत्वं तस्मि-न्सतीत्यर्थः । विक्षेपः जाग्रदादिद्वैतावभासो भवतीत्यर्थः । तर्हि निरुक्तविक्षे-पोपशमार्थं तदसत्वमेव संपाद्यमिति चेत्तत्रापि दोषं विशदयति—**तदसत्व इति** । लयो निद्रा । तदुक्तं गौडपादीये—'लीयते हि सुषुप्तौ तन्निगृहीतं न लीयते' इति । तस्माद्धेतोः सत्वासत्वेति सत्वासत्वाभ्यां निर्वचनानर्हत्वात्त-न्निर्मुक्तं नाम मिथ्यैव मे मनः शंभो, त्वत्प्रसादेन सर्वदास्तु निरन्तरं ममैव बोधः स्फुरत्वित्यर्थः । यद्वा असंप्रज्ञातसमाध्यवसरेऽपि मनसो ब्रह्मैकाकारत्वेन सत्वादि-शून्यत्वं घटत एवेति तदवस्थमेवाखण्डं भवत्विति । अत्रैवंविधव्यङ्ग्यार्थस्य

**शक्यव्यङ्ग्यार्थयोर्यत्र प्राधान्यं संशयाविलम् ।**
**तदेकधैव संदिग्धप्राधान्यमवबुध्यताम् ॥ ३१ ॥**
**माधवं तिर्यगीक्षन्त्या राधया फुल्लमल्लिका ।**
**न्यधायि निजधम्मिल्ले पाणिपल्लवरागिणी ॥ ३२ ॥**
**जयदेवास्तु संदेहे व्यङ्ग्ययोरिदमूचिरे ।**
**किं दुर्जनानवेक्ष्यैव सर्पाः पातालमाविशन् ॥ ३३ ॥**

---

बुधानामपि झटिति दुर्बोधादुक्तलक्षणत्व बोध्यम् । यथावा चन्द्रालोके—'अस्फुट स्तनयोरत्र कोकसादृश्यवन्मतम् । कुङ्कुमाक्तं स्तनद्वन्द्वं मानसं मम गाहते' इति । मानससरोवगाहस्य कोकधर्मत्वादत्र तत्सादृश्यं व्यज्यमानमपि गूढमेवेति ॥ ३० ॥ ततः संदिग्धप्राधान्यं लक्षयति—**शक्येति** । संशयाविलं संशयग्रस्तमितियावत् ॥ ३१ ॥ तदुदाहरति—**माधवमिति** । माधवं लक्ष्मीरमणं नतु कृष्णम् । एतेनाचिन्त्यसौन्दर्यादिगुणमण्डितत्वं द्योत्यते । तिर्यक् कटाक्षेणेत्यर्थः । अनेन गूढानुरागः सूचितः । परकीयात्वेन लोकापवादभीतिश्च । ईक्षन्त्या पश्यन्त्या एतादृश्या राधया फुल्लमल्लिकाविकसितं मल्लिकाकुसुमं नतु तत्कलिकापि । एवंच प्रमोदातिशयो ध्वनितः । **निजेति** । 'धम्मिल्लः संयताः कचाः' इत्यमरान्निजनिबद्धचिकुरनिकुरम्ब इत्यर्थः । न्यधायि गुम्फितत्वेन स्थापितेति यावत् । अतएव तात्कालिकीं तां वर्णयन्विशिनष्टि—**पाणीति** । पाणिपल्लवस्य करकिसलयस्य रागोऽरुणिमा यस्यां सा तथा । एतेन तदानीं तत्र विचित्रशोभावत्त्वं व्यज्यते । अत्र लक्ष्मीपतिं कटाक्षेण वीक्ष्य स्वीये निबद्धकचनिचये प्रोन्मीलितस्य करतलरागारक्तस्य मल्लिकाप्रसूनस्य राधिकाकर्तृकावतंसनवर्णनरूपवाच्यार्थस्यैव प्राधान्यमुताय ज्योत्स्नयाढ्यमल्लिकानिकुञ्जे भो श्रीकृष्णाहं त्वां विपरीतरतेन तोषयिष्यामीति सङ्केतादिसूचनलक्षणस्य धम्मिल्लनिष्ठकृष्णत्वादिना मल्लिकायां शुक्लत्वादिना तस्यास्तदुपरि निधानेन तत्र पाणीत्यादिहेतुद्योतनेन च व्यङ्ग्यार्थस्य वा मुख्यत्वमित्युभयत्रापि साधकबाधकयोरभावात्संदेहः ॥ ३२ ॥ निरुक्तसंदिग्धप्राधान्ये मतान्तरमाह—**जयदेवा इति** । आदरार्थं बहुवचनम् । लक्षणवैलक्षण्यार्थं तुशब्दः । व्यङ्ग्ययोः व्यङ्ग्यार्थयोरेव संदेहे प्राधान्यसंशये सति इदं संदिग्धप्राधान्याभिधं गौणव्यङ्ग्यभेदमूचिरे चन्द्रालोके प्रतिपादयामासुरिति योजना । तद्यथा—'संदिग्धं यदि संदेहो दैर्घ्योत्पलयोरिव । संप्राप्ते नयने तस्याः श्रवणोत्तंसभूमिकाम्' । टीकाप्यस्य राकागमाख्या । दैर्घ्यादि चोत्पलं चेति द्वन्द्वः । उत्पलपदेनोत्पलसादृश्यम् । तेन श्रवणोत्तंसभूमिकां गते इत्यनेन दैर्घ्योत्पलसादृश्ययोः कस्य प्राधान्येन व्यङ्ग्यत्वमिति संदेह इत्यर्थं इति । तदुदाहरति—**किमिति** । अत्र दुर्जनेष्वनृतवादित्वादिना सर्पापेक्षयापि द्विजिह्वत्वाधिक्यलक्षणं व्यङ्ग्यं प्रधानमुत निरपराधं परापकारित्वलक्षणं तत्प्रधानमिति द्वयोर्व्यङ्ग्यार्थयोरेव संदेहाल्लक्षणसमन्वयः ॥ ३३ ॥

**यत्रैतयोः सम ज्यैष्ठ्यं तुल्यप्राधान्यमस्ति तत्।**
**काक्वाक्षिप्तं तु यद्व्यङ्ग्यं तत्तथा यदसुन्दरम्॥ ३४॥**
**दृङ्मीनां बालशैवालां भ्रूवीचिं स्तनचक्रकाम्।**
**के पुंमृगा न धावन्ति तरुण्याख्यतरङ्गिणीम्॥ ३५॥**
**नत्वेकान्ते वनान्तेऽहं शान्तः संचिन्तये चितिम्।**
**क्षिप रे मार नाराचान्कान्ताभ्रूचापकुञ्चितान्॥ ३६॥**

एवं गौणव्यङ्ग्यभेदपञ्चकं प्रपञ्च्येदानीं तुल्यप्राधान्यादितद्भेदत्रयं संक्षेपेण लक्षयति—**यत्रेत्यादिना।** एतयोः शक्यव्यङ्ग्यार्थयोः। ज्यैष्ठ्य प्राधान्यं काक्वेति यत् व्यङ्ग्यं काक्वाक्षिप्तं नाम काक्वन्यथानुपपत्तिसिद्धमेव तत् तथा नाम काक्वाक्षिप्तसंज्ञं भवति। तु पुनः यत् व्यङ्ग्यं असुन्दरं वाच्यात् अचमत्कारि तदपि तथा नाम असुन्दरसंज्ञं भवतीत्यन्वयः॥ ३४॥ त्रितयमपि क्रमेणोदाहरति—**दृङ्मीना**मित्यादित्रिभिः। दृशावेव मीनौ यस्यां सा तथा ताम्। तथा **बालेति।** बाला एव शैवालं यस्यामित्यादिप्राग्वत्। एवं भ्रूवीचि भ्रुवावेव वीची लहर्यौ यस्याम्। किंच स्तनेति स्तनावेव चक्रौ चक्रवाकौ यस्याम्। स्फुटमन्यत्। अत्र तरुण्यां नदीरूपत्वोक्त्या पुंसु मृगरूपत्वोक्त्या च तां प्रति तत्कर्तृकधावनरूपवाच्यार्थस्य तथा मृगरूपकान्यथापत्तिसिद्धेन तरुण्यां मृगजलनदीवन्मिथ्यात्वेन किंशब्दाक्षिप्तेन तदधावनशीलधन्यत्वेन च प्रेक्षावद्भिः सर्वथा तदनुरागस्त्याज्य एवेति व्यङ्ग्यार्थस्य च चमत्कारजनकत्वसाम्यात्तुल्यप्राधान्यत्व बोध्यम्। यथावा चन्द्रालोके—'तुल्यप्राधान्यमिन्दुत्वमिव वाच्येन साम्यभृत्। कान्ते त्वदाननरुचा म्लानिमेति सरोरुहम्' इति॥ ३५॥ **नत्विति।** अहं साधकः शान्तः सन् एकान्ते निर्जने। एतेन विक्षेपहेत्वभावः सूचितः। ईदृशेऽपि वनान्ते नत्वन्तःपुरे। एवंच वैराग्यातिशयो द्योतितः। तत्रापि चितिं ब्रह्म नतु युवतिम्। अनेन विवेकवैपुल्यं व्यज्यते। नतु संचिन्तये। काक्वा न सम्यगपरोक्षानुभूतिपूर्वकं चिन्तनशब्दितध्यानाख्यवृत्त्येकताननताविपर्याकरोमि किम्। अपितु करोम्येव तथेत्यर्थः। अतः रे इति तुच्छतावद्योति सबोधनं मार, 'मदनो मन्मथो मारः' इत्यमरात्रे कामेत्यर्थः। यद्वा मारयति कामुकान्विनाशयतीति तथा नतु मदन इतियावत्। एतेन कामिदारणनैपुण्यं ध्वन्यते। नाराचान् इन्दीवरादिपुष्पमयांस्त्वच्छरानित्यर्थः। क्षिप मोचयेति योजना। ननु तूष्णी त्यक्ता बाणाः किं करिष्यन्तीत्यतस्तान्विशिनष्टि—**कान्तेति।** कान्ता रमणी तस्याः भ्रूरेव चापस्तेन कुञ्चिताः आकर्णमाकृष्टास्तान्। कामिनीकटाक्षलक्षणानिति यावत्। तस्मादुक्तलक्षणे मयि निरुक्तस्मरसायकाः किं करिष्यन्तीति भावः। अत्र चितिं विचिन्तयाम्येवेति व्यङ्ग्यं काक्वाक्षिप्तं बोध्यम्॥ ३६॥

**गुरुपादनखोद्योतैर्जाड्यं चिन्तामणौ गतम् ।**
**तदङ्गुल्येकसर्वस्वः स्वर्द्रुमः कल्पपादपः ॥ ३७ ॥**
**भेदास्त्वेतस्य विज्ञेया अप्यन्ये ध्वनिभेदवत् ।**
**विना स्वकविनेत्युक्तिवस्तुनालंकृतिध्वनीन् ॥ ३८ ॥**

**गुरुपादेति** । गुरुपादनखानां उद्योतैः 'प्रकाशोद्योत आतपः' इत्यमरात्तीव्रप्रकाशैरित्यर्थः । जाड्यं जडत्वं, पक्षे 'शिशिरो जडः' इत्यमराच्छैत्यमिति यावत् । तथा स्वर्द्रुमः यतः **तदिति** । तयोः गुरुपादयोः अङ्गुलयः एकं केवलं सर्वस्वं किसलयत्वेन परमधनं यस्य स तथा गुरुचरणाङ्गुलिमात्रनिजनिधान इत्यर्थः । अत एव **कल्पेति** । संकल्पितदानदक्षोऽस्तीत्यर्थः । यद्वा कल्पस्य महासमर्थस्य श्रीगुरोः पादौ पाति स्वदारुपादुकाद्वारा रक्षतीति तथा बभूवेत्यध्याहृत्य योज्यम् । अत्र पूर्वार्धे गुरुपादयोर्नखावलेरज्ञाननाशकत्वं चिन्तामणितोऽप्यधिकं चिन्तितदातृत्वं च तथोत्तरार्धे मृदुत्वसुरभित्वारुणत्वादि च तदङ्गुलीषु तथा तत्सेवकानामप्यन्याभिलषितदानदक्षत्वादि च यद्व्यङ्ग्यं तदुक्तवाच्यार्थादसुन्दरमेव ततोऽधिकचमत्काराजनकत्वादिति लक्षणसंगतिः । ननु प्रागगूढाख्यगौणव्यङ्ग्यस्य वाच्यचमत्कृत्याख्यस्यैवं लक्षणस्य काव्यभेदस्यास्मिन्नेव रत्ने सप्तमश्लोके निरुक्तत्वादस्य त्वसुन्दरमिति नाममात्रेणैव भेदात्पौनरुक्त्यापत्तिरितिचेन्न । तस्यैतस्य च सामान्येनैक्यावभासेऽपि सूक्ष्मविचारे भूरितरवैलक्षण्यात् । तथाहि वाच्येति सुन्दर इत्यादितल्लक्षकवाक्ये व्यङ्ग्याद्वाच्यातिसुन्दरत्वं वाच्यचमत्कृतित्वमिति तल्लक्षणं बोधितम् । इह तु यदसुन्दरमित्येतल्लक्षकवाक्ये वाच्यादचमत्कारिव्यङ्ग्यत्वमसुन्दरत्वमित्येतल्लक्षणमावेदितमिति कथं नानयोः स्वरूपभेदः । यथा लोके शौक्ल्यादधिकस्निग्धरसत्वं घृतत्वमथ स्निग्धरसादनधिकशुक्लत्वं नवनीतत्वमिति लक्षणभेदेन तयोर्भेदस्ततस्तदास्वादभेदश्च सुप्रसिद्धस्तद्वत्प्रकृतेऽपि न तौ दण्डखण्डिताविति । तस्माद्वाच्यचमत्कृतौ व्यङ्ग्यार्थापेक्षया वाच्यार्थस्यैवाधिकचमत्कारकारित्वमसुन्दरे तु व्यङ्ग्यार्थवाच्यार्थयोरुभयोरपि चमत्कारजनकत्वसाम्यमिति सर्वमवदातम् ॥ ३७ ॥ एवं प्रतिज्ञानुरोधेन गौणव्यङ्ग्याख्यस्योत्तमकाव्यस्य संक्षेपः सलक्षणं सोदाहरणं भेदान्प्रपञ्च्य ध्वन्याख्योत्तमोत्तमकाव्यभेदवदस्यापि शक्त्यादिमूलान्भेदानूह्यत्वेन विदधत्तत्र प्रतिप्रसवमप्याह—

—**भेदास्त्विति** । निरुक्तभेदविलक्षणभेदान्तरकथनार्थस्तुशब्दः । अपिः समुच्चये । एतस्य निरुक्तगौणव्यङ्ग्यस्य अन्येऽपि शक्त्यादिमूला भेदाः ध्वनिभेदवत् प्रागुक्तोत्तमोत्तमकाव्याख्यध्वनिविभेदसममित्यर्थः । विज्ञेयाः स्वयमूह्यत्वेन बोद्धव्या इति संबन्धः । ननु किं यावन्तो ध्वनिभेदास्तावन्तोऽप्यस्य ते सन्ति नेत्याह—**विनेति** । कविश्च तत्कल्पितनेता चेति कविनेतारौ तयोर्ये उक्ती काव्यकर्तृतदूहितनायकवचने इति यावत् । स्वतः स्वभावात्तथा कविनेत्रुक्तिभ्यां च सिद्धं यद्वस्तु कथाजातं तेनेत्यर्थः । जात्यभिप्रायमेकवचनम् ।

**अलंकारस्य रसवन्मुख्यत्वादुक्तद्ध्वनौ।**
**न गौणव्यङ्ग्यता वाच्यवस्तुनस्तदभावतः॥ ३९॥**
**अलंकृत्या त्वलंकारध्वनौ सास्त्येव यत्तदा।**
**वाच्यस्योत्कटता योगो गौणं व्यङ्ग्यप्रयोजकः॥ ४०॥**
**यद्येवं तर्हि वाच्येन रसेनालंकृतेर्ध्वनौ।**
**तत्वं स्यादिति चेन्नास्य नित्यव्यङ्ग्यत्वनिर्णयात्॥ ४१॥**

---

**अलंकृतीति**। अलंकारध्वनीन्विना अन्येऽपि भेदा विज्ञेया इति पूर्वेणान्वयः। तदुक्तं ध्वनिकृता—'व्यज्यते वस्तुमात्रेण यदालंकृतयस्तदा। ध्रुवं ध्वन्यङ्गता तासां काव्यवृत्तेस्तदाश्रयात्'। इति। ध्वन्यङ्गता ध्वनिव्यवहारहेतुता तासां निरुक्तालंकृतीनां काव्यवृत्तेः काव्यजीवनस्य तदाश्रयात्। 'रसालंकारमुख्यत्व-भेदेनेदं भवेद्द्विधा' इत्यादिप्रथमोक्तरीत्या अलंकारावलम्बित्वादित्यर्थः॥ ३८॥ ननूक्तप्रतिप्रसवे को हेतुस्तत्राह—**अलंकारस्येति**। रसालंकारेत्याद्युक्तपद्धत्या अलंकारस्य रसवन्मुख्यत्वात्प्रधानत्वाद्धेतोरुक्तद्ध्वनौ निरुक्तवस्तुनालंकारध्वनौ गौणव्यङ्ग्यता न भवतीति योजना। नचैवं तर्हि वस्तुनोऽप्यस्तु मुख्यत्व-मिति वाच्यम्। वस्तुमात्रापेक्षया अलंकारस्य चारुत्वनियमादिति काव्यप्रदी-पोक्तेस्तथानुभवाच्चेत्याह—**वाच्येति**। वाच्यं यद्वस्तु तस्येत्यर्थः। तदभावतः मुख्यत्वाभावाच्च उक्तद्ध्वनौ न गौणव्यङ्ग्यतेति हेत्वन्तरमपि दार्ढ्यार्थं पूर्व-त्रैव बोध्यम्। अयमाशयः—वस्तुनालंकारध्वनिः गौणव्यङ्ग्यत्वाभाववान् रसस्येवालंकारस्याप्याह्लादकत्वेन मुख्यत्वात्। उभयामुख्यीभूतलोककथाभि-धवस्तुभिन्नत्वाच्च रसध्वनिवदिति प्रयोगः पर्यवस्यति। प्रतिबन्दीकृतवस्तु-नश्चारुत्वनियमाभावस्योक्त्या तन्मोचनेनेति॥ ३९॥ ननु भवत्वेवं वस्तु-नालंकारध्वनने गौणव्यङ्ग्यत्वाभावस्तथाप्यलंकारेणैव यद्ध्वनने तु किं गौण-व्यङ्ग्यता उत ध्वनित्वमेव। नाद्यः। तथात्वे वस्तुनालंकारध्वनावपि विशेषा-भावात्तदापत्तेः। नान्त्यः। प्रतिज्ञाभङ्गप्रसङ्गादिति चेदाद्यमङ्गीकृत्य द्वितीयं परि-हरति—**अलंकृत्या त्विति**। तुशब्दः पुनरर्थे। अलंकृत्या अलंकारध्वनौ सा गौणव्यङ्ग्यता अस्त्येव। एवकारः पूर्वान्वयी। तेन गौणव्यङ्ग्यतैवास्ति नतु ध्वनित्वमित्यर्थः। तत्र हेतुः। **यदित्यादिना**। यद्यस्मात्तदा तस्मिन्नव-सरे। **गौणेति**। गुणीभूतव्यङ्ग्यत्वापादकः वाच्यस्य शक्यस्यालंकारस्य। **उत्कटेति**। मुख्यत्वयोगः निरुक्तरीत्या व्यङ्ग्यालंकारापेक्षया वाच्यालंकारस्य अधिकचमत्कारित्वेन प्राधान्यसंभवोऽस्त्येवेत्यनुकृष्यान्वयः॥ ४०॥ ननु भव-त्वेवमलंकारेणालंकारध्वनौ व्यवस्था तथापि रसेनालंकारध्वनौ तु किं गौणव्य-ङ्ग्यत्वमाहोस्वित् ध्वनित्वम्। अन्त्ये प्रतिज्ञाभङ्गः। आद्ये यथावस्त्वपेक्षया अलंकारस्य मुख्यत्वात्तेन तद्ध्वनौ न गौणव्यङ्ग्यता किंतु ध्वनित्वमेवेत्यधुनै-वोपपादितं तद्वद्रसापेक्षयापि तन्मुख्यत्वं केन वार्यते। बाढमितिचेत्पुनस्ताद-

**तदेवं सगुणीभूतव्यङ्ग्यैरित्यादिना तथा ।**
**सालंकारैरिति प्राचां वचसेदमनन्तधा ॥ ४२ ॥**
**भवत्वेवं तदानन्त्यं तथाप्युक्तं तु यद्रसे ।**
**व्यङ्ग्यतैव नतु क्वापि शक्यत्वमिह पृच्छ्यते ॥ ४३ ॥**
**प्रत्यक्षाद्यक्षपादेष्टान्यतमं मानमत्र ते ।**
**अर्थापत्त्यादिभाट्टेष्टान्यतरद्वेति भण्यताम् ॥ ४४ ॥**

---

वस्थ्यमेवेत्याशयेन शङ्कते—**यद्येवमिति** । वस्तुनः अमुख्यत्वादलंकारस्य मुख्यत्वाद्वस्तुना अलंकारध्वनौ न गौणव्यङ्ग्यत्वं किंतु ध्वनित्वमेवेत्येवं यदि नियम्यते तर्हि वाच्येन शक्तिवृत्तिगम्येन रसेन अलंकृतेर्ध्वनौ तत्त्वं ध्वनित्वं स्यादिति शङ्काग्रन्थार्थः । तत्र समाधत्ते – **इतिचेन्नेति** । इतिचेदिति पदद्वयं निरुक्तशङ्कानुवादार्थम् । कुतो नेदं वाच्यमित्यत्र हेतुः—**अस्येत्यादिना** । अस्य रसस्य । यदि रसस्य वाच्यत्वं यदि वा अलंकारादमुख्यत्वं स्याचेद्घटेतेयमाशङ्कापि । तदेव नास्तीति कुड्यचित्रन्यायान्नैतत्प्रश्नस्यापि संभव इति भावः । उक्तं हि काव्यप्रकाशे 'तस्य नित्यव्यङ्ग्यत्वम्' रसादिलक्षणस्त्वर्थः स्वप्नेऽपि न वाच्यः' इति । विस्तरस्तु काव्यप्रदीपादौ बोध्यः ॥ ४१ ॥ उपसंहरति—**तदेवमिति** । इदं गौणव्यङ्ग्यम्—'सगुणीभूतव्यङ्ग्यैः सालंकारैः सह प्रभेदैः स्वैः । संकरसंसृष्टिभ्यां पुनरप्युद्योतते बहुधा' इति काव्यप्रकाश एव ध्वनिकृतः, तथा 'सालंकारैर्ध्वनेस्तैश्च योगः संसृष्टिसंकरैः' इति तत्कारिकाकारस्य च वचनेन तदानन्त्यं ज्ञेयमिति ॥४२॥ अथोक्तानन्त्यमङ्गीकृत्य प्रागुक्तं रसस्य व्यञ्जनावृत्तिमात्रगम्यत्वमनूद्य तत्र प्रष्टुं प्रतिजानीते—**भवत्विति** । एवं निरुक्तरीत्या तदानन्त्यं तस्य गौणव्यङ्ग्याख्योत्तमकाव्यस्य यत् आनन्त्यं असंख्यातभेदभिन्नत्वं तद्भवत्विति संबन्धः । नैवात्र वयं विवदामह इति भावः । तथापि एवं तदानन्त्यसत्वेऽपि तु पुनः यदुक्तं रसे व्यङ्ग्यतैव नतु क्वापि शक्यत्वमिति इह अस्मिन्नंशे पृच्छयते मया प्रश्नः क्रियत इति योजना । व्यञ्जनामात्रगम्यत्वं अस्य नित्यव्यङ्ग्यत्वनिर्णयादित्युक्तं यत्तदिह विचारे क्रियमाणे नैव संभवतीति भावः ॥ ४३ ॥ तत्र किं मानमिति पृच्छंस्तार्किकसमतप्रत्यक्षादिप्रमाणचतुष्टयवादे मीमांसकसंमततत्सहितार्थापत्त्यादिप्रमाणषट्कवादे च विकल्पयति—**प्रत्यक्षादीति** । अक्षपादो गौतमः तस्य यानीष्टानि प्रत्यक्षं आदि येषां तानि प्रत्यक्षादीनि तानि च तान्यक्षपादेष्टानि गौतमसंमतानि 'प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि' इति तत्सूत्रान्मानानि तेषां मध्ये अन्यतममित्यर्थः । अत्र निरुक्तविषये ते तव मानं संमतं किमस्ति, यद्वा अर्थापत्त्यादीति । आदिपदाद्योग्यानुपलब्धिः । अनयोर्मध्ये अन्यतरद्वा अत्र ते मानं संमतं किंचिदस्तीति भण्यतामुच्यतामित्यन्वयः

**तत्रार्थे संप्रयुक्ते यद्विज्ञानं तनुते स्फुटम् ।**
**किं तद्रूपेन्द्रियेणासौ प्रत्यक्षाख्येन बुध्यते ॥ ४५ ॥**
**किंवा सव्याप्तिके व्याप्ये पक्षधर्मतया मतिः ।**
**या तल्लक्षणकेनानुमानेनैवावधार्यते ॥ ४६ ॥**
**तुल्ये तत्पदवाच्यत्वरूपवाक्यार्थधीवपुः ।**
**उपमानं यदेतस्मादेव निर्णीयतेऽथवा ॥ ४७ ॥**

---

॥ ४४ ॥ तत्र क्रमेण प्रत्यक्षादिषण्णामपि प्रमाणानां प्रत्येक लक्षणानि संक्षिप्य व्याचक्षाणः सन्नेकैकत्र पृच्छति—**तत्रेत्यादि**सार्धषड्भिः। यत् संप्रयुक्ते संनिकृष्टे अर्थे घटादिपदार्थे स्फुटम्। अयं घट इत्याकारकमसंदिग्धमित्यर्थः। विज्ञानं विशिष्टमबाधितं ज्ञानं तनुते विस्तारयति। दृढमुत्पादयतीत्यर्थः । तद्रूपेण निरुक्तलक्षणेन। प्रत्यक्षेति प्रत्यक्षमित्याख्या यस्य तेन। प्रत्यक्षसंज्ञकेनेत्यर्थः। इन्द्रियेण चक्षुराद्यन्यतमेन करणेनेति यावत्। किमिति प्रश्ने । असौ रसस्य व्यञ्जनैकगम्यता बुध्यते। त्वया ज्ञायत इत्यर्थः । किं प्रत्यक्षमत्र प्रमाणं वदसीत्याशयः। एवंचात्र संनिकृष्टेऽर्थे स्फुटविज्ञानजनकेन्द्रियत्वं प्रत्यक्षप्रमाणलक्षणमपि सिद्धम्। तत्रापीन्द्रियत्वमेव प्रत्यक्षप्रमाणस्य सामान्यलक्षणं, शिष्टं त्विन्द्रियस्यैवेति बोध्यम्। अत्रस्फुटेति संशयस्य, वीति भ्रमस्य च व्युदासः । नच सुखादिप्रत्यक्षज्ञानकरणे मनस्यव्याप्तिः। तत्रापि संनिकृष्ट एव तत्रोक्तज्ञानजनकत्वात् । उक्तं चैवमेव शास्त्रदीपिकायां पार्थसारथिमिश्रैः—'यत्संप्रयुक्तेऽर्थे विशदावभासं विज्ञानं जनयति तदिन्द्रियमित्युच्यते' इति ॥४५॥ यद्वा निरुक्ते रसस्य व्यञ्जनावृत्तिमात्रगम्यत्वे किमनुमानं तव प्रमाणं संमतमिति पृच्छति—**किंवेति** । सव्याप्तिके हेतुतावच्छेदकावच्छिन्नाधिकरणे निरवच्छिन्नवृत्तिकाभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्य व्याप्तिरित्यभियुक्तोक्तलक्षणेन साहचर्यनियमरूपव्याप्त्याख्यज्ञानेन सहितं तत्रेत्यर्थः । यस्य व्याप्तिज्ञानं प्राक्संपन्नं भवतीति यावत् । एतादृशे व्याप्ये हेतावित्यर्थः । व्यतिरेके तु साध्याभाव इति यावत्। यथाहुः प्राञ्चः—'अन्वये साधनं व्याप्यं साध्यं व्यापकमिष्यते। साध्याभावोऽन्यथा व्याप्यो व्यापकः साधनात्ययः' इति। **पक्षेति**। पक्षस्य सिषाधयिषाविरहविशिष्टसिद्ध्यभावावच्छिन्नस्य यो धर्मस्तस्य भावस्तथा तयेत्यर्थः।या मतिः वह्निव्याप्यधूमवानयं पर्वत इति ज्ञानमिति यावत्। **तदिति**।तत् उक्तज्ञानरूपं लक्षणं यस्य तत्तथा तेनेत्यर्थः । अनुमानेनैव प्रागुक्ता रसे व्यञ्जनामात्रगम्यता किं वा अवधार्यते। किमिति प्रश्ने। वेति विकल्पे। निर्णीयत इति योजना। भो आलंकारिक, भवतेति शेषः। एतेनात्रानुमानस्य व्याप्त्यवच्छिन्नविषयकपक्षधर्मत्वकरणकज्ञानत्वरूपं लक्षणमप्युक्तं भवति । तथाचोक्तं न्यायसिद्धान्तमञ्जर्याम्—'व्याप्तिविशिष्टपक्षधर्मताघटकलघुपदार्थज्ञानमनुमानम्' इति । अधिकं त्वाकरादेव बोध्यं विस्तरभिया नेह प्रपञ्च्यते ॥ ४६ ॥ यद्वा किमुपमानमत्र ते प्रमाणमिति

**यस्य वाक्यस्य तात्पर्यविषयो नैव बाध्यते ।**
**मानान्तरेण संसर्गस्तच्छब्दस्तेन वा वद ॥ ४८ ॥**
**उपपाद्यस्य संबोधादुपपादककल्पनम् ।**
**यार्थापत्तिरपि प्रौढं मानं भाट्टे तयाथवा ॥ ४९ ॥**
**विज्ञानकरणोत्पन्नो भावानुभवमात्रके ।**
**यद्योग्यानुपलब्ध्याख्यमसाधारणकारणम् ॥ ५० ॥**

पृच्छति—**तुल्ये इति** । तुल्ये गवादिसदृशे गवयादावित्यर्थः । **तत्पदेति** । तच्च तत्पदं चेति तथा गवयादिपदमिति यावत् । तस्य यो वाच्यो गवयाद्यर्थस्तस्य भावस्तद्रूपो यो वाक्यार्थः गोसदृशो गवय इत्यादिवाक्यार्थस्तस्य या धीरनुभवः स एव वपुः स्वरूपं यस्य तत्तथेत्यर्थः । एतादृशं यदुपमानं एतस्मादेव अथवा निर्णीयते किमिति संबन्धः । शेषं तु प्राग्वदेव । एवं चात्र सदृशे तत्पदवाच्यतारूपवाक्यार्थज्ञानमुपमानमिति तल्लक्षणमपि सूचितं भवति । उक्तं हि जानकीनाथमिश्रैः—'सादृश्यविशिष्टे तत्पदवाच्यत्वरूपवाक्यार्थानुभव उपमानम्' इति ॥ ४७ ॥ अथवा किं शब्दाख्यप्रमाणेन, रसे निरुक्तव्यञ्जनामात्रगम्यत्वं सिद्ध्यतीति पृच्छति—**यस्येति** । यस्य वाक्यस्य आकाङ्क्षाद्यन्वितपदकदम्बस्य तात्पर्यविषयः तात्पर्यस्य उपक्रमादिषड्विधलिङ्गावधृतवक्त्राशयस्य विषयः प्रतिपाद्य इत्यर्थः। एतादृशः संसर्गः प्रागुक्तः संसर्गादिर्वाक्यार्थः मानान्तरेण नैव बाध्यते तद्वाक्यं शब्दः भवति तेनेत्यादिप्राग्वदेव योजना । तथा चेह शब्दाख्यप्रमाणस्य प्रमाणान्तराबाध्यतात्पर्यविषयीभूतसंसर्गवाक्यत्वमिति लक्षणमपि सूचितं भवति । यदाहुर्वेदान्तपरिभाषाकाराः—'यस्य वाक्यस्य तात्पर्यविषयीभूतसंसर्गो मानान्तरेण न बाध्यते तद्वाक्यं प्रमाणम्।इति ॥ ४८ ॥ एवं तार्किकादिसंमतप्रमाणचतुष्टये प्रत्येकं विकल्पेन पृष्ट्वाधुना भाट्टसंमते ततोऽप्यधिके अर्थापत्त्यनुपलब्ध्याख्यप्रमाणद्वये क्रमेण तद्वदेव पृच्छति—**उपपाद्यस्ये**त्यादिसार्धद्वाभ्याम्। उपपाद्यस्य दिवाऽभुञ्जानदेवदत्तपीनत्वस्येत्यर्थः । संबोधात्प्रमात्मकज्ञानात् । उपपादकेति । उपपादकं निरुक्तदेवदत्तरात्रिभोजनं तस्य यत्कल्पनं तर्कविषयीकरणमितियावत् । इति या अर्थापत्तिरपि भाट्टे मते प्रौढम् । 'अन्यथानुपपत्तिश्चेदस्ति वस्तुप्रसाधिका । पिनष्टयदृष्टिवैमत्यं सैव सर्वबलाधिका' इति श्रीमत्सुरेश्वराचार्यचरणारुणनलिनवार्तिकवचनादद्वैतिनामपि व्यवहारे भट्टनयादतिबलवत्तरमित्यर्थः । मानं प्रमाणं भवति तयाथवेत्यादि यथापूर्वमेव । अत्र पूर्वार्धे तु तल्लक्षणं बोध्यम् । अपिनोक्तमते निरुक्ततार्किकादीष्टप्रत्यक्षादिप्रमाणचतुष्टयस्यापि समुच्चयः सूचितः । अत एवाहुः पार्थसारथिमिश्राः शास्त्रदीपिकायाम्—'अर्थापत्तिरपि दृष्टः श्रुतो वा अर्थोऽन्यथा नोपपद्यत इत्यर्थकल्पना' इति ॥ ४९ ॥ **विज्ञानेति** । विशिष्टं प्रमात्मकं यत् ज्ञानं तस्य करणं व्यापारवदसाधारणं कारणं तेन उत्पन्नं प्रत्यक्षादिप्रमाणेनैव जन्यं एतादृशं यदभावानुभवमात्रं

**षष्ठं प्रमाणमेतेन किंवा साध्यवसीयते।**
**नाद्योऽन्तरिन्द्रियस्यात्र सत्वेऽपि स्वरसे पुनः॥ ५१॥**
**अन्यत्राभावतस्तस्य न तृतीयो समत्वतः।**
**श्रुतिस्मृत्यादिरूपस्यत स्याभावान्न तुर्यकः॥ ५२॥**

अभावस्य योऽनुभवः स एव अभावानुभवमात्रं तत्तथा तत्रेत्यर्थः। यदित्युत्तरार्धं तु निगदव्याख्यातम् ॥ ५० ॥ **षष्ठमिति** । सारसस्य व्यञ्जनावृत्तिमात्रगम्यता किंवा अध्यवसीयते निश्चीयते किंत्वयेति वदेत्यन्वयः। इह विज्ञानेत्यादिश्लोकेन योग्यानुपलब्धिलक्षणमपि संक्षिप्तम् । तथाहि येनेन्द्रियेण यद्वस्तु गृह्यते तेनेन्द्रियेण तद्गतसामान्यं तत्समवायस्तदभावश्च गृह्यत इति तर्ककौमुदीवचनाद्घटादिप्रमाकरणजन्याभावानुभूतिसाधकतमत्वं योग्यानुपलब्ध्याख्यषष्ठप्रमाणस्य लक्षणमिति । उक्तंहि वेदान्तपरिभाषाकृद्भिः—'ज्ञानकरणजन्याभावानुभवासाधारणं कारणमनुपलब्धिप्रमाणम्' इति । ननु तार्किकैरर्थापत्तियोग्यानुपलब्धिप्रमाणयोः पृथक्प्रामाण्य नैवोररीक्रियते व्यतिरेकानुमानाभावग्राहकेन्द्रियाख्यप्रत्यक्षयोरेव तदन्तर्भावात् लाघवाच्च युक्तमेवैतदतो नैतदुपन्यासोपयोग इति चेत्सत्यम् । शास्त्रदीपिकादावुक्तान्तर्भावखण्डनपूर्वकमनयोः पृथक्प्रामाण्यप्रतिपादनादद्वैतिनामपि व्यवहारे भट्टनयानुसरणेनास्य संनतत्वाच्च । फलमुखगौरवस्य दोषानाधायकत्वान्नोक्तशङ्कावकाशः। विस्तरस्तु तत्रैवानुसंधेयः। ग्रन्थवैपुल्यादिहोपरतमिति दिक् । एवं प्रमाणप्रश्नविकल्पं विधाय तत्र प्रत्यक्षपक्षं निराचष्टे—**नाद्यइत्याद्य**प्रिमश्लोकचरणान्तत्रिपाद्या । तत्र हेतुमाह—**अन्तरिन्द्रियस्ये**त्यादिशेषेण। अत्र रसस्य व्यञ्जनामात्रगम्यत्वलक्षणे विषये स्वरसे स्वनिष्ठशृङ्गारादावित्यर्थः। पुनः अन्तरिन्द्रियस्य स्वमनस इत्यर्थः। सत्वेऽपि विद्यमानत्वे सत्यपीतियावत् ॥ ५१ ॥ अन्यत्र स्वेतराधिकरणोत्पन्नशृङ्गारादावित्यर्थः। तस्य निरुक्तस्वान्तःकरणरूपप्रत्यक्षस्येति यावत्। अभावतः अविद्यमानत्वादित्यर्थः। धर्मिणो रसस्य यदि प्रत्यक्षगम्यत्वं स्यात्तदा तन्निष्ठो यो व्यञ्जनावृत्तिमात्रगम्यत्वलक्षणो धर्मस्तस्यापि सत्यां सामग्र्यां तद्वाच्यम् । आदौ तदेव न रसत्वावच्छेदेन संभवतीति किमु वाच्यं निरुक्ततद्धर्मप्रत्यक्षत्व इति कुड्यचित्रन्यायान्न प्रत्यक्षपक्षः संपद्यत इति भावः । एवमुपमानपक्षमपि प्रत्याचष्टे—**न तृतीय इति** द्वितीयचरणेन । तृतीयः रसस्य व्यञ्जनामात्रगम्यत्व उपमानं प्रमाणमिति पक्ष इत्यर्थः । तत्र हेतुः—**असमत्वत इति** । पूर्वोक्तलक्षणे रसे सादृश्याभावादित्यर्थः । नहि सादृश्यं विनोपमानं प्रसरतीति नायमपि पक्षः साधीयानित्याशयः । एवमेव शब्दपक्षमपि प्रक्षिपति । श्रुतीत्याद्यवशिष्टार्धेन । **तुर्यकः** उक्तेऽर्थे शब्दः प्रमाणमिति चतुर्थः पक्ष इत्यर्थः । तस्य शब्दस्येति

न षष्ठो भावनिष्ठत्वात्तस्य तच्छेषतां गतौ ।
द्वितीयपञ्चमौ तत्राप्याद्योऽर्हत्वाद्विविच्यते ॥ ५३ ॥
अनुमित्याख्यबोधस्य करणं ह्यनुमानकम् ।
सा परामर्शजा यस्मात्तस्माज्ज्ञेयं स एव तत् ॥ ५४ ॥
व्याप्तिमत्पक्षधर्मत्वज्ञानलक्षण एव सः ।
यथाद्रिरग्निना व्याप्यधूमवानिति धीः खलु ॥ ५५ ॥

यावत् । स्पष्टमेवान्यत् ॥ ५२ ॥ एवमनुपलब्धिप्रमाणाख्य षष्ठमपि पक्ष निरस्यावशिष्टावनुमानार्थापत्त्याख्यौ द्वितीयपञ्चमपक्षावनूय तयोर्मध्येऽनुमानस्य प्रायः सर्वत्रोपयोगात्तद्विवेचनं प्रतिजानीते—**न षष्ठ इति** । योग्यानुपलब्धिरुक्तेऽर्थे प्रमाणमिति षष्ठोऽपि पक्षो नैव संभवतीत्यर्थः । तत्र हेतुमाह—**अभावनिष्ठत्वादिति** । उक्तानुपलब्ध्याख्यप्रमाणस्य अभावमात्रविषयत्वादुक्तरसे व्यञ्जनामात्रगम्यत्वधर्मत्वस्य तु भावत्वान्न तेन तत्सिद्धिरित्यर्थः । नच रसे व्यञ्जनेतरगम्यत्वाभाव एवास्तु प्रमेयस्तथाच कुतो नोक्तप्रमाणगम्यत्वं तस्येति वाच्यम् । रसस्यैवाद्याप्यसिद्धत्वात् । तत्सिद्धिं विना कुतस्तत्रोक्ताभावः सिध्येत् । नच मन्मते व्यञ्जनावृत्तिमात्रगम्यत्वेन रसः सिद्ध एव । तथा च किमिति तत्र नोक्ताभावो निरुक्तप्रमाणप्रमेयः स्यादित्यपि शङ्क्यम् । तस्यैव परीक्ष्यमाणत्वात् । उक्तरससिद्धौ तत्रोक्तरीत्या निरुक्ताभावसिद्धिः, निरुक्ताभावसिद्धौ व्यञ्जनामात्रगम्यत्वेनोक्तरससिद्धिरित्यन्योन्याश्रयाच्च । तस्मान्न किंचिदेतत् । तत् तस्मात् शेषतां गतौ पक्षचतुष्टयबाधेनावशिष्टावित्यर्थः । आद्यः अनुमानपक्षो द्वितीयाख्यः अर्हत्वात्सर्वत्र भूयुपयुक्तत्वेन प्रत्यक्षवदेव मान्यत्वादिति यावत् । शिष्टं स्पष्टमेव ॥ ५३ ॥ तत्रादावनुमानं लक्षयति—**अनुमित्याख्येति** । एवं चानुमितिकरणत्वमेव तल्लक्षणम् । हिरवधारणे । बोधपदं स्पष्टत्वार्थम् । भवत्वेवं तल्लक्षणं तथापि किं तत्स्वरूपमित्याशङ्कां शमयति —**सेति द्वितीयार्धेन** । स्थाणुर्वा पुरुषो वेति संशयोत्तरं करचरणादिपरामर्शजन्ये पुरुषोऽयमिति प्रत्यक्षे यद्यपि परामर्शजन्यत्वमस्त्येव तथापि सिषाधयिषयेत्यादिनानुपदमेवाग्रे पक्षतालक्षणसंक्षेपेणोक्तपरामर्शजन्यत्वविवरणोक्त्या तत्परिहारस्य करिष्यमाणत्वान्न काप्यनुपपत्तिः । स एव परामर्श एव तत् अनुमानं ज्ञेयमिति योजना ॥ ५४ ॥ नन्वेवमपि न तत्स्वरूपनिर्णय इत्यत आह—**व्याप्तीति** । तथाच व्याप्तिवैशिष्ट्ये सति पक्षधर्मताज्ञानत्वं परामर्शस्य लक्षणमपि संक्षिप्तम् । पाषाणमयोऽयं पर्वत इति । ज्ञानेऽतिव्याप्तिवारणाय सत्यन्तम् । यद्वा अगृहीतव्याप्तिकस्यापि धूमज्ञानमात्रेणानुमित्यापत्तिरतस्तत् । तावति कृते वह्निव्याप्यं धूमत्वमिति ज्ञाने व्यभिचारस्ततः समुदितमेवोपादेयम् । उक्तं हि मणिकारैः—'तत्र व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यं ज्ञानमनुमितिः' इत्यनुमितिलक्षणे । न चैतावता परामर्शलक्षणे किमागतमिति वाच्यम् । व्याप्तीत्यादिज्ञानान्तग्रन्थेन तस्यैव लक्षितत्वात् । नोचेत्त

**हेतुतुल्याधिकरणात्यन्ताभावाविरोधिनः।**
**सामानाधिकरण्यं यत्साध्यस्य व्याप्तिरत्र सा ॥ ५६ ॥**
**प्रतियोगसमाधारयत्समाधारनश्मितेः।**
**न यत्र प्रतियोगित्वं तेन तत्तस्य साथवा ॥ ५७ ॥**

---

त्करणमनुमानं तच्च लिङ्गपरामर्शो नतु परामृश्यमानं लिङ्गमिति वक्ष्यत इति तदुत्तरग्रन्थासाङ्गत्यापत्तेः । तस्माद्युक्तमेवोक्त तल्लक्षणमिति संक्षेपः । तदुदाहरति—**यथेति**। अत्राग्निना व्याप्येतिव्याप्तिमत्त्वं शेषेण पक्षधर्मताज्ञानत्वमिति लक्षणसमन्वयः ॥ ५५ ॥ ननु कासौ व्याप्तिरिति चेन्मतभेदेन तल्लक्षणद्वयं संक्षिपति—**हेतुतुल्येत्यादिद्वाभ्याम्** । हेतुना धूमादिना तुल्यं समानं अधिकरणं आश्रयो यस्य । यत्र पर्वतादौ धूमादिहेतुर्वर्तते तत्रैव यस्तिष्ठतीत्यर्थः। एतादृशो योऽत्यन्ताभावः पटादिप्रतियोगिकोऽत्यन्ताभावस्तस्य यदविरोध्यप्रतियोगि तस्येत्यर्थः । एवंलक्षणस्य साध्यस्य वह्न्यादेः यत्सामानाधिकरण्यं धूमादिहेतुना साहचर्यं सा अत्र लोके शास्त्रे च व्याप्तिरिति संबन्धः । अस्ति हि वह्निमान्धूमादित्यादौ धूमसमानाधिकरणस्य घटाद्यत्यन्ताभावस्याप्रतियोगित्वं वह्न्याख्यसाध्ये तस्य च धूमेन सामानाधिकरण्यमपि नतु धूमवान्वह्नेरित्यत्र वह्निरूपहेतुना समानाधिकरणः यः अयःपिण्डे धूमात्यन्ताभावस्तदविरोधित्वं धूमाख्यसाध्येऽस्तीति लक्षणसंगतिः । तस्माद्धेतुसमानाधिकरणात्यन्ताभावाविरोधि साध्यसामानाधिकरण्यं व्याप्तिरिति तल्लक्षणं फलितम् । तदेवोक्तं दीपिकाकृता—'हेतुसमानाधिकरणात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यं व्याप्तिः' इति । विश्वनाथपञ्चाननोऽपि 'अथवा हेतुमन्निष्ठविरहाप्रतियोगिना । साध्येन हेतोरैकाधिकरण्यं व्याप्तिरुच्यते' इति कारिकाव्याख्याने मुक्तावलीग्रन्थे—तथा च हेत्वधिकरणवृत्तिर्योऽभावस्तदप्रतियोगिना साध्येन सह हेतोः सामानाधिकरण्यं व्याप्तिरित्याह । अधिकमत्राकरादिभ्य एव बोध्यं प्रकृतानुपयोगाद्गौरवभयाच्च नेह प्रपञ्च्यत इति दिक् ॥ ५६ ॥ **प्रतियोगीति** । प्रतियोगिपदार्थोऽत्र वक्ष्यमाणाभावनिरूपको घटादिरेव । तदसमाधारस्तद्व्यधिकरणो यो भावस्तथा यत्समाधारश्चेति विरहविशेषणमेवोभयमपि यो धूमादिहेतुस्तत्समाधारस्तत्समानाधिकरणो यो नञ्मितिर्नञा मितिः प्रमा यस्य तस्य अत्यन्ताभावस्य संबन्धीत्यर्थः । एतादृशं प्रतियोगित्वं यत्र वह्न्यादौ साध्ये न भवति तेन वह्न्यादिसाध्येन समं तस्य धूमादेर्हेतोः तत् सामानाधिकरण्यमिति प्रकृतप्राप्तत्वात् सा व्याप्तिरस्त्वित्यन्वयः । अथवेत्यनेन पूर्वलक्षणे कपिसंयोगी एतद्वृक्षत्वादित्यादावव्याप्तिलक्षणोऽस्वरसः सूचितः । इदमेव सिद्धान्तलक्षणमुक्तं चिन्तामणौ—'प्रतियोग्यसमानाधिकरणयत्समानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकावच्छिन्नं यन्न भवति तेन समं तस्य सामानाधिकरण्यं व्याप्तिः' इति । वह्निमान्धूमादित्यादौ लक्षणसमन्वयस्तु सुप्रसिद्ध एव, परिष्कारविस्तरादिकं तु गादाधर्यां तत्तट्टी

सिषाधयिषया हीनः सिद्ध्यभावोऽस्ति यत्र सः ।
पक्षस्तद्वृत्तिताज्ञानाज्जायतेऽनुमितिर्ध्रुवम् ॥ ५८ ॥
पर्वतो वह्निमान्धूमवत्त्वाद्यद्वन्महानसः ।
इत्यादिस्तत्प्रयोगः स्यात्परार्थमनुमा यदि ॥ ५९ ॥
हेत्वाभासस्त्रिधैव स्याद्व्याप्तः प्रथमस्ततः ।
अतिव्याप्तो द्वितीयः स्यादसंभूतस्तृतीयकः ॥ ६० ॥

कादौ सूरिसहस्रैरप्यतिविततं रोमन्थितमेवेत्युपरम्यते ॥ ५७ ॥ भवत्वेवं व्याप्तिस्तत्रापि पक्षताज्ञानं विना व्याप्तिविशिष्टपक्षधर्मज्ञानरूपः पूर्वोक्तपरामर्शः कथं बुद्धिमधिरुहेदतस्तां लक्षयति—सिषाधयिषयेत्यादिना सिद्ध्यभाव इत्यन्तेन । सिसाधयिषा साधितुमिच्छा तयेत्यर्थः । हीन इति । हीनः शून्यः यः सिद्धेरभावः स तथेत्यर्थः । तस्मात्साधनेच्छाभावपूर्वकसिद्ध्यभावः पक्षतेति तल्लक्षणं सिद्धम् । एवंच वह्नेः प्रत्यक्षसत्त्वेऽपीच्छया तदनुमानं भवत्येव । उक्तलक्षणपक्षताविशिष्टपक्षत्वस्य तत्र सत्त्वात् । तथाहि यथा उत्तेजकाभावविशिष्टमण्यभाव एव दाहहेतुः न केवलमण्यभावः । कुतः मणिसत्त्वेऽप्युत्तेजकसत्त्वे दाहदर्शनात्तद्वत्साधनेच्छाभावविशिष्टसिद्ध्यभाव एव पक्षता नतु सिद्ध्यभावमात्रं, कुतः सिद्धिसत्त्वेऽप्यनुमित्सायामनुतिदर्शनादिति । नन्वेवं तर्हि सिषाधयिषाभाव एवास्तु पक्षतेत्यपि शङ्क्यम् । तथात्वे प्रत्यक्षेऽपि वह्नावनुमित्सां विनाप्यनुमित्यापत्तेः । तर्ह्यस्तु सिसाधयिषैव पक्षतेति चेन्न । तां विनापि घनगर्जितेन मेघानुमानदर्शनात् । ततः साध्वेवेदं तल्लक्षणमिति संक्षेपः । एवं पक्षतालक्षणमभिधाय तद्वत्त्वं पक्षत्वमित्याह—अस्तीत्यादिना पक्ष इत्यन्तेन । अत एवोक्तपक्षवृत्तिनिरुक्तव्याप्तिविशिष्टधर्मज्ञानलक्षणपरामर्शादेवानुमितिर्भवतीत्युपसंहरति—तद्वृत्तितेत्यादिशेषेण ॥ ५८ ॥ ननु स्वार्थे यद्यनुमानं चेत्तदेवं परामर्शमात्रेण स्यादेव ततोऽनुमित्यात्मकबोधोदयः, परंतु यदि परो बोध्यश्चेत्तदा कस्तत्रोपाय इत्यतस्तत्प्रयोगं कथयति—पर्वत इति । यदि परार्थं परस्मै इति परार्थं अन्यप्रबोधनार्थमिति यावत् । अनुमा अनुमानं क्रियत इति शेषः । तर्हीति पूर्वं योजयित्वा तदग्रे पर्वत इत्यादिपादत्रयं यथाश्रुतमेव योजनीयम् । आदिपदादन्येऽप्येवंजातीयकाः श्रीकृष्णः परमेश्वरः महामायानियन्तृत्वाद्ब्रह्मादिव्यामोहकत्वाच्चेत्यादिसदनुमानप्रयोगाः । उपनयाद्यवयवान्तरस्य त्वर्थसिद्धत्वात्रैव तत्कथनापेक्षापि ॥ ५९ ॥ ननूक्तरूपं सदनुमानमेवेत्यत्र किं प्रमाणमित्याशङ्क्य सद्धेतुत्वमेवेत्यभिसंधाय 'तत्त्वं च निर्दुष्टत्वं दुष्टत्वं तु यादृशपक्षसाध्यहेतौ यावन्तो दोषास्तावदन्यान्यत्वं हेत्वाभासत्वम्' इति मुक्तावल्युक्तदिशा हेत्वाभास एव पर्यवस्यतीति सव्यभिचाराद्यपरनामकानेकान्तादिभेदेन सामान्यतः पञ्चधा प्रसिद्धानपि तानेतेष्वेवान्तर्भूतानाकलय्य लाघवादव्याप्तादिभेदेन त्रिविधानेव तान्भङ्ग्यन्तरेणाभिधत्ते—हेत्वाभास इति । तत्र अव्याप्तत्वं व्याप्तिविधुरत्वम् ।

**संक्षेपेणायमनुमाप्रकारस्तु निरूपितः ।**
**व्यङ्ग्यतैव रसेऽनेन कथं त इति चेच्छृणु ॥ ६१ ॥**

अतिव्याप्तत्वं व्यभिचारित्वम् । असंभूतत्वं संभवाभावशालित्वम् । तथाचैतेष्वेवानेकान्तादीनां सर्वेषामपि हेत्वाभासानां यथायथमन्तर्भावो बोध्यः । तद्यथा पर्वतो वह्निमान्प्रमेयत्वादिति साध्याभाववद्वृत्तिलक्षणस्य साधारणानैकान्तिकस्य अतिव्याप्तेऽन्तर्भावः प्रमेयत्वस्य वह्निमत्त्वहीने जलह्रदे सत्वेन साध्यवदन्यवृत्तित्वरूपव्यभिचारित्वात् । शब्दो नित्यः शब्दत्वादिति सर्वसपक्षव्यावृत्तिपूर्वकपक्षमात्रवृत्तिलक्षणस्य असाधारणस्य तस्य अव्याप्तेऽन्तर्भावः शब्दत्वस्य शब्दमात्रवृत्तित्वेन सपक्षवर्तित्वहीनतया व्याप्तिविधुरत्वात् सर्वमनित्यं प्रमेयत्वादित्यन्वयव्यतिरेकदृष्टान्तरहितत्वलक्षणस्यानुपसंहारिणश्च तस्य तत्रैवान्तर्भावः । प्रमेयत्वे हि सर्वस्यापि पक्षत्वेन अन्वयेन व्यतिरेकेण वा सपक्षताघटकस्य कस्याप्यभावेन व्याप्तिवैधुर्यतादवस्थ्यात् । शब्दो नित्यः कृतकत्वादिति साध्याभावव्याप्यस्य विरुद्धस्यापि तत्रैवान्तर्भावः । कृतकत्वस्य च साध्याभावेनानित्यत्वेन व्याप्तत्वात्सपक्षराहित्येन व्याप्तिविधुरत्वादेव शब्दो नित्यः श्रावणत्वादिति साध्याभावसाधकत्वहेत्वन्तरवतः सत्प्रतिपक्षस्याप्यत एवात्रैवान्तर्भावः । यदि शब्दो नित्यः पदार्थत्वादिति प्रयोगस्तदा साधारणानैकान्तिकोक्तरीत्या अतिव्याप्तेस्त्वन्तर्भावः । शब्दः अनित्यः कार्यत्वाद्घटवदिति साध्याभावसाधकहेत्वन्तरस्योभयत्रापि सत्वात् गगनारविन्दं सुरभि अरविन्दत्वादित्याश्रयासिद्धस्य कुड्यचित्रन्यायेन संभवाभावशालित्वादसंभूतेऽन्तर्भावः । शब्दो गुणश्चाक्षुषत्वादिति स्वरूपासिद्धस्याप्युक्तहेतोरेव तत्रैवान्तर्भावः । पर्वतो धूमवान् वह्निमत्त्वादित्यस्य सोपाधिकाख्यस्य व्याप्यत्वासिद्धस्यातिव्याप्तेऽन्तर्भावः । उपाधिस्तु साध्यसमानाधिकरणात्यन्ताभावाप्रतियोगित्वरूपसाध्यव्यापकत्वे सति साधनवन्निष्ठात्यन्ताभावप्रतियोगित्वरूपसाधनाव्यापकत्वलक्षण एव । सचेहार्द्रेन्धनसंयोगः वह्निमत्त्वस्य धूमवत्त्वशून्ये अयोगोलके अतिव्याप्तत्वाद्युक्त एवास्य तदन्तर्भावः । उपलक्षणमिदं यावदुपाधिविशेषाणामपि । ते च दीपिकादौ प्रसिद्धा एव । ते च यथायथमव्याप्तादावेवान्तर्भाव्याः ग्रन्थगौरवभियेह नोपन्यस्ताः । वह्निरनुष्णः द्रव्यत्वादिति प्रमाणनिश्चितसाध्याभावत्वरूपस्य बाधितस्यासंभूतेऽन्तर्भावः । यद्यप्यत्र द्रव्यत्वं वर्तत एव तथापि तत्साध्यानुष्णत्वस्य प्रत्यक्षविरोधेनासंभवात् । एवं यद्यन्येऽपि क्वचिद्धेत्वाभासा उपलभ्येरंश्चेत्तेषामपि यथासंभवमत्रैवान्तर्भावो निरुक्तदिशैवोह्यः । नचायमन्तर्भावोऽनुचित एवेति वाच्यम् । लाघवाद्बाधकाभावाच्च । यदि प्राचीनैः सह वैमत्यमेव तदिति । तन्न । तदाशयस्यैवोक्तसरण्या विवृतत्वात् 'युक्तियुक्तं वचो ग्राह्यं बालादपि शुकादपि' इति न्यायाच्च । तस्माद्युक्तमेवोक्तवर्त्मेति सहृदयधुरीणैर्विभावनीयमिति दिक् ॥ ६० ॥ एवमुक्तानुमानप्रकारमुपसंहरति—**संक्षेपेणेति** । स्वल्पग्रन्थेनेत्यर्थः । **अनुमेति** । अनुमायाः अ-

**वस्त्वद्येवाभिधाद्यर्हं रसाद्यन्यत्वतो यथा ।**
**घटादीत्यनुमानेन व्यङ्ग्यतैवात्र सिद्ध्यति ॥ ६२ ॥**
**रसादिरभिधेयः स्यात्पदार्थत्वाद्घटादिवत् ।**
**नेति सत्प्रतिपक्षत्वमस्याव्याप्तत्वमुच्यताम् ॥ ६३ ॥**

---

नुमानस्य प्रकारः प्रसर इत्यर्थः । उक्तरूपेणानुमानाख्यप्रमाणेन प्राङ्निरूपितरसस्य व्यञ्जनावृत्तिमात्रगम्यत्वं कथ सिध्यतीत्याशङ्क्य तत्समाधानप्रबोधनार्थं वादिनमभिमुखीकरोति—**व्यङ्ग्यतैवेति** । ते आलंकारिकस्य तव मते अनेन निरुक्तानुमानाख्यप्रमाणेनेत्यर्थः । कथ रसे शृङ्गारादौ व्यङ्ग्यतैव व्यञ्जनावृत्तिमात्रगम्यत्वमितियावत् । सिद्ध्यतीति शेषः । इति वदसि चेत् शृणिवति संबन्धः । सावधानो भवेति भावः ॥ ६१ ॥ तदेवानुमान स्फुटयति—**वस्त्वाद्येवेति** । आदिपदेनालंकारः । अनेन पक्षः कथितः । **अभिधादीति** । अत्रादिना लक्षणा । एतेन साध्यं बोधितम् । **रसादीति** । अत्र त्वादिपदाद्भावादिसंग्रहः । रसभावादिभिन्नत्वादित्यर्थः । एवंच हेतुः सिद्धः । यथा घटादीतिदृष्टान्तः । अत्र निरुक्तरसे । अयमाशयः- रसोऽलकारो वस्तु चेति त्रिविध एव काव्यार्थः । तत्र वस्त्वलकारयोस्तावच्छक्तिवृत्तिप्रतिपाद्यत्वमपि भवति क्वचिल्लक्षणावृत्तिप्रतिपाद्यत्व व्यञ्जनावृत्तिप्रतिपाद्यत्वं च । रसस्य तु केवल व्यञ्जनावृत्तिप्रतिपाद्यत्वमेव । शक्तिलक्षणयोस्तत्रासामर्थ्यात् । नहि रसपदशक्त्या सामान्यतः शृङ्गारादिपदशक्त्या विशेषतो वा रसोद्बोधः संभवति । रसपदार्थज्ञानेऽपि तत्स्वरूपानुभवानुदयात् । अत एव न लक्षणयापि । सा हि तात्पर्यानुपपत्त्या रसपदार्थं शृङ्गारादिपदार्थमात्र वा बोधयेत् । ननु तत्स्वरूपमनुभावयेत् । व्यञ्जना तु 'गच्छ गच्छसि चेत्कान्त' इत्यादौ रसादिपदशक्त्या विनैव श्रोतुर्मनसि शृङ्गारादिरसमाविर्भाव्य प्रत्यक्षीकरोतीति सर्वानुभवसिद्धमेव । तस्माद्युक्त एवायमुक्तसाध्यसाधकः प्रयोग इति । ननु ब्रह्मणि निरुक्तहेतुसत्त्वात् 'यतो वाचो निवर्तन्ते' इति श्रुतेः साध्याभाववत्त्वाच्च हेतोः साधारण्यमिति चेन्न । सर्वत्राद्वैतशास्त्रे तस्य लक्षणावृत्तिबोध्यतायाः शतशः समुद्घोषितत्वात् । नच वस्त्वादीत्यत्रादिपदेनालंकारवद्रसाद्यपि कुतो न वादिना गृह्येतेति वाच्यम् । एवकारेण रसाद्यन्यत्वत इति हेतुना च तस्य व्यावृत्तत्वात् । अत्रैवं स्फुटः प्रयोगः—वस्त्वलंकारावेव शक्तिलक्षणाव्यञ्जनागम्यौ रसभावतदाभासभावशान्तिभावोदयभावसंधिभावशबलतान्यत्वात् घटादिवदिति । तथा रसाद्यष्टकं व्यञ्जनामात्रगम्यम् रसाद्यष्टकत्वात् व्यतिरेके वस्त्वादिवदिति च ॥ ६२ ॥ तत्र सत्प्रतिपक्षत्वं हेतोराशङ्कते—**रसादिरिति** । अत्र पक्षादि स्पष्टमेव । तत्खण्डनं प्रतिजानीते—**नेतीति** । इति निरुक्तरीत्या अस्य अनुपदमुक्तस्य रसाद्यन्यत्वादिति हेतोः सत्प्रतिपक्षत्वं साध्याभावसाधकहेत्वन्तरवत्त्वलक्षणं पूर्वोक्तरीत्या अव्याप्तत्वं एतन्नामकप्रथमहेत्वाभासत्वं न नैव उच्यत

**सामान्यतो रसादौ तु रसादिपदतोऽथवा।**
**विशेषतोऽपि शृङ्गारप्रमुखैरपि नामभिः ॥ ६४ ॥**
**भूयोऽप्यभिहिते तस्य विभावादिप्रमां विना।**
**न चमत्कारकारित्वं तत्सत्वे तदृतेऽपि तत् ॥ ६५ ॥**
**अन्वयव्यतिरेकाभ्यामेवमाबालपण्डितम्।**
**स्फुटमेवास्ति तेनास्य कथं सत्प्रतिपक्षता ॥ ६६ ॥**
**एवं सर्वाभिधेयत्ववादस्तार्किकसंमतः।**
**नैव नश्यति नाप्यस्याव्यङ्ग्यत्वमपि सिद्ध्यति ॥ ६७ ॥**

---

भाष्यतामिति योजना ॥ ६३ ॥ ननु कुतो नास्य सत्प्रतिपक्षत्वमिति चेत्किं भवता रसत्वावच्छिन्ने रसादिपदार्थे रसादिपदशक्यत्वं साध्यत उत तदनुभवो दशमस्त्वमसीति वाक्यजन्यदशमानुभववच्छब्दशक्तिमात्रजन्य इति तत्राद्यमङ्गीकृत्य द्वितीयं प्रत्याख्यातुमन्वयव्यतिरेकौ रसादेर्व्यञ्जनामात्रगम्यत्वद्योतकौ युग्मेन वदन्किं सामान्यतो रसादिपदाभिधेयो रसादिराहोस्वित् विशेषतः शृङ्गारादिपदाभिधेयः स इत्याशङ्क्य नोभयमपि संभवतीत्याह—**सामान्यत इत्यादि**। तुशब्दः प्रोक्तशङ्कोपशमार्थः। रसादौ सामान्यतः रसादिपदतः अथवा विशेषतोऽपि शृङ्गारप्रमुखैरपि नामभिः ॥ ६४ ॥ भूयोऽपि वारंवारमपि अभिहिते शक्तिवृत्त्या प्रतिपादिते सति तस्य रसादेः। विभावेति 'व्यक्तः स तैर्विभावाद्यैः स्थायीभावो रसः स्मृतः' इति काव्यप्रकाशकारिकावचनाद्विभावानुभावादीनां यथार्थानुभवं विना चमत्कारकारित्वं तत्स्वरूपानुभवजनकत्वं न नैवास्ति। **तदिति**। उक्तविभावादिप्रमासत्वे तदृतेऽपि उक्तरसाद्यभिधावृत्तिप्रतिपादनं विनापि तत् निरुक्तचमत्कारजनकत्वं वर्तेत इत्यन्वयः। अत्र पादोनयुग्मेनान्वयः शेषेण व्यतिरेकः ॥ ६५ ॥ एवमुक्तान्वयव्यतिरेकाभ्यां सर्वानुभवेनापि रसस्य व्यञ्जनावृत्तिमात्रगम्यत्वात्तद्भिन्नकाव्यार्थयोर्वस्त्वलंकारयोरेवाभिधाद्यर्हत्वाच्च वस्त्वाद्येवाभिधाद्यर्हं रसाद्यन्यत्वत इति हेतोः क्व नाम सत्प्रतिपक्षता स्यादिति निगमयति—**अन्वयेति। आबालेति**। बालाश्च पण्डिताश्च बालपण्डिताः बालपण्डितेभ्यः आ इत्याबालपण्डित बालान्पण्डितांश्चाभिव्याप्येत्यर्थः। एवमित्यत्राप्यनुकर्षणीयम्। तेन एव अन्वयव्यतिरेकाभ्यां आबालपण्डितं एवं रसादेर्व्यङ्ग्यतामात्रत्वं स्फुटमेवास्तीति संबन्धः संपद्यते। तेन रसादेर्व्यङ्ग्यतैकसिद्धिलक्षणेन हेतुनेत्यर्थः। अस्य रसाद्यन्यत्वत इति प्रागुक्तहेतोरिति यावत्। कथ सत्प्रतिपक्षता नैवोक्तहेत्वाभासत्वं घटत इत्यर्थः ॥ ६६ ॥ ननु तर्हि रसादिरभिधेय इत्यादिनोक्तानुमानं किमसदितिचेन्न। रसादित्वावच्छिन्नरसादिपदार्थमात्रस्यैवाभिधेयत्वपरत्वेन तस्योपक्षीणतया रसादिस्वरूपस्य व्यञ्जनामात्रगम्यतायां तस्याविरोधित्वादित्याशयेन तार्किकसंमतं तस्याभिधेयत्वं स्वसंमतं व्यङ्ग्यत्वं चोपस्थापयति—**एवमिति**। एवं निरुक्तरीत्या रसादेः स्वरूपस्य व्यङ्ग्यत्वमात्रे

यद्वा लक्ष्यत्वमद्वैतिमतेऽस्ति ब्रह्मणो यथा ।
तथा व्यञ्जनयैवास्तु रसादेर्नोऽपरोक्षता ॥ ६८ ॥
किंच शक्त्याद्यगम्यत्वादुक्तव्यङ्ग्यधियः कथम् ।
विना व्यञ्जनया सिद्धिरित्यर्थापत्तितोऽपि तत् ॥ ६९ ॥
तदनन्तमपि व्यङ्ग्यमगौणाद्यखिलं त्रिधा ।
रसालंकारवस्त्वाख्यभिदाद्यं वाच्यतासहम् ॥ ७० ॥

---

सिद्धे सतीत्यर्थः । **सर्वेति** । सर्वमभिधेयं प्रमेयत्वादिति केवलान्वयिलिङ्गकमनुमानं तर्कशास्त्रे प्रसिद्धमेवेति भावः । **तार्किकेति** । एतेनाद्वैतिमते ब्रह्मणो लक्ष्यत्वेऽपि न क्षतिरिति द्योतितम् । अस्य रसादेरित्यर्थः ॥ ६७ ॥ तदेवाङ्गीकृत्य ममापि तन्मतमेवेष्टमिति ध्वनयन्नर्थात्तार्किकखण्डनं व्यनक्ति—**यद्वेति** । एतेन तार्किकमते सिद्धान्तित्वाभावलक्षणोऽस्वरसः सूचितः । **लक्ष्यत्वमिति** । भागत्यागलक्षणावृत्त्यैव तत्त्वमस्यादिवाक्यार्थज्ञानगम्यत्वमित्यर्थः । नः अस्माकमालंकारिकाणां मत इति यावत् । स्पष्टमन्यत् ॥ ६८ ॥ एवमनुमानप्रमाणेन रसादेर्व्यंग्यत्वं संसाध्यार्थापत्त्यापि तत्साधयति—**किंचेति** । **उक्तेति** । उक्तमनुमानेन व्यञ्जनावृत्तिमात्रगम्यतया साधितं एतादृशं यद्व्यङ्ग्यं रसाद्यष्टकं तस्य या धीर्ज्ञानं तस्येत्यर्थः । रसादिस्वरूपापरोक्षानुभवस्येति यावत् । व्यञ्जनया विना कथं सिद्धिः स्यात् । कुत इति चेत्तत्राह—**शक्त्यादीति** । शक्तिरभिधावृत्तिः । आदिपदाल्लक्षणा तदुभयागम्यत्वात् शक्तिलक्षणान्यतराविषयत्वादित्यर्थः । इति निरुक्तरूपा या अर्थापत्तिस्ततस्तल्लक्षणप्रमाणेनापि तद्रसादेः व्यञ्जनामात्र गम्यत्वं भवतीति संबन्धः । अत्रोपपाद्यं रसादेर्व्यङ्ग्यत्वं तज्ज्ञानेन यत् तस्य शक्त्याद्यगम्यत्वपूर्वकं व्यंजनावृत्तिगम्यरूपमुपपादकं तस्य कल्पनमस्त्येवेति प्रागुक्तस्योपपाद्यस्य संबोधादुपपादककल्पनमित्यर्थापत्तिलक्षणस्य संगतिर्बोध्या ॥ ६९ ॥ नन्वस्तूक्तप्रमाणवशाद्रसाद्यष्टकस्य व्यञ्जनावृत्त्येकगम्यत्वं तथापि यदि 'उत्तमोत्तमकाव्याख्यो यो ध्वनिः प्रागुदाहृतः । असंख्यातोऽप्यसौ शक्तिलक्षणामूलतो द्विधा' इति प्राक्त्वयैव ध्वन्याख्यस्यसरसत्वेऽपि व्यङ्ग्यैकप्रधानस्योत्तमोत्तमकाव्यस्यानन्त्यमुक्तम् । तथा तदेवं सगुणीभूतव्यङ्ग्यैरित्यादिना तथा सालंकारैरिति प्राचां वचसेदमनन्यथेत्यधुनाऽस्मिन्नपि रत्ने उत्तमकाव्याख्यगौणव्यङ्ग्यस्यापि तथात्वमेवाभिहितं तर्हि तद्बुभुत्सूनां वैमुख्यापत्तिरेव । नह्यनन्ते तस्मिन् कस्यापि जिज्ञासाङ्कुरीभावमप्यर्हति । तस्माद्विफल एव साहित्यशास्त्रप्रणेतॄणां श्रम इत्याशङ्कायां व्यङ्ग्यत्वावच्छिन्नं निखिलमप्युक्तरूपमनूद्य श्रोतृसौकर्यार्थं तस्य रसादिभेदेन त्रैविध्यं विधत्ते—**तदित्यर्धेन** । अगौणं ध्वन्याख्यम् । आदिपदाद्गौणव्यङ्ग्यादेर्ग्रहः । तानेव भेदानभिधत्ते—**रसेत्यादिना** भिदेत्यन्तेन । तत्राप्याद्यस्य रसाख्यव्यङ्ग्यस्य व्यञ्जनावृत्तिमात्रगम्यत्वं द्योतयन्ननभिधेयत्वं विधत्ते-**आद्यमित्यादिशेषेण** ।

**अन्यथान्त्यद्वयं तत्र चित्रमाद्यं न चान्तिमम् ।**
**न च लक्ष्यत्वमेवास्तु रसादावित्यपीर्यताम् ॥ ७१ ॥**
**तात्पर्यानुपपत्त्यैव लक्षणेह विनापि ताम् ।**
**रसानुभवकोटेरप्युक्तत्वादखिलं शिवम् ॥ ७२ ॥**
**गोक्षीराब्धेः शिवगुरुविबुधसहायोऽच्युतः समुद्दध्रे ।**
**पञ्चममगूढमुनिमुखमसुन्दरान्त्याङ्गमश्ववररत्नम् ॥ ७३ ॥**

---

**वाच्यतेति**। वाच्यतां शक्यतां न सहत इति तथा। उपलक्षणमिदं लक्ष्यताया अपि। शक्तिलक्षणान्यतरागम्यमित्यर्थः ॥ ७० ॥ अवशिष्टस्यालंकारादियुग्मस्य तद्वैपरीत्यं विधाय तयोः क्रमेण चित्राचित्राख्यं तान्त्रिकं संज्ञाद्वयं विधत्ते— **अन्यथेत्यर्धेन** । तदुक्तं काव्यप्रकाशे—'संकलनेन पुनरस्य ध्वनेस्त्रयो भेदाः । व्यङ्ग्यस्य त्रिरूपत्वात् । तथाहि—किंचिद्वाच्यतां सहते किंचित्त्वन्यथा । तत्र वाच्यतासहमविचित्रं विचित्रं चेति । अविचित्रं वस्तुमात्रम् । विचित्रं त्वलंकार इति । रसादेर्लक्ष्यत्वमेवास्त्विति दार्ढ्यार्थं पुनराशङ्क्य तत्परिहारं प्रतिजानीते—**नचेति शेषेण** । ईर्यतां कथ्यतामिति यावत् ॥ ७१ ॥ तत्र हेतुं वक्तुं लक्षणायाः कारणं स्मारयति— **तात्पर्येति** । भवतीति शेषः । इह तां विनापि पद्मिनीं पश्य पश्येत्यादौ रसाद्यनुभूतेः शतधोक्तत्वादिति हेतुं तदलक्ष्यत्वेन वदन्नुपसंहरति—**इहेत्यादिशेषेण** ॥ ७२ ॥ **गोक्षीराब्धेरिति** । पूर्वार्धमिदं प्रागुक्तार्थमेव । पञ्चममिति पञ्चमसंख्याकमित्यर्थः । पक्षे मुखं सप्तसंख्याभेदभिन्नमपि मुखत्वसामान्येनेहैकमेवाभिमतम् । तथा चत्वारः पादाश्चेति पञ्चसंख्याकेष्ववयवेषु मा लक्ष्मीः शोभा यस्येति तत्तथा। मुखे हि दर्शनीयत्वशोभासर्वसाधारण्येन पादेषु तु चाञ्चल्यादिलक्षणैव बोध्या । अश्वस्य हि शीघ्रगामित्व एव पूज्यत्वप्रसिद्धेः । **अगूढेति** । अगूढमपरस्याङ्गमित्यादिप्रागुदाहृतकाव्यप्रकाशकारिकोक्तरीत्या अगूढव्यङ्ग्याद्यादिकाकाक्षिप्तां तानि गौणव्यङ्ग्याख्योत्तमकाव्यजातानि मुखानीव मुखानि प्रथमेक्षणीयानि यस्य तदित्यर्थः । पक्षे अगूढानि स्फुटान्येव मुनिसंख्याकानि सप्तसंख्यानि मुखानि वदनानि यस्य तदित्यर्थः । क्षीराब्ध्युत्पन्नस्य सूर्याश्वस्य सप्तमुखत्वं प्रसिद्धमेव । **असुन्दरेति** । असुन्दराख्यं अन्त्यं चरमं अगं अवयवो यस्य तदित्यर्थः । तदुक्तम्—'अगूढमपरस्याङ्गवाच्यसिद्ध्यङ्गमस्फुटम् । संदिग्धतुल्यप्राधान्ये काक्वाक्षिप्तमसुन्दरम्' इति । पक्षे चरमं गुदाख्यमन्त्यम् । एतेन तद्भिन्नावयवेषु तस्यासुन्दरत्वव्युदासः । अश्वेति रूपकमुपमा वात्र ज्ञेया । पक्षे स्फुटमेव ॥ ७३ ॥

इति साहित्यसारे पञ्चमरत्नं संपूर्णम् ॥ ५ ॥

## विवरणम् ।

**गौणव्यङ्ग्यं प्रपञ्च्यैवं तं दोषं वर्णयाम्यहम् ।**
**रतान्तक्लान्तकान्तायाः कान्तवत्स्वोल्लसद्गिरः ॥ १ ॥**
**यस्तिष्ठन्हृदये काव्यमधः पातयति क्षणात् ।**
**भारत्यर्थजुषं दोषं भाषन्ते तं मनीषिणः ॥ २ ॥**

---

पूर्वरत्नेन साकमस्य रत्नस्य सांगत्यं ब्रुवन्नेतद्विषयं कथयितुं प्रतिजानीते—**गौणेति । रतान्तेति ।** सुरतसमाप्तिश्रान्तस्वसीमन्तिन्या इत्यर्थः। **कान्तेति ।** तद्रमणवदिति यावत् । **स्वेति ।** स्वस्य आत्मनः नत्वन्येषाम् । एतेन परदोषोद्घोषणव्युदासः सूचितः । उल्लसन्ती काव्यरूपेण विकसन्ती या गीर्वाक् तस्या इत्यर्थः । एवं पूर्वरत्नोक्तरीत्या गौणव्यङ्ग्य उत्तमकाव्यम् । पक्षे गुणानामनेकत्वात्तत्संबन्ध्यवश्यगोप्यरहस्यम् । तं 'तत्र निर्दोषशब्दार्थ'इत्यादिप्रथमरत्नोक्तकाव्यसामान्यलक्षणोपक्षिप्तमित्यर्थः । पक्षे पूर्वमालिङ्गनवेलायां स्वग्रीवाग्रैवेयकीभूतमित्यर्थः । दोषं वक्ष्यमाणलक्षणं शब्दार्थान्यतरधर्मम् । पक्षे भुजम् । विशदमन्यत् । यथा कश्चिद्विलासी तावत्स्वप्रेयस्याः क्रीडोपरमे तन्मुखाद्यवयवेष्ववकाशवशेन दृष्टिताटस्थ्यसंभवात्तद्गुणबाहुल्येऽपि तत्र यावदवश्यसूच्यं मुख्यतमांशमभिवर्ण्य पुनस्तां रत्यर्थमुद्दीपयितुं तत्पूर्वाङ्गीभूतालिङ्गननिपुणं तद्बाहुं स्तौति तद्वदहं स्वकीयकाव्याकारपरिणतवाण्याः पूर्वप्रकरणे गौणव्यङ्ग्याख्योत्तमकाव्यभेदं प्रपञ्च्य तल्लक्षणे हेयत्वेनोद्दिष्टं दोषमपि परिहारार्थं त्यागार्थं वा वर्णयामीति भावः । स्वोल्लसद्गिर इति पदं निरुक्तकान्ताविशेषणत्वेनापि योज्यम् । तथाच स्वस्मिन्निजप्रेयसि विषये उल्लसन्ती तद्वर्णनं कर्तुं विकसन्ती नतु तत्र प्रवृत्ता गीर्भारती यस्याः । एवंच नायिकाया अपि नायकेऽनुरागातिशयो व्यक्तः । उल्लसत्पदेन तस्यां लज्जासौकुमार्यादिमान्थर्यं ध्वनितम् । ननु काव्यलक्षणोद्देशक्रमानुसारेण तु द्वितीयरत्न एव दोषकथनमुचितं तद्विहाय किमित्यत्र षष्ठप्रकरणे तत्कथनमिति चेत्सत्यम् । यद्यपि त्वदुक्तरीत्या दोषस्य द्वितीयप्रकरण एव कथनौचित्यं तथापि प्रथमं काव्यसामान्यलक्षणं समुपपाद्य, कतिविधं तत्काव्यमित्याकाङ्क्षायां 'रसालंकारमुख्यत्वभेदेनेदं भवेद्द्विधा' इति सरसादिभेदेन सुबोधार्थं साधारण्येन तद्द्वैविध्यमभिधाय, तस्यापि प्रत्येकं ध्वन्यादिभेदात्तथात्वमुक्त्वा तच्चातुर्विध्ये सिद्धे तत्प्रासङ्गिकं द्वितीयरत्नादावुपपाद्य, चतुर्थादौ निरुक्तसरसं प्रतिपाद्य धर्मा रसा इत्याद्युक्तकाव्यगुणषट्कान्तर्गतस्य रसस्यैतेनैवोक्तत्वात्तथालंकारस्यापि अष्टमरत्नादौ वक्ष्यमाणचित्रकाव्यभेदद्वयद्वारैव सिषाधयिषितत्वाच्चावशिष्टधर्मादिगुणचतुष्टयकथनात्प्रागेवात्र देहलीदीपन्यायेन तेन सहैवैतदभावस्य सरसाद्युभयकाव्ययोरप्यपेक्षितत्वाद्युक्तमेवात्र तन्निरूपणमिति दिक् ॥ १ ॥

तमेव सामान्यतो लक्षयति—**यस्तिष्ठन्निति ।** हृदये अन्तःकरणे । पक्षे

**वर्णे पदे च वाक्ये चेत्येवं वाचस्त्रिधास्ति सः ।**
**मौग्ध्ये माने वियोगे च स्वमृगाक्ष्या इव भ्रमः ॥ ३ ॥**
**तत्राद्य एकधा वीररौद्रबीभत्सकैर्विना ।**
**श्रुतिभीतिप्रदो वर्णः कात्स्न्याच्छ्रुतिकटुर्मतः ॥ ४ ॥**

---

वक्षसि । तिष्ठन् स्फुरन्, पक्षे आलिङ्गनविशेषवशादधिवसन्नित्यर्थः । काव्यं निरुक्तलक्षणं गद्यादिप्रबन्धं, पक्षे शुक्रं वीर्यमित्यर्थः । नच काव्यपदेन शुक्रग्रहो लक्षितलक्षणाग्रस्तत्वादनुचित एवेति वाच्यम् । 'मुक्तो दैत्यगुरुः प्रियेण सहसा पश्चात्कृतः सङ्गमः' इत्यादौ कविसमयेऽपि तद्दर्शनात् । क्षणात्तत्कालं अधः पातयति नीचतां नयतीत्यर्थः, पक्षे स्खलयतीति यावत् । **भारतीति** । भारती वाणी रामादिशब्दः, अर्थो जानकीशादिस्तौ जुषति सेवत इति तथा तम् । शब्दार्थान्यतरवर्तमानमित्यर्थः । पक्षे भया स्वकान्त्या रतिरूपं सुरतलक्षणं अर्थं कामाख्यपुरुषार्थं जोषयति स्वनायकं समुद्दीपनात्सेवयतीति तथा तम् । सुरतान्तसमये कञ्चुक्यभावेन स्वगौरतरदीप्तिदर्शनादेव निजनेतुः सद्यः पुनः क्रीडौत्सुक्यापादकमित्यर्थः । तमेव मनीषिणः पण्डिताः दोषं, पक्षे बाहुं भाषन्ते ब्रुवन्तीत्यन्वयः । तस्माच्छब्दार्थान्यतरनिष्ठत्वे सति तदनादरकारणत्वं दोषलक्षणं सिद्धम् । पुरुषदोषे व्यभिचारवारणाय सत्यन्तम् । अत्र काव्यशब्दादेरेव विवक्षितत्वान्न शास्त्रीयदोषादावतिव्याप्तिः । अधिकं तु मदीये शारदोदये ज्ञेयमित्युपरम्यते ॥ २ ॥ एवं शब्दार्थनिष्ठताभेदेन सामान्यतो दोषस्य द्वैविध्येऽपि पुनराद्यस्य वर्णादिगतत्वभिदा त्रिधात्वमुद्दिशति—**वर्ण इति** । वर्णे अकारादौ, पदे सुबन्तादौ, वाक्ये प्रागुक्तलक्षणे तत्समूह इत्यर्थः । सः पूर्वप्रकृतो दोषः । तत्रानुरूपं दृष्टान्तं स्पष्टयति—**मौग्ध्य** इत्युत्तरार्धेन । एतेन वर्णदोषस्य स्वीयहरिणनयनासंबन्धिमौग्ध्यापरनामकाप्रौढत्वे सति तद्भर्तृश्रमवद्वैरस्याधायकत्वं पदादौ तु क्रमेणोत्तरोत्तराधिक्यमिति ध्वनितम् । तन्मौग्ध्ये तद्भ्रमणस्य यावच्छ्रमो भवति तदपेक्षया तन्मानादौ तच्छ्रमाधिक्यादिदर्शनादिति तत्त्वम् ॥ ३ ॥ तत्रापि प्रथमस्य वर्णदोषस्यैकविध्यमभिदधदन्ययोर्बहुविधत्वं ध्वनयति—**तत्रेति** । उक्तदोषत्रय इत्यर्थः । आद्यः पूर्वः । भवत्वेवं तस्य तथात्वं तत्रापि किंनामरूपोऽसावित्यत्राह—**वीरेत्या**दिशेषेण सोदाहरणम् । वीररौद्रबीभत्सकैर्विना एतन्नामकरसैर्विना कात्स्न्यात् सर्वांशत्वेन । **श्रुतीति** । श्रुतिः श्रवणेन्द्रियं, पक्षे वेदः तद्भीतिप्रदः स्वश्रवणोत्तरक्षण एव कार्कश्यात्पराङ्मुखतापादक इत्यर्थः । पक्षे तत्प्रामाण्यास्वीकारेण तद्भ्रंशहेतुरिति यावत् । एतादृशो यो वर्णः अक्षरविशेषः, पक्षे म्लेच्छादिहीनजातिविशेष इत्यर्थः । सः । **श्रुतीति** । श्रुतेः कर्णस्य, पक्षे वेदस्य कटुरिवानादरणीय इति यथार्थनामा मतः प्राचां संमतोऽस्तीति योजना । तस्मात् श्रुतिकटुरिति तन्नाम, तथा वीररौद्रबीभत्सैर्विना सर्वांशत्वेन श्रवणोद्वेगजनकवर्णत्वं श्रुतिकटुत्वमिति तल्लक्षणं च सिद्धम् । तत्र 'त्स्र्याच्छ्रु' इति

वर्णद्वयं तदुदाहरणम् । यदि तु 'श्रुतिभीतिप्रदो वर्णः सर्वः श्रुतिकटुर्मतः' इति विन्यासस्तदा नायं दोषः। तत्राप्युद्वेगजनकत्वमित्युक्ते सर्पादावतिप्रसङ्गवारणाय श्रवणेति। तावति कृते विद्युद्रनावतिव्याप्तिरतो वर्णेति। तथापि तादृक्पददोषे तन्निरासाय सर्वांशत्वेनेति । यद्वा तादृक्पददोषस्यैतेनैव सिद्धिः दुष्टं पदं श्रुतिकट्विति काव्यप्रकाशकारिकात्वे तदभिप्रायिकैव पदैकदेशीभूतवर्णनिष्ठदोषेणैव कलङ्कित्वादिवत्तत्र तद्दुष्टताभिधानात् । अतएव तदुदाहरणे 'अनङ्गमङ्गलगृहापाङ्गभङ्गितरङ्गितैः । आलिङ्गितः स तन्वङ्ग्या कार्तार्थ्यं लभते कदा' इत्यत्र कार्तार्थ्यमिति पदं सर्वांशेन श्रुतिकटु तेन नोदाहृतं किंतु ककारादिभिन्नवर्णांश एव नोचेत् 'श्च्युव्यौम्र्यं मत्तभूपानां सन्तः पश्यन्ति किं मुखम्' इत्यादिवत्सर्वांशश्रुतिकट्वेव पदमुदाहरेत् । नच तथाप्येवंजातीयस्य पदस्य का गतिरिति वाच्यम्। विषसंपृक्तान्नवत्तत्र पददोषत्वभानेऽपि सूक्ष्मदृशा विचार्यमाणे मन्त्रादिना तत्सामर्थ्यनिरासेन तदन्यस्य भक्षणीयत्ववदत्र श्रवणोद्वेजकेतरवर्णघटितपदे तदप्रतीतेर्वर्ण एव पर्यवसानात् । अतः कात्स्न्र्यादिति वीररौद्रेत्यादिपदात्प्राक्संबध्यते । तेन कात्स्न्र्यात्सर्वांशेन वीररौद्रबीभत्सैर्विना श्रुतिभीतिप्रदवर्णत्वं इत्येव तल्लक्षणं वाच्यम् । एवंच रौद्रादिभावतदाभासादिसत्त्वेऽप्युक्तवर्णदोषस्यादूषकत्वादादरणीयत्वमेवेति फलितम् । तदुदाहरणानि च स्वयमेवोह्यानि गौरवान्नेहोच्यन्ते । नचैवं च्युतसंस्कृत्यादौ सभवति। तस्य पदैकधर्मत्वात्। ततो युक्तमेवेदं लक्षणम् । अत एवोक्तं चन्द्रालोके—'भवेच्छ्रुतिकटुर्वर्णः श्रवणोद्वेजने पटुः' इति। ननु तथापि कात्स्न्र्याच्छ्रुतिकटुरिति कुतो वर्णद्वयं त्वयोदाहृतमिति चेन्न। भिन्नपदस्थितत्वेन तस्योदाहरणप्राचुर्यार्थत्वात् । अतएवोक्त काव्यप्रदीपे—'एकत्र पदे वर्णद्वयकटुत्वे पददोषत्वम्, एकस्यैव तथात्वे पदैकदेशदोषत्वम्' इति । एतेनास्य तथात्वमपि सिद्धमिति बोध्यम् । एवंच 'अलमतिचपलत्वात्स्वप्नमायोपमत्वात्परिणतिविरसत्वात्सङ्गमेनाङ्गनायाः। इति यदि शतकृत्वस्तत्त्वमालोचयामस्तदपि न हरिणाक्षीं विस्मरत्यन्तरात्मा' इति। तदीयोदाहरणमपि त्वात्त्वादित्यादिना तथाभूतं व्याख्यातम् । तत्र शृङ्गारप्राधान्यात्, इह वीरेत्यादिना प्रतिप्रसवापरनामकापवादोक्तेर्वीरादिष्वेवजातीयकवर्णसत्वेऽपि न दोष इति द्योतितम् । तथाहि वेणीसंहरणे—'क्रोधोद्गीर्णगदस्य नास्ति सदृशः सत्यं रणे मारुतेः कौरव्ये लघुहस्तता पुनरियं देवे यथा सीरिणि। स्वस्त्यस्तूद्धतधार्तराष्ट्रनलिनीनागाय वत्साय मे शङ्के तस्य सुयोधनेन समरं नैवेतरेषामहम्' इति । इदं हि द्रौपदीं प्रति धर्मराजवाक्यम् । अत्रोद्धतधार्तराष्ट्रेति ष्ट्रकारः श्रुतिकटुरेव यद्यपि तथापि द्वितीयपादेनोद्दीपितस्य मारुतिपदेन क्रोधेत्यादिपदेन चानुभावितस्य सुयोधनालम्बितस्य कोपादिसंचारितस्य भीमसेननिष्ठरणोत्साहस्यैव युद्धवीरस्थायिभावस्योत्तरार्धोक्तयुधिष्ठिरकर्तृकाशीर्वादादिव्याजेन काव्यलिङ्गादितः प्राधान्येन व्यञ्जनान्नैव दूषकः । अनर्घ्यराघवेऽपि—'महासेनो यस्य

**द्वितीयः पददोषस्तु ज्ञेयः सप्तदशात्मकः।**
**ऋते रसादिसाहाय्यं स हेयो लिङ्गदेहवत्॥ ५॥**

---

प्रमदयमदंष्ट्रासहचरैः शरैर्मुक्तो जीवन् द्विरिव शरजन्मा समभवत्। इमां च क्षत्राणां भुजवनमहादुर्गविषमामयं वीरो वारानजयदुपविंशान्वसुमतीम्' इति। 'विनयनिचुलितैर्भवद्वचोभिः कमपि नवं वितृणद्भिरङ्गमन्तः। अयमजनि करः कृतान्तदंष्ट्राककचकठोरकुठारदुर्निरीक्ष्यः' इति च। एतच्च श्रीरामं प्रति धनुर्भङ्गोत्तरमागतस्य क्रुद्धपरशुरामस्य वचः। अत्रापि यमदंष्ट्रा कृतान्तदंष्ट्रेति च वर्णद्वयं। तथा, अत्रोपरीत्या प्रथमे वीरस्य द्वितीये रौद्रस्य व्यक्तत्वान्न तद्दोषावहम्। एवं बीभत्सेपि 'उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूत्सेधभूयांसि मांसान्यंसस्फिक्पृष्ठपिण्डाद्यवयवसुलभान्युग्रपूतीनि जग्ध्वा। आत्तस्नाय्वन्त्रनेत्रात्प्रकटितदशनः प्रेत एकः करङ्कादङ्कस्थादस्थिसंस्थस्थपुटगतमपि क्रव्यमव्यग्रमत्ति' इति काव्यप्रकाशोदाहृतपद्ये उत्कृत्योत्कृत्येत्यादिवर्णानां तथात्वेऽपि न दोषापादकत्वं, किंचैतेषु रसेषु प्रत्युतैवं वर्णविन्यासोऽनुकूल एवेत्यनुपदमेव गुणरत्ने वक्ष्याम इति दिक् ॥ ४॥ एवं वर्णदोषमाभाष्य पददोषं सामान्यतः सप्तदशसंख्याकत्वेन प्रतिजानीते—**द्वितीय इति**। किमयं सार्वत्रिक एव यद्वा क्वचिदेतदपवादोऽपीत्याशङ्क्य तदपवादं सूचयति—ऋत इति तृतीयपादेन। आदिना भादिः। तस्माद्यत्रायं च्युतसंस्कृत्यादिः सप्तदशविधोऽपि दोषो रसाद्यनुग्राहकश्चेत्तत्र गुण एवेति तात्पर्यम्। उपलक्षणमिदं वाक्यदोषादेरपि। तदुक्तं काव्यप्रकाशमूले—'वक्त्राद्यौचित्यवशाद्दोषोऽपि गुणः क्वचित्क्वचिन्नोभौ' इति। तस्यैव काव्ये दूषकत्वेन त्याज्यत्वं विधत्ते—**स इति**। ऋत इत्याद्यत्रापि काकाक्षिगोलकन्यायेनान्वेति। तत्र दृष्टान्तमाह—**लिङ्गेति**। लिङ्गदेहो यथा ब्राह्मणत्वादिजात्यवच्छिन्नगौरत्वादिगुणविशिष्टस्थूलदेहापेक्षया द्वितीयः पद्यते मुमुक्षुभिः प्राप्यत इति व्युत्पत्त्या पदशब्दितमद्वैतं ब्रह्मात्मतत्त्वमेव। तद्दूषयति कर्तृत्वभोक्तृत्वादिग्रस्तमिवानन्तविक्षेपैः करोतीवेति पददोषस्तथा श्रोत्रादिज्ञानेन्द्रियपञ्चकं वागादिकर्मेन्द्रियपञ्चकं प्राणादिशारीरवायुपञ्चकं मनोबुद्धिश्चेति सप्तदशात्मकस्तद्वद्रसादिसाहाय्यं ऋते 'रसो वै सः' इति श्रुतेरात्मा हि मुख्यो रसः स आदिर्यस्य दृश्यस्य तत्तथा तस्य यत्साहाय्यं तद्विवेकोपयोगित्वं तद्विना हेयस्त्याज्यः मिथ्यात्वेनानादरणीयः सदसद्विवेकार्थमेवेन्द्रियाद्यात्मकलिङ्गशरीरादरो मुमुक्षुभिः क्रियते तद्वद्रसाद्यनुग्राहकश्चेद्दुष्टदोषोऽपि काव्ये गुणवद्ग्राह्य एवान्यथा तु हेय एवेति भावः। तदुदाहरणानि त्वग्रे अपवादविचारेऽत्रैव प्रपञ्चयिष्यामः। सप्तदशात्मकत्वं तु लिङ्गदेहस्योक्तं श्रीमत्संक्षेपशारीरके—'इह तावदक्षदशकं मनसा सह बुद्धितत्त्वमथ वायुगणः। इति लिङ्गमेतदमुना पुरुषः खलु संगतो भवति जीवः' इतीति। श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानि पञ्च ज्ञानेन्द्रियाणि, वाक्पाणिपादपायूपस्थानि पञ्च कर्मेन्द्रियाणी-

**असंस्कृतिपदं तत्स्यान्न यद्व्याकरणे मतम् ।**
**शान्ता रमन्त एकान्ते कान्तां चिन्त्य भवान्तवत् ॥ ६ ॥**
**अप्रयुक्तं तु कोशादावुक्तमप्यमतं सताम् ।**
**अङ्गनापाङ्ग एवायं वज्रः स्फुरति सङ्गिनाम् ॥ ७ ॥**

---

त्यक्षदशकम् । स्पष्टमेवावशिष्टम् ॥ ५ ॥ अथ प्रतिज्ञातसंख्यांस्तान्प्रायः पूर्वार्धेषूद्देशलक्षणाभ्यामुत्तरार्धेषु तूदाहरणेन च काव्यप्रकाशीयसूत्रक्रमानुसारेणैव कथयन्प्रथमं च्युतसंस्कृत्याख्यं पददोषं विशदयति—**असंस्कृतीति** । तथा चाहुः—'दुष्टं पदं श्रुतिकटु च्युतसंस्कृत्यप्रयुक्तमसमर्थम् । निहतार्थमनुचितार्थं निरर्थकमवाचकं त्रिधाश्लीलम् । संदिग्धमप्रतीतं ग्राम्यं नेयार्थमथ भवेत्क्लिष्टम् । अविमृष्टविधेयांशं विरुद्धमतिकृत्समासगतमेव' इति । पक्षे 'तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेव व्याक्रियत' इति श्रुतेर्नामाद्यात्मकदृश्यविकासनलक्षणे व्याकरणे सत्यत्वेन प्रतीयमाने सति यन्मतं 'यस्यामतं तस्य मतम्' इति श्रुत्युक्तरीत्या स्वप्रकाशत्वेनापरोक्षीभूतं न भवति तत्पदं 'ततः पदं तत्परिमार्गितव्यम्' इति स्मृतेर्ब्रह्मतत्त्वं असंस्कृति संस्कारोपलक्षितनिखिलक्रियाफलविकलं स्यादित्यन्वयः । उक्तं हि श्रीमत्सर्वज्ञात्ममुनीश्वरचरणैः—'न स्वाध्यायवदाप्यता नच पुनस्त्रेताग्निवज्जन्यता न व्रीह्यादिवदस्य संस्कृतियुजा नो सोमवद्विक्रिया' इत्यादि । उदाहरति—**शान्ता इति** । अत्र चिन्त्येति पदम् । तत्र हि 'समासे नञ्पूर्वे क्त्वो ल्यप्' इत्यनेन समास एव क्त्वाप्रत्ययस्य ल्यब्विधानादिह तु तदभावाच्च्युतसंस्कृतीति । तस्मान्मत्वेति पठनीयम् । यथावा 'संविद्गते व्याकरणविरुद्धच्युतसंस्कृति' इति चन्द्रालोके, सरस्वतीकण्ठाभरणे त्विदमसाधित्युक्तम् ॥ ६ ॥ एवं क्रमप्राप्तमप्रयुक्तं लक्षयति—**अप्रयुक्तं त्विति** । आदिना व्याकरणवैदिकनिघण्टुग्रहः । सतां विदुषां अमतं काव्यादौ प्रयोज्यत्वेनासंमतमित्यर्थः । तदुदाहरति—**अङ्गनेति** । सङ्गिनां रागिणामिति यावत् । **अत्र वज्र इति** । 'ह्रादिनी वज्रमस्त्री स्यात्' इत्यमराद्यपि वज्रशब्दः पुंनपुंसकोभयलिङ्गकोऽप्यस्ति तथापि 'वज्रं पापमहीभृतां भवगदोद्रेकस्य सिद्धौषधं मिथ्याज्ञाननिशाविशालतमसस्तिग्मांशुबिम्बोदयः । क्रूरक्लेशमहीरुहामुरुभरज्वालाजटालः शिखी द्वारं निर्वृतिसद्मनो विजयते कृष्णेति वर्णद्वयम्' इति भामिनीविलासादिकाव्येषु नपुंसकलिङ्गस्यैव तस्य प्रयोगदर्शनात्पुंलिङ्गत्वेन प्रयोक्तुं सच्छब्दितकवीन्द्राणां नैवायं संमत इति तत्त्वम् । उक्तंहि साहित्यदर्पणे—'अप्रयुक्तत्वं तथाप्रसिद्धावपि कविभिरनादृतत्वम्' । यथा 'भाति पद्मः सरोवरे' । अत्र पद्मशब्दः पुंलिङ्ग इति । यथा वा—'अथैकधेनोरपराधचण्डाद्गुरोः कृशानुप्रतिमाद्बिभेषि । शक्योऽस्य मन्युर्भवता विनेतुं गाः कोटिशः स्पर्शयता घटोध्नीः' इति रघुवंशे । अत्र स्पर्शयतेति । तत्र हि 'स्पृश संस्पर्शने' इति धातुसूत्राद्दानार्थकत्वाभावेऽपि 'विश्राणनं वितरणं

**असमर्थं मतेऽशक्तं यौगिकैकार्थमेव वा।**
**यजन्त्यन्नानि ते धन्याः स्मराम्युष्णप्रभाधरम् ॥ ८ ॥**
**द्व्यर्थत्वेऽप्यप्रसिद्धेऽर्थे प्रयुक्तं निहतार्थकम्।**
**गूढार्थकं तदित्यन्ये राधां चन्द्रोऽद्य चुम्बति ॥ ९ ॥**

---

स्पर्शनं प्रतिपादनम्' इत्यमरात्तथा दानार्थकत्वेन तत्प्रयुक्तमपि सर्वत्र तदनुपलम्भादप्रयुक्तमेवेति ॥ ७ ॥ अथासमर्थं लक्षयति—**असमर्थमिति**। मते स्वाभिमते अर्थे अशक्तं शक्तिवृत्तिशून्यमित्यर्थः। तदुक्तं काव्यप्रकाशे—'असमर्थं यत्तदर्थं पठ्यते न च तत्र तस्य शक्तिः'। यथा 'तीर्थान्तरेषु स्नानेन समुपार्जितसत्कृतिः। सुरस्रोतस्विनीमेष हन्ति संप्रति सादरम्' इति। मतान्तरेण लक्षयति—**यौगिकैकार्थमेव वेति**। यद्वा योगवृत्तिमात्रार्थकमसमर्थमित्यर्थः। तथाचोक्तं प्रतापरुद्रीये—'योगमात्रप्रयुक्तं यदसमर्थं तदुच्यते' इति। एतदुदाहरणमपि तत्रैव। असमर्थं यथा—'विहाय वसुधामेतां चतुरम्बुधरावृताम्। क्वनु गन्तव्यमस्माभिररण्येऽप्यसुखा स्थितिः'। अत्र जलनिधिपरत्वेनाम्बुधरपदमसमर्थमिति। एवं मतद्वयेऽपि तृतीयचतुर्थपादाभ्यां क्रमेणोदाहरति—**यजन्तीति**। अत्र यद्यपि 'यज देवपूजासंगतिकरणदानेषु' इति धातुपाठाद्यजतेर्दानार्थकत्वमुररीकृत्य ये अन्नानि यजन्ति ददति ते धन्या इति प्रयुक्तं तथापि न तस्य तत्र शक्तिर्लोके तथा प्रयोगादर्शनादतस्तदसमर्थं तद्वदुष्णा चासौ प्रभा च तस्याः धरः सूर्यस्तमित्येतदपि यौगिकैकार्थकमिति तथा भवतीति भावः। यथावा रघुकाव्ये—'विनयन्ते स्म तद्योधा मधुभिर्विजयश्रमम्। आस्तीर्णाजिनरत्नासु द्राक्षावलयभूमिषु' इत्यत्र विनयन्त इति पदं दूरीकरणार्थकमभिमतं नतु तस्य तत्र शक्तिर्लोके विनयपदस्य नम्रतैकार्थत्वादिति। सरस्वतीकण्ठाभरणे तु असङ्गतत्वेनेदं लक्षयित्वा 'जलं जलधरे क्षारमयं वर्षति वारिधिः। इदं बृंहितमश्वानां ककुद्मानेष हेषते' इत्युदाहृतम् ॥ ८ ॥ निहतार्थं लक्षयति—**द्व्यर्थत्वेऽपीति**। द्व्यर्थत्वे गवादिशब्दवदुभयार्थत्वे सत्यपीत्यर्थः। तथापि अप्रसिद्धे रूढौ काव्यादिप्रसिद्धिशून्य इति यावत्। एतादृशे अर्थे स्वर्गादिपदार्थे प्रयुक्तं पदं निहतार्थकं भवतीति संबन्धः। एतस्यैवं लक्षणमुदाहरणं चोक्तं काव्यप्रकाशे 'निहतार्थं यदुभयार्थमप्रसिद्धार्थे प्रयुक्तम्'। यथा—'यावकरसार्द्रपादप्रहारशोणितकचेन दयितेन। मुग्धा साध्वसतरला विलोक्य परिचुम्बिता सहसा'। अत्र शोणितशब्दस्य रुधिरलक्षणेनार्थेनोज्वलीकृतरूपोऽर्थो व्यवधीयत इति। प्रतापरुद्रीयमते तस्य संज्ञान्तरमेवेति तदप्याह—**गूढार्थकमिति**। अन्ये प्रतापरुद्रीयकारास्तन्निरुक्तलक्षणं दुष्टं पदं गूढार्थकमिति वदन्तीति योजना। उक्तंहितत्र 'प्रयुक्तमप्रसिद्धार्थे गूढार्थं परिकीर्त्यते' इति। तदुदाहरति—**राधामिति चरमचरणेन**। अत्र 'राधा विशाखा पुष्ये तु सिद्धतिष्यौ श्रविष्ठया' इत्यमराद्विशाखानक्षत्रे गोपकन्याविशेषे च पुराणादिप्रसिद्धयैव राधापदं शक्तमिति तस्य

**तदिहानुचितार्थं यत्प्रकृतायोग्यबोधकम्।**
**परमाश्चर्यमस्माकं मूर्खः शास्त्रमरौ पिकः॥ १०॥**
**पादपूरणमात्रार्थं तुहीत्यादि निरर्थकम्।**
**उपसर्गस्य योगादेरबोधकमवाचकम्॥ ११॥**

ह्यर्थत्वेऽपि प्रकृते तन्नक्षत्रलक्षणे अप्रसिद्ध एवार्थे प्रयुक्तमिति निहतार्थकमेव, यद्वा गूढार्थकमेवेति लक्षणसमन्वयः। यथावा रघुवंशे—'अथास्य गोदानविधेरनन्तरम्' इत्यत्र गोशब्दः केशपरत्वेन तथा दानपदं छेदनपरत्वेन च विवक्षितमित्युक्तदोषग्रस्तमेवेति॥ ९॥ अनुचितार्थं लक्षयति—**तदिहेति**। प्रकृतं प्रक्रान्तं यद्वर्ण्यं तत्र अयोग्यं यत्तद्बोधकमित्यर्थः। तदुक्तं काव्यप्रकाशे—'तपस्विभिर्या सुचिरेण लभ्यते प्रयत्नतः सत्रिभिरिष्यते च या। प्रयान्ति तामाशु गतिं यशस्विनो रणाश्वमेधे पशुतामुपागताः'। अत्र पशुपदं कातरतामभिव्यनक्तीत्यनुचितार्थमिति। चन्द्रालोकेऽप्युक्तं 'व्यनक्त्यनुचितार्थं यत्पदमाहुस्तदेव तत्। इयमद्भुतशाख्यग्रकेलिकौतुकवानरी' इति। तदुदाहरति—**परमेति**। **मूर्ख इति**। अत्र शास्त्रस्य नीरसतापादकं निर्जलदेशरूपकबोधकं मरुपदं तथा मूर्खस्य तत्र मञ्जुवाक्त्वव्यञ्जकं पिकपदं च प्रकृतानुचितार्थबोधकमिति लक्षणसंगतिः। यथावा कुमारसंभवे—'यश्चाप्सरोविभ्रममण्डनानां संपादयित्रीं शिखरैर्बिभर्ति। बलाहकच्छेदविभक्तरागामकालसंध्यामिव धातुमत्ताम्' इति। अत्र छेदपदं द्वैधीभावे शक्तमिति मेघद्वैधीभावाद्रुधिरोद्गारव्यञ्जकत्वेन प्रकृतं यद्गैरिकादिधातुकर्तृकं मेघशकलेषु स्वरागस्य संक्रामणं तदयोग्यबोधकमिति दिक्॥ १०॥ निरर्थकं लक्षयति—**पादेति**। तदुदाहरति—**तुहीत्यादीति**। आदिना हिरुगादिग्रहः। उक्तं हि काव्यप्रकाशे—'निरर्थकं पादपूरणमात्रप्रयोजनं चादिपदम्। यथा—'उत्फुल्लकमलकेसरपरागगौरद्युते मम हि गौरि। अभिवाञ्छितं प्रसिद्ध्यतु भगवति युष्मत्प्रसादेन'। अत्र हिशब्द इति। यथावा गोवर्धनसप्तशत्याम्—'निजपदगतिगुणरञ्जितजगतां करिणां च सत्कवीनां च। वहतामपि महिमानं भूषायै सज्जना एव' इत्यत्र द्वितीयचकारेणैव तुल्ययोगितालंकारसिद्धौ प्रथमचकारस्तथेति। अवाचकं लक्षयन्नुदाहरति—**उपसर्गस्येति**। उपसर्गस्य प्रादित्वेन प्रसिद्धस्य। योगादेः योगः संयोगः। आदिना वियोगः। पञ्चमीयम्। तथाच उपसर्गसंयोगवियोगहेतोरित्यर्थः। अबोधकं न बोधयति प्रकृतोपयोगिनमर्थं विरहदुःखमित्यादावुपसर्गयोगेन दुःखनिरासरूपं तद्वन्मन्दिरे हरेत्यादावुक्तोपसर्गवियोगेन विलसनलक्षणं च न प्रतिपादयतीत्यबोधकमिति यावत्। एतादृशं यत्पदं तदवाचकं अवाचकत्वाख्यदोषदुष्टमित्यन्वयः। इदमेवास्योदाहरणम्। अत्र योगेति षष्ठी तत्रापि नोपसर्गेत्यनया समानाधिकरणा। तथाच यत् शास्त्रमित्यध्याहारः। योगादेः आदिना ज्ञानादिः। एवंच चित्तनिरोधब्रह्मात्मबोधादेः संबन्धिन इत्यर्थः। **उपेति**। सर्जनं सर्गः। तस्य रचन-

त्रिधाऽश्लीलं क्रमाद्व्रीडाजुगुप्साऽमङ्गलार्थकृत् ।
साधनं वायुरोधश्चेन्नाशः सुमनसो न किम् ॥ १२ ॥
संशयार्तं तु संदिग्धं रमणीयार्थकारणम् ।
अप्रतीतं भवेच्छास्त्रमात्रसिद्धं गताऽऽशयम् ॥ १३ ॥

---

स्येत्यर्थः । अबोधकं तदवाचकं केवलं पारायणमात्रप्रयोजनं भवतीति संबन्धः अत्र उपेत्युपसर्गयोगात्सर्गपदे प्रकृतार्थबोधकं न भवतीत्यवाचकं बोध्यम् तदुक्तं चन्द्रालोके—'अर्थे विदधदित्यादौ दधदाद्यमवाचकम् । धत्ते नभस्तल मास्तानरुणं तरुणैः करैः' इति । इदमेव सरस्वतीकण्ठाभरणे रूढिच्युतत्वेना न्यार्थमित्युक्तं प्रतापरुद्रीयेऽपि ॥ ११ ॥ अश्लीलं त्रैविध्येनाभिधाय लक्षयति—**त्रिधेति** । व्रीडार्थकृत् जुगुप्सार्थकृत् अमङ्गलार्थकृदिति क्रमात्त्रिधा अश्लील मस्तीत्यर्थः । तस्माल्लज्जाद्यर्थबोधकपदत्वमश्लीलत्वमिति यावत् । तदुदाहरति—**साधनमिति** । हे देवदत्त, तव वायुरोधः प्राणादिनिरोधः साधनं चेत्सु मनसः कर्मादिना शुद्धस्य चेतसः नाशः न भवेत्किम्, अपितु भवेदेवेति संबन्धः अत्र साधनवायुनाशशब्दाः क्रमेण मेढ्रापानवायुमरणोपस्थापकतया लज्जादि व्यञ्जकत्वादश्लीला इति ध्येयम् । कण्ठाभरणे त्वस्य त्रिविधस्यापि प्रत्येकमसभ्या द्यर्थतदाद्यर्थान्तरतदादिस्मृतिसूचकत्वेन त्रैविध्यान्नवविधमश्लीलमुक्तं तदिह गौर वादन्यत्राप्रसिद्धत्वाच्च नैवोक्तमतस्तत्रैव द्रष्टव्यमिति संक्षेपः । उक्तं हि चन्द्रा लोके—'अश्लीलं त्रिविधं व्रीडाजुगुप्साऽमङ्गलात्मना । आह्लादसाधनं वायु कान्तानाशे भवेत्कथम्' इति । यथावा रघुवंशे—'अन्येद्युरात्मानुचरस्य भाव जिज्ञासमाना मुनिहोमधेनुः । गङ्गाप्रपातान्तविरूढशष्पं गौरीगुरोर्गह्वरमाविवेश इत्यत्र शष्पमिति । एवं वासवदत्तायामपि—'अविदितगुणापि सत्कविसूक्ति कर्णेषु वमति मधुधाराम् । अनधिगतपरिमलाहि हरति दृशं मालतीमाला' इत्यः वमतीति उभयत्रापि क्रमाद्विरूढदूर्वमिति किरति पीयूषमिति च वक्तव्यमिति ॥ १२ ॥ संदिग्धं लक्षयति—**संशयार्तं त्विति** । संशयेन संदेहेन आ पीडितं संदेहग्रस्तमित्यर्थः । स्पष्टमन्यत् । तदुदाहरति—**रमणी**त्यादिद्वितीयप देन । किमत्र या अर्थकारणं धर्मादिपुमर्थहेतुः सा रमणीति । यद्वा रमणीयः मनो ज्ञो योऽर्थः पदार्थस्तस्य कारणं बीजं तु संदिग्धमित्येकपदेन वाक्ययोजनो संदेहः । यथावा साहित्यदर्पणे–'आशीःपरम्परां वन्द्यां कर्णे कृत्वा कृपां कुरु' अत्र वन्द्यामिति किं बन्दीभूतायामुत वन्दनीयामिति संदेह इति । अप्रती संलक्ष्योदाहरति—**अप्रतीतमिति** । गतः आशयो वासना यस्य तत्तथा एतादृशमन्तःकरणं शास्त्रमात्रं सिद्धं भवेत् । यतः अप्रतीतं प्रतीतिविषयी भूतं लोके क्वापि नास्तीत्यन्वयः । अत्र वासनापरत्वेनाशयपदं योगशास्त्रैकसिद्

**लोकमात्रस्थितं ग्राम्यं फुल्लगल्लासि वल्लभे ।**
**अतिलाक्षणिकं ज्ञेयं नेयार्थं तेऽक्षि सूर्यभित् ॥ १४ ॥**
**नेयार्थमपरे प्राहुः स्वसंकेतैकसार्थकम् ।**
**तीरभा विपरीता मे दधाह्रियां करा मुदा ॥ १५ ॥**
**साधारण्यात्समासादिनिष्ठास्त्वेते चतुर्दश ।**
**समासमात्रगं ज्ञेयं क्लिष्टादित्रितयं बुधैः ॥ १६ ॥**

---

तेनाप्रतीतमिति बोध्यम् ॥ १३ ॥ ग्राम्यं लक्षयति—**लोकमात्रेति** । तदुदाहरति—**फुल्लेति** । उक्तं हि काव्यप्रकाशे ग्राम्यं केवलं लोके स्थितम् । यथा—'राकाविभावरी कान्तसंक्रान्तद्युति ते मुखम् । तपनीयशिलाशोभा कटिश्च हरते मनः' इति । चन्द्रालोकेऽपि—'मस्तपिष्टकटीलोष्ठगल्लादिग्राम्यमुच्यते' इति । यथावा कालिदासीये शृङ्गारतिलके—'कस्तूरीवरपत्रभङ्गनिकरो भ्रष्टो न गण्डस्थले नो लुप्तं सखि चन्दनं स्तनतटे धौतं न नेत्राञ्जनम् । रागो न स्खलितस्तवाधरपुटे ताम्बूलसंवर्धितः किं रुष्टासि गजेन्द्रमत्तगमने किंवा पतिस्ते शिशुः' इति । नेयार्थं लक्षयति—**अतिलाक्षणिकमिति** । तदुक्तं काव्यप्रकाशे—'निरूढलक्षणाः काश्चित्सामर्थ्यादभिधानवत् । क्रियन्ते सांप्रतं काश्चित्काश्चिन्नैव त्वशक्तितः' इति । नेयं निषिद्धं लाक्षणिकं यथा—'शरत्कालसमुल्लासि पूर्णिमाशर्वरीश्वरम् । करोति ते मुखं तन्वि चपेटापातनातिथिम्' । अत्र चपेटापातनेति निर्जितत्वं लक्ष्यत इति । चन्द्रालोकेऽपि—'नेयार्थलक्षणात्यन्तप्रसरादमनोहरम् । हिमांशो हारधिक्कारजागरे यामिकाः कराः' इति । तदुदाहरति—**त इति** । हे वल्लभे इत्यनुकर्षणीयम् । ते अक्षि नेत्रं सूर्यभित् प्रसन्नत्वारक्तरेखाङ्कितत्वादिधर्मोत्कर्षात्पद्मतिरस्कारात्तन्मित्रीभूते सूर्ये दुःखजनकत्वात्तत्खण्डकत्वं तेन कमलपराजयशीलत्वं लक्ष्यत इति दूरतरत्वात्तथेति बोध्यम् । यथावा नैषधीये—'प्रियं प्रियां च त्रिजगज्जयश्रियौ लिखाधिलीलागृहभित्ति कावपि । इति स्म सा कारुवरेण लेखितं नलस्य च स्वस्य च सख्यमीक्षते' । अत्र सख्यमिति पदं रूपसाम्येऽत्यन्तलाक्षणिकम् । तद्यथा मैत्रीवाचकं सख्यपदं, साच समानशीलव्यसनयोरेव, तच्च तुल्यगुणयोरेव, तेच तुल्यरूपयोरेवेति । यथावा गोवर्धनसप्तशत्याम्—'इह शिखरिशिलालम्बिनि विनोददरतरलवपुषि तरुहरिणे । पश्याभिलषति पतितुं विहगी निजनीडमोहेन' इति । अत्र तरुहरिण इति सर्वमपि परिवृत्त्यसहत्वात्तथा ॥ १४ ॥ इदमेव मतान्तरेण लक्षयति—**नेयार्थमिति** । तदुक्तं प्रतापरुद्रीये—'स्वसंकेतप्रसिद्धार्थं नेयार्थं परिकीर्त्यते' इति लक्षयित्वा व्यत्यस्तनवनृत्तय इत्युदाहृत्य च व्यत्यस्तनत्रशब्देन वनप्रतीतिः स्वसंकेतमात्रायत्तेति नेयार्थमिति । तदुदाहरति—**तीरेति** । भारतीत्यर्थः ॥ १५ ॥ एवमुक्तदोषाः किं समासगा अप्युतासमासगा एवेत्याशङ्क्य च्युतसंस्कृत्यादिनेयार्थान्ताश्चतुर्दशैवैते पददोषाः समासनिष्ठत्वासमासनिष्ठत्वोभयसाधारणाः क्लिष्टाद्यवशिष्टत्रयं

**परंपरैकसंबोध्यो यस्यार्थक्लिष्टमत्र तत्।**
**गौरीवरशिरोहीरहारवार्यादरोऽमरः ॥ १७ ॥**
**अविमृष्टविधेयांशममुख्योक्तविधेयकम्।**
**सुन्दरीन्दीवराकारदृगन्तैः कान्तमञ्चति ॥ १८ ॥**

---

तु समासैकनिष्ठमित्याह—**साधारण्यादिति** । स्फुट एवाक्षरार्थः । इदमपि 'अथ भवेत्क्लिष्टम्। अविमृष्टविधेयांशं विरुद्धमतिकृत्समासगतमेव' इति काव्यप्रकाशकारिकोक्त्यनुसारेणैवोक्तम् । वस्तुतस्तु 'बन्धोः प्रियां स्वसुः प्रेयान्'इत्यादौ व्यस्तेऽपि विरुद्धमतिसंभवात्क्लिष्टाविमृष्टविधेयांशे एव समासमात्रगते इति ज्ञेयम्। एवं मृडान्याः पतिरित्यादावपि ॥ १६ ॥ तत्र क्लिष्टं लक्षयति—**परंपरेति**। अत्र अलंकारशास्त्रे। स्पष्टमन्यत्। तदुदाहरति—**गौरीति**। गौरी पार्वती तस्या वरः पतिः श्रीशंकरः तस्य शिरः मस्तकं तत्र यो हीराख्यरत्नविशेषाणां हारस्तद्रूपं वारि जलं यस्याः सा तथा तस्यां आदरो यस्य स तथा। गङ्गाराधनतत्पर इत्यर्थः। एतादृशो यः स तावदमर एवेति संबन्धः । अत्र निरुक्तगौरीत्यादिपदस्यायं गङ्गापरायणत्वलक्षणोऽर्थः परंपरैकसंबोध्य इति क्लिष्टत्वदोषदुष्टमिदं पदार्थतः समासगत एवायमत्र दोष इति लक्षणसंगतिः। यथोक्तं साहित्यदर्पणे—'क्लिष्टत्वमर्थप्रतीतेर्व्यवहितत्वम्'। यथा 'क्षीरोदजा वसति जन्मभुवः प्रसन्ना' इति। यथावा 'हितं न विहितं मया विषयवासनायासिना गता मम मितायुषो दुरितधूसरा वासराः। मनोभव मनोभवान्तकवितंसवक्रोल्लसन्नखायुधशिखादलद्दनुजमर्मणि ब्रह्मणि' इति। अत्र मनोभवान्तकेति पदं परम्परैकसंबोध्यार्थकत्वात्तथेति ॥ १७ ॥ अविमृष्टविधेयांशं लक्षयति—**अविमृष्टेति**। **अमुख्येति** । न मुख्यं प्रधानं यथा स्यात्तथेत्यमुख्यं तथा उक्तं विधेयं प्रतिपाद्यं येन यत्र वेति तथा प्राधान्येनाप्रतिपादितविधेयांशमित्यर्थः। तदुदाहरति—**सुन्दरीति**। इन्दीवराकाराः कुवलयाकाराः नीलजलजसरूपा इति यावत्। एतादृशः ये दृगन्ताः अपाङ्गप्रान्तास्तैरित्यर्थः। कान्तं स्वरमणं अञ्चति पूजयतीत्यर्थः। अत्र पूजनं हि कुसुमैरेव प्रसिद्धमिति तदुपयोगितया विधेयं यदपाङ्गेष्विन्दीवरत्वं तत्तावत्स्वाकारताद्वारा तद्विशेषणीभूतत्वेनामुख्यमेवेति लक्षणसमन्वयः । तदुक्तं काव्यप्रकाशे—'अविमृष्टप्राधान्येन अनिर्दिष्टः विधेयांशो यत्र'। तद्यथा—'मूर्ध्नामुद्वृत्तकृत्ताविरलगलगलद्रक्तसंसक्तधाराधौतेशाङ्घ्रिप्रसादोपनतजयजगज्जातमिथ्यामहिम्नाम्। कैलासोल्लासनेच्छाव्यतिकरपिशुनोत्सर्पिदर्पोद्धुराणां दोष्णां चैषां किमेतत्फलमिह नगरीरक्षणे यत्प्रयासः'। अत्र मिथ्यामहिमत्वं नानुवाद्यम्। अपितु विधेयम्। यथाच—'स्रस्ता नितम्बादवरोपयन्ती पुनः पुनः केसरदामकाञ्चीम्। न्यासीकृतां स्थानविदा स्मरेण द्वितीयमौर्वीमिव कार्मुकस्य'। अत्र मौर्वी द्वितीयामित्यत्र द्वितीयमात्रमुत्प्रेक्ष्यम्। यथाच—'वपुर्विरूपाक्षमलक्ष्यजन्मता दिगम्बरत्वेन निवेदितं वसु। वरेषु यद्बालमृगाक्षि मृग्यते तदस्ति किं व्यस्तमपि त्रिलोचने'। अत्रालक्षिताजनिरिति वाच्यमित्यादि।

**विपरीतमतेर्हेतुर्विरुद्धमतिकृन्मतम् ।**
**स्वसृप्रेयानपीन्दुः किं तत्सद्मनि विरुध्यति ॥ १९ ॥**

यथावा चन्द्रालोके—'अविमृष्टविधेयांशसमासपिहिते विधौ। विशन्ति विशिखप्रायच्छटाक्षाः कामिनां हृदि' इति । प्रतापरुद्रीयेऽपि—'अविमृष्टविधेयांशं गुणीभूतविधेयकम्' इति । नञ्समासेऽप्येतत्संभवति । तथा चोदाहृतं साहित्यदर्पणे । यथावा—'अमुक्ता भवता नाथ मुहूर्तमपि सा पुरा'। अत्र मुक्तेत्यत्र नञः प्रसज्यप्रतिषेधत्वमिति विधेयत्वमेवोचितम् । यदाहुः—अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता । प्रसज्यप्रतिषेधोऽसौ क्रियया सह यत्र नञ् । यथावा—'नवजलधरः संनद्धोऽयं न तृप्तनिशाचरः सुरधनुरिदं दूराकृष्टं न दुष्टशरासनम् । अयमपि पटुर्धारासारो न बाणपरंपरा कनकनिकषस्निग्धा विद्युत्प्रिया न ममोर्वशी' । उक्तोदाहरणे तत्पुरुषसमासे गुणीभावे नञः पर्युदासतया निषेधस्य विधेयतानवगमः । यदाहुः—'प्रधानत्वं विधेर्यत्र प्रतिषेधेऽप्रधानता। पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ्' तेन 'जुगोपात्मानमत्रस्तो भेजे धर्ममनातुरः ।' अत्र अत्रस्ततायनूद्यात्मगोपनाद्येव विधेयमिति नञः पर्युदासतया गुणभावो युक्तः । नन्वश्राद्धभोज्यसूर्यपश्या राजदारा इत्यादिवदमुक्तेत्यत्रापि प्रसज्यप्रतिषेधो भविष्यतीति चेन्न। तत्रापि यदि भोजनादिरूपक्रियांशे नञः संबन्धः स्यात्तदैवं तत्र प्रसज्यप्रतिषेधत्वं वक्तुं शक्यम् । नच तथा । विशेष्यतया प्रधानेन तद्भोज्यर्थेन कर्त्रंशेनैव नञः संबद्धत्वात् । यदाह 'श्राद्धभोजनशीलो ह्यतः कर्ता प्रतीयते न तद्भोजनमात्रं कर्तरि णिनेर्विधानात्'इति । अमुक्तेत्यत्र तु क्रिययैव संबन्ध इति दोष एवेति । यथावा—'रसैः कथा यस्य सुधावधीरिणी नलः स भूजानिरभूद्गुणाद्भुतः । सुवर्णदण्डैकसितातपत्रितज्वलत्प्रतापावलिकीर्तिमण्डलः' इति नैषधीये । अत्र ज्वलत्प्रतापावलिकीर्तिमण्डले उद्दिश्य तत्र सुवर्णदण्डैकसितातपत्रत्वे विधेये ते च समासाच्छादितत्वेनामुख्यत्वाद्गुणीभूते एवेत्युक्तदोषः स्फुट एवेति दिक् ॥ १८ ॥ विरुद्धमतिकृल्लक्षयति—**विपरीतेति** । तदुदाहरति—**स्वसृप्रेयानपीति** । इन्दुश्चन्द्रः स्वसृप्रेयानपि स्वसुः स्वभगिन्याः लक्ष्म्याः प्रेयान्प्रीतिविषयोऽपीत्यर्थः । **तदिति।** तस्याः लक्ष्म्याः यत्सद्म गृहं 'लक्ष्मीः पद्मालया' इत्यमरात्तन्निवासस्थानं कमलं तस्मिन् विषय इति यावत् । किंविरुद्ध्यति किमिति विरोधं विदधातीति संबन्धः । स्वप्रेमवत्याः स्वसोदर्याः सद्मनि शत्रुत्वरचनं चन्द्रस्यानुचितमेवेति भावः । अत्र 'धवः प्रियः पतिर्भर्ता' इत्यमरात्प्रियशब्दस्य भर्तृवाचित्वात्स्वस्य स्वभगिनीभर्तृत्वरूपविरुद्धबुद्धेः कारणत्वं तावत्प्रियपदपर्यायघटिते स्वसृप्रेयानिति पदे स्फुटमेवेति लक्षणसंगतिः । यथावा कुमारसंभवे—'तां पार्वतीत्याभिजनेन नाम्ना बन्धुप्रियां बन्धुजनो जुहाव' इति । अत्र बन्धुप्रियामिति पदमुक्तरीत्या विरुद्धमतिकृदेव । तथाहि—'यथा प्रियशब्दस्य भर्तृवाचित्वं तद्वत् 'कमला श्रीर्हरिप्रिया' इत्यादौ प्रियापदस्यापि पत्नीवाचकत्वात्स्वस्याः स्वभ्रातृपत्नीत्वावगमो

**किंच प्रतापरुद्रोऽन्यत्त्याज्यं दोषत्रयं जगौ।**
**लक्ष्यलक्षणतस्तेऽपि कथ्यन्ते वैद्यके यथा ॥ २० ॥**
**अपुष्टार्थं तु तज्ज्ञेयं प्रकृतानुपयोगि यत्।**
**विंशत्यर्धार्धवक्त्रो मां विषयेभ्योऽभिरक्षतु ॥ २१ ॥**

---

बन्धुप्रियामित्यत्र स्फुट एवातो युक्तमेव तथात्वमिति। यदि तु स्वहृत्सखीमिति पठ्येत तदा नायं दोषः। यथावा काव्यप्रकाशे विरुद्धमतिकृत्। यथा—'सुधाकरकराकारविशारदविचेष्टितः। अकार्यमित्रमेकोऽसौ तस्य किं वर्णयामहे'। अत्र कार्यं विना मित्रमिति विवक्षितम्। अकार्येषु मित्रमिति तु प्रतीतः। यथाव—'चिरकालपरित्यक्तलोचनानन्ददायिनः। कान्ता कान्तस्य सहसा विदधाति गलग्रहम्'। अत्र कण्ठग्रहमिति वाच्यम्। 'न त्रस्तं यदि नाम भूतकरुणासंतानशान्तात्मनस्तेन व्यारुजता धनुर्भगवतो देवाद्भवानीपतेः। तत्पुत्रस्तु मदान्धतारकवधाद्विश्वस्य दत्तोत्सवः स्कन्दः स्कन्द इव प्रियोऽहमथवा शिष्यः कथं विस्मृतः'। अत्र भवानीपतिशब्दो भवान्याः पत्यन्तरे प्रतीतिं करोति। यथावा—'गौरपि यद्वाहनतां प्राप्तवतः सोऽपि गिरिसुतासिंहः। सविधे निरहंकारः पायाद्वः सोऽम्बिकारमणः' इति। अत्राम्बिकारमण इति विरुद्धां धियमुत्पादयतीति। एवं रघुवंशेऽपि—'इत्थं व्रतं पालयतः प्रजार्थं समं महिष्या महनीयकीर्तेः' इति। अत्र महिषीपदेन 'कृताभिषेका महिषी' इति कोशादभिषिक्ता राजपत्नी विवक्षिता। प्रतीयते त्वाबालपण्डितं निरुक्तकोशादिस्फूर्तेः प्राक्सैरिभस्त्री सा तावत्प्रकृते विरुद्धैवेत्यलं परदोषान्वेषणेनेति। तत्र हि समं स्वपत्न्येति वाच्यमिति नायं दोष इति शिवम् ॥ १९ ॥

प्रतापरुद्रीये तु दोषान्तराणामप्युपलब्धेरतस्तत्कथनमपि सपरिकरं प्रतिजानीते—**किंचेति**। त्याज्यमित्यनेन तत्कथनस्यावश्यकत्वं व्यनक्ति। जगौ कथयामासेत्यर्थः। **लक्ष्येति**। लक्ष्यमुदाहरणं लक्षणमसाधारणधर्मस्ताभ्यामिति तृतीयायास्तसिः। ते तदुक्तदोषा इत्यर्थः। अपिः प्रागुक्तदोषैः सह समुच्चये। **वैद्यक इति**। यथा वैद्यकशास्त्रे सुश्रुतचरकादौ कफवातपित्ताख्यास्त्रयो दोषाः सलक्षणोदाहरणं प्रपञ्चितास्तत्क्षोभोपशमार्थमेव तथात्रापि वक्ष्यमाणास्ते पुष्टार्थत्वादयः कथ्यन्त इत्यर्थः॥२०॥

तत्रापुष्टार्थसंज्ञकं दोषं लक्षयति—**अपुष्टार्थे त्विति**। प्रकृतं वर्ण्यं तत्र अनुपयोगि। अनुपकारकमित्यर्थः। तमुदाहरति—**विंशतीति**। विंशतिसंख्यायाः अर्धं दश तस्याप्यर्धं पञ्च तत्संख्याकानि वक्त्राणि यस्य स तथा। पञ्चवदनः शिव इत्यर्थः। स मां विषयेभ्यः शब्दादिपञ्चविषयेभ्यः सकाशादभिरक्षतु। पञ्चभिर्मुखैस्तेषां पञ्चानामपि मिथ्यात्वादिदोषकथनेन तत्पारवश्यताध्वंसद्वारा पालयत्वित्यर्थः। अत्र विंशतीत्यादिपदं प्रकृते पञ्चास्ये अनुपकारकमेवेति तस्य दुष्टत्वमिति तत्त्वम्। तदुक्तं प्रतापरुद्रीये—'प्रकृतानुपयुक्तार्थमपुष्टार्थं तदुच्यते' इति तल्लक्षणमभिधाय 'व्यर्थाष्टार्धार्धबाहूनाममीषामीदृशी दशा' इति। सरस्वतीकण्ठाभरणे तु 'यत्तु तुच्छाभिधेयं स्यादपुष्टार्थं तदुच्यते' इत्युक्त्वा शतार्धेत्यादिना-

**येन कोऽपि विशेषो न तत्तु स्यादप्रयोजकम् ।**
**हरनेत्राग्नियोगात्प्राक्साङ्गालं मार ते शरैः ॥ २२ ॥**
**जुष्टं वर्णैः कठोरैश्चेत्पदं परुषमुच्यते ।**
**कार्तार्थ्यं धार्तराष्ट्राणां कथं स्यात्पद्मिनीमुहाम् ॥ २३ ॥**

---

नयैव रीत्योदाहारि ॥ २१ ॥ एवमप्रयोजकं लक्षयति—**येनेति** । येन पदेन कोऽपि विशेषः प्रकृते वर्ण्येनैव भवति तत्तु पदमप्रयोजकत्वाख्यदोषदुष्टत्वाद‌प्रयोजकं स्यादित्यन्वयः । नचोक्तापुष्टार्थेऽतिव्याप्तिरिति वाच्यम् । तस्य प्रकृतानुपयोगित्वादस्य तु प्रकृते विशेषानाधायकत्वाच्च । तथाहि—उपयोगित्वं नाम अवश्यापेक्षितत्वम् । विशेषाधायकत्वं तु गुणापादकत्वमेव । यथा 'गुणवद्वस्तुसंयोगाद्याति स्वल्पोऽपि गौरवम्' इत्यत्र गुणवत्पदं विना'केवलं वस्तु संयोगात्' इत्यनेन स्वल्पपदवाच्यस्य गौरवासिद्धेस्तस्यावश्यापेक्षितत्वम् । यथाच 'सुधांशुकलितोत्तंसस्तापं हरतु नः शिवः' इत्यत्र यद्यपि शिवस्य तापहारकत्वम् 'ज्ञात्वा शिवं शान्तिमत्यन्तमेति' इत्यादिश्रुतिसिद्धमेव तथापि तत्र सुधेत्यादिपदेन चन्द्रदर्शनस्य शान्तिजनकत्वं प्रत्यक्षसिद्धमेवेति शान्तिकारकत्वे लौकिकसामग्रीसत्वलक्षणो गुणोऽपि साधित इति बोध्यम् । यथावा घटादिकार्यं प्रति दण्डाद्यवश्यापेक्षितं मृत्तिका । शौक्ल्यादि तु गुणाधायकमेव तद्वदिति न कोऽपि दोषः । उदाहरति—**हरेति** । हरः शिवस्तन्नेत्राग्नेर्योगात्संयोगात्प्राक्पूर्वं साङ्गः शरीरविशिष्टस्तत्संबुद्धौ । एतेन तदूर्ध्वमनङ्गेत्यर्थः सिद्धः । एतादृश रे मार मदन, ते तव शरैर्बाणैरलम् । 'अलं भूषणपर्याप्तिशक्तिवारणवाचकम्' इत्यमरान्न किंचित्प्रयोजनमिति योजना । अत्र विशेषणपदेन यद्यपि शिवभक्ते मयि त्वच्छरवैफल्यमेवेति ध्वन्यते तथापि पूर्वोदाहरणे पञ्चाननपदवदनङ्गपदेनापि तत्संभवाद्विशेषानाधायकत्वेन तस्याप्रयोजकत्वाख्यदोषदुष्टत्वमेवेति दिक् । तथाचोक्तं प्रतापरुद्रीये—'तदप्रयोजकं यत्स्यादविशेषविधायकम्' इति लक्षयित्वा 'हन्त वर्तामहे वज्रघटनात्प्राक्चलात्मसु' इति ॥ २२ ॥ एवं परुषं लक्षयति—**जुष्टमिति** । पक्षे कठोरैः निर्दयैः वर्णैर्म्लेच्छादिवर्णभेदविशेषैर्जुष्टं सेवितं पदं स्थानं परुषं रुक्षमुच्यत इति । तदुदाहरति—**कार्तार्थ्यमिति** । धार्तराष्ट्राणां दुर्योधनादीनां धृतराष्ट्रपुत्राणाम् । पक्षे 'राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः । मलिनैर्मल्लिकाख्यास्ते धार्तराष्ट्राः सितेतरैः' इत्यमरादसितचञ्चुचरणानां श्वेतगरुतां हंसविशेषाणामित्यर्थः । **पद्मिनीति** । पद्मिनी द्रौपदी तस्यां मुह्यन्ति ते पद्मिनीमुहस्तेषां महापतिव्रतापरवनितासक्तानामित्यर्थः । एतादृशां सतां, पक्षे कमलिनीसंमुग्धानामिति यावत् । अत एव कथं कार्तार्थ्यं संपादितपुरुषार्थत्वं स्यान्न कथमपि भूयादिति संबन्धः । पक्षे कमलिन्यामलिकुलसंकुलत्वादेतेषां बिसादिलाभासंभवान्नैव कार्तार्थ्यं संभवतीति भावः । अत्र कार्तार्थ्यादिपदं कठोरवर्णघटितत्वात्पारुष्यदोषदुष्टमित्याशयः । उक्तंहि प्रतापरुद्रीये—'परुषं नाम तद्यत्स्याद्विहितं परुषाक्षरैः' इति लक्षणमुक्त्वा

**अन्यसंगतमप्युक्तं चन्द्रालोकेऽन्यसंयुतम्।**
**रेजे राधावपुः कुञ्जे श्लथकृष्णार्चितालकम्॥ २४॥**
**इत्येकविंशतावेषु स्वर्गवत्पददोषता।**
**शक्रगत्वेऽतिवैरस्यापादकत्वं क्षयित्ववत्॥ २५॥**

'कुतः कान्तारवृत्तीनां कार्तार्थ्यार्थित्वमस्ति नः' इति। नचास्य श्रुतिकटुत्वाख्यवर्णदोषत्वेनोक्तत्वात्पौनरुक्त्यमिति शङ्क्यम्। वर्णे पदे चेत्यत्रैव तारतम्यविवक्षया सदृष्टान्तं समाहितत्वात्। अन्यथा काव्यप्रकाशकारिकायां 'अपास्यच्युतसंस्कारम्' इत्यादिना पददोषाणामेवं पुनर्वाक्यदोषत्वाभिधानानुपपत्तिः स्यात्तस्मायुक्तमेवेदमिति दिक्। प्राक्तनसप्तदशदोषवदेतेषां त्रयाणामपि रसादिसाह्यं विनैव हेयत्वं तथा समासादिसाधारण्यं च ज्ञेयम्। कण्ठाभरणे त्विदं कष्टत्वेनोक्तमिति बोध्यम्॥ २३॥ किंच चन्द्रालोकेऽन्यसंगताख्यंदोषान्तरमप्युक्तमस्तीति तदप्याह—**अन्यसंगतमपीति**। तल्लक्षयति—**अन्येति**। अन्येन अनभिमतेनार्थेन सह संयुतमव्यवधानेन संबद्धमित्यर्थः। तदुदाहरति—**रेज इति। श्लथ इति**। श्लथाः अतएव कृष्णेन अर्चिताः संयमनवेणीकरणसुमनोग्रथनादिभिः प्रसाधिताः अलकाः कुन्तलाः यस्य तत्तथा। रतान्ते भगवता लालितमिति यावत्। अत्र पूर्वार्धमपि योज्यम्। यतः राधावपुः चन्द्रालोके अन्यसंयुतं अतस्तदन्यसंगतमप्युक्तमिति योजना। अन्येन परकीयनायकेन श्रीकृष्णेन संयुतं संयोगीत्यर्थः। अतः कारणात्तदन्यसंगतमपि अन्यस्मिन् परकीये नायके विषये सम्यक् अभिसरणयुक्तिपूर्वकं गतं गमनं यस्य तत्तथा। अभिसरणनिपुणमपि जनैरुक्तमित्यर्थः। अत्र श्लथपदमुक्तरीत्या अलकान्वितमभिमतं तथापि श्रवणोत्तररक्षणावच्छेदेन कृष्णान्वितमेवावभासत इत्यन्यसंगतत्वाख्यदोषदूषितमिति तात्पर्यम्। इहापि क्लिष्टाविमृष्टविधेयांशाख्यदोषद्वयवत्समासैकनिष्ठत्वं तद्वद्रसादिसाहाय्यं विनैव दूषकत्वमपि च्युतसंस्कृत्यादिवदेव ज्ञेयम्। उक्तं हि चन्द्रालोके—'अन्यसंगतमुत्तुङ्गहारशोभिपयोधरः' इति। नचाविमृष्टविधेयांशेनेदं गतार्थम्। लक्षणभेदादिति। यथावा नैषधीये—'सुवर्णदण्डैकसितातपत्रितज्वलत्प्रतापावलिकीर्तिमण्डले' इत्यत्र एकपदमातपत्रपदान्वितत्वेन विवक्षितमपि सितपदेनैवान्वितं भातीति॥ २४॥ उक्तपददोषप्रघट्टकमुपसंहरन् काव्यप्रकाशादिमतत्रयसमुच्चयेन तेषां संख्यां कथयंस्तत्सामान्यमपि लक्षयति—**इतीति**। इतिशब्दोऽयं उपसंहारसूचकः प्रकारवाचकश्च। असंस्कृतित्वादिप्रकारैरित्यर्थः। **एकेति**। एकविंशतिसंख्याकेषु एषु प्रतिपदमुक्तपददोषेष्विति यावत्। स्वर्गवत् यथा दिव्यभौमबैलभेदेनैकविंशतिस्वर्गाः पुराणादौ प्रसिद्धा एव तद्वदित्यर्थः। ततः किं तत्राह—**पदेति**। तत्र यथा पददोषता स्थानदोषतास्ति तद्वत्प्रकृतेऽपीयं पददोषता भवतीत्यध्याहृत्य संबन्धः। का सेत्यत्राह—**शक्रगत्व इति**। शक्रं सुबाद्यन्तं पदं तत्र

**मतधर्म्यादिशन्नानापदगत्वे सति ध्रुवम् ।**
**विज्ञेयं वाक्यदोषत्वमिदमेवात्मभेदवत् ॥ २६ ॥**
**व्युदस्य च्युतसंस्कारमसमर्थं निरर्थकम् ।**
**वाक्येऽपि सन्ति ते दोषा न बाहिरसनोपमाः ॥ २७ ॥**

गच्छतीति तथा तस्य भावस्तत्त्वं तस्मिन्पदवृत्तित्वे सतीत्यर्थः । **अतीति** । परमविरसत्वाधायकत्वमिति यावत् । सत्यन्तेन वर्णदोषेनातिव्याप्तिः । नचाति-पदेनैव तन्निरासः शङ्क्यः । एवमपि वक्ष्यमाणपदैकदेशवृत्तिदोषे व्यभिचारापत्तेः । सत्यन्ते तु तस्य पदवृत्तित्वाभावान्न तत्रासाविति हृदयम् । 'पदैकदेशवृत्तित्वस्य एकदेशविकृतमनन्यवत्' इतिन्यायात्' तत्रानुरूपं दृष्टान्तं स्पष्टयति—**क्षयित्ववदिति** । यथा क्षयित्वाख्यं विनश्वरत्वं तावदेव विंशतावपि स्वर्गेषु साधारणं तद्वदुक्तलक्षणमप्यसंस्कृतित्वादिष्वेकविंशतौ पददोषेषु समानमेवेति भावः । तदपि शक्राः सुखदानदक्षा ये निरुक्तसंख्याकाः स्वर्गास्तत्र गच्छति वर्तत इति तथा तस्य भावस्तत्त्वं तस्मिन्स्वर्गनिष्ठत्वे सति वैरस्यापादकं अतिरम्यतमेऽपि स्वर्गे क्षयित्वं ज्ञातं चेत्तत्क्षणमेव विरसत्वस्यानुभविकत्वाद्वैरस्याधायकं भवत्येवेति तात्पर्यम् ॥ २५ ॥ एवं पददोषेऽभिहिते वाक्यदोषाभिधानस्यावसरप्राप्तत्वात्तत्सामान्यलक्षणमप्युक्तलक्षण एव सत्यन्तावापोद्वापाभ्यां संक्षिपति—**मतेति** । मतो विवक्षितो यो धर्मी वाक्यार्थीभूतः पदार्थविशेषः तं आदिशन्ति संभूयोपदिशन्ति एतादृशानि यानि नाना अनेकानि पदानि सुबाद्यन्तशब्दरूपाणि तत्र गच्छति इति तथा तस्य भावस्तस्मिन्सतीत्यर्थः । ध्रुवं निश्चयेन । इदमेव निरुक्तमतिवैरस्यापादकत्वमेव वाक्यदोषत्वं विज्ञेयमिति संबन्धः । बुधैरिति शेषः । तत्रापि योग्यं दृष्टान्तं स्फुटयति—**आत्मभेदवदिति** । अय भावः—यथा आत्मभेदः स्वरूपभेदो योऽयं घटः पटो न, जीव ईश्वरो न, घटश्चैत्रो न, मैत्रश्चैत्रो नेति व्यवहारगोचरः पञ्चविधोऽन्योन्याभावः स तावन्मताः सर्वव्यवहारसंमताः ये धर्मिणो घटादयः पदार्थास्तान् आ ईषत् दिशत्यनुयोगिप्रतियोगित्वाभ्यां बोधयतीति मतधर्म्यादिशन् सचासौ नानापदगोऽनेकस्थानगश्चेति तथा तत्त्वे सति अतिवैरस्यं रसशब्दिताद्वैतब्रह्मराहित्यं तत्संपादको भवति तद्वदुक्तलक्षणोऽयं वाक्यदोषोऽपि निरुक्तरीत्या वैरस्याधायको भवतीति । तस्माद्विवक्षितधर्मिबोधकानेकपदवृत्तित्वे सत्यतिवैरस्यापादकत्वं वाक्यदोषत्वमिति तल्लक्षणं फलितम् । सत्यन्तं तु पदतदेकदेशदोषव्यभिचारवारणायैव । तदुक्तं काव्यप्रदीपे—'विवक्षितधर्मिप्रत्यायकशब्दवृत्तित्वे सति नानापदवृत्तित्वमेवात्र वाक्यवृत्तित्वमभिप्रेतम्' इति ॥ २६ ॥ अथ वाक्यदोषानभिधातुमादौ पददोषानेव कांश्चित्तत्रातिदिशति—**व्युदस्येति** । च्युतसंस्कारं तथा असमर्थं तद्वन्निरर्थकं च व्युदस्य दूरीकृत्य तेषां पदान्तरापेक्षत्वेन दोषत्वासंभवादपाकृत्येत्यर्थः । ते पूर्वं पदनिष्ठत्वेनोक्ताः दोषाः निरुक्तापासनेऽवशिष्टा अप्रयु-

**पप्या यय्या यियासूनां लब्धवर्णत्वमीयुषाम् ।**
**वृषाकपाय्युपक्रोशः शम्बरारीषुसंमथाम् ॥ २८ ॥**
**गोपत्रात्मभुवः पत्रिव्रजो व्रजति मानसम् ।**
**तावकस्यापि मेऽह्नाय नो वा कलयसे कथम् ॥ २९ ॥**

क्तादयः । **नवेति** । नवसंख्याकाः तावत्त्वेनैव नागकुलानां प्रसिद्धेस्ते च ते अहयः भुजंगास्तेषां याः रसनाः अष्टादशसंख्याकाः सर्पाणां द्विजिह्वत्वेन जिह्वाः ताः उपमानिरुक्ताष्टादशसंख्याकत्वातिवैरस्यापादकत्वादिसाधर्म्यान्निदर्शनं येषां ते तथा एतादृशाः वाक्येऽपि सन्तीत्यन्वयः । तदुक्तम्—'अपास्याच्युतसंस्कारमसमर्थं निरर्थकम् । वाक्येऽपि दोषाः सन्त्येते' इति सूत्रे ॥ २७ ॥ तत्राप्रयुक्ताख्यं तमुदाहरति—**पप्येति** । पाति लोकमिति पपीः सूर्य इति सिद्धान्तकौमुद्युक्तेः सूर्याख्येणेत्यर्थः । एतादृशेन यय्यां यान्ति लोकाः अनेनेति ययीर्मार्गे इत्यपि तदुक्तेर्मार्गेणेति यावत् । यियासूनां यातुमिच्छन्ति ते यियासवस्तेषां ब्रह्मलोकं जिगमिषूणां योगिनामित्यर्थः । तत्र गत्वा किं विषयान्बुभुक्षन्ति, नेत्याह—**लब्धेति** । 'लब्धवर्णो विचक्षणः' इत्यमराद्विचक्षणत्वं ब्रह्मवित्त्वमिति यावत् । ईयुषां एतुमिच्छन्ति प्राप्तुं वाञ्छन्ति ते तथा तेषां क्रममुक्तिकामानामित्यर्थः । अतएव । **शम्बरेति** । 'शम्बरारिर्मनसिजः' इत्यमराच्छम्बरारिः कामस्तस्य ये इषवो बाणास्तान्संमथ्नन्ति विदलयन्ति ते तथा तेषाम् । विरक्तानामित्यर्थः । अतएव वृषेति । 'वृषाकपायीश्रीगौर्योः' इत्यमरात् श्रीःगौरी वा । उपक्रोशः 'उपक्रोशो जुगुप्सा च' इत्यमरान्निन्दास्पदं भवतीति योजना । हरिहरान्यतरसायुज्यमपि तेषां तुच्छमेवेति भावः ॥ २८ ॥ एवं निहतार्थं वाक्यदोषमुदाहरति—**गोपत्रेति** । हे गोपत्र गौर्वृषभः पत्र 'यानं पक्षच्छदच्छुरी' इति हैमात् 'पत्रं स्याद्वाहने पर्णे पक्षे च शरपक्षिणाम्' इति विश्वाच्च पत्रं यानं वाहनं यस्य स तथा भो वृषभारूढ शंकरेत्यर्थः । तावकस्यापि तवायं तावको भवदेकभक्तस्यापि मे मम । एतेन त्वच्छत्रुणा पीड्यमानोहं त्वया कथं न परिपाल्यत इत्युपालम्भः सूचितः । मानसमन्तःकरणं प्रतीत्यर्थः । आत्मभुवः 'मकरध्वज आत्मभूः' इत्यमरान्मदनस्येति यावत् । पत्रिव्रजः 'पत्री श्येने रथे काण्डे खगद्रुरथिके त्रिषु' इति विश्वात्पत्रिणः काण्डाः शरास्तेषां व्रजः 'समूहे निवहव्यूहसंदोहविसरव्रजाः' इत्यमरात्समूह इत्यर्थः । व्रजति गच्छति प्रविशतीत्यर्थः । अतः अह्नाय 'स्रागझटित्यञ्जसाह्नाय द्राङ्मङ्क्षु सपदि द्रुतं' इत्यमराच्छीघ्रमित्यर्थः । कथं वा नो कलयसे न रक्षसीति संबन्धः । मामिति शेषः । तस्मादाशु मां पाहीत्याशयः । अत्र 'द्व्यर्थत्वेऽप्यप्रसिद्धेऽर्थे प्रयुक्तं निहतार्थकम्' इति पूर्वोक्तैतल्लक्षणात्सर्वाणि पूर्वार्धपदानि तथेति तल्लक्षणसंगतिः । तथाहि हे गोपत्र गाः पान्तीति गोपास्तान् त्राति दावाग्न्यादितः संरक्षयतीति तथा भो भक्तवत्सल भगवन्, आत्मभुवः 'ब्रह्मात्मभूः' इत्यमराच्चतुर्मुखस्येत्यर्थः । पत्रिव्रजः पक्षि-

**अये चक्रिन्नसंख्यातब्रह्माण्डघटनिर्मितिम्।**
**तनोषि तत्र मे किं न कपालमपि यच्छसि॥ ३०॥**
**राधयेत्को विगत्यर्थी बुधं विषधरादृते।**
**यदन्तःपक्षहारार्थमुत्थानोऽन्यो न विद्यते॥ ३१॥**

सङ्घः हंससमूह इतियावत्। मानसं प्रसिद्धमेव मानससरोवरं व्रजति प्रयातीत्यर्थः। एतस्यैवार्थस्य प्रसिद्धेरादावुपस्थितिः प्रथमस्य त्वप्रसिद्धेर्विलम्बेनेति युक्तमेवेदं तदुदाहरणम्॥ २९॥ अथानुचितार्थं वाक्यदोषमुदाहरति—**अये चक्रिन्निति**। चक्रं सुदर्शनं पक्षे घटरचनसाधनमस्यास्तीति तथा तत्संबुद्धौ भो विष्णो, पक्षे रे कुलालेत्यर्थः। यतः त्वं असंख्याताः अगणिताः ये ब्रह्माण्डरूपाः घटास्तेषां निर्मितिः कृतिस्तामित्यर्थः। तनोषि विस्तारयसीति यावत्। तत्र पक्षे मे मह्यं कपालमपि खर्परमपि किं न यच्छसि किमिति न ददासीत्यन्वयः। नह्यसंख्यातघटस्रष्टुः कुलालस्य याचकाय खर्परमात्रप्रदाने सामर्थ्याभाव इति भावः। तस्मात्त्वयाहं कपालप्रदानेन कपालिशब्दवाच्यः श्रीशंकर एव तत्सारूप्यापादनेन कार्य इति तात्पर्यम्। अत्र चक्र्यादिपदमर्थान्तरं बोधयत्संप्रार्थ्यस्य भगवतः फल्गुतामेव ध्वनयतीति तादृक्पदकदम्बत्वादनुचितार्थवाक्यदोषत्वं बोध्यम्। यथावा काव्यप्रकाशे—'कुविन्दस्त्वं तावत्पटयसि गुणग्राममभितो यशो गायन्त्येते दिशि दिशि च नग्नास्तव विभो। शरज्ज्योत्स्नागौरस्फुटविकटसर्वाङ्गसुभगा तथापि त्वत्कीर्तिर्भ्रमति विगताच्छादनमिह'। अत्र कुविन्दादिशब्दोऽर्थान्तरं प्रतिपादयन्नुपश्लोक्यमानस्य तिरस्कारं व्यनक्तीत्यनुचितार्थमिति। यथावानर्घ्यराघवे—'जाताः पक्वपलाण्डुपाण्डुमधुरच्छायाकिरस्तारकाः प्राचीमङ्कुरयन्ति किंचन रुचो राजीवजीवातवः। लूतातन्तुवितानवर्तुलमितं बिम्बं दधच्चुम्बति प्रातः प्रोषितरोचिरम्बरतलादस्ताचलं चन्द्रमाः' इति। अत्र तारकाणां पलाण्डूपमा, प्राच्यां स्त्रीत्वादङ्कुरयतीत्यनेन गुह्यरोमोद्गमव्यञ्जनं चन्द्रबिम्बस्य लूतातन्तुवितानोपमा, तथा चन्द्रकर्तृकमस्ताचलस्य पुंसश्चुम्बनं तत्र हेतुत्वेन रोचिःशब्दितस्य शोचिषः क्लीबस्य वियोगित्ववर्णनं च नीचत्वमेव सूचयतीत्यनुचितार्थकवाक्यदोषवत्त्वमिहावभातीति ध्येयम्॥ ३०॥ एवमवाचकाख्यवाक्यदोषमुदाहरति—**राधयेदिति**। **विगतीति**। उपसर्गस्य योगादेरबोधकमवाचकमिति पूर्वोक्तलक्षणादत्र गत्यर्थीत्यपेक्षिते वीत्युपसर्गयोगेन विवक्षितो यः स्वर्गादिर्गतिशब्दार्थस्तद्बोधकत्वं नास्तीत्याद्यखिलवाक्ये लक्षणसंगतिरूह्या। तेन विशिष्टा गतिः स्वर्गादिलोकप्राप्तिर्विगतिस्तामर्थयत इति तथा। अविनाशिस्थानगमनेच्छुरित्यर्थः। एतादृशः कः पुरुषः विषधरात् विषस्य धरः स्वकण्ठे धर्ता शिवस्तस्मादित्यर्थः। ऋते विना। बुधं विबुधं देवमिति यावत्। राधयेत् आराधयेदित्यन्वयः। तत्र हेतुः—**यदित्यादिना**। यत् यस्माद्धेतोः। **अन्तरिति**। अन्तः अभ्यन्तरे ये पक्षाः विपक्षाः शत्रव इत्यर्थः। तेषां यो

चिरं विचिन्त्य रे चित्त सुन्दरीस्मरमन्दिरम् ।
किं तन्द्रां यासि चन्द्रार्धचूडाङ्घ्रिं नोपसर्पसि ॥ ३२ ॥
वायुः संपीय वान्तोयं चन्दनस्थैर्भुजंगमैः ।
शंभो कान्तां वसन्ते किं नोत्सर्गेण प्रवर्तयेत् ॥ ३३ ॥
श्राद्धमाराधनं येन भूतनाथस्य साधितम् ।
निधनात्पूर्वमेवास्मै स ददाति निजं धनम् ॥ ३४ ॥
न खलो लालितोऽप्येति प्रमदानयमुद्धतः ।
अतः पशुपते पाहि पशुमेनं प्रसादतः ॥ ३५ ॥

---

हारः संहारस्तस्मा इति । तथा अन्तर्वर्तिकामादिशत्रूपशमनार्थमित्यर्थः । अन्यः शिवभिन्नः उत्थानः 'दक्षे तु चतुरपेशल पटवः सूत्थान उष्णश्च' इत्यमरात्सूत्थानः । दक्ष इतियावत् । न विद्यते नैवोपलभ्यत इत्यर्थः । यथावा काव्यप्रकाशे—'प्राभ्रभ्राड्विष्णुधामाप्यविषमाश्वः करोत्ययम् । निद्रां सहस्रपर्णानां पलायनपरायणाम्' । अत्र प्राभ्रभ्राड्विष्णुधामविषमाश्वनिद्रासहस्रपर्णशब्दाः प्रकृष्टजलदगगनसप्ताश्वसंकोचसहस्रपत्राणामवाचका इति ॥ ३१ ॥ अथाश्लीलत्रये प्रथमं व्रीडाश्लीलाख्यं वाक्यदोषमुदाहरति—**चिरमिति** । **सुन्दरीति** । सुभगाभगमित्यर्थः । तन्द्रां सुखलेशाभासानुसंधानेनासावधानतामित्यर्थः । **चन्द्रेति** । शशिशेखरचरणमित्यर्थः । अत्र स्मरमन्दिरपदमुपसर्पणपदं च व्रीडाजनकमित्यश्लीलत्वेऽपि व्रीडाख्यवाक्यदोषत्वं बोध्यम् ॥ ३२ ॥ एवं जुगुप्साख्यं तद्भेदमुदाहरति—**वायुरिति** । कान्तां प्रतीति शेषः । उत्सर्गेण सामान्येन । 'उत्सर्गो वर्जने योगे सामान्ये न्यायदानयोः' इति विश्वः । अत्र वायुवान्तोत्सर्गप्रवर्तनशब्दाः क्रमादपानवायुवमनपुरीषतत्त्यागभूयस्त्ववाचकत्वाज्जुगुप्साद्योतकाः । यथावा काव्यप्रकाशे—'तेऽन्यैर्वान्तं समश्नन्ति परोत्सर्गं च भुञ्जते । इतरार्थग्रहे येषां कवीनां स्यात्प्रवर्तनम्' इति ॥ ३३ ॥ तद्वदमङ्गलाख्यं तमुदाहरति—**श्राद्धमिति** । श्रद्धया कृतं श्राद्धं विश्वासपूर्वकं संपादितमित्यर्थः । एतादृशं भूतनाथस्य शिवस्य आराधनं उपासनं साधितं सर्वाङ्गसाकल्येन सिद्धिं नीतमित्यर्थः । अस्मै अधिकारिणे निधनात् 'मरणं निधनोऽस्त्रियाम्' इत्यमरान्मरणात्पूर्वमेव प्रागेव सः शिवः निजं स्वकीयं धनं द्रविणवत्प्रियं कैवल्यं ददातीत्यन्वयः । अत्र श्राद्धभूतनाथनिधनपदान्यमङ्गलानीति लक्षणसंगतिः ॥ ३४ ॥ एवं संदिग्धं तमुदाहरति—**न खलो लालितोऽपीति** । अत्र किं खलः, लालितोऽप्ययं यतः उद्धतः अतः प्रमादान् न एतीति वाक्यान्वयः कार्यः, उत प्रमदानयमुद्धतः न खलो लालितोऽप्येतीति संदेहः । तत्राद्ये खलः पिशुनः 'पिशुनो दुर्जनः खलः इत्यमरः । लालितोऽपि प्रियवाक्यादिनानोपचारैरनुनीतोऽपीत्यर्थः । अयं प्रत्यक्षः यतः हेतोः उद्धतः उद्वृत्तः अतः कारणात् प्रमदान् 'मुत्प्रीतिः प्रमदो हर्षः' इत्यमरात् आनन्दानिति यावत् । न

**अहं बद्धोऽस्मि रागित्वादस्य सत्प्रतिपक्षताम् ।**
**प्रथमं पुरुषं वात्र मह्यं विश्वेश भावय ॥ ३६ ॥**
**डिण्डीरपिण्डशिख्यण्डपाण्डुरं गण्डमण्डलम् ।**
**स्वाखण्डेन्दुसतुण्डायाः कश्चण्डीश न मण्डयेत् ॥ ३७ ॥**

---

गति नैव प्राप्नोतीत्यर्थः । द्वितीये **प्रमदेति** । प्रमादायाः कान्तायाः य आनयः आनयनं तत्र या मुत् हर्षः प्रीतिर्वा तया हतः विद्धः । कामातुरः कश्चित्पुरुष इत्यर्थः । अतएव **नखेति** । नखेन नखस्यापि स्पर्शेन याः लोलाक्षबलाः कुमार्य इति यावत् । तासां या आलिः पङ्क्तिस्तामिति सार्वविभक्तिकस्तसिः । कन्यकापङ्क्तिमपि रन्तुं गच्छतीत्यर्थः । स्पष्टमेव शिष्टम् । यथावा काव्यप्रदीपे संदिग्धं यथा—'सुरालयोल्लासपरः प्राप्तपर्याप्तकम्पनः । मार्गणप्रवणो भास्वद्भूतिरेष विलोक्यताम्' । अत्र सुरालयेति देवगृहमदिरामन्दिरयोः प्राप्तपर्याप्तकम्पन इति प्राप्तसैन्यत्वप्राप्तकम्पत्वयोरुपस्थापकम् । एवमग्रेऽपीति ॥ ३५ ॥

तद्वदप्रतीतमप्युदाहरति—**अहं बद्धोऽस्मीति** । हे विश्वेश । एतेन प्रार्थितपूरणार्हत्वं ध्वनितम् । अहं रागित्वाद्बद्धोऽस्मीत्यत्र रागित्वादित्यस्य हेतोः सत्प्रतिपक्षतां त्वं नित्यमुक्तः पारमार्थिकत्वेन शुद्धचित्त्वादित्याद्युपदेशेन साध्याभावसाधकहेत्वन्तरवत्तां वा अथवा अत्र वाक्ये अस्मीति लट् उत्तमपुरुषाख्यातस्थाने प्रथमं पुरुषं अस्तीति तदीयमेव प्रथमपुरुषप्रयोगं मह्यं भावय भवितुर्भवनानुकूलो व्यापारविशेषो भावनेत्युक्तलक्षणभावनाशब्दितोत्पादनाभिधक्रियाविषयीकुर्विति योजना । एवंच हेतोः सत्प्रतिपक्षतापादनेनाथवाख्यातस्य प्रथमपुरुषत्वोपादनेन क्रमान्मह्यं विधिमुखेनैवाद्वैतब्रह्मतया नित्यमुक्तत्वं अहंकारस्यैव बद्धत्वबोधनद्वारा निषेधमुखेन वा तथात्वं बोधयेति भो भगवन् भक्तस्य मम त्वां प्रतीयं प्रार्थनेति तात्पर्यम् । अत्र सत्प्रतिपक्षप्रथमपुरुषभावनाशब्दाः क्रमाम्न्यायव्याकरणमीमांसामात्रप्रसिद्धा इत्यप्रतीतत्वम् ॥ ३६ ॥

ग्राम्यमुदाहरति—**डिडीरेति** । हे चण्डीश गौरीपते, कः पुरुषः स्वेति अखण्डः पूर्णः स चासाविदुश्चन्द्रस्तेन समानं तुण्डं मुखं यस्याः सा तथा स्वस्य या अखण्डेन्दुसतुण्डा तस्या इत्यर्थः । 'डिण्डीरः पुरुषे स्मृतः । फेने वातिक्षणे चापि' इति विश्वात् डिण्डीरस्य फेनस्य यः पिण्डस्तथा शिखिनो मयूरस्य यदण्डं सच तच्च ते तयोरिव यत् पाण्डुरं पाण्डुवर्णं एतादृशं यद्गण्डमण्डलं कपोलस्थलं तदित्यर्थः । न मण्डयेन्नालंकुर्यात् । अपि तु सर्वोऽप्यलंकुर्यादेवेति संबन्धः । अयंभावः—अयि परमात्मंस्त्वया 'स एको ब्रह्मण आनन्दः । श्रोत्रियस्य चाकामहतस्य' इति, 'काम एष क्रोध एषः' इत्याद्यारभ्य जहि शत्रुं महाबाहो कामरूपं दुरासदम्' इत्यादिश्रुतिस्मृतिशतैर्मुमुक्षोः कामस्यैव सर्वथा त्याज्यत्वं विहितं तत्तुदुर्घटमेव । यद्यपि परकीयादिविषयं तं कश्चिद्वर्जयेत्तथापि स्वस्य प्रवासादिना क्वचिद्विरहे स्वकीयायास्तत्रापि पूर्णचन्द्रव-

**मधुमुख्यघनाधीनधियां नः काधिवेधिका।**
**विना विनाशुनासीरहीरहारिहरिस्मृतिम्॥ ३८॥**
**विपरीतेन रामेण तथैवाखिलसाक्षराः।**
**एतेषां कमलाः पुष्टिं कथं यास्यन्त्यमध्यमाः॥ ३९॥**

---

दनायाः डिण्डीरपिण्डवत् पाण्डिमशालिकपोलमण्डलं कस्तूरीतिलकादिना भूषयितुमनुत्सुक एतादृशः कः पुरुषोऽस्त्यत्र संसारे। यतः सर्वस्यापि पुरुषत्वावच्छिन्नस्य जीवकोटिनिविष्टत्वेन त्वदवरत्वात्सर्वेश्वरोऽपि त्वं चण्डीशस्तस्मात्स्वकीयाविषयकस्य तस्य वर्जनं दुर्घटमेवेति। अत एवोक्तम्—'अनुरक्ताङ्गनालोललोचना लोचनाकृति। स्वस्थीकर्तुं मनः शक्तो न विवेको महानपि' इति। अत्र 'डिण्डिरोऽब्धिकफः फेनः' इति ह्रस्वोऽयम्। अमरपाठस्तु प्रामादिक एव। रामाश्रम्यां ह्रस्वस्यैव व्याख्यातत्वात्। इह पिण्डाण्डगण्डतुण्डशब्दास्तु ग्राम्या एवातो लक्षणसंगतिः॥ ३७॥ तद्वन्नेयार्थमुदाहरति—**मधुमुख्येति**। मधुर्वसन्ते चैत्रे च दैत्ये पुष्परसेऽपि च' इति कोशान्मधुर्वसन्तस्तस्य यः मुख्यः 'सखा रतीशस्य ऋतुर्यथा वनम्' इति श्रीहर्षवचनात् प्रीतिविषयत्वेन पूज्यवत्प्रियः यो मदनस्तस्य यद्धनमिव सर्वस्वत्वाधिकरणं यौवनं तद्वत्यस्तरुण्य एव तदधीना तदनुरक्तत्वात्तत्परवशा धीर्बुद्धिर्येषां कामुकानामित्यर्थः। एतादृशा नः अस्माकं विना पक्षिराजेन गरुडेन। **शुनासीरेति**। 'वृद्धश्रवाः शुनासीरः पुरुहूतः पुरंदरः' इत्यमराच्छुनासीर इन्द्रः तस्य हीर इव शुक्लकुसुमः पारिजातः तं हरति सत्यभामातुष्ट्यर्थं अपहरति इन्द्रं पराजित्यानयतीति तथा सचासौ हरिः श्रीकृष्णस्तस्य स्मृतिस्ताम्। विना आधिवेधिका मन्मथकृतमानसव्यथानाशिनीत्यर्थः। का। न कापीति संबन्धः। एवमहर्निशं युवतिचिन्तने कृतेऽप्येकां भगवत्स्मृतिं विना न कापि कान्तास्माकं संतापोपशान्तिकारिणी भवतीत्यतः सैव भजनीयेति भावः। अत्रातिलाक्षणिकवाक्यत्वात्तथात्वं बोध्यम्। मध्वादिपदव्यङ्ग्यं तूद्दीपनविभावादि स्वयमेवोह्यम्। हरेरुक्तविशेषणेनेश्वरस्याप्येवं रमणीवशवर्तित्वे कैव कथा पामराणामस्माकमतस्तद्वेदनाभिज्ञः सर्वज्ञः स एव शरणीकरणीय इति द्योत्यते॥ ३८॥ अथ प्रतापरुद्रीयमते स्वसंकेतमात्रसार्थकत्वलक्षणं नेयार्थमेवोदाहरति—**विपरीतेनेति**। अत्र हल्मात्रवैपरीत्यं विवक्षितं तेन मारेणेत्यर्थः। **अखिलेति**। अत्रापि अखिलाश्च ते साक्षराश्चेति कर्मधारयः। सर्वविद्वांसः। तथैव विपरीता एव अखिलपदं विहायैव वैपरीत्यं विवक्षितम्। तथात्वे राक्षसा एवेत्यर्थः। सन्तीति शेषः। सर्वेऽपि पण्डिताः स्मरशरखण्डिताः सन्तीत्याशयः। अस्त्वेवं का हानिरित्यत्राह—**एतेषामिति**। निरुक्तानां विदुषां अमध्यमाः न विद्यते मध्ये मध्यभागे मः मकारो यासां तास्तथा एतादृश्यः कमलाः मकारशून्यत्वे कलाः पाण्डित्यादिचातुर्यं इति यावत्। पक्षे अमध्यमाः अस्य 'अकारो वासुदेवः स्यात्' इति कोशाद्विष्णोर्याः

क्लिष्टादित्रितयं त्वत्र समासादावपि स्थितम्।
क्रमेण सप्रसङ्गं तद्विज्ञेयं लक्ष्यलक्षणैः ॥ ४० ॥
परमेष्ठिघटोद्भूतासुतसब्रह्मचारिणम्।
तरङ्गिणीन्द्रकन्येशशस्त्रांशारातिमाश्रये ॥ ४१ ॥
दूरान्वितं भवेत्क्लिष्टं वाक्यं व्यस्तपदं यदि।
कस्येशतां गतं पूर्णमतीत्य विधुमण्डलम् ॥ ४२ ॥

मध्यमाः 'स्यान्मध्यमा दृष्टरजाः' इत्यमरान्नूनतरुणीत्वेनातिप्रिया इत्यर्थः। एतादृश्यः कमलाः लक्ष्म्यंशीभूताः संपद इतियावत्। पुष्टिं समृद्धिं कथं यास्यन्तीत्यन्वयः। कामपारतन्त्र्ये हि विदुषामपि मदान्धत्वेन राक्षसत्वात्तेषां युक्तसंपत्तयश्च नैव कालत्रयेऽपि वर्धन्त इति कामजय एव कार्य इति तात्पर्यम्। किंच 'मध्यमं चावलग्नं च' इत्यमराद्यास्तावदमध्यमाः शून्यमध्यास्तेन परमकृशाङ्गीत्वात्तासां कमलानां कस्य हिरण्यगर्भस्यापि मलो रागावलेपो याभिस्तासां गौरीभारत्यादीनां देहस्थौल्यलक्षणपुष्ट्याक्षेपो युक्त एवेति भावः। अत्र विपरीतेत्यादिस्वसंकेतैकसिद्धमिति तत्त्वम् ॥ ३९ ॥ एवं क्रमप्राप्ते क्लिष्टादौ वाक्यदोषे वक्तव्ये तत्र समासैकगतत्वनियमस्यासंभवाद्धम्मिल्लस्येत्यादिवक्ष्यमाणकाव्यप्रकाशोदाहरणादौ तस्य व्यस्तगतत्वेनापि दृष्टत्वादिति तस्य पदगच्युतसंस्कृत्यादिदोषवत्समासादिसाधारण्यमेव पदगतक्लिष्टादिवत्समासैकगतत्वव्युदासार्थं कथयति—**क्लिष्टादीति**। क्लिष्टाविमृष्टविधेयांशविरुद्धमतिकृतां त्रितयमित्यर्थः। तुशब्दः 'व्युदस्य च्युतसंस्कारम्' इत्यादिपूर्वतरपद्योक्तातिदेशात्मकोत्सर्गवशापादितप्रकृतविषयकतत्साम्यशङ्काव्यावृत्त्यै। अत्र वाक्यदोषप्रकरणे समासादावपि आदिपदाद्व्यस्तपदकदम्बग्रहः। स्थितं वर्तत इतियावत्। अतः बुधैरिति शेषः। सप्रसङ्गं स्मृतस्योपेक्षानर्हत्वं प्रसङ्गस्तेन सहितं वक्ष्यमाणयत्तत्पदसंबन्धविचारविशिष्टं यथा स्यात्तथेत्यर्थः। तत् लक्ष्यलक्षणैः सोदाहरणासाधारणधर्मैः करणैः क्रमेणानुक्रमेण विज्ञेयं बोध्यमिति संबन्धः। एवंच पूर्वोक्तोत्सर्गस्यायमपवाद इति भावः ॥ ४० ॥ तत्रादौ समासगतं क्लिष्टमुदाहरति—**परमेष्ठीति**। 'परमेष्ठी पितामहः' इत्यमरात्परमेष्ठी ब्रह्मा तस्य यो घटः कमण्डलुस्ततः उद्भूतं प्रादुर्भूतं यद्गङ्गाख्यं जलं तस्य सुतः षडाननस्तस्य सब्रह्मचारी सतीर्थ्यस्तमित्यर्थः। स्कन्दभार्गवरामयोः श्रीशंकरादेव विद्यावाप्तिः समकालमिति प्रसिद्धमेव पुराणादौ। एतादृशम्। **तरङ्गिणीति**। तरङ्गिण्यो नद्यस्तासामिन्द्रः समुद्रस्तस्य कन्या लक्ष्मीस्तस्या ईशः विष्णुस्तस्य शस्त्रं सुदर्शनं तदंशः कार्तवीर्यस्तस्य अरातिः शत्रुः परशुरामस्तमिति यावत्। अत्र परंपरैकसंबोध्यार्थकत्वात्समस्तपदसमूहत्वाच्च तादृग्वाक्यक्लिष्टत्वं बोध्यम् ॥ ४१ ॥ अथादिपदसूचितव्यस्तपदघटितवाक्यक्लिष्टस्य वक्तव्यत्वात्प्रथमं तल्लक्षयति—**दूरेत्यर्धेन**। तदुदाहरति—**कस्येति**। अत्र हे कुन्तलाः, भवद्भिः पूर्णं

किं संयमनतोऽद्यापि भवद्भिर्भवतां भवेत् ।
शुद्धशास्त्रं भवेत्कीर्त्यै लसच्छान्ति विपश्चिताम् ॥ ४३ ॥
वावदूका सतां तत्तु प्रत्युतानर्थसार्थकम् ।
व्युत्क्रमानुपलब्धिभ्यां विधेयस्य द्विधेतरत् ॥ ४४ ॥
धिगेतदेव मां यत्तु रक्तमांसैकशालिनीम् ।
नितम्बिनीं दिदृक्षुस्त्वं मयि सत्सङ्गरङ्गिणि ॥ ४५ ॥

---

विधुमण्डलं रमणीमुखं अतीत्य अतिक्रम्य कस्य शिरसः, पक्षे वेधसः ईशतां तदुपरिस्थितत्वेनाधिराजतां, पक्षे स्वामितां गतं प्राप्तं अतएव केशत्वं भवतां प्रसिद्धमेव यतस्तस्माद्भवतां युष्माकं श्लेषाद्भशब्दितनक्षत्रतुल्यमौक्तिकजालवतां, पक्षे नियम्यत्वेन नक्षत्रवतां ज्ञानवतां वा अद्यापि संयमनतः वेणीत्वसंपादनेन, पक्षे योगाभ्यासेन किं भवेदिति संबन्धस्य दूरान्वितत्वाद्यस्तपदसमूहत्वाच्चात्रोक्तक्लिष्टत्वमित्यवधेयम् । यथावा काव्यप्रकाशे—'धम्मिल्लस्य न कस्य प्रेक्ष्य निकामं कुरङ्गशावाक्ष्याः । रज्यत्यपूर्वबन्धव्युत्पत्तेर्मानसं शोभाम्' इति ॥ ४२ ॥ एवं क्रमप्राप्तमविमृष्टविधेयांशं वाक्यदोषं विवृण्वंस्तत्रापि समासगस्य तस्य पददोषोक्तलक्षणतौल्यात्पृथग्लक्षणान्तरानपेक्षतया तदुदाहरणमेवाह—**शुद्धशास्त्रमिति । लसदिति ।** लसन्ती शोभमाना शान्तिर्येषां ते च ते विपश्चितो विद्वांसस्तेषां शोभि शमजुषां विदुषामित्यर्थः । **शुद्धेति ।** शुद्धं शब्दार्थाभ्यांआचार्याचाराभ्यां विचारप्रचाराभ्यां च निर्दोषं एतादृशं यच्छास्त्रं शास्त्रोपलक्षितयावच्छब्दब्रह्माध्ययनत्वावच्छेदकावच्छिन्नान्यतममित्यर्थः । स्पष्टमन्यत् ॥ ४३ ॥ **वावदूकेति ।** वावदूकाश्च ते असन्तश्च तेषां वादमात्रप्राधान्येनासाधूनामिति यावत् । तुशब्दो वैलक्षण्यावद्योती । तत्प्रागुक्तशास्त्रम् । **अनर्थेति ।** अनर्थानां विघातानां सार्थः सङ्घो येन तत्तथा । विघातकमित्यर्थः । यद्वा अनर्थैः सार्थकं सप्रयोजनम् । अनर्थमात्रपर्यवसायीतियावत् । भवतीति शेषः । स्फुटमेवान्यत् । अत्र शुद्धेति लसदिति वावदूकेति च पदत्रयेऽपि शुद्धत्वादिरूपविधेयांशस्यामुख्योक्तत्वापादकसमासपिहितत्वात्समासगताविमृष्टविधेयांशवाक्यदोषत्वमित्याशयः । यथावा काव्यप्रकाशे—'किं लोभेन विलम्बितः स भरतो येनैतदेवं कृतं मात्रा स्त्रीलघुतां गता किमथवा मातैव मे मध्यमा । मिथ्यैतन्मम चिन्तितं द्वितयमप्यार्यानुजोऽसौ गुरुर्माताततातकलत्रमित्यनुचितं मन्ये विधात्रा कृतम्' इति । अत्र मात्रेति लोभेनेत्यनेन योज्यम् । इदं हि लक्ष्मणस्य वचः । तेनात्रार्यस्य तातस्येति चापेक्षितं तत्तु नास्तीति तथेति दिक् । एवं तदसमस्तवाक्यगं तत्कतिविधं किंलक्षणं चेत्साकाङ्क्षायां तदुभयं संक्षिपति—**व्युत्क्रमेति ।** व्युत्क्रान्तविधेयत्वानुपलब्धिविधेयत्वलक्षणाभ्यां हेतुभ्यां इतरदसमासगं अविमृष्टविधेयांशाख्यवाक्यदोषजातं द्विप्रकारकं भवतीति योजना ॥ ४४ ॥ तत्राद्यमुदाहरति—**धिगेतदेवेति ।** एतदेव मां धिगस्तु । एतत्किमित्यत्राह—**यत्त्विति ।**

**सर्वकर्तव्यताभावं निर्दुःखं परमं सुखम् ।**
**सद्यो व्यनक्ति बोधेन योऽसौ शृणु तवेर्यते ॥ ४६ ॥**

तुशब्दो दिव्यसुन्दरीव्युदासार्थः । **सदिति** । सतां ब्रह्मनिष्ठानां यः सङ्गस्तत्र रज्यते संसक्तो भवतीति तथा तस्मिन्साधुसमागमानुरागिणीत्यर्थः । एतादृशेऽपि मयि । **रक्तेति** । एतेनात्यन्तबीभत्सत्वादनादरणीयतरत्वं ध्वनितम् । ईदृशीं नितम्बिनीम् । परतरुणीमितियावत् । यत् दिदृक्षुत्वं द्रष्टुमिच्छति दिदृक्षति दिदृक्षतीति दिदृक्षुस्तस्य भावस्तथात्वम् । निरुक्तयुवतिवदनदर्शनेच्छुत्वमित्यर्थः । भवतीति शेषः । अत्रैतत्पदविवक्षितोक्तकामुकत्वस्योद्देश्यत्वेन तत्र धिक्कारस्य विधेयत्वं विवक्षितम् । तथातु नैव प्रतीयते । उद्देश्यमनुक्त्वैव विधेयस्य प्रथममेव प्रयुक्तत्वात् । काव्यप्रदीपे तावत्—'अनुवाद्यमनुक्त्वैव नाभिधेयमुदीरयेत्' इति वृद्धवचनादित्यादिना सप्रमाणं तथा प्रयोगस्य निषिद्धत्वात् 'अयं विद्वान्'इत्यादौ लोके 'अयमात्मा ब्रह्म'इत्यादावाम्नाये च सर्वत्रोद्देश्यविधेयभावे विधेयस्याप्राप्तत्वेन प्राप्तस्यानुवाद्यस्योत्तरमेव प्रयोगदर्शनाच्च । तस्मादिदं वाक्यं विधेयव्युत्क्रमाख्यविमृष्टविधेयांशरूपतद्दोषदुष्टं बोध्यम् । यथावा काव्यप्रकाशे—'न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः सोऽप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो रावणः । धिग्धिक् शक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः' । अत्र अयमेव न्यक्कार इति वाच्यम् । उच्छूनत्वमात्रं त्वनुवाद्यम् । न वृथात्वविशेषितमिति ॥ ४५ ॥ एवमनुपलब्धविधेयमपि चरमं तदुदाहरति—**सर्वेति** । सर्वकर्तव्यतायाः कृष्यादिना अग्निहोत्रादिना च यावल्लौकिकवैदिकपुमर्थसाध्यतायाः अभावः 'सोऽश्नुते सर्वान्कामान्सह' इत्यादिश्रुतेः 'आपूर्यमाणमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति यद्वत् । तद्वत्कामा यं प्रविशन्ति सर्वे स शान्तिमाप्नोति न कामकामी' इति स्मृतेश्च निखिलकामपूर्त्या ध्वंसो येन तदित्यर्थः । ईर्यते कथ्यत इति यावत् । अत्र योसाविति पदयुगं क्रमादुद्देश्यविधेयाभिधायकतयाभिमतम् । तत्तु न संभवति । यच्छब्दसंनिहितादःशब्दादेः प्रसिद्धार्थबोधित्वात् । तेन विधेयस्यानुपलम्भादनुपलब्धविधेयात्मकाविमृष्टविधेयांशाख्यदोषदुष्टमिदं वाक्यमिति लक्षणसंगतिः । नचैवमस्य त्रैविध्ये मानाभावः शङ्क्यः । काव्यप्रदीपे कण्ठत एव तथोक्तत्वात् । तद्यथा—'न केवलं विधेयस्योपसर्जनत्वव्युत्क्रमत्वाभ्यामेवायं वाक्यदोषः किंतु विधेयानुपस्थित्यापि'इति । उदाहृतं चेदं तत्रैव—'अपाङ्गसंसर्गितरङ्गितं दृशोर्भ्रुवोररालान्तविलासवेल्लितम् । विसारिरोमाञ्चनकञ्चुकं तनोस्तनोति योऽसौ सुभगे तवागतः' । अत्र योऽसाविति पदद्वयं उद्देश्यविधेयार्थकतया विवक्षितम् । उद्देश्यवाचिनो यच्छब्दस्य स्वार्थपरामर्शकतच्छब्दापेक्षितत्वात् । नचैतत्तत्प्रतिपादकं यच्छब्दसान्निध्येनादसादीनां प्रसिद्धपरामर्शकत्वादिति । नन्विदं हि वाक्यं मम गात्रं मम कलत्रं मम मित्रमित्यादिममत्वाभिनिवेशभ्रान्तं कंचित्प्रति कस्यचिदास्त्याद्वैतं ब्रह्म तत्त्व

**परोक्षबहुदूरार्थे तत्पदादःपदे स्मृतः ।**
**तदैकार्थ्ये सति क्व स्यादुक्तोदाहरणं तव ॥ ४७ ॥**
**बाढयच्छब्दसांनिध्याददसः स्वार्थनिह्नवात् ।**
**प्रसिद्धैकार्थबोधित्वात्कुतोऽनौचित्यमत्र नः ॥ ४८ ॥**
**अदःशब्दस्य कोशादावनेकार्थत्वदर्शनात् ।**
**ततो यच्छब्दसांनिध्यात्प्रसिद्धार्थकता न किम् ॥ ४९ ॥**

---

मेवोपदेष्टुमिति तत्र रे चैत्र यः सर्वेत्यादिना प्रातिलोम्यात्स्वर्गादिविषयगाढतरसुषुप्तिप्रातीतिककर्तव्यतावच्छिन्नजीवन्मुक्त्यवस्थाविशेषजन्यसुखेभ्यो व्यावर्तकेन विशेषणत्रयेण विशिष्टं सुखं बोधेन सद्यो व्यनक्ति असौ तवेर्यते इति श्रुणित्यन्वये क्वायं दोष इतिचेन्न । तथापि यत्तदोर्नित्यसंबन्धात्प्रकृते च तदभावादुक्तयुक्तेर्दोषानपायाच्च । तस्माद्युक्तमेवेदमुदाहरणमिति दिक् ॥ ४६ ॥ तत्रोक्तवाक्यस्य निर्दोषत्वादनुदाहरणत्वं शङ्कते—**परोक्षेति** । भो आलंकारिक, हिर्हेतौ । यतः कारणात् । **तदिति** । तदिति अद इति च पदे इत्यर्थः । **परोक्षबहिति** । परोक्षः इन्द्रियव्यवहितः बहुदूरः अतिविप्रकृष्टश्च तावर्थौ यस्ते इत्यर्थः । एतादृशे स्तः । अतः हेतोः तदैकार्थ्ये तयोस्तत्पदादःपदयोः यत् ऐकार्थ्यं व्यवहितार्थकत्वसाधर्म्येणाभिन्नार्थकत्वं तस्मिन्सिद्धे सतीति यावत् । तव उक्तोदाहरणं निरुक्तं सर्वेत्यादिकमनुपलब्धविधेयाख्यमविमृष्टविधेयांशवाक्यदोषोदाहरणं क्व स्यादिति संबन्धः । तथाचाहुः—'इदमस्तु संनिकृष्टं समीपतरवर्ति चैतदो रूपम् । अदसोऽतिविप्रकृष्टं तदिति परोक्षं विजानीयात्' इति । पूर्वपद्ये योऽसावित्यत्रादसो यच्छब्दसांनिध्येन प्रसिद्धार्थैकवाचित्वादुद्देश्यवाचिनो यच्छब्दस्य पूर्वपरामर्शित्वेन स्वार्थसमर्पकतच्छब्दापेक्षित्वादिह तु तदभावादनुपलब्धविधेयत्वमभिमतं तत्तूक्तरीत्यादःशब्दस्यापि तच्छब्दसाधर्म्ये तदर्थवाचित्वान्नैव संभवतीति भावः ॥ ४७ ॥ यत्किंचिदङ्गीकृत्य तत्र निमित्तान्तरेण समाधत्ते—**बाढमिति** । अदसः अदःशब्दस्य यच्छब्दसांनिध्याद्धेतोः स्वार्थनिह्नवादुक्तातिविप्रकृष्टरूपस्वाभिधेयतिरोधानान्निमित्तादित्यर्थः । अत एव । तस्य । **प्रसिद्धेति** । प्रसिद्धार्थपरामर्शकत्वादिति यावत् । तस्मादत्र निरुक्तोदाहरणे नः आलंकारिकाणां कुतः अनौचित्यमित्यन्वयः । तत्र मानं त्वनुपदमेवोक्तं काव्यप्रदीपीयम् ॥ ४८ ॥ ननु यच्छब्दसांनिध्येनादसः स्वार्थनिह्नवः प्रसिद्धैकार्थकथकत्वं च पारिभाषिकमेवेति चेन्न । 'अदः परस्मिन्नत्रापि'इति विश्वाददःशब्दस्य परोक्षापरोक्षोभयवाचित्वस्य सामान्यतः सिद्धत्वेन नानार्थकतया प्रागुक्तस्य नानार्थवाचके शब्दे 'शक्तिग्रहनियामकाः । संयोगादय एवात्र ज्ञेयाः प्राचीनसंमताः' । इत्युक्तस्य संयोगादिनिमित्तकदम्बस्य मध्ये शब्दस्यान्यस्य संनिधिरिति काव्यप्रकाशकारिकोक्तान्यशब्दसांनिध्यस्यापि संगृहीतत्वेन पूर्वपद्योक्तेन यच्छब्दसांनिध्येनादःशब्दस्य प्रसिद्धैकार्थवाचित्वस्य शास्त्रसिद्धत्वादिति

**किंच तत्पदसाधर्म्येऽप्यस्य का नः क्षतिर्भवेत् ।**
**प्रक्रान्तसुप्रसिद्धानुभूतार्थत्वात्तदः खलु ॥ ५० ॥**
**ननु प्रयोगसंसृष्टेस्तयोः केवलयोरपि ।**
**सापेक्षत्वस्य नियमो यत्तदोरेव नेति चेत् ॥ ५१ ॥**
**मैवं तन्नित्यसंबन्धात्सतु शाब्दो द्वयोः स्थितौ ।**
**आर्थस्त्वेकतरस्यापि स्थितौ स्यादस्थितापिवा ॥ ५२ ॥**
**स खरो यो न जिज्ञासुरित्यादौ शाब्द एव सः ।**
**आर्थेऽप्याद्यस्त्रिधा ज्ञेयः प्रक्रान्ताद्यर्थतत्परः ॥ ५३ ॥**

---

किमिति नास्य प्रसिद्धार्थाभिधायित्वं स्यादित्याह—**अदःशब्दस्येति** ॥ ४९ ॥ यदि 'अदसस्तु विप्रकृष्टम्' इत्युक्तवचन एव तव श्रद्धा चेत्तत्रापि तच्छब्दसाधर्म्यमेव यथा तच्छब्दस्य सामान्यतः परोक्षार्थवाचकत्वेऽपि प्रक्रान्तप्रसिद्धानुभूताख्यतद्विशेषत्रयवाचित्वं तत्र तत्र सुप्रसिद्धमेव । वक्ष्यते चात्रैवाग्रे तथा तद्वददसोऽपि वक्तव्यत्वेन प्रसिद्धार्थवाचित्वस्यापि संभवान्न काप्यस्माद्धानिरित्याह—**किंचेति** । अस्य अदःशब्दस्येत्यर्थः । **तत्पदेति** । तत्पदेन तच्छब्देन सह यत्साधर्म्यं परोक्षार्थवाचकत्वरूपसमानधर्मत्वे तस्मिन्सतीति यावत् । तदः तच्छब्दस्येत्यर्थः ॥ ५० ॥ ननु तथापि यदि यत्तदोर्नित्यसंबन्धः स्यात्तदायोऽसौ श्रृण्वित्युक्तोदाहरणे यच्छब्दाकाङ्क्षापूरकतच्छब्दाभावाददःशब्दस्य चोक्तरीत्या प्रसिद्धार्थमात्रवाचकत्वेन विधेयांशापूरकत्वादनुपलब्धविधेयात्मकाविमृष्टविधेयांशाख्यवाक्यदोषत्वं भवेत्तदेव तु न नियतमिति शङ्कते—**नन्विति** । तत्र **हेतुः—प्रयोगेति** । 'स राज्यं गुरुणा दत्तम्' इत्यादौ केवलयोरपि परस्परशून्ययोरपि तयोर्यत्तच्छब्दयोः प्रयोगं संसृष्टेः प्रयोगाणां सम्यगुपलब्धत्वादित्यर्थः ॥ ५१ ॥ समाधत्ते—**मैवमिति** । तत्र हेतुः—**तन्निति** । तयोर्यत्तच्छब्दयोः यो नित्यो व्यभिचारीसंबन्धः परस्परार्थापेक्षार्थकत्वं तस्मादित्यर्थः । अस्त्वेवं तयोर्नित्यः संबन्धस्तथापि काव्यादावेकतरतरप्रयोगोपलब्ध्यन्यथानुपपत्त्या तस्य प्रकारभेदोऽवश्यं वाच्य एव । अतः स कतिविध इत्याकाङ्क्षायां शाब्दादिभेदेन तद्वैविध्यं सनिमित्तं व्युत्पादयति—**सत्विति** । तुशब्दस्तद्विशेषावद्योती । द्वयोर्यत्तच्छब्दयोरुभयोरपि स्थितौ विस्पष्टमेकस्मिन्वाक्ये विद्यमानत्वे सति शाब्दः संबन्धो भवति तथा एकतरस्थितौ यच्छब्दस्य तच्छब्दस्य वा स्थितौ तथा द्वयोरप्यस्थितावपि आर्थे आर्थिकः संबन्धो भवतीति योजना । अतो नैकतरप्रयोगेऽपि तयोर्नियतसंबन्धाभाव इति भावः । तदुक्तं काव्यप्रदीपे—'अनयोः परस्परार्थापेक्षार्थकत्वं नियतमेव । एतदेवोच्यते यत्तदोर्नित्यमभिसंबन्ध इति । सचाभिसंबन्धः शाब्द आर्थो वा । तत्र द्वयोरुपादाने शाब्दः । यथा—'स दुर्मतिः श्रेयसि यस्य नादरः' इति । एकस्य द्वयोरपि वा अनुपादाने त्वार्थ इति ॥ ५२ ॥ तत्राद्यमुदाहरति—**स खर इत्यर्धेन** । यथावा—'मुग्धा मुहु-

**रामस्तां प्रेक्ष्य सानन्दः कौमुदीं सद्विजो यथा ।
जानकी तं भुजं कण्ठे निदधे राक्षसद्विषः ॥ ५४ ॥**

---

विंदधती वदने मुरारेः प्रेमत्रपाप्रणिहितानि गतागतानि । मालादृशोर्मधुकरीव महोत्पले या सा मे श्रियं दिशतु सागरकन्यकायाः' इति । यथावा वासवदत्तायाम्—'कठिनतरदामवेष्टनरेखासंदेहदायिनो यस्य । राजन्ति वलिविभङ्गाः स पातु दामोदरो भवतः' इति । अथ क्रमप्राप्ते द्वितीयस्योदाहरणीयत्वे तद्वैविध्यस्यैकतरस्थित्यस्थितिलरूपप्रयोजकभेदेन प्रागेव सिद्धत्वात्तत्राप्याद्यस्य प्रागुक्तप्रक्रान्तादितच्छब्दार्थत्रैविध्येन त्रिधात्वं बोधयति—**आर्थेऽपीति** । संबन्ध इति शेषः। आद्यस्तदादिशब्दैकतरस्थितिप्रयोज्यो यत्तदोरार्थिकः संबन्ध इत्यर्थः । **प्रक्रान्तेति** । प्रक्रान्तादयः प्रक्रान्तप्रसिद्धानुभूताख्याः । अर्थस्तत्तत्प्रकरणवशात्प्रतिपाद्यो यस्य तादृशं तत्पदं यस्मिन्विषये स तथा प्रक्रान्तप्रसिद्धानुभूतान्यतमवाचकतच्छब्दजन्य इति यावत् । अतएव त्रिधा निरुक्तरीत्या त्रिप्रकारको ज्ञेय इत्यन्वयः ॥ ५३ ॥ तानेव प्रकारान्क्रमेणोदाहरति—**राम इति** । तां रामवर्णनप्रकरणात्सीतामित्यर्थः । तस्यैकपत्नीत्वेन स्त्र्यन्तरावेक्षणजन्यानन्दस्य सुतरामसंभवादिति भावः । तेनात्र तच्छब्दः पूर्वप्रकान्तार्थाभिधायीति तदपेक्षितयच्छब्दसंबन्ध आर्थिक एवेति लक्षणसंगतिः । यथावा काव्यप्रकाशे—'कातर्यं केवला नीतिः शौर्यं श्वापदचेष्टितम् । अतः सिद्धिं समेताभ्यामुभाभ्यामन्वियेष सः' इति । नैषधीयेऽपि—'स्वदृशो जनयन्ति सांत्वनां खुरकण्डूयनकैतवान्मृगाः । जितयोरुदयत्प्रमीलयोस्तदखर्वेक्षणशोभया भयात्' इति । इह तदखर्वेक्षणेति श्रूयमाणस्तच्छब्दः पूर्वं प्रकान्तायाः दमयन्त्याः परामर्शक इति तेन सह यच्छब्दसंबन्ध आर्थिक एवेति । कौमुदीमिति द्वितीयपादेन प्रसिद्धार्थकतच्छब्दोदाहरणम् । सः प्रसिद्धः कौमुदीवीक्षणजन्यानन्दशाली चकोराख्यो द्विजः पक्षी यथा कौमुदीं चन्द्रिकां प्रेक्ष्य सानन्दो भवति तद्वदित्यर्थः । लक्षणसमन्वयः प्राग्वदेव । यथावा कुमारसंभवे—'द्वयं गतं संप्रति शोचनीयतां समागमप्रार्थनया कपालिनः । कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी' इति । जानकीत्यर्धेनानुभूतार्थकतच्छब्दोदाहरणम् । अत्र समुच्चयार्थकोऽपिशब्दोऽध्याहार्यः । तेन जानक्यपि राक्षसद्विषः ताटकादिरावणान्तसकलरजनीचरशत्रोः श्रीरामस्य कण्ठे तं प्राक्स्वयंवरादावनुभूतं भुजं निजबाहुं निदधे गाढं स्थापयामासेति संबन्धः । यथावा भामिनीविलासे—'तन्मन्दमञ्जुहसितं श्वसितानि तानि सा वै कलङ्कविधुरा मधुराननश्रीः । अद्यापि मे हृदयमुन्मुदयन्ति हन्त सायंतनाम्बुजसहोदरलोचनायाः' इति ॥ ५४ ॥

**नन्वस्त्वेवमेकतरस्थित्याख्य आर्थे यत्तदोः संबन्धभेदे तच्छब्दस्य त्रैविध्यव्यवस्था तथापि यदि केवलो यत्र यच्छब्द एवोपलभ्यते तत्र तर्हि कथं तयोः संब-**

**तच्छब्दाक्षेपदक्षो यच्छब्दस्तूत्तरवाक्यगः।**
**पूर्ववाक्यगतस्त्वीप्सेदुपादानं स तद्गिरः॥ ५५॥**
**रे मानस परं साधु कर्तव्यं भवताधुना।**
**यन्निमज्जनमाप्येत सच्चिदानन्दवारिधौ॥ ५६॥**
**यदि वैराग्यमाप्तं चेज्ज्ञानं वा सुदृढं जितम्।**
**इत्यादौ पूर्ववाक्येऽपि यत्तथास्ति तदव्ययम्॥ ५७॥**
**एवं तदानीमित्यस्य सदृशानुपलम्भनात्।**
**यदेत्येवाव्ययं विद्भिरध्याहार्यं तदश्रुतौ॥ ५८॥**

---

न्धनैयत्यमित्यत आह—**तच्छब्देति**। शङ्कोपशमार्थस्तच्छब्दादस्य वैलक्षण्यावद्योतनार्थो वायं तुशब्दः। यच्छब्दस्तु उत्तरवाक्यगः पद्यादिगतद्वितीयवाक्यस्थित एव तच्छब्दाक्षेपदक्षस्तच्छब्दस्य आर्थिकसंबन्धेनाध्याहारक्षमो भवतीति योजना। इह तच्छब्दाक्षेपेत्युक्तेः परोक्षत्वादितदर्थाध्याहारो व्युदस्तो बोध्यः। तत्स्वीकारेऽपि शाब्दबोधासंभवादिति भावः। यथा प्रतापरुद्रीये—'वदान्यो नान्योऽस्ति त्रिजगति समो रुद्रनृपतेर्गुणश्रेणीश्लाघापिहितहरिदीशानयशराः। समन्तादुद्भूतैर्द्विरदमदगन्धैः सुरभयः क्रियन्ते यद्विद्वज्जनमणिगृहप्राङ्गणभुवः' इति। इदमेव व्यत्यासेनोत्तरार्धोदाहरणम्। तु पुनः पूर्ववाक्यगतः पद्यादिप्रथमवाक्यस्थः सः यच्छब्दस्तद्गिरः तच्छब्दस्य उपादानं आर्थिकसंबन्धेन चारितार्थ्याभावाच्छाब्दिकसंबन्धार्थमुच्चारणं ईप्सेत्पद्यादावभिवाञ्छेदित्यन्वयः। तस्मात्पूर्ववाक्ये यच्छब्दश्चेदुत्तरवाक्ये तच्छब्दग्रथनमावश्यकमेवेत्याशयः॥ ५५॥ तदुदाहरति—**रे मानसेति**॥ ५६॥ ननु 'नितरां परुषा सरोजमाला न मृणालानि विचारपेशलानि। यदि कोमलता तवाङ्गकानामथ का नाम कथापि पल्लवानाम्' इति पण्डितरायपद्यादौ पूर्ववाक्यपठितोऽप्यसौ तदाक्षेपकोऽवेक्ष्यत इत्याशङ्क्य सत्यमेवं लोके सन्ति भूरिप्रयोगा इत्यभिसंधाय तादृक्प्रयोगोदाहरणपूर्वकं 'पक्षान्तरे चेद्यदि च' इत्यमरोक्तेस्तस्या प्रयोगस्य पक्षान्तरवाच्यव्ययनिबन्धनत्वमभिदधन्समाधत्ते—**यदीति**। अथ जितं भवेदिति संबन्धः॥ ५७॥ इत्थमुक्तेऽपि यदीत्यादावव्ययत्वेन समाधाने तदानीमित्यव्ययस्य यदा तदा यथा तथा यर्हितर्हि यत्रतत्रेत्यादिवद्यच्छब्दघटितमव्ययान्तरं नोपलभ्यत इति तत्र कथं यत्तदोर्नित्यसंबन्धनिर्वहणमित्यत्राह—**एवमिति**। एव ननु प्रयोगसदृष्टेरित्यायुक्तरीत्येत्यर्थः। तदानीमित्यस्य सदृशानुपलम्भनात् यदेत्यादिवत्तदर्थापेक्ष्यार्थबोधकयच्छब्दावच्छिन्नान्याव्ययानुपलब्धेरिति यावत्। विद्भिः पण्डितैः यदेत्येवाव्ययं तदश्रुतौ निरुक्ताव्ययस्य पद्यादौ कण्ठतः सम्प्रथनाभावे सत्यध्याहार्यमित्यन्वयः। तस्मात्तदानीं शब्दप्रयोगेऽपि यदेत्यादिप्रयोगाभावे तयोरार्थिक एव संबन्ध इति भावः॥ ५८॥ उक्तन्यायमन्यत्राप्यतिदिशति—

**इत्युक्तया दिशैवोह्यं यहीत्यादौ विपश्चिता ।**
**द्वितीयस्त्वेकधैव स्यात्सामर्थ्याद्गमको द्वयोः ॥ ५९ ॥**
**ये कीटैरपि लभ्यन्ते पाण्डित्यं किं तदाप्तये ।**
**निखिलद्वैतविच्छित्तिरखण्डानन्दपूर्विका ॥ ६० ॥**
**यदप्युक्तमदःशब्दे तुल्यत्वं तद्गिरा समम् ।**
**तत्तु दुष्टो मुदं यातु केनापीत्येकरीतितः ॥ ६१ ॥**
**नोचेत्कोशोक्तशक्त्यास्य प्रयोगाः सकला अमी ।**
**अपरोक्षादिके न स्युरन्वयव्यतिरेकतः ॥ ६२ ॥**

---

**इतीत्यर्धेन**। एवं शब्दादिभेदेन यत्तदोः संबन्धद्वैविध्यं विधायाद्यमुदाहृत्य द्वितीयस्यापि एकतरस्थित्यादिभेदेन तथात्वे सिद्धे तत्राद्यमार्थेऽप्याद्यत्रिधेत्यादिनैतावता विविच्याधुनाऽवसरप्राप्तं यत्तदोरुभयोरप्यस्थितौ तयोरार्थिकसंबन्धमेकविधत्वेनाभिधत्ते—**द्वितीय इति**। सामर्थ्यात्। व्यपेक्षयेत्यर्थः। द्वितीयः यत्तच्छब्दोभयश्रवणाभावपक्षः। **एकेत्यादि** ॥ ५९ ॥ तमुदाहरति—**य इति**। ये विषयाः कीटैरपि लभ्यन्ते तदाप्तये तेषां विषयाणां प्राप्त्यर्थं पाण्डित्यं विनियोज्यं किम्। अपितु नैव विनियोजनीयमित्यध्याहृत्यान्वयः। तर्हि क्वास्योपयोग इत्यत्राह—**निखिलेति**। या अखण्डानन्दपूर्विका निरतिशयसुखपूर्विका निखिलद्वैतविच्छित्तिर्यावद्दृश्योच्छित्तिस्तस्यै पाण्डित्यविनियोगः कार्य इति योजना। अत्रोत्तरार्धे यत्तदोरध्याहारं विना पूर्वार्धेन साकमनन्वयापत्तिरिति तदावश्यकतैवेति लक्षणसंगतिः। यथावा मालतीमाधवे भवभूतिः—'ये नाम केचिदिह नः प्रथयन्त्यवज्ञां जानन्ति ते किमपि तान्प्रति नैष यत्नः। उत्पत्स्यतेऽस्ति मम कोऽपि समानधर्मा कालो ह्ययं निरवधिर्विपुला च पृथ्वी' इति। अत्र य उत्पत्स्यते अस्ति वा मम समानधर्मा तं प्रत्ययं यत्न इति स्फुटमेवावगम्यते। तत्र क्रमेण हिशब्दसूचितमुत्पत्त्यादौ काल इत्यादिहेतुद्वयम्। यथाश्रुते हि न पूर्वार्धेन सह कथमप्यन्वय इति दिक् ॥ ६० ॥ ननु निरुक्तरीत्या यदि नित्य एव यत्तदोः संबन्धस्तर्हि भवता किंच तत्पदसाधर्म्येऽप्यस्य का नः क्षतिर्भवेदित्यादिना किमित्यदःशब्दस्य तत्पदसमानार्थकत्वमुररीकृतं तथात्वे 'योऽसौ शृणु तवेर्यते' इत्यत्राविमृष्टविधेयांशत्वाख्यवाक्यदोषदुष्टत्वोदाहरणत्वानापत्तिः। अनुवादकाख्ययच्छब्देनोद्दिष्टेऽर्थे विधायकाख्यतच्छब्दापरपर्यायीभूतस्य विधेयसमर्पकस्यादःशब्दस्य सत्त्वात्। यत्तदोरुद्देश्यादिबोधकत्वं तूक्तमुद्द्योते ससंप्रदायम्। अत्र यच्छब्द उद्देश्यसमर्पक एव तच्छब्दो विधेयसमर्पक इति प्राच इति। तस्मादयुक्तमिदमित्यत आह—**यदपीति**। तद्गिरा तच्छब्देनेत्यर्थः। **तत्त्विति**। दुष्टः खलो वादी केनापि युक्तिजातेन मुदं तोषं यातु गच्छतु इत्येकरीतितः 'तुष्यतु दुर्जनः' इति न्यायेनैवोक्तमिति संबन्धः ॥ ६१ ॥ तत्र वैपरीत्ये बाधं विबोधयति—**नोचेदिति**। **कोशेति**। अदः परस्मिन्नत्रापीति प्रागुदाहृतवि-

**मुग्धे गतागतैः किं ते तरङ्गवदपाङ्गयोः।**
**विवेकोऽसौ न दम्भार्थं किंतु मुक्त्यै श्रुतीरितः॥ ६३॥**
**कुरङ्गनयना यासौ पूर्णेन्दुवदनाङ्गना।**
**मोहात्सर्वस्वमासीन्मे साद्य जीर्णतृणायते॥ ६४॥**
**ननु नैवादसोऽन्यार्थं निषेधामो वयं किल।**
**योऽन्तः शान्तोऽस्य साम्राज्यमित्यादि कथमन्यथा॥६५॥**
**किंत्विदन्तार्थवत्तस्य तच्छब्दार्थकतामपि।**
**वदामः सा तु कोशादावपीति यदि तच्छृणु॥ ६६॥**

---

श्लोकाभिधावृत्त्येति यावत्। **अपरोक्षादिक इति**। आदिपदात्प्रसिद्धपरोक्षार्थग्रहः॥ ६२॥ तत्रान्वयोदाहरणं विस्पष्टयति—**मुग्धे इति**। अत्र तरङ्गवदिति सदृष्टान्तं क्षणिकसुखापादकत्वेन युवत्यपाङ्गयोर्गतागतानां किंशब्दसूचिततुच्छत्वासादकविवेकस्यासावित्यदःशब्देन साक्षिप्रत्यक्षबोधनादपरोक्षार्थविवक्षासत्त्वे अदःशब्दसत्त्वमिति वा विपरीतं वाऽन्वयेनास्य प्रयोगोपलब्धिरस्तीति तात्पर्यम्। यथावा काव्यप्रकाशे—'असौ मरुच्चुम्बितचारुकेसरः प्रसन्नताराधिपमण्डलाग्रणीः। वियुक्तरामातुरदृष्टिवीक्षितो वसन्तकालो हनुमानिवागतः' इति॥ ६३॥ ननु विवेकोऽसावित्यत्राप्यदसोस्तु तच्छब्दसाधर्म्यात्तदर्थकत्वमेव नत्विदंशब्दार्थकत्वमिति वैपरीत्याभिमानिनं प्रत्यन्वय एवोदाहरणान्तरं वदन् व्यतिरेकेऽपि तदाह—**कुरङ्गेति**। **यासाविति**। जीर्णपदेनातितुच्छत्वं व्यज्यते। इह त्वदःशब्दस्येदमर्थकत्वमृते गत्यन्तरमेव नास्तीति प्रत्यक्षार्थविवक्षासत्त्वे अदःशब्दप्रयोगस्यापि सत्त्वमित्यन्वयोदाहरणं निर्विवादमेव। एवं यदि तस्य तच्छब्दपर्यायत्वं तर्हि सत्यस्य स्थाने प्रकृते अदःशब्द एव किमिति न प्रयुक्तः समनुकृष्टो वा स्यात्तेनैव यच्छब्दकाङ्क्षितार्थपूर्तिसंभवादतः प्रत्यक्षाद्यर्थस्य वक्तव्यत्वाभावे अदःशब्दप्रयोगस्याप्यभाव इति व्यतिरेकोदाहरणमपीति तत्त्वम्। काव्यप्रदीपे तु असौ मरुदिति पद्यमुदाहृत्य अत्रादःशब्दार्थमेवाभिदध्यान्न त्विदमर्थमिति तस्य तच्छब्दपर्यायतायां प्रतिबन्दीमभिधाय अथात्र वैपरीत्यादिष्टापत्तिमालम्बसे तर्हि 'करवालकरालदोःसहायो युधि योऽसौ विजयार्जुनैकमल्लः। यदि भूपतिना स तत्र कार्ये विनियुज्येत ततः कृतं कृतं स्यात्' इत्यत्र स इत्येतत्पुनरुक्तं स्यात्। अदःशब्देन तदर्थाभिधानात्' इत्युक्तम्॥६४॥ तत्र स्वाभिसंधिमुद्घाटयन् शङ्कते—**नन्विति**। सोदाहरणं किंचिन्न्यूनाभ्यां द्वाभ्याम्। सिध्येदिति शेषः। यत्रेदंशब्दस्यापि तच्छब्दार्थता तत्रादसैव किमपराद्धं तयोः समानशीलत्वात्। तस्माददसस्तच्छब्दार्थकत्वमपि ब्रूम इत्याशयः। यथावा काव्यप्रकाशे—'यो विकल्पमिदमर्थमण्डलं पश्यतीश निखिलं भवद्वपुः। स्वात्मपक्षपरिपूरिते जगत्यस्य नित्यसुखिनः कुतो भयम्' इति॥ ६५॥ **किंत्विदन्तेति**। तस्य अदःशब्दस्य। तत्र प्रमाणाकाङ्क्षायां 'शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्यव्यवहारतश्च' इत्यभि-

**यच्छब्दानन्तरोर्ध्वस्थः सामानाधिकरण्यभाक्।**
**तच्छब्दोऽपि निरूढोऽस्ति प्रसिद्धैकार्थकः शतम्॥६७॥**
**यत्तदद्वैतमानन्दमात्रमात्माभमक्षयम्।**
**अप्रमेयमपि प्राप्तुं श्रीगुरोः कृपया मया॥ ६८॥**
**तस्माद्यच्छब्दतोऽदूरं स्थित एव विधायकः।**
**तच्छब्दवदिदंशब्दोऽदःशब्दादिरपि ध्रुवम्॥ ६९॥**

---

युक्तवाक्यवशात्कोशं तथात्वेन स्पष्टयति—**सा त्विति**। सा तच्छब्दार्थकतेत्यर्थः। अदःपरस्मिन्नत्रापीति प्रागुदाहृतविश्वकोशे परशब्दितपरोक्षार्थकतच्छब्दार्थकतापि प्रसिद्धैवेति भावः। तत्र स्वकीयं गूढाशयं निबोधयितुमवधानं याचते—**शृण्विति**॥ ६६॥ तमेव गूढाशयं स्फुटयति—**यच्छब्देति**। 'द्वैतसुप्तिर्विचित्रैव येदं दुःखोर्मिमज्जलम्' इत्यादाविदंशब्दस्य यच्छब्दाकाङ्क्षितार्थपूरकत्वेन प्रसिद्धार्थबोधकत्वाभावात्तद्वारणार्थं द्वितीयपादेन विशेषणम्। सामानाधिकरण्यं समानलिङ्गविभक्त्यादिमत्त्वेनैकार्थप्रतिपादकत्वं तद्भजत इति तथेत्यर्थः। 'विषयासक्तचित्तो यः स बोधं कथमाप्नुयात्' इत्यादावतिव्याप्तिरतोऽनन्तरेति। अत्र हि विसर्गेण व्यवधानाद्यच्छब्दाकाङ्क्षितार्थपूरकत्वेन प्रसिद्धैकार्थबोधकत्वाभावात्। विषयेत्याद्युक्तोदाहरण एव यत्तदोर्व्यत्यासेनातिप्रसङ्गव्युदासार्थमूर्ध्वस्थ इति। एतादृशः तच्छब्दोऽपि प्रसिद्धेऽपि प्रसिद्ध एव एकः केवलः अर्थः प्रमेयं यस्य स तथा। प्रसिद्धमात्रार्थबोधक इत्यर्थः। एतादृशः शतं निरूढोऽस्तीति योजना। अत्र अपिशब्देनादःशब्दादीनां निरुक्तविशेषणवैशिष्ट्ये प्रसिद्धैकार्थबोधकत्वेन यच्छब्दाकाङ्क्षितार्थबोधकत्वाभावः कैमुतिकन्यायसिद्ध एवेति ध्वनितम्। एवमेवोक्तं काव्यप्रदीपे—'यच्छब्दाव्यवहितानन्तरवर्ती समानाधिकरणस्तच्छब्दोऽपि प्रसिद्धमात्रे निरूढः किंपुनरिदमादिरिति। विवृतं चेदं काव्यप्रदीपोद्योते नागोजिभट्टैः। प्रसिद्धमात्रे इति। एवंच नायं विधेयसमर्पक इति भावः। 'विभाति मृगशावाक्षी येदं भुवनभूषणम्' इत्यादौ प्रसिद्धबोधकत्वाभावात्समानाधिकरण इति। समानलिङ्गविभक्त्यादिक इत्यर्थः। 'परदारापहर्ता यः स स्वर्गं नाधिगच्छति' इत्यादिवारणायाव्यवहितेति। अत्र तु विसर्गेण व्यवहितः अत्रैव यत्तदोर्व्यत्यासेऽतिप्रसङ्गवारणायानन्तरवर्तीति॥ ६७॥ तदुदाहरति—**यत्तदद्वैतमिति**। **आत्मेति**। आत्मनैव आभातीति तथा स्वप्रकाशमित्यर्थः। एतादृशमानन्दमात्रमिति संबन्धः। यथावा वेणीसंवरणे—'यत्तदूर्जितमत्युग्रं क्षात्रं तेजोऽस्य भूपतेः। दीव्यताक्षैस्तदानेन नूनं तदपि हारितम्' इति॥ ६८॥ नन्वेवं यदि नियमस्तर्हि कीदृशस्य तच्छब्दादेर्यच्छब्दोद्देश्यविधेयबोधकत्वमित्याशङ्कायां यच्छब्दानन्तरेत्याद्युक्तविशेषणव्यावर्तिततत्वेन फलितं वदन्समाधत्ते—**तस्मादिति**। यस्मान्निरुक्तविशेषण एव तच्छब्दादिः प्रसिद्धबोधको नतु विधेयसमर्पकस्तस्माद्धेतोरित्यर्थः। आदिपदादेतच्छब्दोऽपि॥६९॥

**यः श्रिये स गुणः साध्यो यो विदे यं समुच्छ्रयः ।**
**यः शान्त्यर्थमसौ बोधो यो मोक्षायैष संयमः ॥ ७० ॥**
**कथं तर्हि खलो यः स हेय इत्यत्र तत्पदम् ।**
**न प्रसिद्धार्थमिति चेद्विसर्गव्यवधानतः ॥ ७१ ॥**
**यच्छब्दगैकदेशत्वं योऽसावित्यत्र संधिना ।**
**अदसोऽस्तीति तु श्लाघ्या प्रसिद्धार्थकता किल ॥ ७२ ॥**
**यद्येवं नित्यसंबन्धो यत्तदोरस्ति चेत्कथम् ।**
**यद्यन्ममत्वजनकं तत्त्याज्यमिति कथ्यते ॥ ७३ ॥**
**एकेनैव स्वरूपेण यत्तद्भ्यां वस्तुमर्शनम् ।**
**नियतं भवतीत्येवं न वदामो वयं क्वचित् ॥ ७४ ॥**

चतुर्णामपि क्रमेणोदाहरणान्याह—**यः श्रिये इति** । ननु श्रीरपि प्रमादहेतुरत आह—**यो विदे इति** । विदे ज्ञानाय समुच्छ्रयः संपदुत्कर्ष इत्यर्थः । साध्य इति सर्वत्रानुकर्षणीयम् । ननु ज्ञानमपि लोके गर्वाद्यापादकं दृष्टं तत्राह—**यः शान्त्यर्थमिति** । उक्तंहि भगवद्गीतासु—'ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति' इति । तस्या अपि किं स्वतः पुमर्थत्वमणिमादिद्वारा वा, नेत्याह—**यो मोक्षायेति** ॥ ७० ॥ एवं चेन्न केवलं यो महतोऽपभाषते शृणोति तस्मादपि यः स पापभागित्यादौ कुतो न तच्छब्दादेः प्रसिद्धार्थकत्वमित्याशङ्क्य विसर्गेण व्यवहितत्वादेवेति समाधत्ते—**कथमिति** ॥ ७१ ॥ नन्वेवं तु 'योसौ शृणु तवेर्यते' इति प्रागुक्ते अविमृष्टविधेयांशाख्यवाक्यदोषोदाहरणेऽपि विसर्गमूलीभूतसकारस्योत्वादिना अदःशब्दे व्यवहितत्व समानमेवेत्यत आह—**यच्छब्देति** । योऽसावित्यत्र अदसः असावित्यदःशब्दस्य संधिना पूर्वरूपेण यच्छब्दगैकदेशत्वं यच्छब्दे यो इत्याकारके गच्छति पूर्वरूपेणान्तर्निविष्टो भवतीति तथा तादृशः एकदेशः अकाराख्यः पूर्ववर्णो यस्य तस्य भावस्तत्त्वमित्यर्थः । अस्तीति हेतोः पूर्वोक्तयच्छब्दानन्तरोर्ध्वस्थ इत्यादिलक्षणवैशिष्ट्यात् । तु पुनः प्रसिद्धार्थकता किल श्लाघ्या प्रसिद्धार्थकत्वमेव मान्यं भवतीत्यन्वयः । तस्माद्युक्तमेव 'योऽसौ शृणु तवेर्यते' इत्युक्तस्योक्तदोषोदाहरणत्वमिति तत्त्वम् ॥ ७२ ॥ तत्र वीप्सास्थले क्वचिद्यच्छब्दावृत्तावपि तच्छब्दे तददर्शनात्तच्छब्दावृत्तावपि यच्छब्दे वा तददर्शनाच्च द्वितीययदादिशब्दान्निराकाङ्क्षाप्रतीतिः कथं भवति यद्युक्तरीत्या यत्तदोर्नित्य एव संबन्ध इति सोदाहरणं शङ्कते—**यद्येत्यादिना** । तत्समाधातुं प्रतिजानीते—**कथ्यत इति** ॥ ७३ ॥ शास्त्रार्थविशेषं वक्तुं प्रथमं स्वाभिसंधिमजानानमिव मत्वा वादिनं प्रति तं विशदयति—**एकेनैवेति** ॥ ७४ ॥ अथैवमनुक्तौ प्रसिद्धप्रयोगविशेषानुपपत्तिकारणत्वेन द्वाभ्यां विशदयन्नाद्येन प्रथमपठिततच्छब्दबाहुल्य-

**स धन्यः स सुखी लोके स कृतार्थः स सर्वदृक् ।**
**स्मेरापि नैति यच्चित्ते तरुणी हरिणेक्षणा ॥ ७५ ॥**
**यः शान्तो यस्य संबोधो यस्मिन्वैराग्यमुद्भवौ ।**
**स एव म्रियते मुक्त्या मुदेत्यादि न चेत्कथम् ॥ ७६ ॥**
**किंतु ताभ्यां परामर्शमिहैकस्यैव वस्तुनः ।**
**यथाभिमतरूपाभ्यां ब्रूमस्तत्तेऽत्र किं क्षतम् ॥ ७७ ॥**
**किंचाकर्णय बीजं त्वं यत्पदे तत्पदेऽथवा ।**
**द्वित्वापन्नस्तु वीप्सायां यत्र साकल्यसूचकः ॥ ७८ ॥**

---

प्रयोगं स्पष्टयति—**स इति** । यथावा काव्यप्रदीपोद्द्योते—'सः श्लाघ्यः स गुणी धन्यः स शूरः स च पण्डितः । स कुलीनः स विक्रान्तो यस्त्वया देवि वीक्षितः' इति ॥ ७५ ॥ द्वितीयेन प्रथमपठितयच्छब्दबाहुल्यं तमाह—**यः शान्त इति** । यथावा कुवलयानन्दे समुदाहृतम्—'येन ध्वस्तमनोभवेन बलिजित्कायः पुरा स्त्रीकृतो यो गङ्गां च दधेऽन्धकक्षयकरो यो बर्हिपत्रप्रियः । यस्याहुः शशिमच्छिरो हर इति स्तुत्यं च नामामराः सोऽव्यादिष्टभुजंगहारवलयस्त्वां सर्वदो माधवः' इति । आदिपदादुक्तोदाहरणविपरीतमप्युत्तरपठिततच्छब्दबाहुल्यात्मकमुदाहरणान्तरं ज्ञेयम् । यथा—'यस्यास्ति वित्तं स नरः कुलीनः स पण्डितः स श्रुतवान्गुणज्ञः । स एव वक्ता स च दर्शनीयः सर्वे गुणाः काञ्चनमाश्रयन्ति' इति । पक्षे स एव निरुक्तगुणविशिष्ट एव पुरुषः मुक्त्या मुदा 'आनन्दरूपममृतं यद्विभाति' इति श्रुतेरद्वैतात्मानन्दरूपिण्या म्रियते स्वयमेव पाणौ गृह्यत इत्यादिशास्त्रसिद्धान्तरहस्यं न चेत् 'त्यागेनैके अमृतत्वमानशुः' इत्यादिशास्त्रदर्शितत्यागादिसाधनानुपयोगायावद्वेदादिप्रामाण्यं कथं स्यादिति संबन्धः ॥ ७६ ॥ यद्येवमुक्तप्रयोगान्यथानुपपत्त्या यत्तच्छब्दयोः सवाच्यपरामर्शकत्वं नैकेनैव रूपेण तवाभिमतं चेदेकरूपेणापि 'यस्य नास्ति स्वयं प्रज्ञा शास्त्रं तस्य करोति किम् । लोचनाभ्यां विहीनस्य दर्पणः किं करिष्यति' इत्यादौ तयोः प्रयोगाणां सहस्रशः संदृष्टेः किमत्र तवेष्टमिति चेत्तत्स्फुटयति—**किंत्विति** । ताभ्यां यत्तच्छब्दाभ्याम् । इह लोके वेदे च । **यथेति** । एकस्यैव वस्तुनः ब्रूमस्तत्तस्माद्धेतोस्तव । अत्र एतादृग्व्यवस्थायां किं क्षतं, न किमपि नष्टं भवतीति योजना । अत्र यथेति विशेषणेनोक्तोदाहरणद्वयमपि संगतमिति तात्पर्यम् ॥ ७७ ॥ वस्तुतस्तु 'यद्यन्ममत्वजनकं तत्त्याज्यमिति कथ्यते' इति त्वदुक्तोदाहरणे, तथा 'यद्यत्पापं प्रतिजहि जगन्नाथ नम्रस्य तन्मे' इति पूर्वाचार्यैर्बहुग्रन्थेषूदाहृते भवभूतिवाक्ये 'तदोजसस्तद्यशसः स्थिताविमौ वृथेति चित्ते कुरुते यदा यदा । तनोति भानोः परिवेषकैतवात्तदा विधिः कुण्डलनां विधोरपि' इति नैषधीयपद्यादावपि द्वितीयो यच्छब्दप्रयोग एव नास्ति कुतस्तरां ततो निराकाङ्क्षप्रतीतिः कुतस्तमां ततो यत्तदोर्नित्यसंबन्धविरहावसरः, किंतु वीप्सायामयं द्वित्वापन्न आदेश एव । तेनैतादृशस्थले तावदेकमेव पदमिति

**आदेशो वर्तते तत्र नोत्तरत्र स युज्यते ।**
**यो यः साधुः स वन्द्यः स्यात्स स मुक्तो य आत्मवित् ७९**
**यत्रोभयत्र वीप्सैव क्रमभेदविवक्षया ।**
**तत्र रूपद्वयेनैव यत्तद्भ्यां सर्वसंग्रहः ॥ ८० ॥**

---

रहस्यमुपदेष्टुं युक्त्यन्तरकथनव्याजेनाभिमुखयति—**किंचेति**। तदेव प्रपञ्चयति— **यत्पद** इत्यारभ्याप्रिमार्धान्तेन । तुशब्दो विलक्षणयुक्त्यवद्योती । यत्पदे अथवा तत्पदे वीप्सायां विवक्षितायां सत्यां यत्रोदाहरणे साकल्यसूचकस्तद्धर्मावच्छिन्नया-वत्संग्रहद्योतक इत्यर्थः । एतादृशः द्वित्वापन्नः द्वित्वं प्राप्त इतियावत् ॥ ७८ ॥ एवंभूतः आदेशः वर्तते तत्र तादृगुदाहरणे उत्तरत्र यत्पदाद्याकाङ्क्षितार्थपूरकत-तत्पदादौ सः प्रकृतो द्वित्वापन्न आदेशः न युज्यते नैव शास्त्रसंमतो भवतीत्य-न्वयः । उक्तंहि काव्यप्रदीपे—वस्तुतस्तु यद्यदिति न पदद्वयं किंतु 'नित्यवीप्सयोः' इति सूत्रेण वीप्सायां यदो द्वित्वापन्नोऽयमादेशः । तथाचादेशिना एकेन यत्पदेन तत्पदेन च द्वाभ्यामप्येकेनैव रूपेण पापपरामर्शः । आदेशस्तु साकल्येन संबन्धप-रताग्राहक इति यत्पदीयेनैव तेन तदुपपत्तौ न तत्पदेऽपीति । उभयविधमपि तमुदाहरति—**यो य इत्यर्धेन** । यथावा कृष्णभक्तिचन्द्रिकाख्ये नाटके—'येये भिन्नमतावलम्बनरतास्तेषूपदेशेन किं ये चान्ये भुवि विस्फुरन्ति धनिकास्तद्दन्ध्र-णेनापि किम् । श्रीकृष्णस्य निषेवणोत्सवजुषां पुंसां सदा संगतौ नेष्ये कालम-मुष्य केवलकथापीयूषपानैरहम्' इति । द्वितीयोदाहरणेऽपि यथाह भर्तृहरिः— 'क्षान्तं न क्षमया गृहोचितमुखं त्यक्तं न संतोषतः सोढा दुःसहशीतवाततपन-क्लेशा न तप्तं तपः । ध्यातं वित्तमहर्निशं नियमितप्राणैर्न शंभोः पदं तत्तत्कर्म कृतं यदेव मुनिभिस्तैस्तैः फलैर्वञ्चितम्' इति । यत्र तु 'क्षोणीपर्यटनं श्रमाय वि-दुषां वादाय विद्यार्जिता मानध्वंसनहेतवे परिचितास्ते ते नराधीश्वराः । वि-श्लेषाय कुरङ्गसुन्दरदशामास्ये कृता दृष्टयः कुज्ञानेन मया प्रयागनगरे नाराधि नारायणः' इति रसतरङ्गिणीश्लोकादौ केवलं वीप्साघटितस्तच्छब्द एवोपलभ्यते तत्र पूर्वोक्तवर्त्मना यच्छब्दस्यार्थिक एव संबन्ध इति संक्षेपः ॥ ७९ ॥ ननु 'सं-चारिणी दीपशिखेव रात्रौ यं यं व्यतीयाय पतिंवरा सा । नरेन्द्रमार्गाट्ट इव प्रपेदे विवर्णभावं स स भूमिपालः' इति रघुवंशीयपद्यादौ द्वयोरपि वीप्सैव यत्र दृश्यते तत्र व्यवस्थेत्यत्राह—**यत्रोभयत्रेति** । **क्रमभेदेति** । यथात्र नरेन्द्रकन्ययेन्दुमत्या क्रमेणातिक्रान्तानां राजकुमाराणां क्रमेण वैवर्ण्यवर्णनात्क्रमभेदो विवक्षित एव नत्वेककालावच्छेदेनैव सर्वातिक्रमणादिकमिति तद्वदित्यर्थः । **रूपेति** । भिन्नपदा-भिन्नपदात्मनैवेति यावत् । **सर्वेति** । यावतां स्वापेक्षितपूरकतत्तद्धर्मावच्छि-न्नार्थानां संग्रहणमित्यर्थः । तदुक्तं काव्यप्रदीपे—यत्र तु तत्पदेऽपि वीप्सा तत्र न यत्पदेऽप्यादेशः किंतूभाभ्यां रूपद्वयेन सर्वोपस्थापनमिति सारमिति । अत्र क्र-मेत्युक्त्या तदभावे तूत्तरपदे वीप्सानुचितैवेति द्योतितम् ॥ ८० ॥ तामुदाह-

यं यं विषयमादत्ते बुद्धिर्बोधविभूषिता।
तं तं तृणीकरोत्येव सतीव स्वपतीतरम् ॥ ८१ ॥
ससोऽवयव एवेति कान्तायाः स्वान्त आशु मे।
श्रुत्यन्तं चिन्तयेयं यं हन्त शान्तिः कुतोऽन्ततः ॥ ८२ ॥
व्याप्तिप्रत्यायनेच्छैव वीप्सा सा तु परं प्रति।
पञ्चावयववाक्यस्य प्रयोगे भवति ध्रुवम् ॥ ८३ ॥
मदे मोहे च चापल्ये हर्षे वेगोत्सुकत्वयोः।
स्वप्नामर्षोग्रतोन्मादत्रासेष्वपि कदाचन ॥ ८४ ॥

---

रति—**यंयमिति**। यथावा मदीयाद्वैतामृतमञ्जर्याम्—'स्वरसप्रकाशकानां यथा-यथा विकसनं सुविमलानाम्। विमलात्पाषाणादपि तथा तथा जायते रसः स्वच्छः' इति ॥ ८१ ॥ एवं तत्पदपूर्विकायास्तस्यास्तदाह—**सस इति**। हन्तेति खेदे। अहं यं यं श्रुत्यन्तं उपनिषद्भागं चिन्तये मननविषयीकरोमि स सः कान्तायाः सुन्दर्याः अवयव एव श्रुत्यन्तपदे न श्रुतिः कर्णः अन्ते 'अन्तः प्रान्तेऽन्तिके नाशे स्वरूपे च मनोहरे' इति कोशात्समीपे यस्येति व्युत्पत्त्या अपाङ्ग एवेत्यर्थः। मे मम स्वान्ते अन्तःकरणे आशु द्रुतं एति। अभ्यागच्छतीत्यर्थः। अतः शान्तिः अन्ततः यावद्देहपातं कुतो भविष्यतीनि संबन्धः। निःशेषवाङ्मनःकायप्रवृत्त्युपरमात्मिका। ब्रह्मनिष्ठेह वेदान्तैः पुंसः संपद्यते भृशम्' इति वार्तिकसारोक्तरीत्या जीवन्मुक्त्याख्यनिरतिशयशान्तिसाधनस्य वेदान्तविचारस्यापि यदा मयि वैफल्यं तदा नैवास्मिन्देहे किंचित्पुमर्थजातं सिध्यतीत्याशयः ॥ ८२ ॥ ननु वीप्साया एव किं लक्षणमित्यत आह—**व्याप्तीति**। व्याप्तेः साहचर्यनियमरूपत्वेन प्रसिद्धायाः यत्प्रत्यायनं परं प्रति प्रतीतिजननं तस्येच्छेत्यर्थः। अवधारणं लक्षणान्तरव्यावृत्त्यर्थम्। तस्याः नियतं स्थलमाह—**सात्विति**। तु पुनः सा वीप्सा। 'कल्याणानां त्वमसि महसां भाजनं विश्वमूर्ते धुर्यां लिक्ष्मीमथ मयि भृशं धेहि देव प्रसीद। यद्यत्पापं प्रतिजहि जगन्नाथ नम्रस्य तन्मे भद्रं भद्रं वितर भगवन् भूयसे मङ्गलाय' इत्यादावपि निरुक्ता वाक्यव्यक्तिः संमतैवेति न काप्यनुपपत्तिरिति दिक् ॥ ८३ ॥ नन्वत्र ध्रुवमित्युक्त्या तस्या अनियतं स्थानान्तरमप्यस्तीति ध्वनितं तर्हि तत्कतिविधमित्याकाङ्क्षायां तदाह—**मद इति**। एतेषां लक्षणादिकं त्वधस्तादेवोक्तं व्यभिचारिभावप्रस्तावे—**वेगेति**। वेग आवेशः। उत्सुकत्वमौत्सुक्यम्। अपिः समुच्चये। कदाचन नतु नियतमित्यर्थः। सा भवतीत्यनुकृष्य संबन्धः। एवं चास्यानियतमेकमनियतान्येकादशेति मिलित्वा द्वादशैव स्थानानीति सिद्धम्। तद्व्यञ्जकस्तु क्वचित् 'नित्यवीप्सयोः' इति सूत्रेण द्वित्वापन्न आदेशः क्वचित्पदाभ्यास एवेति बोध्यम् ॥ ८४ ॥ तानि द्वादशापि स्थलानि क्रमेण षड्भिरुदाहरन्नादौ पञ्चावयववाक्यगतोदाहरणाख्यतृतीयावयवरूपं तन्नित्य-

**योऽयः स्याद्धूमवान् सः स्याद्वह्निमान्यन्नकुण्डवत् ।**
**पानं कृत्वा हली ब्रूते चैद्य चैद्येति रेवतीम् ॥ ८५ ॥**
**याहि याहि द्रुतं कुञ्जाद्राधे जातोऽरुणोदयः ।**
**गच्छगच्छाद्य मारीच सीतां मोहयितुं सखे ॥ ८६ ॥**
**प्राप्तः प्राप्तः श्रियः कान्तः समायां त्वखिलद्विजाः ।**
**देहि देहि धनुर्बाणं सौमित्रे हन्मि ताटकाम् ॥ ८७ ॥**
**सखि कृष्णोऽद्य मद्गेहं किमु यास्यति यास्यति ।**
**सुप्तो जजल्प राधे त्वं मानं जहि जहीति सः ॥ ८८ ॥**
**प्रहर प्रहराशु त्वं प्रार्थदुष्टं जयद्रथम् ।**
**क्व यासि युधि रामाग्रे रेरे रावण दुर्मते ॥ ८९ ॥**
**कृष्णकृष्णोपयाहीति राधोवाच नवाम्बुदम् ।**
**मातर्नहि नहीत्याह श्रीपतिर्दधिमोषणे ॥ ९० ॥**

---

स्थलमाह—**यो य इत्यर्धेन** । अथैकादशभिरर्धैः क्रमान्मदादीनि तदनियतस्थानान्युपस्थापयति—**पानमित्यादिना** । अत्र चैद्येति जल्पने हलित्वं तथा रेवतीं प्रति तत्रापि द्विरुक्तिपूर्वकं तादृग्भाषणे च पानं कृत्वेति हेतुरिति तत्त्वम् । तेनैतद्वचनहेतुभूतवीप्सायाः मदस्थलीयत्वं स्फुटमेवेत्याशयः ॥ ८५ ॥ **याहीति** । इदं मोहस्थलोदाहरणम् 'मोहो भयादिजा वृत्तिर्याथार्थ्यानवधारिणी' इति प्रागुक्ततल्लक्षणसत्त्वात् । अत्रारुणोदयं विनैव भयात्तत्संभावनमिति सारम् । **गच्छेति** । अत्र चापल्यं स्फुटमेव ॥ ८६ ॥ **प्राप्त इति** । इदं हि दुर्वासःसंयाचितनिशिभोजनकालिकप्रार्थनैकक्षणसंप्राप्तश्रीकृष्णदर्शनाव्यवहितोत्तरसामयिकद्रौपदीवाक्यं धर्मराजं प्रति । ततोऽत्र हर्षस्थलीयत्वं युक्तमेवेति ध्येयम् । अत्र श्रियःकान्त इति साभिप्रायम् । तेन अखिलेति संगच्छते । भोक्तुमिति शेषः । यतोऽत्र जगन्मातुर्लक्ष्म्याः पतिरेव मत्सहायः । समागतस्ततो यावद्ब्रह्माण्डवर्ति यावत्त्रैवर्णिकानामपि भोजनार्थमागमने क्षत्यभावः किं पुनर्दुर्वासःप्रभृतीनामिति रहस्यम् । **देहीति** । इद तु वेगस्थलीयम् । 'अनर्थातिशयाद्वृत्तिरावेगः संभ्रमाभिधा' इति पूर्वोक्ततल्लक्षणस्य ताटकाकर्तृकगर्जनादिनात्र सत्वात्॥८७॥**सखीति**। अत्रौत्सुक्यस्य स्पष्टतरत्वात्तत्स्थलीयमेतत् । **सुप्त इति** । सः श्रीकृष्णः । अत्रापि स्वप्नस्थलीयत्व विशदमेव ॥ ८८ ॥ **प्रहरेति** । 'अमर्षश्चित्तवृत्तिः स्यादन्यनानापराधजा' इति पूर्वोक्ततल्लक्षणस्यात्र सत्वात्तत्स्थलीयमिदम् । **क्वेति** । एवमधिक्षेपावमानादिजन्या ध्वसेच्छुतोग्रतेति प्रागुक्ततल्लक्षणस्येह विद्यमानत्वात्तत्स्थलोदाहरणमेतत् ॥ ८९ ॥ **कृष्णेति** । 'उन्मादो विप्रलम्भादिजातान्यत्रान्यशेमुषी' इति पूर्वोक्तं तल्लक्षणस्येह स्फुटत्वात्तत्स्थलीयमेवेदम् । **मातरिति** । त्रासस्थलीयोदाहरणमेतत् । 'त्रासस्तु चित्तविक्षोभो भीरोर्घोरेक्षणादिना' इत्यधस्तादुक्तलक्षणस्य तस्येह सत्त्वात् ॥ ९० ॥ एवं सपरिकरं सप्रसङ्गमविमृष्टविधेयां-

अम्बया रमतो नित्यं शंभोर्ब्रह्मशिरश्छिदः ।
स्तेनानामपि नाथस्य स्मरणं भवदारणम् ॥ ९१ ॥
सूर्यतुर्यांशनेत्रोऽयं चेदष्टार्धेऽम्बुजे स्थितः ।
कस्तर्हि बाणबाणोऽपि दृक्पद्योऽपि नवास्तथा ॥ ९२ ॥
या जरायाः पुरा रम्या वीक्ष्य तां षष्ठमिन्द्रियम् ।
अगस्तिप्रणतेरूर्ध्वं विन्ध्यतुल्यं कदा भवेत् ॥ ९३ ॥
कमठीपृष्ठकार्कश्यस्तनी प्रोद्भ्राजदीक्षणा ।
ज्वलज्जित्वरहृज्जन्मज्वलना ललनापि किम् ॥ ९४ ॥

---

शाख्यवाक्यदोषमुदाहृत्याधुनावसरप्राप्तं विरुद्धमतिकृदभिधं तमुदाहरति—**अम्बयेति** । शंभोः स्मरणं भवदारणं संसारध्वंसकमस्तीत्यन्वयः । कीदृशस्येत्यत्राम्बयेत्यादित्रीणि विशेषणानि । अम्बया गौर्या सह नित्यं रमतः । क्रीडत इत्यर्थः। तथा ब्रह्मणश्चतुराननस्य यच्छिरस्तच्छिनत्तीति तथा । एवं 'स्तेनानां पतये नमो नमः' इति श्रुतेस्तृतीयं प्रसिद्धमेव । अत्राम्बापदं ब्रह्मपदं स्तेनपदं च क्रमान्मात्रादिप्रतीतिजनकमिति तत्समूहत्वेनेदं निरुक्तवाक्यदोषोदाहरणं युक्तमेवेति बोध्यम् । यथावा काव्यप्रकाशे—'श्रितक्षमा रक्तभुवः शिवालिङ्गितमूर्तयः। विग्रहक्षपणेनाद्य शेरते ते गतासुखाः' । अत्र क्षमादिगुणयुक्ताः सुखमासत इति विवक्षिते हृता इति विरुद्धार्थप्रतीतिरिति ॥ ९१ ॥ अथ प्रतापरुद्रीयमतरीत्या प्रागुक्तापुष्टार्थादिपददोषत्रयं वाक्यगतत्वेनाप्युदाहरन्प्रथममपुष्टार्थमुदाहरति—**सूर्येति** । सूर्येतिद्वादशानां संज्ञा तत्तुर्यांशस्तच्चतुर्थांशस्तत्संख्याकानि त्रीणि नेत्राणि यस्य स तथा । अयं यदि चेदष्टार्धे चतुर्थे अम्बुजे हृत्कमले स्थितः तर्हि बाणबाणः बाणसंख्याकाः पञ्चबाणाः यस्य स तथा एतादृशः मदनः क्व, तथा नवाः नूत्नाः दृक्पद्यः दृक्संख्ये पदे पादौ यासां तास्तथा स्त्रिय इत्यर्थः । ता अपि क्व । नैव गण्यन्त इति योजना । अत्र सूर्यादिपदानां प्रकृतानुपयोगादपुष्टार्थत्वं ज्ञेयम् ॥९२॥ तद्वदप्रयोजकं वाक्यदोषमुदाहरति—**येति** । जरायाः पुरा तारुण्यादौ रम्या रन्तुं क्रीडितुं योग्येत्यर्थः । तां कामिनीं वीक्ष्य षष्ठं 'मनःषष्ठानीन्द्रियाणि' इति श्रीमद्भगवद्गीतोक्तेर्मनःसंज्ञकमिन्द्रियम् । **अगस्तीति** । कुम्भसंभवाय नमनादितियावत् । ऊर्ध्वं विन्ध्यतुल्यं निश्चलमिति यावत् । एतादृशं कदा भवेदित्याशंसा । अत्र जरादिमपदैः प्रकृते विशेषाभावाप्रयोजकत्वमिति ध्येयम् ॥ ९३ ॥ एवं क्रमप्राप्तं पुरुषाख्यवाक्यदोषमुदाहरति—**कमठीति** । कमठी कूर्मी तस्याः पृष्ठं तस्य यत्कार्कश्यं कठोरत्व तद्युक्तौ स्तनौ यस्याः सा तथा । एतेन तारुण्यं सूचितम् । एवमपि कुरूपा चेत्तत्राह—**प्रोद्भ्राजदिति** । प्रकर्षेण विशालत्वादिना उद्भ्राजती हरिणाद्यपेक्षयाप्यतिशोभमाने ईक्षणे नेत्रे यस्याः सा तथा । तत्रापि प्रातिकूल्यं वारयति—**ज्वलदिति** । ज्वलन् देदीप्यमानः अतएव जित्वरः पुंधैर्यजयशील एतादृशः हृदो मनसः जन्म उत्पत्तिर्यस्य स एव ज्वलनोऽग्निर्यस्यां सा तथा

नमद्गौरीकटाक्षेद्धः स्पृष्टहेमाद्रितत्कुचः।
शिवः पुनातु मोहार्चिर्दग्धव्याकुलमानसम् ॥ ९५ ॥
इत्यष्टादशवाक्येऽपि दोषानुक्त्वातिदेशिकान्।
पदैकदेशगान्वक्ष्ये निहतार्थादिकानपि ॥ ९६ ॥
अष्टौ ते निहतार्थं च निरर्थकमवाचकम्।
त्रिधाश्लीलं च संदिग्धं नेयार्थं चेति पाशवत् ॥ ९७ ॥
दोषः पदैकदेशस्य वाक्ये वक्तुं किलोचितः।
न वर्णपदयोः कन्या चरणाङ्गुलिवृद्धिवत् ॥ ९८ ॥

कामुकीत्यर्थः। एतादृशी ललना सुन्दर्यपि किं विरक्तस्य मे। न किंचित्। तुच्छैवेति यावत्। अत्र कठोरवर्णत्वात्परुषत्वं स्फुटमेव ॥ ९४ ॥ तथा जयदेवसंमतमन्यसंगताख्यं तमाह—**नमदिति**। अत्र नमन् अतएव गौरीकटाक्षेणेद्धः समृद्धः अतएव स्पृष्टौ हेमाद्रिसदृशौ तस्याः कुचौ येन एतादृशः शिवः। **मोहेति**। मोहस्य अर्चिरिव अर्चिः, अथवा मोह एव पुत्राद्यासक्तिरेव अर्चिर्ज्वालाविशेषस्तेन दग्धमत एव व्याकुलं मानसं यस्य तं पुनात्विति संबन्धः। अत्र नमत्पदं गौर्या स्पृष्टपदं हेमाद्रिपदेन दग्धपदं व्याकुलपदेन च संगतं प्रतीयत इति ॥९५॥ एवमातिदेशिकान्वाक्यदोषानुपसंहृत्य पदैकदेशगान्दोषान्वक्तुं प्रतिजानीते—**इत्यष्टादशेति**। आतिदेशिकानिति च्छेदः। अतिदेशजानित्यर्थः। एते अष्टादशापि दोषाः पूर्वं पदगतत्वेनोपपादिता एव त एव वाक्यगतत्वेनाप्युक्ता इत्यतिदेशजन्यत्वमेतेषां भवतीति भावः ॥ ९६ ॥ ननु के कतिच ते निहतार्थादिकाः पदैकदेशदोषा इत्यतस्तान् ससंख्यं सदृष्टान्तं चोद्दिशति—**अष्टाविति**। तेऽनुपदं प्रतिज्ञाताः दोषाः अष्टौ सन्तीति योजना। निहतार्थमित्यादयो भावप्रधाना निर्देशाः। यद्यपि प्रकाशादौ पदैकदेशगत्वेन प्रथमं श्रुतिकटुत्वाख्योऽपि दोषः समुपपादितस्तेन सह तत्रैते नव सपन्नास्तथापि तस्य मया वर्णदोष एवान्तर्भूतत्वेन प्रागेवोक्तत्वादिहाष्टावेवोच्यन्त इति ज्ञेयम्। **पाशवदिति**। 'घृणा शङ्का भयं लज्जा जुगुप्सा चैव पञ्चमी। कुलं जातिश्च शीलं चेत्यष्टौ पाशाः प्रकीर्तिताः' इत्यभियुक्तोक्तं पाशाष्टकं यथा त्याज्यमेवमेतद्दोषाष्टकमपि सद्भिस्त्याज्यमेवेति भावः। ॥ ९७ ॥ नच तथाप्येतत्पददोषप्रस्ताव एव प्रपञ्च्य तदेकदेशविषयत्वादिति वाच्यम्। तस्य वाक्यैकदूषकत्वेन तत्प्रकरण एव वक्तुमुचितत्वादिति सनिदर्शनमुपपादयति—**दोष इति**। किलेति वाक्ये इत्यत्र योज्यम्। तेन वाक्य एव वक्तुमुचित इत्यर्थः। तद्व्यावर्त्यमाह—**नेति**। कन्येति तत्र दृष्टान्तः। अयमाशयः—'पादे प्रदेशिनी यस्या अङ्गुष्ठाग्रं व्यतिक्रमेत्। न सा भर्तृगृहे तिष्ठेत्स्वच्छन्दा कामचारिणी' इति सामुद्रिकोक्तेस्तद्दोषस्य यथा कन्यायाः सर्वशरीरदूषकत्वमेव नतु कुष्ठवद्गौरवर्णदूषकत्वं नवा खञ्जत्ववत्पदमात्रदूषकत्वं तेन स तावदती-

**मुनिगीतां विदा श्रोत्रैः पेयां सल्लिङ्गरक्ततः।**
**एत्याभ्रचरतामेधेन्नरकामः सुधान्धसि ॥ ९९ ॥**

---

न्द्रियत्वादुक्तवाक्य एव वक्तुमुचितस्तद्वदिति ॥ ९८ ॥ अथोक्तदोषाष्टकमप्येकेनैव श्लोकेनोदाहरति—**मुनीति**। नरकामः अभ्रचरतामपि एत्य सुधान्धसि एधेदिति संबन्धः। नरस्य मनुष्यत्वोपलक्षितस्य जीवस्य यः कामः अभिलाषः स तथा जीवतर्ष इत्यर्थः। **अभ्रेति**। अभ्रे 'द्योदिवौ द्वे स्त्रियामभ्रं व्योम पुष्करमम्बरम्' इत्यमरात् व्योम्नि चरति गच्छतीति तथा तस्य भावस्तां अष्टाङ्गयोगप्रभावादणिमादिसिद्धिभिराकाशगामितामिति यावत्। तामपि एत्य प्राप्य। एतेन तदग्रे कामनानवसरयोग्यत्वलक्षणं तत्र महत्त्वं ध्वनितम्। **सुधेति**। सुधैव 'पीयूषममृतं सुधा' इत्यमरात् पीयूषमेव अन्धः'भिःसा स्त्री भक्तमन्धोऽन्नम्' इत्यमरादोदनो यस्य तस्मिन् देवत्वविषय इत्यर्थः। एधेद्वृद्धिं प्राप्नुयादिति यावत्। योगसिद्धिभिराकाशगामित्वेऽप्यग्रे देवत्वप्राप्तीच्छा वर्धत एव। अतस्तृष्णावधिर्दुरन्त एवेति भावः। एतेन तत्त्याग एव श्रेयानिति द्योतितम्। नन्वाकाशगामित्वं पिशाचादीनामपि वर्तत एव ततः कथं कामोपशमेन भाव्यमिति चेत्तां विशिनष्टि—**मुनीति**। मुनिभिर्योगशास्त्रप्रणेतृभिः पतञ्जल्यादिभिर्गीतां तत्रतत्र स्तुतामित्यर्थः। अतएव विदा पण्डितेन। अतएव। **सल्लिङ्गेति**। सतः ब्रह्मणः यानि लिङ्गानि हरिहरमूर्त्यादिप्रतीकानि तेषु यो रक्तः अनुरक्तः तस्मात्। सगुणब्रह्मभक्तसकाशादिति यावत्। श्रोत्रैः कर्णद्वारा पेयां पानकरसवत्सादरमास्वादनीयामित्यर्थः। एवं च तस्यामतिपूज्यत्वं व्यज्यते। अत्र मुनिगीतामित्यत्र गीताशब्दो भगवद्गीतायां रूढतम इति अप्रसिद्धेऽर्थे प्रयुक्तत्वात्पदैकदेशे निहतार्थकत्वम्। यथावा कुमारसंभवे—'यश्चाप्सरो विभ्रममण्डनानां संपादयित्रीं शिखरैर्बिभर्ति। बलाहकच्छेदविभक्तरागामकालसंध्यामिव धातुमत्ताम्' इति। अत्र मत्ताशब्दः क्षीबायां सुप्रसिद्ध इति तथा। एवं विदेत्येकवचनादेकस्य श्रोत्रैरिति बहूनां कर्णानां असंभवाद्बहुवचनं पादपूरणमात्रप्रयोजनत्वेन निरर्थकमेव। यथावा काव्यप्रदीपे—'आदावञ्जनपुञ्जलिप्तवपुषा श्वासानिलोल्लासितप्रोत्सर्पद्विरहानलेन च ततः संतापितानां दृशाम्। संप्रत्येव निषेकमश्रुपयसा देवस्य चेतोभुवो भल्लानामिव पानकर्म कुरुते कामं कुरङ्गेक्षणा'। अत्र दृशामिति बहुवचनमविवक्षितार्थमेव वृत्तिपूरणायोपात्तम्। एकस्याः कुरङ्गेक्षणाया दृग्बहुत्वाभावात्। अलसवलितैरित्यादिवद्व्यापारभेदाद्बहुत्वमिति चेन्न। तत्रेक्षणैरितिवदत्र तदनुपादानात्। नच भावसाधनतया दृक्शब्द एव व्यापारे वर्तते। विशेषणानन्वयप्रसङ्गात्। एवं कुरुत इत्यात्मनेपदमपि निरर्थकम्। प्रधानक्रियाफलसंबन्धस्य कर्तर्यविवक्षणात्। ननु 'आशिषि नाथः' इतिवत्कर्त्रभिप्रेतक्रियाफलत्वाभावे आत्मनेपदमसाध्वेव ननु निरर्थकम्। वार्तिककृता 'नाथृ नाधृ याच्ञायाम्' इति धातोर्याचनार्थकत्वे परस्मैपदत्वेऽपि आशीर्वादार्थकत्वविवक्षायां त्वात्मनेपदं विहितम्। नाथत इत्यपि वानिरर्थकमेवाविशेषात्। एवंच

द्वयोरर्थयोर्बहुवचनमसाध्वेवेति । उच्यते । 'आशिषि नाथः' इत्यनेनाशिष्यात्मनेपदं नियमयता अनाशिषि तदभावो बोध्यते । तस्मायाचने तस्य युक्तमसाधुत्वम् । 'स्वरितञितः कर्त्रभिप्राये क्रियाफले' इत्यनेन तु कर्त्रभिप्रेतक्रियाफलविवक्षायां तन्नियमयता पराभिसंबन्धविवक्षायां तन्निषेधः प्रतिपाद्यत इति तत्रैवासाधुत्वं नतु कर्त्रभिप्रेतत्वाभावमात्रे । अतएव कर्त्रभिप्राय इति किं पराभिप्रेतफले माभूदित्यवोचत् । नतु कर्त्रभिप्रेतक्रियाफलत्वाभाव इति । नचात्र पराभिप्रेतक्रियाफलत्वं द्योत्यं किंतु कर्त्रभिप्रेतक्रियाफलत्वाऽद्योतनमात्रमिति नासाधुत्वम् । एवं 'बहुषु बहुवचनम्' इत्येतत्सूत्रं बहुवचनं नियमयद्द्व्येकयोरुपस्थितयोस्तन्निषेधति नतु बहुत्वाविवक्षामात्रे । दृशामित्यत्र च न द्वित्वैकत्वे विवक्षिते येनासाधुत्वं स्यात् । किंतु बहुत्वाविवक्षामात्रमित्यनर्थतैवेति युक्तमुत्पश्यामः । एतेनावयवाभिप्रायेण निरर्थकत्वम् । समुदायाभिप्रायेण त्वसाधुत्वमेवेति चण्डीदासमतमनादेयमिति । विवृतं चेदमुद्द्योते—**आदावञ्जनेति**।भाविविरहेण रुदन्त्याः कस्याश्चिद्वर्णनमिदम् । कुरङ्गीवेक्षणे यस्याः सा । 'कुक्कुट्यादीनामण्डादिषु' इति पुंवद्भावः । सा यत् दृशां संप्रत्येव सतापनाद्यव्यवहितमेवाव्ययानामनेकार्थत्वात् । अश्रुपयसा निषेकं कुरुते तच्चेतोभुवो भल्लानां पानकर्मेवेत्युत्प्रेक्षा । शस्त्र पक्षेन लिप्त्वाग्नौ संताप्य पयसि निक्षिप्यत इति पानकर्मस्वरूपम् । दृशः कामशास्त्रत्वेनाध्यवसायादित्थमुक्तिः । श्वासानिलेनोल्लासितः प्रवृद्धः अतएव प्रोत्सर्पन् समन्तात्प्रसरन्यो विरहजन्माऽनलोऽग्निस्तेन संतापितानाम् । नायिका चेयं भविष्यत्प्रवासपतिका अञ्जनसत्त्वात् । **अलसेति** । अलसवलितैरीक्षणैः को विलोक्यत इत्यादाविवेत्यर्थः । **भावेति** । भावेऽर्थे दृशेः क्विबित्यर्थः । **विशेषणानन्वयेति** । अञ्जनलेपादीनां क्रियायामसंभवादिति भावः । **एवमिति** । अत्र कुरुत इत्यात्मनेपदम् । उत्प्रेक्षितभल्लपानकर्मसाध्यमन्मथसंबन्धिजगद्विजयलक्षणकार्यस्य मृगदृशोऽनभिप्रेतत्वेन तदसंबद्धत्वेन च कर्तृगामिक्रियाफलाभावादनुपपन्नम् । अत एव निरर्थकम् । तद्द्योत्यस्य क्रियाफलगतकर्तृगामित्वस्याप्रत्ययात् । असाधुत्वं तु न । 'कमलवनोद्घाटनं कुर्वते ये' इतिवत्कामदेवगतफलस्य तत्संबन्धिनायिकायामारोपमात्रेण दृग्द्वयेऽपि बहुत्वारोपेण च साधुत्वस्य निरूपयितुं शक्यत्वात् । आरोपफलाभावाच्च निरर्थकत्वमिति । तद्वत्पेयामिति यत्प्रत्ययः विदेति पदान्वयान्यथानुपपत्त्या क्तप्रत्ययार्थे प्रयुक्त इत्यवश्यमभ्युपेयं नोचेद्विम्बमेव व्याहन्येत । तस्माद्विदा अतएव सल्लिङ्गरक्ततः श्रोत्रैः पीतामित्यर्थः संमतः । प्रकृते च यत्प्रत्ययस्याहार्थकत्वेन भाव्येकविषयत्वं स्फुटमेव । विवक्षितं तु व्योमगामित्वसिद्धिसाधनीभूतयोगादिप्रवृत्तौ कारणत्वेन स्वाधिकारपूर्वकं गुरूपदिष्टवर्त्मत्वस्येष्टत्वाद्भूतार्थकत्वमेव । तत्र च यत्प्रत्ययो न वाचक इति पदैकदेशीयमवाचकदोषोदाहरणं बोध्यम् । यथावा काव्यप्रकाशे—'चापाचार्यस्त्रिपुरविजयी कार्तिकेयो विजेयः शस्त्रव्यस्तः सदनमुदधिर्भूरियं हन्तकारः । अस्त्येवैतत्किमु कृतवता रेणु-

**आतिदेशिकदोषाणां विधायैवं निरूपणम्।**
**अथ वाक्यगता दोषाः प्रपञ्चयन्ते यथामतम्॥ १००॥**

काकण्ठबाधां बद्धस्पर्धस्तव परशुना लज्जते चन्द्रहासः'। अत्र विजेय इति यत्प्रत्ययः क्तप्रत्ययार्थेऽवाचक इति, तथा लिङ्गेति मेण्ढ्रवाचित्वेन व्रीडाजनकत्वात्तादृगश्लीलरूपपदैकदेशदोषः स्पष्ट एव। यथावा साहित्यदर्पणे—'पाणिः पल्लवपेलवः' अत्र पेलवशब्दस्याद्याक्षरे अश्लीले इति। तेहि लाटभाषायां पुंगुह्यबोधकत्वेन तत्स्मारकत्वात्तथेत्यपरे। एवं रक्तेति रुधिरबोधित्वाज्जुगुप्साश्लीलाख्यतद्दोषोदाहरणम्। यथावा काव्यप्रदीपे—'यः पूयते सुरसरिन्मुखतीर्थसार्थस्नानेन शास्त्रपरिशीलनकीलनेन। सौजन्यमानजनिरूर्जितमूर्जितानां सोऽयं दृशोः पतति कस्य चिदेव पुंसः'। अत्र पूयेति पूयव्यञ्जकतया जुगुप्सादायीति। एवं नरकेति प्रत्यक्षमेवामङ्गलरूपाश्लीलाभिधपदैकदेशदोषत्वम्। यथावा काव्यप्रकाशे—'विनयप्रणयैककेतनं सततं यो भवदङ्ग तादृशः। कथमेव स तद्वदीक्ष्यतां तदभिप्रेतपदं समागतः'। अत्र प्रेतशब्दोऽमङ्गलमिति। तद्वदभ्रेचरेति संदिग्धम्। तत्र हि किमभ्रे व्योम्नि अभ्रेषु मेघेषु वा चरति गच्छतीति तथेति विवक्षितमाहोस्वित्पूर्वमभ्रमित्यभ्रचर इति वेति तथात्वम्। यथा काव्यप्रदीपे—'कस्मिन्कर्मणि सामर्थ्यमस्य नोत्पतेतराम्। अयं साधुचरस्तस्मादञ्जलिर्बध्यतामिह'। अत्र चरभागो, 'भूतपूर्वे चरट्' इति चरट्प्रत्ययो वा 'चरेष्टः' इति टान्तश्चरधातुर्वेति संदेहात्पूर्वं साधुरिति वा साधुषु चरतीति वा संदेह इति। तथा सुधेति नेयार्थम्। तस्य 'अमर्त्या अमृतान्धसः' इत्यमरादमृतस्थाने प्रयोगकरणेन तथात्वम्। यथावा साहित्यदर्पणे—'संग्रामे निहताः शूरा वचोबाणत्वमागताः'। अत्र वचःशब्दस्य गीःशब्दवाचकत्वे नेयार्थत्वम्। तथा तत्रैव बाणशब्दस्थाने शरीरेति पाठे अत्र पदद्वयमपि न परिवृत्तिसहम्। जलध्यादौ तूत्तरपदम्। वडवानलादौ पूर्वपदमिति॥ ९९॥ एवं निरूपितानातिदेशिकान्दोषानुपसहरन् केवलवाक्यदोषनिरूपणं प्रतिजानीते—

**आतिदेशिकेति। अथेति**। मम्मटभट्टादिमतान्यनतिक्रम्येत्यर्थः। नच पदैकदेशदोषाणां कथमातिदेशिकत्वमिति। श्रुतिकटुत्वादिपददोषशक्यतावच्छेदकावच्छिन्नान्यतमत्वस्य तत्रापि सत्त्वेनैकत्रोपदिष्टस्यान्यत्र कथनमतिदेश इति सुप्रसिद्धातिदेशनिर्दिष्टत्वेन तत्त्वानपायात्। उक्तं हि सपरिकरमिदं काव्यप्रदीपे–'शब्दस्तु त्रिधा—पदं तदेकदेशो वाक्यं च। एवंच तदाश्रितः शाब्दोऽपि त्रिविधः। तत्र पदानां वाक्यघटकत्वेन प्राथम्यात्प्रथमं तद्दोषनिरूपणमिति परमार्थः। तत्रेदं निरूप्यते। एवं पदैकदेशस्य पदापेक्षयापि प्राथम्यात्तद्दोषनिरूपणस्यैव प्राथम्यमर्हतीति। अत्र भास्करः–'सत्यमुच्यते परंतु पददोषेष्वेव यथासंभवं केचित् पदैकदेशदोषाः' इति समाधत्ते। तन्नातिमनोरमम्। अस्त्वेवं तथापि पदैकदेशदोषत्वेन प्रथमाभिधानापादने किमुत्तरमिति। वयं त्वालोचयामः। उपदेशो तावत् प्राथम्यादिविचारणा। अतिदेशस्तूपदेशानन्तरमेव। नच पदैकदेशे दोषः। अतिदेशेनैव त-

**विरुद्धवर्णता वाक्ये रसाद्यनुचिताक्षरैः ।**
**नवोढे प्रौढतामोढुं गाढाश्लेषाद्दढीभव ॥ १०१ ॥**
**ओत्वेनोपहता लुप्ता विसर्गावेह तत्तथा ।**
**रामोऽर्च्यो भवतो यो नो यश ओज इमा अदात् ॥१०२॥**

---

लाभे लाघवात् । नच पदैकदेश एवास्तूपदेशः । पदे त्वतिदेश इति वाच्यम् । पदैकदेशावृत्तीनामपि केषांचित्पदवृत्तित्वेन तदर्थपदेषूपदेशस्यावश्यकत्वादितीति ॥ १०० ॥ अथ विरुद्धवर्णतामेव वाक्यगतदोषेषु प्रथमं लक्षयति—**विरुद्धेति ।** सरसकाव्य एवास्य दोषत्वं नतु चित्रेऽपीति सूचयति—**रसेति ।** आदिना भावादिः । एवंच 'स्वच्छन्दोच्छलत्' इत्यादिपद्ये गङ्गाख्यदेवताविषयकवक्तृरतिसत्त्वेन 'रतिर्देवादिविषया व्यभिचारी तथाञ्जितः । भावः प्रोक्तः' इति लक्षितभावसत्त्वात्तदनुचितकठोरवर्णवत्त्वेपि न क्षतिः । तस्य शब्दचित्रत्वप्रसिद्धेः । तथाच रसाद्यनुचितवर्णवत्त्वं विरुद्धवर्णताख्यो वाक्यदोष इति तल्लक्षणं फलितम् । अत्रानौचित्यं तु प्रातिकूल्यमेव बोध्यम् । तेन तस्य रसास्वादप्रतिबन्धकत्वात्तदपोषकत्वलक्षणतदननुकूलत्वस्य पददोषे सत्वेऽपि न तत्रातिव्याप्तिः । वाक्यस्य पदसमूहतया निरुक्तप्रतिकूलवर्णबाहुल्येन रसास्वादप्रतिबन्धकत्वात्पदस्य तु तदभावेन तदननुकूलत्वमात्रतया तत्पोषस्यैवाजनकत्वात् । तदुदाहरति—**नवोढ इति ।** इदं हि नूतनोद्वाहितां स्वपत्नीं प्रति कस्यचित्कामातुरस्य तत्सख्या वा वचनम् । अत्र ढकारस्य टवर्गीयत्वेन तस्य शृङ्गाररसविरुद्धत्वाल्लक्षणसंगतिः। तदुक्तं काव्यप्रदीपे—'अकुण्ठोत्कण्ठया पूर्णमाकण्ठं कलकण्ठि माम् । कम्बुकण्ठ्याः क्षणं कण्ठे कुरु कण्ठार्तिमुद्धर' इत्युदाहृत्य, अत्र टवर्गः शृङ्गारप्रतिकूलः। 'अटवर्गा' इत्यादिना प्रतिषेधादिति । प्रतापरुद्रीये त्वेतदरीतिकमित्युक्तम् । वाक्यदोषास्तु संगृहीताः काव्यप्रकाशसूत्रे—'प्रतिकूलवर्णमुपहतलुप्तविसर्गं विसंधि हतवृत्तम् । न्यूनाधिककथितपदं पतत्प्रकर्षं समाप्तपुनरात्तम् । अर्धान्तरैकवाचकमभवन्मतयोगमनभिहितवाच्यम् । अपदस्थपदसमासं संकीर्णं गर्भितं प्रसिद्धिहतम् । भग्नप्रक्रममक्रमममतपदार्थं च वाक्यमेव तथा' इति ॥ १०१ ॥ एवमुपहतलुप्तविसर्गाख्यदोषद्वयं लक्षयति—**ओत्वेनेति ।** विसर्गत्वयोग्यत्वेन विसर्गपदवाच्ये सकारे 'ससजुषोरुः' इति रुत्वे 'हशिच' इत्यादिना उत्वे च कृते 'आद्गुणः' इति विहितेन ओकारत्वेनेत्यर्थः । उपहताः पराभूताः । **लुप्ता इति ।** लुप्ता वेत्यन्वयः । सकारे निरुक्तरुत्वोत्तरं 'भोभगोअघोअपूर्वस्य योशि' इति यादेशे 'लोपः शाकल्यस्य' इत्यादिना अदर्शनं प्राप्त इत्यर्थः । **विसर्गा इति ।** अत्र यत्रेत्यध्याहारो बोध्यः । इह अलंकारशास्त्रे । तत् निरुक्तलक्षणं वाक्यदोषद्वयं तथा उपहतविसर्गाख्यं लुप्तविसर्गाख्यं च क्रमेण ज्ञेयमित्याशयः । तद्वयस्त्वं तु प्रागवदेवेति बहुवचनेनैव सूचितम् । तेन सकृदुपहतविसर्गत्वादावप्यदोष इति फलितम् । तदपि नैकव्येनैव विवक्षितम् । अतएवोक्तं काव्यप्रदीपे—नैरन्तर्येणोत्वप्राप्तबहुविसर्गत्वं तथा लुप्तबहु-

**एवं विसर्गबाहुल्यमुक्तमुद्द्योतकृन्मते ।**
**चन्द्रः क्रूरः स्मरः शूरः कठोरः कुसुमाकरः ॥ १०३ ॥**
**विसंधिर्वचनेच्छाभ्यां संधौ वैरूप्यभाग्द्विधा ।**
**ऊरू एणाक्षि ते कान्त्या इभेन्द्रकरजित्वरौ ॥ १०४ ॥**
**अश्लीलक्लिष्टताभ्यां द्वे चन्द्रालोके कुसंध्यपि ।**
**बटवाकलय स्वास्थ्यं कुर्वलं गुर्वनुव्रतम् ॥ १०५ ॥**

विसर्गत्वं च लक्षणम्' इति । ते उदाहरति—**राम इति** । ओजस्तेजः इमाः सर्वगुणवतीः पार्श्ववर्तिनीः पत्नीरित्यर्थः । अत्र क्रमेण चरणद्वये उदाहरणद्वयं बोध्यम् ॥ १०२ ॥ मतान्तरेण दोषान्तरमप्यत्रैवाह—**एवमिति** । नैरन्तर्येणेत्यर्थः । उक्तं वाक्यदोषतया निर्णीतमिति यावत् । तदुदाहरति—'**चन्द्र इति** । इदं हि विरहिण्याः स्वसहचरीं प्रति वाक्यम् । कुसुमाकरो वसन्तः पुष्पित आरामो वा । इदं तूक्तं तत्रैव सोदाहरणम् । एवं बहुविसर्गत्वमपि दोषः । यथा—'स्मरः खरः खलः कान्तः कायः कृशतरः सखि' इत्यादाविति ॥ १०३ ॥ अथ विसंधिं द्वैविध्येन लक्षयति—**विसंधीति** । संधौ संहिताख्ये संनिकर्षे । वचनेच्छाभ्याम् । 'ईदूदेद्द्विवचनं प्रगृह्यम्' इत्यादिना प्रगृह्यत्वविधानपूर्वकं 'प्लुतप्रगृह्या अचि नित्यम्' इति प्रकृतिभावविधायकं यद्वचनं तथा वक्तुर्या इच्छा 'संहितैकपदे नित्या नित्या धातूपसर्गयोः । नित्या समासे वाक्ये तु सा विवक्षामपेक्षते' इत्यभियुक्तोक्तेः संध्यविवक्षा ताभ्यामित्यर्थः । **वैरूप्येति** । विपरीताकृतिशालीत्यर्थः । अतएव द्विधेति संबन्धः । क्रमेण तदुदाहरति—**ऊरू इति** । हे एणाक्षि अयि मृगलोचने, ते ऊरू कान्त्या दीप्त्या । **इभेति** । ऐरावतकरपराभवचतुरावित्यर्थः । जगन्नाथपण्डितैस्त्वेतदश्रव्यभेदत्वेनैव रसगङ्गाधरे प्रतिपादितम् । तद्यथा—अथ स्वेच्छया संध्यकरणं सकृदप्यश्रव्यम् । यथा—'रम्याणि इन्दुमुखि ते किलकिंचितानि' । प्रगृह्यताप्रयुक्तं त्वसकृदेव—'अहो अमी इन्दुमुखीविलासाः' इति । एवंच वाचनिकसंध्यभावीयासकृत्प्रयोगत्वमैच्छिकसंध्यभावीयसकृत्प्रयोगत्वं चेति विसंध्याख्यं वाक्यदोषद्वयं फलितम् । यथावा नैषधीये—'अहो अहोभिर्महिमा हिमागमेऽप्यभिप्रपेदे प्रति तां स्मरार्दिताम् । तपर्तुपूर्तावपि मेदसां भरा विभावरीभिर्बिभरांबभूविरे' इत्यत्र वाचनिकसंध्यभावः । 'यां चिन्तयामि सततं मयि सा विरक्ता साप्यन्यमिच्छति जनं स जनोऽन्यसक्तः । अस्मत्कृते तु परितुष्यति काचिदन्या धिक्तां च तं च मदनं च इमां च मां च' इति भर्तृहरिपद्ये ऐच्छिकसंध्यभावश्च ज्ञेयः । यद्यत्र रसावेशः समाधानं तर्हि पूर्वपद्येऽपि सकृत्त्वं तत्र दण्डवारितमिति दिक् ॥ १०४ ॥ एवं प्रसङ्गाच्चन्द्रालोककृन्मते कुसंध्यभिधमपि दोषान्तरं द्विविधत्वेनाह—**अश्लीलेति** । चन्द्रालोके जयदेवकृते निरुक्तग्रन्थे—**अश्लीलेति** । अश्लीलं देशभाषादिनिन्द्यवस्तुप्रतीतिकरं क्लिष्टं क्लेशोच्चार्यं तच्च तच्चेति तथा तयोर्भावौ ताभ्यामित्यर्थः । कुसंध्यपि कुसंध्याख्यं वाक्यदोषान्तरमपि द्वे द्विःप्रकारकं

**किंचेह दूरविकृतेर्धात्वादेर्विकृतं मतम्।**
**ऐयरुर्गोपिकाः कृष्णं श्लथग्रीव्यः स्खलत्पदाः॥ १०६॥**
**हतवृत्तं तथाभाति च्छन्दोदोषं विनैव यत्।**
**रसानुचितवृत्तिं च श्लोके दोधकवृत्तवत्॥ १०७॥**

भवतीत्यन्वयः। अत्र–'लिङ्गसंख्याविभेदेऽपि विशेषणविशेष्यता। विभक्तिः पुनरेकैव विशेषणविशेष्ययोः' इति वचनाद्वे इति विशेषणस्य द्विवचनान्तत्वेऽपि कुसंधीत्येकवचनान्तेऽपि विशेष्ये न क्षतिः। तत्वं च संधावश्लीलताद्यन्यतरत्वम्। तथाच ग्राम्यादिप्रतीतिजनकसंध्यवच्छिन्नत्वमश्लीलकुसंधित्वं क्लेशसाध्यसंध्यवच्छिन्नत्वं क्लिष्टकुसंधित्वं चेति प्रत्येकं लक्षणं बोध्यम्। तदुक्तं चन्द्रालोके–'कुसंधिपटवागच्छ' इति। व्याख्यातमिदं राकागमे। संधावश्लीलता क्लिष्टत्वं च कुसंधित्वम्। पटो आगच्छेत्यत्र संधावश्लीलता। 'उर्व्यसावत्र तर्वालीमर्वान्ते चार्ववस्थितिः। नात्रर्जु युज्यते गन्तुं शिरो नमय तन्मनाक्' इत्यादौ क्लिष्टत्वमिति। तदुदाहरत्युभयमपि क्रमेण—**बटवाकलयेति**। अत्र बटवेति तृतीयचरणेऽश्लीलत्वम्। कुर्वलमित्यादिचतुर्थे तु संधौ क्लिष्टत्वमिति लक्षणसमन्वयः। हे बटो माणवकेति च्छेदः। आकलय संपादयेत्यर्थः॥ १०५॥ तथा चन्द्रालोके दोषान्तरमपि क्लिष्टसजातीयं व्याकरणक्लिष्टापरपर्यायमत्र संमतमिति क्रमेण सलक्षणोदाहरणम्। तदाह–**किंचेहेति**। निपातद्वयमिदं समुपपादितैतत्समतक्लिष्टकुसंध्यादिदोषसमुच्चयार्थम्। इह पूर्वोदाहृते चन्द्रालोके। **दूरेति। धात्विति।** इमे पञ्चमीषष्ठ्यौ। तथाच धातुप्रत्ययसंबन्धिनी या दूरविकृतिरतिव्यवहितपरिणतिस्तस्या हेतोरित्यर्थः। विकृतं मतं एतन्नामक वाक्यदोषजातं संमतमिति संबन्धः। तद्यथा चन्द्रालोके—'विकृतं दूरविकृतेरैयरुः कुञ्जराः पुरः' इति। विवृतं चेदं राकागमे। दूरविकृतेर्महतो धातुप्रत्ययविकारादुत्पन्नम्। जौहोत्यादिकत्वेन श्लुविकरणस्य ऋ गताविल्यस्य श्लौ द्वित्वे उरदत्वे रेफलोपे 'अर्तिपिपर्त्योश्च' इत्यभ्यासस्येत्वे 'अभ्यासस्यासवर्णे' इतीयङि 'सिजभ्यस्तविदिभ्यश्च' इति जुसि 'जुसि च' इति गुणे आडागमे 'आटश्च' इति वृद्धौ ऐयरुः इति लङि रूपमिति। तदुदाहरति—**ऐयरुरिति**। गोपिकाः श्लथग्रीव्यः विस्रंसद्वसनग्रन्थयः स्खलत्पदाश्च सत्यः कृष्णं ऐयरुः प्रापुरित्यर्थः॥ १०६॥ इदानीं क्रमप्राप्तं हतवृत्तं लक्षयति—**हतेति**। यत् छन्दोदोषं विनैव। च्छन्दःशास्त्रोक्तदूषणमन्तरैवेत्यर्थः। तथा दूषितमिवेति यावत्। भाति परिस्फुरति तद्धतवृत्तमित्यध्याहृत्य योज्यम्। उदाहरणं त्वत्रैतदेव। इह प्रथमपादान्तिमाक्षरस्य 'पञ्चमं लघु सर्वत्र सप्तमं द्विचतुर्थयोः। षष्ठं दीर्घं तु पादेषु शेषेष्वनियमो मतः' इति च्छन्दोमञ्जर्युक्तस्य 'श्लोके षष्ठं गुरु ज्ञेयं सर्वत्र लघु पञ्चमम्। द्विचतुःपादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः' इति श्रुतबोधोक्तस्य श्लोकाख्यवृत्तस्य लक्षणसत्वाच्छन्दोदोषं विनैव गुरुत्वमपेक्षितमिवाबभातीति लक्षणसंगतिः। प्रकारान्तरेण तदाह—**रसेति**। चः समुच्चये। हतवृत्तं भवतीति भावः। तत्प्र-

छन्दःशास्त्रोक्तदोषेण सहितं प्रथितं हि तत् ।
आयाति राधाकुञ्जान्तः कृष्ण पश्योत्सुका जवात् ॥१०८॥
यत्रेप्सितपदानुक्तिस्तन्न्यूनपदमुच्यते ।
धर्मराज यशस्ते तु मुक्तिश्रीकर्णभूषणम् ॥ १०९ ॥
तत्राधिकपदत्वं स्यात्पदं यत्रानपेक्षितम् ।
धनान्धभ्रूधनुःशूलदर्शनान्मरणं वरम् ॥ ११० ॥

---

तियोगिरसाद्युचितवृत्तानि तु गुणरत्ने प्रपञ्चयिष्यामः । **शोक इति** । तदुक्तं काव्यप्रदीपे—प्रकृतरसाननुगुणत्वं यथा—'हा नृप हा बुध हा कविबन्धो विप्रसहस्रसमाश्रय देव । मुग्धविदग्धसभान्तररत्न क्वासि गतः क्व वयं च तवैते' । इदं दोधकवृत्त शोकाननुगुणं तद्विरोधि हास्यव्यञ्जकत्वादिति । एवं वक्ष्यमाणवृत्तरीत्यान्यदप्युदाहार्यम् ॥ १०७ ॥ एवं पारिभाषिकं हतवृत्तं द्विधाभिधायाधुना प्रसिद्ध तु तदनेकभेदभिन्नमित्युपलक्षणविधया पिण्डीकृत्य जात्यभिप्रायेणैकधैव तत्प्रसिद्ध्याभिधत्ते—**छन्द इति** । हिर्हेतौ । यतश्छन्दःशास्त्रोक्तदोषेण सहितं तत् हतवृत्तं प्रथित प्रसिद्धमेवातो न तल्लक्षणाकाङ्क्षेत्यर्थः । तदुदाहरति—**आयातीति** । अत्र सर्वत्र लघुपञ्चममिति श्रुतबोधादेरनुपदमेवोदाहृतत्वात्तद्विरुद्धस्यात्र धाकारस्य गुरुवर्णस्य सत्वात्तथात्वं बोध्यम् । इयं हि सख्युर्भगवन्तं प्रत्युक्तिः । उत्सुका उत्कण्ठिता । जवाद्रभसादित्यर्थः । उपलक्षणमिदं यतिभङ्गादेरपीति ध्येयम् । तेन 'जानेऽमुना कर्णलतामयेन पाशद्वयेन च्छिदुरेतरेण । एकाकिपाशं वरुणं विजिग्येऽनङ्गीकृतायासततो रतीशः' इति कविप्रसिद्धिविरुद्धप्रतिपादने राकागमकृतोदाहृते पूर्वपादप्रविष्टा चेति यतिभङ्गविशेषस्य संग्रहः । यथावा—'अमृतममृतं कः संदेहो मधून्यपि नान्यथा मधुरमधिकं चूतस्यापि प्रसन्नरसं फलम् । सकृदपि पुनर्मध्यस्थः सन् रसान्तरविज्जनो वदतु यदिहान्यत्स्वादु स्यात्प्रियारदनच्छदात्' इति काव्यप्रकाशकृता यतिभङ्गस्थलमुदाहारि । अत्र हरिणीच्छन्दसि षष्ठे वर्णे समुचिताया यतेश्चतुर्थपादगते हेतिवर्णे भङ्ग इत्यश्रव्यत्वमित्युदाहरणचन्द्रिकापि ॥१०८॥ अथ न्यूनपदं लक्षयति–**यत्रेति** । तदुदाहरति–**धर्मराजेति** । अत्र यशसि मुक्तिश्रीकर्णभूषणत्ववर्णनान्यथानुपपत्तेरवश्यं तत्र पुण्डरीकपदंयशः पुण्डरीकमितिरूपकादिघटितमपेक्षितं तदभावादिदं न्यूनपदमित्यर्थः ॥१०९॥ एवं क्रमप्राप्तमधिकपदं लक्षयति—**तत्रेति** । यत्र अनपेक्षितं निराकाङ्क्षितं पदं अस्तीति शेषः । तदुदाहरति—**धनेति** । धनेन अन्धाः प्रमत्ताः तेषां भ्रूरेव वक्रत्वादिगुणयोगाद्धनुः तदेव श्यामत्वादिना शूलं तस्य यद्दर्शनं तस्मादित्यर्थः । अत्र धनुःशूलान्यतरपदेनैव संत्रासजननव्यञ्जनसिद्धावन्यतरवैयर्थ्यं स्फुटमेवेति भावः । यथावा काव्यप्रदीपे—'स्फटिकाकृतिनिर्मलः प्रकामं प्रतिसंक्रान्तनिशान्तशास्त्रतत्त्वः । अविरुद्धसमर्थितोक्तियुक्तः प्रतिमल्लास्तमयोदयः स कोऽपि' । अत्र स्फटिकमेव निर्मलतायामुपमानं

**पुनरुक्त्यैव संप्रोक्तपदं शब्दादिनिष्ठया ।**
**गोपीभिर्व्रजबालाभिः क्रीडति क्रीडया हरिः ॥ १११ ॥**
**पतत्प्रकर्षमुत्क्षिप्तानुप्रासयमकादिकम् ।**
**बन्धुरन्धान्धुरेवासौ यस्य वृत्तं स्वघातकृत् ॥ ११२ ॥**
**समाप्तपुनरात्तं तत्पूर्णे यद्गृह्यतेऽन्वये ।**
**चन्द्रार्धशेखरः शंभुर्मां पातु गिरिजाधिपः ॥ ११३ ॥**

---

विवक्षितम्। उपात्तेऽप्याकृतिपदे यथाकथंचित्तेनैवोपमितिपर्यवसानादित्याकृतिपदमधिकं नतु व्यर्थत्वादपुष्टार्थेन संकर इति वक्ष्यते । न केवलं समास एव पदाधिक्यं किंत्वसमासेऽपि । यथा—'इदमनुचितमक्रमश्च पुंसां यदिह जरास्वपि मान्मथो विकारः । यदपि च न कृतं नितम्बिनीनां स्तनपतनावधि जीवितं रतं वा'। अत्र कृतमधिकम् । पूर्वार्धवत्तेन विनैव प्रीतिपर्यवसानात् । कृतं प्रत्युत क्रमभङ्गमावहति पूर्वार्धेऽकरणात् । तथाच 'यदपि च न कुरङ्गलोचनानाम्' इति पठनीयमिति ॥ ११० ॥ अथ कथितपदं लक्षयति—**पुनरुक्त्यैवेति । संप्रोक्तेति ।** कथितपदमित्यर्थः । व्यत्ययेनोदाहरति—**गोपीभिरिति** । इयमर्थद्विरुक्तिः । **क्रीडति । रमेति ।** इयं तु शब्दद्विरुक्तिरिति ध्येयम् । एवमन्यमप्युदाहार्यम् । सरस्वतीकण्ठाभरणे लिदं 'पदं पदार्थश्चाभिन्नौ यत्र तत्पुनरुक्तिमत्' इति लक्षणेन पुनरुक्तिमत्संज्ञयैवोक्तम् ॥ १११ ॥ ततः पतत्प्रकर्षं लक्षयति—**पतदिति । उत्क्षिप्तेति ।** उत्क्षिप्ताः परित्यक्ताः अनुप्रासयमकादयः शब्दालंकारास्ते वक्ष्यमाणाः यस्मात्तत्तथेत्यर्थः । तदुदाहरति—**बन्धुरिति ।** यस्य वृत्तं शीलम् । **स्वेति ।** आत्मनाशकं भवति । असौ बन्धुरपि । **अन्धेति ।** अन्धश्चासावन्धुश्चेति तथा 'पुंस्येवान्धुः प्रहिः कूप उदपानं तु पुंसि वा' इत्यमरादन्धकूप एवेत्यर्थः ॥ ११२ ॥ अथ समाप्तपुनरात्तं लक्षयति—**समाप्तेति ।** अन्वये पूर्णे परिसमाप्ते सत्यपि यद्वाक्यं तदन्वय्येव शब्दान्तरेण पुनर्गृह्यते तत्समाप्तपुनरात्तमित्यन्वयः । तदुक्तं काव्यप्रदीपे—'समाप्तपुनरात्तं समाप्तं सत्पुनरुपात्तं वाक्ये समाप्ते पुनस्तदन्वयि शब्दोपादानं यत्रेत्यर्थः' इति । तदुदाहरति—**चन्द्रार्धेति ।** अत्र पालित्यन्तं यथाश्रुतमेवान्वये परिसमाप्तेऽपि गिरिजेत्यादिपदकदम्बं तदन्वय्येव पुनर्गृहीतमिति लक्षणसमन्वयः । यथावा काव्यप्रकाशे—'क्रेंकारः स्मरकार्मुकस्य सुरतक्रीडा पिकीनां रवो झंकारो रतिमञ्जरीमधुलिहां लीलाचकोरीध्वनिः । तन्व्याः कञ्चुलिकापसारणभुजाक्षेपस्खलत्कङ्कणक्वाणः प्रेम तनोतु वो नववयोलास्याय वेणुस्वनः' इति । नन्वहो विमलं जलं नद्याः कच्छे महिषश्चरतीत्यत्र नदीपदमात्रस्यैव कच्छान्वयार्थं पुनरनुकर्षाद्दोषोदाहरणत्वसंमतावव्याप्तिस्संमतौ शते पश्चाशम्न्यायेन पदस्यापि संग्रहो लक्षणे चेदतिव्याप्तिश्चेति चेन्न । उक्तन्यायेन लक्षणे केवलपदस्यापि संग्रहे प्रकृते वाक्यभेदस्यानुभविकत्वेन नदीपदस्य काकाक्षिन्या-

**यत्पदं ह्युत्तरार्धे तदर्धान्तरगवाचकम् ।**
**सद्गुरोः करुणा कामधेनुर्नः क दरिद्रता ॥ ११४ ॥**
**तदिति प्रौढधैर्येण न सीदन्ति कुटुम्बिनः ।**
**अभवन्मतयोगं तद्यत्रानभिमतोऽन्वयः ॥ ११५ ॥**
**स विभक्तेर्भिदा यस्य धीः श्रीर्येन सता स वित् ।**
**मते शक्तेर्यदुन्निद्रा राधा रेमे हरिस्तदा ॥ ११६ ॥**

---

येनावृत्त्याप्यन्वयसंभवेनानुदाहरणत्वादिति हृदयम् ॥ ११३ ॥ इदानीमर्थान्तरैकवाचकं लक्षयति—**यत्पदमिति** । यस्य वाक्यस्य पदं न तु पदानि । तथात्वे प्राधान्यस्य तत्रैव संभवेनासभवापत्तेः । हिर्हेतौ । हेत्वर्थकमेकमेव पदमित्यर्थः । उत्तरार्धे श्लोकस्य द्वितीयदले वर्तते तद्वाक्यमर्धान्तरगवाचकम् । अर्धान्तरैकवाचकत्वाख्यदोषदुष्टमित्यर्थः । तदुदाहरति—**सद्गुरोरिति** । अत्र यस्माद्धेतोः श्रीगुरोः करुणा नः अस्माकं कामधेनुः अस्ति तत्तस्माद्धेतोः दरिद्रता क । न कुत्रापीत्यर्थः । इत्येवं प्रौढधैर्येण कुटुम्बिनः पुष्कलपरिवाराः गृहस्थाः न सीदन्तीति हेत्वर्थकस्य तत्पदमात्रस्योत्तरार्धगतत्वेनार्धान्तरैकवाचकत्वं ज्ञेयम् । तदुक्तं काव्यप्रदीपे—अर्धान्तरैकवाचकम् । द्वितीयार्धगतमप्रधानं हेत्वर्थकमेकं वाचकं यत्र । तथथा—'मसृणचरणपातं गम्यतां भूः सदर्भा विरचयसि च यान्तं मूर्ध्नि घर्मः कठोरः । तदिति जनकपुत्री लोचनैरश्रुपूर्णैः पथि पथिकवधूभिः शिक्षिता वीक्षिता च' । अत्र भूः सदर्भा तन्मसृणचरणपातं गम्यतामिति वाच्यम् । तत्र च तदित्यर्धान्तरगतम् । अत्र निराकाङ्क्षता दुष्टिबीजम् । श्रुतमात्रस्यैव भूसदर्भत्वस्याक्षेपादिना हेतुत्वप्रतीतेरिति । यथावा साहित्यदर्पणे 'इन्दुर्विभाति कर्पूरगौरैर्धवलयन्करैः । जगन्मा कुरु तन्वङ्गि मानं पादानते प्रिये' इति । इदानीं क्रमप्राप्तमभवन्मतयोगं लक्षयति—**अभवदित्यर्धेन** । अनभिमतः कवेरसंमत एवान्वयो यत्रावभासते तद्वाक्यमभवन्मतयोगाख्यदोषग्रस्तमित्यर्थः । कव्यसंमतान्वयभानावच्छिन्नवाक्यत्वं तत्त्वमिति तत्सामान्यलक्षणं बोध्यम् ॥११४॥११५॥ एवं तर्हि सामान्यपदध्वनितास्तस्य केचिद्भेदा अपि वक्तव्यास्ततः के त इत्याकाङ्क्षायां विभक्तिभेदादिनिमित्तभेदेनैव षोढा सनिमित्तांस्तानुदाहरणैः संक्षिपति **स विभक्तेर्भिदे**त्यादिश्लोकत्रयात्मकेन विशेषकेण । सः कवेरसंमतो वाक्यान्वय इत्यर्थः । **विभक्तीति** । सुबादिविभक्तिभेदेनेति यावत् । तमुदाहरति—**यस्येत्याद्य**र्धशेषेण । यस्य पुंसः धीः शास्त्रसंस्कृतमतिरस्ति तथा येन सता 'सन्सुधीः कोविदो बुधः' इत्यमरात्पण्डितेन श्रीः शोभा च लोके भवति स वित् स एव विद्वानित्यन्वयः । अत्र यस्येत्यस्य विशेष्यतया सत्पदार्थोऽभिमतः कवेर्नोचेच्छास्त्राध्ययनमात्रेण विना तत्तच्छास्त्रविवक्षितबुद्धिसंस्कारं विना च तथाऽचरणादिकं पण्डितपदव्यवहार्याः सहस्रशः सन्ति लोके नतु ते तावता 'श्रुतं प्रज्ञानुगं यस्य यस्य प्रज्ञा श्रुतानुगा । असंभिन्नार्यमर्यादः पण्डिताख्यां लभेत सः' इत्यादिशास्त्रस्य 'अधीति-

**आकाङ्क्षाविरहाद्राम शृणु त्वत्कीर्तिरुज्ज्वला ।**
**दृष्टा व्यञ्जनतः कार्ष्ण्ये यशः सितमभूत्कथम् ॥ ११७ ॥**

बोधाचरणप्रचारणैर्दशाश्वतस्रः प्रणयन्नुपाधिभिः' इति कविसमयस्यापि संमताः । तस्मान्निरुक्तपण्डितव्युदासार्थमत्रापि कवेः शास्त्राध्ययनजन्यतत्संमतबोधसंस्कृतत्वसूचकं यस्य धीरिति विशेषणं संमतमेव । तत्तु सतेत्यत्र तृतीयावशाद्विभक्तिभेदेन नैव संभवतीत्येतद्वाक्यं निरुक्तदोषदूषितमित्याशयः । यथावा काव्यप्रदीपे— 'येषां तास्त्रिदशेभदानसरितः पीताः प्रतापोष्मभिर्लीलापानभुवश्च नन्दनतरुच्छायासु यैः कल्पिताः । येषां हुंकृतयः कृतामरपतिक्षोभाः क्षपाचारिणां किं तैस्त्वत्परितोषकारि विहितं किंचित्प्रवादोचितम्' । अत्र यैरित्यस्य विशेष्यतया क्षपाचारिशब्दार्थो विवक्षितः । नच तेन ततस्तथा योगः प्रतीयते विभक्तिभेदात् । अथ यैर्लीलापानभुवः कल्पिताः येषां प्रतापोष्मभिरित्यादिप्रकारेण यच्छब्दाभिधेययोरेव तथान्वयोऽस्तु किं विशेष्यान्तरविवक्षयेति चेन्न । अनुवाद्यानां हि विधेयेनैव साक्षादन्वयो नतु तदनन्तर्भाव्यानुवाद्यान्तरेण । गुणत्वस्योभयत्र तुल्यतया विशेष्यत्वविनिगमनाया अशक्यत्वात् । तदेतदुक्तम् 'गुणानां च परार्थत्वादसंबन्धः समत्वात्स्यात्' इति । अतएव अरुणयैकहायन्या पिङ्गाक्ष्या गवा सोमं क्रीणातीत्यारुण्यादीनां पिङ्गाक्ष्यादिभिर्नान्वयो नापि गवा । तस्या अपि क्रियासाधनत्वेन गुणत्वात् । किंतु क्रयेणैव । कथ तर्हि धर्म्यन्तरस्थैरप्यारुण्यादिभिर्न क्रय इति चेत् । आरुण्यादीनां गोत्वादीनां आर्थसमाजात् । तर्हि तद्वदेवात्राप्यार्थ एव समाजोऽस्त्वितिचेत् । यदि तद्वत्समानविभक्तित्वं भवेत् । कथं तर्हि भवत्यभिमतो योग इतिचेत् । क्षपाचारिभिरिति पाठे कथं सकलयत्पदनिर्दिष्टानां तत्पदेन परामर्शे तेषां सर्वेषां क्षपाचारित्वावगतेरिति । एवं प्रकृतेऽपि स संश्च विदिति पाठ एव योगोऽभिमतः स्यात् । यावद्यच्छब्दवाच्यस्य तत्पदपरामृष्टत्वेन सत्त्वसिद्धेः संभवात् । एवं वक्त्रभिमतपदार्थे पदस्यासामर्थ्यादपि क्वचित्स भवतीत्याह—**मत इति** । तदुदाहरति—**यदित्यर्धशेषेणैव** । राधा यत् यदा उन्निद्रा पूर्वं रतिसुखतृष्णया निद्रितापि पुनः संस्कारात्कुञ्जे कुसुमशय्यायां जागरूकाभूत् तदा तस्मिन्निशीथादौ काले हरिः रेमे चिक्रीडेत्यन्वयः । एतेन तस्यां स्वाधीनपतिकात्वं तस्मिन्ननुकूलत्वं च ध्वनितम् । अत्र यदिति पदं यदेति कालविशेषार्थकतयाभिमतं तत्र तु तस्य शक्त्यभावाद्वाक्यस्य संबन्ध एव न भवतीति लक्षणसंगतिः । यथावा साहित्यदर्पणे—'ईक्षसे यत्कटाक्षेण तदा धन्वी मनोभवः' । अत्र यदित्यस्य तदेत्यनेन संबन्धो न घटते । ईक्षसे चेदिति युक्तः पाठ इति । एवमत्रापि यदोन्निद्रेति पठ्यते चेन्नायं दोष इति ध्येयम् ॥ ११६ ॥ एवमाकाङ्क्षाराहित्यादपि क्वचित्स दृश्यत इत्याह—**आकाङ्क्षेति** । तत्त्वं च पदस्य पदान्तरव्यतिरेकप्रयुक्तान्वयाननुभावकत्वमिति प्रसिद्धमेव । तमुदाहरति—**रामेत्यादिना** प्राग्वदेव । अत्र हे राम, त्वं शृणु इति प्रार्थनावाक्यस्य तथा त्वत्की-

र्तिरुज्ज्वलेति रूपस्य किं श्रोतव्यमिति तदाकाङ्क्षापूरकवाक्यस्य च परस्परमनाकाङ्क्षत्वाद्योयं वक्तुः संमतो योगः स्तवनव्यञ्जनलक्षणः स तु नैव भातीति लक्षणसमन्वयः। तस्योत्तमनायकत्वेन स्वकीर्त्यौज्ज्वल्यश्रवणाकाङ्क्षायाः कालत्रयेऽप्यसंभवात्प्रत्युत त्वत्कीर्तिरुज्ज्वलेति वक्तर्येव त्वं धन्योऽसीत्यादिवद्विरोधिलक्षणया निन्दकत्वपर्यवसानाच्च। यदि राम, शृणु दृष्टाद्य जानकीति पठ्येत तदा साकाङ्क्षमेव। किंचात्र शब्दनैराकाङ्क्ष्यमपि। तद्यथा—यद्यत्र निरुक्ततत्कीर्तौ श्रवणक्रियाकर्मत्वं तदा त्वत्कीर्तिमुज्ज्वलामित्यपेक्षितं। यदि त्वत्कीर्तिरित्यादिवाक्यार्थस्यैव कर्मत्वं तदेतिशब्द इदंशब्दो वापेक्षित इति तदभावात्तथात्वं बोध्यम्। नच तदध्याहारेणैवास्यानुदाहरणत्वम्। तस्यागतिकत्वादसार्वत्रिकत्वाच्चेति दिक्। यथावा काव्यप्रकाशे—'संग्रामाङ्गणमागतेन भवता चापे समारोपिते देवाकर्णय येन येन सहसा यद्यत्समासादितम्। कोदण्डेन शराः शरैररिशिरस्तेनापि भूमण्डलं तेन त्वं भवता च कीर्तिरमला कीर्त्या च लोकत्रयम्'। अत्राकर्णनक्रियाकर्मत्वे कोदण्डं शरानित्यादि वाक्यार्थस्य कर्मत्वे कोदण्डः शरा इति प्राप्तम्। नच यच्छब्दार्थस्तद्विशेषणं वा कोदण्डादिः। नच केनकेनेत्यादिप्रश्न इति। एवं क्वचित्कविसंमताव्यञ्जनादपि वीक्ष्यते मतायोग इत्याह—**इष्टेति**। इष्ट कविसंमतं यदर्थजातं तस्याव्यञ्जनमध्वननं तस्मादित्यर्थः। तमुदाहरति—**कार्ष्णमिति**। अत्र यशस्त्वावच्छेदेन सितत्वं तावत्कविसमये यद्यपि सर्वत्र सिद्धमेव तथापि तत्र जारचोरचक्रवर्तित्वेन प्रसिद्धस्य कृष्णस्य संबन्धितया तथा कृष्णशब्दितनीलरूपवद्द्रव्यसंबन्धितया च सितभवनाक्षेपो विरहदशायां राधादिकर्तृकतन्निन्दाव्यञ्जनयैवावश्यं वाच्यः। नचासौ संभवति यशः सितमभूत्कथमिति तद्यशसि सितीभवननिर्णयोत्तरमेव तत्राक्षिप्तत्वेन तन्निर्णयनान्तरीयकतयैव तन्निन्दाव्युदासात्प्रत्युत स्तुतेरेव द्योतितत्वाच्च। नचात्र 'उक्तिर्व्याजस्तुतिनिन्दास्तुतिभ्यां स्तुतिनिन्दयोः। कः स्वर्धुनि विवेकस्ते पापिनो नयसे दिवम्। साधु दूति पुनः साधु कर्तव्यं किमतः परम्। यन्मदर्थे विलूनासि दन्तैरपि नखैरपि' इत्युक्तो व्याजस्तुत्यलंकार एवास्तीति नैवेदमुक्तदोषोदाहरणमिति वाच्यम्। तदसंभवात्। तथाहि किमत्र निन्दया स्तुत्युक्तिरिति ब्रूषे स्तुत्या वा निन्दोक्तिरिति। नाद्यः। यशसि सितत्वनिर्णयान्यथानुपपत्त्या स्तुतेरेव सिद्धत्वात्। तर्हि तत एव द्वितीय एवास्त्विति चेन्न। स्तुतेर्वाक्यार्थत्वे निरुक्ताक्षेपासंभवात्तदीये प्रकृतोदाहरणे तथात्वादर्शनाच्च। यदि विरोधाभासं 'आभासत्वे विरोधस्य विरोधाभास इष्यते। विनापि तन्वि हारेण वक्षोजौ तव हारिणौ' इत्युक्तरूपं पश्यसि चेद्बाढमलंकार एव स नः स्यात्तथापि कथमित्याक्षेपेणेष्टस्य निन्दनस्य व्यञ्जनप्रतियोगिकाभावसत्त्वाद्दोषोदाहरणत्वतादवस्थ्यमेव। तस्मादिदमिष्टवस्त्वसूचनादेवाभवन्मतयोगाख्यवाक्यदोषोदाहरणमिति ध्येयम्। तदुक्तं काव्यप्रदीपे अभवन्मतयोगं प्रकृत्य व्यङ्ग्यस्यापि विवक्षितयोगाभावेऽस्यावतारः। यथा—'चापाचार्यस्त्रिपुरविजयी कार्तिकेयो

**समासगूहनाद्धीनौ भवाब्धिमकरः स्मरः ।**
**वाग्व्युत्पत्तिविरोधाच्च शंभोः पादोऽवतान्निजान् ॥११८॥**

विजेयः शत्रुव्यस्तः सदनमुदधिर्भूरियं हन्तकारः । अस्त्येवैतत्किमु कृतवता रेणुकाकण्ठबाधां बद्धस्पर्धस्तव परशुना लज्जते चन्द्रहासः' । अत्र रेणुकाकण्ठबाधाजन्यात्मनिन्दया भार्गवस्य योगो विवक्षितः । तन्निन्दाप्रकरणात् । परशोः स्वक्रियापाटवेनानिन्दनीयत्वाच्च । न च तथा प्रतीयते । कृतवतेति तृतीयया परशुनैव सबन्धावगमात् । कृतवत इति पाठे तु भार्गवे निन्दायोगः प्रतीयते । यदि परशुनिन्दान्तरविदग्धोक्त्यापि भार्गवेऽपि निन्दावगमस्तदा कृतवत्वस्यानेनायोगाद्वाच्यायोगोदाहरणमेवैतत् । तथाहि यथा स्पर्धायोग्यत्वोपपत्तये परशुस्वामिनो महादेवस्य शिष्यत्वादीनि विशेषणान्युपात्तानि तथा तदयोग्यत्वोपपादनाय तस्यैव कश्चिद्धर्मो वक्तुमुचित इति भार्गवेण कृतवत्वस्यान्वयो विवक्षितो न प्रतीयत इति दुष्टत्वमिति ॥ ११७ ॥ अथ समासाच्छादनादपि क्वचिदुपलभ्यते मतायोग इत्याह—**समासेत्य**र्धेनैव । तमुदाहरति—**धीति** । अत्र धीनावः तत् प्रतियोगिकान्योन्याभावाधिकरणतावच्छेदकावच्छिन्नयावद्भिरपि तर्तुमशक्यत्वादद्वैतविषयैकनौकायास्तथा । 'आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा । कामरूपेण कौन्तेय दुष्पूरेणानलेन च' इत्यादिस्मृतेः'योऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्त्यत्रैव समवनीयन्ते ब्रह्मैव सन्ब्रह्माप्येति' इत्यादिश्रुतेश्च महानर्थमूलत्वेन मकराख्यजलजन्तुविशेषरूपस्य कामस्य च भवाब्धावेवान्वयोऽधिकरणतासबन्धेनाभिमतोऽपि भवाब्धीति सप्तमीतत्पुरुषेण पिहितत्वान्न प्रतिभातीत्येतदुक्तदोषदूषितं बोध्यम् । भवाब्धौ मकर इति पाठे तु नैष दोषः । यथावा काव्यप्रकाशे—'चत्वारो वयमृत्विजः स भगवान्कर्मोपदेष्टा हरिः संग्रामाध्वरदीक्षितो नरपतिः पत्नी गृहीतव्रता । कौरव्याः पशवः प्रियापरिभवक्लेशोपशान्तिः फलं राजन्योपनिमन्त्रणाय रसति स्फीतं यशोदुन्दुभिः' । अत्राध्वरशब्दः समासे गुणीभूत इति न तदर्थः सर्वैः संयुज्यत इति । 'यज्ञेऽस्मिन्युधि दीक्षितः' इति पाठे तु न कोऽपि दोषः । एवं व्युत्पत्तिविरोधादपि क्वचिदयमत्र लोक्यत इत्याह—**वागिति** । चः समुच्चये । तमुदाहरति—**शंभोरिति** पादेनैव । निजान् स्वकीयान् । भक्तानिति यावत् । अत्र हि प्रधानं पाद एव तेन निजपदशक्यतावच्छिन्नेषु तदीयत्वमेव सिध्यति । प्रधानैकायत्तनिजादिशब्दसंबन्धिव्युत्पत्तिनियत्यात् । अपेक्ष्यते तु शंभो इति लक्षणसाम्राज्यम् । यथावा काव्यप्रदीपे—जह्नुकाम्भोरुनालो नखकिरणलसत्केसरालीकरालः प्रत्यग्रालक्तकाभाप्रसरकिसलयो मञ्जुमञ्जीरभृङ्गः । भर्तुर्नृत्तानुकारे जयति निजतनुस्वच्छलावण्यवापीसंभूताम्भोजशोभां विदधदभिनवो दण्डपादो भवान्याः' । अत्र तनुपदार्थस्य पार्वत्या योगोऽभिमतः दण्डपादेन प्रतीयते । वाक्यं यत्प्रधानं तत्रैव निजादिपदव्युत्पत्तेरिति । यथावा रसतरङ्गिण्याम्—'एषा भार्गव तावकी विजयते निस्त्रिंशधारा निशा' इति॥११८॥

**यत्रानभिहितं वाच्यं द्योतकं तत्तथा मतम् ।**
**दोषलेशः क्व राधे मे मनुतायास्तथापि रुट् ॥ ११९ ॥**
**अस्थानस्थपदं तत्स्याद्यत्रायोग्यस्थले पदम् ।**
**श्रीकुचे कौस्तुभस्यांशून्विष्णुस्ताम्रान्परामृशन् ॥ १२० ॥**

इदानीं क्रमागतमनभिहितवाच्यं लक्षयति—**यत्रेति** । वाच्यं वक्तुं योग्यम् । अवश्यकथनीयमित्यर्थः । किं तदित्यत्राह—**द्योतकमिति** । व्यञ्जकं अपिशब्दादीति यावत् । तत्तथा अनभिहितवाच्यं भवतीति संबन्धः । एवंचाकथितव्यञ्जकमिति तल्लक्षणमपि फलितम् । तेन न न्यूनपदेऽतिव्याप्तिः । तस्यानभिहितवाचकत्वादस्य त्वनभिहितव्यञ्जकत्वेनातथात्वाच्च । तमुदाहरति—**दोषलेश इति** । हे राधे, मे श्रीकृष्णस्य ममेत्यर्थः । **दोषेति** । अत्र दोषलेशोऽपीत्यपिशब्दो यावद्दोषाभावद्योतकोऽवश्यं वक्तुं युक्तः । नोचेदीषद्दोषो नास्ति किंतु भूरितर एवेति विरुद्धार्थप्रतीत्यापत्तिः । तेन तदनुक्तेरिदमनभिहितवाच्याख्यवाक्यदोषदुष्ट काव्यमिति लक्षणसंगतिः । इद चान्यथावाच्यस्य पदस्यान्यथाभिधानतोऽपि ज्ञेयम् । तद्यथा—**मदिति** । हे राधे, इत्यत्राप्यनुकृष्यम् । मया नुता स्तुता तस्या इत्यर्थः । तवेत्यर्थसमाजादेव लभ्यते । अत्र मन्नुतासीति विन्यास एव तथापि रुडिति चरमवाक्यगततथापि शब्दसांगत्यम् । तस्य षष्ठ्यन्तत्वेनान्यथैवाभिधानमित्यस्य निरुक्तदोषदुष्टतेत्याशयः । यथावा साहित्यदर्पणे वाच्यानभिधान यथा—'व्यतिक्रमलवं कं मे वीक्ष्य वामाक्षि कुप्यसि' । अत्र व्यतिक्रमलवमपीत्यपिरवश्यवक्तव्यो नोक्तः । न्यूनपदत्वे वाचकपदस्यैव न्यूनता विवक्षिता । अपेस्तु न तथात्वमिति भेदः । एवमन्यत्रापि । यथावा—'चरणानतकान्तायास्तन्वि कोपस्तथापि ते' । अत्र चरणानतकान्तासीति वाच्यमिति । एव मयापि नुतेति समासेऽपिरवश्यमपेक्षितस्तदभावादितरत्र स्वापेक्षया महत्त्वेन तत्कर्तृकस्तुत्याकाङ्क्षेति समासेऽपि द्योतकानभिधानादनभिहितवाच्यत्वमिति दिक् ॥ ११९ ॥ अथास्थानस्थपदं लक्षयति—**अस्थानेति** । **अयोग्येति** । तत्त्वं च विरुद्धप्रतीतिप्रयोजकत्वम् । एवं संमतोपयोगाप्रयोजकत्वमपि । तेन निरुक्तद्वयान्यतरत्वमिति निष्कर्षः । तदुदाहरति—**श्रीति** । अत्र विष्ण्वाख्यकर्तृपदाव्यवहितोत्तरं परामर्शोभिधक्रियापदाव्यवहितपूर्वं ताम्रानिति द्वितीयान्तत्वेन प्रयुज्यमान कर्मपदं यवनविशेषप्रतीतिकरं भवतीति प्राथमिकायोग्यस्थललक्षणानुसारेणोदाहरणं तथा विष्णोर्वक्षःस्थितकौस्तुभकिरणानां संमुखस्थितायाः श्रियः कुचमण्डलसंक्रान्तत्वेन स्वनखलेखाभ्रान्तिजनकं यदारुण्यं तत्तावत्तद्धटकस्य ताम्रानिति विशेषणस्य विशेष्यतः प्राक्प्रयोग एव संघटत इति चरमतल्लक्षणरीत्यापीति बोध्यम् । विष्णुः श्रीकुचे कौस्तुभस्य ताम्रानंशून्परामृशन्नासेति क्रियाध्याहारेणान्वयः । यद्वा 'व्यमर्शयत्' इति पाठः । यथावा किराते—'प्रियेण संग्रथ्य विपक्षसंनिधौ निवेशितां वक्षसि पीवरस्तने । स्रजं न काचिद्विजहौ जलाविलां वसन्ति

**अस्थानस्थसमासं तद्यत्रायोग्ये स्थलेऽस्ति सः ।**
**भक्तेऽपि काम ते शक्तिरित्यर्चिःशालिदृक्शिवः ॥ १२१ ॥**
**वाक्यान्तरपदेनापि मिश्रं संकीर्णमुच्यते ।**
**मुक्तानामप्यहं सकृदुःखदोऽभूस्त्यजामि तम् ॥ १२२ ॥**
**अन्तःस्थितान्यवाक्यं यत्तद्गर्भितमिहोदितम् ।**
**रे चित्त स्त्रीषु वच्मि त्वां सक्तं मा भव कुत्रचित् ॥१२३॥**

हि प्रेम्णि गुणा न वस्तुनि' इति । अत्र कान्चिन्न विजहाविति वाच्यमिति काव्यप्रकाशः । साहित्यदर्पणेऽपि अस्थानस्थपदता यथा—'तीर्थे तदीये गजसेतुबन्धात्प्रतीपगामुत्तरतोऽस्य गङ्गाम् । अयत्नवालव्यजनीबभूवुर्हंसा नभोलङ्घनलोलपक्षाः' । अत्र तदीय इति पदात्पूर्वं गङ्गामित्यस्य पाठो युक्त इति ॥ १२० ॥ एवमस्थानस्थसमासं लक्षयति—**अस्थानस्थसमासमिति** । अत्रायोग्यत्वं तु वक्तुरवीरत्वादिकमेव । तदुदाहरति—**भक्तेऽपीति**। रे काम मदन,ते तव शक्तिः संमोहनादिसामर्थ्यं भक्तेऽपि मदेकप्रेमशालिनि रामचन्द्रादावपि विषये प्रसरति इति हेतोः शिवः अर्चिःशालिदृक् अर्चिषा तृतीयनेत्राग्निज्वालया शालते शोभत इति तथा तादृशी दृक्दृष्टिर्यस्य स तथा । ज्वालामालिविलोचन इत्यर्थः । अभूदिति शेषः । अत्र पूर्वपादो हि शिववाक्यमिति तस्य वीररसशालित्वेन तत्र वक्ष्यमाणौजोगुणघटकसमासस्यापेक्षितत्वेऽपि तदकरणादुत्तरपादे कविवाक्यत्वेन शान्तरसप्राधान्यात्तदनुकूलवक्ष्यमाणमाधुर्यगुणविरोधिसमासानपेक्षत्वेऽपि तत्र तत्करणाच्च लक्षणसंगतिः । यथावा काव्यप्रदीपे—'अद्यापि स्तनशैलदुर्गविषमे सीमन्तिनीनां हृदि स्थातुं वाञ्छति मान एष धिगिति क्रोधादिवालोहितः । उद्यद्दूरतरप्रसारितकरः कर्षत्यसौ तत्क्षणात्फुल्लत्कैरवकोशनिःसरदलिश्रेणीकृपाणीं शशी' । अत्र पूर्वार्धे क्रुद्धस्य शशिन उक्तिरिति तत्समासस्य योग्यं स्थलं न पुनः कवेरुक्तिरुत्तरार्धमित्यस्थानस्थसमासतेति ॥ १२१ ॥ संकीर्णं लक्षयति—**वाक्यान्तरेति** । अपिना पदबाहुल्ये तु कैमुत्येनैव तत्सिद्धिः सूचिता । तदुदाहरति—**मुक्तानामपीति** । यथावा चन्द्रालोके—'वक्रेण भ्राजते रात्रिः कान्ता चन्द्रेण राजते' इति ॥ १२२ ॥ अथ गर्भितं लक्षयति—**अन्तरिति** । अन्तः मध्ये स्थितं अन्यवाक्यं वाक्यान्तरं यस्य तत्तथेत्यर्थः । इह अस्मिन्नलंकारशास्त्रे । उदितं प्रकाशितमिति यावत् । तदुदाहरति—**रे चित्तेति** । अत्र रे चित्त, अहं त्वां वच्मि । किं वदसीति चेत्त्वं कुत्रचिदपि देशे काले वा स्त्रीषु । यावत्स्त्रीमात्रेऽपीत्यर्थः । तेनैकस्यां द्वयोर्वा तयोरासक्तिशङ्काव्युदासः । सक्तमनुरक्तं मा भवेति वक्तव्ये त्वां वच्मीति वाक्यं स्त्रीष्वित्यादिवाक्यान्तरस्य मध्य एव पतितमिति लक्षणसंगतिः । यथावा काव्यप्रकाशे—'परापकारनिरतैर्दुर्जनैः सह संगतिः । वदामि भवतस्तत्त्वं न विधेया कदाचन' इति ॥ १२३ ॥ अथात्र काव्यप्रकाशादौ प्रसिद्धियुताख्यं वाक्यदोषान्तरमुक्तं तत्त्वप्रयुक्ताख्यपददोषेणैव चरितार्थमिति न

**काव्याप्रसिद्धपदकं प्रसिद्धिधुतमिष्यते।**
**नायं मञ्जीरनिर्घोषः किंतु दुःखोदधिध्वनिः॥ १२४॥**
**प्रस्तावौचित्यरहितं भग्नप्रक्रममेव तत्।**
**प्रकृत्या प्रत्ययेनापि पर्यायेणोपसर्गतः॥ १२५॥**
**वचनेन तिङा चैव क्रमेणापीति सप्तधा।**
**स्वनाथेऽभ्युदयं याते कुलस्त्रीवाब्जिनी गता॥ १२६॥**
**आत्मानमविगन्तुं वा स्वेप्सया वा भजस्व तम्।**
**संन्यासादिमतोऽप्यत्र त्याग एवातिरिच्यते॥ १२७॥**

---

परः संगृह्यते। तद्यथा—काव्यप्रदीपे तावदप्रयुक्तं प्रकृत्य 'तथानुशासनसिद्धमपि कविभिर्यन्न प्रयुक्तम्' इति तल्लक्षणमभिहितं ततोऽत्र प्रसिद्धिधुतं प्रकृत्य मञ्जीरादिषु रणितप्रायपक्षिषु च कूजितप्रभृतिस्तनितमणितादिसुरते मेघादिषु गर्जितप्रमुखमिति प्रसिद्धिमतिक्रान्तमिति तत्स्वरूपमपि निरूपितमेव मूलेऽपि। तत्र निरुक्तप्रसिद्धिस्तावत्कविसामयिक्येवेति किमनयोर्भेदकमिति कृतमतय एव परिचिन्तयन्तु। अतएव राकागमेऽप्येतदनूद्य तस्याप्रयुक्तमध्येऽन्तर्भावान्मूलेऽनुक्तिरिति चन्द्रालोकेऽस्यासंग्रहकारणमिदमेवोक्तमिति हृदयमिति ते वदन्ति। मया तूच्यत एवेत्याशयेन तल्लक्षयति—**काव्येति**। तदुदाहरति—**नायमिति**। समाधानं तूक्तमुद्द्योतेऽत्रैव। अतो नाप्रयुक्तत्वम्। सर्वथा प्रयोगनिषेध एव हि स दोषः। प्रकृते चार्थविशेषे प्रयोगोऽनुमत एवेत्याहुरिति॥ १२४॥ ततः क्रमप्राप्तं भग्नप्रक्रमं लक्षयति—**प्रस्तावेति**। तस्य प्रकृत्यादिनिमित्तभेदेन सप्तविधत्वमभिधत्ते—**प्रकृत्ये**त्यादिनैकेन॥ १२५॥ क्रमेण तानुदाहरति—**स्वनाथ इत्यादि** सार्धत्रिभिः। स्वस्याः नाथः स्वामी सूर्यस्तस्मिन्नित्यर्थः। गता अभ्युदयमित्यनुकर्षणीयम्। तेन विकासं प्राप्तेति यावत्। अत्र यातेः प्रकृतेः प्रस्तावे गतेति गमेः प्रयोगः। 'प्रकृत्या क्रमभङ्गमावहतीति प्रथमस्योदाहरणमिदम्। यथावा काव्यप्रदीपे—'नाथे निशाया नियतेर्नियोगादस्तं गते हन्त निशापि याता। कुलाङ्गनानां हि दशानुरूपं नातः परं भद्रतरं समस्ति'। अत्रास्तं गत इति गमेः प्रकृतेः प्रस्तावे यातेति यातेः प्रयोगे प्रकृतिक्रमभङ्गः। भिन्नाभ्यामुपस्थापितं भिन्नवद्भवतीति कुलाङ्गनानां 'स्वामिसदृशावस्थाप्रतीतिर्न संभवति। तस्माद्गता निशापीति युक्तः पाठः। ननु 'नैकं पदं द्विःप्रयोज्यं प्रायेण' इति वामनसूत्रम्। अत्रापि कथितपदमनुपदमेवोक्तम्। तथाच पुनर्गमेः प्रयोगो दुष्टः स्यादितिचेन्न। उद्देश्यप्रतिनिर्देश्यातिरिक्तं हि एकपदं द्विःप्रयोगनिषेधविषयः। तादृशे तु विषये प्रत्युत तस्यैव पदस्य सर्वनाम्नो वा प्रयोगं विना दोषः। यथा—'उदेति सविता ताम्रस्ताम्रएवास्तमेति च। संपत्तौ च विपत्तौ च महतामेकरूपता'। इत्यत्र रक्त एवास्तमेति चेति यदि क्रियेत तदा पदान्तरप्रतिपद्यमानः स एवार्थोऽभिन्न इव प्रतीयमानः प्रतीतिं व्यवदधीतेति॥ १२६॥ **आत्मानमिति**। हे मुमुक्षो,

**आपदः शान्तिमायान्ति बोधोर्ध्वे विपदः कुतः ।
भक्तिरेव वरं लोके भक्तिभिः किं न सिध्यति ॥ १२८ ॥
गाहन्तां ब्रह्मदुग्धाब्धौ बुधाश्चित्स्मर्यतां धिया ।
कान्तायां काञ्चने चापि लोभः कामश्च मास्तु मे ॥ १२९ ॥**

त्वं आत्मानं अद्वैत प्रत्यञ्चं अधिगन्तुं प्राप्तुं त निरुक्तस्वरूपमात्मान भजस्व ध्यायस्वेत्यर्थः । वा 'वास्याद्विकल्पोपमयोरेवार्थे च समुच्चये' इति विश्वादथवेति यावत् । **स्वेति** । स्वस्य आत्मनः ईप्सा मनोरथविशेषस्तया निमित्तीभूतयेत्यर्थः । अभ्युदयसिद्धिनिमित्त वेति यावत् । तं भजस्वेत्यत्रापि सबध्यान्तार्द्वितीयो वाकारोऽवधारणार्थकतया तच्छब्दोत्तर योज्यः । तमेव भजस्वेत्यर्थः । एवं च मुमुक्षुणाप्यात्मध्यानमेव विधेयमिति सिद्धम् । इदं तु प्रत्ययक्रमभङ्गोदाहरणम् । अधिगन्तुमिति तुमुनः कर्मे स्वेप्सयेति सनोऽभिधानात् । यथावा काव्यप्रकाशे— 'यशोऽधिगन्तुं सुखलिप्सया वा मनुष्यसंख्यामतिवर्तितुं वा । निरुत्सुकानामभियोगभाजां समुत्सुकेवाङ्कमुपैति लक्ष्मीः' इति । **संन्यासेति** । अत्र लोके संन्यासादिमतः वैधकर्मत्यागाद्यखिलसाधनवतः मुमुक्षोरित्यर्थः । आदिना शमादेर्ग्रहः । त्याग एव विषयतिरस्कार एव अतिरिच्यते अधिकतमं साधनं भवतीत्यन्वयः । अत्र त्यागाद्यखिलसाधनवतोऽपि मुमुक्षोस्त्याग एवाधिकोऽपेक्षित इति वक्तव्ये संन्यासादिमतोऽपीत्युक्तमिति पर्यायक्रमभङ्गोदाहरणमिदम् । यथावा काव्यप्रदीपे—'महीभृतः पुत्रवतोऽपि दृष्टिस्तस्मिन्नपत्ये न जगाम तृप्तिम् । अनन्तपुष्पस्य मधोर्हि चूते द्विरेफमाला सविशेषसङ्गा' इति ॥ १२७ ॥ **आपद इति** । बोधोर्ध्वे ब्रह्मसाक्षात्कारोत्तरम् । आपदः 'तरति शोकमात्मवित्' इति श्रुतेर्यावद्दृश्यदुःखानि शान्तिमुपशमं आयान्ति । अतः विपदः संकटानि कुतः । न कुतोऽपि कारणात्संभवन्तीति योजना । अत्र बोधशब्दितात्मज्ञानोत्तरं यदा आपच्छब्दितनिरुक्तदुःखान्येवोपशाम्यन्ति तदा आगामिनामापच्छब्दितप्रारब्धक्रियमाणादिदुःखान्तराणां कुतः संभव इति वक्तव्ये विपद इति विकारोपसर्गावच्छिन्नप्रयोगादुपसर्गक्रमभङ्गः । आङुपसर्गोपक्रमे तस्यैवाग्रे प्रयोक्तुमौचित्यादित्याशयः । यथावा किराते द्रौपद्या उक्तिः—'विपदोऽभिभवन्त्यविक्रमं रहयत्यापदुपेतमायतिः । नियता लघुता निरायतेरगरीयान्न पदं नृपश्रियाम्' इति । रहयति त्यजति । आयतिरुत्तरकालशुद्धिः । आपदा उपेतं विशिष्टम् । पदं स्थानम् । **भक्तिरेवेति** । अत्रैकवचनोपक्रमाद्भक्तिभिरिति बहुवचनेन वचनक्रमभङ्गः स्फुट एव ॥ १२८ ॥ **गाहन्तामिति** । त्रिपदीयं विपरीतैवान्वेति । बुधाः पण्डिताः । **ब्रह्मेति** । एतेन निमज्जनयोग्यत्वं व्यज्यते । गाहन्तां निमज्जन्त्वित्यर्थः । अथ तैरिति शेषः । धिया चित्स्मर्यतामिति संबन्धः । इह गाहन्तामिति कर्तृकारकतिङः प्रक्रमे स्मर्यतामिति कर्मकारकस्य तस्य प्रयोगात्तत्क्रमभङ्गः । **कान्तायामिति** । अत्र कान्तायां कामः काञ्चने लोभश्च मे मास्त्विति वाच्यम् ।

**यदूर्ध्वं यत्पदं योग्यं ततोऽन्यत्र तदक्रमम्।**
**सेव्यः श्रीगुरुरेवैकः शंकरः कोविदस्य च ॥ १३० ॥**

तस्य तु यथासंख्यन्यायेन क्रमो भग्न इति क्रामिकभग्नप्रक्रमोदाहरणमिदम्। सरस्वतीकण्ठाभरणप्रतापरुद्रयोस्त्वेतदर्थादिक्रमभ्रष्टत्वेन द्विधोक्तम्। यथा—'क्रमभ्रष्टं भवेदार्थः शाब्दो वा यत्र न क्रमः'। यथा—'तुरङ्गमथ मातङ्गं प्रयच्छास्मै मदालसम्। कान्तिप्रतापौ भवतः सूर्याचन्द्रमसोः समौ' इत्यादि ॥ १२९ ॥

अथ क्रमप्राप्तमक्रमं लक्षयति—**यदूर्ध्वमिति**। न चेदमस्थानस्थपदेनैव गतार्थम्। ततोऽस्य विभिन्नरूपत्वात्। तद्यथा अस्थानस्थं पदत्वं तु विरुद्धबुद्धिजनकस्थानस्थितपदत्वम्। इदं तावत्पौर्वापर्यान्यतरत्वेन यस्य पदस्य यदव्यवधानेनैव स्वाभिमतार्थप्रतीतिजननसामर्थ्यं तस्य ततोऽन्यत्र प्रयोग एवेति कथं न लक्षणभेदः। एवंच ऊर्ध्वमित्युपलक्षणं यत्पूर्वमित्यस्यापि। तथा चास्थानस्थपदे पदस्य अयोग्यस्थानतोऽन्यत्र प्रयोगमात्रेण दोषत्वापगमः। अत्र तु पदस्य योग्यैकस्थानप्रयोग एवेति महत्तरमन्तरं बोध्यम्। एतेन अत्र काव्यप्रकाशोक्तमक्रमत्वमस्थानस्थपदत्वान्तर्गतमिति नोक्तमिति चन्द्रालोकेऽस्यासंग्रहनिदानबोधनपरो राकागमकार एव प्रदोषोऽभूत्। अयं हि दोषो निपातैकविषयः। तदुक्तमुद्द्योते—एवं चायं दोषो निपातविषयः। यथा उपसर्गाणां धातोः पूर्वमेव प्रयोगः। एवेत्यादीनां व्यवच्छेद्यानन्तरम्। पुनरादीनां व्यतिरेक्यादनन्तरम्। इवादीनामुपमानादनन्तरम्। एवंच उद्बाहुरिव वामन इत्यादावप्ययं दोषः। चादीनां समुच्चेयादनन्तरमित्यादिबोध्यमिति। आदिना इतीत्थमित्यादीनां निरूपणीयादनन्तरत्वस्य संग्रहः। तथा चोक्तं काव्यप्रदीपे—नचायं चादिपदेष्वेव दोषः किंतु इत्थमादिष्वपि। यथा—'शक्तिर्निस्त्रिंशजेयं तव भुजयुगुले नाथ दोषाकरश्रीवक्त्रे पार्श्वे तथैषा प्रतिवसति महाकुट्टिनी खड्गयष्टिः। आज्ञेयं सर्वगा ते प्रसरति पुरतः किं मया वृद्धया ते प्रोच्येवेत्थं प्रकोपात्सितकरसितया यस्य कीर्त्या प्रयातम्'। अत्र इत्थं प्रोच्येवेति वाच्यमित्यादिनञस्तु निपातत्वेऽपि नाव्यवहितत्वेनैव स्वार्थबोधकत्वनियमः। एतदप्युक्तं तत्रैव। नच नञोऽप्यव्यवहितस्यैव तथात्वमतः स्रजं न काचिद्विजहावित्यादिकमप्यक्रमभेदः स्यादिति वाच्यम्। 'न खलु न खलु बाणः संनिपात्योऽयमस्मिन्' इत्यादौ व्यवधानेऽपि प्रतीतिविशेषाभावादिति। एवं निरुक्तनिपातानामपि व्यवधानेन स्वार्थाबोधकत्वमुपपादितं महिमभट्टेन। 'अतएव व्यवहितैर्बुधा नेच्छन्ति चादिभिः। संबन्धं ते हि स्वां शक्तिमुपदध्युरनन्तरे' इति। वस्तुतस्तु यदूर्ध्वमित्यस्योपलक्षणत्वानङ्गीकारेऽपि न क्षतिः। तथाहि—उपसर्गाणां धातोः पूर्वत्वनैयत्यार्थमेव तदङ्गीकार्यं तस्य तु व्याकरणत एव 'उपसर्गाः क्रियायोगे' इत्यादिना तथात्वं सिद्धमिति तद्वैपरीत्ये च्युतसंस्कृतत्वादिदोषत्वमेव नत्वक्रमत्वमिति। तस्माद्यथाश्रुतमेव लक्षणं रमणीयमिति दिक्। तदुदाहरति—**सेव्य इति**। अत्र कोविदस्य विदुषः एकः

**अमतोऽर्थः परो यस्योपमादिस्तत्तथामतम् ।**
**नारी पिशाचिकोपैति मौक्तिकास्थिविभूषिता ॥ १३१ ॥**
**उक्ताः सरस्वतीकण्ठाभरणेऽन्येऽपि षट् तु तान् ।**
**भिन्नलिङ्गादिकान्दोषानत्रानुक्रमतो ब्रुवे ॥ १३२ ॥**
**उपमा भिन्नलिङ्गा चेद्भिन्नवचना तथा ।**
**यत्र तद्भिन्नलिङ्गं स्यात्स्याद्भिन्नवचनं क्रमात् ॥ १३३ ॥**
**मुखं चन्द्र इवेदं ते कमलानीव लोचने ।**
**न्यूनं तथाधिकं यत्र तूपमानं विशेषणैः ॥ १३४ ॥**

श्रीगुरुरेव तथा शंकरश्च शिवोऽपि सेव्य इत्यन्वयो विवक्षितः । सतु चकारस्य समुच्चेयाद्यवहितत्वेन नैव प्रतीयत इति लक्षणसंगतिः । यथावा कुमारसंभवे— 'द्वय गतं सप्रति शोचनीयतां समागमप्रार्थनया कपालिनः । कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी' इति । अत्र त्वंशब्दोत्तरमेव द्वितीयश्चकारोऽपेक्षितः ॥ १३० ॥ एवममतपरार्थं लक्षयति—**अमत इति** । यस्य उपमादिः उपमारूपकादिः परः द्वितीयः अर्थः अमतः परस्परविरोधादिना असंमत इत्यर्थः । तत् तथा अमतपरार्थं मतं अभिमतमिति यावत् । उक्तं हि काव्यप्रदीपे । अमतत्वं च—'द्वयौ शृङ्गारबीभत्सौ तथा वीरभयानकौ । रौद्राद्भुतौ तथा हास्यकरुणौ वैरिणौ मिथः'इत्याद्युक्तदिशा प्रकृतरसविरुद्धर ।व्यञ्जकत्वमिति । तदुदाहरति—**नारीति** । अत्र लुप्तोपमारूपकविशेषान्यतरालंकारेण व्यञ्जितस्य परस्य बीभत्सरसरूपस्यार्थस्य शक्येन शृङ्गारेण साकं विरुद्धत्वाल्लक्षणसंगतिः । यथावा रघुवंशे—'रामन्मथशरेण ताडिता दुःसहेन हृदये निशाचरी । गन्धवद्रुधिरचन्दनोक्षिता जीवितेशवसतिं जगाम सा' इति ॥ १३१ ॥ अथ मतान्तरेऽन्यदपि दोषजातं वाक्य एवोक्तमिति तदप्यत्र संगृह्यत इत्याह—**उक्ता इति** । **अन्येपीति** । उक्तेभ्य इतरेऽपि षट् वाक्यदोषा इति शेषः । तु पुनः अहमित्यध्याहारः । **भिन्नेति** । एतादृशान् तान्दोषान् अनुक्रमतः ब्रुवे वक्ष्यामीति संबन्धः ॥ १३२ ॥ ननु के ते दोषा इत्याकाङ्क्षायां 'यत्रोपमा भिन्नलिङ्गा भिन्नलिङ्गं तदुच्यते । भवेत्तद्भिन्नवचनं यद्भिन्नवचनोपमम्' इति । तदुक्तलक्षणं प्रथमं भिन्नलिङ्गवचनं लक्षयति—**उपमेति** । अत्र लिङ्गवचनयोर्भिन्नत्वं तूपमेयापेक्षया विपरीतलिङ्गादिमत्त्वमेवेति भावः । स्फुटमेवान्यत् ॥ १३३ ॥ ते उदाहरति—**मुखमित्यर्धेनैव** । हे प्रेयसीति शेषः । अत्र क्रमेण चरणद्वयेऽप्युपमायां भिन्नलिङ्गत्वं भिन्नवचनत्वं चोपमेयापेक्षया लिङ्गादिवैपरीत्यात्स्पष्टमेवेति लक्षणसमन्वयः । यथावा कण्ठाभरणएव—'अविगाह्योऽसि नारीणामनन्यमनसामपि । विषमोपलभिन्नोर्मिरापगेव तितीर्षतः' । अत्रापगेव त्वमविगाह्योऽसीति लिङ्गभेदः । नारीणामुत्तितीर्षत इति लिङ्गभेदो वचनभेदश्च । तदिदं द्वयोरेकमेवोदाहरणमिति । एव न्यूनाधिकोपमे अपि लक्षयति—**न्यूनमिति**॥१३४॥

**न्यूनोपमं तदाद्यं स्यादधिकोपममन्तिमम्।**
**भ्रूनेत्रसुभगं वक्त्रं सखञ्जनयुगाब्जवत्॥ १३५॥**
**राधिके तव सीमन्तो भाति सिन्दूरपूरितः।**
**इन्द्रनीलशिलासुप्तोऽमृतपस्तक्षको यथा॥ १३६॥**
**अशरीरं क्रियाहीनं ब्रह्म कूटस्थमद्वयम्।**
**प्रतापरुद्रवाचा स्यादेतदेव त्वनन्वयम्॥ १३७॥**
**यदरीतिमदाख्यं तच्छैथिल्यादिभिदा त्रिधा।**
**गुणहीनत्वतः शब्दप्राधान्याद्वाक्यदूषणम्॥ १३८॥**

---

तत्राद्यमुदाहरति—**भ्रूनेत्रेत्यर्धेन**। अत्र नेत्राद्युपमानसत्त्वेऽपि भ्रुवोस्तदभावाल्लक्षणसमन्वयः॥ १३५॥ अन्त्यमुदाहरति—**राधिके इति**। अत्र तक्षकस्यारुणवर्णत्वप्रसिद्धेस्तावतैव निरुक्तसीमन्तोपमानत्वसिद्धात्विन्द्रनीलेत्यादिविशेषणद्वयस्याधिकत्वादधिकोपमानत्वं ज्ञेयम्। यद्यपि सीमन्तस्य संयमितकेशमध्यदेशविशेषत्वेनाद्यविशेषणस्यार्थिकसार्थक्येऽपि चरमस्य निष्प्रयोजनतैवेति हृदयम्। नचेदं दोषद्वयं न्यूनाधिकपदाभिधप्रागुक्तदोषद्वयान्तर्भूतमिति वाच्यम्। तस्य पदमात्रविषयत्वादस्य तूपमैकतन्त्रत्वाच्चेति दिक्॥ १३६॥ अथाशरीरं लक्षयति—**अशरीरमिति** चरणेन। तदुक्तं कण्ठाभरण एव—'क्रियापदविहीनं यदशरीरं तदुच्यते' इति। तदुदाहरति—**ब्रह्मेति**। पादेनैव। प्रथमपादीयपदद्वयमत्रापि विशेषणीयम्। अशरीरं समष्टिव्यष्टिस्थूलादिदेहविहीनमित्यर्थः। अतएव क्रियेति। निष्क्रियमिति यावत्। अतएव कूटस्थं निर्विकारम्। अतएव अद्वयं यावद्दृश्यप्रतियोगिकत्रैकालिकात्यन्ताभावाधिष्ठानमित्यर्थः। एतादृशं ब्रह्मास्तीति क्रियापदमध्याहृत्य संबन्धनीयम्। अस्यैव मतान्तरेण संज्ञान्तरमप्याह—**प्रतापेति**। इदं प्रकृत्य तत्रैवोक्तम्। एतदेवानन्वयाख्यं दूषणमिति। पक्षे प्रतापे विश्वनियामकत्वाद्रुद्र इव रुद्रो वेदस्तद्वाचा 'यतो वाचोनिवर्तन्ते' इत्याद्युपनिषद्भिरेत्यर्थः। अनन्वयं शक्तिवृत्त्या वेदान्तसमन्वयरहितमिति यावत्॥१३७॥ ततः क्रमप्राप्त षष्ठमरीतिमत्तावच्छब्दार्थोभययोगप्राधान्यादिप्रपञ्चेन नवविधमपि प्रकृते शब्दैकप्रकरणत्वेन तदितरानुपयोगात्तस्य प्रकृतोपयोगित्रैविध्यमुद्दिशति—**यदरीतिमदिति। शैथिल्यादीति**। शैथिल्यं वक्ष्यमाणलक्षणं ज्ञेयम्। आदिना तथाविधयोरेव वैषम्यकठोरत्वयोर्ग्रहः। ननु किमिदं भावरूपं दूषणत्रयमुताभावरूपमित्याशङ्क्य ताम्रादावौज्ज्वल्याभावात्कलङ्कवदभावप्रयोज्यभावरूपमेवेति द्योतयितुं तत्र श्लेषादिगुणप्रतियोगिकमभावमेव हेतुत्वेनाह—**गुणेति**। इदं शैथिल्येत्यतः प्राग्योज्यम्। नन्वर्थदोषेष्वेवास्त्यस्य संग्रह इत्याशङ्क्याह—**शब्देति**। शब्दमुख्यत्वेनेत्यर्थः। इदं तु गुणेत्यस्यापि पूर्वं संबन्धनीयम्॥१३८॥

**शैथिल्यं श्लेषराहित्यादेव बोध्यं बुधैर्गिरः ।**
**शारदी कौमुदी गोदामवदातीकरोत्यलम् ॥ १३९ ॥**
**समताया विपर्यासाद्वैषम्यमिति गीयते ।**
**मिलिन्दास्तुन्दिलानन्दाच्छादयन्त्युच्छतच्छदम् ॥१४०॥**
**विरहात्सौकुमार्यस्य कठोरत्वं विदां मतम् ।**
**भार्तिधक्त्विड्रुडुन्मादप्रोद्दीपनचणोऽवतात् ॥ १४१ ॥**

अथ किं तच्छैथिल्यमित्याकाङ्क्षायां तल्लक्षयति—**शैथिल्यमिति** । बुधैः श्लेषराहित्यादेव गिरः वाक्यस्य शैथिल्यं एतन्नामकं वाक्यदोषजात बोध्यमित्यन्वयः । तदुदाहरति—**शारदीति** । अत्र बहूनां पदानामेकपदत्ववदवभासने हेतुः श्लेषनामा कश्चिच्छब्दगुणः । सतु नास्त्येवेति बन्धस्य शैथिल्य स्फुटमेव । तदुक्तं कण्ठाभरण एव—'विपर्ययेण श्लेषस्य संदर्भः शिथिलो भवेत्' । यथा—'आलीयं मालतीमालालोलालिकलिला मनः । निर्मूलयति मे मूलात्तमालमलिने वने' । अत्र भिन्नानामपि पदानामेकपदताप्रतिभासहेतुरनतिकोमलो बन्धविशेषः । श्लेषस्तद्विपर्ययेण शब्दप्रधानोऽयं श्लेषविपर्यय इति ॥ १३९ ॥ एवमादिपदद्योतितयोर्वैषम्यकठोरत्वयोर्मध्ये प्रथमं लक्षयति—**समताया इति** । बुधैरित्यनुकृष्य योज्यम् । तदुदाहरति—**मिलिन्दा इति** । भ्रमरा इत्यर्थः । **तुन्दिलेति** । तुन्दिलः परिपुष्टः आनन्दो मकरन्दपानजन्यः प्रमोदो येषां ते तथा सन्त इत्यर्थः । एवंच तृप्तिजन्यताटस्थ्यादेव । **उदिति** । उत् विकसितत्वेनोत्कृष्टं यत् शतच्छदं 'शतपत्रं कुशेशयम्' इत्यमरात्कुशेशयं तदित्यर्थः । छादयन्ति स्वस्थतया निजावासेनाच्छादयन्तीति योजना । अत्र पूर्वचरणस्य मृदुबन्धत्वेनोत्तरचरणस्य गाढबन्धत्वेन समतावैपरीत्याद्वैषम्यं स्पष्टमेव । तथाचोक्तमाभरण एव—'भवेत्स एव विषमः समताया विपर्ययात्' इति । यथा—'कोकिलालापवाचालो मामेति मलयानिलः । उच्छलच्छीकराच्छाच्छनिर्झराम्भःकणोक्षितः' । अत्र पूर्वार्धस्य मृदुबन्धत्वादुत्तरार्धस्य च गाढबन्धत्वात्समबन्धेषु विषममिति विषमो नाम शब्दप्रधानः समताविपर्ययो दोष इति ॥ १४० ॥ ततः क्रमागतं कठोरत्वं लक्षयति—**विरहादिति** । पक्षद्वयेऽप्यर्थोऽतिरोहित एव । तदुदाहरति—**भार्तीति** । भा प्रभा तया आर्तिः पीडा यस्य तत्तम इत्यर्थः । तद्धन्तीति तथा । सूर्य इति यावत् । तस्य या त्विट् कान्तिस्तस्यां रुट् क्रोधो येषां चकोरकैरवादीनां ते तथा तेषां य उन्मादः प्रोत्साहजः संमदस्तस्य यत्प्रकर्षेणोद्दीपनं उत्तेजनं तत्र चणश्चतुरः शरद्राकासुधाकर इति यावत् । अवतात् रक्षतु । इह विरहिण्यादीनां तु रक्षणस्य प्रार्थनासहस्रेऽप्यसंभवादन्यस्यैतस्मात्पीडाभावादाधिभौतिकादिपीडातः सकलजगत्पालनस्येश्वरमात्रतन्त्रत्वाच्च निरुक्तचकोरादीनेव तथा कानिचिद्धान्यादीन्यपि स्वहिमसंकोचेन तत्पीडातः पालयत्वित्येवाशीर्युक्तेत्याकूतम् । एतेनास्य रसानुचितवर्णात्मकप्रतिकूलवर्णाख्यवाक्यदोषात्पार्थक्यम् । प्रकृते रसलेशस्याप्य-

**किंच प्रतापरुद्रीये प्रोक्तं संबन्धवर्जितम्।**
**चिरं विचारजे ज्ञाने तरुण्यास्ये हता वयम्॥ १४२॥**
**निराकाङ्क्षं तु सर्वेषां पदानां यद्यसंगतिः।**
**उक्तमाभरणेऽपार्थमिदमेव घटः पटः॥ १४३॥**

---

भावाद्वस्तुमात्रप्रधानत्वाच्च। परम्परया रसवत्त्वस्य रसगङ्गाधरादावनादृतत्वादप्रयोजकत्वाच्च। तस्मात्सामान्यतः सौकुमार्यराहित्यविशिष्टवाक्यत्वमेव कठोरत्वमिति तल्लक्षणं पर्यवसितम्। यदाहुराभरणकाराः—'सौकुमार्यविपर्यासात्कठोर उपजायते। यथा 'असितर्तितुगद्रिच्छित्स्वःक्षितां पतिरद्रिदृक्। अमिद्भिः शुभ्रदृग्दृष्टैर्द्विषो जेघ्नीयिषीष्ट वः'। अत्रातिकठोरत्वादसौकुमार्यं सुप्रतीतमेवेति। अस्य पद्यस्यायमर्थः—असिते मलिने पापे विषये 'ऋतिर्जुगुप्साकल्याणगतिस्पर्धासु' इति हैमादृतिर्जुगुप्सा यस्य तस्य कश्यपस्य तुक् 'तुक्। तोकम्' इति निघण्टोः पुत्र इत्यर्थः। एतादृशः। तथा। **अद्रीति।** पर्वतपक्षच्छित् तथा स्वःक्षितां स्वर्गपालकानां देवानां पतिः। तथा अद्रिदृक् सहस्राक्षः एतादृशः इन्द्रः अमिद्भिः अ इव विष्णुरिव पालकत्वेन मिमत इति तथा तैः स्निग्धैः ईदृशैः। **शुभ्रेति।** शुद्धदृष्टिविलोकनैः वः युष्माकं द्विषः शत्रून् जेघ्नीयिषीष्ट अत्यर्थं पुनः पुनर्वा वध्यादिति॥ १४१॥ अथ मतान्तरे दोषान्तरमप्युक्तमिति तदप्यत्र संगृह्णाति—**किंचेति।** समुच्चायकौ निपाताविमौ। प्रोक्तं कथितमस्तीत्यर्थः। तल्लक्षणं तु निराकाङ्क्षत्वरूपं प्रसिद्धमेव। नच काव्यप्रकाशरीत्या वक्ष्यमाणे साकाङ्क्षेऽर्थदोषेऽतिव्याप्तिः। तस्यार्थसामान्यसापेक्षत्वेन सबन्धैकसापेक्षत्वाभावादस्य तु तन्मात्रसापेक्षत्वाच्च। नवा सरस्वतीकण्ठाभरणोक्त 'समुदायार्थशून्यं यत्तदपार्थं वचः स्मृतम्' इत्यभिहितलक्षणेऽपार्थाह्वेऽर्थदोषेऽतिप्रसङ्गः। अस्य संबन्धमात्रसाकाङ्क्षत्वेन समुदायार्थशून्यत्वाभावात्। वस्तुतस्तु वचःपदेन तस्यैव वाक्यदोषत्वापत्तिर्दुर्वारा। नापि वचःपदमर्थे लाक्षणिकम्। लक्षणे तादृक्पदप्रयोगानौचित्यात्स्वायत्ते शब्दप्रयोगे किमित्यवाचकं प्रयुञ्जामह इति न्यायेनाप्रयोजकत्वादतिप्रसङ्गाच्च। एवं चात्र संबन्धमात्रसापेक्षत्व तल्लक्षणत्वेन फलितमिति ध्येयम्। तदुदाहरति—**चिरमिति।** अत्र वयं चिरं नतु क्षणमात्रं तत्रापि विचारजे शास्त्रीयविवेकजन्ये नत्वापातिके एतादृशे ज्ञाने सत्यपि तरुण्यास्ये युवतिवदने विषये हताः तदीक्षणोत्तरकालं अनुरागेण पराभूता इत्यन्वये विवक्षिते संबन्धघटकस्य सत्यपीति पदद्वन्द्वस्याभावाल्लक्षणसमन्वयः। नन्वेवं चेन्न्यूनपदत्वेनैवास्य गतार्थत्वम्। न। अस्य संबन्धमात्रघटकपदापेक्षत्वात्तस्य तु प्रकृतोपयोग्यर्थकपदसापेक्षत्वाच्चेति दिक्। उक्तं हि प्रतापरुद्रे—'संबन्धवर्जितं तत्स्याद्यत्रेष्टेनान्वयो हतः' इति॥ १४२॥ एवं प्रसङ्गप्राप्तं निराकाङ्क्षं लक्षयति—**निराकाङ्क्षं त्विति।** तुशब्दः पूर्ववैलक्षण्यावद्योती। **सर्वेषामिति।** तेन न पूर्वोक्तसंकरः। तत्र संमतिमाह—**उक्तमिति।** आभरणे। सरस्वतीकण्ठाभरण इत्यर्थः। इदमेव

**पादाद्यारम्भ एकाचा निपातेन नञावृते ।**
**संनिपातं गुरुः शंभुश्चेमे वन्द्योऽस्ति सर्वदा ॥ १४४ ॥**

अपार्थमेतन्नामक उक्तमर्थदोषत्वेन प्रतिपादितमिति यावत् । तदीयलक्षणवाक्यं तु सद्य एवोपनिबद्धम् । तदुदाहरति—**घट इति** । यथावा कण्ठाभरणे—'जरद्गवः कम्बलपादुकाभ्यां द्वारि स्थितो गायति मङ्गलानि । तं ब्राह्मणी पृच्छति पुत्रकामा राजन्रुमायां लशुनस्य कोऽर्थः' इति ॥ १४३ ॥ अथ सर्वानुभवसिद्धमपि प्राचीनैरसगृहीतं वाक्यदोषान्तरं स्वसंमतत्वेन संनिपाताख्यं लक्षयति—**पादादीति** । आदिना चूर्णिकादिः । तस्य य आरम्भस्तस्मिन् । श्लोकपादारम्भे गद्यारम्भे चेत्यर्थः । नञावृते । एवच 'न खलु न खलु बाणः' इत्यादौ नातिव्याप्तिः । उपलक्षणमिदं निषेधकत्वावच्छिन्नयावदेकाच्निपातानाम् । तेन 'मा निषाद-' इत्यादौ नातिप्रसङ्गः । अनादि 'किं खलु रत्नैरेतैः किंपुनरभ्रायितेन वपुषा ते । सलिलमपि यत्र तावत्कमर्णव वदन प्रयाति तृषितानाम्' इति । भामिनीविलासीये—'हे रोहिणि त्वमसि शीलवतीषु धन्या एनं निवारय पतिं सखि दुर्विनीतम् । जालान्तरेण मम वासगृहं प्रविश्य श्रोणीतटं स्पृशति किं कुलधर्म एषः' इति । शृङ्गारतिलकीये–'रेरे चातक सावधानमनसा मित्र क्षणं श्रूयताम्' इत्यादावन्यत्र 'हा हन्त हन्त नलिनीं गज उज्जहार' इत्यादावन्यत्र च पद्ये प्रोक्ताः किमादयो ज्ञेयाः । एकाचा एक एव अच् यस्मिन्निति तथा तेनेत्यर्थः । एतेन 'यत्रासौ वेतसी पान्थ' इत्यादौ न दोषः । एतादृशेन निपातेनेन 'चादयोऽसत्वे' इति सूत्रेण विहितनिपातसंज्ञेन चादिवर्णेनेत्यर्थः । संनिपाताख्य वाक्यदूषणं स्यादिति योजना । नच प्रागुदाहृते यदूर्ध्वं यत्पदं योग्यमित्याद्यक्रमाख्यदोषव्याख्यायां चादीना समुच्चयादनन्तरमित्याद्युद्योतवचने सति पादाद्यारम्भे नञादिकं विनैकाज्निपातप्रयोगात्मकस्यास्य संनिपातदोषस्याक्रमदोष एवान्तर्भावान्न पृथगुपन्यासो युक्त इति वक्तव्यम् । निरुक्तवाक्यस्यानन्तर्यादिनियममात्रविधायकत्वात्प्रारम्भप्रयोगनिषेधस्य तत्र क्वाप्यनुपलम्भात्प्रकृतोदाहरणे तु तद्रीत्या चकारस्य समुच्चयाव्यवहितत्वेन विन्यासेऽपि पादारम्भस्थत्वेन सकलसहृदयहृदयोद्वेजकत्वाच्च । नाप्येवंचेत्त्वय्येवायमत्रैव 'काव्यादिस्वार्थमन्यार्थं चाथ स्वार्थश्चतुर्विधः' इति प्रथमरत्ने कथं दोषः परिहरणीय इति वाच्यम् । तस्य पद्यस्य शास्त्रार्थमात्रप्रथकत्वेन काव्यत्वाभावान्निरुक्तदोषस्य काव्यैकविषयत्वाच्चेति दिक् । तथाच निषेधकत्वावच्छेदकावच्छिन्नादिकं विना पादाद्यारम्भैकाज्निपातत्वं संनिपाताभिधवाक्यदोषत्वमिति तल्लक्षणं फलितम् । तदुदाहरति—**गुरुरित्याद्य**त्तरार्धशेषेण । अत्र चकारस्य तथात्वाल्लक्षणसमन्वयः । यथावा धनंजयव्यायोगे—'अन्याङ्गनापरिहृतिप्रणयेन कीर्त्या चालिङ्गितो धवलया पलितच्छलात्तः । द्वन्द्वाहवप्रकटनिर्जितजामदग्न्यो देवव्रतः पृथुयशाः स पितामहो नः' इति । अत्र चालिङ्गित इति द्वितीयपादारम्भे च इति एकाचा निपातेन तथा ॥ १४४ ॥ एवं वाक्यदोषाननुपपाद्येदानीं तत्संख्याम-

**इति सर्वेऽपि पञ्चाशद्वाक्यदोषा निरूपिताः।**
**अर्थदोषानथो वक्ष्ये पूर्वाचार्योक्तरीतितः॥ १४५॥**
**शक्यो लक्ष्यस्तथा व्यङ्ग्य इत्यर्थस्त्रिविधो मतः।**
**व्यङ्ग्य एव रसस्तत्र त्रिविधे वस्त्वलंकृती॥ १४६॥**
**तत्र प्रागुक्तरीत्यैव काव्यद्वैविध्यसिद्धितः।**
**अर्थदोषा अपि द्वेधा रसतद्भिन्नगत्वतः॥ १४७॥**
**तद्भिन्न एव कथ्यन्ते तत्र ते प्रथमं मया।**
**सामान्येनैव सर्वेऽपि ग्रन्थगौरवभीतितः॥ १४८॥**
**यत्राभिमत एवार्थोऽन्यथोक्तौ निन्दितो भवेत्।**
**सोऽर्थदोषो रसादिस्थस्तत्तद्दोष इतीर्यते॥ १४९॥**

---

भिधायार्थदोषोपपादनं प्रतिजानीते—**इतीति** ॥ १४५॥ ननु वर्णादिभेदेन व्यक्तं शब्दस्य त्रैविध्यवदर्थस्यापि भवन्मते किं तथात्वमेवोत तार्किकादिवदन्यविधत्वमपीत्याशङ्कयाद्यपक्षमेवाङ्गीकुर्वंस्तत्त्रैविध्यमुद्दिशति—**शक्य इत्यर्धेन**। तत्त्वं तु क्रमेण शक्त्यादिप्रतिपाद्यत्वमेव। अत्रैव सर्वेषामपि तत्तद्वाद्यभिमतानामर्थानामन्तर्भावो बोध्यः। मतः आलंकारिकाणां संमत इत्यर्थः। यद्वा सर्वेषामपि तैर्थिकानामभिमत इति यावत्। तत्र को वा शक्यादिरिति तद्विशेषाकाङ्क्षायामाह—**व्यङ्ग्य एवेत्युत्तरार्धेन**। रसस्य शृङ्गारादेर्व्यञ्जनामात्रगम्यत्वं तूक्तमधस्तात्पञ्चमरत्न एव। त्रिविधे शक्यत्वादिभेदेन त्रिप्रकारके अपि भवत इत्यन्वयः। वस्तुत्वं कथात्वं अलंकृतित्वं तूपमाद्यन्यतमत्वमिति सामान्यतस्तल्लक्षणं बोध्यम् ॥ १४६॥ ननु भवत्वेवं तद्व्यवस्था तथापि प्रकृते किमागतमित्यत आह—**तत्रेति**। तत्र निरुक्तव्यवस्थायां सत्यां अर्थस्य रसतदितरभेदेन द्वैविध्यलाभादित्याशयः। **प्रागिति**। प्रथमरत्नोक्तभङ्ग्यैवेत्यर्थः। **काव्येति**। सरसत्वचित्रत्वभेदेन काव्यस्य द्विप्रकारकत्वसिद्धेरिति यावत्। **अर्थेति। रसेति।** द्वेधा भवत इति संबन्धः ॥ १४७॥ ननु तर्हि किं प्रथमं रसदोषान्कथयसि तथा चेत्पूर्वाचार्योक्तेत्यादिप्रतिज्ञाविरोधः काव्यप्रकाशकारादिभिस्तैः सामान्यतोऽर्थदोषाभिधानानन्तरमेव रसदोषाभिधानादित्यत्राह—**तद्भिन्न एवेति**। तत्र रसतद्भिन्नगदोषयोर्मध्य इत्यर्थः। मया तद्भिन्न एव। रसेतरार्थविषय एवेति यावत्। ते दोषाः सर्वेऽपि सामान्येनैव वस्तुत्वालंकृतित्वाख्याभेदं विना केवलं रसेतरार्थत्वसामान्येनैवेत्यर्थः। तत्र हेतुः—**ग्रन्थेति**। प्रथमं कथ्यन्त इति संबन्धः ॥ १४८॥ ननु किं नामार्थदोषत्वमित्याशङ्क्य सामान्यतस्तं लक्षयति—**यत्रेति**। अभिमत एव कवेः संमत एव। अन्यथोक्तौ विपरीताभिधाने। निन्दितः सहृदयानास्वाद्यत्वप्रयोजकत्वावच्छिन्न इत्यर्थः। सोऽर्थदोषः स्यादित्यध्याहारेणान्वयः। तथा स एव रसादिस्थः। आदिना तद्भिन्नकूटत्वावच्छिन्नयोर्वस्त्वलंकृत्योर्ग्रहः। शृङ्गारादिरसवस्त्वादितदितरार्थनिष्ठः सन्निति

**अर्थोऽपुष्टोऽन्यलभ्यत्वादप्रयोजकतोऽपि च ।**
**शब्दानर्हः शरत्तीव्रः प्रोदितोऽर्कस्तमोऽहरत् ॥ १५० ॥**
**बुद्ध्यारूढो न शीघ्रं यः स कष्ट इति कथ्यते ।**
**सीमान्त एव संपन्नः कान्तासीमन्तचिन्तनात् ॥ १५१ ॥**

यावत् । तत्तद्दोषः रसदोषः तद्भिन्नार्थदोष इति ईर्यते शास्त्रादौ कथ्यत इति योजना । एवंच विपरीतोक्तिप्रयोज्यानास्वाद्यतापन्नसंमतैकार्थकत्वं रसान्योन्याभावप्रतियोग्यवच्छिन्नत्वे सति तत्त्वं रसैकावच्छिन्नत्वेन तत्वं चेति क्रमादर्थसामान्यस्य रसेतरार्थस्य रसस्य च दोषाणां लक्षणानि ज्ञेयानि । तदुक्तं काव्यप्रदीपे- 'यत्र विवक्षित एवार्थोऽन्यथाभिधाने दुष्यति सोऽर्थदोषः' इति ॥ १४९ ॥ अथ प्राप्तावसरत्वात्—'अर्थो पुष्टः कष्टो व्याहतपुनरुक्तदुःक्रमग्राम्याः । संदिग्धो निर्हेतुः प्रसिद्धिविद्याविरुद्धश्च । अनवीकृतः सनियमानियमविशेषाविशेषपरिवृत्ताः । साकाङ्क्षोऽपदमुक्तः सहचरभिन्नः प्रकाशितविरुद्धः । विध्यनुवादायुक्तस्त्यक्तपुनःस्वीकृतोऽश्लीलः' इति काव्यप्रकाशादिमूलानुसारेण प्रथममपुष्टार्थाख्य रसेतरार्थदोष लक्षयति—**अर्थ इति । अन्येति ।** अर्थसमाजावाप्यत्वादित्यर्थः । अप्रयोजकतः भावप्रधानो निर्देशः । अप्रयोजकत्वाच्चेतियावत् । **शब्देति** । शब्देनोपात्तुमयोग्य इत्यर्थः । एतादृशोऽर्थः वाक्यार्थः अपुष्टःएतन्नामकदोषग्रस्तो ज्ञेय इत्यन्वयः । तथाचान्यलभ्यत्वादिना शब्दानर्हत्वे सति संमतैकार्थमपुष्टार्थकत्वमिति निष्कर्षः । अस्यैव भोजराजेन व्यर्थत्वमुक्तं सरस्वतीकण्ठाभरणे—'व्यर्थमाहुर्गतार्थं यच्च स्यान्निष्प्रयोजनम्' इति । विस्तरस्तु प्रदीपादौ ज्ञेयः । तदुदाहरति—**शरदित्या-** युत्तरार्धशेषेण । अत्र शरत्तीव्रत्वमप्रयोजकम् । तद्विनापि तत्र तमःशामकत्वस्य नैसर्गिकत्वात् । तथा प्रोदितत्वमपि तमोहरणक्रियान्यथानुपपत्त्यार्थसमाजकसिद्धमित्यन्यलभ्यमेवेति तादृशो वाक्यार्थः शरदादिशब्दैरकथ्य एवेति लक्षणसंगतिः । यथावा चन्द्रालोके—'अपुष्टोऽर्थो विशेष्यं चेन्न विशेषो विशेषणात् । विशन्ति हृदये कान्ताकटाक्षाः खञ्जनत्विषः' इति ॥ १५० ॥ ततः कष्टं लक्षयति—**बुद्ध्यारूढ इति** । तमुदाहरति—**सीमान्त एवेति** । अत्र कान्तासीमन्तचिन्तनात् यावत्स्त्रीगुणविशिष्टायाः कस्याश्चिद्रमण्याः केशसंनिवेशविशेषानुसंधानधारापराहतत्वादित्यर्थः । सीमान्त एव आयुर्मर्यादाप्रान्तभाग एवेति यावत् । संपन्नः सिद्धः अस्माकमिति शेषः । तत्रापि स्वप्नेऽपि सा न लब्धा नच साधितः परलोकोऽपीत्यत्र कैव कथा कैवल्यस्येति धिग्धिग्विषयानुशयमित्याशय इत्याकारकोऽर्थस्तु शीघ्रं बुद्ध्यारूढो नैवेति तथात्वम् । यथावा साहित्यदर्पणे—'वर्षत्येतदहर्पतिर्ननु घनो धामस्थमच्छं पयः सत्यं सा सवितुः सुता सुरसरित्पूरो यया प्लावितः । व्यासस्योक्तिषु विश्वसित्यपि न कः श्रद्धा न कस्य श्रुतौ न प्रत्येति तथापि मुग्धहरिणी भास्वन्मरीचिष्वपः' । अत्र यस्मात्सूर्यो वृष्टेर्यमुनायाश्च प्रभवस्तस्मात्तयोर्जलमपि सूर्यप्रभवं ततः सूर्यमरीचीनां जलप्रयोजकहेतुत्वमुचितम् ।

**व्याहतो निन्द्यते स्तुत्वाऽन्यथा वा यत्र स स्मृतः।**
**कृतार्था धनिका एव तेऽप्यहो दुःखभागिनः॥ १५२॥**
**सुन्दरीमूर्खसर्वस्वमस्तु मे तु चिदेव सा।**
**पुनरुक्तः पदार्थो वा वाक्यार्थो वा द्विरुक्तिमान्॥ १५३॥**
**मृगाक्षि तव नेत्रे तु हरिण्या इव सुन्दरे।**
**राधे विहर कृष्णेन कृष्ण संरस राधया॥ १५४॥**

---

अथापि मृगीभ्रान्तत्वात्तत्र जलप्रत्ययं न करोतीत्ययमप्रस्तुतोऽप्यर्थो दुर्बोधः। दूरे चास्मात्प्रस्तुतार्थबोध इति कष्टार्थत्वमिति। यथावा जानकीपरिणये—'निष्प्रत्यूहतपःप्रबन्धहुतभुग्ज्वालाभितप्तद्रुतक्षत्राकारसुवर्णपिण्डरचितब्राह्मण्यभूषोज्ज्वलः। यः स्वर्गान्तरसर्गसाहसनिधिच्छेदार्थसार्थीभवद्गीर्वाणाञ्जलिपद्मकुड्मलशशी नालोकि लोकेन किम्' इति ॥ १५१॥ व्याहतं लक्षयति—**व्याहत इति।** यत्र वाक्ये अर्थविशेषः स्तुत्वा निन्द्यते वा इत्यथवा अन्यथा निन्दित्वा वा स्तूयते स वाक्यार्थः व्याहतः एतन्नामकदोपदुष्टो भवतीति संबन्धः। तच्छब्दस्याजहत्स्वार्था वाक्यार्थे लक्षणा। एवंच सामानाधिकरण्येनैवोत्कर्षाद्यन्यतरपूर्वोत्तरवैपरीत्यावच्छिन्नार्थकत्वं व्याहतत्वमिति तल्लक्षणं बोध्यम्। तत्र 'धन्यानां गिरिकन्दरेषु वसतां ज्योतिः परं ध्यायतामानन्दाश्रुपयः पिबन्ति शकुना निःशङ्कमङ्केशयाः। अस्माकं तु मनोरथोपरचितप्रासादवापीतटक्रीडाकाननकेलिकौतुकजुषामायुः परं क्षीयते' इत्यादावतिव्याप्तिरिति सामानाधिकरण्येनैवेति। अत्र वैयधिकरण्येनैव स्तुतिनिन्दयोः सत्वात्। तत्राद्यप्रकारमुदाहरति—**कृतार्था इति**॥ १५२॥ द्वितीयमुदाहरति—**सुन्दरीति।** अत्र सामानाधिकरण्येनैव स्तुतिपूर्वकनिन्दादेः सत्वाल्लक्षणसमन्वयः। यथोक्तं काव्यप्रदीपे—'उत्कर्षो वापकर्षो वा प्राग्यस्यैव निगद्यते। तस्यैवाथ तदन्यश्चेद्व्याहतोऽर्थस्तदा भवेत्' इत्युपलक्षितविरुद्धत्ववान्। यथा—'जगति जयिनस्ते ते भावा नवेन्दुकलादयः प्रकृतिमधुराः सन्त्येवान्ये मनो मदयन्ति ये। मम तु यदियं याता लोके विलोचनचन्द्रिका नयनविषयं जन्मन्येकः स एव महोत्सवः'। अत्र पूर्वार्धे साधारणचन्द्रिकाचन्द्रकला स्वप्रत्यसारतया प्रतिपादिता। तेनैवोत्तरार्धे चन्द्रिकात्वमुत्कर्षायारोप्यत इति व्याघात इति। पुनरुक्तं लक्षयति—**पुनरुक्त इति।** स्फुट एवार्थः॥ १५३॥ तत्राद्यमुदाहरति—**मृगाक्षीति।** अत्र मृगाक्षीति संबुद्ध्यैव स्वप्रेयसीनेत्रयोर्मृगनेत्रसमानसौन्दर्ये सिद्धेऽपि हरिण्या इवेति पुनस्तदापादनात्पदार्थपौनरुक्त्यं स्पष्टमेव। यथावा—'उदयदुदयदीक्षणाय पत्युश्चपलदृशस्त्रपया निरुध्यमानम्। मन इव कृपणस्य दानकाले कति न ततान गतागतानि चक्षुः'। अत्र चपलदृक्त्वेन सिद्धोऽङ्गनानयनयोश्चाञ्चल्यपदार्थ एवोदयदित्यादिना कतीत्यादिना च प्रपञ्चित इति तथात्वमित्याशयः। द्वितीयमुदाहरति—**राधे इति।** अत्रापि पूर्वोत्तरचरणोक्तयोर्वाक्यार्थयोस्तत्त्वमतिरोहितमेव। एतस्यैवैकार्थत्वं संज्ञितं कण्ठाभरणकारेण। **यथावा**

**दुष्क्रमोऽनुक्रमो दुष्टो लोकतः शास्त्रतोऽथ वा ।**
**युवतिं देहि मुक्तिं वा कृष्ण ज्ञात्वा शृणोम्यहम् ॥ १५५ ॥**
**ग्राम्यः पत्नीं रिरंसुः सन्नाश्लेषमभियाचते ।**
**संदिग्धः पृच्छति श्रीर्वा संपाद्या भक्तिरेव वा ॥ १५६ ॥**
**निर्हेतुः संत्यजाम्यद्य कामनामखिलामपि ।**
**औचित्यरहितं प्राहुश्चन्द्रालोकेऽतिरोहितम् ॥ १५७ ॥**

काव्यप्रकाशे—'अस्त्रज्वालावलीढप्रतिबलजलधेरन्तरौर्वायमाणे सेनानाथे स्थितेऽस्मिन्मम पितरि गुरौ सर्वधन्वीश्वराणाम् । कर्णाल सम्भ्रमेण व्रज कृप समरं मुञ्च हार्दिक्य शङ्कां ताते चापद्वितीये वहति रणधुरं को भयस्यावकाशः' । अत्र चतुर्थपादवाक्यार्थः पुनरुक्त इति ॥ १५४॥ दुष्क्रमं लक्षयति—**दुष्क्रम इति ।** कण्ठाभरणे त्विद क्रमभ्रष्टत्वेनोक्तम् । यथा—'क्रमभ्रष्टं भवेदार्थः शाब्दो वा यत्र न क्रमः' इति । तत्र शाब्दस्त्वसानुक्तः क्रमप्रयुक्तभग्नप्रक्रमत्वेन वाक्यदोषेषु प्रागेव । अयं त्वार्थ एवेति ध्येयम् । द्विविधमपि तमुदाहरति—**युवतिमित्य-**नुक्रमेण । अत्र मुक्तापेक्षया युवतेस्तुच्छत्वस्य लोकत एव सिद्धत्वात्तद्दानाभावे मुक्तियाचनादाद्यः श्रवणस्य ज्ञानसाधनस्य श्रोतव्य इत्यादिशास्त्रैकसिद्धत्वेन तदुत्तरं श्रवणोक्तिर्द्वितीयश्च ज्ञेयः ॥ १५५ ॥ ग्राम्यमाह—**ग्राम्य इति ।** तल्लक्षणं तु व्रीडाव्यञ्जकार्थत्वं स्फुटमेव । तमुदाहरति—**पत्नीमिति ।** ग्राम्यपदमत्राप्यनुकर्षणीयम् । तेन ग्राम्यः ग्रामीणः पुमानित्यर्थः । रिरंसुः रन्तुमिच्छुः । क्रीडोत्सुकः सन्निति यावत् । पत्नीं स्वरमणीं आश्लेषमालिङ्गनम् । अभियाचत इति योजना । अत्रार्थस्य तथात्वं स्पष्टमेवेति ग्राम्यदोषदूषितत्वमिति तत्त्वम् । तदुक्तम्—'स ग्राम्योऽर्थो रिरंसादिः पामरैर्यत्र कथ्यते । वैदग्ध्यवक्रिमबलं हित्वैव वनितादिषु' इति । संदिग्धमभिधत्ते—**संदिग्ध इति ।** इदं पृच्छतीत्याद्युदाहरणेऽप्यन्वेति । संजातसंदेहः पुरुषविशेष इत्यर्थः । अस्यैव भोजराजः ससंशयत्वमाह । यथावा काव्यप्रदीपे भर्तृहरिवचनम्—'मात्सर्यमुत्सार्य विचार्य कार्यमार्याः समर्यादमुदाहरन्तु । सेव्या नितम्बाः किमु भूधराणां किमु स्मरस्मेरविलासिनीनाम्' इति । विस्तरस्तु तत्रैव ज्ञेयः । यथावा—'एकः पपौ भुवनभीकरकालकूटमन्यः पपौ स्तनविषं खलु पूतनायाः । को वानयोरधिक इत्यनुचिन्त्य वृद्धाः सत्यं ब्रुवन्तु तमिमं वयमाश्रयामः' इति । अत्र शिव एवाश्रयणीय इति व्यञ्जनया प्रतिपिपादयिषितं तत्तु को वेत्यादिना संदेहविषयताक्रान्तमिति तथात्वमिति दिक् ॥१५६॥ एवं निर्हेतुमाह—**निर्हेतुरित्यर्धेन ।** एतदत्रापि समित्याद्युदाहरणं सबध्यते । निष्कामोऽहमित्यर्थः । अथ जयदेवमतमौचित्यरहितमपि सगृह्णाति—**औचित्येत्यर्धेनैव ।** प्राहुर्जयदेवा इति शेषः । चन्द्रालोके एतन्नाम्नि ग्रन्थे इत्यर्थः । अतिरोहितं स्पष्टमिति यावत् । एवंच जयदेवाः चन्द्रेति, अतीति, औचित्येति, एतन्नामकमर्थदोषं प्राहुरित्यन्वयः । अत्रोदाहरणं तु द्वितीयपादमाहृत्य ज्ञेयम् । तथा-

**कविप्रसिद्धितः शास्त्रैः सह वा यो विरुद्धयति ।**
**कीर्तिस्ते सूर्यसंकाशा चम्पकस्रगिवेश्वरे ॥ १५८ ॥**
**किं नीत्या शक्तियुक्तस्य नखलेखा प्रियानने ।**
**अद्वैतज्ञानमाप्यापि कर्म कृत्वैव मुच्यते ॥ १५९ ॥**

चायमर्थः—**चन्द्रेति** । हिमकरोद्योत इत्यर्थः । अतीति भावप्रधानो निर्देशः । परमारक्तत्वमस्तीति । 'रोहितो लोहितो रक्तः शोणः कोकनदच्छविः' इत्यमरः । तदुक्तम्—'अनौचित्यं कीर्तिलतां तरङ्गयति यः सदा' इति । उपलक्षणमिदं कण्ठाभरणोक्तानुमानविरोधान्तर्गतयुक्तिविरोधप्रतिज्ञाविरोधयोरपि । तदुक्तं तत्रैव तत्प्रकरणे । तत्र युक्तिविरुद्धं यथा—'सुरभिमधुपानलम्पटभ्रमरगणाबद्धमण्डलीबन्धम् । कस्य मनो नानन्दति कूर्मपृष्ठस्थितं कमलम्' । अत्र कूर्मपृष्ठे कमलोद्गतेरयुक्तत्वाद्युक्तिविरुद्धमिदमिति । प्रतिज्ञाविरुद्धं यथा—'यावज्जीवमहं मौनी ब्रह्मचारी च मे पिता । माता च मम वन्ध्यासीत्स्मराभोऽनुपमो भवान्' । इति च । अत्र तु प्रतिज्ञाविरोधः स्फुट एवेति दिक् ॥ १५७ ॥ ततः क्रमप्राप्तं द्विविधमपि विरुद्धं लक्षयति—**कवीति** । काव्यकर्तृप्रसिद्ध्या सहेत्यर्थः । सार्वविभक्तिकस्तसिः । क्रमेणोदाहरति—**कीर्तिरिति** । अत्र कीर्तेः सूर्यसादृश्यं श्रीवाल्मीक्यादिकविप्रसिद्धिविरुद्धमिति । तथा 'ईश्वरः शर्व ईशानः' इति कोशादीश्वरपदशक्यतावच्छिन्ने शिवे चम्पकमालायाः पुराणादौ चम्पकस्य नारदेन शप्तत्ववर्णनात्सत्वकथनं शास्त्रविरुद्धमिति च लक्षणसंगतिः । उपलक्षणमिदं श्रौतस्मार्तादियावद्धर्मशास्त्रविरोधस्यापीति तात्पर्यम् । यथावा प्रथमोदाहरणं काव्यप्रकाशे—'उपपरिसरं गोदावर्याः परित्यजताध्वगाः सरणिमपरो मार्गस्तावद्भवद्भिरिहेष्यताम् । इह हि विहितो रक्ताशोकः कयापि हताशया चरणनलिनन्यासोदञ्चन्नवाङ्कुरकञ्चुकः' । अत्र पादाघातेनाशोकपुष्पोद्गमः कविप्रसिद्धो न पुनरङ्कुरोद्गम इति ॥ १५८ ॥ ननु शास्त्रैरिति बहुवचनस्य कथं धर्मशास्त्रविरोधोदाहरणमात्रेण चारितार्थ्यमित्याशङ्क्यार्थादिशास्त्रविरोधोदाहरणान्यपि संक्षिपन्नर्थकामशास्त्रविरोधावुदाहरति—**किमित्यादिना** क्रमेण चरणद्वयेन । शक्तियुक्तस्य शारीरबलवतः पुंसः नीत्या संधिविग्रहादिषाड्गुण्यसरण्या किम् । न किमपि प्रयोजनमित्यर्थः । अत्र सत्यपि शारीरबले षाड्गुण्यहीनस्यार्थशास्त्रेऽनर्थोपपादनात्तथैव लोके दर्शनाच्चार्थशास्त्रविरोधो बोध्यः । **नखेति** । इह कामशास्त्रे 'ग्रीवाकरोरुजघनस्तनपृष्ठिकक्षाहृत्पार्श्वगण्डविषये नखराः स्युः' इत्यनङ्गरङ्गीयवचनेन मुखे नखरेखाप्रदानानुक्तेस्तद्विरोधः स्फुट एव । यथावा काव्यप्रदीपे—'विधाय दूरे केयूरमनङ्गाङ्गणमङ्गना । बभार कान्तेन कृतां करजोल्लेखमालिकाम्' इति । अथ मोक्षशास्त्रविरोधमाह—**अद्वैतेत्यर्धेन** । 'ज्ञात्वा देवं मुच्यते सर्वपाशैः' इत्यादिश्रुत्यादिप्रमाणसहस्रेण निरुक्तात्मज्ञानोत्तरक्षण एव द्वयोच्छेदलक्षणमोक्षसिद्धेर्मध्ये कर्तव्यान्तरानपेक्षणान्मोक्षशास्त्रविरोधः प्रसिद्ध एव । यत्तु धर्मादिक्रमप्राप्तमोक्षशास्त्रविरोधस्थले योम-

प्रत्यक्षेण सहाप्याह कण्ठाभरणकृत्त्रिधा ।
विरोधं दैशिकं स्पष्टं कालिकं लौकिकं तथा ॥ १६० ॥
प्राचीसरस्वती काश्यां संफुल्लं कमलं निशि ।
औदुम्बरप्रसूनानामामोदः परमाद्भुतः ॥ १६१ ॥
विरोधेऽपि च लौकिक्या प्रसिद्ध्या समयः कवेः ।
पूज्य एव हरेः कीर्त्या गोपीनां चन्द्रिका सदा ॥ १६२ ॥
भङ्ग्यन्तरेण नूतनत्वमनीतस्त्वनवीकृतः ।
किं चित्रेण कलत्रेण किं पुत्रेणापि किं श्रिया ॥ १६३ ॥

शास्त्रविरोधोदाहरणमुक्तं प्राचीनैस्तच्चिन्त्यम् । 'एतेन योगः प्रत्युक्तः' इति पारमर्षसूत्रात्तस्य साक्षान्मोक्षप्रदत्वाभावादिति रहस्यम् ॥ १५९ ॥ एवं प्रत्यक्षविरोधमपि सग्रहीतुं तत्र संमतिं तत्प्रकारांश्चाह—**प्रत्यक्षेणेति** । तदुक्तं तत्रैव 'यो देशकाललोकादिप्रतीपः कोऽपि दृश्यते । तमामनन्ति प्रत्यक्षविरोधं शुद्धबुद्धयः' इति ॥ १६० ॥ तत्र दैशिकं विरोधमुदाहरति—**प्राचीति** । तस्याः प्रयागादावपि गुप्तत्वेनैव सत्वात्काश्यामसत्वाच्च तथात्वमत्रेति बीजम् । अथ कालिकं तमाह—**संफुल्लमिति** । तस्य दिवैव विकासादिह तत्त्वमिति तत्त्वम् । एव लौकिकमपि तं प्रतिपादयति—**औदुम्बरेति** । लक्षणस्योभयोरपि तौल्यात्तदुक्तमतिमात्रमप्यत्रैवान्तर्भवति । यथावा काव्यप्रदीपे प्रसिद्धिविद्याविरुद्धविचारे प्रसिद्धेर्लोककविसंबन्धित्वेन द्वैविध्यादाद्यनिरूपणावसरे—'इद ते केनोक्त कथय कमलातङ्कवदने यदेतस्मिन्हेम्नः कटकमिति धत्से खलु धियम् । इद तद्दुःसाध्यक्रमणपरमास्त्रं स्मृतिभुवा तव प्रीत्या चक्रं करकमलमूले विनिहितम्' । अत्र कामचक्रं लोके कविमार्गे वा न प्रसिद्धमिति प्रपञ्चितम् ॥ १६१ ॥ ननु यदि लोकप्रसिद्धिकविप्रसिद्ध्योः परस्परं विरोधस्तदा कस्या आदर इत्यत्राह—**विरोधेऽपि चेति** । एवकारस्तु कवेरित्यत्र योज्यः । तथाच चेत्यपरं दोषतर शास्त्रार्थं कथयितुं निपातः । लौकिक्या प्रसिद्ध्या सह विरोधेऽपि कवेरेव समयः पूज्य इति संबन्धः । तमुदाहरति— **हरेरिति शेषेण** । सदा प्रतिनिशमित्यर्थः । यथावा काव्यप्रकाशे—'सुसितवसनालकारायां कदाचन कौमुदीमहसि सुदृशि स्वैरं यान्त्यां गतोऽस्तमभूद्विधुः । तदनु भवतः कीर्तिः केनाप्यगीयत येन सा प्रियगृहमगान्मुक्ताशङ्का क नासि शुभप्रदः' । अत्रामूर्तापि कीर्तिर्ज्योत्स्नावत्प्रकाशरूपा कथितेति लोकविरुद्धमपि कविप्रसिद्धेर्न दुष्टमिति । यथावा कुवलयाश्वविलासे—'यदीययशसाखिले धवलिते जगन्मण्डले स्वनाथ इति सभ्रमादुपगता परं पूरुषम् । निवेद्य सरसं वचः प्रियतमैकवेद्यं पुनस्तदीयविषमोत्तराद्विधुवधू परं लज्जते' इति । यद्यपीदं गुणरत्ने वक्तुमुचितमथापि 'सप्रसङ्ग उपोद्घातो हेतुतावसरस्तथा । निर्वाहकैककार्यत्वे षोढा संगतिरिष्यते' इति वचनात्प्रसङ्गसंगत्यात्रोक्तमित्याकूतम् ॥ १६२ ॥ अथानवीकृतं लक्षयति—**भङ्ग्यन्तरेणेति** । रीत्य-

**सामान्यं च विशेषश्चानियमो नियमस्तथा ।**
**एतेषां प्रातिलोम्येन चतस्रः परिवृत्तयः ॥ १६४ ॥**
**नियमो वश्यता तस्याः परिवृत्तिर्विवर्जनम् ।**
**यदाभासकृतं रूयादि सुखं कस्याद्य तन्मतम् ॥ १६५ ॥**

न्तरेणेत्यर्थः । नूतत्व नव्यत्वम् । अनीतः अप्रापितः । तुशब्दः कथितपदाद्वैलक्षण्यद्योतनार्थः । एतादृशोऽर्थः अनवीकृतो भवतीति संबन्धः । तस्माद्भङ्ग्यन्तरप्रयुक्ताभिनवतारहितार्थकत्वमनवीकृतत्वमिति तल्लक्षणं पर्यवसितम् । एतेन यदुक्त राकागमकृता काव्यप्रकाशीयं सोदाहरणमिद दोषजातमनूद्य तत्तु कथितपदान्तर्गतमिति तत्परास्तम् । यद्यपि तच्च बहुशः प्रतिपाद्यस्यार्थस्यैकयोक्त्या कथनमिति तदुक्तंतल्लक्षणतोऽस्य तथात्वेऽपि निरुक्तलक्षणेन तदसाङ्कर्यात्तस्य शब्दादिनिष्ठपौनरुक्त्यावच्छिन्नत्वेनास्य निरुक्तरीत्या ततः सुतरां विभिन्नत्वाच्च । उक्तं हि काव्यप्रदीपे—'अथैष कथितपद एवान्तर्भविष्यतीति चेन्न । पर्यायान्तरप्रयोगे भङ्गेरेकरूपतायामसांकर्यादिति । तमुदाहरति—**किमिति** । अत्र किमित्येकयैव भङ्ग्या त्रयाणामप्युपुमर्थत्वलक्षणोऽर्थो नाभिनवतां नीत इति लक्षणसंगतिः । यथावा काव्यप्रकाशे—'प्राप्ताः श्रियः सकलकामदुघास्ततः किं दत्त पदं शिरसि विद्विषतां ततः किम् । संतर्पिताः प्रणयिनो विभवैस्ततः किं कल्पं स्थितं तनुभृतां तनुभिस्ततः किम्' इति । नन्वेतत्प्रतियोगी नवीकृतः कथमिति चेत्सोऽप्युदाहृतस्तत्रैव—'यदि दहत्यनलोऽत्र किमद्भुतं यदि च गौरवमद्रिषु किं ततः । लवणमम्बु सदैव महोदधेः प्रकृतिरेव सतामविषादिता' इति ॥ १६३ ॥ ततो दोषान्तरं वक्तुमुपोद्घातमाह—**सामान्यं चेति** । अस्त्वेवमुद्देशः किं तेनेत्यत्राह—**एतेषामिति** । कथ्यन्त इति शेषः । तत्वं त्वग्र एव स्फुटीभविष्यतीति भावः ॥ १६४ ॥ तत्र नियमपरिवृत्तेरेवोक्तक्रमप्राप्तत्वात्प्रथमं तदवच्छिन्नं लक्षयति—**नियम इति** । अवश्यतेति च्छेदः । तस्याः अवश्यतायाः तस्मात्सावधारणोचिता तथोक्तत्वं सनियमपरिवृत्तत्वं बोध्यम् । तदुक्तं काव्यप्रदीपे 'तत्र सनियमपरिवृत्तः सनियमत्वेन वक्तुमुचितोऽनियमत्वेनोक्त' इति । ननु राकागमे तावदेतेन काव्यप्रकाशोक्तयोः सनियमानियमपरिवृत्तिदोषयोरप्यत्रैवान्तर्भावः अनियमः सामान्यं सनियमो विशेषस्तत्परिवृत्तिस्तत्त्याग इति सामान्यविशेषपरिवृत्त्योरेव सनियमाद्यन्तर्भावः प्रतिपादितः । सयुक्तिकं चैतत् । नियमो ह्यन्ययोगव्यवच्छेदलक्षणमेवकारादिप्रतिबोध्यमवधारणमेव । विशेषोऽपि विशिष्टबुद्धिप्रयोजको विशेषणाख्यः सजातीयव्यावर्तकः प्रसिद्ध एव । तथाचोभयत्रापि व्यावृत्तिफलकत्वतौल्यात् कथमनयोस्ताभ्यां सकाशाद्वैलक्षण्यमितिचेन्न । नियमविशेषयोर्वैलक्षण्यात् । तद्यथा त्वदुक्तरूप एव नियमस्तावत्स्वव्यवच्छेद्यान्योन्याभावप्रतियोगितावच्छेदकावच्छिन्नयावद्वस्तुव्यवच्छेदैकार्थक इति दीधितिकारादिसिद्धान्तः । तेन पार्थ एव धनुर्धर इत्यादौ पार्थान्यस्मिन् धनुर्धरत्वव्युदास एव बुध्यते नत्वन्यत्किं-

**त्यक्तोऽस्त्यनियमो यत्र स तथा गीयते बुधैः ।**
**सीते त्वं संपदेवासि रामस्य जगतीपतेः ॥ १६६ ॥**
**विशेषपरिवृत्तः स विशेषो यत्र नोदितः ।**
**कृष्णं विना कथं कार्यं कालोऽयं समुपागतः ॥ १६७ ॥**

चिदपि । विशेषे तु त्वदुक्तरूप एव शुक्लां गामानयेत्यादौ स्वविशेष्यस्य सजातीयमात्राद्भेदकत्वमेवेति न तच्छब्दबोधकाले तदितरविधिनिषेधानपि । तेन नियमस्योक्तरीत्या निषेधमात्ररूपत्वेनाभावविशेषत्वाद्विशेषस्य तु स्वविशेष्यसजातीयकव्याकर्तकधर्मत्वलक्षणत्वेन भावरूपत्वात्कथं न वैलक्षण्यं स्यात् । नच ब्राह्मण एव वन्द्य इत्यादाववधारणप्रतिबोध्यस्य नियमस्य विजातीयमात्रनिवर्तकत्वोपलब्धेर्नीलमुत्पलमित्यादौ तु सजातीयविजातीयोभयस्यापि व्यावृत्त्युपलम्भाच्छते पञ्चाशन्न्यायेन युक्त एव विशेषे तस्यान्तर्भाव इति वाच्यम् । ब्राह्मणोत्पलशब्दयोरेव जातिविशेषवाचित्वेन ताभ्यामेव स्वस्व विजातीयव्यावृत्तिसिद्ध्या नियमविशेषयोर्निरुक्तार्थमात्रपर्यवसन्नत्वात् । एवमनियमत्वमपि निरुक्तनियमबोधकशब्दविरहप्रयुक्तार्थविशेषत्वं, सामान्यत्वं तु सखण्डाखण्डोपाध्यन्यतरत्वमिति तयोरपि भेदात्र सामान्येऽनियमस्यान्तर्भावशिशुनिरपि श्रद्धेय इति बोध्यम् । न्यूनपदत्वाद्यन्तःप्रसरस्तु निरस्तः प्रदीपकृतैव । तद्यथा—नच न्यूनपदत्वेऽनभिहितवाच्यत्वे वाऽनुप्रवेशः । तादृशेऽर्थे विवक्षिते तयोरवकाशात् । अविवक्षिते त्वेतत्प्रसरात् । अनएवायमर्थदोषः । विवक्षितमात्रस्य पदान्तरेणाप्युपस्थितौ तस्य तादवस्थ्यात् । एवमितरेष्वप्यूह्यमिति । तमुदाहरति—**यदिति** । अत्र यस्य ब्रह्मणः य आभासस्तदेककृतमिति नियमोऽपेक्षितः । अन्यथा तदयं कस्य मतमिति वक्ष्यमाणनिरतिशयसुखरूपतायास्तन्मात्रतानापत्तेः । तदभावात्तु तथात्वमिति लक्षणसमन्वयः । यथा वा साहित्यदर्पणे—'आपातसुरसे भोगे निमग्नाः किं नु कुर्वते' । अत्रापात एवेति नियमो वाच्य इति ॥ १६५ ॥ अथानियमपरिवृत्तं लक्षयति—**त्यक्त इति** । एवं चाप्रयोजकावधारणार्थत्वं निरवधारणोचिता तथाभिहितत्वं वा अनियमपरिवृत्तत्वमिति तल्लक्षणं ज्ञेयम् । तमुदाहरति—**सीते त्वमिति** । अत्र हे सीते, त्वं जगतीपतेस्त्रैलोक्यनाथस्य रामस्य संपदसीत्यनियमो वाच्यः । नोचेत्प्राणेश्वरी नासीत्यादिध्वननापत्तेः । तेन तदभावात्तथात्वमिति लक्षणसंगतिः । यथा वा काव्यप्रकाशे—'वक्त्राम्भोजे सरस्वत्यधिवसति सदा शोण एवाधरस्ते बाहुः काकुत्स्थवीर्यस्मृतिकरणपटुर्दक्षिणस्ते समुद्रः । वाहिन्यः पार्श्वमेताः क्षणमपि भवतो नैव मुञ्चन्त्यभीक्ष्णं स्वच्छेऽन्तर्मानसेऽस्मिन्कथमवनिपते तेऽम्बुपानाभिलाषः'। अत्र शोण एवेति नियमो न वाच्य इति ॥ १६६ ॥ विशेषपरिवृत्तं लक्षयति—**विशेषेति** । यत्र विशेषो नोदितः नैव कथितः सः अर्थः विशेषपरिवृत्त इत्यन्वयः । तेनाभिधेयविशिष्टबुद्धिप्रयोजकशून्यार्थत्वमिति तल्लक्षणं फलितम् । तमुदाहरति—**कृष्ण**-

**सामान्यपरिवृत्तोऽर्थः सः स्यात्तद्यत्र नोच्यते।**
**इच्छां रोधय भो ब्रह्मन्ज्ञानेनात्मा त्वयार्जितः॥ १६८॥**
**साकाङ्क्षः श्रीपतिः कुञ्जे राधिके मान एव ते।**
**अस्थाने य उपक्षिप्तोऽपदमुक्तः स इष्यते॥ १६९॥**

**मिति**। अत्र गोप्यादिविरहिण्युक्तित्वात्काले वसन्तादिर्विशेषो वाच्यः। अन्यथा विवक्षितोद्दीपनोत्कर्षसामर्थ्यभावापत्तिः। ततस्तद्राहित्याल्लक्षणसमन्वयः। यथावा साहित्यदर्पणे—'यान्ति नीलनिचोलिन्यो रजनीष्वभिसारिकाः'। अत्र तमिस्राखिति रजनीविशेषो वाच्य इति॥ १६७॥ एवं सामान्यपरिवृत्तं लक्षयति—**सामान्येति**। सः अर्थः सामान्यपरिवृत्तः स्यात्। कः स इति चेत्। **तदिति**। यत्रार्थे तत् सामान्यं नोच्यते न कथ्यत इत्यन्वयः। तथाच कथनीयसाधारण्यविरहितार्थत्वं तल्लक्षणं बोध्यम्। तमुदाहरति—**इच्छामिति**। इह वृत्तिमिति यावद्वृत्तिसंग्राहकसामान्यनिर्देशो वाच्यः। अन्यथा द्वेषादिमनोवृत्त्यन्तरानिरोधबोधापातः। तस्मात्तदनुक्तेरेव लक्षणसंगतिः। यथावा काव्यप्रदीपे—'कल्लोलवेल्लितदृषत्परुषप्रहारै रत्नान्यमूनि मकराकर मावमंस्थाः। किं कौस्तुभेन भवतो विहितो न नाम याच्ञाप्रसारितकरः पुरुषोत्तमोऽपि'। अत्र कौस्तुभेनेति विशेषतो रत्नवचनं नोचितम्। कौस्तुभमात्रस्योपकारकत्वेनान्यावमानननिषेधायोगात्।'एकेन किं न भवतो विहितः स नाम' इति पाठे तु भेदानवगमाद्विवक्षितनिर्वाह इति॥१६८॥ अथ साकाङ्क्षं लक्षयति—**साकाङ्क्ष इति**। आकाङ्क्षया अर्थस्यार्थान्तरव्यतिरेकप्रयुक्तान्वयाननुभावकत्वलक्षणया आर्थिक्या व्यपेक्षया सह वर्तत इति तथा। एवं चार्थान्तरसापेक्षार्थत्वमिति नाम्नैव तल्लक्षणं परिस्फुटितम्। तमुदाहरति—**श्रीत्याद्य**र्धशेषेण। हे राधिके, श्रीपतिः कुञ्जे ते तु मान एवेति योजना। इदं हि मानवतीं राधिकां प्रति तत्सखीवाक्यम्। तेन वक्त्रभिमतयोगस्य निरुक्तयोजनयैव सिद्धत्वान्नैवात्र शाब्दी आकाङ्क्षा किंत्वार्थ्येव। साच श्रीपतिः कुञ्जे इत्यस्य वृन्दावनमालत्यादिलतासंजातनिलयविशेषनिष्ठाधिकरणतानिरूपिताधेयतावच्छिन्नः पद्माप्राणेश्वरलक्षणोऽर्थ एव त्वां प्रतीक्षत इत्यस्यार्थं व्यपेक्षत इति तद्रूपैव प्रकृते। अन्यथा यः कुञ्जे श्रीपतिः स ते मान एवेति राधिकामानातिरेकेण कुञ्जे श्रीपत्यसद्भावबोधनप्रयोजकान्वयवैपरीत्यापत्तेः। एवं चाकाङ्क्षाप्रयुक्ता भवन्मतयोगेनातिव्याप्तिः। अर्थैकसाकाङ्क्षत्वं न प्रकृते निरुक्तरीत्या मतयोगसत्त्वात्। एवंचेत्तर्हि कथमस्य साकाङ्क्षत्वम्। शृणु। यद्यपि वक्तृविवक्षितयोगोऽत्र वर्तत एव तथापि योयं विवक्षितोऽर्थः स एवार्थान्तरसाकाङ्क्ष इति। अत एव नागाभट्टेनोक्तोऽस्य न्यूनपदत्वान्तर्भावोऽपि व्युदस्तः। यदितु साकाङ्क्ष इति श्रीपतिविशेषणं तत्रापि त्वद्विषय इत्यस्यार्थस्य व्यपेक्षा वर्तत एव। नोचेत्तस्य गोप्यन्तरे साकाङ्क्षत्वसंभवेन मानत्याजनप्रार्थनध्वननानौचित्यापत्तिरित्यलं पल्लवितेन। यथावा काव्यप्रकाशे—'अर्थित्वे प्रकटीकृतेऽपि न फलप्राप्तिः प्रभोः प्रत्युत द्रुह्यन् दाशरथिर्विरुद्ध-

**पत्नी चन्द्रमुखी लक्ष्मीः स्थिरा वाणी मनोहरा ।**
**क्षणिकं जीवितं हन्त सर्वसौख्यं क्व लभ्यते ॥ १७० ॥**
**योऽर्थः सहचरैर्भिन्नः स तथोत्कृष्टतादिना ।**
**विद्या मुक्तिर्मुदा तृप्तिर्विपदा विकृतिर्भवेत् ॥ १७१ ॥**
**प्रकाशितो मतार्थस्य विरुद्धो येन सोऽस्त्यसौ ।**
**हरिर्नयनपद्माभ्यां राधावक्त्रेन्दुमुत्पपौ ॥ १७२ ॥**

---

चरितो युक्तस्तया कन्यया । उत्कर्षं च परस्य मानयशसोर्विस्रंसनं चात्मनः स्त्रीरत्नं च जगत्पतिर्दशमुखो देवः कथं मृष्यते' । अत्र स्त्रीरत्नमुपेक्षितुमित्याकाङ्क्षतीति । विस्तरस्तु प्रदीपतदुद्द्योतादौ बोध्यः । 'संबन्धवर्जितं यत्स्यात्तद्भिन्नं परिकीर्त्यते' इत्युक्तलक्षणस्य प्रतापरुद्रसंमतस्य भिन्नस्याप्यनेनैवाभिन्नत्वमुन्नेयमिति दिक् । ततः क्रमप्राप्तमपदमुक्तं लक्षयति—**अस्थान इति** । यत्र स्थले तद्योगात्प्रकृतविरुद्धप्रतीतिर्भवति तादृशस्थाने योऽर्थः उपक्षिप्तः सनिवेशितः सः अपदमुक्तः एतन्नामकोऽर्थदोष इष्यते पूर्वाचार्यैः स्वीक्रियत इति संबन्धः । तस्मात्प्रकृतविरुद्धप्रतीतियोजकस्थानविनिवेशितार्थत्वं तत्त्वमिति तल्लक्षणं परिणतम् । एतेन व्याहृतसाङ्कर्यम् । अस्य स्थानमहिम्नैव विरुद्धप्रतीतिहेतुत्वात्तस्य तु वक्त्रैव तथोक्तत्वाच्च । एवं चास्य तदन्तर्भाववादी राकागमः प्रत्युक्तः । अत एव न प्रकाशितविरुद्धेऽन्तर्भावः अर्थत्वाच्च नापदस्थपदेपि ॥ १६९ ॥ तमुदाहरति—**पत्नीत्येकेन** । अत्र क्षणिकं जीवितमित्यनेन पूर्वार्धोक्तस्याखिलसौख्यसामग्रीजातस्य हेयत्वं विवक्षितं तस्य चोत्तर स्थितसर्वेत्यस्यार्थेन समाधानवशादादरणीयत्वं पर्यवस्यतीति निरुक्तलक्षणसंगतिः । यथावा काव्यप्रदीपे—'आज्ञा शक्रशिखामणिप्रणयिनी शास्त्राणि चक्षुर्नवं भक्तिर्भूतपतौ पिनाकिनि पदं लङ्केति दिव्या पुरी । उत्पत्तिर्द्रुहिणान्वये च तदहो नेदृग्वरो लभ्यते स्याच्चेदेष न रावणः क्व नु पुनः सर्वत्र सर्वे गुणाः' इति ॥ १७० ॥ सहचरभिन्नं लक्षयति—**योऽर्थ इति** । यः अर्थः उत्कृष्टतादिना उत्कृष्टताऽपकृष्टताभ्यामित्यर्थः । सहचरैः समभिव्याहृतैः सहेति यावत् । भिन्नः विजातीयः स तथा सहचरभिन्नाभिधोऽर्थदोषो भवतीति योजना । एवंच समभिव्याहृतविजातीयत्वं तल्लक्षणं बोध्यम् । तमुदाहरति—**विद्येति** । यथावा काव्यप्रकाशे—'श्रुतेन बुद्धिर्व्यसनेन मूर्खता मदेन नारी सलिलेन निम्नगा । निशा शशाङ्केन धृतिः समाधिना नयेन चालंक्रियते नरेन्द्रता' । अत्र श्रुतादिभिरुत्कृष्टैः सहचरैर्व्यसनमूर्खतयोर्निकृष्टयोर्भिन्नत्वम् । विनयेन धीरतेति पाठो युक्त इति । यथावा—'दुष्टसङ्गेन दौःशील्यं विपत्तिर्व्यसनेन च । अपथ्यचर्यया व्याधिर्विद्याभ्यासेन वर्धते' इति ॥ १७१ ॥ एवं प्रकाशितविरुद्धं लक्षयति—**प्रकाशित इति** । येन वाक्यार्थेनेत्यर्थः । असौ प्रकाशितविरुद्धाभिधोऽर्थदोषोऽस्तीत्यन्वयः । तथाच प्रकाशितप्रतिपाद्यप्रतीपत्वे सति वाक्यार्थत्वं तल्ल-

**यत्रायुक्तो विधिः सोऽयं विध्ययुक्तो द्विधा मतः ।**
**अविधेयविधेयत्वादयुक्तक्रमतोऽपि च ॥ १७३ ॥**
**व्युत्थापितः प्रयत्नेन स्यामहं सुसमाहितः ।**
**वाताशी भूशयानश्च कन्थामात्रपरिग्रहः ॥ १७४ ॥**
**सत्वयुक्तानुवादो यो विधिद्रोह्यनुवादवान् ।**
**वियोग्यन्तक रे चन्द्र ब्रूहि सीता क्व वर्तते ॥ १७५ ॥**

---

क्षणं फलितम् । तेन सहचरभिन्नतो व्यतिरेकः । तत्र पदार्थस्यैव तथात्वात् । तमुदाहरति—**हरिरिति** । अत्र प्रतिपाद्यो हरिकर्तृको राधास्यकर्मको नेत्रकरणकः परमादरनिरीक्षणलक्षणो वाक्यार्थस्तस्य पद्माद्युपमाघटितेन प्रकृतवाक्यार्थेन विरुद्ध एव चन्द्रोदये पद्मनिमीलनादनवलोकनरूपोऽर्थः प्रकाश्यत इति तथात्वम् । यथावा चन्द्रालोके—'सरोजनेत्रपुत्रस्य मुखेन्दुमवलोकय । पालयिष्यति ते गोत्रमसौ नरपुरंदरः' इति ॥ १७२ ॥ अथ सूत्रे विध्यनुवादायुक्तत्वेनोद्दिष्टमपि काव्यप्रदीपे तावद्विध्ययुक्तत्वानुवादायुक्तत्वाभ्यां द्विधा विधाय प्रथमं विध्ययुक्तत्वेनैव प्रतिपादितं तं तथा लक्षयति—**यत्रेति** । अयुक्तविधित्वं तत्त्वमित्यर्थः । तेन विधेयाविमर्शेनातिप्रसङ्गः । तस्य प्राधान्येनाप्रतिपादितविधेयांशत्वादस्य तु अयोग्यविधित्वाच्च । तद्वैविध्यं प्रतिजानीते—**द्विधेति** । तत्र हेतू वदंस्तल्लक्षणे अपि संक्षिपति—**अविधेयेति** ॥ १७३ ॥ तावुदाहरति—**व्युत्थापित इति** । अत्र अहं तासु समाहितः परमसमाधिनिष्ठः कदा स्यां यथाऽन्यैः प्रयत्नेन व्युत्थापितः स्यामिति कस्यचिद्विदुषोऽभिलापविशेषः प्रतीयते काक्वा तदनङ्गीकारे तु प्रतिज्ञैव । तत्र निरुक्तयोजनानुसारेण विधिर्युक्तो नतु यथाश्रुतः व्युत्थानसमाध्योर्विरोधादर्थवैपरीत्यापत्तेः । तेनेदमाद्यस्योदाहरणम् । यथा वेणीसंवरणे—'प्रयत्नपरिबोधितस्तुतिभिरद्य शेषे निशामकेशवमपाण्डवं भुवनमद्य निःसोमकम् । इयं परिसमाप्यते रणकथाद्य दोःशालिनामयेति रिपुकानना तिगुरुरद्य भारो भुवः' इति । **वातेति** । अत्र प्रातिलोम्येनैव त्यागाधिक्यव्यञ्जकः क्रमो युक्तस्तदभावात्त्वस्य तथात्वम् । अयुक्तक्रमत्वेन विध्ययुक्तार्थत्वादेवास्य क्रमप्रयुक्तभग्नप्रक्रमतो भेद इति तत्त्वम् ॥ १७४ ॥ एवमनुवादायुक्तं लक्षयति—**सत्विति** । यः विधिद्रोह्यनुवादवान् विधिविरुद्धावधारितार्थकथनशालीत्यर्थः । सतु अयुक्तानुवादो भवतीति योजना । एवंच विधिविरुद्धानुवादावच्छिन्नत्वमेव सूत्रोक्तानुवादायुक्तत्वमिति तत्त्वम् । तमुदाहरति—**वियोगीति रे** । वियोग्यन्तक । विरहिप्राणहरणनिपुणेत्यर्थः । एतादृश चन्द्र, सीता क्व वर्तते तत्स्थलं त्वं ब्रूहीति श्रीरामवाक्यान्वयः । इह वियोग्यन्तकेत्यनुवादः । सीता क्व वर्तते तद्ब्रूहीति विधिविरुद्ध इति लक्षणसंगतिः । उक्तंहि काव्यप्रदीपे—अनुवादायुक्तः अयुक्तानुवादः । अयुक्तत्वं चात्र विध्यननुगुणत्वम् । यथा—'अरे रामाहस्ताभरणभसलश्रेणिशरण स्मरक्रीडाव्रीडाशमन विरहिप्राणदमन । सरोहंसोत्तंस प्रचलदलनीलोत्पल सखे

**त्यक्तः पुनः स्वीकृतो यः स तथाभिमतः सताम् ।**
**नारी किं लालितुं योग्या सर्वस्यापि प्रियैव सा ॥ १७६ ॥**
**अश्लीलो व्रीडनाद्यैर्यो गर्हणीयः स उच्यते ।**
**तावदेव दृढः स्तब्धो यावत्पातो न जायते ॥ १७७ ॥**
**वक्ष्येऽन्यानपि भोजोक्तांस्तान्सप्त परुषादिकान् ।**
**परुषोऽस्थानरोषो यो रुदन्तं ज्वालयार्भकम् ॥ १७८ ॥**
**अप्रस्तुतो रसो यत्र विरसोऽसौ निगद्यते ।**
**वृन्दां शोकाकुलां विष्णुः संश्लिष्य स्मरविह्वलः ॥ १७९ ॥**
**उपमा हीनताधिक्यसाम्याभावाप्रसिद्धितः ।**
**हीनोपमादयो बोध्याश्चत्वारो विबुधैः क्रमात् ॥ १८० ॥**

सखेदोऽहं मोह श्लथय कथय क्वेन्दुवदना' । अत्र विरहिप्राणदमनेत्यनुवादः । कथय क्वेन्दुवदनेति विधिविरुद्ध इति । भसलाः भ्रमराः । द्रुमः श्रेष्ठ इत्युद्योतः ॥ १७५ ॥ त्यक्तपुनःस्वीकृतं लक्षयति—**त्यक्त इति** । अत्र वाक्यार्थसंबन्धान्यत्वादेकस्मिन्नेव वाक्ये विशेषणान्तरस्य समाप्त्युत्तरमनुपादानाच्च न समाप्तपुनरात्तत्वाद्भेदः(?) । तमुदाहरति—**नारीति** । द्वितीयचरणेन यस्त्यक्तः सत्कारलक्षणोऽर्थः स एवान्त्येन स्वीकृत इति तथात्वमिति भावः ॥ १७६ ॥ एवमश्लीलं लक्षयति—**अश्लील इति** । व्रीडनाद्यैः । लज्जोत्पादनाद्यैरित्यर्थः । आद्यपदेनामङ्गलादेर्ग्रहः । गर्हणीयः निन्द्यः सः अर्थः अश्लील उच्यत इति संबन्धः । तमुदाहरति—**तावदेवेति** । स्तब्धः स्तम्भाख्यगर्वविशेषवानित्यर्थः । दृढः बलवान् । स्पष्टमन्यत् ॥ १७७ ॥ अथ सरस्वतीकण्ठाभरणोक्तानन्यानप्यर्थदोषान् संगृहीतुं प्रतिजानीते—**वक्ष्य इति** । तदुक्तं तत्रैव । 'परुषं विरसं तथा । हीनोपमं भवेच्चान्यदधिकोपममेव च । असदृक्षोपमं चान्यदप्रसिद्धोपमं तथा । निरलङ्कारम्' इति । तमेव लक्षयति—**परुष इति** पादेन । रौद्ररसव्युदासार्थमस्थान इति । तेन यः अस्थानरोषः स परुष इत्यध्याहृत्यान्वयः । श्लेषेण पुरुषोऽपीत्याशयः । एवंचास्थानरोषत्वं तत्त्वं बोध्यम् । तमुदाहरति—**रुदन्तमिति** चरमचरणेन । हे कान्ते, रुदन्तमर्भकं ज्वालय दहेति कस्यचिच्चण्डस्योक्तिः । अत्रार्भकस्य कोपास्थानत्वात्तत्र तत्सत्वात्तथात्वं स्पष्टमेव ॥ १७८ ॥ एवं विरसं लक्षयति—**अप्रस्तुत इति** । प्रस्तुतरसविरुद्ध इत्यर्थः । एवंच प्रस्तुतरसविरुद्धरसवदर्थत्वं विरसत्वं पर्यवसन्नम् । तेनानुचितालम्बिनि रसाभासे नातिप्रसङ्गः । तमुदाहरति—**वृन्दामिति** । अत्र शोकेति विशेषणात्प्रस्तुतो रसः करुणः संश्लिष्येत्यादिना तु तद्विरुद्धः शृङ्गार इति वाक्यार्थस्य तद्वत्त्वेन विरसत्वं बोध्यम् । विष्णुपद साभिप्रायम् । तेनालंकारप्राधान्यान्नास्य रसदोषत्वमिति । यथावा कण्ठाभरणे—'तव वनवासोऽनुचितः पितृमरणशुचं जहीहि किं तपसा । सफलय यौवनमेतत्सममनुरक्तेन सुतनु मया' इति ॥ १७९ ॥ हीनोपमादिदोषचतुष्टयमपि हेतूक्तिच्छलेन क्रमाल्लक्षयति—**उपमेति** । हीनता च आधिक्यं च साम्यभावश्च अप्रसिद्धिश्चेति ।

**भूदार इव वीरोऽयं मधुपो भ्रमतीन्दुवत्।**
**गङ्गाधरो यथा चक्री कामिन्यः खनिभिः समाः ॥ १८१ ॥**
**अरसोऽप्यनलंकारान्निरलंकार उच्यते।**
**नग्निकादेह आभाति मङ्गलस्नानचिक्कणः ॥ १८२ ॥**
**इत्येकचत्वारिंशत्तु रसभिन्नार्थगा मया।**
**दोषाः प्रपञ्चिताः सर्वे रसगान्वच्मि तानथ ॥ १८३ ॥**
**स्वस्ववाचकशब्दैर्यद्रसादेः कथनं हि तत्।**
**शृङ्गाररससर्वस्वं हरे गौरि तव स्मितम् ॥ १८४ ॥**

---

तथा उपमायाः हीनतादयस्तत इत्यर्थः। अप्रसिद्धिस्त्वियमुपमासंबन्धिन्येवेति विशेषात्पूर्वोक्तप्रसिद्धिविरुद्धतोऽस्य भेदः। **हीनेति**। विबुधैश्चत्वारोऽपि क्रमाद्बोध्या इति योजना ॥ १८० ॥ क्रमेणोदाहरति—**भूदार इवे**त्यादिचरणचतुष्टयेन। चतुरोऽपि हीनोपमादीन्। अत्र वीरे भूदारशब्दितसूकरस्योपमानाश्लाघ्यत्वाद्धीनोपमत्वमिति। **मधुप इति**। मधुपो भ्रमरः। इह तुच्छजातस्य तस्य चन्द्रोपमायामत्याधिक्यादधिकोपमत्वम्। यथावा कण्ठाभरण एव—'अयं पद्मासनासीनश्चक्रवाको विराजते। युगादौ भगवान्ब्रह्मा विनिर्मित्सुरिव प्रजाः' इति। **गङ्गेति**। अत्र गङ्गाधारणशीलिनि शिवे चक्रविशिष्टस्य विष्णोरुपमानस्य साधर्म्यशून्यत्वादसदृशोपमानत्वम्। **कामिन्य इति**। अत्र कामिनीनां खन्युपमायाः काव्यादावप्रसिद्धत्वादप्रसिद्धोपमत्वमवगम्यते ॥ १८१ ॥ एवं निरलंकारं लक्षयति—**अरसोऽपीति**। तेन यः कौमारेत्यादौ नातिव्याप्तिः। तमुदाहरति—**नग्निकेति**। 'नग्निका नागतार्तवा' इत्यमरादप्राप्तरजस्कायाः काय इत्यर्थः। अत एव अरसत्वम्। गूढरसस्य तु सर्वत्र सत्वात्पुष्टरसाभाव एव प्रकृते ग्राह्यः। चिक्कणत्वं मसृणत्वम्। नचात्र स्वभावोक्तिः। मङ्गलस्नाननिर्मल इति श्लाघ्यविशेषणशून्यत्वात्। अतएव तत्र अनलंकारादुपमा ग्रैवेयकाद्यलंकारविरहान्निरलंकारसंज्ञत्वमिति तात्पर्यम् ॥ १८२ ॥ अथ रसेतरार्थदोषान् ससंख्यमुपसंहृत्य रसदोषकथनं प्रतिजानीते—**इतीति**। सर्वे दोषाः प्रपञ्चिताः सन्तीति संबन्धः। अथ निरुक्तदोषनिरूपणानन्तरम्। रसगात्रसनिष्ठान्। तान्दोषान्वच्मि। कथयामीत्यर्थः। अहमिति शेषः ॥ १८३ ॥ 'व्यभिचारिरसस्थायिभावानां शब्दवाच्यता। कष्टकल्पनया व्यक्तिरनुभावविभावयोः। प्रतिकूलविभावादिग्रहो दीप्तिः पुनःपुनः। अकाण्डे प्रथमच्छेदावङ्गस्याप्यतिविस्तृतिः। अङ्गिनोऽननुसंधानं प्रकृतीनां विपर्ययः। अनङ्गस्याभिधानं च रसदोषाः स्युरीदृशाः' इति काव्यप्रकाशीयसूत्रसरण्याः क्रमेणात्र तान्कथयितुं रसस्य हि प्राधान्यात्तत्प्रभृतित्वेनैव प्रथमं शब्दवाच्यताख्यं त्रिदोषमुद्दिशति—**स्वस्वेति**। यत्स्वस्ववाचकशब्दैः रसादेः आदिना स्थायिव्यभिचारिणौ ग्राह्यौ। कथनं हि प्रसिद्धं तत् रसदोषजातं ज्ञये

**एतेन रतिरेवैषा स्थायित्वात्पुष्पितालता ।**
**व्रीडयाधः किमित्यत्र सखि पश्यसि कातरम् ॥ १८५ ॥**

मिति शेषः । तत्रायमुदाहरति—**शृङ्गारेति** । इदं हि पार्वतीं प्रति तत्सखीवाक्यम् । हे गौरि, हरे शंभौ विषये तव स्मितम् । **शृङ्गारेति** । एतादृशं भवतीति भावः । स्वस्ववाचकशब्दैः कथनं हि सामान्यविशेषाभ्यां सभवतीति सामान्यवाचकं रसपदं विशेषवाचकं शृङ्गारपदं चेति बोध्यम् । यथावा काव्यप्रकाशे–'तामनङ्गजयमङ्गलश्रियं किंचिदुच्चभुजमूललोकिताम् । नेत्रयोः कृतवतोऽस्य गोचरे कोऽप्यजायत रसो निरन्तरः' इति । 'आलोक्य कोमलकपोलतलाभिषिक्तव्यक्तानुरागसुभगामभिराममूर्तिम् । पश्यैष बाल्यमतिवृत्य विवर्तमानः शृङ्गारसीमनि तरङ्गितमातनोति' इतिच।यथावा गीतगोविन्दे–'विश्वेषामनुरञ्जनेन जनयन्नानन्दमिन्दीवरश्रेणीश्यामलकोमलैरुपनयन्नङ्गैरनङ्गोत्सवम् । स्वच्छन्दं व्रजसुन्दरीभिरभितः प्रत्यङ्गमालिङ्गितः शृङ्गारः सखि मूर्तिमानिव मधौ मुग्धो हरिः क्रीडति' इति । नन्वर्थदोषप्रतिपादनोत्तरं काव्यप्रकाशादौ तदपवादनिरूपणमपि कृत, त्वया तु कथ तदपहाय मण्डूकप्लुत्या रसदोषनिरूपणमेवारब्धमिति चेत्सत्यम् । अपवादेन हि किंचिदवच्छेदेन केषांचिद्दोषाणां गुणत्वाद्येव वाच्यम् । उक्तं हि चन्द्रालोके–'दोषमापतित स्वान्ते प्रसरन्तमशृङ्खलम् । निवारयति यस्त्रेधा दोषाङ्कुशमुशन्ति तम् । दोषं गुणत्व तनुते दोषत्वं वा निरस्यति । भवन्तमथवा दोषं नयत्यत्याज्यतामसौ' इति । तथा चैतस्य गुणैकफलकत्वेन तद्रत्न एव वक्तुमुचितत्वात्प्राचामुक्तेस्तु प्रौढिवादमात्रतया वा स्वातन्त्र्यवत्तया वा समाधातुं शक्यत्वाच्च । तस्माद्युक्तमेवात्रापवादानुपन्यसनमिति दिक् ॥ १८४ ॥ एवं स्थायिभावस्य सामान्यविशेषाभ्यां स्वशब्दवाच्यत्वमुदाहरति—**एतेनेत्यर्धेनैव** । हे गौरि, एतेन पूर्वोक्तेन तव स्मितेन एषा निरुक्तस्मितोपलक्षितकटाक्षादिव्यक्तत्वेन प्रत्यक्षेत्यर्थः । रतिरेव स्थायित्वाद्याचद्रसं विद्यमानत्वात् । पुष्पिता कुसुमिता । लता कल्पलतास्तीत्यर्थः। व्यभिचारिणस्तु विशेषत एव स्वशब्दवाच्यतामुदाहरति—**व्रीडयेति** । अयि सखि, त्वं अत्र एवं मद्वाक्यश्रवणे सति व्रीडया लज्जया अधः नम्रम्, तथा कातरं एवं विनोदोऽनुचित इति सूचनाय किंचिद्रुक्षं च किमिति पश्यसीत्यन्वयः।तस्मात्सख्यै त्वेतदयुक्तमेवेति भावः । यथावा काव्यप्रदीपे—'सव्रीडा दयितानने सकरुणा मातङ्गचर्माम्बरे सत्रासा भुजगे सविस्मयरसा चन्द्रेऽमृतस्यन्दिनि । सेर्ष्या जह्नुसुतावलोकनविधौ दीना कपालोदरे पार्वत्या नवसंगमे प्रणयिनी दृष्टिः शिवायास्तु वः' । अत्र व्रीडादयो व्यभिचारिभावाः स्वशब्देनोपात्ताः । नच शब्देनोपात्तेषु व्यभिचार्यादिषु आस्वादसंभवोऽनुभूयते किंत्वनुभावादिमुखेनैव व्यक्तेषु । तस्मादास्वादानुत्पत्तिर्दोषत्वबीजमिति संप्रदाय इति । अधिकं तु तत्रैव ज्ञेयमिति संक्षेपः ॥ १८५ ॥

**अतिश्रमेण संपत्तिरनुभावविभावयोः।**
**राधामवेक्ष्य गोविन्दः सायं स्वं वाससावृणोत् ॥ १८६ ॥**
**सापि निद्रां ततः क्वापि नापात्मपरिवर्तनैः।**
**प्रतिकूलो विभावादिः प्रकृतस्य रसस्य यः ॥ १८७ ॥**
**त्यज मानं प्रिये नैति स्खलितं यौवनामृतम्।**
**प्रसीद हरिणाक्षि त्वं नोचेद्यामि वनं मुदा ॥ १८८ ॥**
**अङ्गीभूतरसस्यैव या च दीप्तिः पुनःपुनः।**
**कुमारसंभवे मुख्यकरुणाम्रेडितं तथा ॥ १८९ ॥**

एवं महाकष्टेनानुभावविभावसंपादनमपि रसदोष एवेत्याह—**अतिश्रमेणेति**। तत्राद्यमुदाहरति—**राधामिति**। गोविन्दः भगवान् श्रीकृष्णः राधामवेक्ष्य अवलोक्य वाससा प्रावरणेन सायं प्रदोषे स्वं देहम् आवृणोदाच्छादितवानित्यन्वयः। अत्र राधानिरीक्षणमात्रेण स्वदेहे संपद्यमानरोमाञ्चादिसात्विकानुभावापलापप्रावण्यं भगवति संमतं तेन यन्निरुक्तरूपानुभावसंपादनं तद्गूढव्यङ्ग्यमर्यादयैव सिध्यतीत्यतिकष्टसाध्यमेवेति लक्षणसंगतिः। यथावा काव्यप्रकाशे—'कर्पूरधूलिधवलद्युतिपूरधौतदिङ्मण्डले शिशिररोचिषि तस्य यूनः। लीलाशिरोंशुकनिवेशविशेषक्लृप्तिव्यक्तस्तनोन्नतिरभून्नयनावनौ सा'। अत्रोद्दीपनालम्बनरूपाः शृङ्गारयोग्या विभावा अनुभावाः पर्यवसायिनः स्थिता इति कष्टकल्पनेति ॥ १८६ ॥ द्वितीयमुदाहरति—**सापीत्य**र्धेनैव। सापि प्रागुक्ता राधापीत्यर्थः। ततः निरुक्तश्रीकृष्णचेष्टायाः सायं निरीक्षणोत्तरमिति यावत्। **आत्मेति**। स्वाङ्गपरिवर्तनैरित्यर्थः। क्वापि रात्रेः कस्मिंश्चिदपि क्षण इतियावत्। निद्रां न आप नैव लेभ इति योजना। इह तत इत्यानन्तर्यमात्रवाचकम्। तेनार्थाक्षिप्तप्रागुक्तभगवद्व्यापारसिद्धावपि राधाकर्तृकतन्निरीक्षणकल्पनं तथा तदन्यथापत्तिसिद्धभगवदाख्यालम्बनविभावकल्पनं च कष्टसाध्यमिति तथात्वं बोध्यम्। एवं प्रतिकूलविभावादिग्रहमपि दोषत्वेनाह—**प्रतिकूल इति**। आदिनानुभावादिः ॥ १८७ ॥ तत्र प्रतिकूलविभावमुदाहरति—**त्यजेति**। अत्र शृङ्गारः प्रकृतः। तद्विरुद्धस्य शान्तस्थायिनो निर्वेदस्य नैतीत्यादिना ध्वननात्तथात्वं स्पष्टमेव। यथावा काव्यप्रदीपे—'प्रसादे वर्तस्व प्रकटय मुदं संत्यज रुषं प्रिये शुष्यन्त्यङ्गान्यमृतमिव ते सिञ्चतु वचः। निधानं सौख्यानां क्षणमभिमुखं स्थापय मुखं न मुग्धे प्रत्येतुं प्रभवति गतः कालहरिणः' इति। रघुवंशेपि—'त्यजत मानमलं बत विग्रहैर्न पुनरेति गतं चतुरं वयः' इति। एवं प्रतिकूलानुभावमप्युदाहरति—**प्रसीदेति**। इह कान्तां विनैव हर्षेण वनगमनाभिधस्य शान्तरसानुभावस्य प्रकृतशृङ्गारविरुद्धत्वं तथा तद्व्यञ्जितनिर्वेदाख्यव्यभिचारिणोऽपि च तद्विशदमेव ॥ १८८ ॥ एवं पुनः पुनरनङ्गिनो रसस्य दीप्तिमपि तथात्वेनाह—**अङ्गीभूतेति**। तदुदाहरणस्थलमाह—**कुमारेति**। **अमुख्येति**। अमुख्यः शृङ्गाराङ्गं योयं करुणो रसस्तस्य यदाम्रेडितं द्वित्रिरुक्तं तदि-

**अकाण्डप्रथनच्छेदावकालोत्पत्तिसंहृती।**
**वेणीसंवरणे प्रोक्तः संजाते भटसंक्षये ॥ १९० ॥**
**दुर्योधनस्य शृङ्गारो भानुमत्या समं यथा।**
**सा वीरचरिते प्रोक्ता रामभार्गवयोर्मिथः ॥ १९१ ॥**
**अविच्छिन्नप्रचारेण रूढे वीररसे सति।**
**यामि कङ्कणमोक्षार्थमिति तद्वचने तथा ॥ १९२ ॥**
**अङ्गस्य विस्तृतिर्नीतौ प्रतिनायकरूपिणः।**
**वक्तुर्मुसलिनो माघे बहुधा वर्णनं यथा ॥ १९३ ॥**

त्यर्थः। उक्तं हि काव्यप्रदीपे—'पुनःपुनर्दीप्तिरङ्गरसादिविषया दोषः। अङ्गिनस्तु सा महाभारतादौ शान्तादेरिव न दोषमावहतीति। कुमारसम्भवे हि कामदहनोत्तरं रतिशोकवर्णनात्स्फुटमेवासौ वक्ष्यमाणगौरीहरसम्भोगादिशृङ्गारस्याङ्गमिति तात्पर्यम्॥१८९॥ इत्थं निगदव्याख्यातं रसदोषाष्टकमुपपाद्य क्रमप्राप्तमकाण्डप्रथनच्छेदाख्यं दोषद्वयं निरूपयति—**अकाण्डेति**। रसस्येति शेषः। **अकालेति**। अकाले अनवसरे ये उत्पत्तिसंहृती उपक्रमोपसंहारावित्यर्थः। तथाच आकस्मिकरसोत्पत्तित्वमकाण्डप्रथनत्वं आकस्मिकरसध्वंसत्वमकाण्डच्छेदत्वं चेति क्रमादुभयलक्षणं बोध्यम्। तत्राद्योदाहरणस्थलमाह—**वेणीत्येकेन** ॥ १९० ॥ भानुमत्या एतन्नाम्न्या तत्पत्न्येत्यर्थः। समं सार्धम्। तत्र वीरस्यैव करुणस्य वाऽवसरत्वान्नैवास्यावकाशः। एवं द्वितीयोदाहरणस्थलमप्याह—**सेत्यादिना** सार्धेन। सा पूर्वोक्तलक्षणा अकाण्डे रसोपसंहृतिरित्यर्थः ॥ १९१ ॥ **अविच्छिन्नेति**। सततप्रगल्भवाक्पारम्पर्येणेत्यर्थः। रूढे अभ्युदयं प्राप्त इति यावत्। **यामीति**। अहं कङ्कणमोक्षार्थं। विवाहाद्दशमदिने हि कंकणमोचनोत्सवः प्रसिद्ध एव तदर्थमित्यर्थः। यामि गच्छामि। **इतीति**। इति निरुक्ताकारं यत्तस्य श्रीरामस्य वचनं तस्मिन्नित्यर्थः। अत्र हि पूर्वोक्ताकस्मिकशृङ्गारप्रथनादाकस्मिकवीररसविच्छेदः प्रसिद्ध एवेति भावः। तदुक्तं काव्यप्रकाशे। छेदो यथा वीरचरिते द्वितीयेऽङ्के—राघवभार्गवयोर्धाराधिरूढे वीररसे कङ्कणमोचनाय गच्छामीति राघवस्योक्ताविति ॥ १९२ ॥ अथान्यदपि दोषचतुष्टयं निगदव्याख्यातमेव कथयन्प्रथमं अङ्गस्यातिविस्तृतिं तत्त्वेनाह—**अङ्गस्येति**। अप्रधानस्येत्यर्थः। विस्तृतिरतिविस्तरतो वर्णनमिति यावत्। तथाचोक्तं काव्यप्रदीपे—अङ्गस्य अप्रधानस्य अतिविस्तृतिरतिविस्तरेण वर्णनम्। यथा हयग्रीववधे हयग्रीवस्येति। व्याख्यातं चेदमुद्योते। अङ्गस्य प्रतिनायकादेः। **यथेति**। तत्र हि हयग्रीवस्य जलवनविहारादिना नायकापेक्षया विस्तरेण वर्णनं तस्यैव नायकत्वं प्रत्याययतीति। तदुदाहरणस्थलमाह—**नीतावित्यादि**। नीतौ नीतिविचारविषय इत्यर्थः। प्रतीतिःप्रतिकूलनायकस्वरूपस्येत्यर्थः। वक्तुः स्वसंमतनीतिमाख्यातुः मुसलिनः 'मुसली हली' इत्यमराद्बलरामस्येत्यर्थः। —**बहुधेति**। ततः सपत्नापनयेत्यादिना श्लोकाष्टकेनेति यावत्। तत्र हि नीति-

**रत्नावल्यां चतुर्थेऽङ्केऽननुसंधानमङ्गिनः।**
**देवतायां रताद्युक्तिः प्रकृतीनां विपर्ययः ॥ १९४ ॥**
**विपरीतरते लक्ष्मीश्चञ्चलापि स्थिराभवत्।**
**अनन्तकोटिब्रह्माण्डं दिधक्षुः पातु वः शिवः ॥ १९५ ॥**
**अनङ्गस्याभिधानं च यथा तद्वर्णनं मधोः।**
**राज्ञा कर्पूरमञ्जर्यां संस्तुतं बन्दिना कृतम् ॥ १९६ ॥**
**चतुर्दशेति संप्रोक्ता रसदोषाः क्रमान्मया।**
**अथ नव्यमते दोषान्वक्ष्ये वर्णपदैकगान् ॥ १९७ ॥**

---

विचारे सिद्धान्तत्वेनादरणीयवाक्यतयोद्धवो नायकः कवेः संमतः। बलरामस्तु न तथेति प्रतिनायक एव। तेन तस्याङ्गत्वात्तद्विषयकं निरुक्ताष्टश्लोक्या अतिविस्तरेण वर्णनं दोष एवेति भावः ॥ १९३ ॥ एवं क्रमागतमङ्गयननुसंधानमप्युदाहरणस्थलप्रकटनपूर्वकमाह—**रत्नावल्यामित्यर्धे**नैव। तदुक्तं काव्यप्रकाशे—'अङ्गिनोऽननुसंधानं यथा रत्नावल्यां चतुर्थेऽङ्के बाभ्रव्यागमने सागरिकाया विस्मृतिरिति। प्रकृतिविपर्ययाख्यदोषान्तरमप्युपलक्षणविधया स्फुटयति—**देवतायामिति**। उपलक्षणमिदं यावदनौचित्यावच्छेदकावच्छिन्नस्य। उक्तं हि काव्यप्रदीपे—यत्प्रकृतौ यद्वर्णनमनुचितं तत्र तद्वर्णनमिति। अधिकं तु तत्र तट्टीकादौ चानुसंधेयम्। विस्तरभयान्नेह संगृह्यते। दिव्याद्युत्तमादिधीरोदात्तादिप्रकृतिभेदेन नायकादिभेदास्त्वग्रे चन्द्राख्ये नेतृप्रकाशके एकादशरत्न एव सुव्यक्तीभविष्यन्तीति ॥ १९४ ॥ तत्राद्यमुदाहरति—**विपरीतेति**। यथावा गोवर्धनसप्तशत्याम्—'उन्नालनाभिपङ्केरुह इव येनावभाति शंभुरपि। जयति पुरुषायितायास्तदाननं शैलकन्यायाः' इत्यादि। अन्त्यमुदाहरति—**अनन्तेति**। समाहारे जात्या वा एकवचनम्। दिधक्षुः कल्पान्ते दग्धुमिच्छुः। यथावा कुमारसंभवे—'कोपं विभो संहर संहरेति यावद्गिरः खे मरुतां चरन्ति। तावत्स वह्निर्भवनेत्रजन्मा भस्मावशेषं मदनं चकार' इति ॥ १९५ ॥ एवमनङ्गस्याभिधानमपि रसदोष इत्याह—**अनङ्गस्येति**। रसानुपकारकस्य कीर्तनमित्यर्थः। पक्षे मदनस्य कथनम्। चकारः पूर्वोक्तदोषसमुच्चयार्थः। तदुदाहरणस्थलमाह—**यथेति**। तत् नायिकया स्वेन च कृततद्वर्णनोत्तरकालिकमित्यर्थः। मधोः वसन्तस्य। तदुक्तं साहित्यदर्पणे। अनङ्गस्य कीर्तनं यथा—कर्पूरमञ्जर्यां राज्ञा नायिकया स्वयं च कृतं वसन्तस्य वर्णनमनादृत्य बन्दिवर्णितस्य तस्य प्रशंसेति ॥ १९६ ॥ अथ रसदोषकथनं तत्संख्याभिधानपूर्वकमुपसंहृत्य नव्यमते तु वर्णपदयोरेव दोषान्तराण्यप्युक्तानीति तत्सारसंग्रहं प्रतिजानीते—**चतुर्दशेति**। इतिशब्दः प्राक्प्रयोज्यः। क्रमात्पूर्वाचार्यक्रमानुसारेणेत्यर्थः। **वर्णेति**। एकपदेन वाक्यतदर्थादेर्व्युदासः। तन्मते तद्दोषाणां प्राचीनोक्तदोषानतिरिक्तत्वान्न तदाम्रेडनमिह

**स्वानन्तर्यं तु वर्णानां सकृदेकपदेऽपि च।**
**रसगङ्गाधरेऽश्रव्यं गुर्वादिव्यवधिं विना ॥ १९८ ॥**
**उत्तरोत्तरमाधिक्यं तस्य ज्ञेयं विपश्चिता।**
**गगनं शुक्लतां यातं ललनाननकान्तिभिः ॥ १९९ ॥**
**तततामेहि रे चित्त तव वक्तव्यमत्र किम्।**
**दद दाशरथेऽथैव मम मित्राय मेदिनीम् ॥ २०० ॥**
**एवं स्वतुल्यवर्ग्याणामानन्तर्यमपि क्रमात्।**
**सकृदादिभिदा ज्ञेयं चतुर्धा पञ्चमैर्विना ॥ २०१ ॥**

क्रियत इत्याशयः ॥ १९७॥ तत्रादौ वर्णदोषान्व्युत्पादयति—**स्वानन्तर्यं त्वि**त्यादिना सोदाहरणम्। तुशब्दः प्रागुक्तश्रुतिकाटवव्यावृत्त्यर्थः। **सकृदिति**। सकृदपि एकपदेऽपि च वर्णानां अक्षराणां स्वानन्तर्यं स्वसमानजातीयोत्तरवर्णत्वम्। **गुर्वादीति**। आदिः संयुक्तसंग्राहकः। तेन यो व्यवधिर्व्यवधानं इत्यर्थः। तं विना। **रसेति**। एतन्नाम्नि पण्डितराजग्रन्थ इत्यर्थः। अश्रव्यं एतन्नामकं वर्णदोषजातमिति यावत्। उक्तमिति शेषः॥१९८॥ एकपदे भिन्नपदेऽपि चासकृत्त्वे तदाधिक्यमाह—**उत्तरोत्तर**मित्यर्धेन। तस्मात्संयुक्तपरगुर्वक्षरं केवलं वा गुर्वक्षरं व्यवधायकं न चेद्वर्णानां स्वसमानजातीयोत्तरवर्णत्वं सकृदप्येकपदेऽपि च किंचिदश्रव्यं असकृच्चेदधिकं तथा भिन्नपदेऽपि सकृच्चेत्किंचिदसकृच्चेदधिकमेव भवतीति भावः। इह संयुक्तपरेत्यादिना रङ्गाङ्गणमित्यादौ लोलालिपुञ्ज इत्यादौ चातिव्याप्तिनिरासः। तत्र तयोर्व्यवधायकत्वादिति। तानीमान्येकपदगतसकृदेकपदगतासकृद्भिन्नपदगतासकृत्संज्ञकानि चत्वार्यश्रव्याणि फलितानि क्रमेणोदाहरति—**गगनमित्या**दि सार्धेन। अत्र गकारलकारनकारात्मकानां त्रयाणां द्वन्द्वानां निरुक्तरूपत्वादाद्योदाहरणत्वं बोध्यम् ॥१९९॥ **तततामिति**। इह तकारत्रयत्वादेकपदासकृत्त्वेन तथात्वम्। **चित्तेति**। अत्र चित्त, तव वक्तव्यमित्युदाहरणद्वयेऽपि भिन्नपदगतसकृत्त्वेन तृतीयोदाहरणत्वम्। अक्षरार्थस्तु रे चित्त, त्वं तततां तस्य व्यासस्य ब्रह्मणो भावस्तथा ताम्। अद्वैतात्मतामित्यर्थः। एहि प्राप्नुहि। अत्र दृश्ये विषये तव किं वक्तव्यं न किमपीति। **ददेति**। अत्र चरणद्वयारम्भोदाहरणद्वयेऽपि भिन्नपदगतासकृत्त्वेन चतुर्थोदाहरणत्वं ज्ञेयम्। तच्चेदमुक्तं तत्रैव सप्रपञ्चम्। वर्णानां स्वानन्तर्यं सकृदेकपदगतत्वे किंचिदश्रव्यम्। यथा ककुभसुरभिः विततगात्रः पललमिवाभातीत्यादौ। असकृच्चेदधिकम्। यथा 'विततततरस्तरुरेष भाति भूमौ' एवं भिन्नपदगतत्वेपि यथा—'शुक करोषि कथं विजने रुचिम्' इत्यादौ। असकृच्चेद्भिन्नपदगतत्वे ततोऽप्यधिकम्। यथा—'पिक ककुभो मुखरीकुरु प्रकामम्' इति ॥२००॥ एवं निरुक्ताश्रव्यचतुष्टयस्य प्रसङ्गाद्वर्ग्याश्रव्यपञ्चकमप्यावेदयति। वर्ग्याणां कवर्गादिपवर्गान्तवर्गपञ्चकभववर्णसंबन्ध्यप्युक्तरीतिकाश्रव्यपञ्चकमित्यर्थः। एवमित्यादिना। एवं निरुक्ताश्रव्यचतुष्टयवत्। **स्वेति**। स्वः ककारादिवर्णः तस्य ये तुल्यवर्ग्याः समा-

**प्रथमानां द्वितीयैश्चेत्तृतीयानां चतुर्थकैः ।**
**श्रेयं साधारणैरन्यत्त्वीषन्निर्माणमार्मिकैः ॥ २०२ ॥**
**एतदप्यसकृच्चेत्स्याद्वेद्यं साधारणैरपि ।**
**वितथं चापि वितथतरं दृश्यमिदं खलु ॥ २०३ ॥**
**अथ तत्त्वोपलब्ध्यर्थं दध दामोदरे मनः ।**
**खग कोमलसंलापैरटव्यामपि मा रम ॥ २०४ ॥**

---

नवर्गजाः खादिवर्णास्तेषामित्यर्थः । अपिः समुच्चये । **सकृदादीति** । सकृदेकपदगतत्वादिभेदेनेत्यर्थः । पञ्चमैर्विना ङञणनमैर्वर्गपञ्चमवर्णैर्विनेत्यर्थः । तदानन्तर्यस्य माधुर्यप्रयोजकत्वादिति भावः । क्रमाच्चतुर्धा ज्ञेयमित्यन्वयः । गुर्वादिव्यवधिं विनेत्यत्रापि ज्ञेयम् ॥ २०१ ॥ ननु नेदं सर्वेषां श्रवणोद्वेजकमित्याशङ्कयाधिकारिभेदेन तद्व्यवस्थापयति—**प्रथमानामित्यादि**सार्धेन । प्रथमानां कचटतपानां द्वितीयैः खछठथफैः आनन्तर्यमित्यनुषज्जते चेत् तथा तृतीयाणां गजडदबानां चतुर्थकैः घझढधभैरानन्तर्यं चेत्तदश्रव्यं साधारणैः सर्वविद्भिरपि ज्ञेयमिति संबन्धः । अन्यत्तु निरुक्तभिन्नं तु वर्ग्याणामानन्तर्यं ईषत् किंचिदेवाश्रव्यं भवतीति हेतोर्निर्माणमार्मिकैः काव्यकरणकुशलैरेव ज्ञेयं नवितरैरिति योजना ॥ २०२ ॥ तत्रापि प्रतिप्रसवमाह—**एतदपीत्य**र्धेन । एतन्निरुक्तवर्ग्यानन्तर्यभिन्नमपि तदानन्तर्यमसकृद्वारंवारं स्याच्चेत्साधारणैरपि वेद्यं स्यादित्यन्वयः । स्थूलत्वात्सामान्यविद्भिरपि ज्ञेयमित्याशयः । तत्र वर्ग्याणामुक्तरीत्या सकृदेकपदगतमान्तर्यमाद्यमुदाहरति—**वितथं चापीति** । अत्र तकारस्य तवर्गप्रथमस्य थकारेण द्वितीयेन कृतमानन्तर्यं स्फुटमेव । एवं तत्रैवासकृत्त्वेन द्वितीयं तदुदाहरति—**वितथतरमिति** । अक्षरार्थस्तु इदं दृश्यं साक्षिणा ज्ञातत्वाज्ञातत्वोपाधिभ्यां वेद्यं द्वैतमित्यर्थः । वितथं मिथ्यैवेति यावत् । नन्वस्तु नामैन्द्रजालिकनिर्मिताम्रवन्मिथ्याभूतेनाप्यनेन काञ्चनकुरङ्गलोचनाद्यात्मना द्वैतेनास्माकं सुखोपभोग इत्यत्राह—**वितथतरमिति** । चः समुच्चे । खलु निश्चितं वितथतरं क्षणविनश्वरत्वेन दृष्टिसृष्टिवादानुसारात्प्रातिभासिकैकसत्तावच्छिन्नत्वेन अतिमिथ्याप्यस्तीत्यर्थः ॥ २०३ ॥ एवं भिन्नपदेऽपि सकृदाख्यं तृतीयं तदुदाहरति—**अथेति** । तद्वत्तत्रैवासकृदाख्यं तदुदाहरति—**दधेति** । अयमर्थः—हे मुमुक्षो, त्वं । अथ निरुक्तरीत्या द्वैतस्य कल्पितत्वज्ञानानन्तरं **तत्त्वेति** । अद्वैतब्रह्मात्मतत्त्वसाक्षात्कारार्थमित्यर्थः । दामोदरे भक्तवत्सले भगवति श्रीकृष्ण इति यावत् । मनः दध अन्तःकरणं धारयेति । अथ वर्ग्याणां निरुक्तानन्तर्यभिन्नानन्तर्यमसकृत्त्वेन पञ्चमं वर्ग्यानन्तर्याश्रव्यमुदाहरति—**खगेति** । अत्र कवर्ग्याणां यथाकथंचिदानन्तर्यमसकृदेवेति तथात्वं बोध्यम् । अक्षरार्थो यथा । एवं ब्रह्मजिज्ञासोत्तरं कामिन्यादौ रतेः कैव कथात्वम् । **खगेति** । कोकिलादिद्विजकूजितैरित्यर्थः । अटव्यामपि अतुलवैराग्येण विधिवत्संन्यासं विधाय । अरण्येऽपीति यावत् । मा रमं मैव शब्दा-

**दीर्घानन्तरसंयोगः सकृदप्येकतां विना।**
**हा प्रिये जानकि क्वासि या त्रपाक्ता त्रयी स्वयम् ॥२०५॥**
**यदुक्तं किंचिदश्रव्यमिति तत्तु तथैव नः।**
**यच्चोपसंहृतं सर्वेऽपीत्यादि तदसंगतम् ॥ २०६ ॥**

दिविषयासक्तो भवेति। तस्मादुक्तवर्ग्यानन्तर्यपञ्चकमप्यश्रव्यमेवेति भावः। तथाचोक्तं तत्रैव सोदाहरणं सप्रपञ्चम्। एवं स्वसमानवर्ग्यानन्तर्यं सकृदेकपदगतत्वे किंचिदश्रव्यं यथा 'वितथस्ते मनोरथः'। असकृच्चेदधिकं यथा 'वितथतरं वचनं तव प्रतीमः'। एवं भिन्नपदगतत्वे यथा 'अथ तस्य वचः श्रुत्वा' इत्यादौ। असकृद्भिन्नपदगतत्वे तु ततोऽप्यधिकम्। 'अथ तथा कुरु येन सुखं लभेः'। एतच्च वर्ग्याणां प्रथमद्वितीययोस्तृतीयचतुर्थयोरानन्तर्ये प्रथमतृतीययोर्द्वितीयतृतीययोर्वाऽनन्तर्ये तु तथा नाश्रव्यं किंत्वीषन्निर्माणमार्मिकैकवेद्यम्। एतदप्यसकृच्चेत्ततोऽप्यधिकत्वात्साधारणैरपि वेद्यम्। 'खग कलानिधिरेष विजृम्भते','इति वदति दिवानिशं स धन्यः'। पञ्चमानां मधुरत्वेन स्ववर्ग्यानन्तर्यं न तथा 'तनुते तनुतां तनौ'। स्थानन्तर्यं त्वश्रव्यमेव 'मम महती मनसि व्यथाविरासीत्'। एतानि चाश्रव्यत्वानि गुरुव्यवधानेनापोद्यन्ते। 'स जायतां कथकार काके केकां कलस्वनः'। यथावा—'यथा यथा तामरसायतेक्षणा मया सराग नितरां निषेविता। तथा तथा तत्त्वकथेव सर्वतो विकृष्य मामेकरसं चकार सा' इत्यादि। अधिकं तु तत्रैव बोध्यम्। विस्तरभयादत्र दिङ्मात्रमेवोदाहृतमिति क्षम्यताम्। इदं तु पञ्चमानां स्थानन्तर्यं पूर्वं वर्णानन्तर्यं सामान्यत एवोक्तमिति न पुनरुपन्यस्यत इति दिक् ॥ २०४ ॥ अथ दीर्घान्तरसंयोगाख्यमश्रव्यान्तरमाह—**दीर्घेति।** दीर्घो यो वर्णस्तदनन्तरं यः संयोगः 'हलोऽनन्तराः संयोगः' इत्युक्तलक्षणः स तथेत्यर्थः। सः सकृदपि एकवारमप्येकतां विना एकपदत्वं विना चेदश्रव्यत्वमिति योजना। अपिना असकृच्चेत्सुतरां तथात्वमिति द्योत्यते। एवञ्च भिन्नपदगतत्वे सति सकृदपि दीर्घोत्तरसंयोगत्वमश्रव्यविशेषत्वम्। असकृच्चेदतितरां तत्त्वमिति फलितम्। तदुभयमपि क्रमेण चरणद्वयेनोदाहरति—**हेति।** इयं श्रीरामस्य विरहकालीनोक्तिः। **येति।** एतेन पूर्वं तच्छब्दोऽध्याहार्यः। या स्वयं साक्षात् त्रपा लज्जया मुक्ता स्निग्धा त्रयी ऋगादिवेदत्रय्येव मत्प्राप्त्यर्थमवतीर्णेत्यर्थः। इदमप्युक्तं रसगङ्गाधरे—अथ दीर्घानन्तरसंयोगस्य भिन्नपदगतस्य सकृदप्यश्रव्यमसकृत्तु सुतराम्। 'हरिणीप्रेक्षणा यत्र गृहिणी न विलोक्यते। सेवितं सर्वसंपद्भिरपि तद्भवनं वनम्'। एकपदगतस्य तु तथा नाश्रव्यम्। यथा—'जाग्रता विजितः पन्थाः शात्रवाणां वृथोद्यमः'। परसवर्णकृतस्य तु संयोगस्य सर्वथा दीर्घाद्भिन्नपदान्तत्वाभावान्मधुरत्वाच्चानन्तर्यं न मनागप्यश्रव्यमिति। विस्तरस्तु तत्रैवानुसंधेय इत्युपरतम् ॥ २०५ ॥ एवमेकादशप्रकारकाश्रव्यभेदेषु हेयोपादेयविचारमारभमाणस्त-

**सर्वत्र निजकाव्येऽपि प्रायो दौष्ट्यं यतो ध्रुवम्।**
**अपवादस्तु काव्यत्वावच्छिन्ने कथमाविशेत्॥ २०७॥**

दुपक्रममनूद्याङ्गीकुर्वन्निव छलोक्त्या खण्डयति—**यदुक्तमिति**। नः अस्माकं तु पुनः तत् निरुक्तवाक्यं तथैव किंचिदश्रव्यमेवेत्यर्थः। एवमुपसंहारमपि तदीयमनूद्य तिरस्करोति—**यच्चेति**। तद्यथा एवमेते सर्वेऽप्यश्रव्यभेदाः काव्यसामान्ये वर्जनीया इति॥ २०६॥ ननु कुतोऽयमेतदुपक्रमाद्यनादर इत्याशङ्क्य तत्र हेतुं विशदयति—**सर्वत्रेति**। एवं निरुक्ताश्रव्ययावद्भेदाङ्गीकारे। **निजेति**। निजस्य रसगङ्गाधरकारस्य यत्काव्यं भामिनीविलासादि तत्रापीत्यर्थः। अपिना कव्यन्तरकाव्ये तु कैमुत्येनैव दौष्ट्यमिति द्योत्यते। प्रायः बाहुल्येन सर्वत्र प्रतिश्लोकं नतु क्वचित्कदाचिदेव। यतः हेतोः दौष्ट्यं दुष्टत्वं ध्रुवं निश्चितमेव आपतेदित्यन्वयः। तथाहि भामिनीविलासीयं पद्यं रसगङ्गाधरे तावदनेनोत्तमोत्तमकाव्यत्वेनोदाहारि—'शयिता सविधेऽप्यनीश्वरा सफलीकर्तुमहो मनोरथान्। दयिता दयिताननाम्बुजं दरमीलन्नयना निरीक्षते' इति। अत्र ननेति सकृदेकपदगतं वर्णस्यानन्तर्याख्यमश्रव्यम्। एवं धेप्येत्यत्र नीश्वेत्यत्र च भिन्नपदगतस्य संयोगस्य दीर्घानन्तर्याख्यं तत्। तथा 'दिगन्ते श्रूयन्ते' इत्यत्र 'अन्तः साक्षाद्द्राक्षा' इत्यत्रापि निरुक्तरीतिकं यद्यपि पूर्वश्लोकीयसंयोगस्य दीर्घानन्तर्यं तथा अन्तः साक्षाद्द्राक्षेत्यपि च तत् अप्यनीश्वरेत्यकरोत्तरत्वादिना दीर्घोत्तरत्वाद्यभावाद्विवादग्रस्तं तथापि ननेत्यादि तु निर्विवादमेव। एवं 'इयत्यां संपत्तावपि च सलिलानां त्वमधुना न तृष्णामार्तानां हरसि यदि कासार सहसा। निदाघे चण्डांशौ किरति परितोऽङ्गारनिकरान्कृशीभूतः केषामहह परिहर्ताऽसि खलु ताम्' इत्यत्र नैकट्येन लकारद्वयं हकारद्वयं च। तथा 'यस्मिन्खेलति सर्वतः परिचलत्कल्लोलकोलाहलैर्मन्थाद्रिभ्रमणभ्रमं हृदि हरिदन्तावलाः पेदिरे। सोऽयं तुंगतिमिङ्गिलाङ्गकवलीकारक्रियाकोविदः क्रोडे क्रीडतु कस्य केलिकलहत्यक्तार्णवो राघवः' इत्यत्रापि डेक्रीति भिन्नपदे दीर्घानन्तरसंयोगः। तथा 'लूनं मत्तगजैः कियत्कियदपि च्छिन्नं तुषारार्दितैः शिष्टं ग्रीष्मजभीष्मभानुकिरणैर्भस्मीकृतं काननम्। एषा कोणगता मुहुः परिमलैरामोदयन्ती दिशो हा कष्टं ललिता लवङ्गलतिका दावाग्निना दह्यते' इत्यत्र ललीति सकृदेकपदेऽपि स्वसमानवर्णानन्तर्यम्। तथा 'सत्पूरुषः खलु हिताचरणैरमन्दमानन्दयत्यखिललोकमनुक्त एव। आराधितः कथय केन करैरुदारैरिन्दुर्विकासयति कैरविणीकुलानि' इत्यत्र सकृद्भिन्नपदगतमखिललोकेति तत्। तथा 'परार्थव्यासङ्गादुपजहदथ स्वार्थपरतामभेदैकत्वं यो वहति गुणभूतेषु सततम्। स्वभावाद्यस्यान्तः स्फुरति ललितोदात्तमहिमा समर्थो यो नित्यं जयति नितरां कोऽपि पुरुषः' इत्यत्र लकारयुग्माव्यवधानम्। तथा—'अमितगुणोऽपि पदार्थो दोषेणैकेन निन्दितो भवति। निखिलरसायनराजो गन्धेनोग्रेण लशुन इव' इत्यत्र भिन्नपदगं न निमित्तिस्वस-

**तस्मात्तदीयतात्पर्यं पञ्चस्वाद्येष्वदोषता।**
**इत्येवावश्यमेष्टव्यं नोचेत्किं दोषमोषकम् ॥ २०८ ॥**
**एवंचोर्वरिताः षोढा भेदा येऽश्रव्यसंभवाः।**
**सामान्ये वर्जनीयास्ते कथ्यन्तेऽथ विशेषगाः ॥ २०९ ॥**

---

मानवर्णानन्तर्यमित्यादौ तत्र तत्र निरुक्तदोषसत्वाद्वारंवारोक्तदौष्ट्यापत्तिः। ननु हास्यरसादौ ग्राम्यादिर्गुण एवेत्यादिवत्प्रकृतेऽपि कश्चिदपवाद एवोह्यस्तथात्वे क्लेयमापत्तिरित्याशङ्क्याह—**अपवादस्त्विति**। तुशब्दः प्रोक्तशङ्कोपशमार्थः। एवमिमे सर्वेऽप्यश्रव्यभेदाः काव्यसामान्ये वर्जनीया इत्युक्तेस्तेषां काव्यत्वावच्छेदेन हेयत्वादेकत्र कुत्रचिदपवादोहनेऽपि काव्यत्वावच्छिन्ने यावति स्वपरकाव्ये स कथमाविशेत्संचरेन्न कथमप्यवकाशं लभेदिति संबन्धः। तस्मादसंगतमेव सर्वेऽपीत्यादिनियमनमिति भावः ॥ २०७ ॥ नन्वेवं चेत्त्वयाप्यत्र योयं वर्णदोषः प्रागुपपादितस्तत्राप्युक्तदोषतौल्यमेव। अस्यापि वर्णैकदोषत्वादितिचेन्न। तस्य त्र्यादिसंयुक्तत्वस्येष्टत्वात्। तर्हि कथमत्र कर्तव्यं यदि सर्वेऽप्येतदुक्ताः प्राचीनैरनुक्तत्वादश्रव्यभेदास्तावदनादरणीया एव तर्हि विततर इत्यादौ स्पष्टं सर्वसहृदयैरनुभूयमानश्रुतिकाटवस्यानङ्गीकारापत्तिः। नचेष्टापत्तिः वैरस्यापातात्। नापि प्राचीनोक्तश्रुतिकट्वाख्यपददोष एवास्यान्तर्भावः। एकपदगतत्वावच्छिन्नस्य तथा सामासिकभिन्नपदगतत्वावच्छिन्नस्यापि हरिणीप्रेक्षणेत्यादेस्तस्य यथाकथंचित्तत्संभवेऽपि केवलभिन्नपदगतत्वावच्छिन्नस्य 'शुक करोषि कथं विजने रुचिं' तथा 'पिक ककुभो मुखरीकुरु प्रकामम्' इत्यादेस्तस्य तदसंभवात्। अङ्गीकारपक्षे तूक्तमवकाव्यदौष्ट्यापत्तिरित्यतुलव्याकुलीभावं सहृदयविशेषस्याकलय्यान्यथानुपपत्त्या तत्तात्पर्यकल्पनेन समाधत्ते—**तस्मादिति**। उक्तरीत्या स्वपरकाव्यदौष्ट्यापातादित्यर्थः। **तदीयेति**। जगन्नाथपण्डिताभिप्रायजातमिति यावत्। पञ्चसु पञ्चसंख्याकेषु आद्येषु प्राथमिकेषु सकृदेकपदगतसकृद्भिन्नपदगतस्वसमानगुर्वाद्यव्यवहितवर्णानन्तर्यताद्दग्वर्ग्यानन्तर्यसकृद्भिन्नपदगतदीर्घानन्तरसंयोगरूपेषु निरुक्तपञ्चानां द्वन्द्वानां मध्ये क्रमेण प्राथमिकपञ्चसंख्याका श्रव्यभेदेष्विति विवक्षितोऽर्थः। अदोषता नैव दोषत्वमिति यावत्। इत्येवेत्याद्युत्तरार्धं तु यथाश्रुतमेव योज्यम्। एष्टव्यं स्वीकार्यम्। **दोषेति**। सर्वत्र निजकाव्येऽपीत्याद्युक्तदोषाणां निवारकमित्यर्थः। किंशब्द आक्षेपे। न किमपीतियावत्। नचैवं तर्हि तेन किमिति तदुपन्यासः कृत इति वाच्यम्। असकृदेकपदगतादीनां विततर इत्यादितद्भेदानां निर्वाहार्थं तस्यावश्यापेक्षत्वादिति हृदयम् ॥ २०८ ॥ ततः फलितमाह—**एवंचेति**। षोढा षट्प्रकारका इत्यर्थः। ये गुर्वादिव्यवधानं विना असकृदेकपदगतस्वसमानवर्णानन्तर्यं असकृद्भिन्नपदगतं च तत्। एवं स्वसमानवर्ग्यानन्तर्यमसकृदेकपदे तथाऽसकृद्भिन्नपदे च तद्वद्वर्ग्याणां प्रथमादिनिरुक्तानन्तर्यमन्तरापि यथाकथंचिदेकपदे भिन्नपदे वाऽसकृदानन्तर्यं भिन्नप-

**शृङ्गारे करुणे शान्ते रसादौ चैतदुत्त्यजेत्।**
**झयाघटितसंयोगपरह्रस्वाक्षरोच्चयः ॥ २१० ॥**
**चिद्रसस्फुरदुद्भासप्रेमप्लुतहृदुज्ज्वलः।**
**विसर्जनीयसादेशो जिह्वामूलीय एव च ॥ २११ ॥**
**उपध्मानीय इत्येतेप्येवं नैकट्यतोऽसकृत्।**
**कस्तथा यस्तु ताः कान्ताः कामुकीः प्रेक्ष्य ताः पराक्।**

---

देऽसकृद्दीर्घानन्तरसंयोगश्चेत्यादिरूपा इत्यर्थः। **अश्रव्येति**। अश्रव्यजन्या इति यावत्। उर्वरिताः निरुक्तरीत्याऽवशिष्टाः ते सर्वेऽपि सामान्ये काव्यत्वावच्छिन्नकाव्य इत्यर्थः। वर्जनीयाः परिहार्याः। अथ सामान्यवर्ज्यवर्णदोषकथनानन्तरं विशेषगाः काव्यविशेषगतवर्णदोषा इत्यर्थः। कथ्यन्ते निरूप्यन्त इत्यन्वयः ॥ २०९ ॥ तानेव वक्तुं सामान्येन मधुररसेषु वर्णादिदोषजातवर्जनीयतया प्रतिजानीते—**शृङ्गार इति**। चकारः शान्ते चेति योज्यः। एतादृशे रसादौ रसभावतदाभासादावित्यर्थः। एतद्वक्ष्यमाणं वर्णपददोषकदम्बमित्यर्थः। उत्त्यजेदवश्यं वर्जयेदिति यावत्। तदेवाह—**झयेत्यादिना** सोदाहरणम्। झया अन्त्येतरवर्ग्यसंघान्यतमेनेत्यर्थः। **घटितेति**। घटितः संपद्यमानो यः संयोगः स परो यस्य एतादृशो यो यं ह्रस्वाक्षरोच्चयः ह्रस्ववर्णसमूह इत्यर्थः। तत्रापि नैकट्यमेवोत्पदेन ज्ञेयम् ॥ २१० ॥ तमुदाहरति—**चिदिति**। चिदेव रसः सुखहेतुत्वात्तद्रूपत्वाद्वा तस्य स्फुरंश्चरमवृत्त्याख्ये अद्वैतब्रह्मतत्त्वसाक्षात्कारात्मके अहं ब्रह्मास्मीतिवृत्तिविशेषे प्रतिफलितः योऽयमुद्भासः प्रमाख्यश्चिदाभासस्तेन यत्प्रेम 'तदेतत्प्रेयः पुत्रात्' इत्यादिश्रुतेर्यो निःसीमप्रमोदः तेन प्लुतं आर्द्रं हृदन्तःकरणं यस्य स तथेत्यर्थः। एतादृशो जीवन्मुक्त एवोज्ज्वलो निर्मलः। अन्ये तु समला एवेति भावः। इह शान्तरसे चिद्रेत्यादौ दकारादिभिर्झयात्मकैर्वर्णैर्घटितसंयोगपराणां चिकारादिह्रस्वाक्षराणां नैकट्येन बाहुल्याल्लक्षणसमन्वयः। एवं विसर्जनीयसादेशादिदोषत्रयमपि त्याज्यमित्याह—**विसर्जनीयेति**। विसर्जनीयस्य यः सादेशः सकारादेश इत्यर्थः। **जिह्वेति**। कखाभ्यां प्राक्तनो विसर्गः कुवोरित्यादिसूत्रे प्रसिद्ध एव ॥ २११ ॥ **उपेति**। अयमपि पफाभ्यां पूर्ववर्तित्वेन तथैव। इति निरुक्तरूपाः। एतेपि विसर्जनीयसादेशादयोऽपीत्यर्थः। एवमुक्तवर्जनीयवत् असकृत् भूयः नैकट्यतः नैकट्येनोक्तरसादौ त्याज्या एवेत्यन्वयः। तानुदाहरति—**क इति**। **यस्त्विति**। अत्रविसर्गस्य सकारादेशोऽसकृन्नैकट्येन स्फुट एव। एवं 'ताः कान्ताः कामुकीः' इत्यत्रापि जिह्वामूलीयस्तथा 'कामुकीः प्रेक्ष्य ताः पराक्' इत्यत्र चोपध्मानीयस्तथेति लक्षणसंगतिः। अक्षरार्थस्तु इदं हि कृष्णस्य सकलगोप्यभिसरणोत्तरं तासां प्रत्याख्यानोत्तरं स्वगतमेव वाक्यम्। तथा कः मूर्खः यस्तु ताः आबाल्याद्व्यतीतरक्रीडादौ समनुभूताः। तत्रापि कान्ताः सुन्दरीः। तत्रापि कामुकीः सुरता-

**अन्त्येतरटवर्गस्य प्राचुर्यं च झयामपि।**
**पटुः शठेऽडनेबाढं न क्ष्माभृज्जेशदृक्ततेः॥ २१३॥**
**हलां लमनभिन्नानां स्वात्मना योजनं तथा।**
**दिक्कालौ विगणय्यैव चित्तं मे सच्चिदायते॥ २१४॥**
**झयूद्वयस्यापि संयोगः पद्माक्षि ब्रह्मदृक्तव।**
**झयौ सवर्णौ शलिभन्नमहाप्राणयुजौ सकृत्॥ २१५॥**
**कान्ते त्वन्नेत्रयोरन्तावन्तायैवेति रुक्किल।**
**शान्ति तेनैतु मे स्वान्तं यद्भासा भासते जगत्॥ २१६॥**

भिलाषिणीः। तत्रापि प्रेक्ष्य प्रत्यक्षीकृत्य ताः प्रति पराक् पराङ्मुख इति॥२१२॥ तद्वदन्यदपि किंचिद्वर्जनीयतयोद्दिशति—**अन्त्येतरेति**। अन्त्यात् णकारादितरोऽन्यो यष्टवर्गस्तस्येत्यर्थः। एवं झयामपि अन्त्येतरकादिपञ्चवर्ग्याणामपि प्राचुर्यं पौष्कल्यं वर्ज्यं इत्यादिप्राग्वत्। तदुदाहरति—**पटुरिति**। अत्र पूर्वचरणे अन्त्येतरटवर्गस्यान्तिमचरणे तूक्तझयां सद्भूतेति ज्ञेयम्। अयमर्थः। क्ष्माभृज्जा पार्वती शठापि धूर्तापि ईशदृक्ततेः शिवनेत्रपङ्क्तेः तस्य पञ्चवक्त्रत्वात्कृशानुरूपभालनेत्रपञ्चकस्य प्रलयेतरकालादौ निमीलनेऽपि चन्द्रसूर्यात्मकानामितरदशनेत्राणां पङ्क्तित्वं युक्तमेवेति भावः। बाढं दृढं ईडने स्तवने पटुः दक्षा न नैवासीदिति तस्याः पद्मिनीशिरोमणित्वेन दिवा रतिप्रियत्वात्सूर्योऽभीष्टश्चन्द्रस्तूद्दीपकत्वादभीष्टतर एव सामान्यतः परं त्वनयोरेककालावच्छेदेन लोके दौर्लभ्यमेव। प्रकृते तु समकालमेव दशसंख्याकानामपि सूर्याणां पूर्णचन्द्राणां च परमर्वाचिक्येण दर्शनान्निरतिशयपरितोषवशादतिधूर्तापि तत्स्तवनविषये तावदशक्तवासेत्याशयः॥ २१३॥ एवं दोषान्तरमप्याह—**हलामिति**। लमनेति। लकारादितराणामित्यर्थः। स्वेति। सजातीयवर्णान्तरेणेति यावत्। तथा असकृत्प्रकथ्येन वर्ज्यमिति प्राग्वत्। तदुदाहरति—**दिक्कालाविति**। अशुचिदेशदुष्टमुहूर्तावित्यर्थः। विगणय्यैव अनादृत्यैवेति यावत्। स्पष्टमेव शिष्टम्। इह कादीनां तथात्वं स्फुटमेव॥ २१४॥ तथान्यमपि दोषमाह—**झयूद्वयस्यापीति**। तमुदाहरति—**पद्माक्षीति** चरणेनैव। हे पद्माक्षि, तव दृक् दृष्टिरेव ब्रह्म। अद्वैतात्मतत्त्वमित्यर्थः। पक्षे दृक् साक्षिचैतन्यम्। एवमसकृत्प्रकथ्येन मधुरसवर्ज्यदोषानुक्त्वा सकृदपि वर्जनीयौ तावह—**सवर्णेति**। सवर्णौ यौ झयौ 'तुल्यास्यप्रयत्नं सवर्णम्' इत्याद्युक्तसवर्णतावच्छिन्नौ पञ्चमेतरकादिवर्गपञ्चकवर्णान्यतमवर्णावित्यर्थः। शलिभः भिन्नौ इतरौ यौ महाप्राणौ 'वर्गाणां द्वितीयचतुर्थौ शलश्च महाप्राणाः' इत्युक्तेर्द्वितीयचतुर्थानां कादिवर्ग्याणामन्यतमाविति यावत्। तेषां ये युजौ सवर्णझयुसंयोगशलिभन्नमहाप्राणसंयुक्तौ इत्यर्थः। सकृत् एते सकृदपि त्याज्या इति सम्बन्धः॥ २१५॥ तावुदाहरति—**कान्ते इति** क्रमेण। इयं हि कस्य चिद्विरक्तस्य कांचित्स्वकामुकीं परचन्द्रमुखीं प्रत्युक्तिः। हे कान्ते, त्वन्नेत्रयोस्तव लोचनयोः अन्तौ प्रान्त-

**यङ्लुगन्तादिरूपाणि दीर्घदृष्ट्यैव वर्जयेत् ।**
**संचरीकर्ति संक्रीडां राधास्याम्बुजषट्पदः ॥ २१७ ॥**
**अप्यनुप्रासनिचयान्यमकादींश्च पण्डितः ।**
**मदामोदमुदा राधा हरिणा हरिणाक्ष्यभूत् ॥ २१८ ॥**

भागौ अपाङ्गावित्यर्थः । यतः अन्तायैव मुमुक्षूणां क्षयायैव भवतः इति हेतोः तौ रुक्किल रोग एवेति योजना । अत्र रुक्किलेति सवर्णज्ञयसङ्गः । **शान्तिमिति ।** अतः मे स्वान्तं चित्तं यद्भासा यस्य ब्रह्मणः भाः प्रकाशस्तयेत्यर्थः । जगत् दृश्यं भासते स्फुरति तेन शान्तिमेतु प्राप्नोत्वित्यन्वयः । इह यद्भासेति शलिभन्नमहाप्राणसंयोगश्च स्फुट एव ॥ २१६ ॥ अथ पददोषानाह—**यङ्लुगन्तादी**त्यादिद्वाभ्याम् । आदिनात्वप्रत्यययङन्तयोर्ग्रहः । **दीर्घेति ।** दीर्घप्रज्ञयैवेत्यर्थः । तावुदाहरति—**संचरीकर्तीति ।** संक्रीडां सम्यग्गोपीसहस्रैः सह रासादिरूपां विलासपरंपरामित्यर्थः । संचरीकर्ति पुनः पुनः कृतवानिति यावत् । यथावा—'विश्वेशं सच्चिदानन्दं वन्देऽहं योऽखिलं जगत् । चरीकर्ति बरीभर्ति संजरीहर्ति लीलया' इति ॥ २१७ ॥ **अपीति ।** अपिः समुच्चये यङ्लुगन्तादिवदनुप्रासनिचयानपि चेति तथा यमकादीनपि वर्जयेदित्यन्वयः । निचयपदात्स्वल्पानुप्रासव्युदासः । तेन 'दर्शयन्ति शरन्नद्यः पुलिनानि शनैः शनैः' इत्यादौ न दोषः । आदिना पद्मबन्धादिग्रहः । तावुदाहरति—**मदेति ।** राधा मदस्य स्वतारुण्यमदस्य य आमोदो लेशः, यद्वा मदेन कामोन्मदेन य आमोदः पद्मिनीजातित्वात्स्वशरीरसौरभविशेषस्तेन या मुदमन्दस्मितपरंपरा तयेत्यर्थः । हरिविशेषणमप्येतत् । तत्र तु मदेन राधायाः पद्मिनीत्वात्तारुण्याविर्भावसमयसंपन्नकामोन्मादेन य आमोद इत्यादिप्राग्वत्तेन मुद्यस्य तेनेति बहुव्रीहिरेव । एवंच वक्ष्यमाणराधाकर्तृकार्थिकश्रीकृष्णकर्मकसादरनिरीक्षणे मूलीभूतपरस्परानुरागव्यञ्जकपरस्परप्रसन्नता ध्वन्यते । एतादृशेन **हरिणा** स्वानन्तकल्याणगुणमणिगणैरन्तःकरणहरणनिपुणेन श्रीकृष्णाख्यकरणेनेत्यर्थः । **हरिणेति ।** हरिणवन्मृगवत् इष्टलाभाद्विस्फारिते जनभीतिसंभवाच्चकिते परितस्तदीक्षणार्थे चलिते च अक्षिणी नेत्रे यस्याः सा तथेति यावत् । एतेन तस्यास्तावदाकस्मिकभगवल्लाभः सूचितः । एतादृशी अभूदिति संबन्धः । अत्र प्रथमचरणे दकाराद्यनुप्रासप्राचुर्यमन्तिमचरणे यमकं च स्फुटमेव । उपलक्षणमिदं गुणरत्ने वक्ष्यमाणानां तत्तदवच्छेदेन तत्तद्गुणानां तत्तदवच्छेदेनाभावलक्षणस्य गुणाभावरूपदोषकूटस्यापीति संक्षेपः । यथावा—'उदञ्चलदृगञ्चलं चलितचारुचेलाञ्चलं मनाग्वलितकन्धरं स्मितविकासिबिम्बाधरम् । ननेति विसृजाङ्गणादपसरेति काप्यङ्गना जगाद करपल्लवे रहसि वल्लभे कर्षति' । अत्र चकाराद्यनुप्रासः शृङ्गारानुचित एव । यथावाऽनुपदमेव प्रागुदाहृते भामिनीविलासपद्ये दयितादयिताननाम्बुजमिति तृतीयचरणे मधुररसाननुगुणमेवेति दिशान्यदप्युदाहार्यम् ॥ २१८ ॥

**इत्युक्तधर्मराहित्यमप्योजस्विरसादिषु ।**
**अद्य रावण ते मौलिमालिनी स्याद्वसुंधरा ॥ २१९ ॥**

एवं मधुररसदोषानभिधायैतद्राहित्यमेवोक्तशृङ्गारादित्रयेतरेष्वोजःसंज्ञकवक्ष्यमाणगुणप्रधानेषु वीररसादिषु दोष इत्याह—**इत्युक्तेति** । इति प्रागुक्तरीत्या उक्ताः ये धर्माः श्रयाघटितसंयोगपरहस्वाक्षरोच्चयादयो मधुररसदोषास्तेषां राहित्य शून्यत्वमित्यर्थः । ओजस्विनः निरुक्तरीत्या ओजोगुणवन्तो वीरादयस्ते च ते रसादयश्चेति तथा तेष्वित्यर्थः । आदिपदाद्भावादिः । तदपि निरुक्तरसावच्छेदेन त्याज्यमिति योजना । तदुक्तं रसगङ्गाधरे । तत्र मधुररसेषु ये विशेषतो वर्जनीया अनुपदं वक्ष्यन्ते त एवौजस्विन्यनुकूलाः, ये चानुकूलतयोक्तास्ते प्रतिकूला इति सामान्यतो निर्णय इति । तदुदाहरति—**अद्येति** । इय हि श्रीरामस्य रावणं प्रत्युक्तिः । रे रावण, अद्य इदानीमेव ते तव मौलिमालिनी मौलीनां 'मौलिः किरीटे धम्मिल्ले' इति विश्वोक्तेः किरीटानां माला मा यस्यां अस्तीति तथा त्वन्मुकुटहारवतीत्यर्थः । एतादृशी वसुन्धरा पृथ्वी स्यादित्यन्वयः । तस्मात्सद्य एव त्वां हनिष्यामीत्याशयः । अत्र हि वीररसस्य स्पष्टमेव ध्वननात्तत्प्रतिकूलानां वर्णादीनां सत्वेन मधुरेषु वर्ज्यतयोक्तानामेतदनुकूलानां धर्माणामसत्वाल्लक्षणसंगतिः । नन्वेवं शृङ्गारादिमधुररसेषु वर्जनीयदोषनिचयराहित्ये को लाभ इति चेत्तत्परिपोषव्यञ्जकवैदर्भ्याख्यवृत्तिविशेषसिद्धिरेवेति गृहाण । सा च विवृता तत्रैव—'एभिर्विशेषविषयैः सामान्यैरपि च दूषणै रहिता । माधुर्यभारभङ्गुरसुन्दरपदवर्णविन्यासा । व्युत्पत्तिमुद्गिरन्ती निर्मातुर्या प्रसादयुता । तां विबुधा वैदर्भीं वदन्ति वृत्तिं गृहीतपरिपाकाम्' । अस्यामुदाहृतान्येव कियन्त्यपि पद्यानि । यथावा—'आयातैव निशा निशापतिकरैः कीर्णं दिशामन्तरं भामिन्यो भवनेषु भूषणगणैरुल्लासयन्ति श्रियम् । वामे मानमपाकरोषि न मनागद्यापि रोषेण ते हाहा बालमृणालतोऽप्यतितमां तन्वीतनुस्ताम्यति' इति । नच किमेतावदायासेनास्तु नामोक्तवृत्तिराहित्यमपीति वाच्यम् । तस्याः परमावश्यकत्वादन्यथा वैरस्यापाताच्च । इदमप्याह स एव । अस्याश्च रीतेर्निर्माणे कविना निरासमवहितेन भाव्यम् । अन्यथा तु परिपाकभङ्गः स्यात् । यथा अमरुककविपद्ये—'शून्यं वासगृहं विलोक्य शयनादुत्थाय किंचिच्छनैर्निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम् । विस्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता' । अत्रोत्थाय किंचिच्छनैरित्यत्र परसवर्णश्रयूद्वयसंयोगस्तत्रापि नैकस्यैनेति सुतरामश्रव्यम् । एवं श्रयूघटितसयोगपरहस्वस्यापि । तथा शनैर्निद्रेत्यत्र निर्वर्ण्य पत्युर्मुखमित्यत्र च रेफघटितसयोगपरहस्वस्य प्राचुर्यम् । विस्रब्धमित्यत्र महाप्राणघटितस्य लज्जेत्यत्र स्वात्मसवर्णश्रयूद्वयघटितस्य मुखीप्रियेणेत्यत्र भिन्नपदगतदीर्घानन्तरसंयोगस्य तथा क्त्वाप्रत्ययस्य पञ्चकृत्वो लोकतेश्च धातोर्द्विः प्रयोगः कवेर्निर्माणसामर्थ्यादारिद्र्यं प्रकाशयतीत्यलं

परकीयकाव्यविमर्शनेनेति। अत्रेदं विचार्यते। किमत्र नहि निन्दान्यायेन निरुक्तवैदर्भ्याख्यरीतेर्मधुररसावच्छेदेनावश्यसंपादनावधानविधान एवोक्तदूषणोपन्यासपर्यवसानमुत प्रत्यक्षत्वाद्विवक्षितान्येव तानि तत्त्वेन तवेति। आद्येऽनुदितहोमादिवदिष्टापत्तिः। अन्त्यस्तु चिन्त्य एव। तथाहि काव्यप्रकाशे तावत् शृङ्गारस्य संभोगविप्रलम्भत्वाभ्यां द्वैविध्यं प्रकृत्य तत्राद्यः परस्परालोकनालिङ्गनचुम्बनाद्यनन्तभेदत्वादपरिच्छेद्य इत्येक एव गण्यत इत्युक्त्वा। यथा—'शून्यं वासगृहम्' इत्यादीदं पद्यं समुदाहृतम्। तत्रास्य वैदग्ध्यवीराख्यवीररसभेदविशेषानुप्राणितमुग्धनायिकारब्धचुम्बनात्मकसंभोगशृङ्गारोदाहरणत्वमेव वाच्यम्। ईदृग्भेदस्य क्वचित्प्रायेणादर्शनेऽपि निरुक्तरीत्या सामान्यतः संभोगशृङ्गारस्यानन्त्यात्प्रकृतपद्ये सूक्ष्मदृशां तथोपस्थितेश्च। तद्यथा अत्र निद्राव्याजमुपागतस्येति हृष्यतेति च विदग्धोत्तमनायकविशेषणाभ्यामहो प्रौढापीयं मानैकपराधीनत्वान्मद्वयस्या मत्कृतप्रार्थनशतेऽपि नैव प्रसीदतीत्यतः परं किं करणीयमिति सचिन्तं कथयतीं स्वनायिकारहःसखीं प्रति निरुक्तनायकोक्तिरियम्। पूर्ववृत्तकथनपूर्वकं स्ववैदग्ध्यातिशयसूचनेन तदाश्वासनार्थमयि सखि, बालापीयं मया प्रागीदृक् चातुर्येणातुलमेवमुपभुक्तासीदधुना त्वियं प्रौढेवेति किमु वक्तव्यं विलक्षणेन तेनैनां संभोक्ष्यामीत्यतस्त्वया नैव खिन्नतया भाव्यमिति। ननु कवेरेवेयमुक्तिर्नतु निरुक्तनायकस्य, प्रमाणाभावात्प्राचीनैर्व्याख्यातृभिः कैश्चिदपि तथानुक्तत्वाच्च। प्रत्युत शृङ्गारदीपिकाख्यायाममरुकशतकव्याख्यायामेतत्पद्यावतरणे कवेर्वाक्यमित्येवोक्तत्वादुदाहरणचन्द्रिकायामपि नवोढाया अभिनवसमागमवर्णनमिदमित्युक्त्या, तथा काव्यप्रदीपोद्योतेऽपि प्रथमावतीर्णमदनविकारमुग्धावर्णनमिदमिति वदता नागोजीभट्टेन तावन्मात्रताया एव द्योतितत्वाच्चेति चेत्सत्यम्। यत्र प्रकृतानुकूलार्थपुष्ट्याधिक्यं तत्पक्षस्यैव सहृदयधुरीणैरादरणीयतरत्वाद्दीपिकावाक्यस्य त्वापातिकत्वाच्चन्द्रिकोद्योतयोस्तु मत्संमतनायकविशेषवाक्यत्वपक्षेऽप्यनुकूलत्वादर्थपुष्टेस्त्वत्रैवाधिक्यस्यानतिविपश्चितामपि संमततमत्वाच्च। नच रसद्वयसांकर्यमदृष्टचरम्। 'यूनोरेकतरस्मिन्गतवति लोकान्तरं पुनर्लभ्ये। विमनायते यदैकस्तदा भवेत्करुणविप्रलम्भरसः' इत्युद्योतकारोदाहृतप्राच्यवचनेन परस्परविरुद्धयोरपि शृङ्गारकरुणयोरविरोधेन सांकर्यसिद्धावविरुद्धयोर्वीरशृङ्गारयोस्तत्र बाधकाभावेन तत्सिद्धेरभिसारिकायमाणत्वात्। तदविरोधादिकं तु रसगङ्गाधर एवोक्तम्। तत्र वीरशृङ्गारयोः शृङ्गारहास्ययोर्वीररौद्रयोः शृङ्गाराद्भुतयोश्चाविरोधः। शृङ्गारबीभत्सयोः शृङ्गारकरुणयोर्वीरभयानकयोः शान्तशृङ्गारयोश्च विरोध इति। नाप्यस्तु नामैवमविरुद्धत्वेन शृङ्गारवीरयोः सांकर्यमथाप्युक्तरूपस्य वैदग्ध्यवीरस्य लोके शास्त्रे च सुतरामप्रसिद्धत्वमिति। एवं पाण्डित्यवीरोऽपि प्रतीयते। 'अपि वक्ति गिरां पतिः स्वयं यदि तासामधिदेवतापि वा। अयमस्मि पुरो हयाननस्मरणोल्लङ्घितवाङ्मयाम्बुधिः' इत्यादिना तत्रैवोक्तेषु पाण्डित्यवीरादिष्वपि पर्यनुयोगतौल्यात्।

यदि तत्रानुभव एव शरणं तर्हि प्रकृतेऽप्यसौ न दण्डवारित इति संक्षेपः। श्लोकार्थस्त्वेवम्। अयि सखि, इयं प्रकृता लज्जेति भिन्नं पदम्। लज्जत इति तथा लज्जावतीत्यर्थः। एतेन लज्जाभयपराधीनरतिर्नवोढेति भानुमिश्रोक्तलक्षणे नवोढात्वं ध्वन्यते। अतएव वासगृहं 'भोगावासो वासगृहम्'इति चन्द्रिकोक्तहारावलीकोशादुपभोगनिकेतनं शून्यं निर्जनम्। एवं च स्रक्चन्दनादिकैः सकलोपभोगोपकरणैर्जनराहित्येन चोद्दीपनविभावसामग्री सूचिता। तत्रापि विलोक्य प्राथमिकसमागमवशात्किमियं पतिमनुसरति नवेति निरीक्षणार्थं प्रच्छन्नावस्थितस्वरहःसखीसंभावनया निशीथादौ निरुक्तशून्यत्वेन निर्जनत्वे प्रमितेऽपि विशेषेण कोणादौ परितो दृष्ट्वेत्यर्थः। ततः शयनात्तल्पात् किंचित् नतु सर्वतः पत्युर्निद्राभङ्गे सति पार्श्वपरिवर्तनेन समाधातु आनाभिपूर्वकायेनैव, तत्रापि शनैः कङ्कणादिक्वाणशङ्कया मन्दमेव नतु द्रुतम्। एतेनोक्तलक्ष्यीयभयांशोऽपि व्यक्तः। उत्थाय स्वस्या दक्षिणपार्श्वे एव पत्युः शयनाद्धर्मशास्त्रे विहितत्वाद्वक्ष्यमाणपरिचुम्बनपदद्योतितकपोलयुगललोचनयुगलाधरोष्ठाभिधाङ्गपञ्चकमध्ये दक्षिणकपोललोचनचुम्बनस्य निर्वर्ण्येति वक्ष्यमाण निर्वर्णनापेक्षितसंपूर्णमुखनिरीक्षणस्य चासंभवान्निरुक्तरीतिकमर्धव्युत्थानं संपाद्येत्यर्थः। एवचोत्कण्ठातिशयो व्यज्यते। **निद्रेति।** एतस्या अनुरागबुभुत्सया निद्रायाः व्याजं मिषं नतु व्याजेन। निद्रां किंचिन्मिषेणापि निद्रां प्राप्तस्य सर्वथा जातायामपि नायिकाचेष्टायां तज्ज्ञानसंबन्धासंभवात्। उपागतस्य प्राप्तस्य। एतादृशस्य पत्युः मम नतु प्रियस्य। प्राथमिकसमागमेनाप्रकटहार्दरहस्यत्वात्। एतेनास्याः स्वकीयात्वमपि व्यक्तीकृतम्। तथाविधवर्णनायामपि निद्राव्याजसहिष्णुत्वादिति नागोजीभट्टाः। मुखं वदनं सुचिरं यावन्मतिचातुर्यं निवर्ण्य अतएव निःशेषं वर्णयित्वा। एतेनानुरागातिशयः सुषुप्तिनिर्णयकामश्च सूचितः। यद्वा निर्वर्ण्येत्यनेनैवोक्तार्थसिद्धेः सुचिरमिति निद्रेत्यादेः प्रागेव योज्यम्। तेन स्वकौशलपौष्कल्यं व्यज्यते। विस्रब्धं एतावत्कालपर्यन्तवर्णनेऽपि निद्राया अनपगमे तस्यास्सात्त्विकत्वभ्रान्त्या विश्वासयुक्तं यथा स्यात्तथेत्यर्थः। एतेन परमचतुरया मत्सख्येदं त्वत्कपटं कथं न तर्कितमिति पूर्वोक्तसख्याशङ्का प्रत्युक्ता। परिचुम्ब्य परितः कपोलयुगललोचनयुगलाधरोष्ठ इति यावत्। अत्र विपरीत एवाङ्गक्रमो विवक्षितः। नोचेत्कपोलयुगलचुम्बनमात्रेण तत्रैव वक्ष्यमाणपुलकवत्तावेक्षणेन लोचनादिचुम्बनप्रवृत्त्यसंभवादधरस्यैवामृतवत्त्यावश्यचुम्बनीयत्वाच्च। चुम्बनं कृत्वेत्यर्थः। यद्यपि ततः सर्वाङ्गीणरोमाञ्चाविर्भावेपि तदानीं तच्चक्षुषोः कपोल एव संनिकर्षादाह—**गण्डेति।** गण्डः कपोल एव गण्डावेव वा स्थली अकृत्रिमभूमिः ताम्। एवंच पुलकाङ्कुराविर्भावाहेत्वं द्योत्यते। **जातेति।** संजातरोमोद्गमामित्यर्थः। आलोक्य आ ईषत् लोचयित्वा दृष्ट्वेत्यर्थः। नतु परितः। एतेन प्रतिज्ञातमुग्धात्वमेवोपपादितम्। अतएव लज्जेति पदं पुनरत्राप्यावर्तनीयमत्रैव वा यथाश्रुतमेव योज्यम्। गूढतमोऽपि

मदनुरागोऽनेन विलक्षणचातुर्यरचनया परिज्ञात इति पूर्वमेतत्प्रार्थनेऽपि मया लज्जाभयपराधीनया संभोगानुमोदनं न कृतमद्य त्वहमेव तत्र प्रवृत्तास्मीत्यस्य प्रत्यक्षमिति च लज्जाभरमन्थरेत्यर्थः । अतएव **नम्रेति** । नम्रं स्वयमेव नतं नतु नामितं मुखं यस्याः सा तथा । नताननेत्यर्थः । एवं च लज्जाधिक्यात्तथा व्याकुलाभूद्यथा मुखावनामनेपि न शक्तेति ध्वन्यते । ननु किमित्युक्तलज्जादीत्यत्राह—**बालेति** । मुग्धेत्यर्थः । नवोढा सत्यपीति यावत् । एतेनेदानीं स्वियं प्रौढैवेति सुलभ एवास्याः संभोग इति व्यज्यते । अथ हसता तव सर्वं रहस्यं मया परिबुद्धमिति प्राक्प्रयाभ्यर्थितापि नानुरताभूरिदानीं कथमिति शीघ्रमेव लब्धं व्याजनिद्राफलमतो धन्योऽहमिति च हासं कुर्वतेत्यर्थः । परमप्रसन्नेनेतियावत् । अतएव विलक्षणचातुर्यकारित्वात्परस्परमेकीभूतरहस्यत्वाच्च प्रियेण तत्प्रीतिविषयेणेत्यर्थः । एतादृशेन मया चिरं लज्जापगमपूर्वकयथेच्छसंभोगाङ्गीकारप्रसादपर्यन्तमितियावत् । सवृद्धिकमूलधनग्रहणाय चिरमिति चक्रवर्तिन इति चन्द्रिका । चुम्बिता अधरादौ । स्ववदनसंयुक्तीकृतेति संबन्धः नतु चुम्ब्यते । तेनास्य भूतकालार्थकत्वादयि सखीत्यादि निरुक्तपदाध्याहारेपि न क्षतिः । तस्माद्भो मत्प्रियावयस्ये, त्वया नैव भेतव्यमेतस्यां मम रमण्यां प्रौढात्वेऽप्यतिमानिन्यां सत्यामपि यदेनामतुलायासं विनैव द्रुतमेव स्वचातुरीचमत्कारेणोपभोक्ष्यामीत्याशयः । ननु गण्डस्थलीमालोक्य नम्रमुखीत्येवास्तु, तेनैव लज्जाध्वननात्किं लज्जापदेनेति चेन्न । अत्र भावध्वनित्वापत्तेः । एवमेवोक्तं सारबोधिन्याम् । लज्जापदानुपादाने तु तदनुभावमुखनम्रत्वेन तत्प्रतीतावनुभावव्यञ्जयत्वपुष्टया भावध्वनित्वं स्यात् । उपादानेतु गोपनकृतपुष्टिराहित्येन शृङ्गाराङ्गत्वप्राप्तिः । अतएव हासस्यापि स्वपदेनोपादानमिति । यत्तूद्योतकारैरुक्तमत्र गण्डेत्यश्लीलं तथात्र लज्जाहासयोर्व्यभिचारिणोऽस्वपदेनोपादानं चिन्त्यमिति तदेव चिन्त्यम् । तद्व्याख्याने तस्य तथात्वसंभवेऽप्युक्तव्याख्याने वक्तुर्नायकस्य शृङ्गारवीरोभयरसाविष्टचेतस्त्वेन तादृक्पदप्रयोगस्य प्रत्युत गुणत्वात् रसध्वनित्वसिद्धिप्रयोजनसंभवाच्च । एवमेवोदाहरणचन्द्रिकाकारस्यापि संमतम् । अतएवेयमिति प्रत्यक्षनायिकावाचकपदानुक्तिः स्वप्रार्थनातत्सख्यभ्यर्थनयोरनादरेण स्वस्य तस्यां संजातरोषाङ्कुरव्यञ्जकत्वादुक्तवीररसपोषकत्वाच्च युक्तैव । एवमेवास्मच्छब्दाप्रयोगप्रयोजनमपि । धीरोदात्तोत्तमनायकत्वात् । तदेवं संप्रोक्तसखीवचनोद्दीपितेन दृढमानस्वप्रेयस्यालम्बितेन तत्कालरोमाञ्चाद्यनुभावितेन स्मृत्यादिसंचारितेन निरुक्तनायकनिष्ठपरिपुष्टवैदग्ध्योत्साहस्थायिना वीररसविशेषेणानुजीवितः प्रोक्तकालिकधीरललितोत्तमनायकालम्बनः शून्यवासगृहनिरीक्षणाद्युद्दीपनः शयनोत्थाननिद्रितपतिमुखनिर्वर्णनपरिचुम्बनाद्यनुभावनः प्रचुरलज्जादिसहचारी निरुक्तनायिकानिष्ठः परिपुष्टः समानुरागात्मको रत्याख्यस्थायिभावः सामानाधिकरण्येन तुल्यप्रेमरूपत्वात्संभोगलक्षणः शृङ्गाररस एव प्राधान्येन ध्वनित इति रहस्यम् । नचात्रैकशय्याद्युद्दीपनात्स्वनवोढालम्बनात्कपो-

लपुलकानुभावाच्चिरचुम्बनानुभावाच्च सुचिरव्याजनिद्रारूपाद्धर्षरूपाच्च व्यभिचारिणोऽपि परिपुष्टः प्रोक्तनायकनिष्ठरत्याख्यः स्वकीयाविषयत्वेन स्पष्टः परस्परतुल्यप्रेमत्वेन समः संयोगकालावच्छिन्नरतित्वेन संभोगश्रृङ्गारोऽप्यस्तु ध्वनिव्यपदेश्य इति वाच्यम् । सर्वत्र समानुरागकसंभोगश्रृङ्गारावच्छेदेनैवं सम्भवेऽपि यूनोरेकतरस्यैव प्रवृत्त्यादिलिङ्गकानुमानादिना रतिप्राधान्यस्यावश्यं वाच्यत्वेन प्रकृते नायिकानिष्ठरतेरेव तथात्वस्य सहृदयहृदयसाक्षिकत्वात् । एवमेवोक्तमुदाहरणचन्द्रिकायाम् । नायकरतेरुद्दीपनं नायिकाचुम्बनं हासादिरनुभावः । हासव्यङ्ग्यो हर्षः संचारी । तथापि नायकविषयिण्या नायिकानिष्ठाया रतेरुद्रेकश्चर्वणाविषय इति चिन्तनीयमिति । उद्योतेऽपि । अत्र यद्यपि परस्परस्यालम्बनत्वेनोभयोरपि रतिः प्रतीयते तथापि नायकविषयिण्या नायिकारतेरुद्रेक एव चर्वणाविषय इति सहृदयसाक्षिकमिति । तस्मादत्र यथाश्रुतरीत्या रसगङ्गाधरोक्तदूषणगणसंभवेऽपि निरुक्तव्याख्यया वीररसविशेषानुप्राणितोक्तश्रृङ्गारसत्वात्क नाम तदवकाशलेशोऽपि प्रत्युत गुणगणवत्त्वमेव । ननु तर्हि दीर्घसमासाभावः कथमिति चेदुभयरसमत्वादेवेत्यवेहि । यच्च तत्रोक्तं क्त्वाप्रत्ययस्य पञ्चकृत्वो लोकतेश्च धातोर्द्विःप्रयोगः कवेर्निर्माणसामग्रीदारिद्र्यं प्रकाशयतीति, तत्तावत् 'आमूलाद्रत्नसानोर्मलयवलयितादा च कूलात्पयोधेर्ये केचित्सन्ति काव्यप्रणयनपटवस्ते विशङ्कं वदन्तु । मृद्वीकामध्यनिर्यन्मसृणरसझरीमाधुरीभाग्यभाजां वाचामाचार्यतायाः पदमनुभवितुं कोऽस्ति धन्यो मदन्यः' इत्याद्युक्तनिर्माणसामग्रीसामग्र्यसपदव्यग्रेणापि तेन परमोत्कटे शान्तरसेऽपि यदुदाहारि—'मलयानिलकालकूटयो रमणीकुन्तलभोगिभोगयोः । श्वपचात्मभुवोर्निरन्तरा मम जाता परमात्मनि स्थितिः' इति पद्यं, तत्र योय पूर्वार्धे मलयानिलेत्याद्युपक्रान्त उत्तमाधमक्रमस्तस्योत्तरार्धे श्वपचेत्याद्यधमोत्तमवाचिपदेन भङ्गात्तेन सहैव समाधेयम् । ननूक्तमेव तेन तत्समाधानं तत्रैवाग्रे यद्यपि प्रथमार्धे उत्तमाधमयोरुपक्रमाद्द्वितीयार्धेऽधमोत्तमवचनं क्रमभङ्गमावहतीति स्वकाव्यदोषमनूद्य तथापि वक्तुर्ब्रह्मात्मकतया उत्तमाधमभावज्ञानवैकल्यं सप्रत्नमिति द्योतनाय क्रमभङ्गो गुण एवेति चेत्तर्हि किमपराद्धं प्रकृतपद्यरूपेण परकीयकाव्येनैव । अत्रापि वक्तुर्वीररसाद्याविष्टचेतस्त्वमुक्तमेवाश्लीलादिदूषणापाकरणम् । तेन क्व दूषणावसर इति संतोष्टव्यम् । किंच यत्तावत्त्वया विप्रलम्भोदाहरणद्वयमुक्तम्—'वाचो माङ्गलिकीः प्रयाणसमये जल्पत्यनल्पं जने केलीमन्दिरमारुतायनमुखे विन्यस्तवक्त्राम्बुजा । निःश्वासग्लपिताधरं परिपतद्बाष्पार्द्रवक्षोरुहा बाला लोलविलोचना शिवशिव प्राणेशमालोकते' इति । तथा—'आविर्भूता यदवधिमधुस्यन्दिनी नन्दसूनोः कान्तिः काचिन्निखिलनयनाकर्षणे कार्मणज्ञा । श्वासो दीर्घस्तदवधि मुखे पाण्डिमा गण्डयुग्मे शून्या वृत्तिः कुलमृगदृशां चेतसि प्रादुरासीत्' इति च । तत्राद्ये माङ्गलिकीः प्रयाणेत्यत्रोपध्मानीयस्य । तथा जल्पत्यनल्पमिति ययूघटितसंयोगपरहस्ववर्णप्राचुर्यस्य नैकट्येन तद्वद्विन्यस्तवक्त्राम्बुजेति ययूघटितसंयोगपर-

ह्रस्ववर्णस्य रेफघटितक्षयूद्वयसंयोगस्य च नैकट्येन । तथा निःश्वासग्लपिताधरमिति नैकट्येन विसर्जनीयसादेशक्षयूघटितसंयोगपरह्रस्ववर्णयोस्तद्वत्परिपतद्बाष्पार्द्रवक्षोरुहेति नैकट्येनैव क्षयूघटितसंयोगपरह्रस्ववर्णद्वयस्य रेफद्वयघटितस्य दीर्घानन्तरक्षयूसंयोगस्य केवलदीर्घानन्तरक्षयूसंयोगस्य च । तथा शिवप्राणेशमिति क्षयूघटितरेफसंयोगपरह्रस्ववर्णस्य च प्रयोगादेतेऽश्रव्याख्याः शब्ददोषाः,तथा प्रयाणसमय इति विरुद्धमतिकृदमङ्गलरूपाश्लीलं वा तद्वत्केलीत्यादिदीर्घसमासं तद्विशेषणद्वयं च न कयाचिदपि रीत्या परिहर्तुं शक्यते । एवं द्वितीयेपि आविर्भूतेति रेफघटितक्षयूसंयोगपरह्रस्ववर्णस्तथा मधुस्पन्दिनीति संयोगपरह्रस्ववर्णस्तद्वन्नन्दसूनोः कान्तिः काचिदिति नैकट्येन जिह्वामूलीय युगुलं तथा नयनाकर्षण इति रेफघटितसयोगपरह्रस्ववर्णस्तद्वत्कार्मणश्चेति रेफघटितसंयोगस्तद्वत्संयोगपरह्रस्ववर्णश्च तथा दीर्घस्तदवधीति निरुक्तद्वयमेव । तद्वत्पाण्डिमागण्डयुग्मे इत्यत्र टवर्गप्राचुर्यं ग्राम्याख्यमश्लीलं संयोगपरह्रस्ववर्णश्च वृत्तिरित्यत्रापि स एव। तथा वृत्तिःकुलेति जिह्वामूलीयस्तद्वच्चेतसि प्रादुरासीदिति रेफघटितक्षयूसंयोगपरह्रस्ववर्णश्चेति शब्ददोषास्तथा पूर्वार्धोक्तविलक्षणभगवत्तारुण्यदर्शनोत्तरं उत्तरार्धवर्णितस्य कुलमृगदृशां दीर्घश्वासादिविरहचिह्नचयस्य प्रकृतविधेयधर्माणां परकीयास्वेव योग्यत्वेन तद्विरुद्धकुलेत्यादिपतिव्रतानुवादघटितत्वादनुवादायुक्तनामकार्थदोषस्तद्वत्तदवधिमुखे दीर्घः श्वास इति प्रत्यक्षविरुद्धाख्यश्चापरोऽसावार्थिकोऽपि कथं वा पराकरणीयः । श्वासस्य नासिकैकाधिकरणतायाः प्रत्यक्षसिद्धत्वात्कदाचिदतुलव्याकुलीभावविशेषे तस्य मुखेऽपि सत्वोपलब्धेस्तद्विवक्षयास्य समाधानेऽप्युर्वरितास्तु ते दुर्वाराएवेति बोध्यम् । अपिच 'लोलालकावलिवलन्नयनारविन्दलीलावशंवदितलोकविलोचनायाः । सायाह्नि प्रणयिनो भवनं व्रजन्त्याश्चेतो न कस्य हरते गतिरङ्गनायाः' इति दीर्घसमासदोषोदाहरणे तावल्लोकेत्यादिना सर्वजनमनोवशीकारस्य लोचनवशीकारोक्तिनान्तरीयकसिद्धत्वेऽपि पुनश्चेतो न कस्य हरत इत्यादिना तदनतिरिक्तार्थस्यैवोक्तत्वादार्थिकी पुनरुक्तिः केनापनेया । नच प्राथमिकं लोकमनोहरणं निरुक्तधर्मिकर्तृकमन्त्यं तु तद्गत्याख्यधर्ममात्रकर्तृकमिति स्पष्टमेवेति नोक्तदोषापत्तिरिति वाच्यम् । तत्रापि लोलालकावलीत्यादिध्वनितवेगवत्तरगत्याख्यधर्मस्यापि सत्वेनोक्तापत्तितादवस्थ्यात् । एवं 'तुलामनालोक्य निजामखर्वं गौराङ्गि गर्वं न कदापि कुर्याः । लसन्ति नानाफलभारवत्यो लताः कियन्त्यो गहनान्तरेषु' इति रेफघटितसंयोगस्यासकृत्प्रयोगोदाहरणे, यदितु तुलामनालोक्य महीतलेऽस्मिन्निति निर्मीयते तदा साध्वित्युक्तं तत्र तथा निर्माणेपि 'गौराङ्गि गर्वं न कदापि कुर्याः' इति तादृक्संयोगयुगसत्त्वेनासकृत्त्वानपहाराद्दोषानुद्धार एव । तथा क्षयूघटितसंयोगपरह्रस्वानां प्राचुर्यं नैकट्येन 'हीरस्फुरद्रदनशुभ्रिमशोभि किंच सान्द्रामृतं वदनमेणविलोचनायाः । वेधा विधाय पुनरुक्तमिवेन्दुबिम्बं दूरीकरोति न कथं विदुषां वरेण्यः' इत्युदाहृत्य तत्र यदि तु 'दन्तांशुकान्तमरविन्दरमापहारि सान्द्रामृतम्'

इत्यादि क्रियते तदा सर्वमेव रमणीयमित्युक्तं, तत्र दन्तयोः अंशुरन्तः 'चेलबसनमंशुकम्' इत्यमराद्वसनान्तो यस्येति समासान्मुखे दन्तभूतवसनपाद्यवत्त्वप्रतीत्या निन्दाध्वननाद्व्याघातापत्तिर्दुर्वारैव । दन्तांशुभिः कान्तमिति वा निरुक्तसमासो वा कार्य इति संदिग्धत्वं च । नच प्रथमसमासस्यागतिकस्थलीयत्वात्प्रकृते व्याघातापादकत्वाच्च द्वितीय एव श्रेयानिति वाच्यम् । तथापि विरुद्धमतिकृत्त्वाख्यपददोषस्यानपह्नवात् । तद्वत् 'इयमुल्लसिता मुखस्य शोभा परिफुल्लं नयनाम्बुजद्वयं ते । जलदालिमयं जगद्वितन्वन्कलितः क्वापि किमालि नीलमेघः' इति ललनानां स्वात्मना संयोगस्तु न तथा पारुष्यमावहतीत्यत्र यदुदाहृतं तत्र नायिकानयनयोरम्बुजरूपकत्वेन भगवतश्च नीलमेघरूपकत्वेन तयोस्तद्दर्शनैकहेतुत्वेन यत्फुल्लत्वं वर्णितं तत्प्रत्यक्षविरुद्धमेव । नहि नूतनघनदर्शनेन कमलं विकसतीति लोके दृष्टं प्रसिद्धं वा कविसमये । मुखेऽपि शोभोल्लासपदद्योतितं चन्द्रत्वमेव वाच्यम् । तथाच तच्छोभोल्लासस्यापि न मेघनवोदयनिरीक्षणकार्यत्वं स्वप्नेऽप्युपपद्यत इति दुर्निरसमेव विरुद्धार्थकत्वम् । एवमुपध्मानीयप्राचुर्योदाहरणे 'अलकाः फणिशावतुल्यशीला नयनान्ताः परिपुङ्खितेषुलीलाः । चपलोपमिता खलु स्वयं या बत लोके सुखसाधनं कथं सा' इत्यत्र द्वावुपध्मानीयौ शान्तरसाननुगुणाविति वक्तुः शान्तरसो योऽयं ध्वन्यध्वनाभिप्रेतः स तावच्चतुर्थचरणेन यथाकथंचिन्निर्वेदद्योतनविवक्षया संपद्यमानोऽपि त्रिभिः प्राक्तनचरणैर्दुःखजनकफणिशावादिरूपकतोऽपि तत्सौन्दर्यस्यैवालकेषु नीलत्वारालत्वादिना नयनान्तयोः पक्ष्मलत्वचपलत्वादिना तस्यां च गौरवर्णोत्कर्षशालित्वेन च सूचितत्वान्निर्वासां परिपोषमर्हति किंतु चपलेति पदव्यक्तवर्षागमनोद्दीपनेन तदलकादिसौन्दर्यस्मृतिजन्यपुलकाद्यनुभावेन निरुक्तस्मृतिनिर्वेदादिव्यभिचारिणा च परिपुष्टः पूर्वानुभूतनायिकालम्बितो नायकनिष्ठो वियोगकालावच्छिन्नरतिरूपस्थायिभावात्मा लोकपदध्वनितस्पष्टत्वेन स्वकीयाविषयको विप्रलम्भ एव व्यज्यते । यदि तु 'अलकाः परमम्बरकनीला नयनान्ताः पुनरेणतोयशीलाः । स्वयमप्यथ शालभञ्जिकाया' इति त्रिपादीविन्यासस्तदा यावत्तदलकादिसौन्दर्यस्य भ्रमकरूपत्वेन तदुपलक्षितनिखिलद्वैतालम्बनः स्वकार्ण्यदर्शनोद्दीपनः सर्वदुःखानुसंधानजन्यरोमाञ्चाद्यनुभावः स्मृत्यादिसंचारी च निवृत्ताश्रितोऽतिपूर्णतां यातो निर्वेदस्थायी घटेतापि ध्वनयितुं शान्तः नतु तथास्तीति किमभिप्राया तदुक्तिरिति कृतमतय एव विदांकुर्वन्तु । ननु तर्ह्येवं त्वत्काव्येऽप्यत्रान्यत्र च किं न सन्ति दोषा इति चेत्सत्यम् । यत्र महानुभावानां श्रीमद्गङ्गाप्रसादवत्त्वेन सुप्रसिद्धानां पण्डितराजानामपि काव्ये तत्सत्त्वं तदा कैव कथा परमपामरस्य मे । वस्तुतस्तु 'निर्दोषं हि समं ब्रह्म' इति श्रीमद्भगवद्वचनाद्यावद्दृश्यस्य दोषैकरूपत्वं नैसर्गिकमेव । नन्वेवं चेत्तर्हि शास्त्रे लोके च गुणदोषव्यवस्था व्यर्थैव स्यादिति वाच्यम् । तस्या व्यावहारिकविषयत्वात् गीतावाक्यादेस्तु पारमार्थिकत्वावलम्बित्वाच्च । एतेन यदेतादृशां महतामपि

**चतुर्दशापि नन्वेते वाक्यप्रथमदूषणे।**
**अन्तर्भवन्त्यतोऽमीषां प्रपञ्चाद्ग्रन्थगौरवम् ॥ २२० ॥**
**मैवं दोषगसौक्ष्म्यस्य ज्ञप्त्यै तस्यैव विस्तरः।**
**मयोपपादितोऽत्रायं रसगङ्गाधरोक्तितः ॥ २२१ ॥**
**शृङ्गारकरुणाशान्तबीभत्सान्यतमौ मिथः।**
**शत्रू रौद्राद्भुतौ हास्यघृणे वीरभयानकौ ॥ २२२ ॥**
**अनेकाधिकरण्यं च व्यवधानं रसान्तरैः।**
**अङ्गाङ्गिभावस्मरणमन्यस्याङ्गत्वमेव च ॥ २२३ ॥**

काव्ये शब्दादिदोषा दुर्निवार्यास्तर्हि तैस्तत्प्राचीनैश्च शास्त्रादौ किमिति ते समुपन्यस्तास्त्वयाप्यत्र तत्पल्लवनं किमिति कृतमित्युक्तिः प्रत्युक्ता। तस्य कविना स्वकाव्यस्य व्यावहारिकसत्त्वसिद्धये निरुक्तदोषप्रमोषानुकूलप्रतिभाविशेषसहायेनावश्यंभाव्यमित्येतावन्मात्रतात्पर्यकत्वादिति क्षन्तव्योऽयं परदूषणप्रपञ्चनादिरूपोऽस्मदविनयः सहृदयधौरेयैरिति शिवम् ॥ २१९ ॥ तत्रैवं नव्यमतोक्तरसदोषाणां प्रतिकूलवर्णत्वाख्यप्रथमवाक्यदोषान्तर्भावत्वेन गतार्थत्वात्तत्प्रपञ्चनेन ग्रन्थगौरवं शङ्कते—**चतुर्दशापीति**। ननु एते प्रागुक्तलक्षणाः ज्ञयूघटितसंयोगपरहस्ववर्णप्राचुर्यादयः चतुर्दशापि एतत्संख्याका अपि वाक्येति प्रतिकूलवर्णत्वाख्ये प्रथमे वाक्यदोष इत्यर्थः। यतः हेतोः अन्तर्भवन्ति 'विरुद्धवर्णतावाक्ये रसाद्यनुचिताक्षरैः। नवोढे प्रौढतामोढुं गाढाश्लेषादृढीभव' इति प्रागुक्तत्वात्तदुक्तिमात्रेणैव चारितार्थ्यमायान्तीति यावत्। अतः कारणात् अमीषां निरुक्तदोषाणां प्रपञ्चात् व्यर्थमुपन्यासात् ग्रन्थगौरवं प्राप्तमित्यन्वयः ॥ २२० ॥ समाधत्ते **मैवमिति**। तत्र हेतुं द्योतयति—**दोषगेति**। एवं निरुक्तग्रन्थगौरवशङ्कनं मा। नैव कार्यमित्यर्थः। यतः मया दोषगसौक्ष्म्यस्य पूर्वोक्तप्रतिकूलवर्णत्वाख्यदोषनिष्ठभेदविशेषसूक्ष्मत्वस्येति यावत्। ज्ञप्त्यै स्पष्टतयावबोधार्थं तस्यैव प्रतिकूलवर्णत्वाख्यदोषस्यैव विस्तरः प्रपञ्चः अयं प्रत्यक्षः। **रसेति**। ता उक्तयस्तु तत्रैव द्रष्टव्याः सूरिभिर्विस्तरभयान्नेहोदाह्रियन्ते। अत्र प्रकृतग्रन्थे। **उपेति**। हेयोपादेयविचारपूर्वकं प्रतिपादित इति योजना ॥ २२१ ॥ एवं नव्यसंमतदोषानुपन्यस्याथोभयसंमतं परस्परविरोधाख्यं रसदोषचतुष्टयं वक्तुं तद्विरोधानाह—**शृङ्गारेति**। शृङ्गारश्च करुणाशान्तबीभत्सान्यतमश्चेति द्वन्द्वः। मिथः अन्योन्यं। हास्येति। हास्यश्च घृणा करुणा चेति तथा हास्यकरुणावित्यर्थः। उक्तं हि काव्यप्रदीपे प्राचां वचनम् 'ज्ञेयौ शृङ्गारबीभत्सौ तथा वीरभयानकौ। रौद्राद्भुतौ तथा हास्यकरुणौ वैरिणौ मिथः' इति। रसगङ्गाधरेपि शृङ्गारबीभत्सयोः शृङ्गारकरुणयोर्वीरभयानकयोः शान्तशृङ्गारयोश्च विरोधः' इति ॥२२२॥ ननु किमत्र कश्चित्प्रतिप्रसवोऽप्यस्ति किंवा निरुक्तविरोधयोरेव रसयोर्यथाकथंचिद्ग्रथनं सामान्यतोऽपि चेद्दोष एवेत्याशङ्क्य तत्र प्रतिप्रसवपञ्चकमाह। अनैकाधिकरण्यं चेत्या

**तथाभिव्यञ्जनं चापि साधारणविशेषणैः ।**
**विना विरोधिनोर्व्यक्तिः स चतुर्धोभयोर्मतः ॥ २२४ ॥**
**यद्भाले कुङ्कुमं बाले तव तेनेन्दुरेधते ।**
**तन्मार्जने कथं हन्त धिगङ्गं रक्तपूरितम् ॥ २२५ ॥**

दिपादोनद्वाभ्याम् । असामानाधिकरण्यमित्यर्थः । विना विरोधिनोर्व्यक्तिरिति द्वितीयस्य तृतीयपादः पञ्चस्वपि संबध्यते । तेन 'कुण्डलीकृतकोदण्डदोर्दण्डस्य पुरस्तव । मृगारातेरिव मृगाः परे नैवावतस्थिरे' इति रसगङ्गाधरीयोदाहरणे वीरभयानकयोर्नायकप्रतिनायकनिष्ठत्वेन सामानाधिकरण्याभावान्नातिप्रसङ्गः । **व्यवधानमिति ।** उभयाविरोधिरसेष्वन्यतमेन रसेन व्यवधानं विनेत्यादिप्राग्वत् । एवं च 'सुराङ्गनाभिराश्लिष्टा व्योम्नि वीरा विमानगाः । विलोकन्ते निजान्देहान्फेरुनारीभिरावृतान्' इत्यत्रापि तत्पद्ये सुरस्त्रीस्वशवालम्बनयोः शृङ्गारबीभत्सयोः पूर्वार्धोक्तस्वर्गमनान्यथानुपपत्तिध्वनितवीररसव्यवधानान्नातिव्याप्तिः । **अङ्गाङ्गीति ।** अङ्गाङ्गिभावेन स्मरणप्रतिपाद्यत्वेन प्रधानीभूतस्य रसस्य परिपोषकतया साध्यसाधनभावाद्विरुद्धस्यापि रसस्य स्मरणमित्यर्थः । एतेन 'प्रत्युद्गता सविनय सहसा सखीभिः स्मेरैः स्मरस्य सचिवैः सरसावलोकैः । मामद्य मञ्जुरचनैर्वचनैश्च बाले हा लेशतोऽपि न कथं वद सत्करोषि' इति भामिनीविलासीयकरुणाख्यतृतीयोल्लासश्लोके नायकालम्बिन्याः प्रत्युद्गमाद्यनुभाविताया हर्षादिसहचारिभिः पोषितायाः स्मर्यमाणायाः नायिकाश्रिताया रतेर्नायिकालम्बनः पुरो निपतितच्छवोद्दीपनोऽश्रुपाताद्यनुभावः स्मृत्यादिसंचारी प्रकृतत्वेन प्रधानीभूतत्वान्नायकनिष्ठः शोक एवाङ्गीति नात्र व्यभिचारः । **अन्यस्येति ।** तावता च 'मेरुशृङ्गतटोल्लासिगङ्गाजलरयोपमा। दृष्टा यस्मिन्स्तने मुक्ताहारस्योल्लासशालिता। श्मशानेषु दिगन्तेषु स एव ललनास्तनः । श्वभिरास्वाद्यते कालेऽलघुपिण्ड इवान्धसः' इति योगवासिष्ठीययुग्मे शृङ्गारबीभत्सयोः प्राकरणिकतयावामशान्तरसाङ्गत्वेन न तत्र तदापत्तिः । अत्र पूर्वार्धचकारः समुच्चये । उत्तरार्धचकारैवकारौ तु पादपूरण एव ॥ २२३ ॥ **तथाभिव्यञ्जनं चापीति । साधारणेति ।** सामान्येन रसद्वयध्वननधुरीणत्वं साधारण्यम् । तथाच 'नितान्तयौवनोन्मत्ता गाढरक्ता महाहवे । वसुंधरां समालिङ्ग्य शेरते वीर तेऽरयः' इति जगन्नाथीयपद्ये नितान्तेत्यादिभिः साधारणविशेषणैरेव शृङ्गारबीभत्सयोरभिव्यक्तेर्न दोषः साधारणविशेषणैः विरोधिनोः रसयोरिति शेषः । अभिव्यञ्जनमपि अभिव्यक्तिं विनापि च विरोधिनोः पूर्वोक्तवैरवतोः रसयोर्व्यक्तिर्ध्वननं चेत्परस्परविरोधाभिधो रसदोषविशेषो भवतीति अध्याहृत्य संबन्धः । एवं प्रतिप्रसवपञ्चकमभिधाय पूर्वोक्तविरोधचातुर्विध्यानस्यापि तावन्मात्रभेदवत्त्वं प्रतिजानस्तस्य तथात्वं प्राचीनादिसंमतमेवेत्याह—**स इत्यादिशेषेण ।** सः निरुक्तदोषः । सर्वमिदं रसगङ्गाधरे स्फुटमेव ॥ २२४ ॥ तानेव चतुरोऽपि भेदान् क्रमेण

**किमरे क्षत्रडिम्भ त्वं धनुर्भङ्गेन दृप्यसि।**
**अहो केयं तनोः कान्तिः कमनीयतमाकृतेः ॥ २२६ ॥**

---

विवक्षुः प्रथमं शृङ्गारतद्विरोधिभेदमुदाहरति—**यदिति**। हे बाले, तव भाले यत्कुङ्कुमं तिलकीभूतं यत्काश्मीरं तेन कारणेनैवायमिन्दुश्चन्द्रः। एधते वर्धत इत्यन्वयः। अयि मुग्धे, अयं चन्द्रो हि त्वद्भाले आरक्तं कुङ्कुमतिलकं दृष्ट्वा मृगाङ्कस्य मम संपूर्णशोभा त्वस्याः मुखेन नैवापहृता। यदि अनया कस्तूरिकातिलकधारणं कृतं स्याच्चेत्तदपि स्यादेव, परं त्वनया तन्नैव क्रियते किंत्वारक्तवर्णस्य कुङ्कुमस्यैव भाले तिलकं विधीयत इति मयि यत्किंचिदवच्छेदेनापि शोभा वर्तत एवेति शोको नैव मया विधेय इति विवेकवशात्पुनरपि शुक्लपक्षे परिपुष्टो भवतीति भावः। एवं च त्वदाननं चन्द्रादप्यधिकतमशोभाशालीति स्तुतिः सूचिता। तेनात्र मुग्धा स्वकीया मानवती आलम्बनम्। उक्तस्तुत्यन्यथापत्तिसिद्धरहःस्थानाद्युद्दीपनम्। तत्सौन्दर्यदर्शनादिजन्यरोमाञ्चादिरनुभावः। तत्प्रसादाभिलाषादिः सहचारी च। एतैः पुष्टो नायकनिष्ठो निरुक्तनायिकाविषयको रत्याख्यः स्थायिभाव एव तस्याः मानवतीत्वेन वियोगकालावच्छिन्नत्वाद्विप्रलम्भः स्वकीयाविषयत्वाच्च स्पष्टः शृङ्गाररस एव रूपकविशेषात्प्राधान्येन चमत्कारकारित्वाद्ध्वन्यते। अथ तद्विरोधिनं करुणं संक्षिपति—**तदित्यादि**तृतीयपादेन। हन्तेति खेदे। तन्मार्जने मन्मरणोत्तरं निरुक्ततिलकक्षालने सति कथं स्यादिति संबन्धः। एवं तादृशं शान्तं सूचयति—**धिगङ्गमिति**। अतो निरुक्तनिरतिशयदुःखहेतुत्वादङ्गं आवयोः शरीरमेव धिगिति योजना। तद्वदेव तत्र हेतुं द्योतयन् बीभत्समपि व्यञ्जयंस्तद्विशिनष्टि—**रक्तेति**। अत्र सामानाधिकरण्यं अव्यवधानं अनङ्गाङ्गिभावः। अनन्याङ्गत्वं साधारणविशेषणैरनभिव्यञ्जनं च शृङ्गारकरुणाद्यन्यतमयोः स्फुटमेवेति दिक् ॥ २२५ ॥ एवं रौद्राद्भुतविरोधमुदाहरति—**किमिति**। इयं हि भगवतः परशुरामस्य श्रीरामं प्रत्युक्तिः। अरे इति नीचसंबोधने। तेन क्रोधो ध्वनितः। **क्षत्रेति**। क्षत्रियकुलार्भकेत्यर्थः। तेन तत्कृतस्वपितृवधादिस्मृतिः सहचारिभावः सूचितः। डिम्भपदेन 'पोतः पाकोऽर्भको डिम्भः' इत्यमराच्छिशुवाचित्वादनादरो व्यक्तः स्वनिष्ठगर्वश्च। धनुरिति चन्द्रचूडचापचूर्णीकरणेनेत्यर्थः। एतेनोद्दीपनविभावो व्यक्तः। दृप्यसि धन्यतां मनुषे किमित्याक्षेपः। एवंच लोचनारुण्याद्यनुभावोऽपि द्योतितः। एतैः परिपुष्टः श्रीरामालम्बनः परशुरामनिष्ठः पूर्वोक्तक्रोधाख्यः स्थाय्येवात्र रौद्ररसः प्रधानतया व्यज्यते। तद्विरोधी चैकालम्बनत्वात्सामानाधिकरण्यादिभिरहोइत्युत्तरार्धेऽद्भुतश्च। **कमनीयेति**। रम्यतमव्यक्तेः श्रीरामस्येत्यर्थः। एतेनावयवसौष्ठवं सूचितम्। तथाच अहो इत्याश्चर्ये। इयं पुरोवर्तिनी तनोः वपुषः कान्तिः लावण्यं का, अनिर्वाच्यैवेति न वक्ष्यमाणेन पौनरुक्त्यम्। अत्रापि विस्मयादिरस-

**रन्तुमिच्छति कान्तेयं यूनानङ्कुरशालिना ।**
**जरठं स्वर्गतं कान्तमनुरोदनसुस्वरा ॥ २२७ ॥**
**चाणूर चूर्णयाद्य त्वं गोपमल्लाविमौ बलात् ।**
**मत्त्राता भविता कोयत्कृष्णः स्फुरति सर्वतः ॥ २२८ ॥**
**युष्मदस्मत्प्रयोगाणां प्राचुर्यं मे तथा मतम् ।**
**भो प्रिये वलितग्रीवं सस्मितं मां किमीक्षसे ॥ २२९ ॥**

सामग्री प्रागवदेवोह्या ॥२२६॥ तथा हास्यकरुणविरोधमप्युदाहरति—**रन्तुमिति।** **अनङ्कुरेति।** नाम्यधो रोमोद्गमाभाववतेत्यर्थः । अभिनवयौवनशालिना सहेति यावत् । कथमिदं निर्णीतमित्याकाङ्क्षायां तस्यास्तारुण्यव्यञ्जकः सुस्वर एव तत्र हेतुरिति द्योतयन्त्वां विशिनष्टि—**जरठमिति।** वृद्धमित्यर्थः । इह पूर्वोत्तरार्धयोः सामानाधिकरण्यादिना हास्यकरुणौ व्यक्तावेव ॥ २२७ ॥ तद्वद्वीरभयानकविरोधमप्युदाहरति—**चाणूरेति।** इयं हि रामकृष्णाभ्यां कुवलयापीडाख्यं गजमपि तद्वदेवोन्मर्द्य रङ्गप्रवेशे कृते सति कंसस्य चाणूरनामानं मल्लविशेषं प्रत्युक्तिः । हे चाणूर, त्वं अद्य अधुनैव नतु क्षणान्तरे । इमौ निरुक्तपराक्रमपूर्वकं प्रत्यक्षौ । अतएव—**गोपेति।** गोपेषु मल्लौ कर्मीभूतौ रामनारायणावित्यर्थः । एतेन पराक्रमातिशयः सूचितः । अतएव बलात् यावन्निजसामर्थ्येनापि चूर्णय मद्गजवदेव मर्दयेत्यन्वयः । अत्र रामाद्यालम्बितस्तत्पराक्रमेक्षणाद्युद्दीपितश्चाणूरं प्रत्याज्ञादिद्योतितगर्वादिसहचरितः कंसस्य पुरोवर्तिशत्रुदर्शनजन्यपुलकाद्यनुभावितः प्रोग्माहस्थायिभावो युद्धवीररसः स्फुट एव । तथोत्तरार्धे मत्त्राता मद्रक्षकः परंतु कः भविता भविष्यति । किंशब्द आक्षेपे । न कोऽपि स्यादित्यर्थः । तत्र हेतुः—**यदित्यादिना।** यद्यस्मात्कारणात् कृष्णः सर्वतः यावद्दूरत्वविच्छेदेनेत्यर्थः । स्फुरति भासत इतियावत् । यतो मच्छत्रुरेव सर्वत्र मामवभासतेऽतो भवतां यो मद्रक्षकत्वेन संमतः स्यात्सोऽपि मम शत्रुरेव भायादिति न कोऽपि मम संरक्षणक्षम इत्याशयः । एवंच श्रीकृष्णालम्बनः सर्वत्र तत्स्फुरणोद्दीपनः तत्सिद्धकम्पाद्यनुभावः चिन्तादिसहचारी भयस्थायिभावो भयानकरसश्च तद्विरोधीति । अत्रापि सामानाधिकरण्यादिकं प्रागवदेव बोध्यमित्यलं पल्लवनैः ॥ २२८ ॥ अथ स्वसंमतमेकं रसदोषमाह—**युष्मदिति।** तथा रसदोषत्वेनेत्यर्थः । मे मतं संमतमस्तीति यावत् । एवंच प्राचीनादिभिरेतदनुक्तावपि तत्र ग्राम्यत्वादिवद्वैरस्यजनकतायाः सकलसहृदयहृदयसाक्षिकत्वान्नासावुपेक्षणीय इत्याशयः । तमुदाहरति भूयस्त्वसिद्ध्यै—**भोइत्यादिना।** विशेषतः स्वानुरागविषयत्वमपि तस्यां सूचयितुं प्रिये इति । वलितेति क्रियाविशेषणम् । ईषद्वक्रीकृतकंधरं यथा तथेत्यर्थः । एतेन विलासिनीस्वभावः स्फुटितः । एवं सस्मितमित्यपि । एतेन निरुक्तावलोकने रोषादिसंभवव्युदासो द्योतितः । किंशब्दोऽयमाक्षेपे । उक्तरीत्या मां किमितीक्षसे तर्हि नैवं वीक्षणं कार्यं किंतु तदुत्तरमालिङ्गनाद्येव द्रुतं देय-

**गजेन्द्रा अपि जीवन्ति नहि सिंहावलोकनैः ।
अङ्गने त्वदपाङ्गेन स्वान्तं मे हन्त कृन्तितम् ॥ २३० ॥
कृष्णस्ते कबरीभारः शितिकण्ठस्वयंभुवौ ।
स्तनौ तव चकोराक्षि मामवन्तु स्मरातुरम् ॥ २३१ ॥
प्राच्यमेवमुदीच्यं च मतमालोच्य निश्चिता ।
इहैषा सर्वदोषाणां संख्या वस्वश्वभूमिता ॥ २३२ ॥
एवमन्येऽपि शब्दार्थदोषाः प्रोह्या मनीषिभिः ।
एतेषामपवादादि त्वग्रिमे रत्न ईक्ष्यताम् ॥ २३३ ॥**

---

मित्याशयः ॥ २२९ ॥ तत्रार्थान्तरन्यासं संक्षिपति—**गजेन्द्रा अपीति** । वलितग्रीवं ह्यवलोकनं सिंहावलोकनमित्युच्यते । पक्षे सिंहस्येति षष्ठीसमासः स्फुटएव । अपिना स्वल्पदेहवतामस्माकं तदभावः कैमुत्यसिद्ध एवेति व्यज्यते । तस्मादुक्तप्रार्थनमेव संपाद्यं भवत्यैवेति भावः । तत्र स्वानुभवमपि प्रमाणयति—**अङ्गने इति** । 'कृन्तितं क्रकचादिनेव खण्डितमिति यावत् ॥२३०॥ अथ लोभं जनयितुं तां स्तुन्वन्पुनरपि रतिप्रार्थनमेव व्यनक्ति—**कृष्ण इति** । नीलः । शितीति । शितिर्नीलिमा कण्ठे ययोस्तौ च तौ स्वयंभुवौ स्वत एव यौवने प्रादुर्भवनशीलौ चेति तथेत्यर्थः । एते कबरीभारादय इत्यध्याहारस्तु स्मरातुरत्वाद्गुणावह एव । स्फुटमेवान्यत् । यथावा भामिनीविलासद्वितीयशतके प्रायः प्रतिपद्यमपि ॥ २३१ ॥ अथोपसंहारव्याजेन पूर्वोक्तनिखिलदोषाणां संख्यां कथयति—**प्राच्यमिति** । प्राचां मंमटभट्टादीनामिदं प्राच्यमित्यर्थः । एवं तद्वत् उदीच्य उदीचां उत्तरकाले जायमानानां जगन्नाथपण्डितराजादीनामिद तथेत्यर्थः । एतादृशं च मतं सिद्धान्तजातं आलोच्य विचार्य निश्चिता निर्णीतेत्यर्थः । इह प्रकृतग्रन्थे । **वस्विति** । वसवः अष्ट, अश्वाः सप्त, भूः एकसंख्या । एवंच अङ्कानां वामतो गत्या अष्टसप्तत्यधिकैकशतं शब्दादिदोषसंख्येत्यर्थः । निश्चिता निर्णीतेति संबन्धः । मयेति शेषः । नन्वेवमलंकारदोषा अपि केचित्किमिति नोक्ता इतिचेत्तेषामुक्तेष्वेव यथायथमन्तर्भावसंभवादिति गृहाण । सच काव्यप्रकाशसाहित्यदर्पणादौ प्रपञ्चित एवानतिप्रयोजकत्वादुक्तदोषविदा स्वयमप्यूहितुं शक्यत्वाच्च नेहोपन्यस्त इति दिक् ॥ २३२ ॥ इदमपि केवलं दिक्प्रदर्शनमेवेति द्योतयन्भविष्यद्ग्रन्थकारैरप्यनयैव रीत्यान्येषामपि तेषां तत्तदधिकारिमतिवैशद्यार्थं प्रोहनं कार्यमेवेत्याह—**एवमिति** । एतेन 'सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः' इति, 'निर्दोषं हि समं ब्रह्म' इति चान्वयव्यतिरेकस्मृतिसद्भावाद्यावद्दृश्यस्यापि दोषैकरूपत्वादुक्तसंख्याका एव काव्यदोषा इति कथं नियम्यत इत्युक्तिः प्रत्युक्ता । ननु प्राचीनैः केषांचिद्दोषाणामपवादोऽप्युक्त इत्यत्राह—**एतेषामिति** । आदिना गुणग्रहः । तुशब्दः प्रोक्तशङ्काशान्त्यै ॥

गोक्षीराब्धेः शिवगुरुविबुधसहायोऽच्युतः समुद्दध्रे ।
दोषविनिर्णयरूपं विषसंज्ञं षष्ठमपि रत्नम् ॥ २३४ ॥

## गुणरत्नम् ७

दोषमेवं प्रसार्याथ गुणान्संवर्णयाम्यहम् ।
भारतीक्षणसंतोषलब्धये नित्यमात्मनः ॥ १ ॥

---

दोषरत्नमुपसंहरतस्तस्य युक्तां संज्ञामपि प्रथयति—**गोक्षीरेति** । पूर्वार्धं तु पूर्ववदुक्तार्थमेव । **दोषेति** । पक्षे दोषस्य स्वाविर्भावोत्तरं देवासुरादीनां धृतिराहित्येन सर्वतः पलायनान्निर्वीर्यत्वरूपस्य विशेषेण विश्वप्रसिद्धिलक्षणेन निर्णयो येन तादृशं रूपं यस्येत्यर्थः । स्पष्टमन्यत् ॥ २३४ ॥

इति सरसामोदाह्वयव्याख्यायां विषसंज्ञस्य षष्ठस्य दोषरत्नस्य विवरणम् ॥

---

पूर्वोत्तररत्नयोः संगतिं वदन् गुणरत्नप्रयोजनमपि विशदयति—**दोषमिति** । एवं पूर्वोक्तरीत्या दोषं शब्दादिनिष्ठमुक्तसंख्याकं काव्यहेयधर्ममित्यर्थः । प्रसार्य प्रपञ्च्य अथ तदुत्तरं अहं ग्रन्थकारः गुणान् काव्योपादेयधर्मान् संपूर्णमाधुर्यादिगुणानुक्तदोषापवादांश्चेति यावत् । आत्मनः स्वस्य नित्यमखण्डम् । एवंच परप्रयोजनार्थत्वस्य क्षणिकसंतोषस्य च व्युदासः सूचितः । तयोः प्राचीनग्रन्थतोऽपि संभवात् । ममापि ततस्तत्संभवेऽपि तत्तद्ग्रन्थानामेकत्र सरससंमेलनार्थमेवायमायास इति हृदयम् । **भारतीति** । भारती श्रीमद्वाल्मीक्यादिकवीन्द्रवाणी तस्याः यदीक्षणं तात्पर्यपर्यालोचनं तेन यः संतोषस्तस्य लब्धिस्तस्या इत्यर्थः । संवर्णयामि सम्यक् पूर्वाचार्यवचोनुसारेण विचारपूर्वकमेव प्रस्तौमीत्यन्वयः । पक्षे मानवतीं स्वमनोरमां प्रार्थयतः कस्यचित्तत्कालमागतां किमेतदिति पृच्छन्तीं नायिकारहःसखीं प्रत्युक्तिरियम् । हे प्रियावयस्ये, अहं एवं इत्यभिनयः । सादृश्यं वा । दोषं बाहुम् । उपलक्षणमिदं बाह्वन्तरस्यापि।जात्यभिप्रायकं वा एकवचनम् । तथा चालिङ्गनार्थं बाहुद्वयमय यथा प्रसारितं तथा प्रसार्येत्यर्थः । अथ अनन्तरं गुणान् रूपादीनस्याः साधुधर्मान् आत्मनः स्वस्य नत्वस्या एव अबन्धित्वात्, नाप्यन्यस्य असखीत्वात् । तत्रापि नित्यं ननु क्वचित् । तेन स्वस्मिन्दृढानुरागित्वं नायिकायां विपुलमानशालिनीत्वं स्वकीयात्वं च सूचितम् । **भारतीति** । भा गुणवर्णनश्रवणेन प्रसादान्मन्दस्मितकान्तिः तया यत्प्रतीक्षणं हार्दानुरागस्यानुमा तत्पूर्वकं वा रतीक्षणं प्रसन्नतया सुरतप्रदानानुभवस्तेन संतोषलब्धय इत्यादि प्राग्वत् । संवर्णयामि शास्त्रप्रतिपादितकामपुरुषार्थरीत्या कथयामीत्यर्थः । पक्षान्तरे दोषं स्वदुर्गुणं आत्मनः गुणान् सत्यत्वादीन्धर्मान् । आत्मनः भारतीति महावाक्यजन्यज्ञानेन ब्रह्मानन्दाप्तय इत्यर्थः । शिष्टं तु स्पष्टमेव । अत्र श्लेषोऽलंकारः ॥ १ ॥

**गुणो हि द्विविधो दोषाभावात्मा प्रथमो मतः।**
**माधुर्यादिर्द्वितीयश्च क्षीरे शुद्धिसितादिवत् ॥ २ ॥**
**आद्यः पुनर्द्विधा ज्ञेयो मुख्यगौणत्वभेदतः।**
**मुख्यः प्रसिद्ध एवास्ति गौणः स्यादपवादतः ॥ ३ ॥**
**स तु किंचिदवच्छेदाद्विहितस्य निषेधनम्।**
**विधिर्वा प्राङ्निषिद्धस्येत्येवं द्विविध उच्यते ॥ ४ ॥**

---

एवं प्रतिज्ञाते गुणप्रस्तावने स कतिविध इत्याकाङ्क्षायां भावाभावात्मभेदेन सामान्यतस्तद्द्वैविध्यं विधातुं तमुद्दिशति—**गुणो हीति**। हिरवधारणे। द्विविध एवेत्यर्थः। कथं तद्द्वैविध्यमित्याशङ्कायां तत्प्रकारद्वयं विवक्षुः पूर्वोक्तदोषाणामासन्नत्वात्प्रथमं तेषामभावमेवाद्यगुणत्वेन विधत्ते—**दोषेति**। निरुक्तशब्दादिदोषाभावस्वरूप इत्यर्थः। ननु यदि दोषाभावोऽपि गुण एव तर्हि कथं प्रथमरत्ने तत्र निर्दोषेत्यादिकाव्यलक्षणे निर्दोषेति दोषाभावस्य गुणपार्थक्यघटकं शब्दार्थविशेषणमिति चेत्सत्यम्। तत्र गुणपदस्य रसादिसाधारणकाव्यनिष्ठभावरूपधर्मषट्कवाचकत्वात् अभावरूपतद्ग्रहार्थं तदपेक्षणाच्च। अस्त्वेवमयमभावरूपस्तथापि भावरूपः क इत्यत्राह—**माधुर्यादिरिति**। 'माधुर्यौजःप्रसादाख्यास्त्रयस्तेन पुनर्दश' इति काव्यप्रकाशसूत्रोक्तो वक्ष्यमाणलक्षणो माधुर्यादिर्भावरूपो द्वितीयो गुण इत्यर्थः। ननु भावरूपस्य तत्त्वसंभवेऽप्यभावे तददृष्टचरमित्येतन्निदर्शनव्याजेन समाधत्ते—**क्षीर इति**। यथा गवादेः क्षीरस्य वस्त्रादिना तल्लोमादिनिराकरणलक्षणा तदितरवस्त्वभावरूपा शुद्धिः प्रथमो गुणस्तावत्सुप्रसिद्ध एव तद्वत्प्रकृतोऽपि ज्ञेय इत्यर्थः। एवं तत्र यथा तदुत्तरं सिताशब्दितशर्करादिसंमेलनलक्षणो भावरूपो द्वितीयो गुणस्तद्वदयमपीति यावत्। आदिना गुडः। माधुर्यप्रसादादीनां धर्माणां शर्करायामपि सत्त्वात्। श्लेषेण साधर्म्यं ध्वन्यते। तस्मादभावरूपोऽपि गुणः सुप्रसिद्ध एवेति भावः। एतेनोक्तलक्षणस्याभावरूपगुणस्य तत्प्रतियोगिदोषसापेक्षत्वात्प्राक्तनस्य दोषरत्नस्याव्यवहितोत्तरत्वमस्य गुणरत्नस्योचितमेवेति सूचितम्। तेनानयोरुपजीव्योपजीवकभावसंगतिरपि सिद्धेति ॥ २ ॥ ननु भवत्वेवं गुणस्य सामान्यतोऽभावत्वादिभिदा द्वैविध्यं तथाप्यभावात्मा स किमेकविध एवाथवानेकविध इत्याशङ्कयान्यमङ्गीकरोति—**आद्य इति**। तत्र हेतुमाह—**मुख्येति**। तत्र मुख्यत्वं तावन्निरुक्तदोषत्वावच्छिन्नप्रतियोगिताकत्वं, तथा गौणत्वमपि किंचिदवच्छेदेन तत्सत्त्वेपि तत्समानधर्मकत्वमिति बोध्यम्। अत्र तच्छब्दाभ्यां क्रमाद्दोषतदभावौ ज्ञेयौ। एवंच दोषसत्त्वेऽपि तत्कार्याकारित्वमिति फलितम्। अथ कौ तावित्याकाङ्क्षायां तयोः क्रमात्प्रसिद्धिकारणाभ्यां स्वरूपे विशदयति—**मुख्य इति**। उत्सृष्टस्य किंचिदवच्छेदेन निषेधो ह्यपवाद इत्यनुपदमेव वक्ष्यते ॥ ३ ॥ तमेव लक्षयति—**स त्विति**। कोऽसावपवादपदार्थ इति शङ्काशान्त्यर्थस्तुशब्दः। एवं विधिमुखेनापि तं लक्षयति—**विधिर्वेति**। इतिशब्दो लक्षणद्वयोपसंहारार्थः। एवंशब्दस्तु प्रकारवाचक इति न पौनरुक्त्यम्। तथाच एवं निरुक्तलक्षणद्वयप्र-

**स्वाध्याये विहिते नित्येऽशुचित्वादिनिषेधवत् ।**
**यावद्धिंसानिषेधेऽपि यज्ञे हिंसाविधानवत् ॥ ५ ॥**
**गुणत्वकरणाद्दोषे दोषत्वस्य निवारणात् ।**
**गुणाद्यौपयिकत्वेनात्याज्यत्वाच्च पुनस्त्रिधा ॥ ६ ॥**
**पूतिगन्धिस्तु हिङ्ग्वादिर्दध्यादौ सुरभिर्यथा ।**
**नीलं चेलं सुगौराङ्ग्यां ताम्बूलादौ सुधाद्यपि ॥ ७ ॥**

कारेण द्विविधो द्विकोटिक उच्यत इत्यन्वयः । तस्मात्सामान्यतो विहितनिषिद्धयोः क्रमाद्विशेषतो निषेधविध्यन्यतरत्वमपवादसामान्यलक्षणं फलितम् ॥ ४ ॥ उभयविधमपि तं क्रमेणोदाहरति—**स्वाध्याय इति** । 'स्वाध्यायोऽध्येतव्यः' इति श्रुत्या नित्ये 'नित्यं सदा यावदायुर्न कदाचिदतिक्रमेत्' इत्युक्त्याऽतिक्रमे दोषश्रुतेरत्यागचोदनात् 'फलाश्रुतेर्वीप्सया च तन्नित्यमिति कीर्तितम्' इत्यभियुक्तोक्तेर्नित्यविधिविषय इत्यर्थः । एतादृशे—**स्वेति** । स्वशाखाध्ययन इति यावत् । विहिते चोदिते सतीत्यर्थः । अशुचित्वेति च्छेदः । 'तस्य द्वावनध्यायौ यदात्माऽशुचिर्यद्देशः' इति श्रुतेरपवित्रत्वाद्यवच्छेदेन यो निषेधस्तद्वदित्यर्थः । आद्योपवाद इति शेषः । **यावदिति** । 'न हिंस्यात्सर्वाभूतानि' इति श्रुतेः कायिकादियावत्प्राणिपीडानिषेधे सत्यपि 'अन्यत्र तीर्थेभ्यः' इति तद्वाक्यशेषात् 'अग्नीषोमीयं पशुमालभेत' इत्यादिश्रुतेश्च यत् यज्ञे हिंसाविधानं तद्वदित्यर्थः । द्वितीयोऽपीत्यादिप्राग्वत् ॥ ५ ॥ एवं निरुक्तापवादद्वयजन्यत्वेन द्विविधस्याप्यस्य पुनस्त्रैविध्यं विधत्ते—**गुणत्वेति** । दोष इत्युभयत्राप्यन्वेति—**गुणादीति** । उपाय एवेति स्वार्थिकतद्धिते औपयिक इत्येव । दीर्घपाठे तु उपायः प्रयोजनं अस्येति 'प्रयोजनम्' इति ठञ् । एवंच गुणालंकारसाधनफलकत्वेनोपादेयत्वाच्चेत्यर्थः । शिष्टं तु स्पष्टमेव ॥ ६ ॥ त्रिविधमपि प्रागुक्तद्विविधापवादजन्यं गौणदोषाभावलक्षणं गुणमुदाहरति—**पूतीति** । पूतिर्दुष्टः गन्धो यस्य स तथा । 'गन्धस्येत्' इति समासान्त इकारः । 'पूतिगन्धिस्तु दुर्गन्धः' इत्यमरः । तुशब्दोऽप्यर्थकः । एतादृशोऽपि हिङ्ग्वादिर्यथा दध्यादौ सुरभिः सुगन्धिर्भवति तथेह काव्यादौ दोषोऽपि किंचिदवच्छेदेन गुणत्वकरणादापवादिको गौणदोषाभावात्मको गुण एव ज्ञेय इत्यार्थिकोऽन्वयः । आदिपदाभ्यां क्रमाद्रामठसमकक्षजीरकवृन्ताकयोर्ग्रहः । **नीलमिति** । सुगौराङ्ग्यां सुष्ठु अवयवसौन्दर्यशालि शोभनं सौभाग्यादिशालि वा गौरं पीतवर्णं अङ्गं शरीरं यस्याः सा तथा तस्यां इत्यर्थः । नीलं कृष्णवर्णं चेलं वसनं, तद्धि तस्यां न किंचिद्गुणाधिक्यं विधत्ते किंतु तदवच्छेदेन केवलं स्वकार्ष्ण्यदोषमेव यथापसारयति तथेह किंचिदवच्छेदेन दोषत्वमात्रनिराकरणादापवादिक इत्यादि प्राग्वदेव । एवं गुणाद्यौपायिकत्वेनात्याज्यस्योदाहरणे ताम्बूलेत्यादावग्रेऽपि बोध्यम् । तत्राप्यादिशब्दाभ्यां यथासंख्यं नयनाञ्जने बोध्ये । तद्यथा ताम्बूले तावत्सुधाशब्दितस्य चूर्णस्य जिह्वास्फोटजनकत्वादिना दुष्टस्यापि खदिरादिसंयोगेनाधरादौ रागाधिक्य-

गुणा यद्यपि धर्माद्याः षडप्येतेष्वथाप्युभौ ।
मुख्यावुक्तौ च वक्ष्यामः प्रोच्यन्तेऽत्रैव येऽपरे ॥ ८ ॥

रूपगुणौपयिकत्वेनात्याज्यत्वं तद्वन्मलिनत्वादिना दुष्टस्यापि कज्जलस्य नयने कार्ष्ण्याधिक्यलक्षणगुणोपयोगित्वादहेयत्वमेवेति । 'सुरभिः शल्लकी मातृभित्सरोगोषु योषिति । चम्पके च वसन्ते च तथा जातीफले पुमान् । स्वर्णे गन्धोत्पले क्लीबं सुगन्धिकान्तयोस्त्रिषु' इति मेदिन्याः प्रकृते कान्तपदवाच्यरम्यत्वाधायकं सुरभीति क्लीबमतमुक्तपूर्वार्धगतसुरभिपदस्वारस्यादेव बोध्यम् । अपिः समुच्चये । एवं चेदं क्रमेण पूर्वोक्तगुणत्वकरणादिलक्षणापवादिकगुणत्रयोदाहरणं ज्ञेयमित्याशयः । तथाचोक्तं सोदाहरणं चन्द्रालोके—'दोषमापतितं स्वान्ते प्रसरन्तं विशृङ्खलम् । निवारयति यस्त्रेधा दोषाङ्कुशमुशन्ति तम् । दोषे गुणत्वं तनुते दोषत्वं वा निरस्यति । भवन्तमथवा दोषं नयत्यत्याज्यतामसौ । मुखं चन्द्रश्रियं धत्ते श्वेतश्मश्रुकराङ्कुरैः । अत्र हास्यरसोद्देशे ग्राम्यत्वं गुणतां गतम् । तव दुग्धाब्धिसंभूतेः कथं जाता कलङ्किता । कवीनां समयाद्विद्याविरुद्धो दोषतां गतः' । ( चन्द्रस्य दुग्धसमुद्रसंभवस्य कविसमयेन दोषाभावत्वमात्रं न गुणत्वं रसादिपरिपोषकत्वाभावादित्येतट्टीका राकागमाख्या ) । ( अत्र कथं जाता कलङ्कितेत्याक्षेपस्य कलङ्किताहेतोः स्मृत्यादिप्रसिद्धत्वेन विद्याविरुद्धत्वेऽपि कविसमये चन्द्रे दुग्धाब्धिसंभवस्य दोषाभावत्वमात्रस्येष्टत्वेन कलङ्किताख्यस्य दोषस्य यावद्दोषाभावशालिन्यनौचित्यादुक्तविद्याविरुद्धोऽप्ययमदोष एवेति ) । 'दधार गौरी हृदये देवं हिमकराङ्कितम् । अत्र श्लेषोदयान्नैव त्याज्यं हीति निरर्थकम्' इति । काव्यप्रकाशेऽपि 'वक्त्राद्यौचित्यवशाद्दोषोऽपि गुणः क्वचित्क्वचिन्नोभौ' इति । नचैवं त्वयाप्यत्र काव्योदाहरणत्रयमेव वक्तव्यं तद्विहाय पूतीत्यादिलौकिकमेव तत्किमित्युक्तमिति वक्तव्यम् । तस्याग्रे तत्तदपवादस्थले भूरितरं वक्ष्यमाणत्वात्प्रकृते तु लौकिकोदाहरणस्यैव व्याप्तिघटकत्वेनोपयुक्तत्वाच्च । ननु मम्मटभट्टैः कोटिद्वयमेवापवादस्योक्तं भवता तु जयदेवानुसारतस्त्रयमपि तत्कोटीनामुपन्यस्तमिति कथं न तेन सह विरोधो गौरवं चेति चेत्तत्कारिकायामादिपदध्वनिततृतीयकोटेरपि सत्त्वात्फलमुखगौरवस्यादूषकत्वाच्च न किंचिदेतदिति संक्षेपः ॥७॥ ननु प्रथमरत्ने त्वया तत्र निर्दोषेत्यादिना काव्यसामान्यलक्षणमभिधाय स्वविवक्षितगुणनिरूपणं 'धर्मो रसाः' इत्यादिना यत्कृतं तत्र रसाख्यगुणस्तु चतुर्थरत्ने वर्णित एव । तेन तत्रैव ते धर्माख्यया संमता माधुर्यादयोऽन्ये च किमिति नोपपादिता इत्याशङ्क्य समाधत्ते—**गुणा यद्यपीति** । यद्यपि निरुक्तवचनाद्धर्माद्याः षडपि मम गुणत्वेनैव संमता इति रसाख्यतन्निरूपणप्रकरणे ते सर्वेऽपि निरूपणीया इति युक्तमेव तथापि एतेषु धर्मादिगुणेषु मध्ये उभौ रसालंकारौ रसालंकारमुख्यत्वभेदेनेति प्रथमरत्नोक्त मुख्यौ प्रधानीभूताविति हेतोः प्रागुक्तौ रसस्य तत्रापि मुख्यतरत्वेन चतुर्थरत्ने किंचित्प्रपञ्चनादलंकारस्य त्वत्यास्त्वेन प्रथमरत्न एव मध्यमादिकाव्योदाहरणमिषेण सूत्रितत्वात्संक्षेपेण कथितौ

**तत्रापि धर्मसंज्ञस्य गुणस्य गुणता त्वियम् ।**
**रसस्योत्कर्षहेतुत्वे सति तद्धर्मताथवा ॥ ९ ॥**
**तदेकस्थितितोऽयोगव्यवच्छेदोपकारिता ।**
**इति त्रिधा बुधैर्ज्ञेया शूरतादिरिवात्मनः ॥ १० ॥**
**वीरे रौद्रे च बीभत्से वर्णः श्रुतिकटुर्गुणः ।**
**किं ते वक्त्रेक्षया बाले धिक्त्वां कामार्द्रचर्म च ॥ ११ ॥**

मयेति शेषः । तथा उभौ मुख्यौ कर्मभूतौ तौ वक्ष्यामः द्वादशरत्नेऽष्टमनवमयोश्च कथयिष्याम इत्यन्वयः। वयमित्यध्याहारः। एवं तदवशिष्टानां का गतिरित्यत्राह— **प्रोच्यन्त इति** । अपरे इतरे अमुख्याः ये धर्मलक्षणरीतिवृत्तिसंज्ञास्ते चत्वारोऽप्यत्रैव प्रोच्यन्तेऽस्मिन्नेव रत्ने कथ्यन्त इति संबन्धः ॥ ८ ॥ भवत्वेवमथापि किं धर्माख्यस्य तस्य तथा तत्र निर्दोषेत्यादिकाव्यलक्षणे विवक्षितस्य यावद्दोषाभावरूपस्यापि तस्यात्र गुणत्वावच्छेदेनेष्टस्य साधारणं किं लक्षणमित्यतस्तत्प्रपञ्चयति—**तत्रापीति** युग्मेन । का सेत्यत्राह—**रसस्येति** । सत्यन्तेन रसत्वेऽतिव्याप्तिवारणेऽपि व्यभिचारिभावेषु तत्त्वमित्यस्वरसादाह—**अथवेति** ॥ ९ ॥ **तदेकेति** । सत्यन्तमनुकृष्य योज्यम् । **अयोगेति** । पूर्वत्र गौरवादेवेदम् । अयोगव्यवच्छेदे ह्यविनाभावः रसं विना स्वराहित्यं तेन या उपकारिता रसपोषकतेत्यर्थः । तदुक्तं प्रदीपे । एवंच रसस्योत्कर्षहेतुत्वे सति रसधर्मत्वम्, तथात्वे सति रसाव्यभिचारिस्थितित्वं, अयोगव्यवच्छेदेन रसोपकारकत्वं चेति लक्षणत्रयं गुणानां द्रष्टव्यमिति । उपसंहरति—**इतीति**। तत्र दृष्टान्तं स्पष्टयति—**शूरेति**। आत्मनः जीवस्येत्यर्थः । अलंकारेषु अयोगव्यवच्छेदाभावान्नातिव्याप्तिरितियावत् । आदिना धीरत्वविचारिते ॥ १० ॥ तत्र यद्यपि दोषरत्ने 'तत्राद्य एकधा वीर'इत्यादिना वर्णदोषापवादः सूचित एव, तथापि किमत्र श्रुतिकटोर्वर्णस्य गुणत्वकरणादित्याशङ्कापवादेषु द्वितीयकोटिरूपदोषत्वाभावमात्रमुत तदुक्ताद्यन्त्यकोटिलक्षणगुणत्वाद्यपीति शङ्काशान्त्यर्थं गुणत्वादेव तत्र यस्येति स्फुटयति—**वीर इति** । रस इति शेषः । त्रिष्वपि क्रमेण तमुदाहरति— **किं त इति** । हे बाले मुग्धे, ते तव वक्त्रेक्षया मुखवीक्षया किं, न किमप्यस्मदिष्टमित्यन्वयः । अत्र त्यागवीरे क्त्रकारस्य रेफघटितक्षयुद्वयसंयुक्तत्वेन श्रुतिकटोरपि तत्र मधुररसेषु ये विशेषतो वर्जनीया अनुपदं वक्ष्यन्ते त एवौजस्विन्यनुकूला ये चानुकूलास्ते प्रतिकूला इत्यादि रसगन्नाधरोक्तेरनुकूलत्वेन रसपोषकत्वाद्गुण एवेति भावः । एवं वीरे श्रुतिकट्वपवादमुदाहृत्य रौद्रबीभत्सयोरपि तमुदाहरति—**धिगित्यादि** चरमचरणेन । रे काम, त्वां धिगस्त्विति संबन्धः । इह क्रोधस्थायिभावात्मा रौद्रः स्पष्ट एव । तेन क्त्वामिति क्षयुद्वयसंयुक्तवकारस्य श्रुतिकाटवेऽपि गुणत्वमेवेत्याशयः । एवं आर्द्रचर्म च धिगेव । आर्द्रं क्लिन्नं मूत्रादिदिग्धं एतादृशं यच्चर्म योनिसंज्ञकं प्रसिद्धमेव तदपि धिगेवेति योजना । इहार्द्रचर्मपदेनैव बीभत्सस्य व्यक्तत्वादार्द्रेति रेफद्वयघटितदका-

**अर्थौचित्यरसत्वानुकृतिप्रकरणादिनः ।**
**वक्त्राकर्णयतोः शाब्दिकत्वस्याप्युपलक्षणम् ॥ १२ ॥**
**गुणोऽप्रयुक्तमप्यत्र यमकाद्यनुकारयोः ।**
**दैवतो दैवतो मेऽग्निः पद्मः फुल्ल इतीरितम् ॥ १३ ॥**

---

रस्य तथात्वेऽपि तत्वमेवेति हृदयम् । इयं हि कांचिद्गुणलुब्धां तरुणीं प्रति कस्यचिद्विरक्तस्योक्तिस्ततः कामं प्रत्यपीति ॥ ११ ॥ नन्वनुकरणादावपि श्रुतिकटोरदोषत्वदर्शनात्कथमयं वीरादिरसावच्छेदनियम इति चेदिदं तेषामप्युपलक्षणमित्याह—**अर्थौचितीति** । अर्थौचितिश्च अरसत्वं च अनुकृतिश्च प्रकरणादि चेत्येतेषां समाहारस्तथा तस्येत्यर्थः । अर्थौचितिरर्थयोग्यता । यथा—'आलोलामलकावलीं विलुलितां बिभ्रच्चलत्कुण्डलं किंचिन्मृष्टविशेषकं तनुतरैः स्वेदाम्भसां जालकैः । तन्व्या यत्सुरतान्ततान्तनयनं वक्त्रं रतिव्यत्यये तत्त्वां पातु चिराय किं हरिहरब्रह्मादिभिर्दैवतैः' इति । अत्र कामशास्त्ररहस्यव्यञ्जकं शृङ्गाररसमात्रप्रचुरं काव्यं कर्तुरमरुकनृपाख्यस्य सकलकविचक्रवर्तिचूडामणेर्विनेयविषयकरतिपारवश्येन श्रुतिकटोः त्त्वकारस्य प्रयोगाकरणानवधानलक्षणस्यार्थस्य योग्यत्वात्तत्रोक्तरीत्या भावध्वनित्वेन तदङ्गीभूतशृङ्गारप्रचुरत्वेन च मधुररसप्रधानत्वेऽपि नासौ दोषः । एवं अरसत्वं रसहीनत्वं चित्रकाव्यत्वमिति यावत् । यथा–सगरुद्धनदुर्गदुर्ग्रहान्कटुकीटान् दशतः सतः क्वचित् । ननुदेतनुकण्डुपण्डितः पटुचञ्चूपुटकोटिकुट्टनैः' इति नैषधीये ट्टकारः । अनुकृतिरनुकरणम् । यथा काव्यप्रदीपे—'मृगचक्षुषमद्राक्षमित्यादिकथयत्ययम्' इत्यादि । अत्र द्राकारः। प्रकरणं प्रसिद्धमेव । यथा माघे—'रेवतीवदनोच्छिष्टपरिपूतपुटे दृशौ' इत्यादौ प्रकरणप्रतिपाद्ये वीररसे तदङ्गीभूते शृङ्गारे च्छिकारः । आदिशब्देन देशकालादिः । यथा हनूमन्नाटके—'कपोले जानक्याः करिकलभदन्तद्युतिमुषि स्मरस्मेरं गण्डोड्डमरपुलकं वक्त्रकमलम् । मुहुः पश्यन् शृण्वन्रजनिचरसेनाकलकलं जटाजूटग्रन्थिं रचयति रघूणां परिवृढः' इति । इदं हि जनकराङ्गणे धनुर्भङ्गकालिकं श्रीरामवर्णनम् । तत्र तद्देशकालयोर्वीररसानुगुणत्वेन ड्डकारः, पूर्वार्धगतशृङ्गारोऽपि गुणः । **वक्त्रिति** । वक्ता च आकर्णयंश्चेति तथा तयोर्वक्तृश्रोत्रोरित्यर्थः । शाब्दिकत्वस्य वैयाकरणत्वस्यापीत्यर्थः । इदं वीररसाद्यवच्छेदेन श्रुतिकटोरपवादकथनमुपलक्षणं भवतीत्यध्याहृत्यान्वयः । तौ च क्रमेणोक्तौ प्रदीपे यथा—'दीधीङ्वेवीङ्समः कश्चिद्गुणवृद्ध्योरभाजनम् । क्विप्प्रत्ययनिभः कश्चिद्यत्र संनिहितेन ते' । अत्र दुर्जनोपलक्षिततयावत्संसारनिन्दाप्रस्तावेन शान्तरसोऽपि वक्तुः शाब्दिकत्वेन द्ध्योकारादिः । एवं 'यदा त्वामहमद्राक्षं पदविद्याविशारदम् । उपाध्यायं तदास्मार्षं समस्प्राक्षं च संमदम्' इति । इहापि वैयाकरणदर्शनेन सर्वज्ञस्य सद्गुरोः स्मरणात्ततो ब्रह्मानन्दाच्च शान्तरसेऽपि स्प्राकारस्तथेति । विस्तरस्तु तत्रैव ज्ञेयः ॥ १२ ॥ एवं वर्णदोषापवादमुक्त्वाथ पददोषेष्वपि केषुचित्तं वदन्नप्रयुक्तमपवदति—**गुण इति** । अत्र

**निहतार्थमपि ज्ञानां श्लेषादिषु गुणो मतः ।**
**गोपतिर्गोपतिर्मेऽस्ति गोपतिर्गोपतिः क तत् ॥ १४ ॥**

---

काव्ये—**यमकादीति** । आदिनानुप्रासादिः । अनुकारः परोक्तानुवादः । क्रमेण तमुदाहरति—**दैवत इति** । अग्निः यज्ञनारायणः । 'एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः' इत्यादिश्रुतेः । मे मम दैवतः । 'दैवतानि पुंसि वा' इत्यमरादैवतेत्यर्थः । दैवतः दैवं दिष्टमित्यपि तदुक्तेः पूर्वपुण्यपरिपाकादिति यावत् । अस्तीत्यध्याहृत्यान्वयः । **पद्म इति** । इदं हि प्रातःकाले सखीवचनश्रवणोत्तरं कुञ्जे कुसुमशय्यायां राधामालिङ्ग्य सुखेन शयानं किमसौ वक्तीति पृच्छन्तं भगवतं प्रति तद्वचः । तथाच 'वा पुंसि पद्मं' इत्यमरात्सख्या तु रभसादेव द्रुतव्युत्थापनार्थं पुंलिङ्गप्रयोगः कृतो राधिकया त्वनुकारादेवेति बोध्यम् । एवंच रभसादिरपि तन्निमित्तमिति ध्वनितम् । **इतीति** । उक्तप्रकारेण ईरितं कथितम् । तत्सख्येति शेषः।तथाचोक्तं प्रदीपे–'वस्तुतस्तु तादृशकविसमयविलङ्घनप्रयोजनानुसंधानव्यग्रतया मुख्यार्थविच्छित्तिर्दूषकताबीजम् । अतएवानुकरणे दोषत्वाभावः । यमकादावप्यदोषत्वम् । अन्यत्राप्रयुज्यमानस्यापि तदर्थं कविभिः प्रयोगस्य दर्शनेन व्यग्रताभावादितीति । यथावा भामिनीविलासे—'वदनारविन्दसौरभलोभादिन्दिन्दिरेषु निपतत्सु । मय्यधरार्थिनि मुदृशो दृशो जयन्त्यतिरुषा परुषाः' इति । अत्रेन्दिन्दिरपदं भ्रमरवाचित्वेन कोशादौ प्रसिद्धमपि सर्वत्राप्रसिद्धेरप्रयुक्तमप्यनुप्रासाद्गुणावहमेव ज्ञेयम् । 'भ्रमरश्चञ्चरीकः स्याद्रोलम्बो मधुसूदनः । इन्दिन्दिरः पुष्पकीटो मधुद्रो मधुकेशटः' इति त्रिकाण्डशेषः। उपलक्षणमिदं श्लेषादेरपीति दिक् ॥ १३ ॥ तथा निहतार्थमप्यपवदति—**निहतार्थमपीति** । ज्ञानां विबुधानाम् । **श्लेषेति** । आदिना यमकादिः । तमुदाहरति—**गोपतिरिति** । मे मम गोपतिः पृथ्वीपतिः गोपतिः पशुपतिः श्रीशंकर एवास्ति तत्तस्मात्कारणाद्गोपतिः वज्रपतिः तथा गोपतिः स्वर्गपतिरपि इन्द्रः क । नैव गण्य इत्यन्वयः । पक्षे गोपतिः किरणपतिः सूर्य एव मे गोपतिश्चक्षुरुपलक्षितसकलेन्द्रियनियन्ता 'सूर्य आत्मा जगतस्तस्थुषश्च' इति श्रुतेरस्ति तत्तदा गोपतिः वाक्पतिः तथा गोपतिः सामान्यतः कश्चिद्दिक्पालोऽपि केति योजना । इदमप्युक्तं प्रदीप एव निहतार्थं प्रकृत्य । दूषकताबीजं प्रसिद्धस्यैव द्रागुपस्थित्या विवक्षितस्य विलम्बोपस्थितिः । अतो यमकादावदोषत्वम् । तत्रोपस्थितिविलम्बस्यापि सहृदयसंमतत्वेनाविलम्बानुद्देश्यत्वादिति ।'गौः स्वर्गपशुवाग्वज्रदिङ्नेत्रघृणिभूजले' इत्यमरः। अत्र क्रमेण त्यागवीरपाण्डित्यवीररसाविष्टौ वक्ताराविति ध्येयम् । यथावा मदीयाद्वैतामृतमञ्जर्याम्—'सालंकृतिरपि मधुरध्वनियुक्तापि प्रगल्भवृत्तापि । जनयति किं मुमुक्षोर्भियमिह गौर्विशदश्रृङ्गारे' इति ॥ १४ ॥ अथ निरर्थकं मतान्तरेणापव-

निरर्थकमपि श्लेषे चन्द्रालोकमते गुणः।
पुष्करे भाति राधेऽद्य प्राज्यं तुहिनदीधितिः ॥ १५ ॥
व्रीडादित्रिविधाश्लीलं कामशास्त्रस्थितौ क्रमात्।
गुणः स्याच्छान्त्युपोद्घाते भव्यमङ्गलसूचने ॥ १६ ॥
त्वं मृग्यहं शशो योनौ साधने च रसाङ्गुलैः।
मूत्रालये रता हन्त नाशं नैष्यन्ति तेऽपि किम् ॥ १७ ॥

दति—**निरर्थकमपीति**। तमुदाहरति—**पुष्कर इति**। इदं हि मानवतीं राधां प्रति सखीवाक्यम्। हे राधे, अद्य पुष्करे 'बिसप्रसूनराजीवपुष्कराम्भोरुहाणि च' इत्यमरात्कमल इत्यर्थः। पक्षे 'व्योम पुष्करम्' इतिच तद्वचनादाकाश इति यावत्। दीधितिः कान्तिः विकासशोभेति विवक्षितम्। प्राज्यं बहु न भाति सूर्यास्तसमयत्वेन तस्य मुकुलायमानत्वान्नातुलं विलसतीति संबन्धः। अत्र तुहीति निपातद्वयं पादपूरणमात्रप्रयोजनत्वेन निरर्थकमपि तुहिनदीधितिरित्येकपदेन सूर्यास्तसूचनवच्चन्द्रोदयसूचनस्यापि श्लेषेण लाभाद्गुण एवेत भावः। तदुक्तं चन्द्रालोके—'दधार हृदये गौरी देवं हिमकराङ्कितम्। अत्र श्लेषोदयात्रैव त्याज्यं हीति निरर्थकम्' इति। सरस्वतीकण्ठाभरणे त्वेतद्भङ्ग्यन्तरेणोक्तम् —'यत्पादपूरणाद्यर्थमनर्थकमिति स्मृतम्। गुणत्वमनुमन्यन्ते तस्यापि यमकादिषु'। यथा—'योषितामतितरां नखलूनं गात्रमुज्ज्वलतया न खलूनम्'। 'बभौ मुखेनाप्रतिमेन काचन श्रियाधिका तां प्रति मेनका च न'। अत्र खलुशब्दस्य चशब्दस्य पादपूरणमात्रेऽपि प्रयोजने यमकत्वाद्गुणत्वमिति ॥ १५ ॥ एवमश्लीलत्रयमप्यपवदति—**व्रीडादीति**। आदिपदेन जुगुप्सादिः। क्रमात्कामशास्त्रस्थितौ तथा शान्त्युपोद्घाते भाव्यमङ्गलसूचने च गुणः स्यादित्यन्वयः। उक्तंहि प्रदीपकृतात्र दूषकताबीजं प्रकृत्य। अथवा तादृशार्थोपस्थित्या श्रोतुर्वैमुख्यं तद्बीजम्। अतः शमकथायां दोषत्वाभावः। तादृशोपस्थितेः शमपोषकत्वात्। भाव्यमङ्गलसूचने कामशास्त्रस्थितौ च न दोषत्वं वैमुख्याभावादिति ॥ १६ ॥ त्रिविधमपि क्रमेण तमुदाहरति—**त्वमिति**। हे स्वहरिणनयने, त्वं योनौ रसाङ्गुलैः षडङ्गुलैः। रसपदं हि मधुरादीनां लेह्यादीनां वा रसनां षट्संख्याकत्वेन तन्मात्रलक्षकं तेन गुह्ये षडङ्गुलमात्रपरिमाणत्वादित्यर्थः। मृगीएतत्संज्ञकस्त्रीजातिविशेषावच्छिन्ना भवसीति योजना, चेति तथा अहमपि साधने मेढ्रे रसाङ्गुलैः शशः एतन्नामकपुंजातिविशेषावच्छिन्नोऽस्मीति प्राग्वदेवाध्याहृत्य संबन्धः। तस्माद्दैववशादावयोः समतया परमोत्तमं सुरतं संपद्यत इति रहस्यम्। तदुक्तमनङ्गरङ्गे—'आरोहैर्मदनाङ्कुशस्य पुरुषा ज्ञेयाः सदाथ स्त्रियोऽयोनीनां परिणाहकै रसनवादित्याङ्गुलीकैः क्रमात्। जात्या ते तु नराः शशाश्च वृषभा अश्वास्तथैवाङ्गना मृग्योऽन्यो द्विरदाङ्गनाश्च कथिताः प्राक्सूरिभिः सर्वतः'।'हरिणीशशयोर्वृषाश्वयोः समयोगः करिणीतुरंगयोः। भवतीह परस्परं द्वयोर्नितरां प्रीतिरनङ्गसङ्गरे' इति। इदं हि व्रीडाख्याश्लीलस्य

ब्रह्माण्डभगिनीशंभुलिङ्गादिकपदेषु तु।
नासभ्यार्थोऽत्र सभ्यानां तयोपस्थितिरेव नो ॥ १८ ॥

कामशास्त्रस्थितौ गुणत्वोदाहरणम्। यथावा नैषधीयचरितेऽष्टादशसर्गे—'बहुमानि विधिनापि तावकं नाभिमूरुयुगमन्तराङ्गकम्। स व्यधादधिकवर्णकैरिदं काञ्चनैर्य-दिति तां पुराहस:' इति। अयमर्थः। इदं हि सुरतावसरे दमयन्तीं प्रति नलः प्राहेति कविवचः। अयि भैमि, तावकं त्वत्संबन्धि नाभिं ऊरुयुगं च अन्तरा नाभ्यूरुयुग्मयोर्मध्य इत्यर्थः। अङ्गकं गुह्यदेशतया अवाच्यत्वमात्रादेव कुत्सित-त्वार्थे कप्रत्ययः।जघनस्थलमितियावत्। विधिनापि ब्रह्मणापि बहु भूरितरं अमानि अपूजीत्यन्वयः। तत्र हेतुः। यद्यस्माद्धेतोः सः विधिः इदं प्रत्यक्षं निरुक्तभव-दङ्गम्। अधिकेति अतुलदीप्तपीतवर्णैरित्यर्थः। एतादृशैः काञ्चनैः कनकैः व्यधा-न्निर्मितवानिति संबन्धः। इति उक्तप्रकारेण पुरा आभ्यन्तरसंभोगारम्भात्पूर्वं सः नलः तां दमयन्तीं आहेति योजना। अत्र शब्दस्यातथात्वेऽप्यर्थस्य व्रीडाकारित्वेन अश्लीलत्वेऽपि 'अनुरागपेशलं ब्रूयादुभयार्थमीदृशं वाक्यम्। शमय सुमुखि मम पीडां कलय निमित्तं त्वमेतस्याः' इति रतिरहस्यवचनात्कामशास्त्रस्थितित्वेन गुण-त्वमेवेति दिक्। अथ जुगुप्सोदाहरणमाह—मूत्रेति। इदं हि मुमुक्षुकामवास-नोपशमनार्थं सद्गुरुवाक्यम्। हन्त इति खेदे। कामुकाः सर्वेऽपि मूत्रालये मूत्रपात्रे भागे रताः संसक्ताः सर्वदा परमनिन्द्ययोनिस्थाने रमन्त इत्यर्थः। तस्माद्धिक्का-मुकत्वमित्याशयः। इह हन्तपदान्नाशमित्यादिवाक्यशेषाच्च शान्त्युपोद्घातत्वेन गु-णत्वं स्फुटमेव। यथावा काव्यप्रदीपे—'उत्तानोच्छूनमण्डूकपाटितोदरसंनिभे। क्ले-दिनि स्त्रीव्रणे सक्तिरकामे कस्य जायते' इति। 'मुखं श्लेष्मागारं तदपि च शशाङ्केन तुलितं स्तनौ मांसग्रन्थी कनककलशाभ्यामुपमितौ। स्रवन्मूत्रक्लिन्नं करिवरकट-स्पर्धिजघनं स्त्रियो निन्द्यं रूपं कविवरवचोभिर्बहु कृतम्' इति भर्तृहरिरपि। एव-ममङ्गलमपि तदुदाहरति—नाशमिति। तेऽपि प्रागुक्तकामुका अपि नाशं मृत्युं न एष्यन्ति किम्। अपितु एष्यन्त्येवेत्यन्वयः। अत्र नाशपदस्य निरुक्तरीत्या भाव्यमङ्गलसूचकत्वाद्गुणत्वम्। यथावा काव्यप्रकाशे—'निर्वाणवैरदहनाः प्रशमा-दरीणां नन्दन्तु पाण्डुतनयाः सह माधवेन। रक्तप्रसाधितभुवः क्षतविग्रहाश्च स्वस्था भवन्तु कुरुराजसुताः सभृत्याः' इति। इह प्रशमादिपदानां तथात्वेऽपि भाव्य-मङ्गलसूचकत्वाद्गुणत्वं बोध्यम् ॥ १७ ॥ नन्वेवं यद्यपि कामशास्त्रस्थित्यादिना व्रीडाद्यश्लीलत्रयस्य गुणत्वं युक्तमेव तथापि भगवदादिशब्देषु का गतिरिति चेन्न। तत्र प्राचीनचिरंतनमहाजनव्यवहारवशात्सहृदयधुरीणान्तानां सर्वेषां जनानां व्री-डाद्यात्मकाश्लीलार्थोपस्थितेरेवाभावात् शब्दवृत्तेस्तूपस्थितिमात्रतन्त्रत्वव्यवस्थाप-नात्वेत्याह—ब्रह्माण्डेति। तुशब्दः प्रोक्तशङ्कोपशमार्थः। ब्रह्माण्डेति च भगि-नीति च शंभुलिङ्गेति चेति तथा। आदिना भगवत्यादिपदानां संग्रहः। तानि च तानि पदानि चेति पुनः समासः। असभ्येति। असभ्यार्थो नैव भवतीति

**गुणः संदिग्धमप्यस्ति संदेहोद्देश्यता यदि।**
**वाच्यप्रकरणादिभ्यां निर्णयोऽवगतोऽथवा ॥ १९ ॥**
**सुदृशः कति वा सन्ति कान्तसिद्धान्तसद्गुणाः।**
**अलंकारालये देहे व्यामोहेन ममाधुना ॥ २० ॥**

---

संबन्धः।ननु कुत एवं नियम्यत इत्यत आह—**अत्रेति**। यतः हेतोः अत्र ब्रह्माण्डादिशब्देषु सभ्यानां पण्डितानाम्।उपलक्षणमिदमन्येषामपि। तथा अश्लीलार्थकत्वेन उपस्थितिरेव शाब्दप्रमितिरेव नो नैव भवति तस्मादिति पूर्वत्र योज्यम्। तदुक्तं प्रदीपे 'शिवलिङ्गभगिनीब्रह्माण्डादिशब्देषु असभ्यार्थानुपस्थितेः' इति ॥ १८ ॥ एवं संदिग्धमप्यपवदति—**गुण इति**। यदि संदेहोद्देश्यता संदेहस्यैव यदि प्रतिपाद्यत्वमित्यर्थः। अथवा वाच्येति वाच्यः कथनीयोंऽशः प्रकरणादिप्रसिद्धमेव ताभ्यामिति यावत्। अत्रादिना लिङ्गसंग्रहः। निर्णयः निश्चयः अवगतः ज्ञातश्चेत्संदिग्धमपि पदगुणोऽस्तीत्यन्वयः। तदुक्तं काव्यप्रदीपकृता संदिग्धं प्रकृत्य। अतो यत्र संदेह एवोद्देश्यस्तत्र,यत्र च वाच्यादिमहिम्ना प्रकरणादिवशेन वा निश्चयस्तत्र चादोषत्वमिति ॥ १९॥ तत्र संदेहोद्देश्यस्थलमुदाहरति—**सुदृश इत्यर्धेन**। इदं हि प्रवसत्पतिकायास्तं प्रति वाक्यम्। अयि कान्त, ननु भर्तः। एवं च सर्वगुणसंपन्नत्वेनापि तत्र स्वप्रीतिविषयताकत्वं द्योत्यते—**सिद्धान्तेति**। सिद्धान्तीभूताः शास्त्रादिना विचार्य विनिर्णीताः नत्वापाततः प्रतीयमानकापटिकनम्रत्वादिनाध्यवसिताः एतादृशाः सद्गुणाः सत्याः पतिव्रतायाः ये गुणाः पतिमात्रपरायणत्वादयो धर्माः ते च ते यासां तास्तथेत्यर्थः। एतेन परकीयात्वं व्युदस्तम्। एतादृश्यः साध्व्यः सुदृशः मृगाक्ष्यः कति वा सन्ति। किंतु स्वल्पा एव वर्तन्त इतियावत्। यथाचाहं तु सैवास्मीति श्रीमद्विरहेण कथं प्राणान्धारयिष्यामीत्याकूतम्। तेन च भवद्भिर्नैव प्रवसितव्यमिति व्यज्यते। यद्वा वासन्तिकेत्याद्येकं पदम्। एवंच भो प्राणनाथ, वासन्तिकेति वसन्ते भवः वासन्तिकः एतादृशो योऽन्तः पत्युः प्रवासगमनात्तत्सङ्गनाशः तेन सिद्धः संपन्नः अन्तः मृत्युर्यासां एतादृशः अतएव सद्गुणा इत्यर्थः। ईदृशः सुदृशः कति। विरला एव नतु बहुव इति भावः। एवंच वसन्तकालेऽप्यद्य श्रीमद्भिः प्रवत्स्यते चेन्मन्मरणमेव भावि। नचान्यां मृगेक्षणामुद्वहिष्यामि का मे तावता क्षतिरिति वाच्यम्। सत्यास्तस्याः परमदौर्लभ्यात्। तस्माद्धस्ततताम्बूलत्यागन्यायापातादिदानीं भवद्भिर्नैव प्रवसितव्यमिति तत्त्वम्। अत्र किं प्रथमोऽर्थः श्रेयानुतान्त्य इति संदेहः। नच वाच्यं चरमे सारल्यत्यागात्क्लिष्टकल्पनापातायतिभङ्गाख्यछन्दोदोषाच्च क्वासाविति विरहानुसंधानवैकल्येन तेषां विप्रलम्भपोषकत्वेनाभिलषितत्वाद्वसन्तकालगमनविनिवारणलाभाच्च। नापि तथात्वेऽस्यैवादरणीयतरत्वेनाद्यस्य त्याज्यत्वात्पुनरपि तादवस्थ्यमेवेति शङ्क्यम्। तत्रापि सिद्धान्तपदध्वनितवास्तविकसतीत्वलाभात्सार्वकालिकमपि प्रवसननिषेधनध्वननाच्च। तस्मादुभयत्रापि तुल्यबलत्वेन युक्त एव

**सति मा खिद चित्ते त्वं श्रीरामः समुपागतः ।**
**यदयं वलितो लंकाप्राकारः कीशकोटिभिः ॥ २१ ॥**

संदेहः । तथाच विरहिणीवाक्यत्वेन चातुर्यातिशयसूचकत्वेनार्थयुगस्यापि विवक्षितत्वेन च संदेहस्यैवात्रोद्देश्यत्वात्तन्निर्णयार्थं स्वनाथे किंचित्कालं विचारयति सति तावत्कालमेव तत्संगमाधिक्यलाभसंभवाभिसंधिसत्वाच्च गुण एव स इति दिक् । यथावा 'इह नगरे प्रतिरथ्यं भुजंगवासो निरुद्धसंचारः । शृणु सखि साधनमेकं नकुलप्रतिपालनं श्रेयः' इति । अत्र विदग्धसखीवक्तृकत्वेन भुजंगपदस्य जारवाचकत्वं अनिरुद्धेत्यकारप्रश्लेषणं नेति पदभञ्जनं च नूतनं ग्रामान्तरादागतां स्वसखीं प्रति व्यभिचारपरतामुपदेष्टुं वक्तव्यत्वात्किमिदमिति केनचित्प्रौढेन पृष्टं चेत्तं प्रति तद्गोपनार्थं भुजगेति सर्पपरमकाराप्रश्लेषणं नकुलेत्येकपदं चेति वक्तुमुचितत्वान्नकुलेत्यादिसंदेहोऽप्युद्देश्यतया गुण एवेत्याशयः। एवं वाच्येन निर्णयस्थलमप्युदाहरति—**अलमित्यर्धेनैव** । इदमपि तस्या एव वचः । हे कान्त, अधुना भवत्प्रवासकालेऽद्य कारालये बन्दिगृहरूपे। अतिदुःखद इत्यर्थः । एतादृशे देहे मम व्यामोहेन सकलमहिलोत्तमगुणवत्त्वेन कदाप्यप्रवसत्पतिकत्वाद्धन्यैवाहं रमणीति भ्रमरूपेणाध्यासेनेति यावत् । अल मेव भाव्यमिति भावः । अत्रौदासीन्यरूपेण वाच्यार्थेनैव अलमित्यादिपदभेदस्य निर्णीतत्वादलंकारालय इत्यादिपदैक्यादिना संदेहोऽपि गुण एवेति हृदयम् । यथावा रघुवंशे—'आसीद्वरः कण्टकितप्रकोष्ठः स्विन्नाङ्गुलिः संववृते कुमारी। वृत्तिस्तयोः पाणिसमागमेन समं विभक्तेव मनोभवस्य' इति । अत्र पाणीत्यादितृतीयान्तं सप्तम्यन्तं वा आद्येपि सहार्थकमेव सममित्युत तुल्यार्थकत्वेनोत्तरान्वयीति संदेहोऽपि वधूवरयोस्तुल्यसात्विकभावाविर्भावरूपस्य शृङ्गारचेष्टाविशेषस्य वाच्यत्वेन तृतीयान्तत्वादेरेव निश्चयाद्गुणत्वमेवैतीति ॥ २० ॥ तद्वत्प्रकरणादिनापि निर्णयस्थलमुदाहरति—**सतीति** । इह सतीति किं चित्तविशेषणं सीतासंबोधनं वेति संदेहस्यापि श्रीरामसमुपागमनान्यथापत्तिसिद्धयुद्धकाण्डप्रकरणेन सीतासंबुद्धेरेव निर्णयाद्गुणत्वमेवेति भावः । ननु जानकीं प्रति त्रिजटावाक्यकल्पनेऽस्तु नामैवं, मुमुक्षुं प्रति गुरुवाक्यकल्पने तु—रे शिष्य, त्वं मा खिद खेदं मा कुरु । यतः सति शुद्धे तव चित्ते श्रीरामः परमात्मा समुपागतः साक्षात्कारद्वाराभिव्यक्त इत्यर्थके कथं वा न चित्तविशेषणमित्याशङ्कां शमयन्नादिपदोक्तलिङ्गनिर्णयस्थलमप्युदाहरति—**यदयमिति** । 'मर्कटो वानरः कीशः' इत्यमरः । वलितः वेष्टितः । इदं हि सीतासंबुद्धिनिर्णये हेतुरूपं लिङ्गं विशदमेव । तेनाप्यत्र गुणत्वं स्फुटमेव । यथावा कुवलयानन्दे—'अहो केनेदृशी बुद्धिर्दारुणा तव निर्मिता । श्रूयते त्रिगुणा बुद्धिर्नतु दारुमयी क्वचित्' इति । इह के उदके इति संदेहः । स च वक्रोक्तिसिद्धेन यूनोः संवादप्रकरणेन तृतीयान्तत्वनिर्णयाद्गुण एवेति संक्षेपः॥२१॥

**गुणत्वमप्रतीतेऽपि तत्तज्ज्ञो बोध्यते यदि ।**
**राम ते धर्ममेघोऽस्तु शेषः स्फोटरहस्यवित् ॥ २२ ॥**
**विदूषकादिको वक्ताधमो ग्राम्यं गुणस्तदा ।**
**रे सूत्रधार किं पापं कृतं जल्पसि भूरि यत् ॥ २३ ॥**

---

एवमप्रतीतमप्यपवदति—**गुणत्वमिति** । यदि तत् अप्रतीतं 'अप्रतीतं भवेच्छास्त्रमात्रसिद्धं गताशयम्' इति प्रागुक्तत्वाच्छास्त्रैकसिद्धं शब्दादीत्यर्थः । वेत्यथवा तज्ज्ञः । निरुक्तलक्षणाप्रतीताख्यशब्दादिज्ञ इत्यर्थः । उच्यते बोध्यते ज्ञाप्यते चेदप्रतीते एतन्नाम्नि दोषेऽपि गुणत्वं स्यादित्यन्वयः । तदुक्तं प्रदीपे तत्प्रकरणे । दूषकताबीजं तच्छास्त्रानभिज्ञस्यार्थानुपस्थितिः । अतएव यत्र तच्छास्त्राभिज्ञ एव प्रतिपाद्यः स्वयमेव वा परामर्शस्तत्र न दोषत्वं प्रत्युत व्युत्पत्तिसूचकतया गुणत्वमिति । स्वयमेव वेत्यस्यायमर्थः । केवलमप्रतीतस्यैव वा परामर्श इति । तदुदाहरति—**रामेति** । इयं हि श्रीरामं प्रति ब्रह्मविद्योपदेशकालिकी श्रीवसिष्ठोक्तिः । हे राम, ते तुभ्यम् । **धर्मेति** । निर्विकल्पसमाधिं प्रकृत्य 'धर्ममेघमिमं प्राहुर्मुनयः पारदर्शिनः । वर्षत्येष यतो धर्मामृतधाराः सहस्रशः' इति श्रीमद्विद्यारण्यगुरुचरणवचनादसंप्रज्ञातसमाधिरित्यर्थः । अस्तु भवत्विति यावत् । इदं हि प्रथमोदाहरणम् । एवं द्वितीयस्यापि तदाह—**शेष इत्यादिशेषेण** । शेषः भगवान् पतञ्जलिः । **स्फोटेति** । स्फोटो हि वैयाकरणसंमतः शब्दापरनामा कश्चिन्नित्यः पदार्थः । उक्तंच वैयाकरणभूषणसारकारेण स्फोटवादे । यद्यपि वर्णस्फोटः पदस्फोटो वाक्यस्फोटोऽखण्डपदवाक्यस्फोटौ वर्णपदवाक्यभेदेन त्रयो जातिस्फोटा इत्यष्टौ पक्षाः सिद्धान्तसिद्धा इति । तस्य यद्रहस्यं तत्त्वं सर्वस्य वा चेतनावत्त्वात् । अथवा सर्वं चेतनावदित्यादिमहाभाष्यात्सर्वद्वैतस्य चिदेकावच्छिन्नत्वात्तन्मात्रस्वरूपं सर्वबाधावधिभूतं वस्त्वित्यर्थः । तद्वेत्तीति तथा भगवान्पतञ्जलिरेव सकलशब्दब्रह्मतत्त्वज्ञ इति यावत् । अतएव स्वार्यापञ्चाशील्यां तदुक्तिः—'सर्वविकल्पविहीनः शुद्धो बुद्धोऽजरोऽमरः शान्तः । अमलः सकृद्विभातश्चेतन आत्मा खवद्व्यापी' इत्युपक्रम्य 'रज्ज्वां नास्ति भुजंगःसर्पभयं भवति हेतुना केन । तद्वद्द्वैतविकल्पभ्रान्तिरविद्या न सत्येयम्' इति । तस्मात्त राम, त्वया शब्दपाण्डित्यपरेण भाव्यं किंतूक्तसमाधिरेव विधेय इति पूर्वेण योजनयाशयः । अतएव तेन योगशास्त्रमपि प्रणीतमिति सुप्रसिद्धमेव । अत्रोभयत्रापि क्रमाद्धर्ममेघस्फोटपदार्थयोः शास्त्रमात्रसिद्धत्वेनाप्रतीतत्वेऽपि पूर्वत्र तस्यैवोत्तरत्र च तज्ज्ञस्य शेषस्य प्रतिपाद्यत्वाद्गुणत्वमिति दिक् । यथावा मदीये श्रीकृष्णलीलामृते—'पृथुकमित्रमवेक्ष्य नु रागिणं विकसनं बिसिनी तनुते मुखे । तमवधार्य पुनः परपूरुषं कुमुदिनी शुचिरित्युदितोन्मनी' इति । इहोन्मन्यास्तथात्वेपि श्लेषादिना तज्ज्ञादिबोध्यत्वाद्गुणत्वम् ॥ २२ ॥ एवं ग्राम्यमपवदति—**विदूषकादिक इति** । 'विदूषकश्चाटुबटौ परनिन्दाकरेपि च' इति विश्वात् 'विदूषकोऽन्यनिन्दके । क्रीडनी-

**प्रहेलिकादौ मत्तोक्त्यादौ च क्लिष्टं गुणो भवेत् ।**
**कामुक्यपाङ्गरञ्जकं किं रेवतीदं पिबेद्दवत् ॥ २४ ॥**

[विदू]षकपात्रे च' इति हैमाच्च काव्ये श्रव्ये तावत्परनिन्दकः शिशुपालादिरेव विदूषकः । दृ[श्]व्ये नाटकादौ तु विनोदपात्रीभूतः कश्चन विकृतवेषभाववाङ्बचनपटुर्बटुरेव स [इ]ति यावत् । आदिना प्रहसनादियोग्यः पाषण्डतापसादिः एतादृशः अधमः नीचः यदि वक्ता तदा ग्राम्यं देशभाषादिप्रसिद्धं पदादि गुणः स्यादित्यन्वयः । तादृशस्य वक्तुस्तादृक्पदादेरेव योग्यत्वेन श्रोतृवैरस्यानाधायकत्वात् प्रत्युतौचित्यादिना रसपरिपोषकत्वाच्चेत्याशयः । तदुक्तं प्रदीप एवैतत्प्रकृत्य । वस्तुतस्तु नागरोपनागरौ विहाय ग्राम्यशब्दप्रयोगाद्वक्तुरवैदग्ध्योन्नयनेन श्रोतुर्वैमुख्यं तदित्यालोच्यते । अत एव विदूषकादावधमे वक्तरि न दोषत्वम् । तस्य तथैवौचित्येन वैरस्याभावादिति । तत् दूषकताबीजमित्यर्थः । तदुदाहरति—**रे सूत्रेति** । अत्राद्यपक्षे जगन्नाटकसूत्रधारे भगवति श्रीकृष्णे शिशुपालदृशा राजसूयमयसभादिनाटकसूत्रधारत्वात्तत्संबुद्धिः । यद्यस्माद्धेतोः त्वं भूरि बहु शतापराधोत्तरं त्वामहं हनिष्याम्येवेत्यादिजल्पसि भाषसे । अतः त्वया किं पानं सुरापानं कृतमिति व्यक्तैव निन्दा । पक्षान्तरे तु स्फुटमेव । तत्रोभयत्रापि पानशब्दः पामरजनप्रसिद्ध एवेति ग्राम्योऽपि गुण एवेति भावः । यथावा कुमारसंभवे—'निवर्तयास्मादसदीप्सितान्मनः क्व तद्विधस्त्वं क्व च पुण्यलक्षणा । अपेक्ष्यते साधुजनेन वैदिकी श्मशानशूलस्य न यूपसत्क्रिया' इति श्रव्ये । विदूषकवचस्तु यथादृश्येऽभिज्ञानशाकुन्तलाख्यनाटकद्वितीयेऽङ्के तज्जल्पनं प्रकृत्य 'तदो गण्डस्सोवरि पिण्डआ संवुत्तेति' । अत्र च्छाया–ततो गण्डस्योपरि पिण्डिका संवृत्तेति । इह गण्डादिपदस्य ग्राम्यत्वेऽपि निरुक्तवक्तृमहिम्ना गुणत्वं स्पष्टमेवेति दिक् ॥ २३ ॥ एवं क्लिष्टमप्यपवदति —**प्रहेलिकादाविति** । 'प्रहेलिका सकृत्प्रश्नः सापि षोढा च्युताक्षरा । दत्ताक्षरोभयं मुष्टिर्बिन्दुमत्यर्थवत्यपि' इत्यादिना सरस्वतीकण्ठाभरणप्रपञ्चिता प्रहेलिका आदिर्मुख्या यस्यास्तादृश्यामुक्तावित्यर्थः । **मत्तेति** । मत्तः प्रमत्तस्तदुक्त्यादावित्यर्थः । चः समुच्चये । क्रमादुभयत्राप्यादिना कण्ठाभरणप्रसिद्धस्य षड्विधगूढस्य संकेतसूचनवचनस्य च संग्रहः । क्लिष्टं प्रागुक्तलक्षणं पदादि गुणो भवेदिति संबन्धः । तदुक्तं प्रदीपे दूषकताबीजं प्रतीति विलम्बः । प्रहेलिकादौ तु तस्येष्टत्वाददोषत्वम् । मत्तोक्त्यादौ तु गुणत्वमपि तदौचित्यादिति । क्रमेणोदाहरति—**कामुकीति** । 'वृषस्यन्ती तु कामुकी' इत्यमरान्मैथुनेच्छावती युवतिरिति यावत् । एतेन तदपाङ्गे स्वसुरताभिलाषसूचकत्वेनातिचपलत्वं व्यज्यते । तस्याः योऽपाङ्गः नेत्रान्तः तद्वद्क्षणमात्रं रञ्जयतीति तथा अतिक्षणिकरञ्जकमित्यर्थः । एतादृशं किं वस्त्विति प्रश्नः । इयं हि अर्थवत्याख्या षष्ठी प्रहेलिका । समाधानं तु निरुक्तरीत्या क्षणिकरञ्जकमायुर्धनयौवनादीति । तेनात्रार्थप्रतीतौ क्लेशादिक्लिष्टत्वेऽपि [प्रहे]लिकागतत्वेन गुणत्वमेवेति भावः । यथावा कण्ठाभरण एव—'सरसं कामना-

२५

**विरुद्धोऽर्थोऽप्यभीष्टश्चेद्विरुद्धमतिकृद्गुणः।**
**भगिन्युद्वहनोत्साहाद्रुक्म्ययं योद्धुमागतः॥ २५॥**
**प्रतापरुद्रपारुष्यमपि वीरादिके स्थले।**
**पूर्वोक्ते गुणतां याति श्रुतिकट्वक्षरोपमम्॥ २६॥**

भासं संदष्टदशनच्छदम्। सरसं चुम्ब्यते हृष्टैर्वृद्धैरपि किमुज्ज्वलम्'। सेयमपि सूचितस्यैव पक्वाम्रफलमित्यस्य द्व्यर्थपदप्रयोगेणावगतेरर्थप्रहेलिकेति। **रेवतीति**। हे रेवति, इदं मध्विति शेषः। **पिकेति**। 'माकन्दः पिकवल्लभः' इत्यमरादाम्रकुसुमवन्मधुरगन्धमस्तीत्यर्थः। अत्र बलभद्रवचस्त्वादिना मत्तोक्तित्वान्निरुक्तार्थलाभस्य क्लेशसाध्यत्वेन क्लिष्टत्वेऽपि गुणत्वं बोध्यम्। उदाहरणान्तरं तु माघद्वितीयसर्गे तदुक्तौ ज्ञेयं गौरवान्नेहोक्तमिति॥ २४॥ एवं विरुद्धमतिकृदपवदति—**विरुद्ध इति**। तदुदाहरति—**भगिनीति**। इदं हि रुक्मिणीहरणलीलायां योद्धुमुपागतं रुक्मिणमालोक्य तत्समक्षमेव तद्विनोदं कुर्वतः श्रीकृष्णस्य बलरामं प्रति वाक्यम्। तेनात्र स्वकर्तृकभगिनीकर्मकविधिवत्पाणिग्रहणानुकूलव्यापारौत्कण्ठ्यलक्षणस्य तस्यां स्वभगिनीत्वेन विरुद्धस्याप्यर्थस्य वक्तुरभीष्टत्वाद्गुणत्वमित्याशयः। तदुक्तं प्रदीपे—'अतो यत्र विरुद्धार्थो विवक्षित एव तत्रादोषत्वम्' इति। यथावा सरस्वतीकण्ठाभरणे—'नादेयं किमिदं जलं घटगतं नाऽऽदेयमेवोच्यते सत्यं नाम पिबामि कत्यपतृषः पीतेन नाम्नाऽभवन्। किं वर्णा अपि सन्ति नाम्नि रहितं किं तैरलं त्वं कुतो यस्मादेव भवान्भगिन्यसि ततस्तेनैव मां बाधसे' इति। अस्यायमर्थः—गङ्गोदकं कलशे गृहीत्वा यान्तीमेकान्ते मिलितां कांचित्स्वैरिणीं तरुणीं प्रति कश्चिच्चतुरो जारोऽभिवक्ति—**नादेयमिति**। इदं प्रत्यक्षं घटगतं ताम्रादिकलशस्थं जलं नादेयं नदीसंबन्धि किमिति प्रश्नः। ततश्छलोक्त्या तस्याः प्रत्युत्तरं नादेयमेवेति। आदेयं आदातुं योग्यं नैवेत्युच्यते। भवतेति शेषः। इति तस्या आशयमजानान इव पुनरसौ सुरतप्रार्थनमेव सूचयंस्तत्पानं प्रतिजानीते—**सत्यमिति**। 'नाम प्राकाश्यसंभाव्यकुत्साभ्युपगमेपि च' इति विश्वात्सत्यंनाम सत्यमेव नदीसंबन्धि चेत्तर्ह्यहं पिबामीत्यन्वयः। पुनरपि सा प्राग्वदेव प्रत्युत्तरयति—**पीतेति**। पीतेन प्राशितेन नाम्ना कति अपतृषः अभवन्निति संबन्धः। पुनः सोऽपि तथैव पृच्छति—**किमिति**। नाम्नि पीतसितादयो वर्णाः रूपविशेषा अपि सन्ति किमिति योजना। पुनः सापि तथैवाह—**रहितमिति**। तैः वर्णैरक्षरैस्तद्रहितं किमित्याक्षेपः। अथ स तावद्वादं शामयंस्तत्त्वं पृच्छति—**त्वं कुत इति**। यस्मादेव रतान्निमित्ताद्भवान्प्रस्थितोऽस्ति तस्मादेवाहं प्रस्थितास्मीति पुनः साह—**यस्मादेवेति**। तदुभयोरेकजन्यत्वकल्पनया पुनरप्यसावाह—**भगिनीति**। अत्र भगिनीत्वोक्तिर्विरुद्धमतिकृदपि च्छलोपयोगित्वेनेष्टेति गुण इति दिक्॥ २५॥ अथ प्रतापरुद्रोक्तपरुषाख्यदोषविशेषमप्यपवदति—**प्रतापेति**। प्रतापरुद्रसंमतपरुषसंज्ञकपददोषत्वमित्यर्थः। शिष्ट

**अन्यसंगतमप्यत्र गुणो वाचि प्रमादिनः ।**
**सखि पश्य गतः किं मे प्रोषितप्राणनायकः ॥ २७ ॥**
**निरर्थकं व्युदस्यैतेऽप्रयुक्ताद्यास्त्रयोदश ।**
**वाक्यदोषेष्वपि ज्ञेया अपवादा दिशानया ॥ २८ ॥**
**अवाचकं च नेयार्थं नित्यदोषद्वयं विना ।**
**पदैकदेशदोषेष्वप्येते प्रोह्याः सुबुद्धिभिः ॥ २९ ॥**
**आक्षेपात्पदलाभश्चेद्गुणो न्यूनपदं भवेत् ।**
**क्षणिकाद्यौवनादेः किमिन्द्रजालमपेक्षितम् ॥ ३० ॥**

---

स्पष्टमेव । उदाहरणं तु चरमचरणात्मकपदस्य परुषवर्णघटितत्वादत्रैव श्लेषेण बोध्यम् । तद्यथा पूर्वोक्ते पूर्वाचार्यैर्व्यासादिभिः कथित इत्यर्थः । एतादृशे । **वीरेति ।** वीरादीनां संभावितपराक्रमदर्शितपराक्रमाणां वीरभटाख्यानां योधानां कं सुखं यस्मिन्निति तथा तत्रेत्यर्थः । ईदृशे स्थले कुरुक्षेत्राभिधभूभाग इतियावत् । **प्रतापेति ।** प्रतापे पराक्रमे रुद्रः रुद्रस्वरूपो भीमसेनः तस्य यत्पारुष्यं परुषस्य कठोरस्य कर्म पारुष्यम् । दुःशासनरक्तपानादिव्यापारजातमित्यर्थः । अपिना दुर्योधनवधादिपराक्रमान्तरं गुणी भविष्यतीति किमु वक्तव्यमिति द्योत्यते । इदं सर्वं श्रीमहाभारते प्रसिद्धमेव । **श्रुतिकटिति ।** श्रवणकठोरवर्णवदित्यर्थः । गुणतां यातीति योजना । यथावाऽस्मदीये कृष्णलीलामृते—'स संगरे सैनिकसङ्घसंकरात्समुत्थितं भूरि रजस्तमोऽपि च । सितासितः सत्त्वमवेक्ष्य वरिणामपाकरोत्तत्रयसाक्षितामपि' इति । अत्र तत्रयेत्यस्य तथात्वेऽपि वीररसप्रधानत्वाद्गुणत्वमिति तत्त्वम् ॥ २६ ॥ एवं जयदेवसंमतमन्यसंगतमप्यपवदति—**अन्येति ।** तदुदाहरति-**सखीति ।** इह प्रोषितपदस्य प्राणपदान्वयप्रत्ययात्तथात्वेऽपि वक्त्रया विरहिण्याः प्रमादित्वेन गुणत्वं ज्ञेयम् । यथावा नैषधीये—'श्रवणपूरतमालदलाङ्कुरं शशिकुरङ्गमुखे सखि निक्षिप । किमपि तुन्दिलितः स्थगयत्यमुं सपदि तेन तदुच्छ्वसिमि क्षणम्' इति । अत्राद्यपदे तथात्वेपि निरुक्तवक्तृकत्वेन गुणतेति तात्पर्यम् ॥ २७ ॥ अथोक्तांस्त्रयोदशसंख्याकान्पददोषापवादान्निरर्थकं तं व्युदस्य वाक्येऽप्यतिदिशति—**निरर्थकमिति ।** अप्रयुक्तेति च्छेदः । अप्रयुक्तापवादादयः पूर्वोक्तास्त्रयोदशाप्यपवादा इत्यर्थः । अनया निरुक्तरूपया दिशा मर्यादयेत्यर्थः । वाक्यदोषेष्वपि ज्ञेया इत्यन्वयः । विदुषेति शेषः । तस्माद्द्वादशैव पददोषातिदैशिकवाक्यदोषापवादा इत्याशयः । तदुदाहरणानि तु गौरवादनतिप्रयोजकत्वाच्चात्रानुक्तान्यपि यथायोगमूह्यानि प्रेक्षावद्भिरिति संक्षेपः ॥ २८ ॥ एवं पदैकदेशदोषेष्वपि अवाचकादिनित्यदोषद्वयं पर्युदस्य तानतिदिशति—**अवाचकं चेति ।** एते पूर्वोक्तापवादाः । **पदैकदेशेति ।** निहतार्थनिरर्थकत्रिधाश्लीलसंदिग्धाख्यत्वेनावशिष्टेषु पदैकदेशदोषेष्वपीत्यर्थः । शिष्टं तु स्फुटमेव ॥ २९ ॥ अथ नैसर्गिकवाक्यदोषापवादवदनमारभमाणः प्रथमं

**गुणोऽधिकपदं चापि व्यङ्ग्ये हर्षादिके सति ।**
**अहो चिदस्मि सर्वत्र देहपातेऽपि सर्वदा ॥ ३१ ॥**
**संप्रोक्तपदमप्यत्र गुणोऽनुप्रासनादिना ।**
**कमलाकमलाक्षाय दृङ्मेचकरुचिं ददौ ॥ ३२ ॥**

---

न्यूनपदाख्यवाक्यदोषमपवदति—**आक्षेपादिति** । तमुदाहरति—**क्षणिकादिति** । अत्रान्यदिति पदस्य राहित्येन न्यूनपदत्वेऽपि तस्याक्षेपादेव लाभसंभवाद्गुणत्वमिति तत्त्वम् । तदुक्तं काव्यप्रदीपे—'विवक्षिताप्रतिपत्तिश्च दूषकताबीजम् । अतो झटिति आक्षेपतस्तल्लाभेऽदोषत्वम्' इति । यथावा मदीये कृष्णलीलामृते—'अथ नन्द उपेत्य गोकुलं परिजिघ्रञ्छिरसि स्वनन्दनम् । अभिचुम्ब्य ननन्द वै यथा परमानन्दविदोऽपि नो तथा' इति । अत्रान्ते नदन्तीति पदराहित्यान्न्यूनपदत्वेपि झटित्याक्षेपादेव तल्लाभाद्गुणत्वमेवेति हृदयम् ॥ ३० ॥ एवमधिकपदमप्यपवदति—**गुण इति । हर्षेति ।** आदिना शोकः । तस्मिन्व्यङ्ग्ये सति अधिकपदं चापि गुणो भवतीत्यन्वयः । तमुदाहरति—**अहो इति ।** अत्र देहपातेऽपीत्यपिनैव त्रैकालिकसत्त्वध्वनने सर्वदेत्यधिकपदमपीदं वाक्यं ब्रह्मानन्दरूपस्य हर्षस्य व्यङ्ग्यत्वाद्गुण एवेति भावः। तदुक्तं काव्यप्रदीपे—'अतो हर्षादावभिव्यङ्ग्ये न दोषत्वमिति । यथावा रघुवंशे—'तमङ्कमारोप्य शरीरयोगजैः सुखैर्निषिञ्चन्तमिवामृतं त्वचि । उपान्तसंमीलितलोचनो नृपश्चिरात्सुतस्पर्शरसज्ञतां ययौ' इति । अत्र शरीरयोगजैरित्यस्य अङ्कत्वक्स्पर्शपदैश्चारितार्थ्येनैतद्वाक्यस्याधिकपदत्वेऽपि हर्षव्यञ्जकत्वाद्गुणत्वं बोध्यम् ॥ ३१ ॥ इत्थं कथितपदमप्यपवदति—**संप्रोक्तेति** । कथितपदाभिधं वाक्यदोषजातमित्यर्थः । अत्र साहित्यशास्त्रे । **अन्विति ।** अनुप्रासनमनुप्रासः । आदिना यमकादि । तदुदाहरति—**कमलेति ।** लक्ष्मीः कमलेति पुण्डरीकाक्षाय कमलायां अक्षिणी यस्येति वा । विष्णव इत्यर्थः । **दृगिति ।** दृशः दृष्टेर्या मेचकरुचिर्नीलकान्तिस्तामित्यर्थः । 'कृष्णे नीलासितश्यामकालश्यामलमेचकाः' इत्यमरः । यद्वा दृगेव मेचकं महानीलरत्नं । अथवा दृशः या मेचके स्वसमानजातीये नीलरूपे विषये रुचिरभिरतिस्तामिति यावत् । ददाविति संबन्धः । एवंच लक्ष्मीदृष्टिरुच्यैव स्वयंप्रकाशस्यापि भगवतः श्यामत्वं बभूवेति भावः । उक्तं हि प्रदीपे—'अतो लाटानुप्रासादावदोषत्वम्' इति । यथावा वेण्याम्—'जयति स भगवान्कृष्णः शेते यः शेषभोगशय्यायाम् । मध्येपयःपयोधेरपर इवाम्भोनिधिः कृष्णः' इति । अत्र कृष्णादिपदेन कथितपदत्वेऽपि प्रदीपीयादिपदोक्तयमकघटितकमलेत्यादिप्रकृतोदाहरणवच्छब्दचित्रत्वेन गुणत्वं बोध्यम् । एवं दृशः स्वाभाविकनीलत्वेन तद्वाचकमेचकपदेनार्थिकपौनरुक्त्येपि अनुप्रासात्तत्त्वमेव । एतेन चिदेवेत्यादीनि कृष्णलीलामृतपद्यान्यपि व्याख्यातानीति दिक्

**पतत्प्रकर्षमप्यत्र रसानुगुणतो गुणः ।**
**उद्रिक्तदर्पकान्दर्पतर्पकान्धिगहं तु चित् ॥ ३३ ॥**
**समाप्तपुनरात्तं स्याद्गुणो वाक्यान्तरोदये ।**
**रामापि स्यादुपादेया महागुणवती सती ॥ ३४ ॥**

॥ ३२ ॥ एवं पतत्प्रकर्षमप्यपवदति—**पतत्प्रकर्षमपीति** । अत्र साहित्यशास्त्रे पतत्प्रकर्षमपि वाक्यदोषजातम् । रसानुगुणतः रसानुसारेणेत्यर्थः । गुणोऽस्तीति संबन्धः । ओजस्विनि रसे प्रक्रान्ते तदनुसारेणौजोगुणप्रकर्षः कृतोऽपि यदि निरुक्तरसाङ्गत्वेन कदाचित्तदग्र एव मधुरोऽपि रसो निबध्यते चेत्तदुपकारित्वेन माधुर्यगुणस्यैव तत्रावश्यादरणीयत्वात्प्राक्तनोऽसौ पतितोऽपि प्रोक्तरसानुसारित्वेन गुण एवेति भावः । तमुदाहरति—**उद्रिक्तेति** । उद्रिक्तः अत्यधिकः दर्पः । 'दर्पो धनस्वजनादिनिमित्तो महदवधीरणाहेतुर्गर्वविशेषः' इति श्रीमन्मधुसूदनसरस्वत्युक्तरूपश्चित्तपरिणामो येषां ते तथा । कंदर्पो मदनस्तस्येदं कांदर्पं मदनैकप्रधानमुपस्थेन्द्रियं तत्तर्पयन्ति सततसुरतैस्तृप्तिं प्रापयन्तीति तथा ते च ते इति पुनः कर्मधारयः । तथा च धनमदनादिमत्तानित्यर्थः । धिगस्तु क्षयिष्णुसुखाभाससक्तत्वादिति तत्त्वम् । अथ स्वस्मिंस्तु तद्व्यतिरेकं व्यनक्ति—**अहं त्विति** । तुशब्दो वैलक्षण्यार्थः । चित् अद्वैतसच्चिदानन्दः परमात्मैवास्मीति योजना । इहानुप्रासस्य त्यक्तत्वेन पतत्प्रकर्षत्वेपि धिगित्यन्ततदुत्तरवाक्ययोः क्रमात्त्यागवीरशान्तरसानुगुणत्वेनौजोमाधुर्यघटितत्वाद्गुणत्वमेवेति भावः । तदुक्तमेतत्प्रकृत्य प्रदीपे 'रसानुगुणतया तत्पातेपि न दोषः' इति । यथावा मुकुन्दानन्दभाणे—'तर्के कर्कशवक्रवाक्यगहने या निष्ठुरा भारती सा काव्ये मधुरोक्तिसारसुरभौ स्यादेव मे कोमला । या प्रायः प्रियविप्रयुक्तवनिताहृत्कर्तने कर्तरी प्रेयोलालितयौवनेन मृदुला सा किं प्रसूनावलिः' इति ॥ ३३ ॥ एवं समाप्तपुनरात्तमप्यपवदति—**समाप्तेति । वाक्यान्तरेति** । अन्यवाक्यसंभवे सतीत्यर्थः । तदुदाहरति—**रामापीति** । रमयति यौवनमहिम्ना क्रीडापरवशं करोतीति तथा तरुणीत्यर्थः। अपिना तस्यां 'यस्य स्त्री तस्य भोगाः स्युर्निःस्त्रीकस्य क्व भोगभूः । स्त्रियं त्यक्त्वा जगत्त्यक्तं जगत्त्यक्त्वा सुखी भवेत्' इत्यभियुक्तोक्तेः संसारनिदानत्वं ध्वनितम् । उपादेया विधिवत्पाणौ ग्राह्या स्यादिति संबन्धः । इह वाक्यं तु समाप्तमेवातोऽग्रिमग्रन्थे समाप्तवाक्यार्थ एवान्वितत्वेनास्य तत्त्वेपि किमिति निरुक्तसंसृतिहेतुरपि युवतिरुपादेयेति हेत्वाकाङ्क्षायां यतोऽसौ महागुणवत्त्वेन सती पतिव्रतास्तीति तत्समाधायकवाक्यान्तरमुदेति तस्माद्गुण एव तदित्याकूतम् । यथावा मदीये नीतिशतपत्रे—'श्रीगौर्यालिङ्गितं वन्दे सुप्रसन्नं सदाशिवम् । युक्तं गुहगणेशाभ्यां स्तुतं वेदैः सुरैरपि' इति । अत्र पूर्वार्ध एवान्वयसमाप्तावुत्तरार्धोक्तविशेषणद्वयस्य पुनस्तदन्वितत्वेनोपात्तत्वादुक्तदोषसंभवेऽपि केषां सदाशिववन्दनमात्रेण सर्वपुमर्थसिद्धिः संपन्ना किंवा तत्र मान-

**कर्त्रादिलाभोऽर्थान्नोचेद्गुणोऽर्धान्तरगैकवाक् ।**
**अङ्गनेऽपाङ्गभङ्गैस्ते तुङ्गानङ्गं तरङ्गति ॥ ३५ ॥**
**अन्तरङ्गमतोऽसङ्गः श्रीरङ्गः किं मयाप्यते ।**
**प्रतीतिश्चेन्न विच्छिद्येद्गुणो गर्भितमप्यलम् ॥ ३६ ॥**
**भोभो पतितमाचार्याः शृणुध्वं कामवारिधौ ।**
**कृपयोद्धार्य मां यूयं भयतः पात संततम् ॥ ३७ ॥**

---

मित्याशङ्कोपशान्तिहेतुत्वेनोत्तरार्धे यतः गुहगणेशाभ्यां कर्तृभ्यां युक्तं 'युज समाधौ' इति स्मरणात्समाहितं अर्थात्सदाशिव एव समाधिः साधितस्तथा वेदैः सुरैरपि च कर्तृभिः स्तुतं तत्स्तवनमकारीति वाक्यान्तरोदयाद्गुणत्वं बोध्यम् । उक्तं हि प्रदीपकृतेदं प्रकृत्य—निराकाङ्क्षत्वं च दूषकताबीजम् । अतश्चानित्यदोषोऽयं वाक्यान्तरारम्भे तदभावात्' इति । एतेनैतन्मङ्गलमपि व्याख्यातम् । तत्रापि गौरीत्यादि विशेषणेन मोक्षे ते पुमर्थदातृत्वध्वनावपि तद्धननार्थे नन्दितेत्यादिविशेषणेष्टेः ॥ ३४ ॥ एवमर्धान्तरैकवाचकमप्यपवदति—**कर्त्रादीति ।** आदिना कर्मक्रियादिसंग्रहः । **अर्धान्तरगेति** । अन्यदर्धमित्यर्धान्तरं तत्र गच्छतीति तथा तादृशी एकवाक् एकपदं यस्य तद्वाक्यं तथेत्यर्थः । तदुदाहरति—**अङ्गन इति ।** हे अङ्गने, ते अपाङ्गभङ्गैः कटाक्षच्छटाभिरित्यर्थः । अन्तरङ्गं अन्तःकरणम् । **तुङ्गेति ।** तुङ्गः महान् अनङ्गः कामो यथा स्यात्तथा तरङ्गति चेष्टत इति उत्तरश्लोकार्धगतमन्तरङ्गाख्यमेकपदं गृहीत्वा योजना ॥ ३५ ॥ अतः कारणात् मया असङ्गः शुद्धाद्वैतस्वरूपः श्रीरङ्गः पद्मापतिः अवाप्यते किं, अपितु नैव प्राप्यत इत्यन्वयः । इहार्धान्तरैकवाचकत्वेऽपि कर्तृपदस्यार्थिकलाभासंभवाद्गुणत्वं ज्ञेयम् । तदुक्तमेतत्प्रकृत्य काव्यप्रदीपकृतैव । 'यस्य तु कर्त्रादेर्न तथा प्रतिपत्तिस्तस्यार्धान्तरोपादानेऽप्यात्मलाभ एव नास्ति । तल्लाभेऽपि वा न दोषत्वमिति । अयमाशयः—यस्य तु कर्त्रादेः स्वतन्त्रः कर्तेत्याद्युक्तक्रियाश्रयाभिधायकपदादेरित्यर्थः । तथा आक्षेपादिना प्रतिपत्तिः प्रमितिर्न भवति । तस्य कर्त्रादेः—**अर्धेति ।** अन्यार्धे उपादाने कृते सत्यपि—**आत्मेति ।** अर्धान्तरैकवाचकाख्यदोषस्वरूपोदय एवेति यावत् । नास्ति निराकाङ्क्षताख्यदुष्टिबीजाभावान्नैव भवतीत्यर्थः । **तदिति ।** प्रतीयत एव तथेत्याग्रहश्चेदुक्तदोषस्वरूपसंभवेऽपि वेत्यर्थः । न दोषत्वं दोषत्वं नैवास्तीति संबन्ध इति । यथावा प्रसन्नराघवे—'किरीटमधिरूढेऽपि बाले प्रालेयरोचिषि । शितिकण्ठस्य किं धत्ते चित्ते कोपाङ्कुरः पदम्' इति । अत्र किरीटपदस्य साकाङ्क्षत्वात्तत्प्रतियोगिशितिकण्ठपदस्य तथात्वेऽप्यार्थिकतन्निर्णयाभावाद्गुणत्वमिति दिक् । एवं गर्भितमपवदति—**प्रतीतिरिति ।** बोध इत्यर्थः ॥ ३६ ॥ तदुदाहरति—**भोभो इति ।** भोभो आचार्याः संभ्रमात्संबोधने वीप्सा । आदरातिशयाद्बहुवचनम् । अयि देशिकेत्यर्थः । यूयं शृणुध्वम् । किं तदित्यत्राह—**पतितमित्यादिना** । यूयं भवन्तः ।

**समासश्चेद्गुणत्वं स्याद्भिन्नलिङ्गोपमेऽपि च।**
**चन्द्रानना तडिद्वर्णा फुल्लोत्पलदृगेतिका॥ ३८॥**

---

**कामेति**। दुस्तरत्वात्स्मरसागरे पतितं निमग्नं मां कृपया अनुकम्पया उद्धार्य प्रोद्धृत्य भयतः नरकादिदुःखभयात् संततं निरन्तरं पात संरक्षध्वमित्यन्वयः। अत्र नैसर्गिकवाक्यान्तरगर्भितं वाक्यैकवाक्यतया च तथेति द्विविधेपि तस्मिन् यथाश्रुतरीत्या निरुक्तान्वयरीत्या चैतस्मिन्गर्भितत्वेन स्फूर्यमाणे वाक्यदोषे सति प्रतीतिविच्छेदविरहाद्गुणत्वमेवेति भावः। तथा चोक्तमेतत्प्रकरणे काव्यप्रदीप एव। अतो न यत्र प्रतीतिर्विच्छिद्यते तत्र नायं दोष इति। यथावा रसगङ्गाधरप्रसादोदाहरणे—'चिन्तामीलितमानसो मनसिजः सख्यो विहीनप्रभाः प्राणेशः प्रणयाकुलः पुनरसावास्तां समस्ता कथा। एतत्त्वां प्रतिवेदयामि मम चेदुक्तिं हितां मन्यसे मुग्धे मा कुरु मानमाननमिदं राकापतिर्जेष्यति' इति। इह तावत् एतत्त्वां प्रति वेदयामीति प्रतिज्ञाय तत्कथनात्प्रागेव मध्ये मम चेदुक्तिं हितां मन्यस इति तदुपोद्घातीभूतवाक्यान्तरेण स्वभावतएवैकतापन्नतया गर्भितत्वेऽपि प्रतीति विच्छेदराहित्याद्गुणत्वम्। यथावा गोवर्धनसप्तशत्याम्—'अवधिदिनावधिजीवाः प्रसीद जीवन्तु पथिकजनजायाः। दुर्लङ्घ्यवर्त्मशैलौ स्तनौ पिधेहि प्रपापालि' इत्यत्र हे प्रपापालि, त्वं प्रसीद। किमर्थमितिचेत्। अवधीत्यादि शिष्टं पूर्वार्धं। को वा तत्र मत्प्रतिबन्ध इति चेत्। दुर्लङ्घ्येति शिष्टमुत्तरार्धं योज्यम्। तेनास्य वाक्यैकवाक्यतार्थं अवधीत्यादियोजनेन वाक्यान्तरगर्भितत्वप्रतिभानेऽपि वाक्यार्थप्रतीतिविच्छेदविरहाद्गुणत्वमेवेति संक्षेपः॥ ३७॥ एवं भिन्नलिङ्गोपममप्यपवदति—**समासश्चेदिति**। यदि समासः चेत् काव्यं यदि समासघटितं भवति तर्हि तदवच्छेदेनैव विद्यमाने भिन्नलिङ्गोपमे दोषे गुणत्वं स्यादित्यन्वयः। यत्रोपमावाचकं पदं भिन्नलिङ्गमुपमेयवाचकपदापेक्षया विजातीयलिङ्गकं स दोषोऽपि तद्वाक्यस्य समस्तत्वे गुण एव भवतीति भावः। तदुदाहरति—**चन्द्रेति**। इयं कैतीति संबन्धः। एतेनाद्भुतत्वं द्योत्यते। तदेवोपपादयंस्तां त्रिभिर्विशिनष्टि—**चन्द्राननेत्यादिभिः**। इह चन्द्रपदस्योपमानवाचकस्य पुंलिङ्गत्वादुपमेयवाचकस्याननपदस्य नपुंसकलिङ्गत्वाच्च भिन्नलिङ्गोपमत्वाख्यदोषसंभवेऽप्यस्य समासघटितत्वेन स गुण एवेत्यर्थः। एवं तडिदित्यादावपि बोध्यम्। नन्वत्र तडितः वर्ण इव वर्णो यस्या इति व्युत्पत्तौ दोषस्यैवानवसराद्दूरे तस्य गुणत्वसंपादनमिति चेद्गाढम्। तडिदिवेति व्युत्पत्तेरेव वर्णपदसमभिव्याहारेण तडित्पदस्य तद्गौरिमग्राहकत्वेन लघुतया निरुक्तदोषस्य स्पष्टमेव भानात्। यथावा कुवलयानन्दे—'भ्रमरीकबरीभारभ्रमरीमुखरीकृतम्। दूरीकरोतु दुरितं गौरीचरणपङ्कजम्' इति। अत्र कबरीभारभ्रमर्योश्चरणपङ्कजयोश्च भिन्नलिङ्गत्वेऽपि समासाद्गुणत्वमेवेति दिक्॥ ३८॥

**गुणोऽशरीरमप्यर्थात्क्रियाप्तौ चिन्मयं जगत् ।**
**अरीतिमत्त्रिधापि स्याद्गुणस्तत्तद्रसो यदि ॥ ३९ ॥**
**शैथिल्यं मधुरेऽभीष्टं किमद्वैतस्य शिष्यते ।**
**वैषम्यं रसभेदेन मतं तदनुयोगि चेत् ॥ ४० ॥**
**भो वैदेहि तवापाङ्गैरनङ्गोऽप्येति साङ्गताम् ।**
**गर्वसर्वस्वभूतैस्ते किं भार्गव विकत्थनैः ॥ ४१ ॥**

---

एवमशरीरमप्यपवदति—**गुणोऽशरीरमपीति** । आर्थिकाख्यातलाभे सत्यशरीराख्यप्रागुक्तदोषदुष्टमपि वाक्यं गुणो भवतीतिभावः। तदुदाहरति—**चिदिति।** अत्र अस्तीति क्रियालाभस्त्वार्थिक एव सहृदयानां संपद्यत इति नैवास्य दोषतेत्याशयः। 'अशरीरं क्रियाहीनं ब्रह्म कूटस्थमद्वयम्' इति दोषरत्नीयपद्ये तु अस्त्यस्यसीति त्रैपुरुषक्रियान्यतमाया यस्याः कस्याश्चिदपि तस्याः संभवेन निर्णयाभावान्नैव तत्रार्थिकतत्संभव इति तत्र दोषत्वमेव । प्रकृते तु जगदुद्देश्यकचिन्मयत्वविधानान्यथानुपपत्त्यास्तीति प्रथमपुरुषस्यैवार्थिकः स्वारसिको लाभो भवतीत्युचित एवायमपवादः। यथावा मदीय एव विशुद्धमाधवाभिधे नाटके—'रम्भास्तम्भेऽत्र संसारे पूर्वकर्पूरकः शुकः । यमेव पश्यतां दृष्टिरमृतीभवति क्षणात्' इति । अथारीतिमदपवदति—**अरीतीति** । यदि तत्तद्रसस्तर्हि त्रिधापि शैथिल्यादिपूर्वोक्तप्रकारेण त्रिप्रकारकमप्यरीतिमत्संज्ञकं वाक्यदोषजातं गुणः स्यादिति संबन्धः ॥ ३९ ॥ तत्र कस्मिन्रसे सति कस्य तद्भेदस्य गुणत्वमिति विशेषजिज्ञासायां विषयविभागेन तदुदाहरति—**शैथिल्यमित्या**दित्रिभिः । शैथिल्यं पूर्वोक्तस्य वक्ष्यमाणस्य च श्लेषाख्यगुणस्याभावः। मधुरे शान्तादौ मधुररस इत्यर्थः। तदुदाहरति—**किमिति** । यथावा मदीयाद्वैतसुधायाम्—'किं मे मानस संकल्पैस्तदाधारस्य साक्षिणः । मृगाम्बुनद्याः शैत्यात्किं सौरालोकः प्रकम्पते' इति । **वैषम्यमिति** । तदपि वक्ष्यमाणसमताभाव एव । **तदिति** । तत्तद्रसानुगुणं चेदित्यर्थः ॥ ४० ॥ **भोवैदेहीति** । इदं हि सीतास्वयंवरोत्तरं अयोध्यामार्गे परशुरामागमनभीतया कटाक्षितस्य श्रीरामस्यैव तां प्रत्युत्तरम्। तथा च जीवतः क्षत्रैकवीरस्य सद्यः प्रभग्नहरशरासनस्य रामस्यापि मे तैर्भीतिकातरैरपि परशुरामपराजयप्रयोजकवीररससूचनं कैमुत्यसिद्धमेवेति भवत्या नैव भेतव्यमिति भावः। **गर्वेति** । अत एवाथेदं भार्गवरामं प्रति तस्यैव वचः । एवं चेह पूर्वार्धस्य सुकुमारवर्णघटितत्वेनोत्तरार्धस्य च कठोरवर्णघटितत्वेन वैषम्याख्यवाक्यदोषापत्तावपि क्रमाच्छृङ्गारवीरयोरेव प्राधान्येन ध्वननात्तदानुगुण्यमेव मृदुगाढबन्धयोस्तयोरिति युक्तमेवोक्तापवादोदाहरणत्वमिति तत्त्वम् । यथावा प्रसन्नराघवे—'यन्त्राकृष्टसुवर्णसूत्रमिव यत्पथं सुमेरोस्तटादुन्मीलत्कुरुविन्दकन्दल इव स्वच्छः पदार्थोदयः । तत्राप्युल्लसदंशुकान्तविलसत्कान्ताकुचान्तोपमं व्यङ्ग्यं यत्तदहो कवित्वमपरं वाग्देवतोपप्लवः' इति । अत्र तृतीयचरणे उपमालंकारेण शृङ्गारव्यङ्ग-

**ओजस्विनि रसेऽवश्यं कठोरत्वमपीप्सितम् ।**
**रे दुःशासन ते रक्तैः क्ष्मापि प्रक्षाल्यते मया ॥ ४२ ॥**
**विदेहावस्थवाक्यादौ गुणः संबन्धवर्जितम् ।**
**इन्द्रजालमिदं धन्याः सद्गुरोः पादरेणवः ॥ ४३ ॥**
**वर्णदोषापवादोऽत्र त्वेक एव त्रयोदश ।**
**पददोषापवादाश्च द्वादशैवातिदैशिकाः ॥ ४४ ॥**
**पदैकदेशगाः षट् च वाक्यगास्ते चतुर्दश ।**
**इति शब्दापवादाः षट्चत्वारिंशदुदीरिताः ॥ ४५ ॥**
**अष्टाधिकनवत्युक्तदोषेभ्यस्तेन शेषिताः ।**
**नित्यदोषा द्विपञ्चाशदेव त्याज्याः सुवाक्षु ते ॥ ४६ ॥**
**यमकादावपुष्टार्थोऽप्युपैति गुणतामिह ।**
**संपत्तिश्च विपत्तिश्च स्पृशति क्वापि किं चिति ॥ ४७ ॥**

नात्तदनुकूलमाधुर्यध्वनकसुकुमारवर्णघटितमृदुबन्धस्यैव सत्वमन्यत्र तु तेन कवित्ववीरव्यञ्जनात्तदनुगुणस्य गाढस्यैव तस्य सत्वमिति वैषम्येऽपि गुणत्वमेव ॥ ४१ ॥ **ओजस्विनीति** । कठोरत्वं वक्ष्यमाणसौकुमार्याभावः । **रे दुःशासनेति** । इदं तं प्रति भीमवाक्यम् । तेनात्र रौद्ररसवत्त्वेन कठोरबन्धस्य तदुपयुक्तत्वाद्गुणत्वमेव । यथावा हनूमन्नाटके—'येन त्रिःसप्तकृत्वो नृपबहलवसामांसमस्तिष्कपङ्कप्राग्भारेऽकारि भूरिच्युतरुधिरसरिद्वारिपूरेऽभिषेकः । यस्य स्त्रीबालवृद्धावधि निधनविधौ निर्दयो विश्रुतोऽसौ राजन्योच्चासकूटक्रथनपटुरटद्घोरधारः कुठारः' इति ॥ ४२ ॥ अथ संबन्धवर्जितमप्यपवदति—**विदेहेति** । विदेहावस्थो जडभरतादिः । तदुदाहरति **इन्द्रेति** । इदं स्वमनस्येव निरुक्तावस्थस्य जडभरतादेर्वाक्यम् । इदं दृश्यत्वावच्छेदेन यावद्वैतजालमित्यर्थः । इन्द्रजालं मन्त्रादिक्षुब्धमायाविशेषपरिदर्शितभ्रमकुलमिवेति यावत् । कुत इदं तत्राह—**धन्या इति** । अत्रोक्तसंगतेः शाब्दत्वाभावेन वैसांगत्येऽपि निरुक्तवाक्यविन्यासान्यथापत्तिसिद्धविदेहावस्थवाक्यत्वेन शान्तरसपरिपोषकत्वाद्गुणत्वमेवेति भावः।यथावा तृप्तिदीपे श्रीभारतीतीर्थगुरुचरणवचः—'अहो शास्त्रमहो शास्त्रमहो गुरुरहो गुरुः। अहो ज्ञानमहो ज्ञानमहो सुखमहोसुखम्' इति ॥ ४३ ॥ एवं सर्वेषां शब्ददोषापवादानां प्रत्येकसंख्याकथनपूर्वकं संख्यां निरूप्यावशिष्टानां प्रागुक्तनिखिलशब्ददोषेभ्यो नित्यदोषाणां संख्यां कथयन् काव्येष्ववश्यं तत्त्याज्यतां विधत्ते—**वर्णदोषेत्यादित्रिभिः** । आतिदैशिकाः वाक्यदोषापवादाः पददोषापवादातिदेशसंभवाः द्वादशैवेत्यन्वयः ॥ ४४ ॥ **पदैकेति** । वाक्यगता इत्यर्थः ॥ ४५ ॥ तेन निरुक्तापवादसंख्यानेन ॥ ४६ ॥ अथार्थदोषेषु कांश्चिदपवदन्नादावपुष्टमपवदति—**यमकादाविति** । आदिनानुप्रासादिः । तमुदाहरति—**संपत्तिरिति** । यथावा रघुवंशे—'शुशुभिरे स्मितचारुतराननाः स्त्रिय इव श्लथशिञ्जितमेखलाः। विकचता-

**स्ववैयाकरणत्वस्य ख्यापके चापि वक्तरि।**
**गुणः कष्टोऽपि ते भूयादादैच्संज्ञायशःश्रियाम् ॥ ४८ ॥**
**गुणः स्यात्पुनरुक्तोऽपि पदार्थादिः प्रयोजने।**
**ब्रह्मात्मैवाखिलं दृश्यं द्वैतं किमितरच्चितेः ॥ ४९ ॥**
**ननु कर्णावतंसादिपदार्थः किमपुष्टताम्।**
**उपैति पुनरुक्तत्वमुतेत्यत्राभिधीयते ॥ ५० ॥**

---

मरसा गृहदीर्घिका मदकलोदकलोलविहंगमाः। इति। अत्रोदकलक्षणस्यार्थस्य दीर्घिकापदेनैव सिद्धत्वाद्वर्णनीयस्त्रीसादृश्यरूपमुख्यार्थे पोषाजनकत्वाच्चापुष्टत्वेऽपि यमकवशाद्गुणत्वं ज्ञेयम्। उक्तंहि प्रदीपे प्रकृतदोषं प्रकृत्य दूषकताबीजं चाशक्त्युन्नयनेन श्रोतुर्वैमुख्यम्। अतएव यमकादावदोषता। तत्रालंकारान्तरारम्भेणाशक्त्यनुन्नयनादिति ॥ ४७ ॥ एवं कष्टमप्यपवदति—**स्वेति**। तमुदाहरति—**ते भूयादिति**। हे राजन्, ते तव यशःश्रियां कीर्तिसंपदाम् आदैच् संज्ञा 'वृद्धिरादैच्' इति सूत्रेण विहिता या आदैचां आकारैकारौकाराणां वृद्धिरूपा संज्ञा सा भूयात् वृद्धिर्भवत्वित्याशीर्वचनवक्तुः स्ववैयाकरणत्वख्यापकत्वान्निरुक्तार्थः कष्टसाध्यत्वेन क्लिष्टोऽपि गुण एवेति भावः। यथावा—'श्रौत्रार्हन्तीचणैर्गुण्यैर्महर्षिभिरहर्दिवम्। तोष्टूयमानोऽप्यगुणो विभुर्विजयतेतराम्' इति।( श्रोत्रियाणां भावः श्रौत्रं अर्हतां भावः आर्हन्ती श्रौत्रं च आर्हन्ती च श्रौत्रार्हन्ती ताभ्यां वित्ताः श्रौत्रार्हन्तीचणास्तैः छन्दोध्ययनशीलत्वपूज्यत्वविख्यातैरित्यर्थः। तथा गुण्यैः प्रशस्ताः गुणाः येषां ते तथा तैरित्यर्थः।) अत्र महर्षिभिरिति विशेष्यमात्रेणैवोक्तविशेषणार्थसिद्धौ जडभरतविश्वामित्रदुर्वासःप्रभृतिव्युदसनेन वसिष्ठादिग्रहस्य क्लिष्टत्वेऽप्यतोगुणत्वम् ॥ ४८ ॥ तद्वत्पुनरुक्तमप्यपवदति—**गुणः स्यादिति**। प्रयोजने सतीत्यर्थः। आदिना वाक्यार्थः। तावुदाहरति—**ब्रह्मेति**। अत्रात्मपदार्थस्य ब्रह्मपदार्थाभिन्नत्वेन तथा तृतीयचरणवाक्यार्थस्यैव चतुर्थचरणवाक्यार्थत्वात्तस्य पौनरुक्त्येऽपि 'आवृत्तिरसकृदुपदेशात्' इति न्यायेन ज्ञानदार्ढ्यसंपादनलक्षणप्रयोजनसत्त्वाद्गुणत्वमेवेति तात्पर्यम्। यथावा—'अखण्डं सच्चिदानन्दं चन्द्रखण्डशिखण्डकम्। उमामिश्रितमात्मानं परमात्मानमाश्रये' इत्यादि। उक्तंहि प्रदीप एवेमं प्रकृत्य। दूषकताबीजं च निष्प्रयोजनेनाभिधानेन श्रोतुर्वैमुख्यम्। अतएव प्रयोजनसत्वेनादोषत्वादनित्योयं दोष इति ॥ ४९ ॥ तत्रापुष्टपुनरुक्तयोरुभयोरप्यर्थयोः पदार्थविशेषावच्छेदेन संभवात्को वा निर्णय इति प्रसङ्गात्संदिहानः पृच्छति—**नन्विति**। कर्णावतंसः कर्णपूरः श्रवणस्थापितकुसुमादिरितियावत्। आदिना मुक्ताहारादिः। तथाचाहुः श्रीमद्भाष्यकारचरणाः—'मञ्जीरौ पदयोर्निधाय रुचिरौ विन्यस्य काञ्चीं कटौ मुक्ताहारमुरोजयोरनुपमां नक्षत्रमालां गले। केयूराणि भुजेषु रत्नवलयश्रेणीः करेषु क्रमात् ताटङ्के तव कर्णयोर्विनिदधे शीर्षे च चूडामणिम्। धम्मिल्ले तव देवि हेमकुसुमान्याधाय भालस्थले मुक्ताराजिविराजिहेमतिलकं नासापुटे

**कर्णेवतंस इत्यादिव्युत्पत्त्या तत्स्थता क्वचित् ।**
**मुक्ताहारे त्वमिश्रत्वं लक्षणातोऽवबोध्यते ॥ ५१ ॥**
**हेतुषूत्कर्ष एवेष्टः पुष्पमालाद्युदाहृतौ ।**
**तेन नापुष्टिरत्रास्ति पुनरुक्तिरपि क्वचित् ॥ ५२ ॥**

मौक्तिकम् । मातमौक्तिकजालिकां च कुचयोः सर्वाङ्गुलीषूर्मिकाः कट्यां काञ्चनकिङ्किणीर्विनिदधे रत्नावतंसं श्रुतौ' इति । रसतरङ्गिणीकारोपि—'श्वासोल्लासप्रचलदधरोपान्तमामीलिताक्षं क्रीडाकुञ्जे तपनदुहितुः सुप्यतः श्रीमुरारेः । अन्तः स्मेरं निभृतनिभृतं कापि कर्णावतंसं काचिद्बाह्वोः कनकवलयं दाम मुष्णाति काचित्' इति । अमरकृता तु 'पुंस्युत्तंसावतंसौ द्वौ कर्णपूरेपि शेखरे' इति द्वयोरपि कर्णपूरादिवाचित्वमुक्तम् । एवंच कविभिः प्रयुज्यमानः कर्णावतंसादिपदार्थः किमवतंसपदस्य रत्नावतंसं श्रुताविति प्रबलतमप्रमाणात्कविसमये कर्णपूर एव सुधांशुकलितोत्तंस इत्यादावुत्तंसपदस्य शेखरैकवाचकत्ववदङ्गीकृतशक्तिकत्वेन कर्णपदार्थस्याप्रयोजकत्वान्यलभ्यत्वाभ्यामपुष्टतामुपैत्युतशब्देन प्रतिपन्नत्वे सति पुनस्तेनैव प्रतिपादित इति प्रदीपोक्तपुनरुक्तार्थत्वस्योक्तशक्त्यैव सत्वेन पुनरुक्तत्वमुपैतीति प्रश्नाशयः । इतिपदं शङ्कोपसंहारपरम् । तत्समाधानकथनमथ प्रतिजानीते—**अत्रेत्यादिना** । निरुक्तपूर्वपक्षविषय इत्यर्थः ॥ ५० ॥ अथ प्रतिज्ञातसमाधानमेव विषयविभागेन त्रिविधं बोधयति—**कर्णेवतंस इत्यादी**त्यादि द्वाभ्याम् । आदिना शिरःशेखरः धनुर्ज्येत्यादौ शिरसि शेखर इत्यादि ज्ञेयम् । तत्स्थता तेषु कर्णादिषु स्थितित्वमित्यर्थः । तेन शोभातिशयादिः सूच्यते । **मुक्तेति** । तुशब्दः पूर्ववैलक्षण्यार्थः । अमिश्रत्वं हीरकपद्मरागादिरत्नान्तराशबलितत्वमित्यर्थः । तेनापि सुषमाविशेष एव व्यज्यते । लक्षणातः जहल्लक्षणयेत्यर्थः ॥ ५१ ॥ **हेतुष्विति** । हेतुषु उपादानादिकारणेष्वित्यर्थः । उत्कर्षः सौरभ्यभूयौन्नत्यं गाम्भीर्यादिप्रयोजकजातित्वगजराजत्वादिलक्षणो महिमेत्यर्थः । लक्षणात इत्यत्राप्यनुकर्षणीयम् । **पुष्पेति** । आदिना सानुमतोऽधित्यकाकीचकमारुतपूर्णरन्ध्रा द्विरदबृंहितं इत्यादि बोध्यम् । किमेतावता प्रकृत इत्यत आह—**तेनेति** । सर्वं चैतदुक्तं प्रदीप एव । अवतंसादिपदैर्जात्यादिपुरस्कारेण कर्णाभरणादीन्येवोच्यन्त इत्यर्थप्राप्तौ कर्णपदादीनां यद्यप्यपुष्टार्थत्वं पुनरुक्तत्वं वा युज्यते तथापि क्वचित्कर्णेऽवतंस इति व्युत्पत्त्या क्वचिल्लक्षणादिना च कर्णस्थित्यादिरूपस्याधिकस्य विवक्षितार्थस्य प्रतिपत्तेरदोषत्वम् । यथा—'तस्याः कर्णावतंसेन जितं सर्वविभूषणम् । तथैव शोभतेऽत्यर्थमस्याः श्रवणकुण्डलम्' । अत्रावतंसस्य कर्णस्थित्यवस्था कर्णपदोपादानेनावगम्यते । तदवगत्या किं प्रयोजनमिति चेत् । वर्णनीयोत्कर्षः । कथमितिचेत् । न स्वरूपतोऽस्य विभूषणजेतृत्वं किंतु तत्कर्णस्थित्येति पर्यवसानात् । एवं श्रवणकुण्डलपदेऽप्यूह्यम् । न केवलं कर्णश्रवणपदयोरेवायं महिमा किंत्वन्येषामपि । यथा—'अपूर्वमधुरामोदप्रमो-

**करिबृंहितशब्दादावयमेव नयो मतः ।**
**प्राचां मया तु तत्रेदं युक्त्यन्तरमपीर्यते ॥ ५२ ॥**

दितदिशस्ततः । आययुर्भृङ्गमुखराः शिरःशेखरशालिनः' । अत्र शिरःपदादाने शेखरस्वाम्यमात्रं लभ्यते नतु तदलंकृतत्वम् । तथाच तत्प्रतीतेरदोषत्वम्— 'विदीर्णाभिमुखारातिकराले संयुगान्तरे । धनुर्ज्याकिणचिह्नेन दोष्णा विस्फूर्जितं तव' । अत्र धनुःशब्दो ज्याया आरूढत्वप्रतिपादनाय तच्च किणस्य प्रहारकृतत्वप्रतिपत्तये यत्र त्वारूढत्वं तत्प्रतीतिप्रयोजनं वा नास्ति तत्र धनुःशब्दोपादानमपि । यथा—'ज्याबन्धनिःष्पन्दभुजेन यस्य विनिःश्वसद्वक्त्रपरंपरेण । कारागृहे निर्जितवासवेन लङ्केश्वरेणोषितमाप्रसादात्' । इत्यत्र 'प्राणेश्वरपरिष्वङ्गविभ्रमप्रतिपत्तिभिः । मुक्ताहारेण लसता हसतीव स्तनद्वयम् । अत्र हारशब्दस्य मुक्तासंदर्भशक्तत्वेऽपि न मुक्ताशब्दवैयर्थ्यम्' । अन्यरत्नामिश्रितत्वप्रतिपादनेनोत्प्रेक्षायामुपयोगात् । सौन्दर्यसंपत्तारुण्यं यस्यास्ते ते च विभ्रमाः । षट्पदान्पुष्पमालेव कान्ताकर्षति सा सखे' । अत्र मालाशब्दो यद्यपि पुष्पस्यैव स्रजि शक्तस्तथापि न पुष्पपदमपुष्टार्थं लक्षणयोत्कृष्टत्वप्रतिपादकत्वादिति । अधित्यकाद्युदाहरणे तु रघुवंशे यथा—'स पाटलायां गवि तस्थिवांसं धनुर्धरः केसरिणं ददर्श । अधित्यकायामिव धातुमय्यां लोध्रद्रुमं सानुमतः प्रफुल्लम्' । 'सकीचकैर्मारुतपूर्णरन्ध्रैः कूजद्भिरापादितवंशकृत्यम् । शुश्राव कुञ्जेषु यशः स्वमुच्चैरुद्गीयमानं वनदेवताभिः' इति । अत्र प्रथमोदाहरणे तावदधित्यकापदस्य पर्वतोर्ध्वभूम्येकशक्तत्वेन सानुमत इत्यस्यापुष्टार्थकत्वेऽपि निरुक्तभूम्युपादाने पर्वते सानूनि शिखराणि विद्यन्ते यस्येति व्युत्पत्त्या महोच्चत्वलक्षण उत्कर्ष एवोपमेयभूतायां नन्दिन्यां कामधेनुजन्यत्वेन स्वप्राणपणेनाप्यवश्यरक्षणीयत्वव्यञ्जनार्थं कवेः सूचनीयो न वस्तुतः सोस्ति । एवमन्त्येपि कीचकपदस्य वातपूरणरणद्वेणुशक्तत्वेन मारुतेत्यादेस्तथात्वभानेऽपि निजबीजे विजातीयगम्भीरस्वराविष्करणनिपुणजातीयत्वलक्षणप्रकृतनृपतियशसि वनदेवतागीयमानतोत्प्रेक्षणार्थं कवेः संमत इत्याकूतम् । हारादिपदानां मुक्तावल्यादिष्वेव शक्तिग्रहः कोशादेरेव । तद्यथा 'हारो मुक्तावली' इति, 'माल्यं मालास्रजौ' इति, 'उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका' इति, 'वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः' इति चामरे । कविसमयेऽपि— 'त्वत्कीर्तिमौक्तिककुलानि गुणैस्त्वदीयैः संदर्भितुं निखिलदिग्ललनाः प्रवृत्ताः । नान्तो गुणेषु न च कीर्तिषु रन्ध्रलेशो हारो न जात इति तास्तु मिथो हसन्ति' इति । यथावा—'हारोऽयं हरिणाक्षीणां लुठति स्तनमण्डले । मुक्तानामप्यवस्थेयं के वयं स्मरकिंकराः' इति च । अत्र पूर्वार्धोक्तरूपकाद्यन्यथानुपपत्त्या हारपदस्य मुक्तावल्यामेव शक्तिरध्यवसीयते । एवं मालाद्युदाहरणान्यपि धीरैर्ध्येयानीति दिक् ॥ ५२ ॥ ननु निरुक्तव्यवस्थायास्तत्तदर्थभेदभिन्नत्वेनाननुगततया गौरवाव्रजनान्नृतेरेवासंभवेन तत्साध्यार्थपरिपोषस्य दूरोत्सारितत्वाल्लक्षणयैव प्रकृतार्थ-

निर्वाहाङ्गीकारे परम्परासंबन्धस्य प्रकृतार्थसाधकतया तस्य तु गङ्गायां घोष इत्यादिप्रसिद्धलक्षणोदाहरणेष्वदृष्टचरत्वात्सति विशेषणसमवधाने विशिष्टवाचकः शब्दः विशेष्यमात्रवाचकः अनुपयुक्तसंबद्धपदान्तरघटितशब्दत्वात्करिबृंहितशब्दव-द्व्यतिरेके विशेषणासमवहितोक्तशब्दवच्चेत्यनुमानेन व्युत्पत्तिविशेषनियमादुक्तदोषा-वमोषे सति निरुक्ताननुगतकल्पनायाः स्वल्पमतित्वापादकत्वाद्व्यञ्जनावृत्तेरपि सर्वत्र शाब्दबोधे शक्तिलक्षणान्यतरमात्रसाध्यत्वेऽनुभूयमाने तृतीयवृत्त्यङ्गीकारस्य गौर-वरौरवायितत्वेन स्वप्नेऽपि विपश्चिदादरणीयत्वरहितत्वादस्तं गतः सवितेत्यादौ तु तत्तदधिकारिणां निरुक्तवाक्यश्रवणोत्तरं जायमानविविधस्वस्वशाब्दबोधानुकूलानां निरुक्तशाब्दबोधान्यथानुपपत्त्या सिद्धानां मानसवाक्यान्तराणामेवावश्यकल्प्यत्वा-त्कपाटमित्याद्यध्याहारोदाहरणे पदकल्पनावत्प्रकृतेऽपि वाक्यकल्पनायां बाधका-भावात्फलमुखगौरवस्यादूषकत्ववादस्य तु असत्यां तृतीयवृत्तौ व्योमकुसुमायमान-त्वाच्च तुच्छैवेयं कर्णावतंसादिपदेषु तत्स्थत्वादिकल्पनया वर्ण्योत्कर्षादिध्वननव्य-वस्थाऽनास्थितप्रमाणपाटवभट्टारकदौवारिकाणामालंकारिकाणामिति चेदुच्यते । अर्थभेदभिन्नत्वेनोक्तव्यवस्थाविशेषस्य भिन्नतयाऽननुगतत्वेऽपि वर्ण्योत्कर्षत्वरूपध-र्मस्य सर्वत्रानुगतत्वात् । तस्यैव तत्र तत्रोपक्रमादिना तात्पर्यविषयीभूतत्वात् । तव तदभानेऽपि अपाक्षिकप्रेक्षावतां शब्दार्थमर्यादाधुरंधरपुरंदरायितसतां तस्य करतलरसालफलायमानत्वात् । लक्षणैकलक्ष्यस्य तवायुर्घृत लाङ्गलं जीवनमि-त्यादौ भूरितरतत्तदुदाहरणान्तरेषु परंपरासंबन्धघटितेष्वपि गत्यन्तराभावेनोक्ता-दृष्टचरत्वोक्तेरयुक्ततमत्वान्निरुक्तानुमानस्य तु तर्कानुगृहीतत्वेनैव साध्यसाधकतायां यदि विशेष्यमात्रवाचको न स्यात्तर्हि अनुपयुक्तसंबद्धपदान्तरघटितशब्दोऽपि न स्यात् । यतस्तथा वर्तत एवातो विशेष्यमात्रवाचक एवेत्यादिरूपस्य तस्य प्रकृ-तकाव्योदाहरणेषु कवेर्वर्ण्योत्कर्षमात्रतात्पर्यकत्वेन तत्परिपोषार्थमेव विशेषणवा-चकशब्दसमवहितस्यापि विशिष्टवाचकशब्दस्य तेन प्रयुक्तत्वेनाप्रयोजकत्वादियं गौः सास्नावतीत्याद्यभ्रान्तलौकिकवाक्यादावपि सास्नायां किंचित्प्राशस्त्यमदृष्ट्वा प्रमाणचणैर्वक्रुमयुक्तत्वेन वर्ण्योत्कर्ष एव पर्यवसानात् । अन्यथोन्मत्तप्रलपित-त्वापातात् । व्यञ्जनावृत्त्यनङ्गीकारस्य तु कुलाचारायमाणत्वात् । अद्वैतिनां व्यञ्ज-नावृत्त्यनङ्गीकारस्तु वेदैकविषयक इति न तन्निदर्शनेन लौकिकवाक्येऽपि तदनङ्गी-कारः स्यात् । अन्यथा शाब्दिकानामपि तदनङ्गीकारापत्तेः । अधस्तादेव भूरितरं तस्याः समर्थितत्वात् । तथैव सर्वसाधारण्येनानुभूयमानत्वादस्तं गतः सवितेत्या-दावनेकवाक्यतत्कारणकलापादिकल्पनापेक्षया क्लृप्तशब्द एव तत्तदधिकार्यवच्छे-देन विविधशाब्दबोधजनिकाया व्यञ्जनावृत्तेरेव कल्पनलाघवस्य बालैरपि समाकलनीयत्वादेकस्मिन्नेव चन्द्रे स्वाभ्युदयमात्रेण चकोरतर्पकत्वकुमुद-विकासत्वचक्रवाकदाहकत्वचन्द्रकान्तद्रावकत्वविरहिणीक्षोभकत्वादिशक्तेः सर्व-संमतत्ववत्प्रकृतशब्दशक्तेरप्यचिन्त्यमहिमत्वस्य पूर्वाचार्यचक्रवर्तिचरणनखचन्द्र-

**स्वपरोद्भासकस्यापि बलवद्भासके सति।**
**स्वमात्रभासकत्वं स्यात्सौरालोके प्रदीपवत्॥ ५४॥**
**विशिष्टवाचके शब्दे तद्वत्सति विशेषणे।**
**विशेष्यमात्रवाचित्वं करिबृंहितवद्रघौ॥ ५५॥**
**व्यञ्जनं तु ततो रूढात्सामर्थ्यात्स्यादलौकिकम्।**
**तत्तदर्थस्य कस्तूर्याः संरोधात्सौरभोपमम्॥ ५६॥**

---

किरणायमानत्वात् कपाटमित्यादौ तु गत्यन्तरविरहैकायत्ताध्याहारस्य सत्यां सर्वसंमतोत्तमतमगत्यां निदर्शनानर्हत्वात्किंचित्संकुचिताशक्त्यैवार्धनारीश्वरवत्सति सर्वदोषावमोषलाभे लक्षणादिजघन्यवृत्त्या महार्थलाभार्थं यत्नस्य वारस्त्रीतरप्तुदशामयुक्तत्वेऽपि शक्तिमन्तरैव लक्षणादिनापि सर्वदोषनिकषणपुरःसरं सर्वतोषपरिपोषकार्थस्य विशुद्धबोधवल्लाभसंभवे सति शक्तिसंत्यागस्य सकलकोविदादरणीयतरत्वाच्च युक्तमेवोक्तव्यवस्थापनमित्याशयेनोक्तन्यायं करिबृंहितशब्दादावपि प्राचीनमतसिद्धत्वेनातिदिश्यैतादृशस्थले स्वसंमतं किंचिद्युक्त्यन्तरमपि कथयितुं प्रतिजानीते—**करिबृंहितेति**। प्राचां मत इति संबन्धः। तदुक्तं काव्यप्रदीपे पूर्वोक्तव्यवस्थां प्रकृत्य अयमेव करिबृंहितन्याय इति॥ ५३॥ किं तदित्याकाङ्क्षां पूरयंस्तदाह—**स्वपरे**ति युग्मेन। तदुदाहरति—**सौरेति**। यथा स्वपरोद्भासकस्यापि प्रदीपस्य सौरालोकाख्ये सूर्यप्रकाशरूपे बलवद्भासके स्वापेक्षयाऽधिक स्वपरप्रकाशके सति स्वमात्रभासकत्वं लोके दृष्टं तद्वदित्युत्तरेणान्वयः॥ ५४॥ **विशिष्टेति**। तद्वत्पूर्वपद्योक्तदृष्टान्तवत्। विशिष्टवाचके शब्देऽधिकरणेऽपि विशेषणेन येन विशेषणेन विशिष्टस्यार्थस्य प्रकृतशब्दो वाचकस्तस्यैव धर्मस्य वाचके तद्वाक्यावच्छेदेनैव शब्दान्तरे विद्यमाने सतीत्यर्थः। **विशेष्येति**। धर्मिमात्रवाचकत्वं स्यादित्यध्याहृत्यान्वयः। धर्माश्रयीभूताधिकरणैकबोधकत्वं भवेदिति भावः। तदुदाहरति—**करीति**। रघौ रघुवंशे यथा तदीयनवमसर्गे-'कुम्भपूरणभवः पटुरुच्चैरुच्चचार निनदोऽम्भसि तस्याः। तत्र स द्विरदबृंहितशङ्की शब्दपातिनमिषुं विससर्ज' इति। अत्र बृंहितं करिगर्जितमित्यमराद्बृंहितशब्दस्य करिसंबन्धित्वविशिष्टगर्जितपदशक्यमहाध्वनिवाचकत्वेन विशिष्टवाचकत्वेऽपि द्विरदपदाभिधेयतद्विशेषणीभूतकरिवाचकद्विरदपदाख्यविशेषणस्य विद्यमानत्वेन करिसंबन्धित्वरूपविशेषणशून्यगर्जिताख्यविशेष्यमात्रवाचकत्वं ज्ञेयम्। एवमन्यत्रापि प्रागुक्तोदाहरणेष्वपीत्याशयः॥ ५५॥ नन्वेवं चेत्तर्ह्यत्रांशतो जहल्लक्षणासाध्यतत्तदर्थावबोधकाद्विशिष्टवाचकानां पदानां सति विशेषणसमवधाने विशेष्यमात्रवाचकत्वमित्यादिनियमरूपनैयायिकोक्तव्युत्पत्तिविशेषात्सूर्यालोकप्रदीपरूपदृष्टान्त एवाधिको नत्वपरं किंचिदपीत्यतो वरं प्रागुपन्यस्तमालंकारिकमतमेवेति चेन्न। नैयायिकमतस्य तु काव्यार्थपरिपोषकत्वाभावदोषदुष्टत्वेनानादरणीयत्वादुपन्यस्तालंकारिकमतस्यापि कर्णावतंसमुक्ताहारपुष्पमालाद्यनेकोदाहरणेष्वनु-

**एवं क्वचिद्विशेष्येऽपि बाधे विधिनिषेधयोः ।**
**विशेषणैकवाचित्वं पुत्रासेत्यादिवाक्ययोः ॥ ५७ ॥**
**गजे वा गर्जिते किंचिन्न हेतूत्कर्षतः फलम् ।**
**पुत्री जातः शिखी ध्वस्त इत्यादावपि दृश्यते ॥ ५८ ॥**

---

गतैकयुक्त्यभावेनानियमापत्तिकल्पनागौरवाभ्यां करिबृंहितस्थले हेतुपूत्कर्ष एवेष्टः पुष्पमालाद्युदाहृताविल्यनुपदोक्तहेतूत्कर्षस्य निष्प्रयोजनतायाः प्रतिपदमेव वक्ष्यमाणत्वेन च प्रौढिवादमात्रत्वान्मदुक्तसौरालोकप्रदीपदृष्टान्तानुगृहीतस्वपरोद्भासकस्यापीत्यादिनियमस्य कर्णावतंसादियावदुदाहरणानुगतत्वसंभवेन रुद्धकस्तूरीनिदर्शनलब्धयावदपेक्षितलोकोत्तरतत्तदर्थध्वनिलाभेन च काव्यार्थस्यातुलपरिपोषजनकत्वाच्चेत्याकूतेन यदि विशिष्टकवाचकशब्दस्य सति विशेषणसमवधाने विशेष्यमात्रवाचकत्वनियमो नैयायिकवत्तर्हि निरुक्तालंकारिकमतसिद्धसकलसहृदयहृदयामोदिकर्णावतंसपदादिषु तद्गतत्वादियोतितनायिकासौन्दर्यादि कथं सिद्ध्येदित्याशङ्कामपि सोदाहरणव्याप्त्यन्तरसूचनेनापनयति—व्यञ्जन त्विति । तुशब्दः प्रोक्तशङ्काशान्त्यै । तत्रैवं प्रयोगः । सविशेषणो विशिष्टवाचकः शब्दः अलौकिकार्थव्यञ्जकः रुद्धशक्तिकत्वात् । यो यो रुद्धशक्तिकः सोऽलौकिकार्थव्यञ्जकः यथारुद्धकस्तूरीति । सा हि पटादिना रुद्धैव भूरिसौरभमाविर्भावयतीति प्रसिद्धमेव । एवं च यत्रयत्र कर्णावतंसपदादौ ये ये नायिकासौन्दर्यादयोऽर्थाः कव्याद्यभिप्रेतास्ते सर्वेऽपि निरुक्तशक्तिमूलानुगतव्यञ्जनावृत्तिमात्रेणैव सिद्ध्यन्तीति सर्वमनवद्यम् ॥ ५६ ॥ अथोक्तन्यायं विशिष्टवाचकस्य शब्दस्य विशेष्यबाधेन विशेषणमात्रवाचित्वस्थलेऽप्यतिदिशति—**एवमिति**। विशेष्ये विषयेऽपि विधिनिषेधयोःबाधे सति क्वचित्पुत्री आस पुत्री जातः।आदिना शिखी ध्वस्त इति वाक्ययोः। एवं प्रागुक्तविशेष्यमात्रवाचिकवद्विशेषणैकवाचित्वं विशेष्ये देवदत्तपुत्रशिखालक्षणविशेषणावच्छेदेन प्रवृत्तनिरुक्तजनिध्वंसात्मकविधिनिषेधयोः प्रत्यक्षादिना बाधात्पुत्रादिविशेषणमात्रवाचकत्वं प्रागुक्तशक्तिसंकोचनेन विज्ञेयमित्यन्वयः । अत एवाहुः । सविशेषणे हि विधिनिषेधौ विशेषणमुपसंक्रामतः सति विशेष्ये बाध इति ॥ ५७ ॥ ननु किमेतावता प्राचीनोक्तौ त्वदुक्तौ च किंचिद्युक्तिभेदेऽपि फलं तावदेकमेव तत्तदर्थध्वनिलक्षणमिति चेन्न । 'हेतुपूत्कर्ष एवेष्टः पुष्पमालाद्युदाहृतौ' इत्यत्रादिपदेन तत्संमते अयमेव करिबृंहितन्याय इति काव्यप्रदीपोक्तेः करिबृंहिताद्युदाहरणे गजपदार्थगर्जितपदार्थयोर्हेतूत्कर्षध्वननजन्यफलादर्शनात्पुत्री जात इत्यादावपि तदनवलोकनाच्चेत्याह—**गजे वेति** । गजे करिबृंहितोदाहरणगतदन्तिनीत्यर्थः । गर्जिते बृंहिते वा हेतूत्कर्षतः कारणोत्कर्षध्वननादितियावत् । किंचित् स्वल्पमपि फलं तथा—**पुत्रीत्यादि** । आदिना अयं कोकिलः कलगीरित्यादि । अपिः समुच्चये । न दृश्यत इति संबन्धः ॥ ५८ ॥ समानमिदं

**मद्रीत्या तु रघौ पित्राहतेभामास्त्रसंस्मृतेः ।**
**निषिद्धेऽपि च लोभेन प्रवृत्तिद्योतनं फलम् ॥ ५९ ॥**

त्वत्पक्षेऽप्याक्षेपजातमित्याशङ्क्य तत्रत्यं विशेषं संक्षिपन्दूषणं प्रमोषयति—**मद्रीत्यात्वित्यादिद्वाभ्याम्** । तुशब्दः प्रोक्तमतवैलक्षण्यार्थः । मद्रीत्या मदुक्तस्वपरेत्यादिग्रन्थपद्धत्येत्यर्थः । रघौ 'कुम्भपूरणभवः पटुरुच्चैरुच्चचार निनदोऽम्भसि तस्याः। तत्र स द्विरदबृंहितशङ्की शब्दपातिनमिषुं विससर्ज' इति रघुवंशीयनवमसर्गपद्योक्तद्विरदबृंहितशङ्कीति वाक्य इति यावत् । **पित्रेति** । पित्रा स्वजनकेन अजेन आ ईषत् परावर्तनार्थमेव नतु हिंसनार्थं हतः इषुणा कुम्भस्थले ताडितः एतादृशः य इभः वनगजः मतंगमुन्यपराधजन्यशापप्राप्तमतंगजत्वः प्रियदर्शनाख्यगन्धर्वपुत्रः प्रियंवदशर्मा गन्धर्व इत्यर्थः । तस्मात् आप्तं स्वपित्रैव प्राप्त यदस्त्रं संमोहनाख्यं गान्धर्वास्त्रं तस्य या संस्मृतिः पूर्वतनतत्कथाश्रवणजन्यशाब्दबोधसंस्कारैर्वन्यनिरुक्तशब्दाकर्णनसमुद्दीपनजन्यज्ञानादिति यावत् । **निषिद्धेति** । लक्ष्मीकामो युद्धादन्यत्र करिवधं न कुर्यात् । 'इदं हि श्रीर्ये करिणः' इति मल्लीनाथोदाहृतवचनेन क्षत्रियाणां युद्धेतरकालावच्छेदेन मृगयादौ गजवधस्य निन्दितत्वेन तादृशेऽपि कर्मणीत्यर्थः । लोभेन पितुर्यथा लाभः संपन्नस्तद्वन्ममापि स्यादिति तृष्णाविशेषेणेत्यर्थः। **प्रवृत्तीति** । निरुक्तकरिहनने दशरथस्यापि प्रवृत्तिसूचनमिति यावत् । फलं अहो एतादृशमहानुभावस्याप्युक्तराजसवृत्तिवशादुक्तनिषिद्धकर्मण्यपि प्रवृत्तिः संपन्ना तत्फलमपि सद्य एव श्रावणवधतन्मातापितृशापादि च संजातमतः कैव कथा मादृशां पामराणां सति विषयसन्निधाने निषिद्धेऽपि प्रवृत्तेस्तेन सर्वथा हितेच्छुना तादृग्विषयसंनिधानमेव न संपादनीयं । यदि कदाचिद्दैवात्संपन्नं चेत्तत्रातिभीतेन सावधानतमेन च सर्वदा भाव्यमिति काव्योपदेशरूपं प्रयोजनं भवतीति योजना । सर्वमिदं कथाजातं तत्रैव पञ्चमसर्गे प्रसिद्धम् । तद्यथा इन्दुमतीस्वयंवरार्थं रघुणा प्रेषितः ससैन्योऽजः कुमारः पथ्येव रेवा जलादुन्मग्नं सेनागजराजनिरीक्षणेन युयुत्सुं वनदन्तिनं निरीक्ष्येत्युपक्रम्य 'तमापतन्तं नृपतेरवध्यो वन्यः करीति श्रुतवान्कुमारः । निवर्तयिष्यन्विशिखेन कुम्भे जघान नात्यायतकृष्टशार्ङ्गः ॥ स विद्धमात्रः किल नागरूपमुत्सृज्य तद्विस्मितसैन्यदृष्टः ।स्फुरत्प्रभामण्डलमध्यवर्ति कान्तं वपुर्व्योमचरं प्रपेदे ॥ अथ प्रभावोपनतैः कुमारं कल्पद्रुमोत्थैरवकीर्य पुष्पैः । उवाच वाग्मी दशनप्रभाभिः संवर्धितोरःस्थलतारहारः ॥ मतंगशापादवलेपमूलादवाप्तवानस्मि मतंगजत्वम् । अवेहि गन्धर्वपतेस्तनूजं प्रियंवदं मां प्रियदर्शनस्य ॥ स चानुनीतः प्रणतेन पश्चान्मया महर्षिर्मृदुतामगच्छत् । उष्णत्वमग्न्यातपसंप्रयोगाच्छैत्यं हि यत्सा प्रकृतिर्जलस्य ॥ इक्ष्वाकुवंशप्रभवो यदा ते भेत्स्यत्यजः कुम्भमयोमुखेन । संयोक्ष्यसे स्वेन वपुर्महिम्ना तदेत्यवोचत्स तपोनिधिर्माम् ॥ संमोचितः सत्ववता त्वयाऽहं शापाच्चिरप्रार्थितदर्शनेन । प्रतिप्रियं चेद्भवतो न कुर्यां वृथैव मे स्यात्स्वपदोपलब्धिः ॥ संमोहनं नाम सखे ममास्त्रं प्रयोगसंहारविभक्तमन्त्रम् ।

**मनुष्यलोकविजयो जीवन्मुक्तत्वयोग्यता ।**
**पुत्री जातः शिखी ध्वस्त इत्यादावपि तत्क्रमात् ॥ ६० ॥**
**महाकविप्रयुक्तेषु शब्देष्वेवैष निर्णयः ।**
**नतु स्वेच्छाप्रयुक्तेष्वप्यग्रिमञ्जीरशब्दवत् ॥ ६१ ॥**
**वामनीयमतेऽपुष्टोऽप्युपेयश्चेद्विशेष्यते ।**
**प्रसन्नेन मुखाब्जेन सा जगाद प्रियं प्रति ॥ ६२ ॥**

---

गान्धर्वमादत्स्व यतः प्रयोक्तुर्न चारिहिंसा विजयश्च हस्ते ॥ अलं ह्रिया मां प्रति यन्मुहूर्तं दयापरोऽभूः प्रहरन्नपि त्वम् । तस्मादुपच्छन्दयति प्रयोज्यं मयि त्वया न प्रतिषेधरौक्ष्यम् । तथेत्युपस्पृश्य पयः पवित्रं सोमोद्भवायाः सरितो नृसोमः । उदङ्मुखः सोऽस्त्रविदस्त्रमन्त्रं जग्राह तस्मान्निगृहीतशापात्' इति ॥ ५९ ॥ **मनुष्येति** । एवं पुत्री जात इत्यत्र मनुष्यलोकविजय एव 'सोऽयं मनुष्यलोकः पुत्रेणैव जय्यः' इति श्रुतेर्मृतस्य पश्चात्पुत्रोऽस्तीतीहलोकस्था एव संभावयन्तीति तत्प्रख्यालक्षण एव तज्जयः प्रागुक्तरीत्या विशेष्यीभूतदेवदत्तस्य सिद्धत्वेन तज्जन्मविधानबाधात्पुत्रीति विशिष्टवाचकपदस्य शक्तिसंकोचेन पुत्ररूपविशेषणमात्रपरत्वेऽपि निरुक्तसंकुचितशक्तिमूलकव्यञ्जनावृत्त्या द्योतित इति । तथा शिखी ध्वस्त इत्यत्रापि शिखी शिखावान् ध्वस्त उपशान्तः संन्यासेन विनष्ट इति, विशेष्यीभूतदेवदत्तस्य विद्यमानत्वेन ध्वंसलक्षणनिषेधबाधाद्विशेषणीभूतशिखामात्रपरत्वे निरुक्तरीत्या संकुचितशक्तिमूलकव्यञ्जनया जीवन्मुक्तत्वयोग्यता व्यज्यत इति च क्रमादनुक्रमेण तत्काव्यार्थपरिपोषरूपं फलमस्तीत्यन्वयः । आदिपदेनायं कोकिलः कलगीरिति प्राग्गृहीतवाक्यान्तरेऽपि कोकिलजात्यवच्छेदेनैव कलगीष्ट्वसिद्धावुक्तविधानवैयर्थ्येऽपि तद्ध्वनितवसन्तप्राप्त्यादि च फलमुन्नेयमेवेत्याशयः । तस्मान्न काप्यत्रानुपपत्तिरिति तत्त्वम् ॥ ६० ॥ इयमपि व्यवस्था प्राचीनमहाकविप्रयोगेष्वेव नत्वेवंजातीयकाधुनिकविरचितप्रयोगान्तरेष्वपीत्यभिनवप्रयोगप्रदर्शनपूर्वकं नियमयति—**महाकवीति** । तदुक्तं प्रदीपएव—'महाकविप्रयुक्तेष्वेवं वै समाधानं नतु स्वेच्छया कर्णावतंसादिवज्जघनकाञ्च्यादिः करिकलभवदुष्टकरभादि वा प्रयोक्तव्यम्' इति ॥ ६१ ॥ अथ मतान्तरेण रीत्यन्तरादपुष्टार्थसमुपादानसमर्थनं कथयति—**वामनीय इति** । विशेष्यते विशेषणविषयीक्रियते चेदित्यर्थः । तर्हि अपुष्टोऽप्यर्थ उपेयः स्वीकार्य इत्यन्वयः । तदुक्तं प्रदीपे—'वामनस्त्वपुष्टस्यापि तत्रोपादानमुचितं यत्र तद्विशेष्यते । अन्यथा कुतस्तद्विशेषणान्वयः स्यात्' इति । तदुदाहरति—**प्रसन्नेनेति** । अत्र 'गद व्यक्तायां वाचि' इति स्मरणात्तद्व्यापारस्य च मुखमन्तरा संभवाभावान्मुखपदार्थस्यापुष्टत्वेऽपि अब्जप्रसन्नपदार्थाभ्यां तस्य रूपकादिना विशेषणीयत्वात्तदुपादानं गुण एवेति भावः । यथावा काव्यप्रदीपकर्तुरेव पद्ये—'निवातपद्मोदरसोदराभ्यां विलोचनाभ्यामवलोकयन्ती । न केवलं यूनि मनोभवेऽपि व्यनक्ति किंचित्तपसः

**ग्राम्योऽपि गुणतामेति हास्ये च भणितेऽधमे ।**
**द्रौणिश्छिन्नोर्ध्ववपनः पत्युर्मे भिह्युपस्वप ॥ ६३ ॥**
**संदिग्धोऽपि गुणः संदेहस्यैवोद्देश्यता यदि ।**
**प्रतिसूर्योदयं कान्त पद्मिन्यः सन्ति किं नवाः ॥ ६४ ॥**

---

प्रभावम्' इति । अत्र निवातपद्मोदरसोदरत्वस्येव मदुदाहरणेऽपि अब्जलस्य प्रसन्नं वै प्रसन्नेव वेति प्रसन्नत्वस्येव क्रियाकर्त्रन्यतरविशेषणत्वासंभवात्सदुदाहरणत्वमेव । विस्तरस्तु वामनोक्तोदाहरणे काव्यप्रकाशोक्तक्रियाविशेषणत्वेन निर्वाहादनुदाहरणत्वं तदुक्तोदाहरणे कर्तृविशेषणत्वेन तथात्वं चेत्यादिस्तत्रैव द्रष्टव्य इति दिक् ॥ ६२ ॥ अथ ग्राम्यमर्थमपवदति—**ग्राम्योऽपीति ।** अपिनायमर्थो द्योत्यते दूषकता चाश्लीलवत् । किंचैतादृशोक्तिकवलितो विभावादिरूपोऽर्थो न रसाय पर्याप्यते भृष्टमिव बीजमङ्कुरायेतीति प्रदीपकारेण नित्यदोषत्वेन ग्राम्योऽर्थः सूचितोऽपीति । हास्ये हास्यरसे तथा अधमे अधमवक्तृकत्वेनातिनिन्द्ये भणिते कथाविशेषप्रसङ्गेन नीचस्त्रीपुंसयोः सुरतवार्तावर्णन इत्यर्थः । ग्राम्योऽर्थोऽपि गुणतामेतीति संबन्धः । उक्तंहि चन्द्रालोके—'मुखं चन्द्रश्रियं धत्ते श्वेतश्मश्रुकराङ्कुरैः । अत्र हास्यरसोद्देशे ग्राम्यत्वं गुणतां गतम्' इति । नचेदं शब्दपरमेवेति । अर्थपरत्वेऽप्यदोषात्प्रत्युत प्रकृतरसपोषाच्च । तस्मात्प्रदीपवाक्यं त्वेतद्भिन्नविषयमिति ध्येयम् । तदुदाहरति—**द्रौणिरिति ।** द्रौणिः अश्वत्थामा । इदं हि तच्छिरोमणिच्छेदकालिकं कस्यचित्पामरस्य वाक्यम् । यथावा रसगङ्गाधरे—'श्रीतातपादैर्विहिते निबन्धे निरूपिता नूतनयुक्तिरेषा । अङ्गं गवां पूर्वमहो पवित्रं नवा कथं रासभधर्मपत्न्याः' इति । द्वितीयस्याप्येवमुन्नेयमुदाहरणान्तरम् ॥ ६३ ॥ एवं संदिग्धमप्यपवदति—**संदिग्धोऽपीति ।** तदुक्तं प्रदीपे—'यत्र तु संदेह एवोद्देश्यस्तत्रादोषत्वमेवेतीति । तदुदाहरति—**प्रतीति ।** इदं हि प्रथमं प्रवसन्तं स्वकान्तं प्रति सतीवचः । अयि कान्त भो सुभग । एतेन रूपाद्यखिलगुणवत्त्वेनापि निरतिशयस्वीयप्रीतिविषयत्वं व्यज्यते । तथा वक्ष्यमाणव्यङ्ग्यमर्यादासिद्धसूर्योपमानार्हत्वं च । कान्तिमत्त्वेन कान्तत्वस्योभयसाधारण्यात् । पद्मिन्यः नतु बिसिन्यः । एवंच पद्मिन्याख्यस्त्रीजातिमत्त्वं स्वस्यां द्योत्यते । तेन सर्वथा वियोजनानर्हत्वं च । प्रतिसूर्योदयं नतु प्रतिप्रभातम् । तथाच तासां स्वनायकैकदर्शनविकसमानत्वेन ध्वन्यध्वसिद्धस्वकीयोपमानार्हत्वं ध्वन्यते । तेन यदा जडानां जडजानामपि पद्मिनीनां सामान्यतः सर्वासामपि स्वनायकैकदर्शनविकसनशीलत्वं तद्विरहे तु मुकुलितत्वमेव तदा चेतनायाश्चेतनजायाश्च तस्याः मम तथात्वे कैमुतिकन्यायः तासां को वा महोत्कर्ष इति युष्मद्विरहे मूर्च्छानैयत्यं पातिव्रत्यगर्वराहित्यं तेनोत्तमनायिकात्वं च सूच्यते । नवाः नूतनाः सन्ति किं इति प्रश्नः । तेन न सन्ति वेति द्वितीया कोटिर्ध्वन्यते । तथाच कोटिद्वयेऽपि क्रमात् तत्क्षणाभिनवविकासः पद्मिनीत्वेनैव पतिविरहक्षण

**गुणो निर्हेतुरप्यत्र हेतोर्लाभे प्रसिद्धितः।**
**राधे संप्रार्थयेऽहं त्वां मानमेन त्यज प्रिये ॥ ६५ ॥**
**औत्पातिके कवेः संविद्विरुद्धोऽपि भवेद्गुणः।**
**भो दशग्रीव नीपोऽयं मम पल्लवपल्लवी ॥ ६६ ॥**

एव मरणसंभवश्चेति हेतू द्योत्येते। एवं चाहं श्रीमद्विरहे एव मरिष्यामीत्यतो नैव भवद्भिः प्रवसितव्यमित्याकूतम्। अत्र निरुक्तसंदेहस्यैव प्रियमनसि व्यञ्जनयैव वक्रोक्तितः स्वाशयसूचनाय तथा शब्दार्थोभयसंदेहेन प्रश्नोत्तरस्य तद्विवेचनादिपूर्वकं प्रदातुमर्हत्वेन यावत्कालं मत्प्रश्नोत्तरे विलम्बो लगिष्यति तावत्कालमपि प्रेयःसङ्गःस्यादित्यादिस्वाभीष्टायोद्देश्यत्वात्संदिग्धोऽप्युक्तलक्षणोर्थो गुण एवेति भावः। यथावा—'एकः पपौ भुवनभीकरकालकूटमन्यः पपौ स्तनविषं खलु पूतनायाः। को वानयोरधिक इत्यनुचिन्त्य वृद्धाः सत्यं ब्रुवन्तु तमिमं वयमाश्रयामः' इति। इहेदंशब्दान्यथानुपपत्तिसिद्धतुल्यकालोभयसाक्षात्कारध्वनिताद्वैतात्मनिष्ठावत्त्वेन वस्तुतः स्वस्य संदेहाभावेऽप्येकभक्तिप्रतिष्ठापनार्थं वैष्णवंमन्यक्षोभणाय संदेहस्यैवोद्देश्यत्वात्संदिग्धोऽप्युक्तोर्थो गुण एवेति संक्षेपः ॥६४॥ एवं निर्हेतुमप्यपवदति—**गुण इति**। अत्र अलंकारशास्त्रविवक्षितकाव्ये प्रसिद्धितः। प्रत्यक्षादिप्रमाणान्तरत इति यावत्। हेतोर्लाभे सतीत्यर्थः। निर्हेतुरप्यर्थः गुणो भवतीति संबन्धः। अतएवोक्तमिमं प्रकृत्य प्रदीपे—'दुष्टिबीजं चात्रोद्देश्यप्रतीतिविरहः, अतएव प्रसिद्धावनुपादानेऽपि न दोषः' इति। तमुदाहरति—**राध इति**। इदं हि मानवतीं राधिकां प्रति श्रीकृष्णवाक्यम्। अयि राधे, अहं त्वां प्रति संप्रार्थये। किं तदित्यत आह—मानमिति। हे प्रिये—एतेन मदुपेक्षाविषयत्वानर्हत्वं द्योत्यते। त्वं एतं प्रत्यक्षम्। एवं चापलापानर्हत्वं सूच्यते। त्यजेति योजना। अत्र कुतो मानत्यागं प्रार्थयसीत्याकाङ्क्षितहेतोरनुक्तावपि तस्य रतिसंपादनलक्षणस्य सुप्रसिद्धत्वाद्गुणत्वमेवेत्याशयः। यथावा मदीये नीतिशतपत्रे—'तारुण्यारोपितगुणे सुन्दरीभ्रूशरासने। नम्रत्वमेव संपाद्य जगज्जयति मन्मथः' इति ॥ ६५ ॥ अथ विरुद्धेषु कविसंविद्विरुद्धमेकमपवदति—**औत्पातिक इति**। उत्पातस्य महानर्थस्यायमौत्पातिकः उत्पातसूचकस्तस्मिन्नर्थ इत्यर्थः। तदुक्तं प्रदीपे तं प्रकृत्य 'दूषकताबीजं च विरोधादर्थाप्रतीतिः' इति उत्पातादिना तत्प्रतीतावदोष इति। तमुदाहरति—**भो इति**। इदं हि रावणं प्रति रहो निष्कुटविहारे मन्दोदरीवचः। नीपः 'नीपो धूलिकदम्बे स्यान्नीलाशोके च धन्विनि' इति विश्वादशोक इत्यर्थः। **पल्लवेति**। पदः लवः स्पर्शलेशस्तेन पल्लवी नतु पुष्पित इतियावत्। तस्मात् 'पादाहतः प्रमदया विकसत्यशोकः' इति वचनादुक्तपल्लवनरूपोऽर्थः कविसमयविरुद्धोऽपि भाव्युत्पातसूचकत्वाद्गुण एवेति

विशेषपरिवृत्तोऽपि गुणः प्रकरणादि चेत्।
शृण्वयि ब्रह्मजिज्ञासो दृश्यं मृगजलोपमम्॥ ६७॥
गुणो युक्तानुवादोऽपि वक्तोन्मादी भवेद्यदि।
विरहिघ्नघनाद्यत्वं राधां मां कृष्ण पश्य किम्॥ ६८॥
क्वचिदायाति गुणतामश्लीलोऽर्थोऽपि शब्दवत्।
एवं रुद्रार्थदोषाणामपवादाः प्रकीर्तिताः॥ ६९॥
सत्यन्यरससामान्येऽनुभावे स्वपदेरितः।
संचारी नैव दोषः श्रीर्लज्जया वलितानना॥ ७०॥

---

भावः। एवमन्यदप्युन्नेयम्॥ ६६॥ एवं विशेषपरिवृत्तमपवदति—**विशेषेति**। यदि प्रकरणादि चेत्तर्हि विशेषपरिवृत्तोऽपि गुणः स्यादिति संबन्धः। आदिना लिङ्गादि। तमुदाहरति—**शृण्विति**। **ब्रह्मेति**। 'ब्रह्म प्रोक्तं तपोध्यात्मवेदज्ञानेषु सूरिभिः' इति विश्वात् शृण्वय्यद्वैतजिज्ञासो इति विशेषविन्यासो वाच्यस्तेनायं विशेषपरिवृत्तोऽर्थदोषोऽपि अद्वैतब्रह्मण एव प्रकरणाद्दृश्यमित्याद्युपदेशलक्षणतन्मात्रघटकलिङ्गाच्च गुण एवेति भावः। तदुक्तं प्रदीपे—'विशेषनियामकप्रकरणादिसत्त्वे त्वदोषत्वम्' इति। यथावा बालरामायणे—'सद्यः पुरःपरिसरेऽपि शिरीषमृद्वी सीता जवात्त्रिचतुराणि पदानि गत्वा। गन्तव्यमस्ति कियदित्यसकृद्ब्रुवाणा रामाश्रुणः कृतवती प्रथमावतारम्' इति। अत्र रामपदस्य 'रामः पशुविशेषे स्याज्जामदग्न्ये हलायुधे। राघवे चासितश्वेतमनोज्ञेषु तु वाच्यवत्' इति विश्वान्नानार्थकत्वेन तथात्वेऽपि प्रकरणादिना गुणत्वमेवेति दिक्॥ ६७॥ अयुक्तानुवादमप्यपवदति—**गुण इति**। तमुदाहरति—**विरहीति**। अत्र विरहिघ्नेत्यनुवादो राधामित्यादिविधिविरुद्धत्वेन तादृशोऽपि वक्त्र्यास्तस्या उन्मादित्वेन गुणएवेति भावः। अतएवैतत्प्रकरणे प्रदीप उक्तमनित्यदोषोऽयमिति। यथावा रसतरङ्गिण्याम्—'नैषा कापि चकास्ति काञ्चनलता सैवास्ति मे राधिका पृष्टाचेन्न कुतोऽपि जल्पति तदा संमूर्छिता वर्तते। इत्थं हन्त विचिन्त्य सिंचति मुहुर्नीरैरधीरैर्दृशोर्वातं वा तनुते करेण भुजयोराधाय संभाषते' इति। अत्र पूर्वार्धोक्तः कवेः श्रीकृष्णानुभवानुसारेणार्थ उत्तरार्धवर्णिततद्व्यापारविरुद्ध इत्ययुक्तानुवादाभिधोऽर्थदोषोऽप्ययं वक्तुर्नायकस्योन्मादित्वाद्गुण एवेति॥ ६८॥ अथाश्लीलेऽर्थेऽपि शब्दाश्लीलापवादनिमित्तसाम्यमेवेति कथयंस्तमनुदाहरन्नेव तदतिदेशेनैवापवदति—**क्वचिदिति**। ततस्तत्संख्यां कथयन्नुपसंहरति—**एवमिति**॥ ६९॥ अथ रसदोषेषु कांश्चिदपवदन्नादौ व्यभिचारिभावस्य स्ववाचकपदवाच्यतामपवदति—**सतीति**। अनुभावे प्रागुक्तकायिकमानसाहार्यसात्त्विकान्यतमविकार इत्यर्थः। **अन्येति**। अन्यः प्रकृतेतरः यो रसस्तेन सामान्यस्तद्रसेऽपि विद्यमान इतियावत्। एतादृशे सति। **स्वेति**। स्मृत्यादिस्ववाचकपदेनाभिहित इत्यर्थः। एतादृशः संचारी व्यभिचारिभावः। दोषः

**विरुद्धोऽपि च संचारी बाध्यश्चेद्गुणतामियात् ।**
**ईदृक्पाण्डित्यमाप्य किं धिग्वृथा कण्ठशोषणम् ॥ ७१ ॥**

नैव स्यात्किंतु गुण एवेत्यन्वयः । तदुक्तं प्रदीपे—'न दोषः स्वपदेनोक्तावपि संचारिणः क्वचित् । संचारिणो नतु रसस्थायिनोरपि न क्वचित्'इति । यत्र इतरविलक्षणो नानुभाव इति । तदुदाहरति—**श्रीरिति** । अत्र हि व्रीडाशब्दशक्यो व्यभिचारिभावस्तावल्लक्ष्म्याः प्रथमश्रीविष्णुसमागमवर्णनेन संभोगशृङ्गारे प्रस्तुते यद्यपि स्ववाचकशब्देनैवोक्तस्तथापि तदनुभावस्य नताननत्वरूपस्य करुणे शान्ते वा सत्वात्तद्वाचकशब्दवत्स्फुटतरं स्वबोधनेऽसामर्थ्यान्नैव दोष इत्याशयः । एतेन पर्यायशब्देनापि निरुक्तापवादेतरस्थले व्यभिचार्युक्तिस्तथा सर्वत्र रसस्थाय्युक्तिर्दोष एवेति सूचितम् । यथावा तत्रैव—'औत्सुक्येन कृतत्वरा सहभुवा व्यावर्तमाना ह्रिया तैस्तैर्बन्धुवधूजनस्य वचनैर्नीताभिमुख्यं पुनः । दृष्ट्वाग्रे वरमात्तसाध्वसरसा गौरी नवे संगमे संरोहत्पुलका हरेण हसता श्लिष्टा शिवायास्तु वः' इति । अत्रौत्सुक्यह्रीपदे तथा । साध्वसरसपदेन तु भयानकरसवाचिना न तु रसेत्यादि प्रागेतदुक्तोक्तव्यतिरेकाद्दोषोदाहरणमपि बोध्यम् । अतएवामरुकपद्यमपि—'दूरादुत्सुकमागते विवलितं संभाषिणि स्फारितं संश्लिष्यत्यरुणं गृहीतवसने किंचाञ्चितभ्रूलतम् । मानिन्याश्चरणानतिव्यतिकरे बाष्पाम्बुपूर्णेक्षणं चक्षुर्जातमहो प्रपञ्चचतुरं जातागसि प्रेयसि' इति । इदंतु केवलमुक्तनियमगमकमुदाहरणमिति तत्त्वम् ॥ ७० ॥ अथ विरुद्धानामपि व्यभिचारिविभावरसानां किंचिदवच्छेदेन विन्यासा गुणा एवेति वक्तुमादौ विरुद्धस्य संचारिणस्तथात्वं कथयति—**विरुद्धोऽपि चेति** । ननु यदि दोषरत्ने परस्परविरुद्धौ व्यभिचारिणौ वा विभावौ वा रसौ वा विन्यस्तौ चेद्दोष इति कथितं स्याचेद्घटेतापीदं तदपवादनं तत्तु नैव पश्याम इति चेद्बाढम् । तत्र हि प्रतिकूलो विभावादिः प्रकृतस्य रसस्य य इत्यत्रादिपदेनानुभावव्यभिचारिभावरसानां संग्रहात् । अतएव प्रदीपे तावद्रसदोषसंग्राहकगतप्रतिकूलविभावादिग्रह इति सूत्रव्याख्याने प्रकृतरसादेः प्रतिकूलो यो रसादिस्तद्विभावानुभावव्यभिचारिणां ग्रह इति व्याख्यातम् । तत्र तद्विभावेत्यादौ सच तद्विभावानुभावव्यभिचारिणश्चेति समासस्य विवक्षितत्वेन परस्परविरुद्धरसाद्युपन्यासस्य दोषत्वसंग्रहादन्यथा संचार्यादेर्विरुद्धस्य बाध्यस्योक्तिर्गुणावहेत्याद्युत्तरंतत्रत्यसूत्रतद्व्याख्यानाद्यात्मकोक्ततदपवादग्रन्थस्याप्राप्तपरिहारकतापत्तेश्च । तस्माद्युक्तमेवेदं तदपवादनमिति बोध्यम् । संचारी व्यभिचारिभावः विरुद्धोऽपि 'ज्ञेयौ शृङ्गारबीभत्सौ तथा वीरभयानकौ । रौद्राद्भुतौ हास्यरसकरुणौ वैरिणौ मिथः' इति प्राचीनवचनात्प्रकृतरसादिप्रतिकूलोऽपीत्यर्थः । यदि बाध्यः.बाधार्थे निबद्धस्तर्हि गुणतामियादिति संबन्धः । तदुक्तं काव्यप्रदीपे—'प्रकृतविरुद्धं व्यभिचार्यादिबाध्यत्वेनोच्यते तदा दूरे दोषत्वं प्रत्युत प्रकृततया गुणत्वम्' इति । तदुदाहरति—

**तादृशस्तु विभावोऽपि युवतिः सुखसंततिः ।**
**अथापि जीवितं हन्त कान्तानेत्रान्तचञ्चलम् ॥ ७२ ॥**
**अद्वैतसच्चिदानन्दे यद्यपि प्रागिरूपिते ।**
**रसे विरोधशङ्कापि नैवास्ति तदपीह नः ॥ ७३ ॥**
**रसशब्देन तत्स्थायिभाव एव विवक्षितः ।**
**अतस्तयोस्तादृशयोः स युक्तः सोऽपि च द्विधा ॥ ७४ ॥**

---

**ईदृगिति** । इदं हि पाण्डित्यार्थं घोषणे प्रवृत्तस्य कस्यचित्स्वमनस्येव वचः । तत्र घोषणप्रौत्सुक्यादिरीदृगित्यादिद्योतितनिर्वेदमूलकशान्तरसविरुद्धोऽपि व्यभिचारिभावो बाध्यत्वाद्गुण एवेति भावः । यथावा—'क्वाकार्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा दोषाणां प्रशमाय नः श्रुतमहो कोपेऽपि कान्तं मुखम् । किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा चेतः स्वास्थ्यमुपैहि कः खलु युवा धन्योऽधरं धास्यति' इति । अत्र चतुर्षु पादेषु पूर्वभागप्रतिपाद्यानां शमाङ्गानां चिन्तामतिशङ्काधृतीनां उत्तरभागमप्रतिप्राद्याभिरभिलाषाङ्गभूताभिरौत्सुक्यस्मृतिदैन्यचिन्ताभिस्तिरस्कारपुरःसरं चिन्तायामेव पर्यवसानमिति भावशबलतापरिपोषकत्वाद्गुणत्वमिति प्रदीपकारः ॥ ७१ ॥ एवं विरुद्धविभावमप्यपवदति—**तादृशस्त्विति** । तादृशः प्राग्वत्प्रकृतरसादिविरुद्धोऽपि बाध्यश्चेदित्यर्थः । विभावोऽपि आलम्बनादिविभावोऽपीति यावत् । गुणतामियादित्यनुकृष्य योज्यम् । तमुदाहरति—**युवतिरित्यादि**त्रिपाद्या । यद्यपि युवतिः स्वतरुण्येव सुखेति सुखपरंपरास्तीत्यन्वयः । **अथापीति** । कान्ता मृगाक्षी नतु नारी । स्पष्टमेवान्यत् । अत्र द्वितीयपादे पूर्वार्धशेषे शृङ्गारस्यालम्बनविभावः सचोत्तरार्धोक्तशान्तस्यालम्बनादिविभावेन सार्धं विरुद्धोऽपि बाध्यत्वान्निबद्ध इति नैव दोषः । प्रत्युत प्रकृतशान्तरसपरिपोषकत्वाद्गुण एवेति भावः । यथावा—'चेतोहरा युवतयः सुरतानुकूलाः सद्बान्धवाः प्रणयनम्रगिरश्च भृत्याः । वल्गन्ति दन्तिनिवहास्तरलास्तुरङ्गाः संमीलने नयनयोर्नहि किंचिदस्ति' इति ॥ ७२ ॥ ननु भवत्वेवं व्यवस्था तथापि चतुर्थरत्ने भवदभिमते 'रसो वै सः' इत्यादिश्रुतेरद्वैतात्ममात्ररूपे रसे तदाकारचित्तवृत्तौ वा सत्यां द्वितीयस्यैवाभावात्क नाम विरोधशङ्कापीत्याशङ्कयात्र रसपदेनाजहत्स्वार्थलक्षणातस्तदवच्छिन्नतत्स्थायिभावस्यैवेष्टत्वात्परस्परप्रतिकूलयोस्तु रतिनिर्वेदयोः शृङ्गारशान्तस्थायिनोर्विरोधो युक्त इति समाधत्ते—**अद्वैतेत्यादि** युक्तइत्यन्तेन युग्मेन । एवं चैतदभिधायैव दोषरत्ने मया विभावानुभावव्यभिचारिभावानामेव परस्परप्रतिकूलानां प्रथनं दोषत्वेनोक्तं । रसानां तु तादृशां नामापि न गृहीतमिति हृदयम् । **प्रागिति** । 'विभावाद्यैरपाङ्गानचिद्वेद्यःस्थाय्यसौ रसः । यद्वा तत्संयुतिव्यक्तस्थाय्युपाधिश्चिदेव सः' इत्यादिना ॥ ७३ ॥ सः विरोधः तादृशयोः विरुद्धयोः तयोः स्थायिनोः युक्त इति संबन्धः । एवमेवोक्तं प्रदीपेपि । ननु प्राक्प्र-

**सामानाधिकरण्येन नैरन्तर्येण चेत्यसौ ।**
**तद्वैयधिकरण्येन तयोराद्यो भवेद्गुणः ॥ ७५ ॥**
**श्रीगुरोः करुणापाङ्गे मदङ्गे सति रिङ्गति ।**
**द्वैतमेवास विध्वस्तं तत्कानङ्गतरङ्गितम् ॥ ७६ ॥**

तिपादितरूपवेद्यान्तरसंपर्कशून्यरसस्य न रसान्तरेण विरोधो नाप्यङ्गाङ्गिभाव इत्यसंबद्धमेवैतत्सर्वमिति चेन्न । रसशब्देनात्र प्रकरणे भावस्याभिधानात् रसत इति व्युत्पत्तेरिति । अथ तद्वैविध्यं प्रतिजानीते—**सोऽपीति** । निरुक्तविरोधोऽपीत्यर्थः । द्विधा साक्षाद्द्विःप्रकारः परम्परया तु स्मृत्याद्यवच्छेदेन षड्विधत्वादिति दिक् ॥ ७४ ॥ प्रतिज्ञातं रसान्योन्यविरोधद्वैविध्यं विशदयति—**सामानाधिकरण्येनेति** । असौ पूर्वोक्तरसपरस्परविरोधः सामानाधिकरण्येन एकस्मिन्नेवाधिकरणे शृङ्गारतत्प्रतिकूलशान्तरससत्वेनेत्यर्थः । तथा नैरन्तर्येण व्यवधानवैधुर्येण चेति द्विधा भवतीति पूर्वेणान्वयः । तत्राद्यस्योपायमाह—**तदिति** । तयोः निरुक्तद्विविधरसविरोधयोर्मध्य इत्यर्थः । आद्यः सामानाधिकरण्यप्रयुक्तः प्रतिकूलरसपरस्परविरोध इतियावत् । **तदिति** । निरुक्तरसयोर्यद्वैयधिकरण्यं अधिकरणभेदेन सत्वं तेनेत्यर्थः । गुणः भवेदिति संबन्धः । तथा काव्यप्रकाशकारिकापि—'आश्रयैक्ये विरुद्धो यः स कार्यो भिन्नसंश्रयः' इति । ननु भवत्वयं रसविरोधपरिहारस्तथापि कथमसावपवादकोटिनिविष्टः स्यात्तत्त्वं हि किंचिदवच्छेदेन विहितनिषिद्धान्यतरस्य निषेधविध्यन्यतरत्वमिति त्वयैव प्रागत्र लक्षितम् । प्रकृते तु यद्दोषस्य प्रयोजकं तदेव न कर्तव्यमिति कथ्यन्त इति नैतावता निषिद्धस्य किंचिदवच्छेदेन विधानत्वरूपाद्यपवादत्वं सिद्ध्यतीतिचेन्न । सामान्यविशेषभावेन व्यवस्थासंभवात् । तथाहि पूर्वरत्ने हि प्रतिकूलो विभावादिः प्रकृतस्य रसस्य य इति रसदोषप्रकरणे सामान्यत एव विभावानुभावव्यभिचारिभावरसानां सामान्यतः प्रकृतरसप्रातिकूल्यमात्रं रसदोष इति कथितम् । तत्र संचारिभावस्य तादृशस्य बाध्यत्वावच्छेदेन तथा विभावस्य विरुद्धोऽपि च संचरीत्यादिकारिकाभ्यामपवादः कथितोऽभूदिह तु तादृशस्य रसस्य विरोधे कारणं सामानाधिकरण्यं नैरन्तर्यं चेति तत्राद्यस्य वैयधिकरण्येनापहारे नापहारे निरुक्तरसदोषापवादः सुघट एवैवं द्वितीयस्यापि मध्ये परस्परविरुद्धोभयरसाविरुद्धरसान्तरसंग्रथनेन निरासे जाते स तथा निरुक्तरसदोषापवादस्तु कथ्यत एवानुपदमिति चतुरस्रमेव सर्वमिदम् ॥ ७५ ॥ तदुदाहरति—**श्रीगुरोरिति** । एतेन स्वकीययोगैश्वर्यरूपशरणागतशिष्यमनोनिष्ठतत्वसाक्षात्कारोत्पत्तितत्फलप्रतिबन्धकोभयविधविनाशयोग्यतालक्षणपरिपाकशालिदुरितविशेषध्वंसक्षमत्वलक्षणशक्तिमत्त्वं गुरौ द्योत्यते । अतएवोक्तं प्रपञ्चसारे—'परिपक्वमलोपेतानुत्सादनहेतुशक्तिपातेन । योजयति परे तत्वे स दीक्षयाचार्यमूर्तिस्थः' इति । प्रपञ्चितं चेदं जीवन्मुक्तिविवेकटीकायां पूर्णानन्देन्दुकौमुदीसमाख्यायां मया । **करुणेति** । एवंच स्वस्मिन्नप्यनन्यगतिकत्वलक्षण-

**अन्त्योऽपि मध्ये यदि चेदविरोधिरसान्तरम्।**
**रुष्टाया मातुरात्रस्तो नवनीतं मुषन्हरिः॥ ७७॥**
**राधादृगन्तपीतोऽपि विचित्रमतुलासितः।**
**गोपबालान्वने दावानलभीतानसान्त्वयत्॥ ७८॥**

---

मुख्याधिकारित्वं व्यज्यते। अपाङ्गपदेनाचार्येऽचिन्त्यशक्तिमत्त्वं सूच्यते। सत्पदं देहलीदीपन्यायेनोभयत्राप्यन्वेति। तेन स्वस्याचारवत्त्वादिकायिकशुद्धिशालित्वेनाप्यधिकारपौष्कल्यं ध्वन्यते। रिङ्गति सतीति संबन्धः। तथाच रिङ्गण हि 'रिङ्गतो भगवतो मुरद्विषः' इत्यादिप्रयोगाद्बालधर्मः प्रसिद्ध। एव तत्कारितया कटाक्षे कोमलत्वं देशिके चानुकम्पाप्राचुर्यं च सूच्यते। **द्रुतमेवेति**। तेन वक्ष्यमाणे हेतुर्वेगश्च वक्तुः क्रमाद्व्यज्यते। **विध्वस्तमिति**। एतेनाप्रतिबद्धबोधतत्फलवत्त्वं स्वस्मिन्ध्वन्यते। तथा आसेति भूतार्थकलकारेणेदानीं तद्गन्धसंभावनापि नास्तीति विफल एवायं त्वदायास इति कांचित्स्वानुरागिणीं सुरतप्रार्थनेङ्गितवतीं रूपाद्यखिलगुणवतीं परयुवतिं प्रति रहसि केनचिद्धीरधुरंधरेण ध्वन्यते। तत्तस्मान्मय्यनङ्गतरङ्गितमपि केति योजना। इह चरमचरणध्वनितः कथितयुवतिनिष्ठः शृङ्गारः स्वनिष्ठश्च शान्त इति वैयधिकरण्यात्तयोर्विरोधो नैवेत्याशयः। यथावा प्रदीपकर्तुः—'आहूतापि पदं ददाति न पुरो न प्रार्थितापीक्षते साकूतं परिभाषितापि बहुशः किंचिन्न चाभाषते। आश्लिष्टापि न संमुखानि रचयत्यङ्गानि मुग्धाशया कोपोद्रेकवशंवदेव तरुणीश्रेणी यदीयद्विषाम्' इति। अधिकं तु तत्रैव बोध्यमिति ॥ ७६ ॥ अथ नैरन्तर्यप्रयुक्त द्वितीयं रसविरोधप्रकारं परिहर्तुमुपायं वदन्नसविरोधमपवदति—**अन्त्योपीति**। यदि मध्ये विरुद्धयो रसयोरन्तराल इत्यर्थः। अविरोधि उक्तोभयाविरोधि। रसान्तरं अन्यो रसश्चेत्तर्हि अन्त्योऽपि नैरन्तर्यप्रयुक्तरसविरोधोऽपि गुणः भवेदिति पूर्वस्मादनुकृष्यान्वयः। तदुक्तं काव्यप्रकाशकारिकायाम्—'रसान्तरेणान्तरितो नैरन्तर्ये तु यो रसः' इति। तमुदाहरति—**रुष्टाया इति** सार्धेन। पञ्चम्यन्तमिदं पदयुगम्। अत्र त्रिष्वप्यर्धेषु क्रमाद्भयानकाद्भुतवीराणामेव प्राधान्येन ध्वननाद्भयानकवीरयोर्नैरन्तर्यावच्छेदेन विरोधेऽपि तदुपमयाविरुद्धस्याद्भुतस्य मध्यवर्तित्वेन तत्प्रयोजकनैरन्तर्यव्यतिरेके द्वितीयो रसदोषापवाद इति रहस्यम् ॥ ७७ ॥ **राधेति**। पीतः सादरमवलोकित इत्यर्थः। **अतुलेति**। स्वयमेव भगवानिन्द्रनीलशकलनीलस्तत्र राधानेत्रान्तकुवलयदलकोणप्रतिबिम्बनैरनुपमनीलिमानमाप्त इतियावत् योहि पीतः स तावदसितोपि न भवति किंपुनरतुलासित इति स्फुटतरविरोधस्योकरीत्या आभासत्वेन वैचित्र्यादद्भुतः स्फुटएव। यथावा मदीयाकल्पितचिदम्बर्याम्—'रक्तः कम्बुः कथमयमभूत्त्वदृशैवेति चेन्न श्रीमत्पाणेररुणिमवशान्नो यतोऽसौ पुरापि। एतन्न्यायादनुमिनु रमे मय्यपि त्वं तथात्वं बोधादेवं स्तिमितनयना यत्र सा तं स्मरामः' इति। अत्र सगुणो-

**स्मृतिं यातो विरुद्धोऽपि रसो नो दोषतामियात् ।**
**गामाश्लिषन्ति यैः श्लिष्टा दशापि हरिदङ्गनाः ॥ ७९ ॥**
**साक्षादङ्गत्वमापन्नौ विरुद्धावपि तौ गुणः ।**
**अहो श्रीगुरुमाहात्म्यं वव्रे मुक्तिः स्वयं हि माम् ॥ ८० ॥**

---

पलक्षितनिर्गुणविष्णुविषयकस्वप्रेमात्मकभावध्वनौ प्रधाने अङ्गीभूतयोः पूर्वार्ध- ध्वनितशृङ्गारतृतीयपादत्रयपदध्वनितशान्तयोर्नैरन्तर्यप्रयुक्तविरोधे प्राप्ते तं सम- राम इति पदद्वयेतरशिष्टध्वनिताद्भुतस्याङ्गीभूतस्यैव मध्ये निवेशेनाविरोधाद्गुण एवेति भावः । विस्तरस्तु प्रदीपे ज्ञेयः ॥ ७८ ॥ एवं स्मृतिमपि विरुद्धरसमप- वदति—**स्मृतिमिति** । तमुदाहरति—**गामिति** । इदं हि रावणमरणे रणा- ङ्गणे समागतमन्दोदरीवाक्यम् । त इमे दशग्रीवबाहव इति दशपदान्यथानुपपत्ति- सिद्धमार्थिकम् । गां पृथ्वीं आश्लिषन्ति आलिङ्गन्तीत्यर्थः । ते क इत्यत आह— **यैरिति** । यैः दशापि हरिदङ्गनाः हरित एवाङ्गनाः श्लिष्टा आलिङ्गिताः प्रागा- क्रमित्यर्थः । एवंच वीर्यातिशयः सूचितः । अत्र स्मर्यमाणो वीररसः प्रकृत- करुणेन सह विरुद्धोऽपि स्मृतिविषयत्वात्तथा प्रकृतरसपोषकत्वेन तदङ्गत्वाद्गुण एवेति भावः । यद्वा तद्भुजानां विंशतित्वात्तस्य चाञ्जनवर्णत्वात्तदपहृतदेवगन्धर्वा- दिवधूनां कनकगौरत्वात्तत्कान्तिप्रतिबिम्बनेन तासां तत्क्षणावच्छेदेन हरिद्वर्ण- त्वाच्च शृङ्गार एव रसोस्तु । यथावा भर्तृहरिपद्यम्—'यदासीदज्ञानं घनतिमिररुद्धे च नयने तदाऽशेषं विश्वं मम तरुणनारीमयमभूत् । इदानीमस्माकं पटुतरविवे- काञ्जनदृशां समीभूता दृष्टिस्त्रिभुवनमपि ब्रह्ममनुते' इति । इह शान्तशृङ्गारयो- र्विरोधेऽपि स्मर्यमाणत्वात्तथात्वमिति दिक् ॥ ७९ ॥ अथाङ्गीभूतयोर्विरुद्धयोरपि रसयोर्नैव दूषकत्वमिति वक्तुं लोके तावदेकत्राङ्गिनि विरुद्धयोर्द्वयोरङ्गत्वं द्विवि- धम् । एकं तुल्यबलतया साक्षादपरं तु परम्परयेति । अनूद्यमानत्वं तूभयत्रापि समानमेव । मुख्याङ्गिन एव विधेयत्वात् । यथा परस्परविरुद्धयोरपि भटयोरेकस्य राज्ञोऽङ्गत्वम् । यथावा—विवेकप्रागभावो विवेकस्याङ्गं । सच तत्त्वबोधस्येति । तत्रा- द्यरीत्या सामान्यतः प्राप्तं प्राग्वदेव रसविरोधाभिधं रसदोषमपवदति—**साक्षा- दिति** । तौ रसौ । तमुदाहरति—**अहो इति** । हिर्हेतौ । यस्माद्धेतोः मुक्तिः स्वयमेव मां वव्रे अवृणोत् । अतः श्रीगुरुमाहात्म्यं अद्भुतमेवेत्यन्वयः । अत्रा- लौकिकगुरुमाहात्म्यवर्णनेनाद्भुते प्रधानतया व्यङ्ग्येऽङ्गिनि मुक्तिपदवव्रेपदाभ्यां ध्व- नितयोः शान्तशृङ्गारयोरङ्गयोः परस्परविरुद्धयोरपि समसामर्थ्यात्साक्षादङ्गत्वादवि- रोध एव । यथावा काव्यप्रदीपे—'क्रामन्त्यः क्षतकोमलाङ्गुलिगलद्रक्तैः सदर्भाः स्थलीः पादैः पातितयावकैरिव गलद्बाष्पाम्बुधौताननाः । भीत्या भर्तृकरावल- म्बितकरास्त्वद्वैरिनार्योऽधुना दावाग्निं परितो भ्रमन्ति पुनरप्युद्यद्विवाहा इव' । अत्र चाटुके राजविषया रतिः तत्र करुणशृङ्गारावुभावपि साक्षादङ्गमिति तन्नि- र्वाहणैकव्याकुलयोरेकराजकार्योद्यतयोरिव भटयोः सहजतो विरोधोऽपि न दोषा-

**अङ्गस्याङ्गतयापि स्तो विरुद्धावपि तौ तथा।**
**चिदहं मांसमर्दीति चित्रोपरतिरस्ति मे ॥ ८१ ॥**
**कवेः साम्यविवक्षायां विरुद्धोऽपि रसो गुणः।**
**सुदृशालिङ्गिताः सन्तः शेरते सरसाः सुखम् ॥ ८२ ॥**

---

येति ॥ ८० ॥ एवं द्वितीयरीत्यापि तमपवदति—**अङ्गस्येति**। एकस्य साक्षादङ्गत्वमपरस्य तु तदङ्गतयाङ्गत्वमिति वैषम्यात्परम्परासंबन्धेनाङ्गीभावेनापीत्यर्थः। तौ रसौ विरुद्धावपि परस्परं प्रतिकूलावपि तथागुण एव स्तः भवत इति संबन्धः। चतुष्टयमपीदमुक्तं काव्यप्रकाशकारिकायाम्—'स्मर्यमाणो विरुद्धोऽपि साम्येनाथ विवक्षितः। अङ्गिन्यङ्गत्वमाप्तौ यौ तौ न दुष्टौ परस्परम्' इति। विस्तरस्तु प्रकाशप्रदीपादावेवाभिवेदितव्यः। तमुदाहरति–**चिदिति**। इदं हि कस्यचिद्गृहिणो जीवन्मुक्तस्य स्वमनस्येवर्तुकालिकविहितसुरतोत्तरं वाक्यम्। अहं देवदत्तः चिदपि अद्वैतसच्चिदानन्दानन्तात्मब्रह्मरूपोऽपीत्यर्थः। यतः मांसमर्दी मांसं स्वकामिनीकुचकनककमलमुकुलायमानमलं मर्दयति निरुक्तसुरतारम्भे स्वकराभ्यामास्फालयतीति तथा एतादृशोऽस्मीति हेतोः मे उपरतिः तत्त्वसाक्षात्कारजन्ययावद्दृश्यमिथ्यात्वेन यावद्वैतवैरस्यप्रयोज्योपशान्तिरिति यावत्। चित्रा विचित्रा। यद्वा आलेख्यरूपत्वेनालीकप्रायेत्यर्थः। एतादृश्यस्तीति योजना। एकपदपक्षे तु चित्रप्राये स्वकलत्रे मिथ्याभूतेऽपि स्वयुवतिशरीर इत्यर्थः। उपेव 'उपोपसर्गः सामीप्ये तत्प्रतीचि समाप्यते' इति श्रीमद्वार्तिककारचरणवचनादात्मनीव रतिः प्रीतिरिति यावत्। यद्वा चितैव त्रायत इति चित्रा तत्त्वज्ञानैकरक्षितेत्यर्थः। एतादृशी उपरतिरस्ति अपितु काक्का नास्तीत्यर्थः। एवंच सर्वथाप्यत्र शान्तस्याद्भुतस्य वाङ्गं बीभत्सो मांसपदद्योतितस्तस्याप्याङ्गमर्दिरतिपदध्वनितः शृङ्गार इति ताभ्यां साक्षात्परंपरया च मुख्योऽङ्गी शान्त एव व्यङ्ग्य इति तयोरुक्तरीत्या विरुद्धयोरप्यविरोध एवेति भावः। यथावा अमरुकपद्यम्—'क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोंशुकान्तं गृह्णन्केशेष्वपास्तश्चरणनिपतितो नेक्षितः संभ्रमेण। आलिङ्गन्योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः कामीवार्द्रापराधः स दहतु दुरितं शांभवो वः शराग्निः' इति। अत्र त्रिपुररिपुप्रभावातिशयस्य करुणोऽङ्गं तस्य शृङ्गार इति प्रदीपकारः। अधिकं तु सर्वं तत एव ज्ञेयमिति ॥ ८१ ॥ तद्वत्कविसंमतसाधर्म्येऽपि विरुद्धरसयोर्गुणत्वं भवतीत्याह—**कवेरिति**। स्मर्यमाणादिचतुष्टयमपीदमुक्तं काव्यप्रकाशकारिकायाम्—'स्मर्यमाणो विरुद्धोऽपि साम्ये नाथ विवक्षितः। अङ्गिन्यङ्गत्वमाप्तौ यौ तौ न दुष्टौ परस्परम्' इति। तदुदाहरति—**सुदृशेति**। सरसाः 'रसो वै सः' इति श्रुतेः रसेत प्रत्यक्षीकृताद्वैतब्रह्मणा सहिताः ब्रह्मविद इत्यर्थः। पक्षे सानुरागास्तरुणाः सुदृशा ब्रह्मविद्यया, पक्षे स्वमृगाक्ष्या। जात्यभिप्रायकमेवैक्यम्। आलिङ्गिताः जीवन्मुक्तिवेलायां तन्मात्रे वृत्तिसत्त्वेन स्वाभिन्नतामिवानीता इत्यर्थः। पक्षे स्पष्टमेव।

एवं नवापवादाः स्युः सर्वेऽमी रसदोषगाः ।
तत्र स्वपदवाच्यः संचारी बाध्यो विभावकः ॥ ८३ ॥
द्वाविमौ प्राच्यगौ तेनान्ये सप्तेत्यर्कसंमिताः ।
नित्यदोषास्तु संचारी तादृशस्त्वार्थिको मतः ॥ ८४ ॥
शिष्टाः षोढा तु पूर्वोक्तप्राच्यनव्योभयोर्मताः ।
आर्थिकाः पर्युदस्ताश्चेत्यादि ज्ञेयं विपश्चिता ॥ ८५ ॥

---

सुखं यथा भवति तथा शेरते सुप्ता इव भवन्तीत्यन्वयः । अतएव श्रूयते—'तद्यथा प्रियया स्त्रिया संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरमेवमेवायं प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरम्' इति । अत्र शान्तरसानुभावविशेषे उपमानभावेन तत्पोषकत्वाद्विरुद्धोऽपि शृङ्गारो गुण एवेति । यथावाऽस्मदीयाद्वैतामृतमञ्जर्याम्—'रसभरितापि गतरसा चतुरतरापि प्रमन्थरोत्थाने । विलसति मतिरैकान्ते शान्तस्येयं रतान्तकान्तेव' इति । अत्रापि प्रकृतश्लेषवदुपमया शृङ्गारशान्तौ ॥८२॥ इत्थं दोषरत्नीयरसदोषप्रसङ्गपर्युदासध्वनितापवादपञ्चकमध्येऽन्याङ्गत्वप्रतिप्रसवमात्रस्य साक्षात्त्वादिना द्वैविध्यविशदीकरणात्क्रमेण षोढा रसदोषापवादकथनमुपसंहरंस्तत्संख्यां कथयति—**एवमिति** । किमिमे प्राच्यमतसिद्धानां रसदोषाणामपवादाः किंवा नव्यमतसिद्धानां तेषामिति प्राक्तनग्रन्थाननुसंधानजन्यशङ्कायां तद्विभागं कथयति—**तत्रेति**। तेषु नवसंख्याकरसापवादेषु मध्ये इत्यर्थः । **स्वेत्यादि** । इदमुत्तरार्धशेषजातं द्वाविमौ प्राच्यगावित्यनेन संबध्यते । तेनैतयोर्नव्यमते व्युदासः सूचितः॥८३॥ इत्युद्दिष्टोऽस्वपदवाच्यव्यभिचारिबाध्यविभावावनूद्य तयोः प्राच्यमतसिद्धरसदोषविषयकत्वं विधत्ते—**द्वाविमाविति** । फलितमाह—**तेनेति** । **नित्येति** । प्राच्यमतसिद्धा नित्या रसदोषा इत्यर्थः । एवं तर्हि शिष्टानां सप्तानां रसदोषापवादानां कथं व्यवस्थेत्यत आह—त्वित्याद्यग्रिमकारिकान्तेन । तुशब्दस्त्ववशिष्टवैलक्षण्यार्थः । तादृशः 'विरुद्धोपि संचारी बाध्यश्चेद्गुणतामियात्' इत्यनुपदोक्तरीत्या बाध्य इत्यर्थः । तुशब्दः पुनरर्थे । आर्थिकः प्रातिकूलो विभावादिः प्रकृतस्य रसस्य य इत्यादिदोषरत्नीयश्लोके आदिपदगृहीत इत्यर्थः । मतः प्राचामेव संमत इत्यर्थः ॥ ८४ ॥ शिष्टाः अवशिष्टाः षोढा सामानाधिकरण्येनेत्याद्यनुपदमेवाष्टभिः पद्यैरुक्ताः षट्प्रकारका रसदोषापवादा इत्यर्थः । तुशब्दो वैलक्षण्यार्थः । **पूर्वोक्तेति** । निरुक्तदोषरत्नकारिकाटीकायां प्रदीपकारादीनां प्राच्यानां आर्थिकाः कण्ठतोऽनुक्तत्वेप्यर्थसमाजायातत्वेन तथा तत्रत्यायामेवानैकाधिकरण्यं चेत्यादिसार्धकारिकायां टीकोदाहृतरसगङ्गाधरकाराख्यनव्यालंकारिकाणां पर्युदस्ताः पर्युदासविषयत्वेन यथाक्रमं मताः संतीत्यादिविपश्चिता ज्ञेयमिति सबन्धः । आदिना स्मृतविरुद्धस्तु रसो नव्यमतेऽनुक्तो ऽप्यन्याङ्गान्तर्भूतत्वेन तत्संमत इति ध्येयम् ॥ ८५ ॥

इत्यर्थगापवादेन शिष्टास्त्रिंशत्तदेकगाः ।
नित्यदोषास्तथैवैते रसगा द्वादशापरे ॥ ८६ ॥
नव्याद्युक्तास्तु नित्याः स्युर्दोषास्ते पञ्चविंशतिः ।
काव्ये रसे च सामान्यान्मधुरादौ विशेषतः ॥ ८७ ॥
तदेवं सप्तषष्ठ्येव सिद्धा अर्थादिगाः क्रमात् ।
नित्यदोषा बुधैर्हेयास्तेऽर्थादावतियत्नतः ॥ ८८ ॥
प्रागुक्ताशीतिदोषेष्वर्थादिनिष्ठेषु चार्थगाः ।
एकादशापवादाः स्युस्तथा द्वौ रसगौ हितौ ॥ ८९ ॥
इति त्रयोदशैवं ते यदा तेभ्यो निराकृताः ।
तदानीमुक्तसंख्यास्ते नित्यदोषाः सुसंगताः ॥ ९० ॥
अनुकारे तु सर्वेऽपि दोषास्ते गुणतां गताः ।
तथा वक्ता रसाविष्टचेताश्चेदित्यपीतरे ॥ ९१ ॥

---

अथ निरुक्तापवादावशिष्टानां सर्वेषां नित्यानामर्थादिदोषाणां संख्यां प्रत्येकं सपिण्डीकृत्य कथयंस्तेषां काव्यनिबद्धार्थादिष्ववश्यत्याज्यतां विधत्ते—**इतीत्यादि**त्रिभिः । इति पूर्वोक्तरीत्या । **अर्थेति** । अर्थेषु गच्छन्तीति तथा अर्थदोषास्तेषामपवादेनेत्यर्थः । शिष्टाः उर्वरिताः तदेकगाः अर्थैकनिष्ठाः त्रिंशत् एतत्संख्याकाः । **नित्येति** । एते रसभावस्वशब्दवाच्यतादयो दोषरत्नोक्ता इत्यर्थः । **रसेति** । अपरे अन्ये द्वादश एतत्संख्याका इत्यर्थः ॥ ८६ ॥ **नव्यादीति** । आदिना स्वोक्तयुष्मदस्मत्प्रयोगप्राचुर्यरूपरसदोषसंग्रहः । **काव्य इति** । काव्ये सामान्यान्नित्यदोषाः षट् नव्यमते रसे च मधुरादौ रसे विशेषतश्च तत्रैवाष्टादशेत्येवं चतुर्विंशतिसंख्याकाः स्वोक्तश्चैक इति पञ्चविंशतिस्ते नित्याः दोषाः स्युरित्यन्वयः ॥ ८७ ॥ उपसंहरति—**तदेवमिति** । तत्तस्मात् हेतोः एवं पूर्वोक्तगणनया क्रमात् अनुक्रमेण अर्थादिगाः अर्थरसादिनिष्ठा इत्यर्थः । सप्तषष्ठ्येव नित्यदोषाः सिद्धाः सन्तीति संबन्धः । किं ततस्तदाह—**बुधैरित्यादिना** । बुधत्वमात्रशाब्दादिसकलशास्त्रवित्त्वे सति कविताशक्तिमत्त्वमेव । ते निरुक्तदोषाः अर्थादावतियत्नतो हेयाः त्याज्या इति योजना ॥ ८८ ॥ ननु कथं निरुक्तापवादैः पूर्वोक्तार्थादिदोषेभ्यो निरुक्तसंख्याका एव नित्यदोषा अर्थादिगा इति निर्णीयत इति पूर्वग्रन्थविस्मृतिशीलं प्रति तत्सर्वमुद्घाट्य समाधत्ते—**प्रागुक्तेत्यादियुग्मेन** ॥ ८९ ॥ **इतीति** । इति उक्तप्रकारेण एवं मिलित्वा त्रयोदशेति संबन्धः ॥ ९० ॥ अथ सर्वेषामपि दोषाणां प्राच्यनव्यसंमतौ द्वावपवादौ क्रमेण पूर्वोत्तरार्धाभ्यां विधत्ते—**अनुकारे त्विति** । तदुक्तं काव्यप्रदीपे—'अथ पदादिदोषाणामप्यदोषत्वं क्वचिदित्याह । अनुकरणे तु सर्वेषाम् । प्रतिपादितदूषकताबीजाभावात् । तत्र वैरस्याभावस्यानुभाविकत्वेन तदतिरिक्तस्थल एव दोषत्वव्यवस्थितेः । यथा 'मृगचक्षुषमद्राक्षमित्यादिकथयत्ययम्' इत्यादि । **तथेति** ।

न रसो नापि वक्त्रादेरौचित्यादि च यत्र तत् ।
ते सर्वेऽच्युतसंस्कारा नो दोषा नो गुणा अपि ॥ ९२ ॥
वने प्रचारयन्तं गाः प्रहर्षितमधुव्रतम् ।
पद्मानन्दमहं वन्दे तमश्चरहरं हरिम् ॥ ९३ ॥

इदमेवोदाहरणमपि । तद्यथा । इदं हि पाण्डित्यवीररसाविष्टचेतसः कस्यचिन्मध्यस्थस्यैव कथमिदं त्वया अशुद्धमुच्यत इत्याक्षिपन्तं सिद्धान्तिनं प्रति भो सिद्धान्तिन्, प्रतिवाद्यनुकरणमेव मया कृतमित्येकं समाधानमभिधाय द्वितीयं तदभिधातुं वचः अस्मिन्पक्षे तथावक्तेत्येकं पदम् । तादृशस्यानुभूताद्वैतस्य वक्तेत्यर्थः । **रसेति** । सर्वेपि दोषाः गुणतां गताः भवन्तीत्यपीतरे पण्डिताः वदन्ति नत्वहमिति । तेनात्र अभवन्मतयोगाख्यनित्यवाक्यदोषवत्त्वेऽपि नैव दुष्टत्वमिति तत्वम् । उक्तंहि रसगङ्गाधरे—'मलयानिलकालकूटयो रमणीकुन्तलभोगिभोगयोः । श्वपचात्मभुवोर्निरन्तरा मम जाता परमात्मनि स्थितिः' इति पद्ये यद्यपि प्रथमार्धे उत्तमाधमयोरुपक्रमाद्द्वितीयार्धे अधमोत्तमवचनं क्रमभङ्गमावहति तथापि वक्तुर्ब्रह्मात्मकतया उत्तमाधमभावज्ञानवैकल्यं संपन्नमिति द्योतनाय क्रमभङ्गो गुण एवेति ॥ ९१ ॥ एवमुक्तदोषाणां यत्रापवादेन न गुणत्वं नापि दोषत्वं तत्कथयति—**नेति** । कर्मीभूतं तत्स्थलमित्यर्थः । एवमेवोक्तं प्रदीपे—'क्वचित्पुनर्न दोषत्वं नवा गुणत्वमित्युपक्रम्य 'येन ध्वस्तमनोभवेन' इत्युदाहृत्यात्र माधवपक्षे राहौ शशिमत्पदमप्रयुक्तं क्षयपदं गृहे निहतार्थम् । नच श्लेषरूपालंकारप्रयोजकतया गुणत्वमपि शङ्कनीयम् । तत्त्वस्य तत्राप्रयोजकत्वादिति ॥ ९२ ॥ तदुदाहरति—**वन इति** । वृन्दावने पक्षे 'जीवनं भुवनं वनम्' इत्यमरादुदक इत्यर्थः । गाः धेनूः पक्षे किरणान् 'गौः स्वर्गपशुवाग्वज्रदिङ्नेत्रघृणिभूजले' इत्यमरात् । प्रचारयन्तं संचायरयन्तमित्यर्थः। अतएव **प्रहर्षितेति** । स्वबाललीलानन्दितमदिरास्वादरसिकबलभद्रमित्यर्थः। पक्षे कमलविकासद्वारा परितोषितषट्पदमिति यावत् । तत्र हेतुः **पद्मेति** । पद्मां रमां आनन्दयति स तथा । अहो यः साक्षाल्लक्ष्मीरमणः स इदानीं गोपत्वकैतवेन बल्लवबालान्संल्लालयतीति महदाश्चर्यमिति विस्मयः प्रतिज्ञातबलरामप्रहर्षणे हेतुः स्फुट एव। तस्यैव निरुक्तभगवन्माहात्म्याभिज्ञत्वात्। पक्षे कमलविकासकमित्यर्थः। अतएव **तमश्चरेति** । तमश्चराः पूतनाद्यसुरास्तान्हरति संहरतीति तथा । पक्षे तमश्चरा उलूकास्तेषां तत्रैव संचारात् तेषां चक्षूंषि हरतीति तथा । एतादृशं हरिं श्रीकृष्णं पक्षे सूर्यं अहं वन्दे इत्यन्वयः । एतेन ग्रन्थमध्ये मङ्गलमपि ध्वनितम् । अत्र श्रीकृष्णपक्षे बलरामे मधुव्रतपदमप्रयुक्तं सूर्यपक्षे तमश्चरहरपदं च नेयार्थमपि निरुक्तदेवताद्वयविषयकवक्तृभक्तिरूपात्मकभावध्वनावत्र रसराहित्येन नो दोषो नापि श्लेषसाधकत्वेन गुणस्तस्य तत्राप्रयोजकत्वान्मधुव्रतस्थाने सुहृत्कुलमिति चरस्थाने स्तोमेति च विन्यासेन तस्यान्यथापि साधयितुं शक्यत्वाच्चेति दिक् ॥९३॥ अथ केषां दोषे गुणत्वकरणं केषां वा

गुणत्वकरणं दोषे वर्णे श्रुतिकटौ पदे।
ग्राम्ये क्लिष्टे च परुषे वाक्ये चापि हि तादृशे ॥ ९४ ॥
अर्थे ग्राम्ये तथाऽयुक्तानुवादे चेति खेटगम्।
एवं दोषेऽपि तत्त्वैकनिवारणमथो पदे ॥ ९५ ॥
त्रिधाश्लीले च संदिग्धेऽप्यप्रतीते तथैवच।
वाक्येऽपि तादृशे तस्यैकदेशेऽनप्रतीतके ॥ ९६ ॥
शुद्धे वाक्ये न्यूनपदे तथाधिकपदेऽपि च।
शब्दार्थोक्तपदे स्रंस्यत्प्रकर्षे पूरितात्तके ॥ ९७ ॥
अर्धान्तरगते गर्भितेऽन्यलिङ्गेऽशरीरके।
तथार्थे चापि संदिग्धे निर्हेतौ कव्यसंमते ॥ ९८ ॥
विशेषपरिवृत्ते चाश्लीलेऽपीत्यङ्कदृज्झितम्।
दोषे गुणोपयोगस्तु पदे स्यादप्रयुक्तके ॥ ९९ ॥
निहतार्थे निरर्थे च विरुद्धमतिकृत्यपि।
अप्यन्यसंगते वाक्ये निरर्थेतरतादृशे ॥ १०० ॥
पदैकदेशे निहतार्थे निरर्थे तथैवच।
शुद्धवाक्ये त्रिधाऽरीतिमतिसंबन्धवर्जिते ॥ १०१ ॥
अर्थेऽपुष्टे च कष्टे च पुनरुक्ते द्विधोदिते।
रसे स्ववाक्स्थसंचारिण्यपि बाध्यविभावके ॥ १०२ ॥

---

तत्र तत्त्वैकवारणं केषां च गुणाद्यौपयिकत्वेन तदत्याज्यत्वं फलमिति विषयविभागाकाङ्क्षायां तं दशभिः प्रपञ्चयन्प्रथमव्यवस्थां प्रथयति—**गुणत्वेत्यादि**सार्धेन। तादृशे ग्राम्यादिरूपे ॥ ९४ ॥ खेटगं ग्रहाख्यनवसंख्याकापवादनिष्ठमित्यर्थः। तद्वद्द्वितीयमपि स्पष्टयति—**एवमित्यादि**चतुर्भिः। तत्त्वं दोषत्वम् ॥ ९५ ॥ तादृशे त्रिधाश्लीलादिपञ्चविध इत्यर्थः। तस्य पदस्य एकदेशे अनप्रतीतके अप्रतीतेतरनिरुक्तपञ्चविध इत्यर्थः ॥ ९६ ॥ **शुद्ध इति**। वाक्यमात्रदोषापवादस्थल इत्यर्थः। **शब्देति**। शाब्दिककथितपदं आर्थिककथितपदमिति भेदेन द्विविधतदोषापवादस्थल इति यावत्। **स्रंस्यदिति**। पतत्प्रकर्ष इत्यर्थः। **पूरितेति**। समाप्तपुनरात्त इति यावत् ॥ ९७ ॥ **अर्धेति**। अर्धान्तरगैकवाचके। **अन्येति**। भिन्नलिङ्गोपम इत्यर्थः। **कवीति**। कविसमयविरुद्ध इतियावत् ॥ ९८ ॥ **अङ्केति**। एकोनत्रिंशत्संख्याकं दोषे दोषत्वैकनिवारणमधिकरणभेदेन भवतीति संबन्धः। एवं तृतीयमपि तद्विशदयति—दोष इत्यादिसार्धचतुर्भिः—**गुणेति**। गुणाद्यौपयिकत्वेन त्याज्यत्वाभाव इत्यर्थः ॥ ९९ ॥ **निरर्थेतरेति**। निरर्थेतराप्रयुक्तादिपञ्चविधपदातिदेशदोषरूप इत्यर्थः ॥ १०० ॥ **शुद्धेति**। वाक्यमात्रदोषापवाद इति यावत् ॥ १०१ ॥ **द्विधेति**। पदार्थवाक्यार्थभेदादित्यर्थः। **स्वेति**। स्वस्य व्यभिचारिभावस्य या वाक् तद्बोधकः शब्दः तेन तिष्ठति प्रति-

भ्रवक्षिसंख्याक इत्येकोनषष्ट्यैवमिताममताः ।
पूर्वरत्नोक्तदोषाणामपवादाः क्रमादिमे ॥ १०३ ॥
रसयोरङ्गयोः साक्षाद्विरुद्धत्वे तथान्तरा ।
अनुकारेऽपि चेत्येवं त्रिधैवाद्यं तदार्थिकम् ॥ १०४ ॥
सामानाधिकरण्ये च नैरन्तर्ये विरोधयोः ।
गुणदोषविहीनत्वे द्वितीयं त्रिविधं तथा ॥ १०५ ॥
बाध्यो विरुद्धः संचारी स्मृतश्च कविसंमतः ।
वक्ता रसाक्तश्चेदेवं चतुर्धान्त्यं दशेत्यमी ॥ १०६ ॥
अथ दूषकताबीजं नित्यदोषेषु कथ्यते ।
पदे तु च्युतसंस्कारासमर्थावाचकेषु च ॥ १०७ ॥

बोधितो भवति संचारी व्यभिचारिभावो यत्र तादृशदोषापवाद इत्यर्थः। **बाध्येति।** बाध्यः विभावः प्रकृतरसविरुद्धालम्बनादिविभावो यत्र तस्मिन्नपवाद इति यावत् ॥ १०२ ॥ **भ्रवक्षीति।** इति निरुक्तप्रकारेण भ्रवक्षीति भूश्च अक्षिणी चेति समाहारस्तथा तादृशी संख्या यस्य तस्मिन्नेकविंशतिसंख्याकापवादस्थले दोषे गुणोपयोगोऽस्तीति पूर्वेणान्वयः। इतिशब्दोऽयं देहलीदीपन्यायेनाग्रेऽपि संबध्यते। तेन इति निरुक्तरीत्या इमे सर्वेपि शब्दार्थायुक्तविषयाः क्रमात्। **पूर्वेति।** अपवादाः एकेति मताः संमताः सन्तीति योजना ॥ १०३ ॥ ननु पूर्वरत्नेतिविशेषणात्किमन्येऽप्यपवादाः सन्तीत्याकाङ्क्षायां तेषामपि दोषे गुणत्वकरणं तत्त्वमात्रवारणं गुणाद्यौपयिकत्वेनात्याज्यत्वं च क्रमेण व्युत्पादयंस्तत्संख्यामपि प्रत्येकं समुचितं च कथयति—**रसयोरित्यादि**त्रिभिः। अन्तरा परम्परासंबन्धेन रसयोः अङ्गयोः विरुद्धत्वेऽपीत्यर्थः। आद्यं दोषे गुणत्वकरणं आर्थिकं पूर्वरत्नोक्तदोषार्थादिसिद्धदोषविषयकमित्यर्थः। तत् अपवादनं त्रिधैव ज्ञेयमित्यन्वयः ॥ १०४ ॥ द्वितीयं दोषत्वमात्रवारणम् ॥ १०५ ॥ **कवीति।** कवेः साम्येन संमतो विरुद्धोऽपि रसादिरित्यर्थः। अन्त्यं गुणाद्यौपयिकत्वेनात्याज्यत्वमिति यावत्। अमी अपवादाः। इदमत्र रहस्यम्। रसेति रसयोः शृङ्गारशान्तायोः साक्षाद्विरुद्धत्वेऽपि अन्तरा परंपरया यदि तदुपन्यसनं चेत्तर्हि अपवादः 'कामिनीसुखदाथापि क्षणिकं तद्विवेकिनः' इति चरमधातुपाते जातरतिसुखस्य विवेकवतः क्षणिकत्वं तत्र भात्यतः परम्परयोक्तरसविरोधापवादः प्रथमः। एवमङ्गशब्देष्टालम्बनविभावयोस्तरुणीस्वप्नवन्मृषेति द्वितीयः। 'राधे गामानयेत्यग्राह कृष्णस्त्वां रिरंसया' इति तृतीयः। अन्तरेति पूर्वपद्योक्तं सामानाधिकरण्ये चेत्यत्राप्यन्वेति। तथा च विरोधयोः परंपरया। **सामानेत्यादि।** 'प्राप्राग्यस्मि शमी वृद्धः शास्त्रं सर्वविदीप्सितम्'। अत्राद्यपादे सामानाधिकरण्यनैरन्तर्ये शास्त्रमित्यत्र गुणेत्यादि विरुद्धः संचारी बाध्यः स्मृतः कविसंमतस्तथा वक्तेत्यादि स्पष्टम् ॥ १०६ ॥ ननु भवत्वेवमपवादानां व्यवस्था तथापि येऽवशिष्टा एकोन-

नेयार्थेऽमृष्टबोध्यांशेऽपुष्टार्थे चाप्रयोजके ।
स्वार्थाप्रतीतिरेवानुचितार्थेऽसौ विरोधिनी ॥ १०८ ॥
वाक्यत्वाद्यद्वयान्यैतदतिदेशोष्विमे तथा ।
पदैकदेशयोश्चावाचकनेयार्थयोरपि ॥ १०९ ॥
शीघ्राबोधो विसंध्यादिविकृतेषु तथैव च ।
संकीर्णे च निराकाङ्क्षेऽप्यथो रसविरोधिता ॥ ११० ॥
वर्णतः प्रतिकूले च हतवृत्तेऽक्रमे तथा ।
अमतान्यार्थकेऽथ ज्ञवैमुख्यं निर्विसर्गके ॥ १११ ॥
अस्थानस्थसमासे च प्रसिद्धिविधुते तथा ।
भग्नक्रमे सप्तविधे संनिपाते तथैवच ॥ ११२ ॥
इष्टप्रतीतिविरहस्त्वभवन्मतयोगके ।
विरुद्धार्थप्रतीतिर्वै तथानभिहितार्थके ॥ ११३ ॥
अपेक्षिताप्रतीतिः स्यादस्थानस्थपदेऽपि च ।
साधर्म्यविलयो भिन्नवचनाद्युपमेऽपि च ॥ ११४ ॥

---

विंशत्यधिकैकशतसंख्याका नित्यदोषास्तेषां किं दूषकताबीजमित्याकाङ्क्षायां संक्षेपतस्तदनुक्रमेण व्युत्पादयति सप्रतिज्ञं अथेत्यादिद्वादशभिः ॥ १०७ ॥ अमृष्टेति छेदः । अविमृष्टविधेयांश इत्यर्थः । अपुष्टेतिच्छेदः । **स्वार्थेति** । निरुक्तसप्तप्रकारके पददोषे दूषकताबीजमस्तीत्यन्वयः । **अनुचितेति** । एतन्नामके पददोषे तु असौ प्रतीतिः विरोधिनी विवक्षिततिरस्कारकार्योपस्थितिरेव भवतीति संबन्धः ॥ १०८ ॥ एवं पददोषे तु तदुक्त्वाथ वाक्यदोषेषु कथयन्नुक्ताद्यदोषद्वयभिन्ना वाचकादिषड्विधपदातिदेशिकवाक्यदोषेष्वपि अनुचितार्थेतरपञ्चसु तथा तस्मिंश्च क्रमादर्थाप्रतीतिविरुद्धार्थप्रतीती अतिदिशति—**वाक्ये त्वित्याद्यर्धेन** । वैलक्षण्यार्थस्तुशब्दः । इमे निरुक्तप्रतीती तथा प्रागुक्तरीत्या । एवं पदैकदेशयोरपि अर्थाप्रतीतिमतिदिशति—**पदेत्याद्युत्तरार्धेन** । अपिः समुच्चये । ॥ १०९ ॥ अथ केवलवाक्यदोषेषु तदाह—**शीघ्रेत्यादिपञ्चभिः** । आदिना त्रिधाकुसंध्यादि सप्तस्वेतेषु शीघ्राबोधस्तदित्यादि योजना ॥ ११० ॥ **अमतेति** । अमतपरार्थ इत्यर्थः । छेदो यतिभङ्गभेदेन द्विविधं हतवृत्तं गृहीत्वा पञ्चस्वेतेषु रसविरोधितेत्यादिप्राग्वत् । निर्विसर्गके उपहतविसर्गादित्रिविध इत्यर्थः ॥१११॥ **सप्तेति** । सप्तप्रकारके भग्नप्रक्रम इत्यर्थः । ज्ञेत्यादिपूर्ववत् ॥ ११२ ॥ **इष्टेति** । तुशब्दः पूर्ववैलक्षण्यार्थः । **अभवदिति** । षोढेत्यर्थः । **अनभिहितेति** । अनभिहितवाच्य इत्यर्थः । तथाशब्दः समुच्चये । वैशब्दोऽवधारणे ॥ ११३ ॥ **अपेक्षितेति** । साधर्म्येति । साधर्म्यविघटनमित्यर्थः । **भिन्नेति** । भिन्नवचनोप-

अथार्थेऽर्थाप्रतीतिस्तु व्याहते च विरोधिनि ।
साकाङ्क्षे चाथ वैरस्यं भूयादनुचिते तथा ॥ ११५ ॥
त्यक्त्वा पुनः स्वीकृते च परुषादौ तथैव च ।
श्रोतृवैमुख्यमेवं दुष्क्रमे चाप्यनवीकृते ॥ ११६ ॥
परिवृत्ते विध्ययुक्ते विरोधः पदमुक्तके ।
प्रकाशितविरुद्धेऽथोभयादेयाद्यधीरपि ॥ ११७ ॥
सखिभिन्ने रसे तु स्यादनौचित्यादिना विदाम् ।
आस्वादस्यैव सर्वत्रोपघात इति हि स्थितिः ॥ ११८ ॥
तदेवं नित्यदोषास्तु सर्वेऽप्यङ्केन्दुभूमिताः ।
अपवादास्तथैकोनषष्टिसंख्याः परे दश ॥ ११९ ॥
एवं पूर्वप्रतिज्ञातगुणयोः प्रथमो मया ।
उक्तो वैशेषिकत्वेनाभरणे यः प्रपञ्चितः ॥ १२० ॥

---

मादिस्त्रिविध इत्यर्थः ॥ ११४ ॥ तदेवं षट्त्रिंशत्संख्याकवाक्यदोषेषु दूषकताबीजमभिधायार्थदोषेषु तदभिधत्ते—'अथेत्यादिचतुर्भिः । व्याहते द्विविधे विरोधिनि । धर्मशास्त्राद्यवच्छेदेन सप्तविधविरोधशालिनीत्यर्थः । साकाङ्क्षे च एवं दशविधदोषेष्वर्थाप्रतीतिर्दूषकताबीजमस्तीति योजना ॥ ११५ ॥ **परुषादाविति** । सप्तविध इत्यर्थः । तथेत्याद्युक्तार्थमेव । एवमनुचितादौ नवविधे वैरस्यं भूयादिति संबन्धः । दुष्क्रमे द्विविधे ॥११६॥ **परिवृत्त इति** । त्रिविध इत्यर्थः । **विधीति** । द्विविध इत्यर्थः । एवमष्टविधे श्रोतृवैमुख्यमित्यन्वयः । **पदेति** । प्रकाशितेति अनयोर्विरोध इति संबन्धः । उभयेति ॥ ११७॥ **सखीति** । सहचरभिन्ने उभयोरर्थयोरुपादेयत्वानुपादेयत्वाप्रतीतिरिति त्रिंशत्संख्याकार्थदोषेषु दूषकताबीजानि विज्ञेयानीति शेषः । एवमर्थदोषेषु तदुक्त्वा रसदोषेषु सर्वत्र अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम् । 'औचित्योपनिबन्धस्तु रसस्योपनिषत्परा' इति प्रदीपवचनात्सर्वत्रैकमेव प्रायस्तदित्याह—**रसे त्विति** । आदिनाङ्गविस्तरादिस्थले प्रधानतिरोधानं बोध्यम् । उपसंहरति—**इतीति** । हिरवधारणे । स्थितिः सिद्धान्तोऽस्तीत्यर्थः । अत्र तत्र तत्र प्रमाणप्रपञ्चस्तु प्रकाशप्रदीपादित एव ज्ञेय इति संक्षेपः ॥ ११८ ॥ अथ सर्वेषां नित्यदोषाणां तथापवादानां च संख्यां प्रख्यापयति—**तदेवमिति** । तत्तस्मान्निरुक्तापवादरूपकारणादित्यर्थः । एवमुक्तसंज्ञकाः सर्वेऽपि नित्यदोषाः । **अङ्केन्द्विति** । 'अङ्कानां वामतो गतिः' इति वचनात् अङ्काः नव इन्दुः एकः भूः एकः एतैः मिताः पूर्वरत्नोक्ताष्टसप्तत्यधिकैकशतदोषेभ्योऽवशिष्टत्वेनैकोनविंशत्यधिकैकशतसंख्याका एव संमताः सन्तीत्यन्वयः । तथैव अपवादा अपि एकोनषष्टिसंख्यास्तथा परे प्रागुक्ताधिकादयोऽन्येऽपि दश वर्तन्त इति संबन्धः ॥ ११९ ॥ एवं प्रतिज्ञातदोषाभावरूपगुणनिरूपणं मया यथामत्यत्र कृतं विस्तृतं तु तत्सरस्वतीकण्ठाभरण एव द्रष्टव्यमित्याशयेनोपसंहरति—**एव**

द्वितीयस्तु त्रिधैवोक्तः प्रकाशादौ विशेषतः।
माधुर्यौजःप्रसादाख्यभेदैः सोऽथ निगद्यते ॥ १२१ ॥
सात्विकैकरसस्थो यो धर्मो धीद्रुतिकार्यसौ।
माधुर्यं भोगकरुणाऽयोगशान्तेऽधिकं क्रमात् ॥ १२२ ॥

**मिति**। वैशेषिकत्वेन एतत्संज्ञावत्त्वेनेत्यर्थः। आभरणे सरस्वतीकण्ठाभरण इति यावत्। तद्यथा 'त्रिविधाश्च गुणाः काव्ये भवन्ति कविसंमताः। बाह्या आभ्यन्तराश्चैव ये चवैशेषिका इति। बाह्याः शब्दगुणास्तेषु चान्तरास्त्वर्थसंश्रयाः। वैशेषिकास्तु ते नूनं दोषत्वेऽपि हि ये गुणाः' इति। विस्तरस्तु तत्रैव द्रष्टव्य इति दिक् ॥ १२० ॥ किमथ कियत इत्याकाङ्क्षां क्षपयन्योयं माधुर्यादिर्द्वितीयश्चेति प्राक्समुद्दिष्टभावरूपमाधुर्याद्यभिधद्वितीयगुणोऽवसरप्राप्त इति तत्कथनं तस्य प्राचीनाचार्यसंमतभेदसंख्यानामनी अभिधाय प्रतिजानीते—**द्वितीयस्त्विवति**। **माधुर्येति**। प्रकाशादौ काव्यप्रकाशादौ। आदिना काव्यप्रदीपः विशेषतः गुणाधिक्यवादिखण्डनरूपविशेषेणेत्यर्थः। त्रिधैवोक्त इति संबन्धः। कण्ठाभरणाद्यविरोधं त्वग्रे वक्ष्याम इति संक्षेपः ॥ १२१ ॥ तत्र माधुर्यं लक्षयति—**सात्विकेति**। यः सात्विकेति सात्विकाः शृङ्गारकरुणशान्ताः प्राङ्निरूपिता एव चतुर्थरत्ने क्रमात्सात्विकराजससात्विकतामससात्विकसात्विकाख्यावान्तरभेदैः। एकपदं वीरादिराजसरसान्तरव्युदासार्थम्। एवंच शृङ्गारादिसात्विकमात्ररसनिष्ठ इत्यर्थः। एतादृशः अतएव **धीति**। धीद्रुतिं चित्तद्रवं करोतीति तथा। स्वाधिकरणाधिकरणावच्छेदेनान्तःकरणस्य चन्द्रमणीनां तदुदय इव सुस्निग्धत्वसाधक इति यावत्। असौ धर्मः माधुर्यं भवतीति संबन्धः। तथाच सात्विकैकरसस्थत्वे सति चित्तद्रवकारिधर्मत्वं माधुर्यसामान्यलक्षणं फलितम्। ओजःप्रभृतावतिव्याप्तिव्यावृत्तये सात्विकेति। ओजसः प्राधान्येन वीरादितामसेषु तौल्येनाद्भुतादिषु राजसेषु तथा प्रभृतिपदगृहीतस्य पूर्वोक्तदोषाभावरूपस्य च गुणस्य सर्वरसेषु साधारण्येन विद्यमानत्वात्। एवमेकपदेन सर्वरससाधारणे प्रसादे तद्व्युदासः शृङ्गाराद्यन्यतमत्वलक्षणसात्विकरसत्वेऽतिप्रसङ्गभङ्गार्थं उत्तरदलम्। तस्य सामान्यरूपत्वेन धीद्रुतिकारिधर्मत्वाभावात्। तत्रापि कामिनीज्ञानरूपालम्बनविभावे स्वेदाख्यसात्विकानुभावजनके देहद्रुतिकारित्वेन तद्वारणार्थं चित्तेति। नच तस्य रसजनकत्वेन रसस्थत्वाभावात्पूर्वदलस्यैव राहित्येन कातिव्याप्तिशङ्काविषयत्वमपीति वाच्यम्। 'विभावाद्यैरपाज्ञानचिद्व्येयः स्थाय्यसौ रसः। यद्वा तत्संयुतिव्यक्तस्थाय्युपाधिश्चिदेव सः' इति पूर्वोक्तरसलक्षणात्तत्रापि तत्सत्वेनोक्तशङ्कायाः सुसंभावितत्वात्। नहि तैलवर्तिज्वालासंयोगाभिव्यक्तप्रदीपकलिकायां तैलाद्यसत्त्वं नाम। अन्यथा कज्जलादौ स्नेहाद्यनुपलम्भप्रसङ्गात्। उत्तरदलमात्रोक्तौ पुत्रस्ते जात इत्यानन्दपारवश्यवशचित्तद्रवकारिवाक्यरूपशब्दाख्यधर्मेऽतिव्याप्त्यापत्तिरिति पूर्वदलम्। तस्य परंपरयापि निरुक्तरसस्थत्वाभावात्। धर्मपदं त्वत्र स्वरूपपरि-

**तामसैकरसस्थो यो धर्मो धीदीप्तिकार्यसौ ।**
**ओजो वीरे च बीभत्से रौद्रे च क्रमशोऽधिकम् ॥ १२३ ॥**
**राजसेषु तु तेषु स्यात्प्राधान्यमुभयोरपि ।**
**यः सर्वरसगोऽपीन्दुं दीपवञ्चीनमम्बुवत् ॥ १२४ ॥**

---

वार्यकमेव । उक्तं हि काव्यप्रकाशकारिकायाम्—'आह्लादकत्वं माधुर्यं शृङ्गारे द्रुतिकारणम् । करुणे विप्रलम्भे तच्छान्ते चातिशयान्वितम्' इति । एतद्व्याकुर्वता प्रदीपकृतापि 'तथाच यद्वशेन श्रोतुर्विमनस्कत्वं न संपद्येत तत्तदाह्लादकत्वस्वरूपं माधुर्यमित्यर्थः' इति । नन्वत्र माधुर्यस्याह्लादकत्वमेव स्वरूपमुक्तं त्वया त्वन्यदेवैतदुक्तमिति कथं न तद्विरोधस्तथा कारिकायां तस्य रसविशेषनिष्ठत्वमुक्तं तदेव च भवताभिहितं प्रदीपे तु यद्वशेन श्रोतुरित्यादिस्वारस्यात्तस्य शब्दगतत्वमेव प्रतीयत इति तत्रापि तादवस्थ्यमेवेति चेदुच्यते । कारिकाद्युक्ताह्लादकत्वस्यैवायं परिष्कार इति ध्येयम् । नोचेत्कारिकायामाह्लादकत्वपदवैयर्थ्यात्प्रदीपलक्षणस्यापि पुत्रजन्मशब्दादावतिव्याप्तेश्च दुरुद्धरत्वं स्यात् । शब्दनिष्ठत्वं तु तस्य तदधिकरणव्यञ्जकत्वेनैवेति वक्ष्यते । सात्विकरसेष्वपि तस्योत्तरोत्तराधिक्यं क्रमेणाह—**भोगेत्यादिशेषेण** । तत् माधुर्यमिति अध्याहृत्य योज्यम् । भोगः संभोगशृङ्गारः करुणः प्रसिद्ध एव अयोगः योगाभावरूपो विप्रलम्भः शृङ्गारः शान्तोऽपि स्फुट एव । एतेषां समाहारस्तथा तत्रेत्यर्थः । क्रमादधिकं भवतीत्यन्वयः । यावत्संभोगशृङ्गारे माधुर्यं तदपेक्षया द्विगुणं करुणे त्रिगुणं विप्रलम्भे चतुर्गुणं शान्त इति भावः ॥ १२२ ॥ एवं क्रमप्राप्तं ओजोगुणमपि लक्षयति—**तामसेति** । तामसा अपि रसाः प्रागुक्ता एव वीरादयः । **धीति** । दीप्तिः प्रतिज्वलनमिवावस्थितिः । शिष्टं तु प्राग्वदेव । तथाच तामसैकरसस्थत्वे सति चित्तदीप्तिकारिधर्मत्वमोजस्त्वं बोध्यम् । दीप्तिश्चात्र स्वाधिकरणाधिकरणावच्छेदेनान्तःकरणस्य सूर्यमणीनां तदुदय इव तेजःप्रसवसंपादनमेव । अतिव्याप्त्यादिव्युदसनरूपपदकृत्यादिकं तु पूर्ववदेवोह्यम् । इदमप्युक्तं काव्यप्रकाशकारिकायामेव । 'दीप्त्यात्मविस्तृतेर्हेतुरोजो वीररसस्थितिः । बीभत्सरौद्ररसयोस्तस्याधिक्यं क्रमेण तु' इति । विवृतं चैतत्प्रदीपे—'तथाच यद्वशाज्ज्वलितमिव मनो जायते तदोज इत्यर्थ इति । असावोज इति संबन्धः । तत् ओज इत्येव योज्यम् । तत्रापि तस्य वीराद्यवच्छेदेनोत्तरोत्तराधिक्यलक्षणं विशेषं कथयति—**वीरे चेत्यादिशेषेण** १२३ ननु प्रसादाख्यस्य तृतीयगुणस्य तु तव यः सर्वरसगोऽपीत्यादिना सर्वरससाधारण्यस्यैव वक्ष्यमाणत्वाद्धास्यादिषु पूर्वोक्तराजसरसेषु कः प्रधानो गुण इत्याशङ्क्य तत्र ब्राह्मप्रकाशांशप्राधान्येन सत्त्वस्य मायिकध्वान्तांशप्राधान्येन तमसश्च परस्परसांकर्येणोभयप्रधानरूपरजस इव माधुर्यौज उभयोरपि समप्राधान्यमेव विवक्षितमिति समाधत्ते—**राजसेष्वित्यर्धेन** । हास्याद्भुतभयानकेष्वित्यर्थः । अथ क्रमप्राप्तं प्रसादाख्यं गुणं लक्षयति—**यः सर्वेति** । यः सर्वरसगोऽपि साधारण्येन

**ओजोमाधुर्ययोर्हृत्तं नयेद्द्राक्सप्रसादकः।**
**स सर्वरचनासूच्यस्तत्त्वं भाक्तं रवादिषु ॥ १२५ ॥**
**एवं च त्रिविधोऽप्येष द्विविधः प्राग्वदिष्यते।**
**मुख्यो रसैकगो गौणः शब्दार्थोभयमात्रगः ॥ १२६ ॥**
**ननु कारणतावच्छेदकत्वेन रसस्थिताः।**
**द्रुत्यादेरनुमीयन्ते माधुर्याद्या गुणा यदि ॥ १२७ ॥**

सर्वरसवृत्तिरपीत्यर्थः । इन्दुं 'अथ कर्पूरमस्त्रियाम्। घनसारश्चन्द्रसंज्ञः' इत्यमरात् चन्द्रपर्यायो ह्लादकत्वादिति क्षीरस्वामिविवृतेश्च कर्पूरमित्यर्थः। **दीपेति**। तथा चीनं 'चीनो मृगान्तरे तन्तुव्रीहिभेदेंऽशुकान्तरे' इति विश्वाच्चीनाख्यदेशविशेषजन्यमतिसूक्ष्मं वसनमिति यावत् । अम्बुवदिति ॥ १२४ ॥ **ओज इति**। निरुक्तलक्षणौजोमाधुर्यगुणयोः सतोरित्यर्थः। क्रमेणेति शेषः । तं शृङ्गारादिरसं द्राक् शीघ्रं हृत् मनः कर्म नयेत्। प्रापयतीत्यर्थः। सः गुणः प्रसादकः प्रसादाभिध इति संबन्धः । पक्षे यः नायकः सर्वेति इन्दुमित्याद्युपमा तूक्तार्थैव । **ओज इति**। स्वकान्तिसौन्दर्ययोर्विषय इत्यर्थः । हृत् स्वकान्तास्वान्तं तं संभोगशृङ्गारं द्राङ्नयेत्स एव प्रसादक इति। अयमाशयः। यः सर्वसाधारणोऽपि तद्व्यञ्जके काव्ये यद्वर्णाद्यवच्छेदेन ओजोगुणध्वननप्राधान्यं तदवच्छेदेन श्रोतुश्चित्तं कर्पूरदीप इव सद्यः प्रकृतरसव्याप्तं करोति तथा यद्वर्णाद्यवच्छेदेन माधुर्यगुणध्वननप्राधान्यं तदवच्छेदेन च तदतिसूक्ष्मं परमनिर्मलं वसनमुदकमिव झटिति तादृशं तनोतीह स एव गुणः प्रसादपदशक्य इति । तदुक्तं काव्यप्रकाशकारिकायाम्—'शुष्केन्धनाग्निवत्स्वच्छजलवत्सहसैव यः । व्याप्नोत्यन्यप्रसादोऽसौ सर्वत्र विहितस्थितिः' इति । एवंच सर्वरसगतत्वे सति ओजआद्यवच्छेदेन सद्यश्चेतसस्तत्तद्रसमात्रतापादकत्वं प्रसादत्वं बोध्यम् । पदकृत्यादिकं तूक्तदिशा स्वयमेवोह्यमिति दिक्। तस्य व्यञ्जकमपि साधारणमेवाह—**स इति**। प्रसाद इत्यर्थः। रचनास्त्वग्रे वक्ष्यामः। कथं तर्हि प्रसन्नाः श्लोकवर्णा इत्यादिव्यवहार इति चेदौपचारिक एवेत्याह—**तत्त्वमित्यादिशेषेण** । तत्त्वं प्रसन्नत्वम्। **रवेति**। वर्णपदवाक्यादिष्वित्यर्थः। भाक्तं औपचारिकमिति यावत् ॥ १२५ ॥ तदेवं लक्षितस्य त्रिविधस्यापि माधुर्यादिगुणस्य पुनर्द्वैविध्यं विधत्ते—**एवंचेति** । प्राग्वत् दोषाभावाख्यगुणवदित्यर्थः। तामेव विधामभिधत्ते—**मुख्य इति**। रसेतरावृत्तिरित्यर्थः। **शब्देति** । शब्दश्च अर्थश्च उभयौ चेति शब्दार्थोभये तेष्वेव गच्छति वर्तेत इति तथा शब्दवृत्तिरर्थवृत्तिरुभयवृत्तिश्चेति यावत् । रिङ्गदिति हंसा लसन्तीति यं चिन्तयतीत्यादौ ज्ञेयम्। तदुक्तं काव्यप्रकाशसूत्रे—'गुणवृत्त्या पुनस्तेषां वृत्तिः शब्दार्थयोर्मता' इति ॥ १२६ ॥ तत्र निरुक्तगुणानां रसधर्मत्वमेव प्रमाणाभावान्न संभवतीति शङ्कते—**नन्वित्यादिना** । तत्र हेत्वसिद्धिमाशङ्क्य समाधत्ते—**कारणतेत्यादिगौरवादित्यन्तेन**। **द्रुत्यादेरिति**। द्रुतिः पूर्वोक्तः द्रुद-

**तर्हि तत्रैव ते युक्तं गौरवादिति चेन्न तत्।**
**द्रुत्यादिजनकत्वे तद्वत्त्वेनैव तु लाघवात्॥ १२८॥**
**यत्तु द्रुतितरे कार्ये माधुर्यतरहेतुता।**
**अवश्येत्युदितं माधुर्यादिमत्त्वं गडूपमम्॥ १२९॥**

---

स्फटिकचषकगतगङ्गोदकनिक्षिप्तसितोपलाशकलन्यायेन मनोवृत्तेर्गलितत्वमिवाव-स्थाविशेष इत्यर्थः। आदिना प्रागुक्तदीप्त्यादिः। एतादृशस्य कार्यस्य कारणेति। **माधुर्येति**। आद्यपदादोजःप्रसादौ गुणा इति यदि। **रसेति**। शृङ्गारादिरसैकनिष्ठा इति यावत्। अनुमीयन्ते अनुमितिविषयीक्रियन्त इत्यर्थः। अत्रायं प्रयोगः—शृङ्गाराद्या रसाः प्रागुक्तद्रुत्यादिकार्यतानिरूपितसामान्यभिन्नकिंचिद्धर्मरूपकारणतावच्छेदकावच्छिन्नाः कारणत्वात् घटं प्रति मृत्तिकावदिति। अस्यार्थः। साहि श्लक्ष्णत्वलक्षणेन मृत्त्वजातीतरेण किंचिद्धर्मरूपेण कारणतावच्छेदकेन युक्तैव यथा कारणत्वं लभते तद्वत्प्रकृतेऽपीति बोध्यम्। एवंच कारणतावच्छेदकतयैवैतत्सिद्धिः॥ १२७॥ तर्हि तत् अनुमित्या रसाधिकरणकत्वेन माधुर्यादिगुणसाधनमित्यर्थः। ते मंमटमतमानिनः। युक्तं न्याय्यं नैव भवतीत्युत्तरेणान्वयः। कुत इति चेत्तत्र हेतुमाह—**गौरवादिति**। सर्वसंमतशृङ्गारत्वादिनिसर्गसिद्धप्रातिस्विकतत्तद्रसजातिलक्षणकारणतावच्छेदकेनैव निरुक्तद्रुत्यादिकार्यनिर्वाहे तदितरमाधुर्यादितत्समानाधिकरणगुणाङ्गीकरणे गुरुतरनिष्फलप्रयासादिति यावत्। तदुक्तं रसगङ्गाधरे—'तादृशगुणविशिष्टरसानां द्रुत्यादिकारणत्वात्कारणतावच्छेदकतया गुणानामनुमानमिति चेत् प्रातिस्विकरूपेणैव रसानां कारणतोपपत्तौ गुणकल्पने गौरवात्' इति। अथोक्तशङ्कामनूद्य तत्खण्डनं प्रतिजानीते—**इतीत्यादि**तदर्धशेषेण। तत्र हेतुं कथयति। द्रुत्यादिजनकत्वे तद्वत्त्वेनैवेत्यादि तदुत्तरार्धेन। तच्छब्दोऽयं पूर्वप्रकृतमाधुर्यादिपरः। शृङ्गारादिनवरसनिष्ठनवविधजातीनां कारणतावच्छेदकानामङ्गीकारापेक्षया त्रिविधानां तत्समानाधिकरणत्वेन माधुर्यादिगुणानामेव कारणतावच्छेदकत्वकल्पनस्यातिलघुत्वादित्याशयः। शिष्टं तु स्पष्टमेव॥ १२८॥ ननु निरुक्तरीत्या लाघवमाशङ्क्य रसगङ्गाधर एव दूषणान्तरेण तत्खण्डितमेव। तद्यथा—शृङ्गारकरुणाशान्तानां माधुर्यवत्त्वेन द्रुतिकारणत्वं प्रातिस्विकरूपेण कारणत्वकल्पनापेक्षया लघुभूतमिति तु न वाच्यम्। परेण मधुरतरादिगुणानां पृथग्द्रुततरत्वादिकार्यतारतम्यप्रयोजकतयाऽभ्युपगमेन माधुर्यवत्त्वेन कारणताया गडुभूतत्वादिति। तथाच क नाम रसधर्मत्वं माधुर्यादिगुणानामित्याशङ्क्य प्रतिबन्द्या दूषणमुद्धरति—**यत्त्वित्यादि**युग्मेन। तत्राद्येनोक्तग्रन्थमर्थतोऽनुवदति—**यत्त्विति**। तुशब्दः शङ्कान्तरसमुच्चायकः। **द्रुतीति**। विपुलद्रुतिलक्षण इत्यर्थः। एतादृशे कार्ये। माधुर्येति। प्रचुरमाधुर्यकारणतेति यावत्। अवश्येति हेतोः माधुर्येति गड्विति अन्तर्गडुवत्तुच्छमित्यर्थः।

**तन्मन्दं बहले दाह्ये तादृग्वह्निः प्रयोजकः।**
**दृष्ट एवेति किं हेतुर्वह्निऽर्न दहनेऽस्ति वा॥ १३०॥**
**यच्चात्मनो गुणत्वेन तद्रूपे क्व रसे गुणाः।**
**इत्युक्तं तदपि स्थूलं तत्तोक्तेः शबलेऽपि ते॥ १३१॥**

इति यदुक्तं तन्मन्दमित्युत्तरेणान्वयः ॥ १२९ ॥ प्रतिज्ञातेऽर्थे हेतुभूतां प्रतिबन्दिं विशदयन्नाक्षिपति—**बहल इत्यादि**शेषेण। पुष्कल इत्यर्थः। एतादृशे दाह्ये तृणादौ तादृक् बहलः वह्निः प्रयोजकः हेतुः दृष्टएव प्रत्यक्षीकृत एव । इति हेतोः वह्निर्दहने कर्मणि विषये हेतुर्न अस्ति किं वह्नित्वेन दहनत्वेन च कार्यकारणभावो नाङ्गीक्रियते किमिति योजना। तस्मात्तत्र यथा बहलत्वादिकं कार्यकारणभावे अप्रयोजकं तद्वत्प्रकृतेऽपि माधुर्यतरत्वादिकमप्रयोजकमेवेति भावः। नच वह्नित्वसामान्यवद्रसत्वसामान्येनैव भवतु कार्यकारणभावः सतु सात्विकादितत्तद्रसत्रिकाद्द्रुत्यादिकार्यत्रयदर्शनेनानिष्ट एव। माधुर्यादिमत्त्वं तु तदितरधर्मत्वेन गड्डपममेवातो विषमैवेयं प्रतिबन्दीति वाच्यम् । मधुरतरादिगुणानां द्रुतितरादिना कार्यकारणभावाक्षेपे प्राप्तबहलदाह्यतादृग्वह्निकार्यकारणभावापत्तिमात्रांश एव प्रतिबन्दीव्युद्भावनेन तत्साम्यसौलभ्यात् तत्रत्यवह्नित्वलक्षणकारणतावच्छेदकापेक्षया प्रकृते माधुर्यादिमत्त्वस्य गुरुभूतस्य तस्य तु मधुरः शृङ्गार इत्यादि सहृदयहृदयसाक्षिकानुभवबलेनैवागत्याङ्गीकरणीयत्वात्तादृशचित्रदुकूले रक्तादिरूपवत्त्वस्यैव तत्तन्तुषु कारणतावच्छेदकस्य गुरुतरस्यापि सर्वसंमतत्वाच्च। नचैवमपि वह्नेरिव माधुर्यादेरेव कारणत्वं संपन्नं तत्त्वनिष्ठं माधुर्यादिमत्त्वेन रसस्यैव कारणतायास्त्वयोपपादितत्वादिति वाच्यम् । माधुर्यादेर्धर्मत्वेन धर्मिणं विहाय कार्यकारित्वासंभवात्तत्रैव तत्पर्यवसानाद्गन्धादौ तथैवेक्षणाच्च । तस्माद्युक्तमेवोक्तरसधर्मत्वं माधुर्यादिगुणानामिति संक्षेपः ॥ १३० ॥ नन्वेवमपि रसधर्मत्वं न माधुर्यादेर्युक्तिसहम्। रसस्य तु त्वन्मते 'रसो वै सः' इति श्रुत्यवलम्बनेनात्मरूपतया निर्गुणत्वात् । तदुक्तं रसगङ्गाधरे—'किंच आत्मनो निर्गुणतया आत्मरूपरसगुणत्वं माधुर्यादीनामनुपपन्नम्' इति । एवंच शब्दादिधर्मत्वमेव सर्वजनप्रतीयमानं तेषां समञ्जसं किमनेन बकबन्धनप्रयासेनेत्याशयमनूद्य स्वप्रतिज्ञाननुसंधानमूलमेवेदं चोद्यमिति मनसि निधाय तां स्मारयति—**यच्चेति** । अगुणत्वेनेति च्छेदः। स्थूलं पामरजनरमणीयमेवेत्यर्थः । प्रतिज्ञातेऽर्थे हेतुं व्युत्पादयति—**तत्तेत्यादि**शेषेण । ते तव अपि रसगङ्गाधरकर्तुस्तव मतेपीत्यर्थः । शबले रत्याद्युपहित आत्मन्येवेति यावत्। तत्तोक्तेः तस्य रसस्य भावः तत्ता तस्याः उक्तिस्तस्या हेतोरित्यर्थः। तथाचोक्तं तत्रैव । वस्तुतस्तु वक्ष्यमाणश्रुतिस्वारस्येन रत्याद्यवच्छिन्ना भग्नावरणा चिदेव रस इति। तस्मादीश्वराभिधसगुणे ब्रह्मणि यथा मायिकसत्त्वादिगुणाः सिद्धान्तिता एव तद्वत्प्रकृते रसेऽपि रत्यादिनिष्ठसत्त्वादिपरिणामानां माधुर्यादिगुणानां त्वदुक्तिनान्तरीयकसिद्धिकत्वान्न कोऽप्यत्र वैमत्यावसर

**यदप्यन्यमतेऽप्यस्ति न गुणे गुणकल्पना ।**
**इति रत्यादिगुणताप्येतेषां नेति तन्मृषा ॥ १३२ ॥**
**इच्छादिरूपरत्यादिगुणोऽप्येतस्य जातिवत् ।**
**माधुर्यादेः सुयुक्तत्वात्सात्त्विकादित्रिके क्रमात् ॥ १३३ ॥**
**तस्माच्छब्दार्थयोर्गौणा माधुर्याद्या गुणाः किल ।**
**मुख्यास्तु रसगास्तौ च तथा रीत्यादिभिर्मतौ ॥ १३४ ॥**
**तद्व्यक्ती रीतिवृत्तिभ्यां शब्दाद्याद्यास्ततोऽत्र ते ।**
**लक्षणेनार्थतस्तेन ते तत्र त्वान्तरा मताः ॥ १३५ ॥**

इति तत्त्वम् ॥ १३१ ॥ एवं पण्डितरायोक्तं दूषणान्तरमप्यत्रानूद्य खण्डयति—**यदपीति** । **अन्येति** । तार्किकमतेऽपीत्यर्थः । गुणे बुद्ध्यादौ । **गुणेति** । गुणान्तरकल्पना नास्तीत्यर्थः । इति हेतोः एतेषां माधुर्यादिगुणानां **रतीति** । रत्यादिनिरुक्तरसोपाधिभूतस्थायिभावगुणतापीति यावत् । न नैवास्तीति संबन्धः । उक्तं हि रसगङ्गाधरे—'एवं तदुपाधिरत्यादिगुणत्वमपि मानाभावात् । पररीत्या गुणे गुणाङ्गीकारस्यानौचित्याच्चेति' इत्यपि यदुक्तं तदपि मृषा मिथ्यैवेत्यन्वयः ॥ १३२ ॥ तदुपपादयति—**इच्छादीति** । एतस्य निरुक्तरत्यादेः जातिवत् इच्छात्वरतित्वादिसामान्यवदित्यर्थः । सात्त्विकादीति । क्रमात् सात्त्विकरसावच्छेदेनैव माधुर्यस्य तामसरसावच्छेदेनैवौजसः राजसरसावच्छेदेनैवोभयोः सर्वरसावच्छेदेन तु प्रसादस्य च विद्यमानत्वमिति प्राङ्निर्णीतक्रमानुसारेणेति यावत् । माधुर्यादेः माधुर्यादिगुणस्य सुयुक्तत्वात् अतियोग्यत्वात् तन्मृषेति पूर्वेणान्वयः । एवंच यथा इच्छात्वजात्याख्यो धर्मः गुणेपीच्छादौ तार्किकसंमत एव तद्वत्किमपराद्धं तत्र माधुर्यधर्मेण । नहीच्छायां जातीतरद्धर्मान्तरानादर एवेति नियमः । कृतिप्रयोजकत्वस्य तत्र सर्वसंमतत्वादतोऽस्य रत्यादिगुणत्वाभावोक्तिः साहसमात्रमेवेति भावः । प्रकृते हि गुणपदेन धर्मा एवेष्टा नतु तार्किकादिवद्रूपाद्याः । अत एव प्रथमरत्ने धर्मा रसा लक्षणानीति धर्मपदेनैव माधुर्यादिगुणसंग्रहणमिति रहस्यम् ॥ १३३ ॥ निगमयति—**तस्मादिति** । माधुर्याद्या गुणाः शब्दार्थयोर्गौणाः किलेति योजना । तर्हि क्व मुख्यास्तत्राह—**मुख्यास्त्विति** । कीदृशौ शब्दार्थौ माधुर्यादिध्वनकावित्यत आह—**तौचेत्यादि**शेषेण । रीत्यादिभिर्द्वारा तौ तथा मताविति संबन्धः ॥ १३४ ॥ अथ के ते रीत्यादयो यद्वशाच्छब्दार्थौ माधुर्यादिगुणध्वनकौ भवत इति जिज्ञासायां तत्रादिपदविवक्षिताभ्यां प्रथमरत्ने 'धर्मा रसा लक्षणानि रीत्यलंकृतिवृत्तयः । रसिकाह्लादका ह्येते काव्ये सन्ति च षड्गुणाः' इत्यत्रोद्दिष्टाभ्यां वृत्तिलक्षणाभ्यां सहितानां रीत्यादित्रयाणां मध्ये किं शब्दस्य माधुर्यादिध्वनने द्वारं किंवार्थस्येत्यवान्तरशङ्कामेव प्रथममुपशमयंस्तत्तद्व्यञ्जितगुणानां संज्ञान्तरमप्यभिधत्ते—**तद्व्यक्तिरिति** । तेषां माधुर्यादिगुणानां व्यक्तिः स्फुटीकृतिरित्यर्थः । **रीतीति** । वक्ष्यमाणलक्षणाभ्यामित्यर्थः । शब्दा-

**तत्तद्रसार्हपदसंघटना रीतिरीरिता।**
**वैदर्भी च तथा गौडी पाञ्चाली चेति तत्क्रमात्॥ १३६॥**
**असमासा तुरीयोर्ध्वसमासा च यथेप्सितम्।**
**तदेकान्तसमासा च विज्ञेया सा यथाक्रमम्॥ १३७॥**

त्सकाशाद्यतः भवति ततः हेतोः ते माधुर्याद्याः गुणाः अत्र तादृग्रीतिवृत्तिभ्यां व्यञ्जके शब्देऽधिकरणे। बाह्याः 'बाह्याः शब्दगुणा' इति सरस्वतीकण्ठाभरणवाक्यादेतत्संज्ञकाः सन्तीति संबन्धः। एवं रीतिवृत्तिद्वारा शब्दस्य गुणव्यञ्जकत्वं तदवच्छेदेन तेषां बाह्यत्वं चाभिधायाऽधुनाऽर्थस्य लक्षणद्वारा तद्व्यञ्जकत्वं तदवच्छेदेन तेषामान्तरत्वं च बोधयति—**लक्षणेनेति**। लक्षणेन वक्ष्यमाणेन। यतः अर्थतस्तद्व्यक्तिर्भवति इति पूर्वस्मादनुकृष्य योज्यम्। तेन हेतुना तत्र अर्थरूपेऽधिकरणे ते माधुर्यादयो गुणाः आन्तराः तेषु चान्तरास्त्वर्थसंश्रया इत्यपि तदुक्तेरेतत्संज्ञका इत्यर्थः। मताः संमता इति संबन्धः। शब्दतदर्थयोः परस्परापेक्षया बहिरन्तर्भावाद्युक्तमेव तत्तदवच्छिन्नानां तत्तद्गुणानां तत्तत्संज्ञाविधानमिति तत्वम् ॥१३५॥ ततः प्राप्तावसरां रीतिं लक्षयति—**तत्तदित्याद्य**र्धेन। तत्र 'कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकं मनुजपशुभिर्निर्मर्यादैर्भवद्भिरुदायुधैः। नरकरिपुणा सार्धं तेषां सभीमकिरीटिनां पुनरहमसृङ्मेदोमांसैः करोमि दिशां बलिम्' इति रौद्ररसीयौजोगुणव्यञ्जनाननुगुणपाञ्चाल्यादिरीतिमत्त्वेनारीतिमत्त्वदोषाक्रान्ते अश्वत्थामवाक्येऽतिव्याप्तिव्यावृत्तये तत्तद्रसार्हेति। वक्ष्यमाणायां वृत्तौ तां व्युदसितुं पदेति। तदुक्तं दर्पणे—'पदसंघटनारीतिरङ्गसंस्थाविशेषवत्' इति। प्रतापरुद्रेपि—'रीतिर्नाम गुणाश्लिष्टपदसंघटना मता' इति। तां पुनर्माधुर्यादिव्यञ्जिकां त्रिविधामेव क्रमेणोद्दिशति। वैदर्भीत्याद्युत्तरार्धेन। तत्क्रमात् माधुर्यादिव्यङ्ग्यगुणक्रमेणेत्यर्थः। तदुक्तं प्रतापरुद्रे। साच त्रिधा वैदर्भी गौडी पाञ्चालीचेति। एतेन दर्पणचन्द्रालोकयोर्लाटरीतेश्चतुर्थ्या उक्तत्वेपि तस्या अनतिप्रयोजकत्वं व्याख्यातं 'लाटी तु रीतिर्वैदर्भीपाञ्चाल्योरन्तरास्थिता' इति दर्पण एवोक्तत्वादिति दिक्॥ १३६॥ एवमुद्दिष्टां त्रिविधामपि रीतिं क्रमेण लक्षयति—**असमासेति**। एवंच सर्वथा समासशून्यतत्तद्रसोचितपदसंघटनात्वं हि वैदर्भीत्वमिति तल्लक्षणं संक्षिप्तम्। गौड्यादावतिप्रसङ्गभङ्गाय शून्यान्तम्। नच तत्तद्रसोचितेत्यनेनैव शान्तादिरसानुगुण्येन वैदर्भीसिद्धौ व्यर्थविशेषणत्वमिति वाच्यम्। तस्य साधारण्यात्। नापि तर्हि तस्यैव प्रकृते वैयर्थ्यम्। घटमानयेत्यादावपि तदापत्तेः। **तुरीयेति**। यथेप्सितं तुरीयाख्यचतुर्थपदोर्ध्वपदसमासघटितेत्यर्थः। अत्रापि प्राग्वदेव लक्षणायुन्नेयम्। तथाच चतुरधिकयथेष्टपदसमस्ततत्तद्रसोचितपदसंघटनात्वं गौडीत्वं बोध्यम्। **तदेकान्तेति**। तच्छब्देनात्र तुरीयपदं तन्मात्रपर्यन्तसमासशालिनीत्यर्थः। तेन चतुःपदानधिकसमस्ततत्तद्रसोचितपदसंघटनात्वं पाञ्चालीत्वमित्यपि ज्ञेयम्। शिष्टं तु प्राग्वदेव। **यथेति**। माधुर्यादिस्वव्यङ्ग्यक्रमानुसारेण

**रसेष्टवर्णरचना वृत्तिरित्यभिधीयते।**
**सापि त्रिधैव विज्ञेया पूर्वोदितगुणक्रमात्॥ १३८॥**
**मधुरा परुषा प्रौढा माधुर्यौजःप्रसादद्ाः।**
**चन्द्रालोकमता भद्रा ललिता मधुरैव मे॥ १३९॥**

समुद्दिष्टवैदर्भीगौडीपाञ्चालीक्रममनतिलङ्घ्येति यावत्। तदुक्तं चन्द्रालोके—'आचतुष्टयमासत्तं यथेष्टैरष्टमादिभिः। समासः स्यात्पदैर्न स्यात्समासः सर्वदापिच। पञ्चाली किंच लाटीया गौडीया च यथारसम्। वैदर्भी च यथासंख्यं चतस्रो रीतयः स्मृताः' इति। तत्र लाटीयाया अनतिप्रयोजकत्वं त्वनुपदमेवोक्तमिति तिस्र एव वृत्तय इत्याशयः। पक्षे असमासा न विद्यते समासः स्वसमीहितवरलाभसंकोचो यस्याः सा तथा एतादृशी भगवती रुक्मिणी दमयन्ती च वैदर्भी विदर्भदेशाधिपभीमनृपकन्यकेत्यर्थः। तथा यथेप्सितं यथेच्छम्। **तुरीयेति**। तुरीयं 'शिवमद्वैतं चतुर्थं मन्यन्ते' इति श्रुतेरद्वैतं ब्रह्म तदूर्ध्वंसर्पस्य रज्जूपरीव तदधिष्ठानक इत्यर्थः। समासः द्वयसंक्षेपो यया एतादृशी गौडी गौडपादाचार्याणामियं गौडी तद्विरचितमाण्डूक्योपनिषत्कारिकारचनेत्यर्थः। एवं तदेकान्तेति। तदेव तुरीयाख्यमद्वैतं ब्रह्मैव एकं केवलं अन्ते देहारम्भकसमाप्तौ येन तादृशः समासः पातिव्रत्येन परपुरुषाभिलाषह्रासो यस्याः सा तथा एतादृशी पाञ्चाली द्रौपदीत्यर्थः॥ १३७॥ एवं शब्दावच्छेदेन रसधर्मीभूतमाधुर्यादिगुणव्यञ्जने रीतिवृत्तिरूपप्रतिज्ञातद्वारद्वयमध्ये रीतिलक्षणतन्निरूपणोत्तरमवसरप्राप्तं वृत्तिरूपं तन्निरूपयिष्यंस्तत्सामान्यं लक्षयति—**रसेति**। 'नमन्नृपतिमण्डलीमुकुटचन्द्रिकादुर्दिनस्फुरच्चरणपल्लवप्रतिपदोक्तदोःसंपदा। अनेन ससृजेतरां तुरगमेधमुक्तभ्रमत्तुरङ्गखुरचन्द्रकप्रकरदन्तुरा मेदिनी' इति मुरारिपद्ये वीररसाननुगुणवर्णविन्यासेन प्रतिकूलवर्णदुष्टेऽतिप्रसङ्गभङ्गार्थं रसेति। तत्र कवीष्टवर्णसत्त्वेपि रसेष्टत्वाभावात्। वर्णपदरीतिव्यावृत्त्यर्थं तस्या अपि माधुर्यादिगुणानुसारेण त्रैविध्यं विधत्ते—**सापीत्याद्युत्तरार्धेन**॥ १३८॥ अथ ता एव स्फुटमुद्दिशंस्तासां माधुर्यादिध्वनकत्वं प्रकटयति—**मधुरेति**। एता इत्यध्याहारः। **माधुर्येति**। क्रमेणेति शेषः। **चन्द्रेति**। बहुवचनान्तच्छेदे सतीति संबन्धः। एकवचनान्तच्छेदे तु तत्प्रागेव योज्यम्। तथा चन्द्रालोकमता भद्रामधुरादिवदेतन्नाम्नी चतुर्थी वृत्तिस्तथा ललिता चैतन्नामिका पञ्चमीवृत्तिरपि मे मम मधुरैव संमतास्तीत्यन्वयः। वक्ष्यमाणलक्षणपरिष्कारेण तयोस्तत्रैवान्तर्भावसंभवादिति भावः। पक्षे मधुरा सात्विकी नायिका सीतादमयन्त्यादिः, परुषा तामसी नायिका उर्वशी मन्दोदर्यादिः, प्रौढा राजसी नायिका द्रौपदी शकुन्तलादिः एताः क्रमात् रामनलादये पुरूरवोरावणादये धर्मदुष्यन्तादये च। **माधुर्येति**। स्वाधरामृतप्रतापोपदेशजातनीतिसूचकचरितप्रदाः सन्तीतियावत्। अथ स्वमतेन सात्विकीमेव तां स्तुवंस्तस्यां सरस्वत्यायातमतामप्याह—**चन्द्रेति**। एकवचनान्त एव च्छेदः। चन्द्रालोकवत्

कैशिक्यारभटी चैव सात्वती चेति ताः क्रमात् ।
प्रतापरुद्र आर्थिक्यो मे सात्वत्येव भारती ॥ १४० ॥
भूयः शिरोगवर्गान्त्या सोष्माऽटाऽल्पा सुरूपिणी ।
ह्रस्वमध्यरणद्वीन्द्राऽनुपान्या मधुरा भवेत् ॥ १४१ ॥

मता शरज्ज्योत्स्नाशुभ्रामित्यादिसौन्दर्यलहर्युक्तध्याने तथात्वस्यैवाभिधानादिन्दुद्युतिसमानवर्णा सरस्वतीत्यर्थः । एवं भद्रा 'भद्रैषां लक्ष्मीः' इति श्रुतेर्लक्ष्मीरित्यर्थः । तद्वत् ललितापि त्रैलोक्यसुन्दरी भगवती गौरी च मे मधुरैव निरुक्तसीतादिवत्सात्विक्येव प्रतिभातीति योजना । एतदुपपादनं तु चन्द्रालोकाद्युपन्यासपूर्वकं लक्षणपरिष्कारेऽत्रानुपदमेव वक्ष्याम इति संक्षेपः ॥ १३९ ॥ एवमुक्तवृत्तीनामेव विद्यानाथमते स्वार्थिकलक्षणाभिसंधिना नामान्तराण्यपि सन्तीति कथयंस्तत्रापि स्वसंमतं संकोचं सूचयति—**कौशिकीति** । भारती तदुक्ता चतुर्थी वृत्तिः । इदमप्यप्र एव ॥ १४० ॥ अस्त्वेवमुक्तवृत्तीनामार्थिकं प्रतापरुद्रमते कैशिक्यादिसंज्ञान्तरमथापि प्रथमं मधुरादीनामेव तासां प्रत्येकं किंलक्षणमित्याकाङ्क्षां क्षपयंस्तत्रोद्देशक्रमानुसारेणादौ मधुरालक्षणं संक्षिपति—**भूय इति** । भूयः वारंवारं शिरोगाः अक्षरशिरःस्थिताः अनुस्वारपरसवर्णशुद्धानुनासिकात्मना वर्तमानाः वर्गान्त्याः कक्रादितत्तदक्षरपञ्चकलक्षणवर्गचरमवर्णाः ङञणनमाः यस्यां सा रसेष्टवर्णरचना तथेत्यर्थः । तथा सेति । ऊष्मभिः शल ऊष्माण इत्युक्तत्वाच्छषसहकारैः सहिताः वे च ते अटाः न विद्यते टः टवर्गो येषु ते तथा ते च ते अल्पासवश्च वर्गाणां प्रथमतृतीयपञ्चमा यणश्चाल्पप्राणा इत्युक्तेरल्पप्राणसंज्ञकाः कादयो वर्णास्तैः रूपं स्वरूपं यस्याः सा तथेत्यर्थः । एवं ह्रस्वेति । ह्रस्वः एकमात्रः स्वरः मध्ये व्यवधिभूतो ययोस्तौ च तौ रणौ चेति तथा एवं द्विगुणीकृतश्चासाविन्द्रश्च तथा तौ च स चेति पुनर्द्वन्द्वः । एवंच 'लः खण्डने त्रिष्वादाने स्त्रीनेन्द्रे' इत्येकाक्षररत्नमालावचनात् वाच्यवाचकयोरभेदविवक्षयैव रणल्लाः यस्यां सा तथेत्यर्थः । अन्विति च्छेदः । न विद्यन्ते उप नैकट्येन प्रयुक्ताः अन्ये शलिभन्नमहाप्राणाः यस्यां सा तथेति यावत् । एतादृशी रचना मधुरा भवेत् एतन्नाम्नी वृत्तिः स्यादिति यथाश्रुतैव योजना । तदुक्तं काव्यप्रकाशसूत्रे—'मूर्ध्नि वर्गान्त्यगाः स्पर्शा अटवर्गा रणौ लघू । अवृत्तिर्मध्यवृत्तिर्वा माधुर्ये घटना तथा' इति । वृत्तिः समास इति प्रदीपः । चन्द्रालोकेऽपि—'मधुरायां समाक्रान्ता वर्गस्थाः पञ्चमैर्निजैः । लकारश्च लसंयुक्तो ह्रस्वव्यवहितौ रणौ' इति । एवं 'लकारोऽन्यैरसंयुक्तो लघवो घभधा रसाः । ललितायां तथा शेषा भद्रायामिति वृत्तयः' इति ललितादिवृत्त्यन्तरमपि तत्र लक्षितं तथाप्येकदेशविकृतन्यायेन तस्य लाघवान्मधुरानतिरिक्तत्वमेव बोध्यम् । रसगङ्गाधरेऽपि । तत्र टवर्गवर्जितानां वर्गाणां प्रथमतृतीयैः शर्भिरन्तःस्थैश्च घटितानैकट्येन प्रयुक्तैरनुस्वारपरसवर्णैः शुद्धानुनासिकैश्च शोभिता वक्ष्यमाणैः सामान्यतो विशेषतश्च निषिद्धैः संयोगाद्यैरचुम्बिता अवृत्तिर्मृदुवृत्तिर्वा रचनानु-

**सोल्लासयति गोविन्दं मन्दं मन्दं विहारिणम् ।**
**पञ्चमैरलसा कुञ्जे शिञ्जितानां मिषेण किम् ॥ १४२ ॥**

पूर्व्यात्मिका माधुर्यस्य व्यञ्जिका । द्वितीयचतुर्थास्तु वर्ग्या गुणस्यास्य नानुकूला नापि प्रतिकूला दूरतया संनिवेशिताश्चेत् नैकट्येन प्रतिकूला अपि भवन्ति यदि तदापत्तौ नानुप्रास इति । एवंचात्र नैकट्यप्रयुक्तानुस्वारपरसवर्णशुद्धानुनासिकावच्छिन्नटवर्गेतराल्पप्राणोष्महस्वस्वरव्यवहितरेफणकारद्विगुणितलकारात्मकत्वे सति निकटप्रयुक्तावशिष्टमहाप्राणनिर्दुष्टरसेष्टवर्णरचनात्वं मधुरात्वमिति तल्लक्षणं फलितम् । पदकृत्यादिकं तु प्रागुक्तदिशा स्वयमेवोह्यं गौरवभयान्नैव मया प्रपञ्च्यत इति हृदयम् । पक्षे भूयः पुनः पुनः शिरोगः शिरोधार्यः वर्गान्त्यः 'त्रिवर्गो धर्मकामार्थैश्चतुर्वर्गः समोक्षकैः' इत्यमराच्चतुर्वर्गचरमो मोक्षो यस्याः सा तथा । मोक्षादरशीलेत्यर्थः । एतेन तस्या त्रिवर्गेलालस्येपि मोक्षे तु शिरःपदेन परमौत्सुक्यं सूचितम् । 'दक्षे तु चतुरपेशलपटवः सूत्थान उष्णश्च' इत्यमरादूष्मात्र यावत्स्त्रीगुणललितस्वरमणीचातुर्यं तेन सह अटति हंसादिवद्गच्छतीति तथा । अल्पाः असवो यस्मात्तत्तथा प्राणाधिकमिति यावत् । तच्च तद्रूपं अवयवलावण्यादिसौष्ठवं तदस्याः अस्तीति तथा । सोष्माटा चासावल्पा सुरूपिणी चेति तथा यावत्सती चातुर्यवत्त्वे सति सुन्दरतररूपलावण्यवतीत्यर्थः । अनेन कामपुमर्थसाधकत्वं समर्थितम् । ह्रस्वः लक्षणया सूक्ष्मः मध्यो यस्याः सा ह्रस्वमध्या रणे कटाक्षसंचारसंग्रामे द्विः द्विधाभूत इव भग्नः इन्द्रो देवराजोऽपि यस्याः सा तथा ह्रस्वमध्या चासौ रणेत्यादिपुनः कर्मधारयः । सूक्ष्मतरमध्यात्वे सति कटाक्षमात्रविजितनिर्जराधिराजेत्यर्थः । एवंच 'मण्डूककुक्षिर्या नारी न्यग्रोधपरिमण्डला । एकं सा जनयेत्पुत्रं सच राजा भविष्यति' इति सामुद्रिकोक्तेर्निरुक्तरीत्या तस्यां कृशोदरीत्वेन तथा 'एको हि खञ्जनवरो नलिनीदलस्थो दृष्टः करोति चतुरङ्गबलाधिपत्यम्' इत्यादिशृङ्गारतिलकसूचितसरण्या तस्यां खञ्जनाक्षीत्वेन चार्थसाधकत्वं ध्वनितम् । न विद्यन्ते उप समीपेऽपि अन्ये परपुरुषा यस्याः सा तथा । परपुरुषसंनिकर्षवर्जनस्वभावेत्यर्थः । तेन च तस्यां धर्मसाधकत्वमपि व्यज्यते । तथा चैतादृशविशेषणचतुष्टयविशिष्टैव मधुरा सात्विकनायिका भवेदिति ॥ १४१ ॥

अथोक्तलक्षणां मधुरां पूर्वोक्तवैदर्भीरीतिरञ्जितां कैशिक्यार्थिकापरनामिकां संभोगकरुणविप्रलम्भशान्ताख्यपूर्वोक्ततारतम्यवशसात्विकैकरसनिष्ठमाधुर्याख्यगुणस्य शब्दप्रधानद्वारकाभिव्यञ्जिकां वृत्तिं समुदाहरति—**सेति** । इदं हि कांचिदये समुपयात इवारुणोदयसमय इति किमसौ मत्प्राणसखी राधिका निकुञ्जेऽत्र भगवता श्रीहरिणा सह समभिलषितपरितृप्त्यवधिकनिधुवनविलासानन्दामृतं निपीय गोकुलं गन्तुं सावधानास्ति नवेति निरुक्तनिकुञ्जपरिसर एव परिरक्षयन्तीं तद्रहःसखीं प्रति पृच्छन्तीं तत्प्रत्युत्तरवाक्यम् । अयि सखि, सा राधिका मन्दंमन्दं पूर्वरात्रे यथेच्छसंभोगभरसंपादनेन तस्याः स्वभावसौकुमार्यनिराकृतशिरीषकुसुम-

सुषुमत्वात्पुनरिदानीं तु कैमुत्यसिद्धातिशयितनिःसहाङ्गीं तामालक्ष्य स्वस्य पुरुषोत्तमत्वेन तस्याश्च लोकोत्तरसुन्दरीत्वेन भूयः समुद्दीप्तमन्मथत्वेपि तत्परितोषार्थं शनैःशनैरित्यर्थः। एतेन केवलं तत्कुचकनकपङ्कजकोरकयुगोपरि बहिः संभोगारम्भधियैव श्रीहरौ करसरोजमात्रसंचारकत्वं सूच्यते। विहारिणं विलसनशीलशालिनमिति यावत्। नत्वालिङ्गनमात्रलालसम्। तेन वक्ष्यमाणसुरतनिषेधनलक्षणकार्यबीजं व्यज्यते। एतादृशं गोविन्दं सर्वेन्द्रियसंस्कारादिज्ञातारं नतु कृष्णम्। अनेन स्वस्यास्तत्सुरताभिलाषपौष्कल्येन गूढौत्कण्ठ्येपि शारीरसामर्थ्यमात्रस्यैव प्रागुक्तरीत्या राहित्यान्निषेधनेनापि प्रत्युत प्रोत्साहकरणकथनहेतुर्द्योतितः। कुञ्जे संफुल्लशरन्मल्लिकानिर्मलसुललितलतापिहितप्रदेश इत्यर्थः। एवंचोद्दीपनपौष्कल्यं ध्वन्यते। अलसा भूरितरसुरतश्रान्ता। अतएव वक्ष्यमाणपाणिचेष्टामात्रेण निषेधसूचनमिति व्यज्यते। शिञ्जितानां कङ्कणाद्याभरणरणितानां नतु नूपुराद्यलंकारविरावाणाम्। तेन पाणिपद्मकम्पविशेषमात्रेणैव रतनिषेधसूचनं नतु वाचापीति सूचितम्। ततस्तस्यामतुलविश्लथशरीरत्वं द्योत्यते। मिषेण छद्मना। तत्रापि मन्दंमन्दमिति पुनरत्राप्यनुवर्त्य शनैरेव नतु झटित्येवेत्यर्थः। एतेन निरुक्तनिःसहत्वातिशयः सूचितः। पञ्चमैः 'पुष्पसाधारणे काले पिकः कूजति पञ्चमम्' इति वचनात्कोकिलकललक्षणपञ्चमाख्यस्वररागान्यतरध्वनिविशेषैरिति यावत्। अनेनाप्युद्दीपनप्राचुर्यमपि सूचितम्। आलम्बनविभावभूरिभाग्यं तु अमृग्यमेव उल्लासयति किमित्यन्वयः। भूयः संभोगार्थं प्रोत्साहयति किं इत्युत्प्रेक्षा। यद्यपि प्रतीयमानवाक्यार्थान्यथानुपपत्तिद्योतितपाणिपद्मचेष्टाविशेषध्वनितभूयः सुरतनिषेधनमेव प्रकृतेऽवभाति तथापि नैतदुक्तनिषेधनं किंतु प्रत्युत तत्प्रोत्साहनमेवेत्यपह्नवाभिव्यञ्जकोत्प्रेक्षायां हेतुस्तु तात्कालिकतत्सौन्दर्यातिशय एवेति भावः। इह सर्वथा समासाभावाद्वैदर्भीत्वं रीतेः। एवं कचतपगजदबणनमशषसहयरलवानुस्वारादिभिन्नवर्णराहित्यादिघटितनिरुक्तलक्षणमधुरात्वं वृत्तेरपि। एवमत्यर्थसुकुमारार्थसंदर्भत्वेनास्याः प्रतापरुद्रोक्तमार्थिकं कैशिकीत्वमपि। तथा राधाकृष्णपरस्परालम्बनः कुञ्जशिञ्जितोद्दीपनः प्रतिपादितोभयचेष्टानुभावनः स्मृतिप्रबोधालस्यसंचारणश्चोत्प्रेक्षाकाव्यलिङ्गपरिकरपरिकराङ्कुरकैतवापह्नुत्याद्यलंकारापेक्षयाऽधिकचमत्कारकारित्वात्प्राधान्येन परिपुष्टः संयोगकालावच्छिन्नत्वेन संभोगाख्यः रत्याख्यस्थायिभाव एव शृङ्गारः सूच्यत इति तस्य संभोगत्वेन तन्निष्ठमाधुर्यसामान्यस्य प्रकृते शब्दद्वारा व्यङ्ग्यत्वेन तदुदाहरणत्वं तस्य युक्तमेव। यथावा रसगङ्गाधरे—'स्वेदाम्बुसान्द्रकणशालिकपोलपालिरन्तःस्मितालसविलोकनवन्दनीया। आनन्दमङ्कुरयति स्मरणेन कापि रम्या दशा मनसि मे मदिरेक्षणायाः' इति। प्रकाशादावपि—'अनङ्गरङ्गप्रतिमं तदङ्गभङ्गीभिरङ्गीकृतमानताङ्ग्याः। कुर्वन्ति यूनां सहसा यथैताः स्वान्तानि शान्तापरचिन्तनानि' इति। अत्रत्यतारतम्यं तु सहृदया एवावेदयन्तु चिरम्। कैशिकीलक्षणं तु प्रतापरुद्र एवोक्तम्—

**येन्दुं कुन्दं मिलिन्दानां वृन्दं चेन्दीवरं वरम्।**
**मन्दं सुन्दरि विन्दन्ती सेन्दिरा धरणीं गता॥ १४३॥**

'अत्यर्थसुकुमारार्थसंदर्भा कैशिकी मता' इति। पण्डितरायाणां तु रीतिवृत्त्योरैक्यमेव विवक्षितमिति प्रतिभाति। तथाहि रसगङ्गाधरे तावत् काव्यदोषादिकमुक्त्वा 'एभिर्विशेषविषयैः सामान्यैरपि च दूषणैरहिता। माधुर्यभारभङ्गुरसुन्दरपदवर्णविन्यासा। व्युत्पत्तिमुद्गिरन्ती निर्मातुर्या प्रसादयुता। तां विबुधा वैदर्भी वदन्ति वृत्तिं गृहीतपरिपाकाम्', इत्यत्र वृत्तिपदं वैदर्भ्यां प्रयुज्य अस्यामुदाहृतान्येव कियन्त्यपि पद्यानि। यथावा–'आयातैव निशानिशापतिकरैः कीर्णं दिशामन्तरं भामिन्यो भवनेषु भूषणगणैरुल्लासयन्ति श्रियम्। वामे मानमपाकरोषि न मनागद्यापि रोषेण ते हाहा बालमृणालतोऽप्यतितमां तन्वीतनुस्ताम्यति'। अस्याश्च रीतेर्निर्माणे कविना नितरामवहितेन भाव्यमित्यत्र रीतिशब्दप्रयोगादिति। प्रकृतोदाहरणे तु तल्लक्षणसमन्वयस्त्वेवम्। दोषरलोक्तयावन्नित्यदोषाभावस्त्वत्र वर्तत एव। गुणसद्भावस्तु नैकव्यप्रयुक्तानुस्वारपरसवर्णशुद्धानुनासिकान्यतमत्वं तावदत्र गोविन्दं मन्दंमन्दमिति स्फुटमेव। एवं टवर्गेतरेषां वर्गाणां प्रथमतृतीयपञ्चमा यणश्चाल्पप्राणा इत्युक्तेः कचतपानां वर्गप्रथमवर्णानां तथा गजदानां वर्गतृतीयवर्णानां णनमानां वर्गपञ्चमानां यरलवानां यणां शषसहाख्योष्मणां च रेफणकारयोर्ह्रस्वस्वरमात्रव्यवहितत्वं लकारस्य द्वित्वं च सोल्लासयतीत्यादौ स्पष्टमेव। प्राचां लक्षणसमन्वयस्तु प्रेक्षावद्भिः परीक्षणीय एवेत्यलं पल्लवितेनेति॥ १४२॥ एवं संभोगशृङ्गारे माधुर्यव्यञ्जिकां शब्दप्रधानां वैदर्भ्याख्यरीत्यन्वितां कैशिक्याख्यार्थिकसंज्ञान्तरां मधुरां वृत्तिमुदाहृत्याथ पूर्वोक्तक्रमेण करुणादावुत्तरोत्तरमाधिक्येन तद्व्यञ्जिकां तामुदाहरति—**येत्यादिभिः** क्रमेण त्रिभिः। इदं हि श्रीरामस्य स्वमनस्येव सीतायाः पृथ्वीप्रवेशोत्तरं तां पुरःस्थितामिव स्मृत्वा शोकवाक्यम्। हे सुंदरि लोकोत्तरलावण्यादिललिते सीते, एतेन वक्ष्यमाणरोहिणीरमणादितिरस्करणकार्यकारणत्वं व्यज्यते। या त्वं इन्दुं शरद्राकापीयूषकिरणं तथा कुन्दं अर्धोन्मीलितकुन्दकुसुममित्यर्थः। एवं मिलिन्दानां भ्रमराणां वृन्द कुलं, तद्वत् वरं शरत्कालिकार्धोन्मीलितत्वेनोत्कटमिति यावत्। एतादृशं इन्दीवरं नीलोत्पलं मन्दं तुच्छं, यद्वा यथाश्रुतमेव वरं अत्यन्तं मन्दं तुच्छं विन्दन्ती स्ववदनमृदुहसनकुटिलकुन्तलकुलचञ्चलविशालविलोचनयुगुलशोभासंभारेण तृणवद्गणयन्ती सतीत्यर्थः। इन्दिरा आकारेणापि साक्षाल्लक्ष्मीरेवेति यावत्। आसीरिति शेषः। एतेन प्रकृतशोकसामग्रीपौष्कल्यं सूचितम्। सापि अधुना धरणीं पृथ्वीं गता प्रविष्टासीत्यतो धिङ्मां मन्दभाग्यमिति भावः। अत्र पूर्वपद्यापेक्षया माधुर्यध्वननद्वैगुण्यं तु सहृदयधुरीणान्तःकरणस्य प्रत्यक्षमेवेति लक्षणसंगतिः। यथा वा रसगङ्गाधरे—'अपहाय सकलबान्धवचिन्तामुद्वास्य गुरुकुलप्रणयम्। हा तनय विनयशालिन्कथमिव परलोकपथिकोऽभूः' इति। अत्रत्यतारतम्यं तु तेनैव नि-

**सा शम्पां कम्पयन्तीव चम्पकैरपि कम्पते ।**
**अन्तरङ्गमनङ्गोऽयमङ्गनानां यदिङ्गति ॥ १४४ ॥**

---

र्णेयम् । अन्यत्सर्वं रसपरिष्कारादिकं तु प्राग्वदेवोह्यं सुधिया । गौरवभियाद्य मया तूपरम्यत एवेति दिक् ॥ १४३ ॥ **सेति** । इदं हि नायकं प्रति नायिकासखीवाक्यम् । हे श्रीकृष्ण, सा पूर्वं या त्वया समुपभुक्ता सा राधिकेत्यर्थः । एतेनावश्यलालनीयत्वं द्योत्यते । शम्पाम् 'शम्पा शतह्रदा ह्रादिन्यैरावत्यः क्षणप्रभा' इत्यमराद्विद्युतमित्यर्थः । कम्पयन्तीव स्वकान्त्याद्यतिशयदर्शनजन्यस्वधर्षणसाध्वसतः सवेपथुकां कुर्वतीवेति यावत् । अनयोत्प्रेक्षया तु प्रकृते प्रावृडारम्भसमये विद्युतः स्वभावादेव कम्पन्ते प्रत्युत तद्दर्शनादेवोद्दीप्तमन्मथेयं त्वद्विरहवशादेवातिविकलेति कम्पते स्वयमेवेति वस्तुस्थितिस्तत्रापि वैपरीत्यतर्कणाद्विद्युदपेक्षयाप्यस्यामलौकिकगौरिमादिमत्त्वं ध्वन्यते । तेनानुपेक्षणीयत्वं व्यज्यते । एतादृशीसती चम्पकैरपि फुल्लत्वेन निरीक्षितैश्चम्पकद्रुमैरपीति यावत् । अपिना तेषु भ्रमरसमास्वाद्यत्ववैधुर्यस्य लोकशास्त्रसिद्धत्वात्तादृशामपि दर्शनेन यदैतस्याः कम्पस्तदा किं वाच्यं तन्निकुरम्बाङ्कानां कदम्बादिद्रुमाणां दर्शनेन तस्यास्तथात्वमिति विरहव्यथातिशयः सूचितः । एतेन त्वत्संयोगे लवमात्रमपि विलम्बासहिष्णुत्वमावेद्यते । कम्पते वेपथ्वाख्यसात्विकानुभाववती स्मरशरभीत्यैव भवतीति भावः । तत्र हेतुमाह—**अन्तरङ्ग**मित्याद्युत्तरार्धेन । यद्यस्मात् अयं बुद्धिस्थत्वेन प्रत्यक्षः । एतेन तत्र प्रमाणाभावो व्युदस्तः । 'कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव' इति श्रुतेर्मनोवृत्तिविशेषरूपत्वेन साक्षिप्रत्यक्षतायास्तत्र मनसि तत्वेनान्तरीयकत्वात् । अङ्गनानां तरुणीनाम् । एतेन वक्ष्यमाणतन्नियमनयोग्यत्वं द्योत्यते । अन्तरङ्गं नतु शरीराख्यबहिरङ्गं । तेन तत्पीडायास्त्वदेकयोगशाम्यत्वेनौषधाद्यपरिहार्यत्वं व्यज्यते । इङ्गति वशयतीत्यर्थः । यथा सूत्रधारः सूत्रचालनेन पाञ्चालिकाः प्रणर्तयति तद्वन्मन्मथोऽपि सामान्यतस्तरुणीत्वावच्छेदेन चक्षूरागप्रभृतितत्तदवस्थासु ताश्चेष्टयतीत्यतोऽसौ त्वदेकजीविका राधिका तु त्वद्विरहतस्तेन प्राणान्तं व्याकुलीक्रियत इति कैमुत्यसिद्धमेव । तस्माद्भवताऽतः परं सत्वरमेव तत्र गत्वा सा संभोगामृतवर्षणैः संजीवनीयैवेत्याशयः । अत्र पूर्वोक्तकरुणारसोदाहरणापेक्षया माधुर्याधिक्यध्वनकत्वं तु सहृदयहृदयैकवेद्यम् । एवं वैदर्भीरीतिर्मधुरा वृत्तिः कैशिकी च सार्थिकीत्यादि तत्तल्लक्षणसमन्वयस्तथा विप्रलम्भशृङ्गारपरिपोषस्तत्तदलंकारापेक्षया तत्प्राधान्यादिकं च प्रागुक्तदिशैवोह्यमित्यलम् । यथावा—'अच्छिन्नं नयनाम्बु बन्धुषु कृतं तापः सखीष्वाहितो न्यस्तं दैन्यमशेषतः परिजने चिन्ता गुरुभ्योऽर्पिता । अद्यश्वः खलु निर्वृतिं व्रजति सा श्वासैः परं खिद्यते विश्रब्धो

**काञ्चनं पञ्चबाणोऽपि चञ्चलानेव वञ्चयेत् ।
सन्ततं चिन्तयेऽनन्तं हन्त कान्तां तु नान्ततः ॥ १४५ ॥
संयोगपरखर्वाढ्याखिलवर्णातिगुर्वसुः ।
अद्वीन्द्रातिविसर्गाद्यात्यूर्ध्वरा परुषा मता ॥ १४६ ॥**

भव विप्रयोगजनितं दुःखं विभक्तं तया' इति ॥ १४४ ॥ **काञ्चनमिति ।** काञ्चनं सुवर्णं, पञ्चबाणो मदनः, एवं चैतत्प्रधाना यावद्वधूगुणवती मुग्धेत्यर्थः । अपिः समुच्चये । एतेन यावल्लौकिकेष्टविषयसंग्रहः सूचितः । तथाचाहुः–'वेधा द्वेधा भ्रमं चक्रे कान्तासु कनकेषु च । तासु तेषु विरक्तश्चेत्साक्षाद्भर्गो नराकृतिः' इति । चञ्चलानेव चपलचित्तानस्थितप्रज्ञानेवेत्यर्थः । एतेन तेषामेव भूमानन्दरूपस्वात्मानुसंधानविधुरत्वाद्वञ्चनयोग्यत्वं व्यज्यते । वञ्चयेत् । धूर्तयिष्यतीत्यर्थः । दृश्यसुखप्रकाशनेन कितवयिष्यतीत्याशयः । एवकारेण तदितरनिरासः स्फुटितः । तेषां 'स्थिरबुद्धिरसंमूढो ब्रह्मविद्ब्रह्मणि स्थितः' इति श्रीमद्भगवद्गीतोक्तेः । स्थितप्रज्ञत्वाविनाभावसिद्धजीवन्मुक्तत्वेन यावद्दृश्यसुखस्याप्याभासीभूतत्वान्निरतिशयाद्वैतभूमानन्दस्यापि स्वात्मत्वेनैव नित्यप्राप्तत्वाच्च वञ्चनायोग्यत्वमेव किं तत इत्यत आह— **संततमि**त्युत्तरार्धेन । अहमिति शेषः । तेनामानित्वोपलक्षितनिखिलसामग्रीपौष्कल्यं द्योतितम् । संततं नतु क्षणमात्रम् । एतेन ध्यानस्याधिमात्रत्वं व्यज्यते । अनन्तं देशादित्रिविधपरिच्छेदविधुरमद्वैतात्मानमेवेति यावत् । चिन्तये विचिन्तयामीत्यर्थः । ननु 'ऋतौ भार्यामुपेयात्' इत्यादिविहितसुरतार्थं कालान्तरे कान्तापि चिन्तनीयेत्यत आह—**हन्तेत्यादि**चरमचरणेन । इदं हि स्मृततदुपलक्षिताखिलविषयविषयकदुःखातिशयसूचकं अव्ययम् । तेन तदचिन्तने हेतुर्द्योतितः । कान्तां तु निरुक्तरूपामपि रमणीं त्वित्यर्थः । कनकादिवैलक्षण्यावद्योती तुशब्दः । अन्ततोऽपि प्राणान्तसंकटेऽपीत्यर्थः । नैव चिन्तय इत्यनुकृष्यान्वयः । एतेनास्या एव सर्वानर्थमूलप्राधान्यं ध्वन्यते । शिष्टं तु सर्वं पूर्वरीत्यविशिष्टमेव । माधुर्याधिक्यमपि निरुक्तविप्रलम्भापेक्षया सहृदयहृदयप्रत्यक्षमेवेति दिक् । यथावा मदीयाद्वैतामृतमञ्जर्याम्—'हा हन्तहन्त कान्ते तव सीमन्ते न कति नवान्तकिताः । बिम्बं विनावलम्बे तदहं साम्बं निरालम्बम्' इति ॥ १४५ ॥ एवं मधुरां सप्रपञ्चमुदाहृत्याथावसरप्राप्तामोजोव्यञ्जिकां परुषां वृत्तिं लक्षयति—**संयोगेति ।** संयोगः पर्युदस्य लकारद्वयसंयोगेतरसर्वहल्संयोगः सः परः उत्तरः येषां तथाभूताः ये खर्वाः ह्रस्वाक्षराणि तैः आढ्या प्रचुरेत्यर्थः । तथा **अखिलेति ।** अखिलाः सर्वे वर्णाः त्रिषष्टिश्चतुःषष्टिर्वा यस्यां सा तथा निखिलवर्णघटितेत्यर्थः । तथा चाह भगवान्पाणिनिः स्वशिक्षायां–'स्वरा विंशतिरेकश्च स्पर्शानां पञ्चविंशतिः । यादयश्च स्मृता ह्यष्टौ चत्वारश्च यमाः स्मृताः । अनुस्वारो विसर्गश्च ×क×पौ चापि पराश्रितौ । दुःस्पृष्टश्चेति विज्ञेयो ऌकारः प्लुत एव च । त्रिःषष्टिश्चतुःषष्टिर्वा वर्णाः शंभुमते मताः । प्राकृते संस्कृते चापि स्वयं प्रोक्ताः स्वयं भुवा' इति ।

यस्मिन्नेत्रैकदोर्दण्डमण्डिकोदण्डखण्डकृत् ।
दाशवक्त्रे शरं धर्तुं समरे सकरः कृपः ॥ १४७ ॥

अस्यार्थः—अइउऋ इति चतुर्णां ह्रस्वदीर्घप्लुतभेदाद्द्वादशसंख्या एवं । ऌकारश्चैकः प्लुतस्य तस्य वक्ष्यमाणत्वात् तथा दीर्घत्वाभावाच्चेति त्रयोदश । तथा एओऐऔ इति चतुर्णां ह्रस्वत्वराहित्याद्दीर्घप्लुतभेदेनाष्टेत्येकविंशतिः स्वराः । तद्वत् कादयो मावसानाः स्पर्शा इत्युक्तेः कादिवर्गपञ्चकवर्णानां पञ्चविंशतिः स्पष्टैव । एवं यरलवशषसहेत्यष्टावपि । तथा वर्ग्याणां चतुर्णां पञ्चमे परे मध्ये यमोनाम वर्णः प्रातिशाख्ये प्रसिद्धः । पलिक्क्नीः चख्ख्नतुः अग्ग्निः घ्घ्नन्तीत्युदाहरणाद्यनुसारेण चत्वारो यमा अपि । एवमनुस्वारादयश्चत्वारः । तथा दुःस्पृष्टो ळकारः अग्निमीळे इत्यादौ सुप्रसिद्ध एव । तद्वत् ऌकारः प्लुतश्चेति सर्वे मिलित्वा चतुःषष्टिसंख्याकाः दुःस्पृष्टस्य यजुरादावप्रसिद्धत्वेन त्रिषष्टिसंख्याका वा वर्णा इति । एतादृशी तथा अतीति । अतिविपुलाः गुर्वसवः वर्गाणां द्वितीयचतुर्थौ शलश्च महाप्राणा इति वचनात् खफछठथाः घझढधभाः शषसहाश्चेति तथा ते यस्यां सा तथा प्रचुरमहाप्राणवर्णघटितेत्यर्थः । एतादृशी तथा अद्वीन्द्रा न विद्यते द्विः द्विगुणः इन्द्रः लः 'खण्डने त्रिष्वादाने स्त्रीनेन्द्रे' इति कोशात् लकारो यस्यां सा तथा । एवं अतिविसर्गाद्या अतिबहुलाः विसर्गाद्याः विसर्गजिह्वामूलीयोपध्मानीयाः यस्यां सा तथा । एतादृशी तथा अत्यूर्ध्वरा अतिप्रचुरं ऊर्ध्वं वर्णोपरिवर्तमानाः राः रेफाः यस्यां सा तथा एतादृशी परुषा एतन्नाम्नी वृत्तिः । मता प्राच्यनव्यमताकूतसारत्वेन मम संमतेति यावत् । अस्तीति शेषः । एवं चातिविसर्गादिमहाप्राणोर्ध्वरेफसंयोगपरह्रस्वत्वे सति द्विगुणलकारेतरसर्ववर्णघटितरचनात्वं परुषवृत्तित्वं तल्लक्षणं सिद्धम् । अत्रापि पदकृत्यादिकं तु प्राग्वदेवोह्यम् । तदुक्तं काव्यप्रकाशकारिकायाम् । योग आद्यतृतीयाभ्यामन्त्ययोरेणतुल्ययोः । टादिः शषौ वृत्तिदैर्घ्यं गुम्फ उद्धत ओजसी' इति । विवृतं चैतत्प्रदीपे 'ओजसि व्यङ्ग्ये वर्गप्रथमतृतीयाभ्यां सह तदन्तयोर्द्वितीयचतुर्थयोर्योगः । यथा कच्छपुच्छेत्यादि । तथा रेफेणाध उपरि उभयत्र वा यस्य कस्यापि योगः यथा वक्रार्कनिर्ह्रादादयः । तथा तुल्ययोः कयोश्चिद्योगः यथा चित्तवित्तादौ तथा टादिचतुष्टयं शषौ चेति वर्णाः समासस्तु दीर्घः गुम्फो रचना साचोद्धता विकटेति । चन्द्रालोकेऽपि—'सर्वैरूर्ध्वैः सकारस्य सर्वै रेफस्य सर्वथा । रहोर्ध्वाधस्तु संयोगःपरुषायां शषौ स्वतः' इति । रसगङ्गाधरेपि—नैकट्येन द्वितीयचतुर्थवर्ग्यवर्णटवर्गजिह्वामूलीयोपध्मानीयविसर्गसकारबहुलैर्वर्णैर्घटितो झयूरेफान्यतरघटितसंयोगपरह्रस्वैश्च नैकट्येन प्रयुक्तैरालिङ्गितो दीर्घवृत्त्यात्मा गुम्फ ओजसः अस्मिन्पतिताः प्रथमतृतीयवर्ग्या गुणस्यास्य नानुकूला नापि प्रतिकूलाः संयोगाद्यघटकाश्चेत्तद्घटकास्त्वनुकूला एव । एवमनुस्वारपरसवर्णा अपीति ॥ १४६ ॥ अथैतां प्रागुक्तचतुर्थपदोर्ध्वयथेष्टपदसमासघटितत्वलक्षणया गौड्याख्यरीत्याङ्कितां प्रतापरुद्राभिमतारभट्यभिधा-

**प्रेता नृत्यन्ति मस्तिष्कमेदःस्राव्यन्त्रतृप्तितः ।**
**श्मशाने मांसभुक्क्रोष्टुक्रूरगर्जनजर्जरे ॥ १४८ ॥**
**नखवज्राग्रविच्छिन्नदृप्यद्दनुजवक्षसः ।**
**नृहरेः प्रज्वलत्कल्पज्वलनेर्ष्यादृशोऽभवन् ॥ १४९ ॥**
**प्रौढा तु मधुरा क्वापि कुत्रापि परुषा मता ।**
**श्रुतिमात्रेण या स्वार्थं ददाति करबिल्ववत् ॥ १५० ॥**

र्थिकसंज्ञान्तरां परुषाख्यामोजसः शब्दावच्छेदेनाभिव्यञ्जिकां क्रमेण वीरबीभत्सरौद्रसंज्ञकतामसरसेषूत्तरोत्तरं तदाधिक्यध्वनिकां वृत्तिमुदाहरति—**य इत्यादित्रिभिः।** इदं हि श्रीरामरावणयुद्धावसरे वाक्यम् । **त्रिनेत्रेति** । त्रिनेत्रस्त्र्यम्बकः । एतेन तस्य मदनदाहकत्वादतिवीरवरत्वं व्यज्यते । तस्य एको यो दोर्दण्डस्तन्मात्रबाहुदण्डः तत्र मण्डत इति तथा एतादृशं यत्कोदण्डं धनुस्तस्य खण्डं करोतीति तथा। रौद्रकार्मुकभञ्जक इत्यर्थः । स करः मद्धस्त इत्यर्थः । दाशवक्त्रे दशग्रीवसंबन्धिनि समरे संग्रामे शरं बाणं धर्तुं गृहीतुं नतु त्यक्तुम् । एतेन गर्वाधिक्यं ध्वन्यते । कृपः करुणः भवतीति संबन्धः । एतादृशमहाभटमुकुटरत्नकोटिपरिनिघृष्टपादपीठस्य ममात्र राक्षसापसदयुद्धे रोषसंस्पर्शेऽपि सदयतैव संपद्यत इत्याकूतम् । अन्यत्सर्वं लक्षणसमन्वयादिकं तूक्तदिशैव कल्प्यमिति संक्षेपः ॥ १४७ ॥ **प्रेता इति** । मस्तिष्कं मस्तकस्थमांसादिधातुविशेषः । 'तिलकं क्लोम मस्तिष्कम्' इत्यमरः । 'शृगालवञ्चुकक्रोष्टुफेरुफेरवजम्बुकाः' इत्यपि । स्पष्टमेवान्यत् ॥१४८॥ **नखेति** । नखा एव वज्राणि तेषामग्राणि तैः विच्छिन्नं विदारितं दृप्यद्दनुजवक्षः महाबलगर्वाद्धिरण्यकशिपूरःस्थलं येन स तथा । एतादृशस्य नृहरेः श्रीनृसिंहस्य । **प्रज्वलदिति** । प्रज्वलन् प्रदीप्यमानः एतादृशो यः कल्पज्वलनः कालाग्निस्तस्य ईर्ष्या असूया यासु तास्तथा प्रोद्दीप्यत्कालानलसमधिकदीप्तय इत्यर्थः ॥ १४९ ॥ अथ क्रमप्राप्तां पाञ्चाल्याख्यचरमरीत्युपकारिणीं सात्वत्यभिधप्रतापरुद्राभिमतार्थिकसंज्ञां हास्याद्भुतभयानकाख्यराजसरसानुग्राहिकां सर्वरसानुस्यूतस्यापि प्रसादाख्यगुणस्य निरुक्तरसावच्छेदेन शब्दद्वारैव प्राधान्येन ध्वनयित्रीं प्रौढां वृत्तिं लक्षयंस्त्रिष्वप्येतेषु तामुदाहरति—**प्रौढा त्विति** । तथाच मधुराद्यन्वितत्वे सति श्रुतिमात्रेण स्वार्थावबोधकत्वं तत्त्वं बोध्यम् । प्रसादस्य सर्वरसानुविद्धत्वोक्तेर्मधुराद्यतिप्रसङ्गभङ्गाय पूर्वदलम् । 'अङ्गभङ्गोल्लसल्लीलातरुणीस्मरतोरणम् । तर्ककर्कशपूर्णोक्तिप्रासोत्कटधियां वृथा' इत्युभयवृत्तिघटिते स्मरतोरणमिति पदेन प्रसादशून्ये चन्द्रालोकपद्ये तदर्थमन्यदलं चेति सर्वमवदातम् । अथोदाहरणान्यप्यत्रैव । तत्र हास्यपक्षे यथा । इयं हि कस्यचित्स्वकान्तावरजामुद्दिश्य तत्संनिधावेव कंचित्स्वसखं प्रत्युक्तिः । अये मित्र, अनया मत्पत्नीकनीयस्या कौमारादौ वयसि शतशः स्ववयस्याः साधारण्येनैव समुपभुक्ताः समभवन्, अधुना प्रौढा त्वियं क्वापि यथेच्छवित्तसुरतप्रदातरि तरुणे विषये मधुरामधुरभाषणादिना अनुकूला

तथा कुत्रापि अतादृशे यूनि विषये परुषा कठोरभाषणादिना प्रतिकूला च मता। मया प्रत्यक्षादिप्रमितिविषयीकृतास्तीत्यर्थः। एतेन विनोदोक्तित्वं व्युदस्तम्। तेन च हासः परिपोषितः। नन्वेवं कुलाङ्गनायामस्यां कथं संभावनीयमित्यत आह—श्रुतीत्याद्युत्तरार्धेन। येयं श्रुतीति। तुभ्यं कनकं दास्यामीति जारविरावश्रवणोत्तरक्षणमेवेत्यर्थः। एतेनातिवित्तलौल्यपूर्वकं कामुकीत्वं व्यज्यते। स्वार्थं स्वस्याः अर्थः सुवर्णावाप्तिपूर्वकसुरतसुखाख्यः पुरुषार्थः येन स कुचस्तथा तम्। पक्षे स्वस्यस्वकीयजारस्य अर्थः संभोगः एतादृशं स्वस्तनम्। करेति करे यत् बिल्वं तेन तुल्यं हस्तनिहितबिल्वफलसममिति यावत्। एवंच परमोद्धतत्वं ध्वन्यते। ददाति तस्मै जाराय प्रयच्छतीत्यन्वयः। अत्र हास्यरसव्यञ्जकत्वं स्पष्टमेव। अद्भुतपक्षे तु इदं हि किं सुभद्रायाः कनिष्ठायाः शीलं तुभ्यं रोचते किंवा ज्येष्ठाया द्रौपद्या इति रहसि प्रेम्णा पृच्छन्तं भगवन्तं प्रति अर्जुनवचः। हे भगवन्, प्रौढा तु ज्येष्ठा तु। वैलक्षण्यसूचकस्तुशब्दः। तेन कनिष्ठायाः सुभद्रायाः कनिष्ठत्वादेव बाल्यं द्योत्यते। एतस्यां तु तद्वैलक्षण्यं न केवलं वयःप्रयुक्तप्रौढत्वमात्रेण किंतु गुणप्रयुक्तेनापि तेनेति च क्वापि रत्यादिवेलायां मधुरामधुरभाषिणी, तथा कुत्रापि अश्वत्थामकृतस्वपुत्रवधादिवेलायां परुषापरुषभाषिणी एतादृशी मता प्रमितास्तीत्यर्थः। किमेतावतेत्यत आह—श्रुतीत्याद्युत्तरार्धेन। 'निरपेक्षो रवः श्रुतिः' इति वचनात् श्रुतिर्निराकाङ्क्षनिर्बाधनिजवाक्यं तावन्मात्रेणेत्यर्थः। स्वार्थं मणितसुखादिपुमर्थं, पक्षे कोपेऽपि कान्तं मुखमिति कविसमयादुत्साहोद्दीपकपरुषवाक्यकरणकसत्काव्यसमानधर्मकोपदेशकालेऽपि स्वीयनिसर्गसौन्दर्यानुसंधानादिजन्यसुखविशेषलक्षणं तमिति यावत्। स्पष्टमेवान्यत्। एवंच परस्परविरुद्धमाधुर्यपारुष्योभयधर्मसामानाधिकरण्यं तथा स्ववाक्यप्रयोगमात्रेण प्रत्यक्षकामादिपुरुषार्थदातृत्वं चैकस्यां द्रौपद्यामेवेति परमाद्भुतमित्याकूतम्। यद्वा ब्रह्मविद्योत्तरं तत्प्रदात्र्या चूडालाख्यस्वपत्न्या सह स्वधर्मेण राज्यं परिपालयतः शिखिध्वजस्य रहसि निकटस्थां तां निरीक्ष्य स्मृताखिलबाल्यादितदवस्थाकस्य स्वमनस्येवेदं वाक्यम्। प्रौढा तु इयमिति शेषः। एतेन मौग्ध्यादौ तस्यां सार्वांशिकमाधुर्यमेवेति ध्वनितम्। कुत्रापि कुम्भरूपेण तत्त्वविद्योपदेशकरणकाल इत्यर्थः। परुषा सर्वत्यागे क्रियमाणेऽपि नैतावता सङ्गत्यागः संपन्न इत्यादिकठोराक्षरभाषिणीत्यर्थः। श्रुतीति। श्रुतिः'अयमात्मा ब्रह्म'इत्यादिमहावाक्यम्। मात्रचा सामग्र्यन्तरस्य योगादेर्व्युदासः। स्वार्थं अद्वैतात्मरूपं कैवल्याख्यं परमपुमर्थमिति यावत्। शिष्टं तु प्राग्वदेव। तस्मादद्भुतेयं मत्प्रेयसीत्याशयः। भयानकपक्षेऽपि तु इदं हि यशोदयोलूखले निबद्धं कम्पमानं रुदन्तं भगवन्तं प्रति कस्यचित्तद्वयस्यस्य गोपबालस्य वचः। भो कृष्ण, अस्मदाद्या बालास्तु सर्वत्र मधुरा एव, प्रौढा त्वियं यशोदा क्वापि लालनकालादौ मधुरा कुत्रापि ताडनकालादौ परुषापि मतास्तीति संबन्धः। तस्मादस्याः सकाशाद्भवता भेतव्यमेवेति भावः। तथापि सा मता मान्यैवेत्यत्र

**एतासामुपयुक्तानि सन्ति षोढा पदान्यपि ।**
**कठोरप्राकृतग्राम्यकोमलं नागरोप ते ॥ १५१ ॥**
**सानुस्वारविसर्गादिदीर्घस्वरजगौरवम् ।**
**कठोरं तत्पदं गौडीपरुषारभटीस्थितम् ॥ १५२ ॥**

---

हेतुमाह—**श्रुतीत्याद्युत्तरार्धेन** । श्रुतिर्निराकाङ्क्षनिर्बाधनिजोक्तिः स्वार्थे लालने सुखं ताडने नीत्युपदेशेन परिणामसुखमित्यर्थः । शिष्टं तु स्पष्टमेव । एवं चात्र पक्षत्रयेऽपि चतुष्पदानधिकसमासत्वेन रीतेः पाञ्चालीत्वं, तथा 'ईषन्मृद्वर्थसंदर्भा भारती वृत्तिरिष्यते' इति लक्षितभारतीनामकवृत्त्यन्तर्भावक—'ईषत्प्रौढार्थसंदर्भा सात्वती वृत्तिरिष्यते' इति प्रतापरुद्रलक्षितार्थिकसात्वत्यभिधवृत्तित्वं तद्वन्माधुर्य-पारुष्योभयधर्माक्रान्तत्वेन वृत्तेः प्रौढात्वं च प्रसादाख्यगुणस्य सर्वरससाधारण्येऽपि हास्याद्भुतभयानकाभिधराजसरसावच्छेदेन प्राधान्यवशाच्छब्दावच्छेदद्वारा तद्व्यञ्जकत्वं चेति लक्षणसमन्वयो ज्ञेयः । यथावा—'धन्यास्ते कवयो यदीयरसना रुक्षाध्वसंचारिणी धावन्तीव कुमारिका द्रुतपदन्यासेन निर्गच्छति । अस्माकं रस-पिच्छिले पथि गिरां देवी नवीनोदयत्पीनोत्तुङ्गपयोधरेव युवतिर्मान्थर्यमालम्बते' इति ॥ १५० ॥ अस्त्वेवं निरुक्तरीत्या वृत्त्यादिव्यवस्था तथापि तदुपकारिवर्णव-त्तद्घटितानि पदान्यपि समासावच्छेदेन वैदर्भ्यादिवद्वर्णावच्छेदेन मधुरादिवद-र्थावच्छेदेन कैशिक्यादिवत्किं संज्ञाविशेषवन्ति सन्ति नवेति पृच्छन्तं प्रति तत्स-त्वप्रतिज्ञादिना समादधंस्तानि ससंख्योपकारमुद्दिशति—**एतासामिति** । **नाग-रेति** । नागरं च उप तत् उपनागरं चेति तथा नागरोपनागरे इत्यर्थः ॥ १५१ ॥ तत्रोद्देशक्रमेणैव तल्लक्षणादिसंक्षिपति—**सानुस्वारेत्यादि** षड्भिः । तथाचाहुः—षोढा पदं भवति प्रकृतिस्थं कोमलं कठोरं ग्राम्यं नागरं उपनागरं च । तत्राने-कदीर्घस्वरकृतगौरवमेकसंयोगकृतगौरवं वा पदं प्रकृतिस्थं यथा । नीहार-तारानी-काश-सारसीत्यादि हस्तपल्लव-कङ्कण-कर्पूरादि च । एकस्वरकृतगौरवं । गुरुशून्यं वा कोमलं करेणु-तारक-सरोज-निकरादि मधुर-मसृण-सरस-सरलेत्यादि च । सानु-स्वारविसर्गदीर्घस्वरकृतगौरवं संयोगबहुलं वा कठोरं यथा शुद्धं पयः पाचयांब-भूव आंहिषातामित्यत्र अच्छाच्छ तत्रस्थ व्यूढोरस्कप्रच्छन्नेत्यादि च प्रसिद्धि-मादाय ग्राम्यादित्रयं भवति । प्रसिद्धिस्त्रिधा सार्वलौकिकी पण्डितजनगामिनी तदुपजीविद्वित्रिचतुर्लौकिकगामिनीचेति । तत्र सर्वलोकप्रसिद्धं ग्राम्यम् । देशी-यपदानि सर्वाण्येव संस्कृतेषु हस्त-विवाह-भगिनी-द्वार-कंकणादिकम् । एतदपभ्रं-शसमानसिद्धिकतिपयप्रसिद्धं चेति गीयते । ग्राम्यवैपरीत्येन नातिप्रसिद्धं नागरं नागरेणोपमितमिति कृत्वाऽतिप्रसिद्ध्यभावेनोपमा । इदमेव नात्यसिद्धमुपनागरमि-त्युच्यते । यथा आव्यात्र किंशारु खुरली लातंकेत्यादीति मूले । आदिना निरुक्त-

अनेकदीर्घस्वरजैकसंयोगजगौरवम्।
प्राकृतं तत्तु पाञ्चालीप्रौढासात्वत्युपस्थितम्॥ १५३॥
सर्वलोकप्रसिद्ध्यैव प्रयुक्तं ग्राम्यमुच्यते।
पाञ्चाल्यादौ च गौड्यादौ यथा युक्तं प्रतीयताम्॥ १५४
एकस्वरगुरुत्वं वाऽगुरु वा कोमलं मतम्।
वैदर्भीमधुराकैशिक्युपगं तद्विलोक्यताम्॥ १५५॥
पण्डितैकप्रसिद्धं यन्नागरं तत्पदं स्मृतम्।
वैदर्भ्यादौ च गौड्यादौ पाञ्चाल्यादौ यथायथम्॥ १५६।
पण्डितानुचरद्वित्रिचतुरैकप्रसिद्धिकम्।
उपनागरमेतच्चाप्युक्तरीत्यैव वीक्ष्यताम्॥१५७॥
मधुरायां यावदार्या मालती च प्रहर्षिणी।
मञ्जुभाषिण्यपि ज्ञेया वसन्ततिलका तथा ॥ १५८॥
हरिणीतद्वदेवेष्टा मन्दाक्रान्ता तथैवच।
पुष्पिताग्रा मालभारिण्येतन्नान्यत्र युज्यते॥ १५९॥

---

संयोगबहुलं ज्ञेयम्॥ १५२॥ प्राकृतं प्रकृतिस्थम्॥ १५३॥ यथायुक्तं हास्य-बीभत्सावच्छेदेनेत्यर्थः॥ १५४॥ अगुर्विति च्छेदः॥ १५५॥ प्रतीयतामिति शेषः॥ १५६॥ **उक्तेति**। पूर्वपद्य इति शेषः॥ १५७॥ एवं निरुक्तमधुरादि-वृत्त्युपयुक्तानि वृत्तान्यपि संक्षिपति—**मधुरायामि**त्यादित्रिभिः। तत्रापि मधुरा-मात्रोपयुक्तानि तान्याह—**मधुराया**मित्यादिद्वाभ्याम्। **यावदिति**। यावन्त आर्याभेदा इत्यर्थः। यथा-'निर्द्वन्द्वादपि मोक्षादतिशेते कामिनीकुचद्वन्द्वम्। गुणमालम्ब्य सुवृत्ता मुक्ता अपि यल्लुठन्तीह' इति पद्यामृततरङ्गिण्याम्। उपलक्षणमिदमुदाहरणान्तराणाम्। मालती तु यथा मदीये दुःखक्षयेन्दूदये—'तव वदनं कथमिन्दुनिन्दनैरपि विकृतिं किल नैति राधिके। इति वचनं कलयन्त्यसौ हरेरभवदनङ्गसुफुल्लमालती' इति। प्रहर्षिणी यथा मदीये भागीरथीकथाचम्पूकाव्ये—'धन्यानां मृदुलपदाः सुवर्णरूपाः सद्वृत्ताः सरसगुणाः प्रसादशीलाः। नानालंकृतिविलसद्ध्वनिप्रचाराश्चुम्बन्ति स्वरसत आस्यमीज्यवाचः' इति। मञ्जुभाषिण्यप्युदय एव यथा—'तव शिञ्जितं मनसि मेऽञ्जसा प्रिये कुरुतेऽङ्कुरं मनसिजस्य यद्यपि। न स पल्लवत्यपि विना वचोऽमृतैरिति कृष्णवाचमनु मञ्जुभाषिणी' इति। वसन्ततिलका तु भामिनी विलासे यथा—'तन्मञ्जुमन्दहसितं श्वसितानि तानि सा वै कलङ्कविधुरा मधुराननश्रीः। अद्यापि मे हृदयमुन्मदयन्ति हन्त सायंतनाम्बुजसहोदरलोचनायाः' इति॥ १५८॥ **हरिणीति**। सा तु सिद्धान्तलेशे यथा—'अधिगतभिदा पूर्वाचार्यानुपेत्य सहस्रधा सरिदिव महीभेदान्संप्राप्य शौरिपदोद्गता। जयति भगवत्पादश्रीमन्मुखाम्बुजनिर्गता जननहरिणी सूक्तिर्ब्रह्माद्वयैकपरायणा' इति। मन्दाक्रान्ताप्युदयगैव यथा—'राधे मुग्धे लिखसि धरणीं किं

**परुषायां तु पृथ्व्येका न तु साऽन्यत्र राजते ।**
**प्रौढायामन्यछन्दांसि प्राधान्याच्च तयोरपि ॥ १६० ॥**
**एवं यद्यपि रीत्यादेर्गुणैकायत्तता स्थिता ।**
**तथापि वक्त्राद्यौचित्यादन्यथात्वमपीष्यते ॥ १६१ ॥**
**मन्थेति भीमसेनोक्तौ वेण्यां वक्त्रैकयोग्यतः ।**
**प्रश्नेऽपि गौडी रीतिश्च वृत्तिश्च परुषा तथा ॥ १६२ ॥**

---

वृथा पत्रखाप्रैः कृष्णः प्रेयानपि तव पदाम्भोजभृङ्गत्वमाप्तः । यावत्कामः प्रकटयति न प्राचि तन्मानिनीनां चक्रं मानच्छिदतिनिशितं तावदेव प्रसीद' इति । पुष्पिताग्रापि तत्रैव यथा—'सखि किमिति मुखं न ते प्रसन्नं शशिवदनेऽन्तरयं दहत्यनङ्गः । इति नमति हरौ बभूव राधा सपदि लतेव वसन्तपुष्पिताग्रा' इति । मालभारिणी तु भामिनीविलासे यथा—'गुरुमध्यगता मया नताङ्गी निहता नीरजकोरकेण मन्दम् । दरकुण्डलताण्डवं नतभ्रूलतिकं मामवलोक्य घूर्णितासीत्' इति । एतन्निरुक्तवृत्तनवकम् । अन्यत्र परुषादौ । प्रत्युदाहरणानि तु स्वयमेवान्वेष्याणीति संक्षेपः ॥ १५९ ॥ अथ परुषोपयुक्तं वृत्तमाह—**परुषायां त्विल्यर्धेन** । यथा—'पुरंदरहरिद्दरीकुहरगर्भसुप्तोत्थितस्तुषारकरकेसरी गगनकाननं गाहते । मयूखनखरत्रुटत्तिमिरकुम्भिकुम्भस्थलोच्छलद्बहुलतारकाकपटकीर्णमुक्तागणः' इति कस्यचित् । 'अयं पततु निर्दय' इति रसगङ्गाधरेपि । प्रौढोपयुक्तं वृत्तमाह—**प्रौढायामिति** । तानि गौणत्वेन तु मधुरादावपीत्याह—**चेति** ॥ १६० ॥ नन्विदं रीत्यादिकं किं गुणैकाधीनमुत वक्त्राद्यधीनमपीत्याशङ्क्यान्त्यकोटिमङ्गीकरोति—**एवमिति । अन्यथेति** । गुणेतरतन्त्रत्वमपीत्यर्थः । तदुक्तं काव्यप्रकाशकारिकाकारैः—'वक्तृवाच्यप्रबन्धानामौचित्येन क्वचित्क्वचित् । रचना वृत्तिवर्णानामन्यथात्वमपीष्यते' इति । विवृतं चेदं प्रदीपे । अन्यथात्वं गुणपारतन्त्र्याभावः । वक्तृवाच्यप्रबन्धौचित्यविरह एव गुणपारतन्त्र्यस्वीकारात् । तत्रापि वक्तृक्रोधाद्यव्यक्तावुपयोगादिति ॥ १६१ ॥ तत्र वक्तृमात्रौचित्येन रीत्यादिवैपरीत्यमुदाहरति—**मन्थेतीति** । तद्यथा—'मन्थायस्तार्णवाम्भःप्लुतिकुहरचलन्मन्दरध्वानधीरः कोणाघातेषु गर्जत्प्रलयघनघटान्योन्यसंघट्टचण्डः । कृष्णाक्रोधाग्रदूतः कुरुकुलनिधनोत्पातनिर्घातवातः केनास्मत्सिंहनादप्रतिरसितसखो दुन्दुभिस्ताडितोऽयम्' इति । वेण्यां वेणीसंहरणाख्ये नाटक इत्यर्थः । तेन प्रबन्धौचित्यव्युदासः । **वक्त्रेति** । वक्तृमात्रौचित्यादित्यर्थः । भावप्रधानो निर्देशः । **प्रश्नेऽपीति** । एतेन प्रकृतेपि वक्तृनिष्ठक्रोधस्यैव प्राधान्येन ध्वननाद्गौड्यादिरीत्यादिमत्त्वमुचितमेव प्रकृततामसरसगौजोगुणनिघ्नत्वेनेत्यपास्तम् । वक्तुस्तदधिकरणत्वयोग्यत्वेऽपि प्रश्नवाक्ये प्रस्तुते तदयुक्तत्वात् । चकारद्वयादारभट्याख्यपूर्वोक्तार्थिकवृत्तेः कठोरपदवृन्दस्य च संग्रहः । तस्मादत्र भीमसेनाख्योद्धतवक्तृमात्रस्वाभाव्येन रीतिवृत्त्यादेरौद्धत्यं नतु तामसरसनिष्ठौजोगुणपारतन्त्र्यवशादित्याशयः ॥ १६२ ॥

**बालरामायणे विश्वामित्राश्रमजनोक्तितः ।**
**रक्तेति वाच्यैकौचित्याद्रीत्याद्यौद्धत्यमीक्षते ॥ १६३ ॥**
**आख्यायिकायां संभोगेऽप्येव वक्तर्यनुद्धते ।**
**विकटा एव रीत्याद्याः स्युर्हर्षचरितादिवत् ॥ १६४ ॥**
**कथायां तु तथा कादम्बर्यादौ तामसेपि च ।**
**रसे प्रासङ्गिकेनातिविकटा रीतिवृत्तयः ॥ १६५ ॥**

---

एवं वाच्यैकौचित्येनापि क्वचिद्रीत्यादिवैपरीत्यमुदाहरति—**बालेति** । एतेन प्रबन्धौचितौद्धत्यं व्युदस्तम्—**विश्वेति** । एवं च वक्त्रौद्धत्यव्युदासः । **रक्तेतीति** । तद्यथा—'रक्ताभ्यक्तोरुसृक्काुरुकवलगलज्जाङ्गलव्यग्रतालुः फेत्कारैः फुल्लगल्लव्यतिकरगुरुभिः कम्पयन्ती जगन्ति । अन्योन्येनाग्रपाणिप्रणयिशवयुगं ताटका ताडयन्ती सेयं द्रागदृष्टदंष्ट्राङ्कुरकषणरणत्कारभीमाभ्युपैति' इति । **गुर्विति** । गुरुः पृथुर्यः कवलस्तेन गलति मुखाच्च्यवति तादृशं यज्जाङ्गलं 'जाङ्गलो जलनिर्मुक्तदेशे मांसे च जाङ्गलम्' इति विश्वान्मांसं तत्र व्यग्रा तद्ग्रहणाऽतुरा तालुर्यस्याः सा तथेत्यर्थः ॥ १६३ ॥ तद्वत्प्रबन्धौचित्यमात्रेण रीत्यादिवैपरीत्यमुदाहरति—**आख्यायिकायामिति** । अपिः सभोगशृङ्गारस्य वाच्यस्य सात्विकत्वेन मधुरत्वात्तदायत्तरीत्याद्यौद्धत्यव्यावृत्त्यर्थः । एवकारस्तु तत्रापि करुणविप्रलम्भशान्तेषु मधुरा एव रीत्याद्या इति द्योतनार्थः । तदुक्तं प्रदीपे क्वचिद्वक्तृवाच्यानपेक्षाः प्रबन्धोचिता एव रचनादयः । तथाहि आख्यायिकायां हि शृङ्गारेऽपि व्यङ्ग्येऽनुद्धतेपि वक्तरि नातिमसृणा वर्णादयः प्रत्युत विकटबन्धत्वेनैव । छायाबलात् । विप्रलम्भकरुणयोस्तु तस्यामपि दीर्घसमासपरिहारः । तयोरतिसौकुमार्यादिति । **हर्षेति** । तदुक्तं साहित्यदर्पणे—'आख्यायिकाकथावत्स्यात्कवेर्वंशानुकीर्तनम् । अस्यामन्यकवीनां च पद्यं क्वचित्क्वचित् । कथांशानां व्यवच्छेद आश्वास इति चोच्यते । आर्यावक्त्रापवक्त्राणां छन्दसां येन केनचित् । अन्यापदेशेनाश्वासमुखे भाव्यर्थसूचनम् । यथा हर्षचरितादीति—आचष्टे आख्यायिकावृत्तार्थकथनाहर्षचरितादीत्याख्यायिकोपलब्धार्थैत्यमरे क्षीरस्वाम्यपीति दिक् ॥ १६४ ॥ कथायां तु विशेषान्तरं कथयति—**कथायां त्विति** । तदप्युक्तं दर्पण एव—'कथायां सरसं वस्तु गद्यैरेव विनिर्मितम् । क्वचिदत्र भवेदार्या क्वचिद्वक्त्रापवक्त्रके । आदौ पद्यैर्नमस्कारः खलादेर्वृत्तकीर्तनम् । यथा कादम्बर्यादीति । एवंहि तत्र मृगयाध्वनिर्वर्णितः—'सहसैव तस्मिन्महावने संत्रासितसकलवनचरः सरभससमुत्पततपतत्रिपक्षशब्दः समंततो भीतकरिपोतचीत्कारपीवरः प्रचलितलताकुलितमत्तालिकुलक्वणितमांसलः परिक्रमदुद्धोणवनवराहघर्घरो गिरिगुहाप्रसुप्तप्रबुद्धसिंहनादोपबृंहितः कम्पयन्निव तरून् भगीरथावतार्यमाणगङ्गाप्रवाहकलकलबहलो भीतवनदेवताकर्णितो मृगयाकोलाहलध्वनिरुदचरत्' इति । अत्र च प्रासङ्गिके रौद्रादौ तामसेपि रसे रीत्यादेरति

**महापुरुषसौख्यैकप्रतिपत्तिसमर्पणम्।**
**कर्तुं तस्याः कल्पितत्वाद्वैदर्भ्योद्यात्मिकैव सा ॥ १६६ ॥**
**एवं दृश्ये नाटकादावपि ख्यातमसे रसे।**
**प्रधानेऽपि न वैकल्यं वेण्यां कृतमिति स्फुटम् ॥ १६७ ॥**
**मुक्तकं युग्मकं संदानितकं तद्विशेषकम्।**
**कालापकं च कुलकमेकपद्यादिकं क्रमात् ॥ १६८ ॥**
**चतुर्दशान्तमेव स्यात्कुलकं तत्र मुक्तके।**
**रसानुसारिरीत्यादिभूयादमरुके यथा ॥ १६९ ॥**
**संदानितकमुख्येषु त्वासमाप्तेस्तु रीतयः।**
**वृत्तयश्चाप्यवैदर्भ्योऽमधुराश्चेत्यदर्शि दिक् ॥ १७० ॥**

वैकल्याभावः स्फुट एव ॥ १६५ ॥ ननु गद्यात्मकत्वं तु कथावदाख्यायिकाया-मपि समानमेव तत्कुतोऽस्यामेवायं विशेष इत्याशङ्क्य समाधत्ते—**महापुरुषेति**। तदुक्तं प्रदीपे—'कथायां तु रौद्रेपि नात्यन्तमुद्भटा वर्णादयः वर्णनीयमहापुरुष-सुखप्रतिपत्तिसमर्पणस्योद्देश्यत्वात्' इति। तस्याः कथायाः। सा कथा ॥ १६६ ॥ अथोक्तन्यायं दृश्ये नाटकादिकाव्येऽप्यतिदिशति—**एवमिति**। कृतमितीति। तद्यथा—'कृतमनुमतं दृष्टं वा यैरिदं गुरु पातकं मनुजपशुभिर्निर्मर्यादैर्भवद्भिरुदा-युधैः। नरकरिपुणा सार्धं तेषां सभीमकिरीटिनामयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम्' इत्यश्वत्थामवाक्ये। एवं 'क्षुद्राः संत्रासमेनं विजहित हरयः क्षुण्णशक्रेभकुम्भाः' इत्यादिप्रागुदाहृते तादृशे मेघनादवचनेऽपि ज्ञेयमिति संक्षेपः ॥ १६७ ॥ एवं मुक्तकादावपि व्यवस्थां कथयितुं तत्स्वरूपं संक्षिपति—**मुक्तकमि**-त्यादिना स्यात्कुलकमित्यन्तेन। **तदिति**। यद्युग्मकं तदेव संदानितकमेतत्सं-ज्ञकमपीति। **एकेति**। क्रमेण एकपद्यमात्रपरिसमाप्तान्वयमुक्तमित्यादि यथासंख्यं बोध्यम्। उक्तं हि प्रदीप एव। एकैकच्छन्दसि वाच्यसमाप्तिर्मुक्तकम्। द्वयोः संदानितकम्। त्रिषु विशेषकम्। चतुर्षु कालापकम्। पञ्चादिचतुर्दशान्तेषु कुल-कमिति। अन्यत्रापि—'द्वाभ्यां युग्ममिति प्रोक्तं त्रिभिः श्लोकैर्विशेषकम्। काला-पकं चतुर्भिः स्यात्तदूर्ध्वं कुलकं स्मृतम्' इति। एवंच युग्मसंदानितकयोरनर्था-न्तरत्वं ज्ञेयम् ॥ १६८ ॥ तत्र मुक्तके रीत्यादि व्यवस्थापयति—**तत्रेति**। तदुदाहरति—**अमरुके यथेति**। अमरुकशतके हि सर्वेष्वपि पद्येषु रसानुसार्येव रीत्यादिकमिति प्रपञ्चितमेव मया शृङ्गारशान्तात्मके ग्रन्थे शारदागमाख्ये तद्व्या-ख्याने ॥ १६९ ॥ संदानितकादौ विशेषं स्पष्टयति—**संदानितकेति**। अवै-दर्भ्यः वैदर्भीभिन्नाः अमधुरा इति च्छेदः। मधुरेतरा इत्यर्थः। रीतयो वृत्त-यश्चेति यथासंख्यं संबन्धः। इदमपि दिङ्मात्रमेवोक्तमित्याह—**इतीति**। इति मया दिक् अदर्शीत्यन्वयः। एवंच प्रबन्धगतेषु तु मुक्तकादिषु प्रबन्धरसाद्युचिता एव रीत्यादय इत्याशयः। एवमेवोक्तं प्रदीपादाविति हृदयम् ॥ १७० ॥

**माधुर्यादौ च दोषाणामभावेऽलंकृतौ ध्वनौ।**
**जरत्तरमता अन्तर्भूताः श्लेषादयो गुणाः॥ १७१॥**
**श्लेषप्रसादोदारत्वौजःसमाधय ओजसि।**
**दोषाभावे तु समता कान्तिश्च सुकुमारता॥ १७२॥**
**माधुर्य एव माधुर्यमर्थव्यक्तिः प्रसादके।**
**प्रकाशादिमतेनान्तर्भूताः श्लेषादयो गिरः॥ १७३॥**
**ओजःप्रसादसमतामाधुर्यसुकुमारताः।**
**उदारत्वं च दोषाणामभावेऽन्तर्भवन्त्यमी॥ १७४॥**
**काव्यरूपे समाधिश्च तथा कान्ती रसध्वनौ।**
**अर्थव्यक्तिस्तथा श्लेषोऽलंकार इति चार्थिकाः॥ १७५॥**
**पुराणसंख्यं विज्ञेयं लक्षणं त्वर्थतो गुणान्।**
**आन्तरान्व्यञ्जयच्चन्द्रलोकाभरणसारतः॥ १७६॥**

---

नन्वेवं यदि माधुर्यादयस्त्रय एव गुणास्तर्हि 'श्लेषः प्रसादः समता माधुर्यं सुकुमारता। अर्थव्यक्तिरुदारत्वमोजःकान्तिसमाधयः' इति जरत्तरोक्तशब्दादिश्लेषादिगुणदशकस्य का गतिरितिचेन्न। माधुर्यादावेव तदन्तर्भावादित्याह। माधुर्यादौ चेति॥ १७१॥ एवं सूत्रितं श्लेषाऽऽदिगुणान्तर्भावं विवृणोति—**श्लेषेत्यादि** चतुर्भिः। तत्राद्ययुग्मेन शाब्दिकश्लेषादेरन्त्ययुग्मेनार्थिकस्येति ध्येयम्। एते श्लेषादयः पञ्च ओजसि अन्तर्भवन्तीति शेषः। एवमग्रेऽपि यथायोगमन्तर्भवतीत्याद्यूह्यम्॥ १७२॥ **माधुर्य एवेति**। प्रसादके। स्वार्थे कः। प्रसाद एवेत्यर्थः। गिरः शब्दसंबन्धिनः श्लेषादयो गुणाः एते दशापि प्राच्यसंमताः। प्रकाशेति। आदिना काव्यप्रदीपप्रभृतयो ज्ञेयाः। अन्तर्भूताः सन्तीति संबन्धः॥१७३॥ **ओज इति**। अमी ओजःप्रभृतयः षट् आर्थिका गुणाः दोषाणां अभावे जात्यभिप्रायेणैकवचनम्। तत्तद्दोषाभावेष्वित्यर्थः। अन्तर्भवन्तीत्यन्वयः॥ १७४॥ **काव्येति**। नचेदं समाध्यभिधार्थिकगुणस्य काव्यरूपेऽन्तर्भावनकथनं माधुर्यादौ चेत्यादिप्रतिज्ञाविरुद्धमिति वाच्यम्। रसालंकारेत्यादिप्रथमरत्नप्रतिज्ञानुरोधेन काव्यस्य रसाद्यन्यतरमात्रमुख्यत्वरूपत्वेन ध्वनिशब्दिते रसप्रधाने अलंकृतिशब्दिते अलंकारप्रधाने वा प्रकृतस्य समाध्यभिधार्थिकजरत्तरसंमतगुणान्तर्भावयोग्यस्य काव्यरूपस्य स्फुटमेव सूत्रितत्वात्। **रसेति**। अलंकारध्वनिव्यावृत्त्यर्थं रसपदम्। **इति चेति**। चः समुच्चये। प्रकाशेत्यादिश्लेषादय इत्यन्तमत्राप्यनुकृष्य आर्थिकाः अर्थसंबन्धिन इत्यादिप्राग्वदेव योज्यम्। एतदुपपादनप्रकारस्तु काव्यप्रकाशकाव्यप्रदीपचन्द्रालोकप्रतापरुद्रसाहित्यदर्पणरसगङ्गाधरादावेव ज्ञेयः। अतिप्रयोजकत्वाभावादेव नेह मयोपन्यस्त इत्याकूतम्॥ १७५॥ एवं शब्दद्वारा बाह्यान्माधुर्यादीन् गुणान्व्यञ्जयित्री रीतीर्वृत्तीश्च प्रपञ्च्य अर्थद्वारा आन्तरांस्तान्व्यञ्जयति। प्रथमरत्ने समुद्दिष्टान्यत्र तथात्वेन सामान्यतः प्रतिज्ञातानि लक्षणानि विवृण्वंस्त-

**द्राक्षापाकस्तथा प्रेयो माधुर्यं सुकुमारता।**
**श्लेषः सौक्ष्म्यं च माधुर्यं व्यनक्ति मधुरार्थतः॥ १७७॥**
**द्राक्षापाकः स बाह्यान्तस्तत्समप्रस्फुरद्रसः।**
**रघुवीरगुरोः पादपांसवो मुक्तिकुङ्कुमम्॥ १७८॥**
**प्रायः सहृदयस्वान्तकर्षकं प्रेय उच्यते।**
**कैवल्यमपि वैकल्यं याति कान्तादृगन्ततः॥ १७९॥**
**माधुर्यं वर्णनं नत्याः क्रोधादेरपि सूचने।**
**स्मितचन्द्रिकया राधादृशि संध्यां तिरोदधे॥ १८०॥**

---

त्संख्यां संक्षिपति—**पुराणेति**। अष्टादशसंख्याकमित्यर्थः। तुशब्दः प्रघट्टकान्तरार्थः। **चन्द्रेति**। एतेनासांप्रदायिकत्वं व्युदस्तम्॥ १७६॥ तत्र माधुर्यमात्रव्यञ्जकानि तान्युद्दिशति—**द्राक्षेति**। **मधुरेति**। मधुरा एतन्नाम्नी या पूर्वोक्ता वृत्तिः तदुपयुक्तो योऽर्थस्तेन, तद्द्वारेति यावत्। माधुर्यं प्रागुक्तश्रृङ्गारादिसात्विकरसनिष्ठं माधुर्याख्यं गुणं व्यनक्तीत्यन्वयः॥ १७७॥ तत्रादौ यथोद्देशं द्राक्षापाकं लक्षयति—**द्राक्षेति**। तदुक्तं विद्यानाथेन प्रतापरुद्रे—'द्राक्षापाकः स कथितो बहिरन्तः स्फुरद्रसः' इति। कण्ठाभरणकारास्त्विममेव मृद्वीकापाकमाहुः। तमुदाहरति—**रघुवीरेति**। अत्र कुङ्कुमपदेन निरुक्तगुरुपादकोकनदयोरलौकिकमारुण्यं व्यज्यते। मुक्तेर्हि स्त्रीत्वात्तत्सामान्येन सौभाग्यसर्वस्वीभूतत्वस्य कुङ्कुमपदवाच्यकाश्मीरप्रत्याम्नायीभूतहरिद्रायाः रक्तचूर्णविशेष एवाशेषव्यवहार्यत्वात्प्रकृतश्रीगुरुपादपांसुषु तत्त्वाध्यवसानेन तत्सर्वस्वत्वसूचनात्तस्यांस्तत्किंकरीत्वं द्योतितम्। यथावा—'आच्छादयसि किं मुग्धे वस्त्रेणाधरपल्लवम्। अव्रणा नहि शोभन्ते वीराधरपयोधराः' इति किंच 'पात्रे पुरोवर्तिनि विश्वनाथे क्षोदीयसि क्ष्मावलयेऽपि देये। व्रीडास्मितं तस्य तदा तदासीच्चमत्कृतो येन स एव देवः' इति॥ १७८॥ अथ प्रेयो लक्षयति—**प्राय इति**। तदुक्तं कण्ठाभरणे 'प्रेयस्त्वर्थेष्वभीष्टता' इति। तदुदाहरति—**कैवल्यमपीति**। वैकल्यं विकलत्वम्। यथावा तत्रैव—'रसवदमृतं कः संदेहो मधून्यपि नान्यथा मधुरमधिकं चूतस्यापि प्रसन्नरसं फलम्। सकृदपि पुनर्मध्यस्थः सन्नसांतरविज्जनो वदतु यदिहान्यत्स्वादु स्यात्प्रियारदनच्छदात्' इति॥ १७९॥ माधुर्यं लक्षयति—**माधुर्यमिति**। तदुदाहरति—**स्मितेति**। राधादृशि स्वदृष्टौ संध्यां संध्यारागसदृशं श्रीकृष्णकर्तृकगोप्यन्तरसंभोगज्ञानजन्यमात्सर्यरोषकषायवर्णसरणिमिति यावत्। एतेनास्याः खण्डितात्वं द्योत्यते—**स्मितेति**। भगवति स्वरतिमन्दिरमुपागते सति स्वस्याः परमोत्तमनायिकात्वात् यत् स्मितं निरुक्तकोपापलापार्थं बलात्कृतं यन्मन्दहास्यं तस्य या चन्द्रिकाकुन्दकलिकाकारनिजरदाङ्कुरकौमुदी तयेत्यर्थः। तिरोदधे संच्छादयामासेति संबन्धः। कौमुद्या हि संध्यारागतिरोधानं लोके प्रसिद्धमेव। तत्रापीयं तु राधा 'राधाविशाखा' इत्यमरात्पक्षे विशाखा तद्युक्तपूर्णमास्यास्तावद्वैशाख एव संभवात्तचन्द्रिकायाः परमा-

**अतिकोमलतार्थस्य सौकुमार्यमुदीरितम् ।**
**यास्यामि मथुरामेवं श्रुत्वा राधाऽगमज्ज्वराम् ॥ १८१ ॥**
**श्लेषस्त्वर्थस्य रचनाचातुरीसूत्रचित्रता ।**
**उमाकपोलं सोऽचुम्बच्छंभुर्गङ्गास्यबिम्बनात् ॥ १८२ ॥**
**सौक्ष्म्यं त्वर्थस्य सूक्ष्मत्वं पीयूषांशोर्मरीचिवत् ।**
**सीतयैक्षि रघूत्तंसो वञ्चयित्वा मनोपि च ॥ १८३ ॥**
**व्यनक्त्योजो नालिकेरीपाकः शोभा च वस्तरः ।**
**गम्भीरत्वमुदारत्वरीतिश्च परुषार्थतः ॥ १८४ ॥**

वदातत्वमपि । एवं चात्र क्रोधादेः सूचनेपि स्मितवर्णनेन नतिरेव ध्वनितेति लक्षणसंगतिः । यथावा—'भ्रूभेदे सहसोद्गतेपि वदनं नीतं परां नम्रतामीषन्मां प्रति भेदकारि हसितं नोक्तं वचो निष्ठुरम् । अन्तर्बाष्पजडीकृतं प्रभुतया चक्षुर्न विस्फारितं कोपश्च प्रकटीकृतो दयितया मुक्तश्च नो प्रश्रयः' इति ॥ १८० ॥ एवं सौकुमार्यं लक्षयति—**अतीति** । तदुदाहरति—**यास्यामीति** । अत्र श्रीकृष्णस्य भविष्यन्मथुरागमनप्रतिज्ञाश्रवणाव्यवहितोत्तरक्षणसंपन्नराधामूर्छनलक्षणस्यार्थस्यातिकोमलत्वाल्लक्षणसमन्वयः । यथावा बालरामायणे—'सद्यः पुरीपरिसरेऽपि शिरीषमृद्वी सीता जवात्रिचतुराणि पदानि गत्वा । गन्तव्यमस्ति कियदित्यसकृद्ब्रुवाणा रामाश्रुणः कृतवती प्रथमावतारम्' इति ॥ १८१ ॥ श्लेषं लक्षयति—**श्लेषस्त्विति** । तमुदाहरति—**उमेति** । गङ्गेति शिरःस्थगङ्गामुखप्रतिफलनादित्यर्थः । यथावा अमरुकशतके—'दृष्ट्वैकासनसंस्थिते प्रियतमे पश्चादुपेत्यादरादेकस्या नयने निमील्य विहितक्रीडानुबन्धच्छलः । ईषद्वक्रितकंधरः सपुलकप्रेमोल्लसन्मानसामन्तर्हासलसत्कपोलफलकां धूर्तोऽपरां चुम्बति' इति ॥ १८२ ॥ सौक्ष्म्यं लक्षयति—**सौक्ष्म्यं त्विति** । श्लेषे त्वर्थरचनाचातुर्यसौक्ष्म्यवैचित्र्यं प्रकृते त्वर्थस्यैव तदिति नैतयोः सांकर्यशङ्कापि । अत एवानुरूपो दृष्टान्तः पीयूषेति द्वितीयपादेन । तदुदाहरति—**सीतयेति** । धनुर्भङ्गात्प्रागिति शेषः । नचेदमतिशयोक्तिमात्रमेव नेत्रादीन्द्रियाणां तन्मात्रतन्त्रत्वेन तद्वञ्चनेनैतद्व्यापारस्य स्वप्नेऽप्यसंभावितत्वादिति वाच्यम् । भङ्ग्यन्तरस्यैव प्रकृताकूतत्वात् । तथाहि सख्यादिख्यापितश्रीरघुनाथस्यानन्तकल्याणगुणरूपलावण्यादिप्रथामाकलय्य जानक्याश्चेतसि तदीक्षणकरणसंकल्पे जात एवाव्यवहितमेव प्रबलतमलज्जामनोजाभ्यां स्तम्भाख्यसात्विकानुभावेन मनसः स्तब्धीभावात्प्राथमिकसंकल्पमात्रप्रेरितनेत्रत्रिभागेण तदीक्षणे जायमानेऽपि दरसुप्तप्रबुद्धबालवद्व्युत्थितस्थितप्रज्ञवच्च मनोव्यापारवैधुर्यादुचितमेव तद्वञ्चनपूर्वकं लोचनाञ्चलेन श्रीरामालोचनमिति । यथावा सरस्वतीकण्ठाभरणे—'अन्योन्यसंवलितमांसलदत्तकान्तिसोल्लासमाविरलसंवलिताधेतारम् । लीलागृहे प्रतिकलं किलकिंचितेषु व्यावर्तमानविनयं मिथुनं चकास्ति' इति ॥ १८३ ॥ अथौजोव्यञ्जनाधिकद्वारतापन्नलक्षणषट्कमुद्दिशति—**व्यनक्तीति** ।

**स नालिकेरीपाको यः स्वान्तर्गूढरसो दृढः ।**
**धिग्भ्रमद्भृङ्गतुङ्गाक्षीं गुर्वपाङ्गेऽङ्गरङ्गिणि ॥ १८५ ॥**
**शोभाप्रमितदोषोऽपि गुणोत्कर्षेण बाध्यते ।**
**निन्दन्ति रमणीं भ्रान्ताश्चूडाला किं न मुक्तये ॥ १८६ ॥**

---

**परुषेति** । प्रागुक्तपरुषाख्यवृत्त्यनुकूलार्थद्वारा तामसरसनिष्ठमोजोगुणं नालिकेरीपाकादिकं व्यनक्तीति योजना ॥ १८४ ॥ तत्रोद्देशक्रमानुसारेणैव प्रथमं नालिकेरीपाकं लक्षयति—**स इति** । तदुक्तं प्रतापरुद्रीये—'स नालिकेरीपाकः स्यादन्तर्गूढरसोदयः' इति । तमुदाहरति—**धिगिति** । **गुर्विति** । देशिककृपाकटाक्ष इत्यर्थः । **अङ्गेति** । मच्छारीरसंचारचंचुरे सतीति यावत् । **भ्रमदिति** । चलच्चञ्चरीकाधिकचपलविलोचनामपीत्यर्थः । धिगस्त्वित्यन्वयः । अत्र त्यागवीरस्यातिगूढत्वाद्रचनायाश्च दृढत्वाल्लक्षणसंगतिः। यथावा—'अभ्युद्धृता वसुमती दलितं रिपूरः क्षिप्तक्रमं कवलिता बलिराज्यलक्ष्मीः। अत्रैकजन्मनि कृतं यदनेन यूना जन्मत्रये तदकरोत्पुरुषः पुराणः' इति ॥ १८५ ॥ अथ शोभां लक्षयति—**शोभेति** । यत्र प्रमितदोषोऽपि निर्णीतदोषोपीत्यर्थः । **गुणेति** । गुणाधिक्यप्रमयेतियावत् । बाध्यते बाधविषयीक्रियते तादृगर्थरचनाशोभेति संबन्धः । तदुक्तं चन्द्रालोके—'शोभा ख्यातोऽपि यद्दोषो गुणकीर्त्या निषिध्यते । मुधा निन्दन्ति संसारं कंसारिर्यत्र पूज्यते' इति । नचेदं दोषस्याभ्यर्थनानुज्ञा तत्रैव गुणदर्शनात् 'विपदः सन्तु नः शश्वद्यासु संकीर्त्यते हरिः' इति कुवलयानन्दकारिकोक्तानुज्ञालंकारेन्तर्भूतमिति सांप्रतम् । लक्षणभेदात् । गुणोत्कर्षेण बाधितत्वप्रमितदोषत्वं शोभात्वं समानाधिकरणगुणवशादभ्यर्थ्यमानदोषत्वं चानुज्ञात्वमिति तद्भेदात् । पूर्वत्र हि गुणोत्कर्षेण दोषस्य बाधमात्रं न त्वभ्यर्थनम् । अत्र त्वभ्यर्थनमपीति स्पष्टमेव तयोर्वैलक्षण्यमिति संक्षेपः । तामुदाहरति—**निन्दन्तीति** । रमणीं यावत्स्त्रीगुणविशिष्टस्ववधूटीमित्यर्थः । तत्र हेतुः चूडालेति चरमचरणेन । अत्र गार्हस्थ्यवीरो ध्वनितः । एवं हि बृहद्योगवासिष्ठे षष्ठे निर्वाणप्रकरणे पूर्वार्धे सप्रपञ्चं समुपाख्यायते—शिखिध्वजाख्यः कश्चिन्मनुष्यानन्दसंपन्नः सार्वभौमः पूर्ववयस्येव दिग्विजयादिकं विधायानवशिष्टव्यावहारिककृत्यशेषः सन्स्वयं चूडालाख्यया यावद्रमणीगुणवत्या स्वसत्या सहैव पुराणश्रवणादिकमकरोत् । तत्र तस्या एव जन्मान्तरीयसुकृतपरिपाकवशादेव सयोगैश्वर्यं तत्त्वज्ञानं प्रादुरभूत् । स तु राजा स्वस्य तदनवाप्त्याऽनुतप्यमानस्तां विहाय स्वयमेकाक्येवारण्यमगात् । ततश्च योगमाहात्म्यावगततत्प्रतिबन्धया तया द्वादशवर्षोत्तरं तत्र कुम्भनामकमुनिकुमाररूपं धृत्वा तं प्रति सयोगब्रह्मविद्यामुपदिश्य समवाप्तजीवन्मुक्तिफलं तमाकलय्य नैजं स्त्रीरूपं प्रकटीकृत्य तं निजराजधानीं समानीय तेन सह स्वधर्मेणैवैहिकपारमार्थिकानन्द-

**भङ्गीवैपुल्यतो यत्राकूतं व्यक्तं सविस्तरः।**
**येन वृन्दावने रेणुर्भवेयं तत्तपः क मे ॥ १८७ ॥**
**ध्वनिः प्रतिपदं दिव्यो यदि गाम्भीर्यमीर्यते।**
**अभीमोऽप्यभवो पीशोऽस्म्यनुमापतिरप्यहम् ॥ १८८ ॥**
**ऐश्वर्योत्कर्षशालित्वमुदारत्वमुदीर्यते।**
**गुरुपन्नखदीप्त्यक्तरेणू श्रीशारदे खलु ॥ १८९ ॥**

---

काष्ठानुभूता सेवि ॥ १८६ ॥ विस्तरं लक्षयति—**भङ्गीति**। भङ्गी सरणिः। तमुदाहरति—**येनेति**। अत्रापि भक्तिवीर एव ध्वन्यते। यथावा भरणे—'जनः पुण्यैर्यायाज्जलधिजलभावं जलमुचस्तथावस्थं चैनं निदधतु शुभैः शुक्तिवदने। ततस्तां श्रेयोभिः परिणतिमसौ विन्दतु यथारुचिं तन्वन्पीनस्तनि हृदि तवायं विलुठति' इति ॥ १८७ ॥ गाम्भीर्यं लक्षयति—**ध्वनिरिति**। यदि प्रतिपदं यावत्सुबन्ततिङन्तं दिव्यः सहृदयहृदयहारी एतादृशः ध्वनिः रसाद्यन्यतरव्यङ्ग्यार्थ इत्यर्थः। स्याचेत्तर्हि गाम्भीर्यं ईर्येत इत्यन्वयः। तदुदाहरति—**अभीमोऽपीति**। अहं अहंकारोपलक्षितः कूटस्थः प्रत्यक्चिदात्मेत्यर्थः। एतेन वक्ष्यमाणसाक्षात्कारस्य पारोक्ष्यव्युदसनं त्वंपदार्थशोधनं च ध्वन्यते। अभीमोपि अभयंकरोऽपीत्यर्थः। एतेन अहिंसाप्रधानसंन्यासान्तनित्यानित्यवस्तुविवेकादिसाधनचतुष्टयसंपत्तिपरिपाकः सूचितः। अपिना 'व्योमकेशो भवो भीमः स्थाणू रुद्र उमापतिः' इति 'शंभुरीशः' इति चामरादभीमस्येशत्वं विरुद्धमिति विरोधस्तस्येशपदलक्ष्यजगज्जन्मादिकारणत्वोपलक्षितं सत्यज्ञानानन्तानन्दाद्वैतब्रह्ममात्रत्वस्य विवक्षितत्वेनाभासश्चेति प्रकृते विरोधाभासालंकारोऽपि व्यज्यते। एवं अभवोऽपि न विद्यते भवः संसारो यस्य स तथा। एतेन दृश्याधिष्ठानत्वस्यापि दृश्यनिरूपितत्वेन कल्पितत्वाच्छोधिततत्पदार्थत्वं द्योत्यते। विरोधाभासस्तु प्राग्वदेव। तद्वदनुमापतिरित्यत्रापि। अनुमायाः अनुमित्यात्मकधीवृत्तेः पतिरिव प्रकाशक इति यावत्। एतेन यावत्तर्कविरोधः प्रत्यक्षादिप्रमाणान्तरविरोधश्च परिहृत इति बोधितम्। एतादृशः ईशः निरुक्तचिन्मात्रः। एवंच प्रत्यगभेदयोग्यत्वं व्यज्यते। अस्मि नतु भविष्यामि तेनाज्ञानतत्कार्यध्वंसस्य साद्यस्कत्वं सूचितम्। इह ज्ञानवीर एव रसो व्यज्यते। यथावा कण्ठाभरणे—'मौलौ धारय पुण्डरीकममितं तन्वात्मनो विक्रमं चक्राङ्कं वह पादयुग्ममवनिं दोष्णा समभ्युद्धर। लक्ष्मीं भ्रूनिकटे निवेशय भव ज्यायान्दिवौकस्पतेर्विश्वान्तःकरणैकचोर तदपि ज्ञातो हरिः खल्वसि' इति ॥ १८८ ॥ एवं क्रमप्राप्तमुदारत्वं लक्षयति—**ऐश्वर्येति**। अर्थ इति स्वार्थिकमेव। तदुदाहरति—**गुर्विति**। **श्रीति**। श्रीश्च शारदा चेति तथा लक्ष्मीसरस्वत्यावित्यर्थः। **गुर्विति**। गुरोः श्रीमदाचार्यस्य यः पत्पादः तस्य यन्नखं तस्य ये दीप्ती पूर्वापरभागयोः पाटलधवलकान्ती ताभ्यां अक्ते अभ्यङ्गेन यथा पदार्थस्य चाकचक्यं भासते तथा चाकचक्यशालिन्याविति यावत्। एता-

**उपक्रमादिषड्लिङ्गानुग्रहो रीतिरीरिता ।**
**भार्गवे भग्नभूभृद्भे भार्गे कः प्रतिभूर्भवेत् ॥ १९० ॥**
**सहकाराभपाकाक्षरसंहतिसमाधयः ।**
**संमितत्वोक्तिसमताः प्रौढार्थेन प्रसादकाः ॥ १९१ ॥**
**सहकाराभपाकस्तु गूढागूढार्थगुम्फनम् ।**
**स्तनौन्नत्यनतापि त्वं भुवौ ते नोन्नते कुतः ॥ १९२ ॥**

---

दश्यौ ये रेणू धूली ते एव भवत इति योजना । लक्ष्म्या हि पद्मात्वेन गुरुचरणनखस्य पूर्वभागीयपाटलद्युत्यच्छधूलित्वं सरस्वत्यास्तु 'शरज्ज्योत्स्नाशुभ्राम्'इत्याद्यभियुक्तोक्तेः शुक्लत्वादपरभागीयसितद्युत्यच्छधूलित्वं चेति तस्य निरुपममेवैश्वर्यमित्याशयः । अत्रापि भक्तिवीर एव व्यज्यते । यथावा—'प्राणानामनिलेन वृत्तिरुचिता सत्कल्पवृक्षे वने तोये काञ्चनपद्मरेणुकपिशे पुण्याभिषेकक्रिया । ध्यानं रत्नशिलागृहेषु विबुधस्त्रीसंनिधौ संयमो यद्वाञ्छन्ति तपोभिरन्यमुनयस्तस्मिंस्तपस्यन्त्यमी'इति ॥ १८९ ॥ रीतिं लक्षयति—**उपक्रमादीति** । तानि चाहुः प्राञ्चः —'उपक्रमोपसंहारावभ्यासोऽपूर्वताफलम् । अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये' इति । एतेषामुपक्रमादीनां षण्णां लिङ्गानां योऽनुग्रहः स्वविवक्षितार्थे आनुकूल्यं तत्प्रकृते रीतिपदार्थ इत्यर्थः । तदुदाहरति—**भार्गव इति** । इदं हि परशुरामस्य भगवतो वीर्यवाक्यम् । भार्गवे भृगुकुलोत्पन्ने परशुरामे विषये प्रतिभूः प्रतिपक्षः कः भवेत् । न कोपि भूयादित्यन्वयः । अत्र महर्षिवंशोपक्रमेण तस्य सर्वत्रानभिभाव्यत्वं यद्ध्वनितं तदेवोपसंहृतमित्युपक्रमोपसंहारयोरैकरूप्यमेकं लिङ्गम् । **भग्नेति** । भग्नाः विध्वंसिताः भूभृतां कार्तवीर्यादिभूपानां भाः प्रतापप्रभाः येन स तथा तस्मिन्नित्यर्थः । तेन ह्येकविंशतिवारं निःक्षत्रा पृथ्वी कृतेत्युक्तार्थस्याभ्यासस्तथा लोकोत्तरत्वादपूर्वता तद्धतपितृऋणानिर्मुक्त्यादिफलमेवं निरुक्तार्थस्यानेकेतिहासप्रसिद्धत्वादर्थवादश्चेति लिङ्गचतुष्टयं ह्येतेन द्योतितम् । एवमुपपत्त्याख्यं षष्ठं लिङ्गं ध्वनयंस्तं विशिनष्टि—**भार्गे इति** । भर्गस्य शिवस्यायं भार्गस्तस्मिन्नित्यर्थः । शिवशिष्यत्वादेव सर्वमिदमुपपन्नमित्याकूतम् । यथावा—'ग्राव्णा नासि गिरेः क्षता न पयसा नार्तासि न म्लायिता न श्वासैः फणिनोसि नत्वदनुगा नायासिता कापि न । स्वं वेश्म प्रतिगच्छतोरिति मुहुः श्रीशार्ङ्गिणोः सस्पृहं सा प्रश्नोत्तरयुग्मपद्धितिरुभयोरत्यायता पातु वः' इति ॥ १९० ॥ अथार्थद्वारैव प्रौढाभिधप्रागुक्तवृत्त्यनुग्राहकं लक्षणषट्कमुद्दिशति—**सहकारेति** । **प्रौढेति** । प्रौढाभिधवृत्त्युपकारी योऽर्थस्तेन द्वारेत्यर्थः । प्रसादकाः प्राधान्येन प्रसादाख्यस्य प्रागुक्तराजसरसासाधारणस्य व्यञ्जिकाः सन्तीति संबन्धः ॥ १९१ ॥ तत्रोपक्रमानुसारेण प्रथमं सहकारपाकं लक्षयति—**सहकाराभेति** । तमुदाहरति—**स्तनेति** । इदं हि स्वकान्तां प्रति पत्युः परिहासवचः । हे प्रिये,त्वं

**शब्दाल्पत्वेऽपि भूर्यर्थरचनाक्षरसंहतिः।**
**धनुस्तृड्यातुवाल्यब्धितत्पजिज्जानकीपतिः॥ १९३॥**
**उक्तिं विनैव यच्छद्म समाधिः सोऽभिधीयते।**
**सिंहावलोकनं चक्रे राधाकण्डूयनच्छलात्॥ १९४॥**
**संमितत्वं तु यत्रार्थौ समानतुलिताविव।**
**दृक्तुलापात्रतो राधानुरागौ समतोलयत्॥ १९५॥**

---

स्तनौन्नत्यनतापि कुचोच्चत्वनीचापि ते तव भ्रुवौ कुतः न उन्नते, तत्र नम्रत्वसाधकं किं कुचकनकाचलयुगुलवदन्यद्गुरुतरमस्ति तद्ब्रूहीत्यन्वयः। एवंच त्वयोर्ध्वं निरीक्षणीयं रत्याद्यर्थमितः परमित्याशयः। अत्रोक्तार्थस्य गूढागूढत्वाल्लक्षणसंगतिः। यथावा—'मा गर्वमुद्वह कपोलतले चकास्ति कान्तस्वहस्तलिखिता मम मञ्जरीति। अन्यापि किं न सखि भाजनमीदृशीनां वैरी न चेद्भवति वेपथुरन्तरायः' इति॥ १९२॥ अक्षरसंहतिं लक्षयति—**शब्देति**। तदुक्तं चन्द्रालोके—'अल्पाक्षरा विचित्रार्था ख्यातिरक्षरसंहतिः। उषाकान्तेनानुगतः शूरः शौरिरयं पुनः' इति। तामुदाहरति—**धनुरिति**। इह हि सप्तकाण्डमहारामायणार्थोऽपि श्लोकार्धेन संग्रथितः। तद्यथा—'धनुश्चन्द्रचूडचापम्'। एतेन बालकाण्डम्। तृट्राज्यतृष्णा। तेनायोध्याकाण्डम्। यातूनि 'यातुरक्षसी' इत्यमरात् खरादिराक्षसाः। एवं चारण्यकाण्डम्। वालिस्तारेशः। अनेन किष्किन्धाकाण्डम्। अब्धिः समुद्रः। तथाच सुन्दरकाण्डम्। तत्पः प्रागुक्तयातुपती रावणश्च ताञ्जयतीति तथा। एतावता युद्धकाण्डम्। जानकीति। ततस्तूत्तरकाण्डम्। उपक्रमोपसंहारयोस्तन्मात्रत्वात्। अत्राद्भुत एव रसः सूच्यते॥ १९३॥ समाधिं लक्षयति—**उक्तिमिति**। नच 'पर्यायोक्तं तदप्याहुर्यद्व्याजेनेष्टसाधनम्। यामि चूतलतां द्रष्टुं युवाभ्यामास्यतामिह' इति कुवलयानन्दमूलोक्तपर्यायोक्तविशेषेऽतिव्याप्तिः। तस्योक्तिपूर्वत्वात्। लक्षणे सामान्योक्तावपि रसमञ्जर्युक्तवाग्विदग्धत्वक्रियाविदग्धत्वभेदाभ्यामुदाहरणोक्तिपूर्वकच्छद्मदर्शनेन च तथाभिप्रायोन्नयनाच्च। तामुदाहरति—**सिंहेति**॥ १९४॥ संमितत्वं लक्षयति—**संमितत्वं त्विति**। तदुदाहरति—**दृगिति**। दृशौ स्वनेत्रे एव तुलापात्रे तदन्तर्वर्तिकृष्णतारकयोस्तुलापात्रयोश्च वर्तुलत्वकमठपृष्ठोन्नतत्वकृष्णवर्णविशेषशालिपृष्ठत्वगुणत्रयग्रथितत्वरूपसाधर्म्यचतुष्टययोगात्तुलाभाजने ताभ्यामित्यर्थः। अनुरागौ स्वाधिकरणकश्रीकृष्णविषयकतदधिकरणकस्वविषयकप्रेमाणाविति यावत्। समतोलयत् तोलयामासेति संबन्धः। पक्षे अनुशाणनिघर्षणाद्यनुसारेण रागः आरक्तिमावभासो ययोस्तौ पद्मरागाख्यरत्नविशेषावित्यर्थः। एतेन प्रकृते रत्नतुलापात्रसाम्यमेव राधानेत्रयोर्विवक्षितमिति द्योत्यते। इदमुदाहरणद्वयं राधासन्निधावेव स्वसुहृदं प्रति श्रीकृष्णस्य तद्विनोदवाक्यम्। यथावा कण्ठाभरणे—'इन्दुर्मूर्ध्नि शिवस्य

**उक्तिर्युक्तिवशेनार्थः स्विष्टश्चेत्पुष्टतामियात् ।**
**दृष्टः कुत्रापि संपूर्णो माधवो राधया विना ॥ १९६ ॥**
**क्रमवद्विषमार्थत्वशून्यत्वं समता मता ।**
**हेमन्तेऽहो वसन्ते ते बदराम्रोपमौ कुचौ ॥ १९७ ॥**
**ये चतुर्विंशतिः शाब्दा आर्थाश्चाभरणे गुणाः ।**
**तत्र श्लेषादितः शिष्टा लक्षणेभ्यश्च ये पुनः ॥ १९८ ॥**

---

शैलदुहितुर्वक्रो नखाङ्कस्तने देयाद्वोऽभ्युदयं द्वयं तदुपमामालम्बमानं मिथः। संवादः प्रणवेन यस्य दलता कायैकतायां तयोरूर्ध्वद्वारविचिन्तनेन च हृदि ध्यातुः स्वरूपेण च' इति ॥ १९५ ॥ उक्तिं लक्षयति—**उक्तिरिति** । तामुदाहरति—**दृष्ट इति** । इदं गोप्यन्तरसंभोगं संपाद्य राधामन्दिरमागतं श्रीकृष्णं प्रेक्ष्य सख्यन्तरं प्रति तत्परिहाससूचकं तत्सहचरीवचः । पक्षे वैशाखो माधव इति राधाविशाखेति चामरान्माधवाभिधवैशाखमासस्य राधाभिधविशाखानक्षत्रयोगे जायमान एव ज्योतिःशास्त्रे लोके च पूर्णमासीदर्शनात्तद्व्याप्तिघटितानुमित्यात्मकयुक्त्युपन्यासेन यद्यप्ययं गोपीसहस्रसंभोगारम्भदम्भोऽपि मत्सखीं राधिकामनाखाद्य स्वप्नेऽपि तृप्तिभाग्भूयात्किमतस्तच्चरणार्चनार्थमेव भूयः श्रीकृष्णोऽभ्युपैतीति तद्विनोदलक्षणः स्वस्विष्टार्थः पूर्वोक्तराधासख्या सम्यक् साधित इति लक्षणसंगतिः । यथावा तत्रैव—'त्वमेवं सौन्दर्या स च रुचिरतायाः परिचितः कलानां सीमानं परमिह युवामेव भजथः । अपि द्वन्द्वं दिष्ट्या तदिति सुभगे संवदति वामतः शेषं चेत्स्याजितमिह तदानीं गुणितया' इति ॥ १९६ ॥ समतां लक्षयति—**क्रमवदिति** । तदुक्तं कण्ठाभरणे—'अवैषम्यं क्रमवतां समत्वमिति कीर्तितम्' इति । तामुदाहरति—**हेमन्त इति** । इदमपि स्वकीयां मुग्धां प्रति परिहासवचः । अहो इत्याश्चर्ये, हे प्रिये, ते कुचौ हेमन्ते तथा वसन्ते च क्रमात्। बदरेति ऋतुद्वय एव बदरादिपाकदर्शनात् मासद्वयमध्य एव त्वं प्रकटयौवनासीत्याशयः । यथावा तत्रैव—'अग्रे स्त्रीनखपाटलं कुरबकं श्यामं द्वयोर्भागयोर्बालाशोकमुपोढरागसुभगं भेदोन्मुखं तिष्ठति । ईषद्बद्धरजःकणाग्रकपिशा चूते नवा मञ्जरी मुग्धत्वस्य च यौवनस्य च सखे मध्ये मधुश्रीः स्थिता' इति । तदेवं प्रौढानुग्राहकमर्थद्वारा प्राधान्येन प्रसादध्वनकं लक्षणषट्कमित्यष्टादशलक्षणीति संक्षेपः ॥ १९७ ॥ ननु भवत्वेवं लक्षणादिव्यवस्था तथापि सरस्वतीकण्ठाभरणे तावत् 'श्लेषः प्रसादः समता माधुर्यं सुकुमारता । अर्थव्यक्तिस्तथा कान्तिरुदारत्वमुदात्तता ॥ ओजस्तथान्यदौर्जित्यं प्रेयानथ सुशब्दता । तद्वत्समाधिः सौक्ष्म्यं च गाम्भीर्यमथ विस्तरः । संक्षेपः संमितत्वं च भाविकत्वं गतिस्तथा । रीतिरुक्तिस्तथा प्रौढिः' इति चतुर्विंशतिसंख्याकाः शाब्दा आर्थाश्च गुणाः प्रपञ्चितास्तेषां क्वान्तर्भाव इत्याशङ्क्य तद्व्यवस्थां कथयति—**य इत्याद्येकादशभिः** । तत्रेति शाब्देषु तेष्वित्यर्थः ।

तेषां पूर्ववदेवेष्टोऽस्त्यन्तर्भावो नयान्मम।
तत्र शाब्देषु तेषूदात्तत्वं परिकरे तथा॥ १९९ ॥
और्जित्यमोजसि प्रेयोलक्षणेऽथ सुशब्दता।
च्युतसंस्कृतिदोषस्याभावेऽन्तर्भवति ध्रुवम् ॥ २०० ॥
सौक्ष्म्यं तु शब्दालंकारे संक्षेपोऽक्षरसंहतौ।
संमितत्वं त्वनधिकपदे तद्वत्तु भाविकम् ॥ २०१ ॥
अननौचित्य एवैवं क्रमाभङ्गे गतिस्तथा।
उक्तिर्वक्रोक्त्यलंकारे प्रोढिः प्रौढोक्त्यलंकृतौ ॥ २०२ ॥
आर्थेषूदात्ततोदात्तालंकारे गर्वगध्वनौ।
और्जित्यं निन्द्यशब्दात्मदोषाभावे सुशब्दता ॥ २०३ ॥

---

श्लेषादितः पूर्वोक्तान्तर्भावाज्जरत्तरसंमतात् 'श्लेषः प्रसादः समता माधुर्यं सुकुमारता। अर्थव्यक्तिरुदारत्वमोजःकान्तिसमाधयः' इत्युक्तगुणदशकादित्यर्थः। शिष्टा उर्वरिताः लक्षणेभ्यः शाब्देषु तेष्विति वक्ष्यमाणेभ्योऽत्र लक्षणत्वेन संमतेभ्य इति यावत् ॥ १९८ ॥ **नयादिति**। लक्षणैक्यादियुक्तिविशेषादित्यर्थः। **उदात्तत्वमिति**। 'श्लाघ्यैर्विशेषणैर्योगो यस्तु सा स्यादुदात्तता' इति तल्लक्षणं 'अलंकारः परिकरः साभिप्राये विशेषणे' इति तल्लक्षणे श्लाघ्यत्वस्य प्रकृते साभिप्रायतामात्रौचित्यादतिप्रसक्तमिति परिकरे उदात्तत्वं ध्रुवं अन्तर्भवतीत्यपकृष्यानुकृष्य तत्र तत्र सर्वत्रान्वयः ॥ १९९ ॥ **और्जित्यमिति**। 'और्जित्यं गाढबन्धता' इति तल्लक्षणस्य ओजसि तद्यञ्जकगौड्यादौ स्पष्टत्वात्। **प्रेय इति**। 'प्रेयः 'प्रियतराख्यानं चाटूक्तौ यद्विधीयते' इति तल्लक्षणस्य 'प्रायः सहृदयस्वान्तकर्षकं प्रेय उच्यते' इत्यार्थिकस्य तस्य लक्षणत्वेन मदुक्तस्य लक्षणादनतिरेकात्। सुशब्दतेति 'व्युत्पत्तिः सुप्तिङां या तु प्रोच्यते सा सुशब्दता' इति तस्य च्युतसंस्कृत्यभावमात्रत्वाच्च ॥ २०० ॥ **सौक्ष्म्यं त्विति**। 'अन्तःसंजल्परूपत्वं शब्दानां सौक्ष्म्यमुच्यते' इति तस्य नवमरत्ने वक्ष्यमाणशब्दालंकारविशेषत्वात्। **संक्षेप इति**। 'समासेनाभिधानं यत्स संक्षेप उदाहृतः' इति तस्य 'शब्दाल्पत्वेऽपि भूयर्थरचनाक्षरसंहतिः' इति तन्मात्रत्वात्। **संमितत्वमिति**। 'यावदर्थपदत्वं च संमितत्वमुदाहृतम्' इति तस्याधिकपदाभावत्वाद्भाविकमिति ॥ २०१ ॥ 'भावतो वाक्यवृत्तिर्या भाविकं तदुदाहृतम्' इति तस्यानौचित्याभावत्वात्। **क्रमेति**। 'गतिर्नाम क्रमो यत्स्यादिहारोहावरोहयोः' इति तस्य क्रमभङ्गाभावत्वात्। **उक्तिरिति**। 'विशिष्टा भणितिर्या स्यादुक्तिं तां कवयो विदुः' इति तस्य तत्वात्। **प्रौढिरिति**। उक्तेः प्रौढः परीपाकः प्रोच्यते प्रौढिसंज्ञया' इति तस्यापि तत्वात् ॥ २०२ ॥ **आर्थेष्विति**। 'आशयस्य य उत्कर्षस्त-

क्लिष्टत्वे दोषराहित्ये प्रसादोऽन्तर्भवत्यसौ ।
अर्थव्यक्तिः स्वभावोक्तावोजःकान्ती रसध्वनौ ॥ २०४ ॥
गाम्भीर्यमप्रतीतापवाद एवाथ विस्तरः ।
अत्युक्त्यलंकृतौ भाविकं तु गूढोत्तरे तथा ॥ २०५ ॥
गती रसध्वनौ रीतिः स्वभावोक्तावलंकृतौ ।
प्रौढिस्तु काव्यलिङ्गे स्यात्संक्षेपोऽक्षरसंहतिः ॥ २०६ ॥
शाब्देषु तेषु गाम्भीर्ये विस्तरो रीतिरेव च ।
आर्थेष्वपि तथा श्लेषः संमता सुकुमारता ॥ २०७ ॥
माधुर्यौदारते प्रेयः समाधिः सौक्ष्म्यमेव च ।
संमितत्वं तथोक्तिश्च लक्षणानि मतानि मे ॥ २०८ ॥

---

दुदात्तत्वमिष्यते' इति । तस्य 'उदात्तमृद्धिसहितं श्लाघ्यं चान्योपसर्जनम्' इति तन्मात्रत्वात्। **गर्वेति**। 'रूढाहंकारमौर्जित्यम्' इति तस्य तत्वात्। **निन्द्येति**। 'अदारुणार्थपर्यायो दारुणेषु सुशब्दता' इति तस्यापि तत्वाच्च ॥ २०३ ॥ **क्लिष्टत्वेति**। 'यत्तु प्राकट्यमर्थस्य प्रसादः सोऽभिधीयते' इति तस्य क्लिष्टत्वदोषाभावमात्ररूपत्वात् । असौ प्रसादः क्लिष्टत्वदोषराहित्येऽन्तर्भवतीति योजना । एवमग्रेऽपि । **अर्थव्यक्तिरिति** । 'अर्थव्यक्तिः स्वरूपस्य साक्षात्कथनमुच्यते' इति तस्य 'स्वभावोक्तिः स्वभावस्य जात्यादिस्थस्य वर्णनम्' इति तत्वानतिरेकात् । **ओजःकान्ती इति** । 'ओजः स्वाध्यवसायस्य विशेषोऽर्थेषु यो भवेत्' इति । 'कान्तिर्दीप्तरसत्वं स्यात्' इतिच तस्य तस्य तत्वानपायात् ॥ २०४ ॥ **गाम्भीर्यमिति** । 'शास्त्रार्थसव्यपेक्षत्वं गाम्भीर्यमभिधीयते' इति तस्य अप्रतीतापवाद एवान्तर्भावात् । **विस्तर इति** । 'विस्तरोऽर्थविकाशः स्यात्' इति तस्य 'अत्युक्तिरद्भुततातथ्यशौर्यौदार्यादिवर्णनम्' इति तत्त्वात् । **भाविकं त्विति** । 'साभिप्रायोक्तिविन्यासो भाविकत्वं निगद्यते' इति तस्य 'किंचिदाकूतसहितं स्याद्गूढोत्तरमुत्तरम्' इति तत्वात् ॥ २०५ ॥ **गतिरिति** । 'गतिः सा स्यादवगमो योऽर्थादर्थान्तरस्य तु' इति तस्य तथात्वात् । **रीतिरिति** । 'रीतिः सा यस्त्विहार्थानामुत्पत्त्यादिक्रियाक्रमः' इति तस्यापि तत्वात् । **प्रौढिस्त्विति** । 'विवक्षितार्थनिर्वाहः काव्ये प्रौढिरिति स्मृता' इति । तस्य 'समर्थनीयस्यार्थस्य काव्यलिङ्गं समर्थनम्' इति तन्मात्रत्वात् । **संक्षेप इति** । 'संक्षेपस्तस्य संवृतिः' इति तस्यापि तत्वाच्च ॥ २०६ ॥ **शाब्देष्विति** । तेषु कण्ठाभरणगुणेषु—**आर्थेष्वपीति** । एवं चार्थास्तदीयाः श्लेषादयो न प्राच्यश्लेषादिना गतार्था इति रहस्यम् ॥ २०७ ॥ **लक्षणानीति** । निरुक्तकाव्यगुणत्वेन प्राक्प्रतिज्ञातलक्षणानीत्यर्थः । एवंच चन्द्रालोकसारीभूतं अक्षरसंहतिः शोभा चेति द्वयं तथा प्रतापरुद्रीयादिसारीभूतं

गोक्षीराब्धेः शिवगुरुविबुधसहायोऽच्युतः समुद्दध्रे ।
हरचापसंज्ञकमिदं गुणललितं सप्तमं रत्नं ॥ २०९ ॥
धन्वन्तर्यैरावतलक्ष्मीकम्ब्वश्वविषहरेष्वासैः ।
रत्नैः सप्तभिरासीत्पूर्णःसाहित्यसारपूर्वार्धः ॥ २१० ॥

इति श्रीसाहित्यसारे हरचापाख्यं सप्तमं गुणरत्नं संपूर्णम् ।

---

द्राक्षापाकादिपाकत्रयं कण्ठाभरणसारीभूतं शाब्दगुणान्तर्गतं गाम्भीर्यादित्रयमार्थगुणान्तर्गतं श्लेषादिदशकं चेति मिलित्वाऽष्टादशलक्षणीयमिति संक्षेपः ॥ २०८ ॥ प्रकरणमुपसंहरति—**हरेति** । पक्षे गुणो 'मौर्वी ज्या शिञ्जिनी गुणः' इत्यमरात्प्रत्यञ्चा ॥ २०९ ॥ अत्रैव पूर्वार्धं परिच्छिनत्ति—**धन्वन्तरीति** ॥ २१० ॥

इतिसरसामोदे गुणरत्नविवरणं संपूर्णं ॥ ७ ॥

## समाप्तं पूर्वार्धम् ।

श्रीः ।

# साहित्यसारम् ।

## उत्तरार्धम् ।

### कौस्तुभरत्नम् ८

पूर्वार्धान्ते गुणान्प्रायः प्रकटीकृत्य लीलया ।
अर्थचित्रानलंकारान्दर्शयामि यथा सुदृक् ॥ १ ॥

एवं पूर्वार्धान्तिमगुणरत्नं परिसमाप्योत्तरार्धं साहित्यसारस्यारभमाणः कविः प्रकृते क्रमप्राप्तमर्थालंकारप्राधान्यशाल्यष्टमं रत्नं चिकीर्षुस्तेनास्य संगतिं श्लेषेण मङ्गलमपि व्यनक्ति—**पूर्वार्धान्त इति**। अहमित्यार्थिकम्। पूर्वेति पूर्वार्धान्तिमरत्ने। गुणान्माधुर्यादीन्धर्मानित्यर्थः। प्रायःपदं तत्प्राधान्याभिप्रायकम्। लक्षणवृत्तिरीतीनामपि तत्र प्रकटीकरणात्'धर्मा रसा लक्षणानि'इति प्रथमरत्ने तत्रापि गुणत्वस्योक्तत्वेन तत्र तत्संग्रहयोग्यत्वेऽपि रसादेरपि तथात्वेनैव संमतस्य तत्रासंग्रहाच्च लीलया अनायासेनैव प्रकटीकृत्य लक्षणोदाहरणाभ्यां समुपपाद्य अर्थेति द्विधा'अन्त्यत्वमपि भूयेव मध्यमं चाधमं क्रमात्। गुणप्रधानभावेन मिथः शब्दार्थयोः स्थितेः' इति प्रागुक्तार्थालंकारप्रधानार्थचित्राख्यमध्यमकाव्यत्वप्रयोजकत्वेन लक्षणया तदाख्यानिति यावत्। ईदृशानलंकारान्वक्ष्यमाणसामान्यादिलक्षणानुपमाद्यलंकारानिति यावत्। शब्दालंकाराणामनुप्रासादीनां तु निरुक्तविशेषणेनैव व्यावृत्तेः। सुदृक् यावत् स्त्री गुणवती स्वयुवतिर्यथा दर्शयति तथा दर्शयामीत्यन्वयः। सा हि रात्रेः पूर्वार्धान्ते गुणशब्दितपातिव्रत्यप्रयुक्तसुरतोपचारीभूतयथानुकूलतत्तद्देशकालोचितक्रियाकलापचातुरीविशेषानेव बहुधा लीलाशब्दितापाङ्गवीक्षणसस्मितमृदुमधुरतरभाषणसरण्या प्रकटीकृत्य अर्थशब्दितवित्तैकसाध्यनानाविधहीरहाराद्याभरणविशेषान् सुरतसंपादनचिकीर्षया कञ्चुक्यादिसमुद्वासनद्वारा प्रकाशयतीति प्रसिद्धमेव। मङ्गलपक्षे तु यथासुदृगित्येकं पदम्। यथावत् असून्प्राणोपलक्षिताखिलदृश्यपदार्थान् पश्यति मिथ्यात्वेन निश्चिनोतीति तथा। सकलसाधनपूर्वकं कृतापातिकश्रवणो मननभूमिकाप्रवणो मुमुक्षुधुरीण इत्यर्थः। यद्वा यथाशास्त्रं सुष्ठु अप्रतिबद्धा दृक् अपरोक्षप्रमा यस्य स तथा ब्रह्मविदितियावत्। अत्र पक्षद्वयेऽप्यहमिति विशेष्याध्याहारात्स्वस्यामानित्वादिसाधनसंपत्स्वाभाव्यं सूच्यते—**पूर्वेति**। 'मायिनं तु महेश्वरम्' इत्यादिश्रुतेर्मायिन एव महेश्वरस्य जगत्कारणत्वेन पूर्वत्वात् 'ऋत९

**येऽलंकारा गुणेषु प्राग्गुम्फिताश्चित्रता च यैः।**
**उपकुर्वन्ति ये नैजं लक्ष्यव्यङ्ग्यक्रमं ध्वनिम् ॥ २ ॥**

---

सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् । ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमोनमः' इति श्रुतेस्तल्लीलाविग्रहो योऽयमुमार्धविग्रहः शिवस्तस्य यदर्धं तस्यान्तः परिसमाप्तिर्यत्र तस्मिन्। मायाप्रधानगौरीभाग एवेत्यर्थः । गुणान्सत्वादीन् प्रायः लीलयैव अनायासेनैव क्वचित्तु चरमप्रमा किं मायिकी नवेत्यादिसंशये शास्त्रगुर्वादिप्रतीत्यर्थमायासेनापीति प्रायःपदाशयः । प्रकटीकृत्योपपाद्य । एवंच ब्रह्मणो निर्गुणत्वमेवोपपाद्येत्यार्थिकम् । **अर्थेति** । मयूरव्यंसकादिसमासाश्रयणेन चित्रार्थांश्चित्रमिव मिथ्यामनोरममिति श्रुतेरत्यद्भुताकाशादिपदार्थानित्यर्थः । अलंकारान्विचारे सति स्वमिथ्यात्वेनालं स्वविषयकेच्छावारणं मिथ्यात्वेन निर्णीतमृगजलादिवत्कारयन्तीति तादृशानित्यर्थः । दर्शयामि सतीर्थ्यान्प्रति समुपपादयामि । पक्षे मुमुक्षून् समुपदिशामीति संबन्धः । एतेन परोक्षादिब्रह्मानुसंधानमङ्गलं सिद्धम् ॥ १ ॥ एवमेतद्ग्रन्थप्रतिपाद्यमर्थं प्रतिज्ञाय के तेऽर्थचित्रालंकारा इत्याशङ्कायां तत्सामान्यकथनं 'धर्मा रसा लक्षणानि रीत्यलंकृतिवृत्तयः' इति, तथा 'रसालंकारमुख्यत्वभेदेनेदं भवेद्द्विधा। सरसाख्यं च चित्राख्यं स्वरम्भोरूशरीरवत्' इति च प्रथमरत्ने कृतमपि विस्मरणशीलं शिष्यं प्रति संस्मार्य चतुर्थरत्ने प्राक् 'उत्तमोत्तमकाव्याख्यो यो ध्वनिः प्रागुदाहृतः। असंख्यातोऽप्यसौ शक्तिलक्षणामूलतो द्विधा। यत्रान्यपरमेवेष्टं वाच्यं स प्रथमो मतः। अविवक्षितवाच्याख्यो द्वितीयोऽपि विपश्चिताम्। रसो वस्त्वप्यलंकार इति भेदास्त्रिधादिमः। तत्र लक्ष्यक्रमव्यङ्ग्यो रससंज्ञो ध्वनिर्भवेत्। वस्त्वलंकारसंज्ञौ तु लक्ष्यव्यङ्ग्यक्रमौ मतौ। शब्दार्थशक्तिमूलत्वभेदात्तौ द्विविधौ पुनः। द्विधान्त्योऽर्थान्तरे वाच्यसंक्रमाच्च तिरस्कृतेः। इत्येते सप्त सामान्याद्ध्वनिभेदाः स्वरा इव' इति ध्वन्याख्योत्तमोत्तमकाव्यस्य भेदसप्तकान्तर्गतं लक्ष्यव्यङ्ग्यक्रमत्वे सति शब्दार्थशक्तिमूलत्वभेदेन द्विविधं विवक्षितान्यपरवाच्यसंज्ञकं अलंकारध्वनिं प्रत्युपकारका ह्युपमादयस्ते प्रसिद्धा एवेति समाधत्ते—**येऽलंकारा इत्यादि** द्वाभ्याम् । पक्षे प्रेक्षैकशालिनी स्वकामिनी यथार्थचित्रानलंकारान्दर्शयतीत्युक्तं पूर्वपद्ये तत्र के तेऽलंकारा इत्यपेक्षायां तान्संक्षिपति—**य इत्यादिना** । गुणेषु क्षौमसूक्ष्मसूत्रेषु गुम्फिताः संग्रथिताः प्रसिद्धा एव हीरहारादयः पद्मरागमरकतगारुत्मतादिविशिष्टस्थूलमौक्तिकनिचयत्वेन वैचित्र्यप्रयोजका इत्यर्थः । तथा उपकुर्वन्तीति ये मणिमञ्जीरादयः नैजं स्वीयं ध्वनिं शिञ्जिताख्यं मृदुमधुरस्वनम् । **लक्ष्येति** । क्रियाविशेषणमिदम् । लक्ष्यस्तर्कणयोग्यः व्यङ्ग्यस्य सुरतानुकूल्यस्य क्रमो यथा स्यात्तथेत्यर्थः । सुरतसमये मञ्जीरनिष्काशनं स्वमन्दिरोपकण्ठवर्तिजनानां तच्छब्दश्रवणशङ्कया लज्जावतीनां प्रसिद्धमेव । तथा गीतगोविन्देऽप्युक्तम्—'मुखरमधीरं त्यज मञ्जीरं रिपुमिव केलिसुलोलम्' इति । एवंच तदानीं चरणाभ्यां

**यद्यञ्जनं द्विधेष्टान्यपरशक्यत्व एष्यति ।**
**शब्दार्थशक्तिमूलत्वभेदादित्यवधार्यताम् ॥ ३ ॥**
**रसादिभिन्नत्वे शब्दविशेषश्रवणोत्तरम् ।**
**चमत्कारकरत्वं यदलंकारत्वमत्र तत् ॥ ४ ॥**

---

तन्निष्काशनजन्यो यस्तदीयध्वनिविशेषः स तु सुरतानुकूल्यसूचनक्रमपूर्वक इति तु प्रसिद्धमेवेति भावः । उप मञ्चकसमीपं कुर्वन्तीत्यन्वयः ॥ २ ॥ **यद्यञ्जनमिति । इष्टेति ।** विवक्षितान्यपरवाच्यत्वे इत्यर्थः । एष्यति स्वसंमतत्वेन काव्य आगमिष्यति सतीति यावत् । एवंच विवक्षितान्यपरवाच्यत्वं यदि काव्य आयास्यति चेत्तर्ह्येव शब्दार्थशक्तिमूलत्वभेदाद्विधा यच्छब्दवाच्यप्रकृतार्थालंकारसूचनं स्यादित्यवधार्यतां निर्णीयतामिति संबन्धः । पक्षे यद्यञ्जनं नूपुरनिष्काशनक्रियया निरुक्तसुरतानुकूल्यसूचनमित्यर्थः । **इष्टान्येति ।** इष्टाभ्यां अन्यः दंपतीभ्यामितरः परः शत्रुः शक्यः योग्यो यस्मिंस्तत्वे यस्मिन्काले सखीजनोऽपि रिपुसाम्यतार्हो भवति तादृशकालत्व इति यावत् । एष्यति आगमिष्यति सतीत्यर्थः । **शब्देति ।** निरुक्तरीत्या पादपद्माभ्यां मणिमञ्जीरनिष्काशनजन्यमञ्जुलसिञ्जानसामर्थ्येन तादृक्चेष्टालक्षणपदार्थसामर्थ्येन लिङ्गेन च तर्कितत्वभिदा द्विधा भवति तानर्थचित्राननलंकारानहं दर्शयामीत्यवधार्यतामिति योजना । इह पद्यत्रयेऽपि प्रौढा स्वीयैव नायिका । संभोगशृङ्गार एव रसः । श्लेषादयोऽलंकाराः ॥ ३ ॥ नन्वेतावतापि प्रकृतग्रन्थे प्रागुपन्यस्तत्वेनालंकारवस्तुकथनमात्रं संपन्नं नैतावता तल्लक्षणजिज्ञासानिरास इत्यतस्तल्लक्षणं संक्षिपति प्राग्वदेव श्लेषेण— **रसादीति ।** आदिना भावादिः । ते च पूर्वं चतुर्थरत्ने रसभावरसाभासभावाभासभावोदयभावशान्तिभावसंधिभावशबलताभेदादष्टविधा लक्षक्रमव्यङ्ग्याख्यरसध्वनित्वेन प्रपञ्चिता एव । एवंच न तत्रातिव्याप्तिः । **शब्देति ।** विशेषपदेनात्र वीणानुरणनश्रवणोत्तरमपि चमत्कारस्यानुभूतत्वात्तद्व्युदासः । स च विशेषोऽत्र श्रुत्यादिगतोऽधिकार्यवच्छेदेनानन्दजनकोऽर्थाद्यनुपूर्व्यात्मैव 'तस्य मध्ये वह्निशिखा आणीयोर्ध्वा व्यवस्थिता । नीलतोयदमध्यस्था विद्युल्लेखेव भास्वरा । नीवारशूकवत्तन्वी' इत्यादितैत्तिरीयोपनिषदि 'तद्यथा प्रियया स्त्रिया संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरमेवमेवायं प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरम्' इति बृहदारण्यकोपनिषदि च । 'यथा नदीनां बहवोऽम्बुवेगाः समुद्रमेवाभिमुखा द्रवन्ति । तथा तवामी नरलोकवीरा विशन्ति वक्त्राण्यभिविज्वलन्ति' इत्यादिभगवद्गीतास्वपि सुप्रसिद्ध एव । न चोक्तानन्दसिद्धौ तद्धेतुभूतशब्दविशेषान्तर्गतालंकारसिद्धिस्तत्सिद्धौ च तत्सिद्धिरिति परस्पराश्रय इ वाच्यम् । निरुक्तशब्दश्रवणोत्तरमधिकार्यवच्छेदेनानन्दानुभवस्यालंकारसिद्ध्यपेक्षत्वात् । अर्थालंकारादिज्ञानाभावेऽपि निरुक्तानुपूर्व्यात्मकशब्दविशेषश्रावणो-

त्तरं चमत्कारसत्वेनालंकारस्य तत्र सत्वमात्रापेक्षणाच्च । 'जगद्विलक्षणेक्षणे क्षणेक्षणे मदीयकं कदम्बकोरकद्वयं न गोपि गोपनं कुरु । इदं निगद्य राधिकां पयोधराम्बरं हरन् कलिन्दनन्दिनीतटे ननन्द नन्दनन्दनः' इत्यादिप्राचीनाचार्यविरचितपद्ये मन्दाधिकारिणः शब्दालंकारमात्रेणैव मध्यमस्य तेन सहार्थालंकारेणापि तथोत्तमस्य गौणव्यङ्ग्येन ताभ्यां सह शृङ्गाररसेनापि चाभिनवचमत्कारदर्शनेन मूले नियतविशिष्टाधिकार्यग्रहणमिति ध्येयम् । सामान्यतस्तद्ग्रहणं तु श्रवणपदेनैव सूचितमिति न काप्यनुपपत्तिः । वस्तुतस्तु विशेषपदव्यावर्त्यस्य वीणाक्वाणादेः शृङ्गारोद्दीपनविभावत्वेन पश्वाद्यनुकरणशब्दादेर्हासोद्दीपनविभावत्वेन च रसान्तर्भावौचित्येन तथा रसादीत्यादिपदसंगृहीतभावत्वेनैव व्युदासाद्रसादिभिन्नानन्दजनकः शब्दो ह्यलंकारमन्तरा जगति नैवास्तीति यद्यपि विशेषपदं व्यर्थमेवाथापि श्लेषेण वक्ष्यमाणार्थान्तरोपयोगादेव तत्संग्रह इति तत्त्वम् । उत्तरत्वमत्र त्रिचतुःक्षणादिसाधारणाधिकव्यवधानवैधुर्यमेव बोध्यम् । ननु सर्वथा व्यवधानवैधुर्यम् । श्रवणशब्दितशब्दविशेषविषयकज्ञानमात्रस्य पदज्ञानत्वेन करणरूपस्य 'पदज्ञानैककरणात्पदार्थस्मृतिवर्त्मना । शक्तिधीसहकारेण शाब्दबोधः प्रजायते' इति प्राग्द्वितीयरत्नोक्तशाब्दबोधप्रक्रिययैव तत्संपादकत्वेन मध्ये स्मृत्याद्यर्थं त्रिचतुःक्षणव्यवधानस्यावश्यकत्वात् । **चमत्कारेति** । विजातीयानन्दजनकत्वमित्यर्थः । वैजात्यं चानन्दे रसादिप्रतियोगिकान्योन्याभावावच्छिन्नशाब्दानन्दत्वमेवेत्यधस्तादेवोक्तम् । एतादृशत्वं यत्तदेवात्र साहित्यशास्त्रे अलंकारत्वमलंकारसामान्यलक्षणमस्तीति शेषेणान्वयः । तथाच रसादिभिन्नत्वे सति शब्दैककरणकज्ञानकरणकानन्दं प्रत्यदृष्टादिभिन्ननिमित्तकारणत्वमलंकारत्वमिति तत्सामान्यलक्षणं फलितमित्याकूतम् । ननु शब्दैककरणकज्ञानकरणकेत्यत्रापि प्रागुक्तशाब्दबोधप्रक्रियारीत्या त्रिचतुःक्षणादिप्रवेशो लक्षणेऽप्यावश्यक एवेति चेत्सत्यम् । यद्यप्यर्थालंकारे तदावश्यकतैव तथापि शब्दालंकारे तु शब्दश्रवणाव्यवहितोत्तरत्वस्याप्युक्तानन्दे संभवादुभयसाधारण्येनैव प्रकृतलक्षणस्य विवक्षितत्वेन तदनुक्तेरेवौचित्यात् । अत्र हि निरुक्तज्ञानस्य विशिष्टार्थादिविषयत्वेनैवोक्तानन्दजनकत्वात्तद्विशेषणतावच्छेदकत्वेनैव प्रकृतालंकारत्वसिद्धिरिति दिक् । पक्षे पूर्वपद्ये दृष्टान्तीकृतस्वकीयाख्यानायिकयासुरतसंपादनाभिप्रायेण पत्न्यां सकाशान्मणिमञ्जीरनिष्काशने क्रियमाणे तच्चातुर्यातिशयवशादतिसंमुदितस्तत्पत्याख्यनायकस्तन्मञ्जीरौ तन्निष्काशनार्थं व्यापृतकरकाचकङ्कणान्यपि सुरतप्रदानमङ्गलध्वनिजनकत्वेन सकलालंकारवरतया स्तुवंस्तस्या एव स्तुतिं व्यनक्ति—**रसादीति** । अये प्रिये इति संबुद्धिरार्थिक्येव । तथाच प्रकृतवाक्यप्रयोगे स्तुत्यादिप्रयोजनाभावो व्यज्यते । तावता चोक्तस्तुतौ गुणवादलक्षणार्थवादत्वाभावेन यथार्थगुणकथनत्वान्नायिकातिपरितोषलाभः । अत्र रसः संभोगशृङ्गार एव । तत्प्रकरणत्वात् । एवमादिना तद्भावादिरेव शब्देति विशेषग्रहणं कङ्कणध्वनिसंभिन्नमञ्जीरध्वनिग्रहणार्थम् ॥ ४ ॥

**यद्भावे रसाद्यन्यः शाब्दानन्दो न जायते ।**
**तत्त्वमेवात्र विज्ञेयं तत्सुदृग्भिः पदादिषु ॥ ५ ॥**

---

एवमपि निरुक्तलक्षणे शब्दविशेषेत्यत्र विशेषपदवैयर्थ्यात्स्वरसादन्वयघटितस्य तस्योक्तत्वेनेदानीं व्यतिरेकघटितं तल्लक्षणं संक्षिपति—**यद्भाव इति ।** यदभावे सतीत्यर्थः । **रसादीति ।** रसभावतदुभयाभासभावप्रतियोगिकशान्त्युदयसंधिशाबल्याष्टकप्रतियोगिकान्योन्याभावावच्छिन्न इति यावत् । **शाब्देति ।** शब्दैककरण इत्यर्थः । एतादृगानन्दो नैव जायते तत्त्वमेव तादृक्पदार्थत्वमेव । **पदेति ।** पदवाक्यप्रमाणविषय इत्येतत् सुदृग्भिः पदवाक्यप्रमाणपारगैः अत्र साहित्यशास्त्रे तदलंकारत्वं विज्ञेयं निश्चेयमित्यन्वयः । एवंच यदभावे सति रसाद्यष्टकेतरशाब्दानन्दानुदयस्तत्त्वमलंकारत्वमिति तत्सामान्यलक्षणं पर्यवसितं भवतीति भावः । अत्र तावदुपमानुप्रासाद्यभाव एव रसाद्यष्टकभिन्नः शब्दमात्रकरणक आनन्दो नोदेतीति तत्त्वमलंकारत्वमिति लक्षणसमन्वयः । ननु वीणानिक्वाणादीनामुद्दीपनविभावत्वेन तज्जन्यानन्दस्य रसाद्यष्टकान्तःपातित्वेन तत्रातिव्याप्तिनिरासेऽपि सर्वत्र सुप्रसिद्धनमस्कारकुशलप्रश्नादिब्राह्मणसंव्यवहारस्य प्रायःशब्दैकरूपत्वेन तज्जन्यानन्दस्य रसादिभिन्नत्वेऽपि प्रेमैकनिमित्तकत्वेनालंकारनिमित्तकत्वाभावात्तन्मूलकप्रेम्ण्यतिव्याप्तिरिति चेन्न । 'रतिर्देवादिविषया व्यभिचारी तथाञ्चितः । भावः प्रोक्तः' इति काव्यप्रकाशकारिकोक्तेरादिपदगृहीतत्वेन प्रकृतव्यवहारकर्मीभूतब्राह्मणादिविषयकरतेरपि भावत्वेन रसाद्यन्तःपातित्वात्तस्याश्चेह भवतैव प्रेमत्वेन कण्ठत एवोक्तानन्दनिमित्तकारणतया प्रकटितत्वात्तन्निमित्तकनिरुक्तशाब्दानन्दस्यापि रसादिभिन्नत्वाभावाच्च । तस्मादिदं लक्षणं वलक्षमेवेति वीक्षणीयं प्रेक्षावद्भिरेव निराकाङ्क्षैरपक्षपातेन । काव्यप्रकाशकारिकायां तु—'उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित् । हारादिवदलंकारास्तेऽनुप्रासोपमादयः' इत्युक्तम् । विवृतं चेदं जयरामभट्टाचार्येण । तथाच रसोपकारकत्वे सति रसावृत्तित्वम् । तथात्वे सति रसव्यभिचारित्वम् । अनियमेन रसोपकारकत्वं चेत्यलंकारलक्षणं लब्धमिति । इदं लक्षणत्रयमपि क्रमेण कामिन्यां कमले कलशे चातिव्याप्तम्, तथाहि 'सातु शृङ्गारस्यालम्बनविभावत्वेन तदुपकारिकापि 'ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः । उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः' इत्यप्युक्तकारिकोक्तेर्गुणवत्तद्धर्मत्वाभावात्तदवृत्तिरिति प्रसिद्धमेव । एवं कमलमप्युद्दीपनविभावत्वेन शृङ्गाररसोपकारकमपि वह्निर्यथा धूमाभाववत्ययःपिण्डे विद्यमान इति धूमोपकारकोऽपि धूमव्यभिचारीत्युच्यते तद्वत्कमलमपि रसाभाववति जडे जलादौ वर्तत इति रसव्यभिचार्येव । तद्वत्कलशोऽपि कुचस्मारकत्वेन कदाचिद्रसोपकारक इत्यनियमेनैव तत्रापि तदुपकारकत्वं निर्विवादमेव । तथाचेदमखिलमपि स्वरूपलक्षणपरमेव नत्वसाधारणधर्मलक्षणलक्षणपरमिति सर्वमवदातम् । अतएव सारबोधिनीकारस्त्विमां कारिकामलंकारस्वरूपपरत्वेनैवावतार्य विवृतवान् । तद्यथा 'अलं-

कारेषूक्तगुणधर्मराहित्यं दर्शयितुं अलंकारस्वरूपमाह— **उपकुर्वन्तीति**। तं रसं जातुचित् कदाचित् तेन अलंकारा रसं विना भवतिष्ठन्ते अवश्यं च नोपकुर्वन्ति नवा रसे साक्षादिति किंत्वङ्गद्वारणेति गुणेभ्यो विलक्षणा एवेति ध्येयमिति। यत्तु प्रकृतकारिकामेव व्याकुर्वता काव्यप्रदीपकृताप्येवमेव लक्षणत्रयमलंकाराणामुक्तम्। तथाच रसोपकारकत्वे सति तदवृत्तित्वं, तथात्वेसति रसव्यभिचारित्वं, अनियमेन रसोपकारकत्वं चेति। सामान्यलक्षणत्रयमलंकाराणामित्युक्तं, रसोपकारकत्वं शब्दार्थान्यतरोपकारद्वारेण विवक्षितं, अङ्गद्वारेणेत्युक्तेः। तेन चन्द्रोदयादावुद्दीपकेनातिप्रसङ्ग इतीति वैद्यनाथेन प्रभायां व्याख्यातम्। आद्ययोः सत्यन्तं पदादिदोषातिव्याप्तिवारणायेति बोध्यमित्युद्योतकृता नागोजिभट्टेनापि व्याख्यातं तदपि तादृशमेव। चन्द्रोदयादेरुद्दीपनविभावस्यापि स्मृतिजननद्वारा प्रेयसीवदनरूपार्थोपकारकत्वेनैव रसोपकारकत्वात्। आलम्बनविभावीभूतायामपि प्रेयस्यामालिङ्गनाद्यर्थोपकारकत्वद्वारैव रसोपकारकत्वात्। सत्यन्तद्वयेनाद्यलक्षणद्वयस्य पदादिदोषातिव्याप्तिवारणेऽपि प्रागुक्तातिव्याप्तितादवस्थ्याच्च। वस्तुतस्तु रसोपकारकत्वमेवालंकाराणां दुर्भणम्। अर्थाद्युपकारद्वारा तदङ्गीकारे त्वर्थादेरेव तथात्वस्य साक्षात्संभवेन तेषां कुलालपित्रादिवदन्यथासिद्धत्वात्। शब्दचित्रं वाच्यचित्रमव्यङ्ग्यं त्ववरं स्मृतम्' इत्यादिना प्रागेव प्रत्युत पूर्वाचार्यस्वारस्यतस्तेषां तदपकारकत्वोक्तेश्च तस्मात्प्रागुक्तस्वरूपलक्षणपरत्वमेव काव्यप्रकाशकारिकादेरिति पर्यवस्यति। अन्यथा गत्यन्तराभावात्। एतेन 'शब्दार्थयोः प्रसिद्ध्या वा कवेः प्रौढिवशेन वा। हारादिवदलंकारः संनिवेशो मनोहरः' इति चन्द्रालोकस्तथा 'शब्दार्थयोरस्थिरा ये धर्माः शोभाविधायिनः। रसादीनुपकुर्वन्तोऽलंकारास्तेऽङ्गदादिवत्' इति साहित्यदर्पणमपि च व्याख्यातम्। ननु भवत्वेवं प्राचां ग्रन्थे व्यवस्था तथापि नवीनेन कुवलयानन्दव्याख्यात्रा ह्यलंकारचन्द्रिकाकृता तु परिष्कृत्यैवालंकारसामान्यलक्षणं कृतम्। तथाहि। अलंकारत्वं च रसादिभिन्नव्यङ्ग्यभिन्नत्वे सति शब्दार्थान्यतरनिष्ठा या विषयितासंबन्धावच्छिन्ना चमत्कृतिजनकतावच्छेदकता तदवच्छेदकत्वम्। अनुप्रासादिविशिष्टशब्दज्ञानादुपमादिविशिष्टार्थज्ञानाच्च चमत्कारोदयात्तेषु लक्षणसमन्वयः। शब्दार्थयोर्ज्ञाननिष्ठचमत्कृतिजनकतायां विषयितयाऽवच्छेदकत्वेन तद्विशेषणीभूतानुप्रासोपमादेस्तन्निष्ठावच्छेदकतावच्छेदकत्वात्। रसवदाद्यलंकारसंग्रहाय व्यङ्ग्योपमादिवारणाय च भेदद्वयगर्भसत्यन्तोपादानमिति। अत्रोच्यते—इहापि प्रागवदेव ज्ञाते कामिन्यादित्रितयेऽपि प्रत्येकमप्यतिप्रसङ्गः। तथाहि। रसादिभिन्नत्वमत्र व्यङ्ग्ये रसोऽपि यत्र रसान्तरस्याङ्गं भवति तत्प्रभृति रसवदाद्यलंकारचतुष्टयभिन्नत्वमेव तादृशं यद्व्यङ्ग्यं व्यङ्ग्योपमादिलक्षणं तद्भिन्नत्वे सतीति सत्यन्तार्थः समंतः। तेनोक्तकामिन्यादौ व्यङ्ग्यरसकरणीभूतरसाख्यरसवदाद्यलंकारभिन्नत्वं व्यङ्ग्योपमाद्यलंकारभिन्नत्वमपि प्रसिद्धमेव। नहि कामिनी कमलं कलशो वा

**नच नैव रसाद्यन्यः शाब्दानन्द इतीर्यताम् ।**
**नीलं नभो विभात्येतदिन्द्रनीलकटाहवत् ॥ ६ ॥**

कस्यचिद्रसस्य व्यञ्जको रसो भवति भावादिर्वा येनापरस्याङ्गं सन्रसवत्प्रेयआद्यलंकारः स्यात् । तथोदासीनतादशायां व्यङ्ग्योपमाद्यलंकारभिन्नस्तु वर्तत एव । एवं ज्ञातार्थत्वेन तत्र चमत्कृतिजनकतावच्छेदकता या सा ज्ञाननिष्ठविषयितासंबन्धावच्छिन्ना भवति । तत्र विशेषणत्वेनानन्दकरस्य कामिनीत्वादेरवच्छेदकत्वमित्यनलंकारेऽप्युदासीनकामिन्यादावुक्तालंकारलक्षणसंचारः संप्राप्त एव । नहि कामिनी कमलं कलशो वा ज्ञातश्चेत्सामान्यतो नानन्दकरः । तस्माचन्द्रिकालक्षणमपि प्राग्वदेव ज्ञेयमिति दिक् । पक्षे निरुक्तस्वकीया नायिकाप्युक्तनायककृतामेवं मञ्जीरवरकाचकङ्कणालंकारस्तुतिमाकर्ण्य महासतीत्वेन सौभाग्यमूलीभूतकाचकङ्कणान्येव मुख्यालंकारत्वेन वर्णनीयानि नतु मणिमञ्जीरप्रभृत्यलंकारान्तरं किमपीति व्यनक्ति—**यदभाव इति** । अत्राप्ययि मत्प्राणेश्वरचरणा इति संबुद्ध्यध्याहारः प्राग्वदेव प्रकृतस्तुतावपि यथार्थगुणकथनपरः । एवंच यदभावे सति रतिकालिकबन्धविशेषलीलावशाद्येषां करकाचकङ्कणानामभावे भङ्गे सतीत्यर्थः । **रसादीति** । रसः शृङ्गारः । आदिना भावादिः । तस्मादन्य इतरः । **शाब्देति** । तथाच तत्प्रयुक्तमणिताख्यशब्दजन्य एवानन्दो दंपतीभ्यां रोचते नतु प्रातस्तत्संपादनपर्यन्तं कोऽप्यन्यः संगीतादिशब्दोऽपि रोचत इत्याशयः । अत्र लोके । **पदेति** । आदिना मार्गः गोप्याः कुचादिस्वावयवाश्च । विषयसप्तमीयम् । सुदृग्भिः स्वपादादिनतदृष्टिभिः सतीभिरित्यर्थः । तत्वमेव तदलंकारत्वं विज्ञेयमिति योजना । एतेन पातिव्रत्यातिशयो द्योत्यते । एवं चोदाहरणमप्येतदेव॥५॥ एवमलंकारसामान्यलक्षणं संक्षिप्य तादृशलक्ष्यालंकारकार्यीभूतानन्दसत्व एव तन्मूलीभूततत्सिद्धिः स्यादित्याशयेन कुड्यचित्रन्यायेन प्रथमं रसादिभिन्नशाब्दानन्दासंभवमाशङ्क्य सोदाहरणं समाधत्ते—**नचेति** । कुत एवमिति चेत्तथानुभवादेवेति वदंस्तमेवोदाहरणव्याजेन व्यनक्ति—**नीलमि**त्यर्धेन । अत्र नभ उपमेयम् । इन्द्रनीलकटाह उपमानम् । नीलत्वं साधारणधर्मः । वदित्युपमावाचकः प्रत्ययविशेष इत्यर्थालंकारमूलकस्तथा नीलं नभो विभातीति नकारभकारानुप्रासाख्यशब्दालंकारमूलकश्च यः प्रकृतपद्यश्रवणोत्तरकालावच्छेदेन तत्तदधिकारिण्यानन्दः संपद्यते न तत्र मूलीभूतः कोऽपि रसादिः स्वारसिकः प्रतीयते । तथाऽयमानन्दस्तु निरुक्तशब्दैकजन्य इति नाप्यशाब्दः । तस्मादेतादृशानुभवशतवशादुक्ताशङ्कोपन्यसनं साहसमात्रमेवेति भावः । पक्षे ननु रसाद्यन्यः शब्दमात्रजन्यः स्याच्चेदानन्दस्तदानीं तद्धेतुभूतत्वेन काचकङ्कणानां सौभाग्यमूलीभूतानां मुख्यालंकारत्वेन स्तुतिरपि स्यात्तद्ध्वनिस्तु रसाद्युद्दीपनविभाव इति तज्जन्यानन्दोऽपि तदन्तःपात्येवेति पत्युराशयमाशङ्क्य कान्ता समाधत्ते—**नचेति** । तत्र हेतुं द्योतयति—**नीलमि**त्यादिना । मत्करकङ्कणरणनश्रवणेन ममाप्यानन्ददर्शनात्तत्र च

**तत्रापि चार्थचित्रालंकारत्वं तु रसादितः ।**
**भेदे गोजन्यमाजन्यानन्दहेतुत्वमिष्यताम्॥७॥**
**गौणव्यङ्ग्येऽपराङ्गत्वाद्रसालंकारतां गताः ।**
**तेषां रसवदादीनां रसभित्त्वमुतान्यता ॥ ८ ॥**
**अगूढमपरस्याङ्गमिति कारिकया यतः ।**
**गौणव्यङ्ग्यनिवेशात्ते प्रतीयन्ते रसांशतः ॥ ९ ॥**

रसाद्यभावादिदं रसाद्यन्यः शाब्दानन्दो नैवेति वचनं नीलमित्यादिवद्वाक्यमात्रमेवेति भावः ॥ ६ ॥ ननु भवत्वेवमलंकारसामान्यलक्षणमथापि प्रकृततद्विशेषलक्षणं कथमित्यपेक्षायां तदपि संक्षिपति—**तत्रापि चेति । रसेति ।** अत्राप्यादिपदेन प्राग्वदेव । एवंच रसाद्यष्टकाद्भेदे सतीत्यर्थः । **गोजन्येति ।** 'गौः स्वर्गपशुवाग्वज्रदिङ्नेत्रघृणिभूजले' इत्यमराद्गोशब्देन वाक्यविशेषस्तज्जन्या या मा तदर्थविषयिणी प्रमा तज्जन्यो य आनन्दस्तद्धेतुत्वमित्यर्थः । मापदं शब्दालंकारपर्युदासार्थम् । सत्यन्तं रसादिव्युदासार्थं च । एवंचैतादृशानन्दकन्दीभूता उपमाद्यलंकारा एवेति भावः । एवंच रसादिभिन्नत्वे सति वाक्यविशेषकरणकप्रमाप्रयुक्तप्रमोदप्रयोजकत्वमर्थालंकारसामान्यलक्षणमिति संक्षेपः । पक्षे नन्वेवं यदि तावकः सिद्धान्तश्चेत्तर्हि किमित्यस्माभिरिमे भूरिवित्तव्ययेन हीरकादिरत्नकाञ्चनाद्यलंकाराः संपादिता इति कान्तस्य शङ्काशान्तये पुनः सैव स्वसुन्दरी समाधत्ते । तत्रापि चेति तत्स्वरूपकथनव्याजेन । तत्रापि निरुक्तरीत्या काचकङ्कणानामेव सौभाग्यमूलत्वेन मुख्यालंकारत्वे सत्यपीत्यर्थः । **अर्थेत्यादि ।** तुशब्दः पूर्ववैलक्षण्यार्थः । रसादितः भेदे सति यावन्मनसि शृङ्गाररसभावाद्याविर्भावो नाभूत्तादृगवस्थात्वे सतीत्यर्थः । **गोजन्येति ।** गावः किरणास्तज्जन्या या मा शोभा तया यः जन्याः 'समाः स्नुषाजनीवध्वः' इत्यमरात् स्नुषाया आनन्दस्तद्धेतुत्वं तद्दशायामेवानन्दकारणत्वमितीष्यतामिति संबन्धः ॥ ७ ॥ एवमर्थचित्रात्मकमध्यमकाव्यभेदप्रयोजकार्थालंकारसामान्यलक्षणेऽपि रसादिभेदनिवेशात्तद्यावर्त्यस्मृत्योपस्थितानां रसवदाद्यलंकाराणां क्वान्तर्भावः कार्यः किं रसेषु यद्वालंकारेष्विति शङ्कते—**गौणेति ।** गौणव्यङ्ग्याख्योत्तमकाव्यविचारात्मके पञ्चमरत्न इत्यर्थः । **अपरेति ।** अगूढमपरस्याङ्गमित्यादिगौणव्यङ्ग्यस्य भेदाष्टकप्रतिपादककाव्यप्रकाशकारिकोक्तापराङ्गाख्यतदीयद्वितीयभेदत्वादित्येतत् । **रसेत्यादि ।** अत्र ये इत्यार्थिकम् । तथाच ये रसालंकारसंज्ञां प्राप्ता इत्यर्थः तेषाम्—**रसवदिति ।** आदिना प्रेयऊर्जस्विसमाहिता प्राह्याः॥ **रसेति ।** रसभेदत्वं अस्ति उत अथवा अन्यता अलंकारभेदत्वमेवास्तीति संशय इत्यन्वयः ॥ ८ ॥ ननु कोऽत्र संशये हेतुरित्याशङ्क्य प्रथमकोटौ तं प्रकटयति—**अगूढमिति ।** इत्यादिकाव्यप्रकाशकारिकयेत्यर्थः । यतः हेतोस्ते रसवदादयोऽष्टौ रसालंकाराः रसवत्प्रेयऊर्जस्विसमाहितभेदेन चतुर्विधा अपि । **गौणेति ।** मंमटभट्टमतानुसारेण गौणव्यङ्ग्याष्टकमध्येऽपराङ्गत्वेन संग्रहादित्यर्थः । **रसेति ।** रसांश-

**एवं कुवलयानन्दे रसालंकारतोक्तितः ।**
**अलंकारविशेषत्वमपि तेषां प्रतीयते ॥ १० ॥**
**शृणु व्यङ्ग्योपमादीनां नैवालंकारता यथा ।**
**अपराङ्गरसादीनां तथा नैव रसादिता ॥ ११ ॥**

---

त्वेनैव प्रतीयन्त इति संबन्धः ॥ ९ ॥ एवं द्वितीयकोटावपि तं स्पष्टयति—**एवमिति । रसेति** । रसप्रधाना अलंकारा रसालंकारास्तेषां भावोक्त्येत्यर्थः । तदुक्तं कुवलयानन्द एव । 'चत्वारो रसवत्प्रेय ऊर्जस्वि च समाहितम् । भावस्य चोदयः संधिः शबलत्वमिति त्रयः' इत्यादिना ॥ १० ॥ एवं रसवदाद्यलंकारान्तर्भावाधिकरणं किं रसाः किंवालंकारा इति सहेतुके संशये समुपन्यस्ते सति सिद्धान्ती समाधातुं शिष्यं संमुखीकरोति—**शृणिवति** । तत्र रसवदाद्यलंकाराणामलंकारत्वमेवेति निरुक्तसंशयनिविष्टद्वितीयकोटिमेव सिद्धान्ततत्वेनाङ्गीकुर्वाणः प्रथमकोटिभूतरसभेदविशेषत्वं प्रत्याचक्षाणश्च संस्तत्र दृष्टान्तं स्पष्टयति—**व्यङ्ग्येत्यादिना** । व्यङ्ग्याः व्यञ्जनावृत्तिमात्रसिद्धाः ये उपमाद्यलंकारास्तेषामित्यर्थः । तत्र तु व्यङ्ग्योपमा यथा गोवर्धनसप्तशत्याम्—'आस्वादितदयिताधरसुधारसस्यैव सूक्तयो मधुराः । अकलितरसालमुकुलो न कोकिलः कलमुदञ्चयति' । अत्रोत्तरार्धगतार्थान्तरन्यासेन क्रमाद्दयिताधरे रसालमुकुलस्य कवौ च कोकिलस्योपमालंकारो व्यङ्ग्यः । अत्र विस्तरस्तु पञ्चमरत्ने प्रपञ्चित एव । कुतो नास्त्येतेषामलंकारतेति शङ्का त्वग्रेऽनुपदमेव साक्षेपं प्रत्याचक्षामः । **अपराङ्गेति** । अपराङ्गत्वेन गौणव्यङ्ग्यविचारात्मकपञ्चमरत्ने प्रपञ्चितानां रसभावतदाभासभावशान्त्याद्यात्मकानां रसवदादिसंज्ञानां रसालंकाराणामित्यर्थः । शिष्टं तु स्पष्टमेव । एवंच पञ्चमरत्नेऽपराङ्गाख्यगौणव्यङ्ग्यविचारेऽपरस्य रसस्याङ्गीभूतं रसान्तरं रसवदलंकाराख्यं यन्मयोदाहृतं प्राक् 'हन्त भो कान्त पश्चैषो मत्कुचाञ्चितकुङ्कुमैः । किर्मीरितं त्वदङ्गं यत्तद्ध्यानङ्गतां गतम्' इत्यत्राङ्गिनः प्रधान्येन प्रतीयमानस्य करुणस्याङ्गीभूते शृङ्गारे व्यङ्ग्योपमादीनामलंकाराणामपि व्यङ्ग्यत्वादेवालंकारत्वाभाववदपराङ्गत्वादेव रसादिध्वनित्वं नैव भवतीति भावः । नन्वेतेषामपराङ्गत्वेन गुणीभूतत्वाद्गौणव्यङ्ग्यत्वात्मना मध्यमकाव्यत्वसंपादकत्वं भवतु नाम तथापि रसादित्वेनैव प्रत्यक्षमनुभूयमानत्वात्कथं न रसादिता कथं वाऽलंकारविशेषतैवेति चेत्सत्यम् । यथा व्यङ्ग्योपमादीनामलंकाराणामपि व्यङ्ग्यत्वादेव ध्वनिशब्दार्थत्वं तथाऽपराङ्गीभूतानां रसादीनामपि शब्दाङ्गीभूतानुप्रासादीनामर्थाङ्गीभूतोपमादीनां च शब्दाद्यलंकारत्ववद्रसाद्यङ्गीभूतानामपि रसभावाद्युक्ताष्टपदार्थानामपि सामान्यतो ह्यलंकुर्वन्ति चारुतातिशयं जनयन्तीति व्युत्पत्त्या रसालंकारत्वं तान्त्रिकसंज्ञया विशेषतो निरुक्ततत्तदवच्छेदेन रसवदाद्यलंकारत्वं च किमिति न समुचितं स्यात् । वस्तुतस्त्वेतदपि तत्तदङ्गतापन्नरसादीनां व्यक्तिमादायैव अङ्गिनां रसादीनां व्यक्तिप्राधान्यमादाय तु ध्वनित्वमेव । तदुक्तं काव्यप्रकाशे—'यद्यपि स

**गौणव्यङ्ग्येऽपराङ्गस्यालंकारत्वेऽपि चिन्तनम् ।**
**रसप्राधान्यतो युक्तं व्यङ्ग्यालंकारवद्ध्वनौ ॥ १२ ॥**
**सुमनोलब्धसौरभ्ये जडेऽपि च जनादरः ।**
**अधिको दृश्यतेऽथापि जडत्वं तु न हीयते ॥ १३ ॥**
**तद्वद्रसवदादीनां रसाधिक्येन संग्रहे ।**
**गौणव्यङ्ग्येऽपि संजातेऽस्त्यलंकारत्वमक्षतम् ॥ १४ ॥**
**ननु व्यङ्ग्योपमादीनां न रसत्वं न चेतरत् ।**
**चमत्कारकरत्वं तु दृश्यते तत्कथं भवेत् ॥ १५ ॥**

नास्ति कश्चिद्विषयो यत्र ध्वनिगुणीभूतव्यङ्ग्ययोः स्वप्रभेदादिभिः संकरः संसृष्टिर्वा नास्ति तथापि प्राधान्येन व्यपदेशा भवन्तीति क्वचित्केनचिद्व्यवहार' इति । एवमेतदुदाहृतस्य 'अयं स रसनोत्कर्षी पीनस्तनविमर्दनः । नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः' इति रसवदलंकारस्य व्याख्याने जयरामभट्टाचार्येणाप्युक्तम् । अत्र शृङ्गारव्यङ्ग्यमादाय गुणीभूतव्यङ्ग्यत्वं करुणमादाय तु ध्वनित्वम् । एवमग्रेऽपीति बोध्यमिति । तथाचोक्ताष्टविधरसादीनामप्यङ्गव्यङ्ग्यमादायैव रसवदाद्यलंकारत्वम् । अङ्गिव्यङ्ग्यमादाय तु ध्वनित्वमेवेति दिक् ॥ ११ ॥ नन्वेवमेतेषामलंकारत्वे गौणव्यङ्ग्याख्योत्तमकाव्यविचारे कुतश्चिन्ताऽकारीत्याशङ्क्य व्यङ्ग्यालंकारस्य ध्वनित्वेन ध्वन्याख्यकाव्यविचारे चिन्तनवद्रसप्राधान्यात्पाक्षिकरसत्वादपीति समाधत्ते—**गौणेति** ॥ १२ ॥ ननु रसप्राधान्याद्गौणव्यङ्ग्याख्योत्तमकाव्यकोटिनिविष्टानामपराङ्गत्वापराधमात्रेणालंकारत्वेन मध्यमकाव्यकोटिनिविष्टत्वसंपादनमनुचितमेव । नच व्यङ्ग्योपमादिदृष्टान्तेन तदधुनैव साधितमिति सांप्रतम् । तत्राप्यस्त्वलंकारत्वं का नः क्षतिरिति पक्षसमत्वेनासंप्रतिपत्तेरित्याशङ्क्य दृष्टान्तान्तरावष्टम्भेन समाधित्सुस्तमादौ स्पष्टयति—**सुमनोलब्धे**त्यादिश्लेषेण । अपरोपस्कारकत्वं ह्यलंकाराणां साधारणो धर्मः स तु रसाधिक्येऽपि जडस्य मूर्खस्य यथा सुमनःशब्दितसाधुसमागमादिप्रसादेन सौरभ्यपदवाच्यमनोज्ञत्वलाभेऽपि जडत्वं दुर्निवारमेव तथा नैव नष्टं भवतीति भावः । पक्षे सुमनसः सुरभिपुष्पाणि । जडेऽपि जलेपीत्यर्थः । शिष्टं तु स्पष्टमेव ॥ १३ ॥ दार्ष्टान्तिके योजयति—**तद्वदिति** । रसाधिक्येन प्रागुक्तापरोपस्कारकत्वलक्षणस्वाभाविकधर्मापेक्षया रसाद्यष्टकप्रतियोगिकान्यतमत्वरूपरसवदादित्वप्रयोजकधर्मविशेषौत्कट्येनेत्यर्थः । **गौणेति** । गौणव्यङ्ग्याख्ये मध्यमतः प्राक्तने उत्तमकाव्यकोटिविशेषमध्य इति यावत् । संग्रहे संजाते मंमटभट्टादिभिः प्राचीनाचार्यैः संनिवेशे कृते सत्यपीत्यर्थः । अलंकारत्वमक्षतमेवास्तीति संबन्धः ॥ १४ ॥ भवत्वेवमनेनान्वयदृष्टान्तेन रसवदादीनां रसाधिक्येन गौणव्यङ्ग्याख्योत्तमकाव्यविवेककोटिसंनिविष्टानामप्यपराङ्गत्वेनालंकारत्वमथापि शृणु । व्यङ्ग्योपमादीनां नैवालंकारता यथेति प्राग्व्यतिरेकदृष्टान्तीकृते व्यङ्ग्योपमादीनामलंकारत्वाभावे हेतुं जिज्ञासुरनिष्टापत्तिपूर्वकमाक्षिपति । ननु

**शृणु तेषामलंकारत्वमेवेष्टमथापि ते ।**
**न वाच्या इति तच्चिन्ताध्वनावेव मता यथा ॥ १६ ॥**
**स्वप्नकान्तारतादीनां सुखदत्वेऽपि सर्वथा ।**
**व्यावहारिकता नैव तथैवात्रापि का क्षतिः ॥ १७ ॥**
**एवं चतुर्विधाः काव्यवदलंकृतयो मताः ।**
**ध्वनित्वगौणव्यङ्ग्यत्वार्थचित्रत्वादिभेदतः ॥ १८ ॥**
**तत्राद्ययोर्ध्वनौ गौणव्यङ्ग्ये चिन्ताक्रमात्कृता ।**
**गणनैवात्र रसवत्प्रभृतेर्दीक्षितोक्तवत् ॥ १९ ॥**

---

व्यङ्ग्येति । इतरत् अलंकाररत्नम् । भवत्वेवं तत्र वस्तुध्वनित्वरूपस्तृतीयभेद एवेतीष्टापत्तिं प्रत्याचष्टे—**चमत्कारेत्यादिना** । 'यदभावे रसाद्यन्यः शाब्दानन्दो न जायते' इत्यादिप्रागुपपादितालकारलक्षणस्यातिव्याप्तिस्तु तृतीयभेदपक्षे वज्रलेपायितैवेत्याकूतम् ॥ १५ ॥ एवमुक्ताक्षेपं समाधातुं प्रतिजानीते—**शृण्विति** । तदेवाह—**अलमित्यादिना** । एवं तर्हि कथं ते ध्वनित्वेनैव पूर्वाचार्यैर्विचारितास्त्वयापि चतुर्थरत्ने तथैव संग्रथितास्तथाऽधुनापि शृण्वित्यादिना सिद्धवत्कारेणैव तदलंकारत्वाभावोऽत्र दृष्टान्तीकृत इत्याशङ्कां स्वाशयप्रकाशनेन शमयति—**अथापीत्यादिना** । वाच्याः शब्दशक्तिगम्या न भवन्तीति हेतोरित्यर्थः । तच्चिन्ताव्यङ्ग्योपमाद्यलंकृतिविचार इत्येतत् । ध्वनावेव ध्वनिसंज्ञकोत्तमोत्तमकाव्यविचार एव मता सर्वालंकारिकमान्यास्तीत्यन्वयः । नचैवं चेत्तर्हि रसवदादीनामप्यलंकाराणां वाच्यत्वाभावादलंकारेषु विचारानौचित्यमेवेति वाच्यम् । इष्टापत्तेः । अतएव ते मया प्राचीनाचार्यानुसारेण गौणव्यङ्ग्यविचार एव प्रपञ्चिताः । नाप्येवं तर्हि कुवलयानन्देन सह विरोधः । तस्यानुपदमेव परिहरिष्यमाणत्वात् । नन्वलंकारत्वसाम्येऽपि व्यङ्ग्योपमादीनां कथं ध्वनित्वं वाच्यत्वाभावमात्रापराधेनास्मद्बुद्धिमारोहेदिति वदन्तमनुजिघृक्षुर्दृष्टान्तं प्रतिजानीते—**यथेति** ॥ १६ ॥ तं व्याचष्टे—**स्वप्नेति** । आदिनाऽऽलिङ्गनचुम्बनमणितादीनि । अत्रायं प्रयोगः—व्यङ्ग्योपमाद्याः न स्थूलत्वेन व्यवहार्याः सूक्ष्मतमत्वात् । स्वप्नाङ्गनालिङ्गनादिवदिति ॥ १७ ॥ फलितमाह—**एवमिति** । अलंकृतयः अलंकाराः मताः प्राचामिति शेषः । चातुर्विध्यमेव प्रबोधयति—**ध्वनित्वेत्यादिना । गौणेति** । तद्गतापराङ्गत्वप्रयुक्तरसवदाद्यलंकारतेत्यर्थः । आदिना शब्दः ॥ १८ ॥ भवत्वेवं किं ततः प्रकृत इति तदाह—**तत्रेति** । आद्ययोर्व्यङ्ग्योपमारसवदाद्योः रसवत्प्रभृतेः रसवदाद्यलंकारस्य—**दीक्षितेति** । यथा कुवलयानन्दे तैस्तस्याष्टविधस्यापि रसाभासादावाभासतयैकीकारेण सप्तविधतयैव गणना कृता केवलमुदाहरणानि तु प्राचीनवदष्टावप्यत्रैव लिखितानि तथा मया

**चित्रेऽपि चित्रमीमांसाकारैस्त्रैविध्यमीरितम् ।**
**शब्दार्थोभयचित्रत्वभेदात्प्राच्यैस्तु तद्द्वयम् ॥ २० ॥**
**बाढं तद्दीक्षितैः सूक्ष्मदृग्गम्योभयसाम्यतः ।**
**उक्तं प्राच्यैस्तु शब्दादिभेदौ स्थूलदृशोदितौ ॥ २१ ॥**
**यद्वाक्याज्ज्ञायते चारु सादृश्यं वर्ण्यमञ्जुनोः ।**
**तत्वमत्रोपमात्वं स्याद्ब्रह्मेव शुचि चिन्मनः ॥ २२ ॥**

---

तयोराद्ययोरत्रालंकाररत्ने गणनैव क्रियत इति योजना ॥ १९ ॥ नन्वेवमलंकारचातुर्विध्यमपि न नियतं दीक्षितोक्तरीत्यैव तत्र पञ्चम्या अपि विधायाः संभवादिति शङ्कते—**चित्रेऽपीति** । तद्यथा चित्रमीमांसायां तावदप्पय्यदीक्षितैः । त्रिविधं तावत्काव्यम् ध्वनिगुणीभूतव्यङ्ग्यचित्रभेदादिति पूर्वं प्रतिज्ञाय तत्राद्ययोः संक्षेपेणोपपादनं विरच्याथ यदव्यङ्ग्यमपि चारु तच्चित्रमिति सामान्यतश्चित्रलक्षणं संक्षिप्योक्तं शब्दचित्रमर्थचित्रमुभयचित्रमपीति । ननु भवत्वेवं का हानिरित्याशङ्क्य तां प्राचीनाचार्यविरोधरूपां सूचयितुं तन्मतं संक्षिपति—**प्राच्यैस्त्विति** । तुशब्दो वैलक्षण्यार्थः । तदुक्तं काव्यप्रकाशकारिकायाम्—'शब्दचित्रं वाच्यचित्रमव्यङ्ग्यं त्ववरं स्मृतम्' इति ॥ २० ॥ अथोक्तशङ्कामङ्गीकृत्य स्थूलसूक्ष्मदृगाख्याधिकारिभेदेन प्राच्यादिमतद्वयप्रवृत्तेर्नैवात्र विरोधगन्धोऽपीति समाधत्ते—**बाढमिति** । तच्चित्रभेदत्रयम् । **सूक्ष्मेति** । प्रेक्षावन्मात्रावगम्यशब्दार्थोभयचित्रसमानत्वेनेत्यर्थः ॥ २१ ॥ एवं प्राक्प्रतिज्ञातार्थचित्रालंकारप्रदर्शनोपोद्घातप्रसक्ततत्सामान्यलक्षणादिसंप्रपंच्येदानीं 'उपमैका शैलूषी संप्राप्ता चित्रभूमिकाभेदान् । रञ्जयति काव्यरङ्गे नृत्यन्ती तद्विदां चेतः' इति चित्रमीमांसोक्तेस्तस्या अनेकालंकारेषु संक्रमानुभूतेश्च तामेव प्रथमं सामान्यतः संलक्ष्य संक्षिप्योदाहरति च क्रमात्रिपाद्यन्त्यपादाभ्याम्—**यद्वाक्यादिति** । **वर्ण्येति** । वर्णयितुं योग्यं वर्ण्यमुपमेयं मुखादि 'मनोज्ञं मञ्जु मञ्जुलम्' इत्यमरान्मञ्जु रम्यमुपमानं चन्द्रादि वर्ण्यं च मञ्जु च तयोरुपमेयोपमानयोरित्यर्थः । **यदिति** । यादृशार्थप्रतिपादकाद्वाक्याच्चन्द्रवत्स्वप्रियाऽऽस्ये श्रीरित्यादिपदकदम्बान्निमित्तादिति यावत् । चारु परमरमणीयमेव । ननु 'तदाननं मृत्सुरभि क्षितीश्वरो रहस्युपाघ्राय न तृप्तिमाययौ । करीव सिक्तं पृषतैः पयोमुचां शुचिव्यपाये वनराजिपल्वलम्' इत्यादिवदतथाभूतमित्यर्थः । अत्र यदि 'सुचुम्ब पद्मं मकरन्दगन्धिलं शरद्विसिन्याः कलहंसराडिव' इति न्यासः क्रियते चेत्तदा चार्वेव सादृश्यं तद्भिन्ने तद्गतभूयोधर्मवत्त्वमेव । यथा चन्द्रभिन्ने मुखे तद्गतानन्दकत्वम् । ज्ञायते अवबुध्यते । अत्र अलंकारशास्त्रे नत्वन्यशास्त्रे । उप समीपे मा लक्ष्मीः प्रमा वा यस्याः सा तथेतिव्युत्पत्त्या हरिमूर्तेरद्वैतब्रह्मविद्योदयकालिकयोगीन्द्रव्यक्तेरपि तत्र तत्तत्प्रकरणानुसारेणोपमापदाभिधेयत्वसंभवात् । नापि लोके । उमेत्यादिवदुपमेति कस्याश्चिदभिधानस्यापि संभवाच्च । तत्वं तादृगर्थत्वमित्यर्थः । **उपेति** । उपमालंकारत्वं

स्यादिति संबन्धः। तथाच यादृगर्थावबोधकवाक्यकरणकवर्ण्यनिष्ठरुचिरलनिरूपित- सुन्दरसादृश्यविषयकज्ञानोदयस्तत्वमेवेहोपमासामान्यलक्षणं पर्यवस्यतीत्याकूतम् । अत्र चन्द्रवत्प्रेयसीमुखमिति वाक्य एवातिव्याप्तिवारणायार्थावबोधकेति । वाक्य- ग्रहणं तु चन्द्रभिन्नत्वे सति चन्द्रगतानन्दजनकत्वादिसादृश्यमतिरम्यं रामानने स्व- रूपतो वर्तत एवेति तत्राप्युपमापदाभिधेयत्वापत्तिव्यावृत्त्यर्थमेव वन्ध्यापुत्र इव तुच्छः प्रपञ्च इति वाक्यकरणकशाब्दबोधविषयीभूतोपमायामव्याप्तिं निराकर्तुं प्रमापदं वि- हाय ज्ञानपदनिवेशः।अन्यथा'शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः'इति पातञ्जलसूत्रा- दुपमानीभूतस्य वंध्यापुत्रस्य तुच्छत्वेन विकल्पैकविषयतया योग्यताराहित्येन शाब्द- प्रमाविषयतयानिरुक्ताव्याप्तितादवस्थ्यमेव।अतएव रसगङ्गाधरे तावदेतादृगुपमाना- संभवोदाहरणे सादृश्यप्रतीत्यभावः साक्षेपमेव प्रतिक्षिप्तः। ननु'त्वयि कोपो ममाभाति सुधांशाविव पावकः' इत्यादावुपमानस्यात्यन्तमसंभावितत्वात्सादृश्यमेव न तावत्प्रति- पत्तुं शक्यम् । चमत्कारस्तु पुनः केन स्यादितिचेत् कविना हि खण्डशः पदार्थो- पस्थितिमता स्वेच्छया संभावितत्वेनाकारेण चन्द्राधिकरणकमनलं प्रकल्प्य तेन सह साम्यस्यापि कल्पने बाधकाभावात् । कल्पितमसत्सादृश्यं कथं चमत्कारजनक- मिति तु न वाच्यम् । परमसुकुमारीभवत्कनकनिर्मिताङ्गया मणिमयदशनका- न्तिनिवारितध्वान्तायाः कान्ताया भावनया पुरोवस्थापिताया आलिङ्गनस्याह्लाद- जनकत्वदर्शनादिति । सादृश्यविशेषणीभूतसुन्दरपदव्यावर्त्यं तु प्रागेवोक्तम् । नचैवं तर्हि हीनोपमायामुपमात्वानापत्तिरिति सांप्रतम् । असत्काव्यस्यैव हीनोपमाया अल- क्ष्यत्वेनेष्टापत्तेः । अतएवोक्तं कुवलयानन्दे–'यत्रोपमानोपमेययोः सुहृदयहृदयाह्ला- दकत्वेन चारुसादृश्यमुद्भूततया लसति व्यङ्ग्यमर्यादां विना स्पष्टं प्रकाशते तत्रोपमा- लंकार इति । एवं रसगङ्गाधरेऽपि सादृश्यं सुन्दरं वाक्यार्थोपस्कारकमुपमालंकृति- तिरिति च।तथात्र प्रकृतलक्षणे उपमेयपदस्थाने वर्ण्यपदमुपमानपदस्थाने च रुचिर- पदं प्रयोक्त्रा लक्षणे उपमातुं योग्यमुपमेयमुपमीयतेऽनेनेत्युपमानमिति च व्युत्प- त्त्योपमायोग्यत्वादिलक्षणोपमेयत्वादेरुपमासिद्ध्यधीनत्वेनात्माश्रयादयो निरस्ताः । अत एवालंकारचन्द्रिकाकृता तूपमानाद्यघटितमेवोपमालंकारलक्षणं संक्षिप्तम् । इत्थं चालंकारत्वे सति सादृश्यत्वमुपमालंकारलक्षणं बोध्यमिति । तत्रालंकारत्वं तु तदीयमलंकारलक्षणे प्रागेव व्याख्यातं। उर्वरितं यत्सादृश्यत्वं तदपि चन्द्रवत्प्रेयसी- मुखमित्यादिपद्यश्रवणादिकं विनापि प्रेयसीमुखनिष्ठनैसर्गिकाह्लादकत्वलक्षणचन्द्रसा- दृश्यरूपधर्मिणिस्वरूपसद्वर्तत एवेति तां पश्यतस्तद्द्रष्टुरेतन्मुखनिष्ठानन्दजनकत्वमुपमा वदिति व्यवहारापत्तेः काव्यमुपमावदित्यादिव्यवहारानापत्तेश्च प्रतिपादकतासंबन्धेन काव्येऽपि तद्वर्तत इति चेत्प्रकृतलक्षणे तदनिवेशादुक्तापत्तितादवस्थ्यमेव।तदर्थं सर्वा- त्मना निर्दोषतन्निवेशे कर्तव्ये लक्षणान्तरमेव स्यादिति ध्येयम्।तस्मादिदं दीक्षितस्वार- स्यानवबोधनिबन्धनमेव लक्षणसंक्षेपणम् । ननु तर्हि त्वया कथं दीक्षितस्वारस्यम- वसितमिति चेच्छृणु।ते हि चन्द्रालोकीयमुपमालक्षणघटकं 'उपमा यत्र सादृश्यलक्ष्मी-

रुल्लसति द्वयोः' इत्यर्धं व्याकुर्वाणाः संतो यत्रेत्याद्यूचुः। तद्यथा यत्र काव्ये द्वयोः उपमानोपमेययोः सादृश्यलक्ष्मीः सहृदयहृदयाह्लादकत्वेन चारुसादृश्यं उल्लसति। उद्भूततया लसति व्यङ्ग्यमर्यादां विना स्पष्टं प्रकाशते तत्रोपमालंकार इति मूलसंगतिः उद्भूततयोल्लसतीत्यपपाठ एव। उद्भूततयेत्यस्य वैयर्थ्यापत्तेः। एवंच मयात्र यदित्यादित्रिपाद्या तत्तात्पर्यमेव संगुम्फितमिति सहृदया एव विदांकुर्वन्तु। एतेन रसगङ्गाधरोऽपि व्याख्यातः। तत्र हि सादृश्योक्त्यन्यथानुपपत्त्यैवोपमानोपमेययोः सिद्धौ लाघवार्थमेव तद्ग्रहणं कृतमिति विशेषः। चन्द्रालोके कुवलयानन्देऽत्र मदीयत्रिपाद्यामपि स्पष्टप्रतिपत्त्यर्थमेव तत्कृतमिति नैतावता गौरवापत्तिः। तावन्मात्रांशस्य लक्षणकुक्ष्यनिक्षेपेप्यक्षतेः। नचैतावतापि व्यङ्ग्यमर्यादां विनेति वदद्भिर्दीक्षितैर्व्यङ्ग्योपमायाः पर्युदासो यः कृतस्तस्य का गतिः। तस्या अलंकारत्वेप्यवाच्यत्वेन वाच्येष्वर्थालंकारेष्वविचार्याया व्यङ्ग्यत्वेन ध्वनिष्वेव विचारितायाश्चोक्तपर्युदासौचित्यात्। प्रागुक्तालंकारचातुर्विध्येनात्रापि तद्गणनावश्यकत्वपक्षे तु 'अयं हि धूर्जटिः साक्षात्' इत्यादौ तथा 'चन्द्राननाध्वान्तकचोडुभूषासंध्याकुसुंभारुणचारुचेला। आकाशआदर्श इयं बभूव किं राधिकायाः प्रतिमैव रात्रिः' इति मदीयकृष्णलीलामृतपद्ये आदर्श इयमित्यादिरूपे उत्प्रेक्षालंकारघटकेऽनुभयोक्तितादूप्यरूपके यद्यप्युपमानोपमेययोश्चारु सादृश्यं भासत एव, तथापि व्यञ्जनयैव तत्प्रकाशते नतु शक्त्येति तद्व्युदासार्थं व्यङ्ग्यमर्यादामित्यादेः सार्थक्याच्च। अतएवोपमालक्षणमुक्त्वा तत्पदकृत्यमुपवर्णितं साहित्यदर्पणे–'साम्यं वाच्यमवैधर्म्यं वाक्यैक्य उपमा द्वयोः'। रूपकादिषु साम्यं व्यङ्ग्यं व्यतिरेके च वैधर्म्यस्याप्युक्तिः, उपमेयोपमायां वाक्यद्वयं, अनन्वये चैकस्यैव साम्यमित्यस्याभेद इति। नन्वेवमतिभव्यमपि भवत्कारिकायां वाक्यादित्येकवचनादुपमेयोपमायास्तथा वर्ण्यमञ्जुनोरिति द्विवचनादनन्वयस्य च व्युदासेऽपि निरुक्तलक्षणरूपकादावतिव्याप्तिरिति चेन्न। रूपके हि व्यञ्जनया प्रतीयमानसादृश्यस्य व्यङ्ग्योपमात्वात्तस्याश्च प्रागुक्तरीत्या काव्यवदलंकारचातुर्विध्येनात्रापि संग्राह्यत्वाद्व्यतिरेके तु 'व्यतिरेको विशेषश्चेदुपमानोपमेययोः। शैला इवोन्नताः सन्तः किं तु प्रकृतिकोमलाः' इत्यादिरूपे शैला इवेत्यादिपूर्वपादे तदपेक्षितोपमानोपमेयप्रकाशनार्थमुक्तोपमाया लक्ष्यत्वेन किंत्वित्याद्यपरपादे तद्विशेषलक्षणव्यतिरेकस्य वैधर्म्यरूपवैसादृश्यैकघटितत्वेन तत्रातिव्याप्तेः स्वप्नेऽप्यसंभवाच्च। नन्वेवमप्युपमानस्योपमेयापेक्षयाऽधिकगुणत्वेनाभ्यर्हितत्वादुपमानोपमेययोरित्यादौ तथैव प्राचां प्रयोगाच्च त्वयाप्युक्तकारिकायां मञ्जुवर्ण्ययोरित्येव पठनीयमिति चेत्सत्यम्। वर्ण्यस्यैव प्रकृते फलभाक्त्वेन ततोऽप्यभ्यर्हितत्वाज्जीवब्रह्मणोरैक्यमित्यादौ तथैव प्राचां प्रयोगस्यापि दृष्टत्वाच्च। अतएव 'साधर्म्यमुपमाभेदे' इत्यादिकाव्यप्रकाशोक्ततल्लक्षणव्याख्याने जयरामभट्टाचार्येणापि तल्लक्षणं संक्षिप्तम्। तथाचोपमेयोत्कर्षकं साधर्म्यमुपमेति। अत्रापि उपमातुं योग्यमिति व्युत्पत्त्या लक्षणकुक्षिगोपमेयसिद्धावुपमापेक्षा तत्सिद्धौ च तद-

पेक्षेत्यन्योन्याश्रयः । ननु काव्यप्रकाशादौ काव्यस्य योयं ध्वनित्वादिविभागः कृतः स एव यदि साधीयांश्चेत्तर्हि तन्निदर्शनेनेदं भावत्कमलंकाराणामप्युपमादीनां ध्वनित्वादिना चातुर्विध्यं साधु स्यात्स तु तत्खण्डकेन काव्यामृतकृता खण्डितः प्रतिभाति । तद्यथा । ननु काव्यस्य ध्वनित्वादिना यः कृतो विभागः सच नोपपद्यते । तथाहि यत्तेषु त्रिषु सर्वत्र रसादिकं प्रतीयते नवा । नान्त्यः । तदा यत्र न प्रतीयते तत्र काव्यत्वविरहापत्तेः । नाद्यः । तदा कथ ध्वनित्वादिना विभागः । नच मध्यमे आन्तरालिकव्यङ्ग्यस्याप्राधान्याद्विभाग इति वाच्यम् । आन्तरालिकव्यङ्ग्यस्याप्राधान्येऽपि तस्याकिंचित्करत्वेन चमत्कारापेक्षया सर्वेषां ध्वनित्वसंभवात् । अथ चित्रगुणालंकाराहितचमत्कारेण रसस्तिरोधीयत इति चित्रत्वमिति चेन्न । अनवबोधात् । तथाहि तिरोधीयत इत्यस्य कोऽर्थः । रसादेः प्रतीतिप्रतिबन्धो विलम्बेन प्रतीतिर्वा । नाद्यः । तथा सति काव्यत्वविरहापत्तेः । नान्त्यः । गुणालंकारा हि रसोद्बोधकाः । तथाच तज्ज्ञानतदाहितचमत्कारानन्तरं रसोद्बोधो युज्यत एवेति कथं न ध्वनित्वम् । अतएव रसध्वनावपि गुणालंकाररचना साधीयसी महाकवीनां दृश्यते । यथा—'गच्छति पुरः शरीरं धावति पश्चादसंस्थुलं चेतः । चीनांशुकमिव केतोः प्रतिवातं नीयमानस्य' । यथावा—'यान्त्या मुहुर्वलितकंधरमाननं तदावृत्तवृन्तशतपत्रनिभं वहन्त्या । दिग्धोऽमृतेन च विषेण च पक्ष्मलाक्ष्या गाढं निखात इव मे हृदये कटाक्षः' इति । अत्रोच्यते—एतावता ह्यनेन काव्यप्रकाशकारोक्तगौणव्यङ्ग्याख्यमध्यमकाव्ये व्यङ्ग्यस्य रसस्याप्राधान्यं तु स्वीकृतमेवाथापि तस्याकिंचित्करत्वरूपं मध्यमकाव्यत्वसंपादनेऽप्रयोजकत्वं यदुक्तं तत्परं मत्सरप्रयुक्तमेव । तथाहि इदं यत्तेनैवोदाहृतं काव्यद्वयं क्रमात्कालिदासीयशाकुन्तलनाटकस्थं दुष्यन्तवाक्यं भवभूतीयमालतीमाधवाख्यप्रकरणस्थं माधववाक्यं च । तत्राद्ये पूर्वार्धे शकुन्तलावलम्बी दुष्यन्ताश्रितः स्मृत्यात्मकः संचारिभाव एव शरीरपुरोगमनव्याकुलत्वविशिष्टचेतःपश्चाद्गमनरूपानुभवाभ्यां परिपुष्टस्तद्विषयकरतिमूलकोऽयं शृङ्गारभावध्वनिरप्युत्तरार्धोक्तपूर्णोपमालंकारादेव काव्यविभावनपरिपक्वहृदयाख्यसहृदयानां तथा तत्कथितवाक्यार्थश्रवणोत्तरं पामराणामपि रसिकानां सद्यश्चमत्कारनामकविपुलानन्दस्य प्रथमं शक्तिवृत्तिजन्यतया बलवत्तरत्वात्पश्चाद्भवन्नुक्तशक्तिमूलकव्यञ्जनावृत्त्या जातोपि स्वजन्यानन्दजनने तदपेक्षया गौण एवेति सर्वानुभवसिद्धम् । नहि मलयानिलस्य पूर्वं पाटीरसौरभ्यावघ्राणजन्यानन्दहृदमग्ने मनसि पश्चात्संपन्नतदीयशिशिरस्पार्शनानन्दस्ततोऽधिको भवति । एवं द्वितीयपद्येऽपि मालत्यालम्बितो माधवाश्रितः स्मृत्याख्यसंचार्येव तद्विषयकरतिमूलकस्तद्गमनकालिकवलितग्रीवाननाद्यनुसंधानानुभावितत्वेन पुष्टः शृङ्गारभावध्वनिरपि वाच्यतया प्रथमसंजातालुप्तोपमापह्नुत्युत्प्रेक्षाद्यलंकारानन्दादुत्तरभाविनं शक्तिमूलकव्यञ्जनाजन्यस्वविषयकज्ञानजन्यमानन्दमधिकं विधातुं नैवालमित्यपि तथैव । तस्मादिदं ध्वनिगौणव्यङ्ग्यादिकाव्यविभेदनं काव्यप्रकाशकृतं प्राचीनार्वा-

**सैव चेद्यञ्जना गम्या तर्ह्यवाच्योपमा मता।**
**शाब्दापरोक्षविद्यैव यदद्वैतात्मदायिनी ॥ ५३ ॥**

चीनाखिलपदवाक्यप्रमाणसाहित्यधुरंधरशिरोधार्यमपि दूषयितुं काव्यामृतकर्तुर्मूलमसूयैवेति तएवावधारयन्तु। एतेन तदीयः सर्वोपि प्राच्योदीच्यस्तत्खण्डनग्रन्थः प्रत्याख्यात एवेति दिक्। ब्रह्मेवेत्यादिना तूदाहरणम्। अत्र वर्ण्यमुपमेयं विन्मनस्त्वनिष्ठमानसम्। मञ्जुशब्दितमुपमानं ब्रह्म। शुचित्वं पवित्रत्वरूपमुपमाने स्वाभाव्यादुपमेये च तदाकारत्वादुभयसाधारणः सादृश्याख्यो धर्मः। इवेत्युपमावाचकमिति बोध्यम्। यथावा मदीये नीतिशतपत्रे—'हितेच्छुना तु कर्तव्यः सतामेव समागमः। सरसानां सुमनसां षट्पदेनेव सर्वदा' इति। अत्र साधारणधर्माभावा। यथावा तत्रैव—'निमेषमपि यो व्यर्थं प्राणान्तेऽपि न वै नयेत्। तस्यैव विद्या दासी स्याद्योगीन्द्रस्येव मुक्तता' इति। अत्र दास्यं साधर्म्यं ज्ञेयम् ॥ २२ ॥ एवमुपमासामान्यलक्षणं सोदाहरणं संप्रपञ्च्य 'एवं चतुर्विधाः काव्यवदलंकृतयो मताः। ध्वनित्वगौणव्यङ्ग्यत्वार्थचित्रत्वादिभेदतः' इति प्रागुक्तालंकारचातुर्विध्यादर्थचित्रोपमालंकारस्य सद्य एवोक्तत्वेन शब्दचित्रस्य त्वग्रे तद्रत्न एव वक्ष्यमाणत्वेन च रसप्रधानयोर्ध्वनिगौणव्यङ्ग्यान्तर्गतयोः व्यङ्ग्योपमादिरसवदाद्यलंकारयोरेव पूर्वं तत्तद्रत्ने सुविचारितत्वेप्यलंकारत्वसामान्येनात्र गणनीयतयाऽवशिष्टयोराद्ययोर्द्वयोरपि प्रसङ्गाल्लक्षणाद्यपेक्षायां रसवदादेरपि गौणव्यङ्ग्याख्योत्तमकाव्यविचारात्मके पञ्चमरत्न एव सलक्षणोदाहरणं प्रतिपादितत्वेनेह श्लेषेण रसवत एवोदाहरणमात्र कथयन्व्यङ्ग्योपमामेव वक्ष्यमाणयावदर्थचित्रालंकारेष्वेवमुपलक्षणविधया व्यङ्ग्यत्वोन्नयनार्थं संलक्ष्योदाहरति—**सैव चेदिति**। सैव प्रागलक्षितलक्षणोपमैव। यदि व्यञ्जनागम्या व्यञ्जनावृत्तिमात्रलभ्या चेत्तर्हि अवाच्येति। न वाच्या अवाच्या शक्तिवृत्त्यगम्या सा चासावुपमा चेति तथा व्यङ्ग्योपमेत्यर्थः। मता सकलालंकारिकमान्यास्तीत्यन्वयः। एतेन व्यञ्जनावृत्तिमात्रगम्यत्वे सत्युपमात्वं व्यङ्ग्योपमात्वमिति तल्लक्षणं संक्षिप्तम्। एवमेवाग्रेऽप्यखिलेष्वप्यर्थालंकारेषु व्यञ्जनावृत्तिगम्यत्वेन तल्लक्षणं निर्णेयं तदुदाहरणान्यप्युन्नेयानीति दिक्। अथेमामुदाहरति—**सैवेति**। सैव यावद्रमणीगुणसंपन्नत्वे सति ब्रह्मवादिनी स्वकामिनीत्यर्थः। अवधारणेनातादृशस्त्रीव्यावृत्तिः। यदि व्यञ्जना विगतं लोचनचुम्बनेन कामशास्त्रविहितेनाञ्जनं कज्जलं यस्याः सा तथा। उपलक्षणमिदमालिङ्गनादियावत्सुरताङ्गानामपि। एवंच वात्स्यायनविहितयावत्संभोगाङ्गसंपादनपूर्विकेतियावत्। एतादृशी यदि गम्या संभोग्या भवति चेत्। एतेनैतादृशस्वकीयसुन्दरीसंभोगलाभस्य सकलसुकृतसंभारसाफल्यं सूच्यते। तेनैतस्याः परमदौर्लभ्यं द्योत्यते। तर्हि अवाच्योपमा अवाच्या अकथनीया उपमा साधर्म्यवद्यक्तिर्यस्याः सा तथा निरुपमैव मता लोकशास्त्रोभयमान्यैवास्तीति संबन्धः। एवं चैतादृग्रमणीलाभे सति शिखिध्वजादिवद्भोगमोक्षयोरुभयोरपि पुरुषार्थयोः सामानाधिकरण्येनैव संभवात्किं वाच्यं तत्सं-

**सा द्विधा पूर्णलुप्तत्वभिदाद्यार्थ्यादितस्तथा।**
**षोढा वाक्ये समासे च तद्धिते च स्थितत्वतः ॥ २४ ॥**
**अन्त्योपमानलुप्ता च धर्मलुप्ता तथैव च।**
**एवं वाचकलुप्ता धर्मोपमानकलुप्तका ॥ २५ ॥**
**तथा वाचकधर्माभ्यां लुप्ता वाचकवर्ण्यतः।**
**लुप्ता धर्मोपमाने वादित इत्यस्ति सप्तधा ॥ २६ ॥**

---

भोगस्य निरुपमानन्दत्वमिति तत्वम्। उक्तमेवार्थं दृष्टान्तेनापि समर्थयति—**शाब्देत्याद्युत्तरार्धेन**। यद्यस्माद्धेतोः शाब्दापरोक्षविद्यैव अधिकारिविशेषावच्छेदेन सुविचारितात् शाब्दपरब्रह्मोभयनिष्णातेनैव गुरुणा समुपदिष्टात्तत्त्वमस्यादिमहावाक्याख्यशब्दादेव संजाता शाब्दी सा चासावपरोक्षा असंभावनाद्यखिलप्रतिबन्धवैधुर्येणाहंब्रह्मास्मीति चरमवृत्तिकालिकसाक्षिप्रत्यक्षा सा चासौ विद्या अबाधितत्वात्प्रमा चेति तथेति यावत्। अवधारणेन तदितरयोगाद्यखिलसाधनव्युदासः। **अद्वैतेति**। अद्वैतब्रह्मात्मैक्यदात्री वृत्तिव्याप्त्या तद्विषयकाज्ञानमात्रनिवृत्तिद्वारा वर्तत इत्यर्थः। एतेनोक्तविद्यया सह पूर्वोक्तस्वनायिकायामुपमानोपमेयभावध्वननादत्र व्यङ्ग्योपमालंकारो ध्वनितो भवति। तथेहोत्तरार्धगतः शान्तः पूर्वार्धगतशृङ्गारस्यैवाङ्गमिति रसवदलंकारोऽपि। तेनात्र गौणव्यङ्ग्यत्वमपि। शिष्टं तु स्पष्टमेव ॥ २३ ॥ एवं प्रसङ्गात्संगतां व्यङ्ग्योपमामपि संलक्ष्य समुदाहृत्य रसवदाद्यलंकारमपि संसूच्येदानीमुपमायाः प्राचां संमतान्भेदान्विवक्षुः प्रथमं तद्द्वैविध्यं प्रतिजानीते—**सा द्विधेति**। तत्र हेतुमाह—**पूर्णेत्यादिना**। एवं च पूर्णोपमा लुप्तोपमा चेति सामान्यतो द्विप्रकारोपमा भवतीत्यर्थः। एतल्लक्षणादिकं त्वग्रेऽनुपदमेव स्फुटीभविष्यतीति भावः। अथ पूर्णोपमायाः पुनरार्थी शाब्दी चेति भेदाद्द्वैविध्यमभिधत्ते—**आद्येत्यादिना**। आदिना शाब्दी तथा द्विप्रकारेत्यर्थः। पुनस्तस्या आर्थ्यादिरूपायाः पूर्णोपमायाः प्रत्येकं वाक्यसमासतद्धितगतत्वभेदात्त्रैविध्यात् षड्विधत्वं विधत्ते षोढेत्याद्युत्तरार्धेन। आद्या प्रथमोद्दिष्टा पूर्णोपमा आर्थी शाब्दी चेति द्विप्रकारापि प्रत्येकं वाक्ये समासे तथा तद्धिते च स्थितत्वतः षोढा भवतीति संबन्धः ॥ २४ ॥ एवं प्रथमोद्दिष्टां पूर्णोपमां विभिद्य क्रमप्राप्तां लुप्तां तां भिनत्ति—**अन्त्येत्यादि** द्वाभ्यां सप्तधा। धर्मोपमानकेति। धर्मश्चोपमानं च धर्मोपमाने धर्मोपमाने एव धर्मोपमानके इति स्वार्थे कप्रत्ययः। धर्मोपमानके लुप्ते यस्याः सा धर्मोपमानकलुप्तकेति सामासिकः कप्रत्ययः। तथाच धर्मोपमानलुप्तेत्यर्थः। शिष्टं तु स्पष्टमेव ॥ २५ ॥ **तथेति। वाचकेत्यादि**। वाचकधर्मनिमित्तकलोपवती वाचकधर्मलुप्तेति यावत्। वाचकवर्ण्येत्यादि। वाचकोपमेयप्रतियोगिकलोपवती वाचकोपमेयलुप्तेत्यर्थः। इदं लुप्तेति पदं मध्यमणिन्यायेनोभयत्रापि संबध्यते। धर्मोपमानेत्यादि। धर्मश्चोपमा चेवादिर्वाचकश्चेति तैस्तथा। धर्मोपमान-

**दीक्षितैरष्टमी वाचकोपमानविलोपनात्।**
**उक्ता साप्यत्र संग्राह्या तथा काव्येऽनुभूतितः ॥ २७॥**
**तत्रोपमानलुप्ता वाक्यसमासगतेर्द्विधा।**
**धर्मलुप्ता वाक्यगा स्याच्छ्रौत्यार्थी च समासगा ॥ २८॥**
**सा तद्धितस्था त्वार्थ्येव न श्रौतीत्यस्ति पञ्चधा।**
**तथा वाचकलुप्ताथ समासस्था तथैव च॥ २९॥**
**कर्मणिक्यगताधारक्यगता क्यङ्गतापि च।**
**कर्मकर्तृणमुल्गत्वभिदा द्वेधेति षड्विधा॥ ३०॥**
**धर्मोपमानलुप्ता वाक्यसमासगतेर्द्विधा।**
**तथा वाचकधर्माभ्यां लुप्ता क्विप्गा समासगा॥ ३१॥**
**स्ववाचकोपमेयाभ्यां लुप्ता क्यच्येकधा तथा।**
**लुप्ता धर्मोपमानाभ्यां वाचकेन समासगा॥ ३२॥**

---

वाचकलुप्तेति यावत्। उपसंहरति—**इतीत्यादि**॥ २६॥ नन्वप्पय्यदीक्षितैः कुवलयानन्दे लुप्तोपमायाः 'वर्ण्योपमानधर्माणामुपमावाचकस्य च। एकद्वित्र्यनुपादानैर्भिन्ना लुप्तोपमाष्टधा' इति कारिकादिभिरष्टविधत्वमुक्तं तत्कथमित्याशङ्क्येदं मया वक्ष्यमाणरसगङ्गाधरसंगृहीतप्राचीनालंकारिकरीत्यैवोक्तं नतु स्वकल्पितम्। तथा चैत एव सप्तापि भेदास्तैर्विभिन्नक्रमेणोक्ताः परतु वाचकोपमानलुप्ताख्यस्तद्भेदस्तैरधिक एवोक्तः सतु क्वाप्यत्र नैवान्तर्भवति प्रतीयते च काव्य इति संग्राह्य एवेहासाविति समाधत्ते—**दीक्षितैरि**त्यादिना॥ २७॥ ननु भवत्वेवमथाप्येतासां सप्तानामपि किमवान्तरभेदाः संभाविता नोच्यन्त इत्याकाङ्क्षायां तानभिदधानः प्रथममुपमानलुप्ताया भेदावाह—**तत्रेत्यर्धेन**। तत्रोद्दिष्टसप्तकमध्य इत्यर्थः। **वाक्येति**। वाक्यगता समासगता चेति द्विप्रकारेति यावत्। अथ धर्मलुप्तायाः भेदानभिधत्ते—**धर्मेत्यादिना**। **वाक्यगेति**। तथा वाक्यगेव समासगा समासस्थितापि श्रौती आर्थी चेत्यर्थः॥ २८॥ **सेति**। धर्मलुप्तेत्यर्थः। एवं वाचकलुप्ताया अपि भेदानाह—**तथेत्यादि**सार्धेन। तथेति समुच्चये। अथ धर्मलुप्ताभेदकथनानन्तरं तथैवेति वक्ष्यमाणसमुच्चये। चः पादपूरणे॥ २९॥ **कर्मणीति**। **कर्मेति**। कर्मणमुल्गत्वकर्तृणमुल्गत्वभेदेनेत्यर्थः। कर्मक्यजादयः पञ्चाप्येते व्याकरणशास्त्रविहिताः प्रत्यया एव॥ ३०॥ अथ धर्मोपमानलुप्ताया भेदावाह—**धर्मेति**। **वाक्येति**। वाक्यगता समासगता चेति द्विविधेत्यर्थः। एवं वाचकधर्मलुप्ताया अपि भेदावाह—**तथेति**। **वाचकेति**। वाचकधर्मनिमित्तकलोपवती वाचकधर्मलुप्तेत्यर्थः। क्विप्गा क्विप्प्रत्ययगतेत्यर्थः॥ ३१॥ एवं वाचकोपमेयलुप्ताक्यच्प्रत्ययस्थैकविधैवेत्याह—**स्वेत्याद्य**र्धेन। स्ववाचकमुपमावाचकं इवादिपदं च उपमेयं चेति तथा ताभ्यामित्यर्थः। वाचकोपमेयनिमित्तकलोपवतीत्येतत्। एवं धर्मोपमानवाचकलुप्ताया अपि समासगतत्वेनैकविधत्व

इत्थमेकोनविंशत्या लुप्तया मिलिता तथा ।
षोढया पूर्णया चेति पञ्चविंशतिधोपमा ॥ ३३ ॥
श्रौती वाक्यगता पूर्णा सा यस्यां वर्ण्यमञ्जुनोः ।
गीःसाधर्म्यस्य चेवादेः श्रीस्ते धीरिव निश्चला ॥ ३४ ॥

मेवेत्याह—लुप्तेति । धर्मोपमानवाचकप्रयुक्तलोपवतीत्यर्थः ॥ ३२ ॥ उपसंहरति—इत्थमिति । सकलमप्येतद्भेदजातमुक्तं रसगङ्गाधरे । अस्याश्चोपमायाः प्राचामनुसारेण केचिद्भेदा उदाहियन्ते । तथाहि उपमा द्विधा पूर्णा लुप्ता च । पूर्णात्वत्र श्रौत्यार्थी चेति द्विविधा भवन्ती वाक्यसमासतद्धितगामितया षोढा । लुप्ता चोपमानलुप्ता धर्मलुप्ता वाचकलुप्ता धर्मोपमानलुप्ता वाचकधर्मलुप्ता वाचकोपमेयलुप्ता धर्मोपमानवाचकलुप्तेति तावत्सप्तधा । तत्रोपमानलुप्ता वाक्यगा समासगा चेति द्विविधा । धर्मलुप्ता समासगा श्रौत्यार्थी वाक्यगा श्रौत्यार्थी तद्धितगता चार्थ्येव न श्रौतीति पञ्चविधा । वाचकलुप्ता समागता कर्मक्यजूगताऽऽधारक्यजूगता क्यङ्गता कर्मणमुलूगता कर्तृणमुलगता चेति षड्विधा । धर्मोपमानलुप्ता वाक्यगता समासगता चेति द्विविधा । वाचकधर्मलुप्ता क्विपूगता समासगता चेति द्विविधैव । वाचकोपमेयलुप्ता क्यच्येकविधा । धर्मोपमानवाचकलुप्ता तु समासगतैकविधेत्येवं साकल्येनैकोनविंशतिर्लुप्ताया भेदाः पूर्णाभेदैः षड्भिः सह पञ्चविंशतिरिति ॥ ३३ ॥ एवमुक्तरीत्योपमाभेदान्समुद्दिश्य तत्र सा द्विधा पूर्णलुप्तत्वभिदाद्यार्थ्यादितस्तथेति कारिकायां यद्यपि च्छन्दोनुरोधेन षोढा विभिन्नायाः पूर्णोपमायास्तावद्वाक्यगताया आर्थ्या एव प्रथममुद्देशः कृतस्तथाप्यग्निहोत्रं जुहोति यवागूं पचतीति पठितश्रुत्योराद्यायाः करणसाकाङ्क्षत्वादन्त्यायाः प्रयोजनसाकाङ्क्षत्वाच्च नष्टाश्वदग्धरथन्यायेनोभयान्वयार्थं पूर्वतन्त्रे यथा पाठक्रमादर्थक्रमस्य बलीयस्त्वमाश्रितमेवमिहापीत्यभिसंधायेदानीमुद्देशक्रमानुसारेण तासां प्रत्येकं लक्षणोदाहरणानि संक्षेपतो विवक्षुरादौ श्रौतीमेव प्रागादिपदनिर्दिष्टां वाक्यगतां पूर्णोपमां संलक्षयति—श्रौतीत्यादित्रिपाद्या । तत्राद्यपादेन लक्ष्यनिर्देश एव । अन्त्याभ्यां तु लक्षणनिर्देश इत्याशयः । एवंच यस्मिन्काव्ये वर्ण्यादिशब्दितोपमेयोपमानयोः साधर्म्यशब्दिततत्साधारणधर्मस्येवादिशब्दिततद्वाचकस्य च गीः शब्दिताशक्तिवृत्त्यैवोक्तिरस्ति यादृशार्थरचनातः प्रतीयते सेह श्रौती वाक्यगता पूर्णोपमा तत्र काव्येऽलंकृतिरित्याकूतम् । तथाच समासादिभिन्नगतत्वे सत्यभिधाप्रतीतवर्ण्याद्यर्थचतुष्टयत्वं तत्त्वमिति तल्लक्षणं पर्यवस्यति । सत्यन्तं तु समासादिगततद्व्युदासार्थमेव । आदिना तद्धितः । अथ तामुदाहरति—श्रीरित्याद्यन्त्यपादेन । अयि पुण्यश्लोकेत्यार्थिकम् । ते धीरिव धीः संपत्तिः निश्चला सुस्थिरा अस्तीति शेषः । अत्र वर्ण्यं पुण्यश्लोकसंपत्तिरुपमेयम् । मञ्जुतदीयबुद्धिरुपमानम् । निश्चलत्वं साधारणधर्मः । इवशब्दो वाचक इति चतुर्णामपि शक्तिवृत्त्यैवोपस्थितिः । समासादिगतत्वमन्तरैव भातीति लक्षणसंगतिः । यथावा मदीयाद्वैतामृतमञ्जर्याम्—'अन्तर्विरहज्वाला मिहिर-

**यस्यां तुल्यादिनेवादेरुक्तिः सार्थ्यस्ति वाक्यगा।**
**सदृशं शरदब्जेन सौरभ्यात्सुदृशो मुखम्॥ ३५॥**

ज्वाला बहिर्दहन्ती माम्। पतिमन्तरा कुरङ्गीमिव तु कृशाङ्गीं हरे विनाद्य त्वाम्' इति। इदं हि राधिकासंप्रेषितसख्यास्तद्विरहवैक्लव्यप्रतिपादकं वाक्यं श्रीकृष्णं प्रत्येवैकान्ते। इहोपमेयं कृशाङ्गी। उपमानं कुरङ्गी। साधारणधर्मः। क्रमादयि कृष्ण, त्वां विना पतिमन्तरा च अन्तःकरणावच्छेदेन शरीरावच्छेदेन च अद्य वसन्तकाले विरहमिहिरज्वालादह्यमानत्वमेव। इवशब्दो वाचकश्च। ननु सामान्योपमाया एवमेतस्या विशिष्टपूर्णोपमायाश्च को भेदः। उदाहरणयोस्तु 'ब्रह्मेव शुचि विन्मनः' इति 'श्रीस्ते धीरिव निश्चला' इति च परमाणुमात्रमपि न्यूनत्वानवेक्षणात्। नच लक्षणभेदाद्भिदिति सांप्रतम्। लक्ष्यानुरोधेन हि लक्षणकल्पना नतु लक्षणानुरोधेन लक्ष्यव्यवस्थेति न्यायस्य सर्वसंमतत्वेन तस्याप्रयोजकत्वात्। नापि सामान्यविशेषाभ्यां भेद इति युक्तम्। तस्यैव लक्ष्ये तावदुदाहरणयोरन्यूनानतिरेकेण तिलमात्रमप्यनुपलब्धेरिति चेद्बाढम्। प्रत्येकं लक्षणावच्छेदेन सामान्यविशेषयोः स्फुटमुपलम्भात्। उदाहरणयोस्तदनुपलम्भस्य तु मया पूर्णा प्रथमभेदसमानोदाहरणमेव सामान्योपमास्थलेऽपि बुद्धिपूर्वकमेवोपमासर्वांशसंग्रहवशादेवोक्तमित्यकिंचित्करत्वाच्च। इह श्रौतत्वप्रयोजकं शक्तिवृत्त्यैवोपमेयादीनां चतुर्णामपि प्रतिपाद्यत्वं किमिति वक्तव्यं 'सोमेन यजेत' इति पूर्वमीमांसायां सोमपदे मत्वर्थलक्षणयापि यागस्य 'तत्त्वमसि' इत्युत्तरमीमांसायां तु सकलपदलक्षणयापि ब्रह्मात्मैक्यस्य श्रौतत्ववदत्र लाक्षणिकपदप्रयोगेऽपि तथात्वसंभवादिति चेन्न। लाक्षणिकालंकाराणामग्रे पृथगेव विवक्षितत्वेनात्र शक्तिवृत्तिगम्यत्वस्यैव तत्प्रयोजकत्वेनेष्टत्वात्। तदुक्तं काव्यप्रकाशे—'यथेववादिशब्दा यत्परास्तस्यैवोपमानताप्रतीतिः' इति यद्यप्युपमानविशेषणान्येव ते तथापि शब्दशक्तिमहिम्ना श्रुत्यैव षष्ठीवत्संबन्धं प्रतिपादयन्तीति तत्सद्भावे श्रौती उपमेति। एवमुपमेयाद्यर्थचतुष्टयोपादानमेव पूर्णत्वप्रयोजकमित्यप्युक्तं तत्रैव। उपमानोपमेयसाधारणधर्मोपमाप्रतिपादकानामुपादाने पूर्णेति। तथा गीःशब्दप्रयोगध्वनितं वाक्यगतत्वे प्रयोजकमपि प्रत्येकं चतुर्णामपि पदार्थानां विभिन्नासमस्तादिपदैः प्रतिबोधनमेवेत्यप्युक्तं काव्यप्रदीपकृतापि। वाक्यं विग्रहः तेन उपमानादिपदानि चत्वार्यपि यत्रासमस्तानि भिन्नविभक्तिकानि सा वाक्यगतेति। ननु धीरिवेत्यत्र इवेन समासो विभक्त्यलोपश्चेत्यनुशासनादत्रापि समाससत्त्वात्कथमिदं वाक्यगतायाः श्रौत्याः पूर्णोपमाया उदाहरणमिति चेत्सत्यम्। उक्तशास्त्रस्य वैकल्पिकत्वात्। रसगङ्गाधरेऽपि इवेन समास इत्येव पाठान्नित्यत्वाभावादिति तथैवोक्तत्वाच्च। तस्माद्धंसीवेत्यादिवदिदं युक्तमेवोदाहरणमिति दिक्॥ ३४॥ एवं श्रौतीं वाक्यगतां पूर्णोपमां लक्षणोदाहरणाभ्यां निर्वर्ण्येदानीं क्रमप्राप्तामार्थीं तां लक्षयति—**यस्यामित्याद्यर्धेन**। यस्यामुपमायां इवादेः उपमावाचकस्येवशब्दादेो-

**श्रौती समासगा पूर्णा या समस्तेव बोधिता।**
**त्रयी कटाक्षश्रेणीव गुर्वङ्घ्रिनखभाऽवतु ॥ ३६ ॥**
**आर्थी समासगा पूर्णा या समस्तार्थबोधिता।**
**तमोऽपहरणात्साक्षात्सूर्यतुल्यः सदागमः ॥ ३७ ॥**
**श्रौती तद्धितगा पूर्णा तन्मुखं चारुचन्द्रवत्।**
**आर्थी तु तादृशी ज्ञेया तद्दृशौ मीनवच्चले ॥ ३८ ॥**

रित्यर्थः। आदिना यथेववाशब्दा यत्परा इति काव्यप्रकाशप्रसिद्धयथादेर्ग्रहः। उक्तिः कथनं तुल्यादिना। तुल्यादिपदोपादाने आर्थीति काव्यप्रकाशोक्तेस्तुल्यसमसदृशसंकाशनीकाशसंनिभसमानसधर्मसब्रह्मचारिप्रभृतिपदेनेत्यर्थः। अस्ति सा वाक्यगा आर्थी उपमावाचकस्येवादेः सादृश्यलक्षणस्यार्थस्य तत्तुल्यत्वादिबोधान्यथानुपपत्त्या सिद्धत्वादार्थिकी भवतीत्यन्वयः। तथाच तुल्यादिपदबोधितेवाद्यर्थकत्वं वाक्यगार्थपूर्णोपमात्वमिति तल्लक्षणसक्षेपः। अथ तामुदाहरति—**सदृशमिति।** सुदृशः स्वमृगाक्ष्याः मुखं सौरभ्यान्मनोज्ञत्वात्। शरदिति शरत्कालीनकमलेनेत्यर्थः। सहार्थेऽयं तृतीया। सदृशं तुल्यमस्तीति संबन्धः। अत्रेवपदार्थः साधर्म्यं सदृशपदेनैवार्थादवबोध्यत इति लक्षणसंगतिः ॥ ३५ ॥ अथ क्रमप्राप्तां श्रौतीं समासगां पूर्णोपमां लक्षयति—**श्रौतीति। समस्तेति।** समस्तः समासं प्राप्तः एतादृशः यः इव इवशब्दः तेन बोधिता ज्ञापिता सा समासगा श्रौती पूर्णोपमा भवतीति योजना। एवंच समस्तेवशब्दबोधितसादृश्यत्वे सति श्रौतसमासमपूर्णोपमालंकारत्वमिति तल्लक्षणं फलितम्। तामुदाहरति—**त्रयीति।** अत्र अवनं संसारतमसः सकाशात्संत्राणमेव संप्रार्थ्यमानं साधारणधर्मः। अत्रेवेन समासात्समासगत्वम्। शिष्टं तु स्पष्टमेव ॥ ३६ ॥ इदानीमार्थी समासगामपि पूर्णां क्रमप्राप्तत्वाल्लक्षयति—**आर्थीत्यर्धेन। समस्तेति।** या समस्तार्थबोधिता समस्तानां समासं प्राप्तानां पदानां योऽर्थस्तेन बोधिता ज्ञापितेत्यर्थः। सेत्यार्थिकम्। आर्थी समासगा पूर्णा उपमा भवतीति योजना। एव च समस्तपदोपस्थितार्थबोधितपूर्णोपमात्वमेव तत्त्वमिति तल्लक्षणमावेदितं भवति। तामुदाहरति—**तमोपहरणा**दित्याद्यर्धेन। सदागमः सच्छास्त्रम्। अत्र सूर्येण तुल्यः सम इति विग्रहेण बोध्यमानार्थस्य समासघटितपदजन्यत्वावच्छिन्नार्थबोधितत्वात्तत्त्वमिति तत्त्वम् ॥ ३७ ॥ अथ श्रौतीमार्थी च तद्धितगां तां क्रमात्पूर्वोत्तराभ्यां पादाभ्यां संक्षेपतः संलक्ष्योदाहरति—**श्रौतीति।** अत्र चन्द्रवदिति समुदाहृतवतेस्तत्र तस्यैवेति सादृश्ये विधानादियं श्रौती। तथाच सादृश्यार्थकत्वेन विवक्षितवति प्रत्ययघटितत्वं श्रौततद्धितगपूर्णोपमात्वमिति तल्लक्षणं फलितम्। एवं मीनवदित्यस्य वतेस्तु तेन तुल्यमिति विधानात्सादृश्यवदर्थबोधकतयात्रार्थी। तेन सादृश्यवदर्थबोधकत्वेन विवक्षितवति प्रत्ययघटितत्वमेवार्थतद्धितगपूर्णोपमात्वमिति चैतल्लक्षणमपि पर्यवस्यति ॥ ३८ ॥ एवं षोढा पूर्णोपमा-

**अथ लुप्तोपमानेन लुप्ता वाक्यगता यथा।**
**गुरो तं न वयं विद्मस्तुलां ते योऽधिरोहति ॥ ३९ ॥**
**समासेनोपमानस्य लोपे सैव समासगा।**
**यत्तुला त्वन्मुखे बाले ब्रह्माण्डेऽत्र शशी क्व सः ॥ ४० ॥**
**अथ धर्मेण लुप्ता या सा श्रौती वाक्यगा यथा।**
**सतां चेतो वचः शीलं कर्म चाप्यमृतं यथा ॥ ४१ ॥**
**अर्थाद्धर्मस्य लोपश्चेदार्थी वाक्यगता तथा।**
**अपवादेऽपि विच्चित्तं समं वज्रेण दृश्यते ॥ ४२ ॥**

---

भेदानुद्दिष्टक्रमानुसारेण संक्षिप्येदानीं तदनुसारेणैवैकोनविंशतिसंख्याकांल्लुप्तोपमाभेदानपि लक्षणादिना दिदर्शयिषुः प्रथमं वाक्यगतामुपमानलुप्तां लक्षयति—**अथेति**। अथ पूर्णोपमाषट्कनिरूपणानन्तरम्। लुप्ता कथ्यत इति शेषः। अत्र लक्षणं तु वाक्यगतत्वे सत्युपमानशून्यत्वमिति निगदव्याख्यातमेव। तामुदाहरति—**गुरो तमिति**। एवच यं परमात्मानमवाङ्मनसगोचरं साक्षादैन्द्रियकप्रत्यक्षेण वयं न विद्मः। स एवाद्वैतः परमेश्वरस्ते तुलामधिरोहतीति ध्वननान्नैवात्रोपमानाभावप्रयुक्तसादृश्याभावादलंकारान्तरशङ्कावसर इत्याशयः ॥ ३९ ॥ एवं समासगामुपमानलुप्तां संलक्ष्योदाहरति—**समासेनेति**। सैव उपमानलुप्तैव। अत्र ब्रह्माण्ड इत्युक्त्या ब्रह्माण्डान्तरे तादृशो निष्कलङ्कक्षयादिः शशी संभावित एवेति भावः। यथावा रसगङ्गाधरे—'यत्तुलनामधिरोहसि लोकोत्तरवर्णपरिमलोद्गारैः। कुसुमकुलतिलक चम्पक न वयं तं जातु जानीमः'। अत्र वर्णसौरभेति वाच्यम्। तेन नाश्लीलत्वावकाशः ॥ ४० ॥ अथ धर्मलुप्तां श्रौतीं वाक्यगतां लक्षयति—**अथेति**। धर्मलुप्ताभेदकथनारम्भार्थोऽथशब्दः। उपमानलुप्ताभेदद्वयकथनानन्तर्यार्थो वा। तामुदाहरति—**सतामिति**। अत्र क्रमाच्चेतःप्रभृतिषु चतुर्ष्वप्यमृतसाधर्म्याण्यतिनैर्मल्यमाधुर्यशीतलत्वजीवातुत्वानि कवीच्छयैवानुक्तानीति धर्मलोपः। एवं श्रौतत्वं श्रवणमात्रेण शक्तिवृत्त्यैवार्थज्ञापकत्वम्। वाक्यगतत्वं चासमस्तपदबोध्यत्वम्। यथावा काव्यप्रकाशे—'धन्यस्यानन्यमान्यस्य सौजन्योत्कर्षशालिनः। करणीयं वचश्चेतः सत्यं तस्यामृतं यथा' इति ॥ ४१ ॥ एवं धर्मलुप्तामार्थीं वाक्यगतामपि संलक्ष्योदाहरति—**अर्थादिति**। तथा धर्मलुप्तेत्यर्थः। विच्चित्तं विदां तत्त्वज्ञानां चित्तमिति यावत्। अपवादे जनानामारोपितदुर्वाक्यप्रवादे सत्यपीत्यर्थः। समं वज्रमणिवद्दुर्भेद्य भवति। यथावा रसगङ्गाधरे—'कोपेऽपि वदनं तन्वि तुल्यं कोकनदेन ते। उत्तमानां विकारेपि नापैति रमणीयता' इति। अत्र तुल्यं तामरसेन ते इति वाच्यम्। तथाच कोपेतरकाले अपिशब्दसूचितकोकनदोपमानध्वनितमुखरक्तत्वदोषावमोषः। अन्यथा श्रीमदप्पय्यदीक्षितादिग्रन्थतात्पर्यानवबोधनादिना तान्दूषयतामेतेषामपि प्रदीपाधोऽन्धकारन्यायापात इति दिक् ॥ ४२ ॥

**श्रौती समासगा धर्मलुप्ता तल्लोप ऐच्छिके ।**
**हेरम्बारुणबिम्बाभेव श्रीः क्व त्वां विनेक्ष्यते ॥ ४३ ॥**
**आर्थी समासगा धर्मलुप्ता चेदार्थिकोऽत्र सः ।**
**भारति त्वदपाङ्गोऽयं क्षीरोदोर्मिसमोद्यमे ॥ ४४ ॥**

---

एवं वाक्यगतां धर्मलुप्तां श्रौतीमार्थीं च समुदाहृत्याथ समासगतां तां समुदाहरन्प्रथमं समासगां धर्मलुप्तां श्रौतीं लक्षयति—**श्रौतीति** । तत्र श्रौतीपदेनोपमावाचकस्येवशब्दस्य श्रवणसत्वमेव विवक्षितम् । तस्याः समासगत्वं तु 'इवेन समासो विभक्त्यलोपश्च' इति शास्त्रसिद्धमेव । ऐच्छिके कवीच्छामात्रसिद्धे । तल्लोपे धर्मलोपे सतीत्यर्थः । एवंच कवीच्छयैव साधारणधर्मानुपादाने सति सामासिकेवशब्दश्रवणजन्योपस्थितिविषयत्वं श्रौतसमासगतधर्मलुप्तोपमात्वमिति तल्लक्षणं फलति । तामुदाहरति—**हेरम्बेति । अरुणेति** । 'अरुणः सविता रविः' इत्यमरादरुणपदध्वनितौदयिकसूर्यबिम्बप्रभासदृशीत्यर्थः । श्रीः शोभा । हे हेरम्ब, त्वां विना क्व ईक्ष्यत इत्यन्वयः । अत्र निरतिशयारक्तवर्णत्वे सति सद्यः सकलतमःशामकत्वरूपसाधारणधर्मस्य कविना स्वेच्छयैवानुपादानात्सामासिकेवशब्दश्रवणाच्च लक्षणसंगतिः । यथावा मदीये नीतिशतपत्रे—'हितेच्छुना तु कर्तव्यः सतामेव समागमः । सरसानां सुमनसां षट्पदेनेव सर्वदा' इति । नचात्र हितेच्छुत्वमेव साधारणधर्मः सुखसामान्यस्य हितपदव्यवहार्यस्य षट्पदा उपमानीभूते भ्रमरे तथात्राध्याहार्ये उपमेयीभूते पुंसि चेच्छायाः सत्वादिति वाच्यम् । पुंसि हितपदार्थधर्मादिचतुर्विधपुरुषार्थविषयकेच्छाया एव विवक्षितत्वेन षट्पदे तु मकरन्दाद्यास्वादनावग्रहणमात्रजन्यक्षणिकसुखस्यैव हितपदेन विवक्षितस्येच्छायाः सत्वेन वैषम्यात् । अन्यथा पुरुषे भ्रमरवत्क्षणभङ्गुरविषयसुखास्वादनैकेच्छुत्वविवक्षायां विधीयमानसार्वदिकनिरतिशयसप्रेमसद्रेकसमागमस्य वैयर्थ्यात्क्षुद्रसुखस्यासत्समागमादिनापि सुलभत्वाच्चेति दिक् ॥४३॥ अथावसरप्राप्तां समासगतामार्थीमपि धर्मलुप्तां लक्षयति—**आर्थीति** । सः साधारणधर्मसंबन्धलक्षणोपमानोपमेयभावः साधारणधर्मो वा । तथाच सदृशसमादिशब्दसमासे सति आर्थिकसाधारणधर्मसंबन्धलक्षणोपमानोपमेयत्वं आर्थिकसाधारणधर्मत्वं वा आर्थसमासगधर्मलुप्तात्वं तल्लक्षणं पर्यवसितम् । तामुदाहृति—**भारतीति** । अयि भारति शारदे, अयं ध्यानकालिकत्वेन साक्षिप्रत्यक्षः । त्वदपाङ्गस्तव नयनकोणः । अद्य त्वत्प्रसादकाले—**क्षीरेति** । क्षीरोदाद्देवादिमथ्यमानक्षीरसमुद्रात्सकाशादूर्मिराविभूर्तविलक्षणधावल्यशालिचञ्चलवीचिर्यस्यामृतस्य तेन समः शुक्लत्वशीतलत्वानुपमतर्पकत्वादिना सदृश इत्यर्थः । अस्तीत्यार्थिकम् । अत्र सामासिकोपमानाव्यवहितसमशब्दान्वयसत्वेन साधारणधर्मसंबन्धलक्षणोपमानोपमेयभावस्य साधारणधर्मस्य वा आर्थिकस्यैव सत्वाल्लक्षणसमन्वयः । तदुक्तं लघुशब्दमञ्जूषायाम् । काव्यप्रकाशस्वरसोऽप्येवमेव । तत्र ह्येवमुक्तम् । यथेववादिशब्दा यत्परास्तस्यैवोपमानताप्रतीतिरिति ।

**आर्थ्येव तद्धिते धर्मलुप्ता धर्माग्रहे भवेत् ।**
**अद्वैतब्रह्मकल्पेयं श्रीगुरोः करुणा मयि ॥ ४५ ॥**
**अथ वाचकलुप्ता तु षड्विधात्र समासगा ।**
**संस्मरामि प्रियापाङ्गं लोलेन्दीवरसुन्दरम् ॥ ४६ ॥**
**कर्मणिक्यजुगता शान्तः संसारममृतीयति ।**
**आधारे क्यजूगताऽऽत्मज्ञो वने हरिपुरीयति ॥ ४७ ॥**

---

यद्यप्युपमानविशेषणानि ते तथापि शब्दशक्तिमहिम्ना श्रुत्यैव तत्संबन्धं प्रतिपादयन्तीति तत्सद्भावे श्रौती उपमा । तेन तुल्यमित्यादौ प्रतीततुल्यतोपपत्तये साधर्म्यस्यार्थत्वादार्थीति । यत्परा इत्यस्य यदनन्तरमुपात्ता इत्यर्थ इति तत्रैव चाग्रे। एवंचेवादियोगे साधारणधर्मसंबन्धरूपोपमा वाच्या। सादृश्यप्रतीतिः सार्थी सदृशादिपदयोगे सादृश्यप्रतीतिः शाब्दी । उपमा त्वार्थी । सादृश्यं तु साधारणधर्मसंबन्धप्रयोज्यम् । सदृशादिपदशक्यतावच्छेदकतया सिद्धं सदृशसंदर्शने संस्कारोद्बोधकत्वस्य सर्वसंमतत्वेन तत्कारणतावच्छेदकतया च सिद्धमतिरिक्तपदार्थः । न चातिरिक्तपदार्थत्वे गौतमकणादोक्तपदार्थसंख्याविरोध इति वाच्यम् । प्रमेयपदार्थे गौतमोक्तेऽन्तर्भावादिति । एवं चेह प्रथमश्लोकोदाहरणे अरुणबिम्बाभेवेति समस्तेवशब्दश्रवणेनोपमा श्रौतीति द्वितीयश्लोकोदाहरणेपि क्षीरोदोर्मिसम इति समस्तसमपदश्रवणेन सा आर्थीत्युचितमेवेति संक्षेपः ॥४४॥ अथ तद्धिते समभिमतामार्थीमेव धर्मलुप्तां संलक्ष्योदाहरति—**आर्थ्येवेत्यादि** पूर्वोत्तरार्धाभ्याम् —**अद्वैतेति** । इयं ज्ञानरूपा मयि श्रीगुरोः करुणा । **अद्वैतेति** । स्वप्रकाशात्मातिरिक्तवस्त्वभानस्य ब्रह्मतज्ज्ञानयोः साम्येऽपि ज्ञाने दृश्यत्वेन कल्पाख्यतद्धितप्रत्ययोक्तेषन्न्यूनत्वमिति भावः ॥४५॥ एवं यथोद्देशक्रमप्राप्तां धर्मलुप्तोपमां चतुर्विधां निरूप्येदानीमवसरप्राप्तां षोढा वाचकलुप्तां निरूपयन्नादौ समासगां तां निरूपयति—**अथेति** । धर्मलुप्तोक्त्यनन्तरमित्यर्थः । तामुदाहरति—**संस्मरामीति** । लोलेन्दीवरमिव सुन्दरस्तमिति विग्रहादुपमावाचकस्येवशब्दस्य सामासिक एव लोप इति लक्षणसंगतिः । लोलपदेन चपलत्वं ध्वन्यते ॥ ४६ ॥ एवं कर्मणि क्यजूगतां तामाह—**कर्मणीत्यर्धेन** । शान्तः 'ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति' इति गीतोक्ताद्वैतात्मप्रमित्यौत्तरकालिकशरीरादिद्वैतविषयकाभासत्वाद्वैतात्मविषयकदृश्यबाधाधिष्ठानत्वोपलक्षितमुक्तिरूपतानुसंधानलक्षणनिरतिशयान्तःशान्तिमानित्यर्थः । संसारमाप्रारब्धं प्रतीयमानं प्रपञ्चमित्यर्थः । अमृतीयति । अमृतमिवाचरतीत्यर्थे अमृतशब्दात्क्यच्प्रत्ययोऽयम् । तेनोक्तसंसारं प्रति कैवल्यमिवाचरतीति फलतीत्याकूतम् । तद्वदाधारे क्यजूगतामपि तामाह—**आधार इत्युत्तरार्धेन** । वने एकान्तवासार्थं सेवितेऽरण्येऽपीत्यर्थः । आत्मज्ञः हरीति । हरिपुरं वैकुण्ठं तद्वदाचरतीत्यर्थः । एतेन तस्य यावद्द्वैतविषयकमृगजलतुल्यमिथ्यात्वाध्यवसानेन नैसर्गिकफलीभूतवैराग्यशालित्वं सूच्यते ॥ ४७ ॥ ततः

क्यङ्गता तु स्थितप्रज्ञः सदा विन्ध्याचलायते ।
कर्मकर्तृणमुलगे ते विबोध्ये अप्यनुक्रमात् ॥ ४८ ॥
ये ये पीयूषपायं त्वां तत्त्वविद्ये पिबन्त्यलम् ।
मुक्तिप्रियतमावासं वसन्त्येव जनेपि ते ॥ ४९ ॥
धर्मोपमानलुप्ता तु वाक्यगा च समासगा ।
सद्गुरो न समस्तेऽत्र विद्ये न त्वत्समापि च ॥ ५० ॥
अथ वाचकधर्माभ्यां लुप्ते क्विबूगसमासगे ।
दृगुत्पलति ते बाले वदनेन्दाविहाद्भुतम् ॥ ५१ ॥
वाचकेनोपमेयेनाप्ययुक्ता क्यजूगता यथा ।
कान्तयाऽद्योर्वशीयन्त्या कृतकृत्यः प्रियोऽभवत् ॥ ५२ ॥

---

क्यङ्गतां तां प्रतिबोधयति—**क्यङित्यर्धेनैव । स्थितेति** । समाहितस्थितप्रज्ञोऽसंप्रज्ञातसमाध्यधिरूढ इति यावत् । एवं कर्मणि कर्तरि च णमुल्प्रत्ययगे अपि ते विशदयति—**कर्मेत्या**दिसार्धेन । ते लुप्तोपमे इत्यर्थः ॥ ४८ ॥ ते समुदाहरति—**ये य इत्यादि**पूर्वोत्तरार्धाभ्याम् । हे तत्त्वविद्ये, अद्वैतब्रह्मविद्ये इत्यर्थः । ये ये ज्ञानिनः त्वां प्रति । अत्र स्त्रीलिङ्गत्वात्तद्द्वरसुखदत्वाच्च स्वकीयरमणीत्वं ध्वन्यते । पीयूषपायम् । अत्र पीयूपमिवेति कर्मण्युपमान उपपदे णमुल्प्रत्ययः । अलं यथेच्छं पिबन्त्यास्वादयन्तीत्यर्थः । **मुक्तीति** । मुक्तिप्रियतमा इवेति कर्तर्युपमान उपपदेऽत्र णमुल्प्रत्ययः । जने लोकेपीत्यर्थः । एवंच तेषां लोकबाधा नैव भवतीति भावः । त एव वसन्तीति सबन्धः । यथावा रसगङ्गाधरे—'निरपायं सुधापायं पयस्तव पिबन्ति ये । जह्नुजे निर्जरावासं वसन्ति भुवि ते नराः' इति ॥ ४९ ॥ एवमुद्देशक्रमप्राप्तां धर्मोपमानलुप्तां वाक्यसमासगत्वेन द्विविधामप्याह—**धर्मोपमानेति** । तामुदाहरति—**सदित्यादिना** । अत्र पूर्वपादे वाक्यगा अन्त्ये समासगेति विभागः । स्फुटमेवान्यत् ॥ ५० ॥ एवमुद्दिष्टक्रमप्राप्तामेव वाचकधर्मलुप्तां क्विबूगतत्वसमासगतत्वाभ्यां द्विविधामप्यभिधत्ते—**अथेति** । तत्र पूर्वोत्तरचरणाभ्यामुभे अप्युदाहरति—**दृगित्या**द्युत्तरार्धेन । यथावा रसगङ्गाधर एव—'कुचकलशेष्वबलानामलकायामथ पयोनिधेः पुलिने । क्षितिपाल कीर्तयस्ते हारन्ति हरन्ति हीरन्ति' इति । 'शोणाधरांशुसंभिन्नास्तन्वि ते वदनाम्बुजे । केसरा इव काशन्ते कान्तदन्तालिकान्तयः' इति च । अत्र वदनाम्बुज इत्येवोदाहरणं बोध्यम् ॥ ५१ ॥ एवं वाचकोपमेयलुप्तां क्यजूगतामपि कथयति—**वाचकेनेति** । तामुदाहरति—**कान्तयेति** । अद्य तारुण्योदयसमय इत्यर्थः । उर्वशीमिवात्मानमाचरतीत्याचारार्थके क्यचि उर्वशीयन्ती तयेत्यर्थः । अत्रोपमेयस्यात्मनो वाचकस्येवशब्दस्य च सामासिकशास्त्रतो लोपः ॥ ५२ ॥ तद्वदेव क्रमप्राप्तां धर्मोपमानवाचकलुप्तां समासगां व्युत्पा-

**हीना धर्मोपमानाभ्यां समासे वाचकेन च ।**
**मृगबालदृशं दृष्ट्वा विवेकः कस्य सुस्थिरः ॥ ५३ ॥**
**दीक्षितैरुदिता वाचकोपमानविलोपनात् ।**
**ग्राह्या मृगविशालाक्षीत्यादौ लुप्तोपमाप्यसौ ॥ ५४ ॥**

---

दयति—**हीनेति** । समासे धर्मोपमानाभ्यां वाचकेन च हीनेत्यन्वयः । तामुदाहरति—**मृगेति** । मृगबालस्य हरिणकिशोरस्य दृशाविव दृशौ यस्याः सा तथा तामित्यर्थः । अत्रोपमानीभूतदृशोर्वाचकस्य च सामासिकशास्त्रकृतो लोपः साधारणधर्मस्य चपलनीलत्वादेः कवीच्छाकृत एवेत्युक्तसमासे त्रयाभावात्तथात्वम् ॥ ५३ ॥ नन्वेवं प्राचां काव्यप्रकाशकारादीनां नव्यानां रसगङ्गाधरकृतां च मतमनुसृत्य त्वया सप्तैव लुप्तोपमाभेदान्सामान्यतः प्रतिज्ञाय तत्र प्राथमिके पञ्चभेदानामवान्तरभेदेष्वन्तिमतन्मुख्यभेदद्वये च कुवलयानन्दोक्तलुप्तोपमाष्टकमध्ये वाचकोपमानलुप्तातिरिक्तलुप्तोपमानां सप्तानामन्तर्भावं समभिप्रेत्य सैव परमतत्वपृथक्त्वेन संग्राह्येत्युक्तं, तत्र कथं तदन्तर्भावप्रकार इतिचेदुच्यते । वाचकलुप्तायास्तद्विद्वौरीत्युदाहृतायाः समासगायां वाचकलुप्तायां 'सस्मरामि प्रियापाङ्गलोलेन्दीवरसुन्दरम्' इत्युदाहृतायाम् । धर्मलुप्तायां इन्दुतुल्यास्येत्युदाहृताया आर्थिकधर्मलुप्तायां, समासगायां भारति त्वदपाङ्गगोऽयं क्षीरोदोर्मिसमोऽद्यमे' इत्युदाहृतायां, धर्मवाचकलुप्तायाः 'कर्पूरन्ती दृशोर्मम' इत्युदाहृतायाः कर्मणिक्यजगतायाम् 'शान्तः संसारममृतीयति' इत्युदाहृतायां, वाचकोपमेयलुप्तायाः 'कान्त्या स्मरवधूयन्ती' इत्युदाहृतायां वाचकोपमेयलुप्तायां, क्यङ्गतायां 'कान्तयाऽद्योर्वशीयन्त्या कृतकृत्यः प्रियोऽभवत्' इत्युदाहृतायां, उपमालुप्तायास्तु वाक्यगतोपमानलुप्तायां 'गुरो तं न वयं विद्मस्तुलां ते योऽधिरोहति' इत्युदाहृतायां, धर्मोपमानलुप्तायाः, समासगोपमानलुप्तायां 'यत्तुला त्वन्मुखे बाले ब्रह्माण्डेऽत्र शशी क्व सः' इत्युदाहृतायां, धर्मोपमानवाचकलुप्तायाः धर्मोपमानवाचकलुप्तसमासगायां 'मृगबालदृशं दृष्ट्वा विवेकः कस्य सुस्थिरः' इत्युदाहृतायां चान्तर्भावः स्फुट एव । अत्रोपमानलोपसहितानां चतसृणामपि लुप्तोपमानां कुवलयानन्दे 'यत्तया मेलनं तत्र लाभो मे यश्च तद्रतेः । तदेतत्काकतालीयमवितर्कितसंभवम्' इति व्याकरणक्लिष्टोदाहरणानि नैव प्रदर्शितानि । एवं चोक्तप्रतिज्ञाया युक्तत्वे अप्पय्यदीक्षितोक्ताष्टविधलुप्तोपमास्वसंभावितप्रकृतोक्तैकोनविंशतिसंख्याकलुप्तोपमान्तर्भावायाः वाचकोपमानलुप्ताया अत्रावश्यसंग्राह्यत्वं कथयंस्तामपि प्रसिद्धिप्रदर्शनपूर्वकमुदाहरति—**दीक्षितैरिति** । दीक्षितैरप्पय्यदीक्षितैः । **वाचकेति** । वाचकोपमानयोर्यद्विलोपनं समासवशादप्रतिभानं तस्मादित्यर्थः । या वाचकोपमानलुप्ता लुप्तोपमा उक्ता कुवलयानन्दे प्रतिपादितास्तीत्यार्थिकम् । इहेत्यपि असावपि मृगेति । मृगस्य अक्षिणी इव विशाले अक्षिणी नेत्रे यस्याः सा तथेत्यर्थः । इत्यादावुदाहरणे प्रसिद्धेत्यर्थः । ग्राह्या संग्राह्येत्यन्वयः । एवमुदा-

**एवं पूर्णोपमा षोढाऽथ लुप्तैकोनविंशतिः ।**
**षड्विंशतिः समाख्यातास्त्युपमाभित्सहानया ॥ ५५ ॥**
**अन्येऽपि चित्रमीमांसाद्युदिताः शतशः किल ।**
**सन्ति लुप्तोपमाभेदास्ते नोच्यन्तेऽत्र विस्तरात् ॥ ५६ ॥**
**मालादिभेदादुपमाप्यनन्तैवं भविष्यति ।**
**संख्यातुमथ निर्णेतुं शक्यतेऽसौ कुतोऽविदा ॥ ५७ ॥**

---

हरणान्तराण्यपि हंसमन्थरगामिनीत्यादीन्यूह्यानि ॥ ५४ ॥ तदेवं सर्वोप्ययमुपमाभेदः षड्विंशतिसंख्याक एवेत्युपसंहरति—**एवमिति । षडिति ।** अनयाऽनुपदोदाहृतया दीक्षितसंमतलुप्तोपमया सह उपमाभिद् अत्र संगृहीतोपमाभेदसंततिरित्यर्थः । **षडिति । समिति** ॥ ५५ ॥ ननु किं षड्विंशतिसंख्याका एव सर्वेप्युपमानभेदाः । नेत्याह—**अन्येऽपीति ।** आदिना काव्यप्रकाशरसगङ्गाधरादयः । तथाचोक्तं काव्यप्रकाशे—'एवमेकोनविंशतिर्लुप्ताः पूर्णाभिः सह पञ्चविंशतिरिति स्वाभिमतोपमाभेदसंख्यां प्रख्याप्य 'अनयेनेव राज्यश्रीर्दैन्येनेव मनस्विता । मम्लौ साथ विषादेन पद्मिनीव हिमांभसा' इत्यभिन्ने साधारणे धर्मे । 'ज्योत्स्नेव नयनानन्दः सुरेव मदकारणम् । प्रभुतेव समाकृष्टसर्वलोका नितम्बिनी' इति भिन्ने वा तस्मिन्नेकस्यैव च बहूपमानोपादाने मालोपमा । यथोत्तरमुपमेयस्योपमानत्वे पूर्ववदभिन्नभिन्नधर्मत्वे । 'अनवरतकनकवितरणजललवभृतकरतरङ्गितार्थततेः । भणतिरिव मतिर्मतिरिव चेष्टा चेष्टेव कीर्तिरतिविमला ॥ मतिरिव मूर्तिर्मधुरा मूर्तिरिव सभा प्रभावचिता । तस्य सभेव जयश्रीः शक्या जेतुं नृपस्य न परेषाम्' इत्यादिका रशनोपमा च न लक्षिता । एवं वैचित्र्यसहस्रसंभवादुक्तभेदानतिक्रमाच्चेति । शिष्टं तु स्पष्टमेव ॥ ५६ ॥ नन्वेवमन्यैः पूर्वाचार्यैः प्रपञ्चितासूत्रिताश्चोपमाभेदा अत्र विस्तरभयान्मा संगृह्यन्तामथापि त्वयैवाद्वैतामृतमञ्जर्यां रतिनीतिमुकुले—'भव्या निजैकसेव्या ददती चातुर्यतश्चतुर्वर्गम् । स्वस्मिन्नेव रतिमती सतीव मतिरेव जयति नीतिरपि' इत्युक्ताश्लेषतुल्ययोगितोपस्कृतोपमा । तथा मुकुलान्तरे—श्रुतिमपि विलङ्घयन्तं संदृष्ट्वा वैदिको न कः स्नायात् । यमिनामिवेह जिनमपि जिनमिव परकामिनीकटाक्षमपि' इति तदुपस्कृतमालोपमा तद्वत् । 'स्वरसप्रकाशकानां यथायथा विकसनं सुविमलानाम् । विमलात्पाषाणादपि तथातथा जायते रसः स्वच्छः' इति श्लेषकाव्यार्थापत्त्युपस्कृतोपमानोपमेयलुप्तोपमा च । एवं कृष्णलीलामृतशिवभक्तिमुक्ताभरणादिषु संग्रथिता अपि विजातीयोपमाभेदाश्चात्र किमिति न संगृह्यन्त इति चेत्सत्यम् । प्राचीनाचार्योक्ततद्भेदसंग्रहकरणे विस्तरो भवति स्वोक्ततत्संग्रहे तु नासौ दण्डखण्डित इति पाण्डित्यविडम्बनमेव स्यात् । नचैवं तर्हि यावदुपलभ्यमानास्तेपि स्वकीयैः सह संगृह्यन्तां विस्तरदोषस्तु क्षीरार्णव इव गुणबाहुल्यादेव ग्रन्थे पराकरणीय इति वाच्यम् । आनन्त्यात्तदपि दुर्घटमेवेत्याह—**मालादीति ।** एवमुक्तरीतिस्वीकारे

**रसालंकारवस्तूनामुपस्कर्त्रीयमत्र सा ।**
**व्यङ्ग्यानामन्त्ययोर्वाच्ययोरपीत्यस्ति पञ्चधा ॥ ५८ ॥**

मालादिभेदान्मालोपमारशनोपमादिभेदादित्यर्थः । आदिना सकलस्वपरोक्ततद्भेदसंग्रहः । **उपमापि** । अपिना पूर्णलुप्तादितद्भेदानन्त्यं कैमुत्यसिद्धमेवेति द्योत्यते । अनन्ता असंख्याता भविष्यतीति योजना । ततः किं तत्राह—**संख्यातुमिति** । निर्णेतुं परीक्ष्याध्यवसितुं । अविदा असर्वज्ञेन मयेति शेषः । पक्षे उप विष्णुसमीपे मा लक्ष्मीः माला स्वयंवरणवैजयन्ती । आदिपदात्तदुत्तरं तदालिङ्गनादि तद्विशिष्टत्वादिभेदादित्यर्थः । पक्षान्तरे उपमा अद्वैतात्मप्रमा । माला अणिमादिश्रीकारिणी योगचर्या । आदिना त्यागचर्यादिः ॥ ५७ ॥ अथोक्तमेवानन्त्यमुपमायां युक्त्यापि द्रढयन्नस्या 'उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित् । हारादिवदलंकारास्तेऽनुप्रासोपमादयः' इति काव्यप्रकाशकारिकायामलंकुर्वन्ति रसमित्यलंकाराणां व्युत्पत्तिपक्षमेवोररीकृत्य रसोपस्कारकत्वरूपस्य स्वरूपलक्षणस्योक्तत्वाचमत्कारातिशयजनकत्वलक्षणं रसालंकारवस्त्वाख्यव्यङ्ग्यत्रयस्यालंकारवस्तुरूपवाच्यद्वयस्याप्युपकारकत्वं प्रथममुपमायां प्रतिबोधयंश्च तस्याः पञ्चविधत्वं प्रतिजानीते—**रसेति** । व्यङ्ग्यानां रसस्य नित्यं व्यञ्जनावृत्तिमात्रगम्यत्वादलंकारवस्तुनोस्तु पाक्षिकतद्गम्यत्वाचेत्यर्थः । तथा अन्त्ययोः अलंकारवस्तुनोः वाच्ययोरपि शक्तिवृत्तिप्रतिबोध्ययोरपि । यतः उपस्कर्त्री उपकारिका । अस्तीति हेतोः सा इह ग्रन्थे उपपादिता । इयं उपमालंकृतिः पञ्चधा भवतीति संबन्धः। तदुक्तं सोदाहरणमपि रसगङ्गाधरे 'एवं भेदा उपमावस्त्वलंकाररसरूपाणां प्रधानव्यङ्ग्यानां वस्त्वलंकारयोर्वाच्ययोश्चोपस्कारकतया पञ्चधा । तत्र व्यङ्ग्यवस्तूपस्कारिका यथा—'अनवरतपरोपकरणव्यग्रीभवदमलचेतसां महताम् । आपातकाटवानि स्फुरन्ति वचनानि भेषजानीव' । अत्र तादृशां वचनान्यर्थद्वारा सेवमानस्य मनागप्यलुभ्यतः परिणामे परं सुखं भवतीति प्राधान्येन व्यङ्ग्यस्य वस्तुन उपस्कारिका भेषजोपमा । व्यङ्ग्यालंकारोपस्कारिका यथा—'अङ्कायमानमलिके मृगनाभिपङ्कं पङ्केरुहाक्षि वदनं तव वीक्ष्य बिभ्रत् । उल्लासपल्लवितकोमलपक्ष्मूलाश्चञ्चूपुटं चपलयन्ति चकोरपोताः । अत्र प्राधान्येन व्यङ्ग्ये आरोपस्मारकचान्द्रकलङ्के भ्रान्तिमत्यलंकारे उपपादकस्य भालस्थमृगमदपङ्कविषयकस्याङ्काभेदारोपस्याङ्कसादृश्यरूपदोषमूलकत्वादुपमात्रालंकारः । रसोपस्कारिका तु तेषां यथा—'गुरुजनभयमद्विलोकनान्तः, समुदयदाकुलभावमावहन्त्याः । दरदलदरविन्दसुन्दरं हा हरिणदृशो नयनं न विस्मरामि' । नचात्र स्मृतिः प्रधानतया ध्वन्यत इति वक्तुं शक्यम् । न विस्मरामीति स्मृत्यभावनिषेधमुखेन स्फुटमावेदनात् । नापि पूर्वार्धगतत्रासौत्सुक्ययोः परस्पराभिभवकामयोः संधिः प्रधानम् । तस्य नायिकागतत्वेनानुवाद्यत्वात् उत्तरार्धगतस्मृत्यङ्गत्वाच्च । तस्माद्भावसंध्युपमालंकाराभ्यामुपस्कृता स्मृतिर्हापदगम्यः संतापोऽनुभावश्च विप्रलम्भमेवोपस्कुरुत

**उदाहरामि पञ्चापि सुखबुद्ध्यै क्रमात्स्फुटम् ।**
**चित्ररम्यमिदं दृश्यं पश्यन्नाश्नामि किंचन ॥ ५९ ॥**
**सङ्गोऽयमङ्गनापाङ्गरङ्गवत्क्षणभङ्गुरः ।**
**मूर्खमैत्रीव संपत्तिः प्रतिक्षणविनश्वरा ॥ ६० ॥**

---

इति तस्यैवात्र प्राधान्यमिति । वाच्यवस्तूपकारिका यथा—'अमृतद्रवमाधुरीभृतः सुखयन्ति श्रवसी सुखे गिरः । नयने शिशिरीकरोति मे शरदिन्दुप्रतिमं मुखं तव' । अत्र नयनशिशिरीकरणरूपे वस्तुनि वाच्ये मुखस्य शरदिन्दूपमोपस्कारिका । वाच्यालंकारोपस्कारिका यथा—'शिशिरेण यथा सरोरुहं दिवसेनामृतरश्मिमण्डलम् । न मनागपि तन्वि शोभते बत रोषेण तथेदमाननम्' । अत्र वाच्यस्योपमालंकारस्योपमोपस्कारिकेति । अत्र पूर्वार्धे उपमाद्वयस्य सत्वादेकोपस्कार्यापरोपस्कारिकेति तत्वम् । एवंचैवमादिभेदैरानन्त्यमन्यथानुपपत्त्यैव स्यादिति दिक् ॥ ५८ ॥ ननु भवत्वेवमुपमायाः सामान्यतो रसाद्युपस्कारकत्वमथापि तदुदाहरणमन्तरा कथमल्पप्रज्ञैरवधार्यमिति व्याकुलधियमाश्वासयति—**उदाहरामीत्य**र्धेन । तत्र रसोपस्कारिकां तामुदाहरति—**चित्ररम्यमि**त्यर्धेनैव । अहमिति शेषः । एतेनाहंकारेण सहात्मतादात्म्यस्य बाधितत्वं ध्वन्यते । इदं साक्षिप्रत्यक्षम् । दृश्यं अविद्यायनादिपञ्चककारणरूपमाकाशादितत्कार्यरूपं च द्वैतेन्द्रजालमित्यर्थः । **चित्रेति** । चित्रमिव रम्यमित्येतत् पश्यन् साक्ष्यात्मनानुभवन्नपीति रहस्यम् । किंच न तत्रत्यं तृणमारभ्य हिरण्यगर्भान्तवस्तुमध्ये किंचिदपि समुपभोग्यं वस्त्वित्यर्थः । न अश्नामि नैवोपभोगकर्मांकरोमीत्यन्वयः । अत्र चित्रभित्तिरिव मिथ्यामनोरममिति मैत्रायणीयश्रुतेर्मिथ्यात्वाध्यवसायानुसंधानवतो मम लोकदृष्टिदृष्टाप्रारब्धं जाग्रदादौ सुखाद्यन्यतरसाक्षात्काररलक्षणो भोगः परमार्थतो नैव कोऽपि किमपि कदापि भवतीति भावः । इह द्वैतावलम्बी तन्मिथ्यात्वानुसंधानोद्दीपितस्तन्मूलीभूतोक्तश्रुतिस्मृतियुक्तिविषयकस्मृतिव्यभिचारी वास्तविकभोगाभावानुभावितश्च निर्वेदाख्यः स्थाय्येव शान्तरसाभिधः प्राधान्येन ध्वन्यते । तदुपस्कारिकैव चित्रमिव रम्यमित्युपमेत्याशयः । यथावा मदीयाद्वैतामृतमञ्जर्याम्—'रसभरितापि गतरसा चतुरतराप्यतुलमन्थरोत्थाने । विलसति मतिरेकान्ते शान्तस्येयं रतान्तकान्तेव' । अत्र रतान्तकान्तेवेत्युपमा 'तद्यथा प्रियया स्त्रिया संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरमेवमेवायं प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरम्' इति श्रुत्यनुगृहीतत्वादिनात्रत्यशान्तरसपरिपोषिकेति स्फुटमेव ॥ ५९ ॥ एवमेव क्रमप्राप्तामलंकारोपस्कारिकां तामुदाहरति—**संगोऽयमिति** । अयं साक्षिप्रत्यक्षः सङ्गः प्रपञ्चाध्यासः । **अनङ्गनेति** । अङ्गनायाः । 'विशेषास्त्वङ्गना भीरुः कामिनी वामलोचना' इत्यमरात्तरुणीविशेषाया इत्यर्थः । यः अपाङ्गः नेत्रकोणः तस्य यः रङ्गः शोणशुक्लश्यामान्यतमवर्ण इत्यर्थः । तेन तुल्यं यथा स्यात्तथेति यावत् । **क्षणेति** । स यथाऽतिचञ्चलस्वभावत्वादनुपमक्षणविनश्वरस्त-

**हरिणाक्षि स्मितेनेदं शरदिन्दूपमं मुखम्।**
**पीयूषवचसो दानात्तन्वि किं तर्पयिष्यसि ॥ ६१ ॥**

द्रुत्पुत्रमित्रकलत्रादिषु ममत्वाध्यासः शरीरेऽहंत्वाध्यासश्च तदनुयोगिविनश्वरत्वेन विनश्वर एवास्तीति सरलमेव । अत्राङ्गनापाङ्गरङ्गवदित्युपमाया स्वोपमानतापन्नाङ्गनापाङ्गे शोणादिवर्णवत्त्वप्रसिद्धेस्तत्सादृश्येन निरुक्तसङ्गलक्षणे प्रपञ्चाध्यासे सत्वादित्रैगुण्यात्सूचित उपमालंकारे कारणत्वेनोपकारकत्वं स्पष्टमेवेति लक्षणसंगतिः । यथावा मदीये कृष्णलीलामृते—'प्रीतैकदा नन्दकुटुम्बिनी सा दासीषु कार्यान्तरयोजितासु । दध्युन्ममन्थ स्वयमेव गोपी बुद्धिर्दगाद्यास्विव सर्वशास्त्रम्' इति । अत्र बुद्ध्युपमा द्वितीयपादद्योतितकाव्यलिङ्गालंकारस्य स्वामित्वसाम्येनोपस्कारिकेति तत्वम्। अथ क्रमप्राप्तां व्यङ्गयस्य वस्तुन उपस्कारिकामुपमामुदाहरति—**मूर्खे**त्युत्तरार्धेनैव । अत्र प्रतिक्षणविनश्वरत्वात्संपत्तेस्त्याग एव श्रेयानिति द्योत्यमानवस्तुन उपस्कर्त्री मूर्खमैत्रीवेत्युपमेत्याकूतम् । यथावा मदीयभागीरथीकथाचम्पूप्रबन्धे—'नोरः कोरकितं दृशौ न वलितौ न भ्रूयुगं चानतं नास्यं व्याकुचितं वचो न सुरुचो वीचिप्रचाराञ्चितम्। मध्यो नाम्बरतां नितम्बयुगुलं नैवाद्रितां नो गतिर्मन्दत्वं च जगाम यद्यपि तथाप्येषा तु विश्वाधिका' इति । इह कोरकाविव सदाकारत्वेन स्तनौ संजातौ यस्मिंस्तदिति धर्मवाचकोपमेयलुप्तोपमया विश्वाधिकेन रुद्रेणैव वरणीयेयं पार्वती कन्यका विश्वाधिकेति व्यङ्गयस्य वस्तुन उपस्कारिकेति सारस्यमिति दिक् ॥ ६० ॥ एवं क्रमागतां वाच्यस्यालंकारस्योपस्कारिकामप्युपमामुदाहरति—**हरिणाक्षीति** । अत्र हरिणस्याक्षिणी इव अक्षिणी नेत्रे यस्याः सा तथा तत्संबोधने हे प्रिय इत्यर्थः । एवं चानया वाच्ययैव धर्मवाचकोपमानलुप्तोपमयाऽलंकृत्या इदं तव मुखं स्मितेन शरदिन्दूपममिति वाच्यैवोपमोपस्क्रियते । चन्द्रइवाङ्काधिरोपितहरिणसत्वेन मुखे तत्साधर्म्यघटकहरिणावयवसारीभूततन्नेत्रद्वयसदृशलोचनयुगुलस्य हरिणाक्षिपदेनैवोक्तत्वादिति तत्वम् । यथावाऽस्मदीये कृष्णलीलामृत एव—'चन्द्रानना ध्वान्तकचोडुभूषा संध्या कुसुम्भारुणचारुचेला । आकाश आदर्श इयं बभूव किं राधिकायाः प्रतिमैव रात्रिः' इति । अत्र चन्द्रेत्यादिचतुःसंख्योपमावाच्यैव वाच्यस्यैव रूपकपरिकरश्लेषोत्प्रेक्षाख्यालंकारचतुष्टयस्योपकारिका स्पष्टैव । अथ क्रमप्राप्तामेव वाच्यस्य वस्तुन उपस्कारिकामुपमामुदाहरति—**पीयूषेत्यु**त्तरार्धेनैव । हे तन्वि, कृशाङ्गि प्रिये, त्वम् । **पीयूषेति** । पीयूषमिव अमृतमिव मधुरतरं यद्वचः प्रार्थनप्रत्युत्तरवाक्यं तस्य दानात्समर्पणादित्यर्थः । एवं चानया धर्मवाचकलुप्तोपमया वाच्ययैव मां तर्पयिष्यसि किमिति वाच्यमेव वस्तूपस्क्रियते । अमृतस्य हि परमतमतर्पकत्वप्रसिद्धेरित्याशयः । यथावास्मदीयएव गीतसीतापतौ—'शुद्धादर्शततिं पुरः सुनटवत्संस्थाप्य गौरीं महामायामेव तदग्रतः स्वविलसन्नृत्यं स्वयं वीक्षितुम् । विष्ण्वाद्यैरभिपूजितः किमकरोत्साक्षाच्चिदात्मैव यः संध्याताण्डवमेष मां सुखयतु श्रीशंकरः

**असंभूतोपमानस्य वर्णनं कल्पितोपमा ।**
**कौङ्कुमस्तिलको भाले चन्द्रे भौम इव प्रिये ॥ ६२ ॥**
**अथास्या उपमेयं तु वर्ण्यमेवोच्यते बुधैः ।**
**वाचका अपि विज्ञेयाः शब्दाः साक्षाद्यथेववा ॥ ६३ ॥**
**धर्मः साधारणस्तद्वदुक्तव्यक्तभिदा द्विधा ।**
**उक्तोऽपि द्विविधो बिम्बप्रतिबिम्बत्वमागतः ॥ ६४ ॥**
**नागतश्चेति तत्त्वं तु साम्यं रूपादिजं मतम् ।**
**आद्यः पुनर्द्विधा शुद्धविशिष्टत्वभिदा मतः ॥ ६५ ॥**

---

स्वाङ्गिगम्' इति । अत्र सुनटवदिति वाच्यैवोपमा एष इत्यादिश्लोकशेषोक्त-प्रार्थनारूपवस्तुनो रूपकोत्प्रेक्षादेश्चोपस्कर्त्री ॥ ६१ ॥ एवमभूतोपमाख्यां कल्पितो-पमामपि लक्षयति—**असंभूतेति** । असंभूतमसंभावितम् । अयुक्तिसहमिति या-वत् । एतादृशं यदुपमानं तस्येत्यर्थः । तामुदाहरति—**कौङ्कुम इति** । तवास्ती-त्यार्थिकम् । 'तिलको द्रुमरोगाश्वभेदेषु तिलकालके । क्लीबं सौवर्चलक्लोम्नोर्न स्त्रियां तु विशेषके' इति मेदिनी । अत्र चन्द्रमण्डलाधिकरणकभौमसत्वमसंभावितमेवेति लक्षणसंगतिः । यथावा प्राचाम्—'स्तनाभोगे पतन्भाति कपोलात्कुटिलोऽलकः । शशाङ्कबिम्बतो मेरौ लम्बमान इवोरगः' इति । यथावा माघे—'सितातपत्रव्यज-नैरुपस्कृतः प्रसूनवर्षैरभिवर्षितः पथि । पिशङ्गवासा वनमालया बभौ घनो यथा-कौडुपचापवैद्युतैः' इति ॥ ६२ ॥ नन्वेवमुपमेयलक्षणमपि किंचिद्वाच्यमेवेत्यतस्त-दाह—**अथेति** । बुधैः 'वर्ण्योपमानधर्माणाम्' इत्यादिवदद्भिः प्राचीनाचार्यैरित्यर्थः । एवंच निरूपणोपेक्षानर्हत्वावच्छिन्नपदार्थत्वमुपमेयत्वमिति फलितमिति तत्त्वम् । यथोपमेयं निरूपितमेवमस्या उपमायाः किं वाचकमित्यत्राह—**वाचका अपीति । यथेति** । यथाशब्दः इवशब्दः वाशब्दश्चेति शब्दा उपमायाः साक्षाद-व्यवधानेन शक्तिवृत्त्यैव वाचका अपि प्रतिबोधका अपि विज्ञेया इति योजना । 'ववायथातथेवैवं साम्ये' इत्यमरः । 'यथा प्रह्लादनाचन्द्रः प्रतापात्तपनो यथा । तथैव सोऽभूदन्वर्थो राजा प्रकृतिरञ्जनात्' इति रघुवंशे—'सुखयतितरां न रक्षति परि-चयलेशं गणाङ्गनेव श्रीः । कुलभामिनीव विद्या जहाति नो जन्म जन्मापि' इति गोवर्धनसप्तशत्यपि । अत्र साक्षादित्युपलक्षणं परम्परासंबन्धेनोपमावाचकानां स-दृशसमसमानतुल्यतुलनादिसुबन्तशब्दानां वतिक्यङ्क्यजादितद्धितप्रत्ययानामपि ॥ ६३ ॥ ननु भवत्वेवमुपमेयस्योपमावाचकानामपि प्रतिबोधनमथापि तत्साधा-रणधर्मः कतिविध इत्याशङ्क्य समाधत्ते—**धर्म इति** । साधारण उपमानोपमेयो-भयानुगत इत्यर्थः । उक्तः शक्तिलक्षणान्यतरवृत्तिप्रतिपादितः । व्यक्तो व्यञ्जना-वृत्तिमात्रगम्यस्तयोर्या भिद्भेदस्तयेत्यर्थः । एवं साधारणधर्मस्य द्वैविध्यं सामान्य-तोऽभिधाय तत्रोक्ताख्यस्य प्रथमस्यापि द्वैविध्यं विधत्ते उक्तोऽपीत्यादिनाग्रिम-श्लोकगतेन नागतश्चेतीत्यन्तेन ॥ ६४ ॥ **नागतश्चेति** । ननु बिम्बप्रतिबिम्बत्वं प्रकृते

**विशेषणविशेष्योभययुग्मैरन्तिमस्त्रिधा।**
**सोन्त्योपि त्रिविधो वस्तुप्रतिवस्तुत्वभाक्तथा॥ ६६॥**
**तत्त्वं पर्यायशब्देनाभिहितत्वमुदीरितम्।**
**औपचारिक एवान्यः परः शब्दैकगोचरः॥ ६७॥**
**उक्तोऽनुगामी धर्मोऽयमेक एवोभयत्र यः।**
**ब्रह्मबोध इवानन्दजनकः श्रीगुरुर्मम॥ ६८॥**
**व्यञ्जनामात्रगम्यो यो धर्मः स व्यक्त उच्यते।**
**अहिनिर्ल्वयनीवेयं तनुर्मम विभात्यलम्॥ ६९॥**

---

कीदृक् संमतम्। प्रसिद्धबिम्बप्रतिबिम्बभावस्य श्रीवादर्शस्थमुखोभयनिष्ठस्य 'किं पद्मस्य रुचिं न हन्ति नयनानन्दं विधत्ते न किं वृद्धिं वा झषकेतनस्य कुरुते नालोकमात्रेण किम्। वक्त्रेन्दौ तव सत्ययं यदपरः शीतांशुरुज्जृम्भते दर्पः स्यादमृतेन चेदिह तदप्यस्त्येव बिम्बाधरे' इत्यमृतीयरसास्वादबिम्बाधरीयरसास्वादयोरालंकारिकसंमते बिम्बप्रतिबिम्बभावे सुतरामसंभवादित्यतस्तद्व्युत्पादयति—**तत्त्वं त्विति**। तुशब्दः प्रोक्तशङ्काशामकः। तत्त्व बिम्बप्रतिबिम्बत्वम्। **रूपेति**। आदिनोदाहृतरसादेर्ग्रहः। मतम्। आलंकारिकसंमतमित्यर्थः। एवमुक्ताख्यधर्मस्य द्वैविध्यं विधाय तत्र बिम्बप्रतिबिम्बभावापन्नस्य तस्य पुनः शुद्धविशिष्टत्वभेदेन द्वैविध्यं विधत्ते—**आद्य इति** ॥ ६५ ॥ तत्रापि विशिष्टस्यान्तिमस्य त्रैविध्यं विधत्ते—**विशेषणेति**। विशेषणे च विशेष्ये च उभये विशिष्टे च तेषां यानि युग्मानि द्वन्द्वानि तैरित्यर्थः। एवं बिम्बप्रतिबिम्बभावमनागतस्योक्ताख्यधर्मभेदस्यापि वस्तुप्रतिवस्तुत्वभाक्त्वादिना त्रैविध्यमभिधत्ते—**सोऽन्त्योऽपीति**॥ ६६॥ तल्लक्षणं संक्षिपति—**तत्त्वमिति**। तत्त्वं बिम्बप्रतिबिम्बभावानापन्नोक्ताख्यवस्तुप्रतिवस्तुत्वभावात्मविशेषणैकयुग्मत्वम्। पर्यायेत्यादि स्पष्टम्। अन्यः विशेष्यमानयमात्मकः परः विशिष्टद्वयात्मकश्च तद्भेद इत्यर्थः। बिम्बप्रतिभावमनागतस्य उक्ताख्यधर्मभेदस्य। तथाशब्दसमुच्चितमवशिष्टभेदद्वयं स्पष्टयति—**औपेति** ॥ ६७ ॥ अथैवं प्रतिपादितं साधारणधर्मं प्रत्येकमुद्दिश्य संलक्ष्य चोदाहरति—**उक्त इति**। **ब्रह्मेति**। अत्रानन्दजनकत्वं साधारणो धर्मः स तूपमाने ब्रह्मबोधे तथोपमेये श्रीगुरावप्यन्यूनानतिरिक्त एवेति लक्षणसमन्वयः। यथावा मदीये नीतिशतपत्रे—'गुणैरनेकैर्युक्तोऽपि दुष्टस्यैकस्य योगतः। वर्ज्य एव पुमान्भूयाद्भुजंगस्येव चन्दनः' इति ॥ ६८ ॥ एवं क्रमप्राप्तं व्यक्तं तं लक्षयति—**व्यञ्जनेति**। तमुदाहरति—**अहीति**। अहेः सर्पस्य निर्ल्वयनी निर्मुक्ता त्वगित्यर्थः। तथाच श्रूयते—'तद्यथाऽहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीतैवमेवेदꣳशरीरꣳशेते' इति बृहदारण्यके। एवं चात्र शरीरे तादात्म्याध्यासवैधुर्यं साधारणधर्मो व्यञ्जनैकगम्य इति तत्त्वम्। यथावा मदीयाद्वैतामृतमञ्जर्याम्—'सर्प इव भवति पिशुनस्तद्दंष्ट्रेवास्य गूढवागस्ति। तद्गतिरिवास्य रीतिस्तत्तनुरिव चास्य वै प्रकृतिः' इति। अत्र क्रमान्निरर्थकपरा-

**विशेषणं विना बिम्बादित्ववाञ्शुद्ध ईरितः ।**
**बाला नीलाम्बरास्येव रजनीवेन्दुना बभौ ॥ ७० ॥**
**विशेषणैकयोर्वस्तुप्रतिवस्तुत्वयोगतः ।**
**धर्मः करम्बितो बिम्बप्रतिबिम्बत्ववान्यथा ॥ ७१ ॥**
**खेलत्खञ्जनयुग्माढ्यं शरदब्जमिवाननम् ।**
**कदा द्रक्ष्यामि कान्तायाः संचलल्लोचनद्वयम् ॥ ७२ ॥**
**विशेष्यमात्रयोरेष उभयोरपि च क्रमात् ।**
**शिवोऽवतु जगद्गौर्यालिङ्गितः परिरम्भितः ॥ ७३ ॥**

पकारित्वं सार्वांशिकपरप्राणहरणप्रवीणत्वं निसर्गकुटिलत्वं बहिःशीतलत्वमृदुत्वपूर्वकान्तरतिदाहकत्वं चेति चत्वारः साधारणधर्माः क्रमाद्यङ्गया एवेति भावः ॥६९॥ तद्वदुक्तानुगतधर्मान्तर्गतप्राप्तबिम्बप्रतिबिम्बभावस्य शुद्ध भेदं लक्षयति—**विशेषणमिति ।** आदिना प्रतिबिम्बत्वम् । तमुदाहरति—**बालेति । अत्र नीलेति ।** नीलं अम्बरमाकाशं ययेति व्युत्पत्त्या रजनीविशेषणमपीदमिति नेदं शुद्धोदाहरणमिति विभावने तु बाला ममेयमास्येनेति विन्यसनीयम् । वस्तुतस्तु नीलेत्यादितृतीयान्तं नीलाम्बरपरिवृतं यदास्यं तेनेत्येकमेव पदं तेन न कोऽपि दोषः । तत्रैवेन्दुसाम्यात् । यथावा माघे—'अविज्ञातप्रबन्धस्य वचो वाचस्पतेरपि । व्रजत्यफलतामाशु नयद्रुह इवेहितम्' इति ॥ ७० ॥ अथ वस्तुप्रतिवस्तुभावविशिष्टोऽपि बिम्बप्रतिबिम्बभावापन्नः साधारणधर्मो विशेषणमात्रविशेष्यमात्रोभयवैशिष्टयभेदात्प्राक्त्रिविध उपन्यस्तस्तत्राद्यं लक्षयति—**विशेषणैकयोरिति ।** विशेषणमात्रयोरित्यर्थः । **वस्त्विति ।** पर्यायशब्देनाभिहितत्वादित्यर्थः । करम्बितः विशिष्टः ॥ ७१ ॥ तमुदाहरति—**खेलदिति ।** अत्र खेलत्संचलदिति विशेषणमात्रयोरेव एकार्थकत्वेन पर्यायपदाभिहिततया वस्तुप्रतिवस्तुभावात्खञ्जनलोचनद्वन्द्वयोः शरदब्जाननयोश्च बिम्बप्रतिबिम्बभावाच्च लक्षणसंगतिः । यथावा रसगङ्गाधरे—'चलद्भृङ्गमिवाम्भोजमधीरनयनं मुखम् । तदीयं यदि दृश्येत कामः क्रुद्धोऽस्तु किं ततः' इति ॥७२॥ एवं विशेषणमात्रयोर्वस्तुप्रतिवस्तुभावेन विशिष्टं बिम्बप्रतिबिम्बभावापन्नं साधारणधर्ममुदाहृत्य विशेष्यमात्रयोर्विशिष्टयोश्च वस्तुप्रतिवस्तुभावविशिष्टं तं समुद्दिश्यार्धेनैवानुक्रमात्त्रिपाद्या त्रिपाद्या समुदाहरति—**विशेष्येत्यादिद्वाभ्याम्।** विशेष्यमात्रयोर्वस्तुप्रतिवस्तुभावविशिष्टबिम्बादिभावापन्नसाधारणधर्मः । एषः प्रथमत्रिपाद्यानुपदं वक्ष्यमाण इत्यर्थः । उभयोर्विशिष्टयोः वस्त्वित्यादिधर्मान्तं प्राग्वत् । द्वितीयत्रिपाद्या वक्ष्यमाण इत्यार्थिकं शिव इत्यादि अयमित्यन्तम् । अत्रालिङ्गितत्वपरिरम्भितत्वयोर्वस्तुप्रतिवस्तुभावात्तद्विशिष्टयोर्गौरीज्योत्स्नयोश्च बिम्बप्रतिबिम्बभावः स्फुट एवेति लक्षणसमन्वयः । वाक्यान्वयस्तु अयं ध्यातत्वेन साक्षिप्रत्यक्षः । गौर्या आलिङ्गितः शिवः ज्योत्स्नया कौमुद्या परिरम्भितः आश्लिष्टः राकेशइव वासन्तिकपूर्णचन्द्रइव जगद्विश्वं अवतु संतापतः संरक्ष-

**राकेशो ज्योत्स्नयेवायं भाति कृष्णोऽपि राधया।**
**प्रसन्नोऽभिसरन्त्याब्दो यान्त्यैव तडिता ध्वनन्॥ ७४॥**
**बिम्बादित्वं विना वस्तु प्रतिवस्तुत्वभाग्यथा।**
**सतां निर्दूषणं चित्तं विभात्यमलमम्बिव॥ ७५॥**
**असन्नेवात्र यो धर्मः स तूपचरितो मतः।**
**संसर्गो मास्तु दुष्टानां वज्रकाठिन्यचेतसाम्॥ ७६॥**

---

त्वित्युत्तरश्लोकाद्यपादं गृहीत्वैव योज्यः॥ ७३॥ भातीत्यादिध्वनन्नित्यन्तं कृष्णोऽपि अभिसरन्त्या राधया प्रसन्नः सन् यान्त्या प्राप्तया तडिता विद्युता ध्वनन्मन्द मन्दं गभीरतरध्वनिं कुर्वन्नित्यर्थः। एतादृशः अब्द इव घन इव भातीति संबन्धः। अत्र विशेषणयोः प्रसादध्वननयोर्विशेष्ययोरभिसरणयानयोश्च वस्तुप्रतिवस्तुभावेनोभयतः करम्बितोऽयं कृष्णाब्दयोर्बिम्बप्रतिबिम्बभाव इति भावः। ननु प्रसादध्वननयोः क्रमात्कृष्णाब्दविशेषणयोः प्रसादशब्दितहर्षेऽपि गभीरमन्दतरध्वनिदर्शनादेकार्थकत्वेन पर्यायतया वस्तुप्रतिवस्तुभावेऽपि यानाभिसरणयोस्तडिद्राधाख्यविशेष्यप्रतियोगिकविशेषणत्वस्यैव स्पष्टत्वात्कथं विशेष्यत्वमिति चेत्सत्यम्। शुक्लां गामानयेत्यादौ व्यावर्त्यव्यावर्तकभावस्थले धर्मस्य विशेषणत्वे प्राधान्येन युक्तेऽप्ययं ब्राह्मणो विद्वानस्तीत्युद्देश्यविधेयभावस्थले विधेयस्यैव धर्मस्यापि प्राधान्येन विशेष्यत्वाद्धर्मिणोऽप्युद्देश्यत्वेन गौणतया विशेषणत्वाच्चेति रहस्यम्। यथावा रसगङ्गाधरे क्रमेणोदाहरणे—'आलिङ्गितो जलधिकन्यकया सलीलं लग्नः प्रियङ्गुलतयेव तरुस्तमालः। देहावसानसमये हृदये मदीये देवश्चकास्तु भगवानरविन्दनाभः' इति। 'दशाननेन दृप्तेन नीयमाना बभौ सती। द्विरदेन मदान्धेन कृष्यमाणेव पद्मिनी' इति च॥ ७४॥ एवं बिम्बप्रतिबिम्बभावापन्नस्य साधारणधर्मस्य वस्तुप्रतिवस्तुभाववैशिष्ट्येन भेदत्रयमुपपाद्येदानीं तदनापन्नस्य तस्य भेदत्रयं विवक्षुरादौ वस्तुप्रतिवस्तुभावैकरूपं साधारणधर्ममुद्दिश्य लक्षयति—**बिम्बादित्वमिति**। अत्र निर्दूषणत्वामलत्वयोरर्थैक्येऽपि पर्यायपदेनोक्तत्वाद्वस्तुप्रतिवस्तुभावः। यथावा रघुवंशे—'क्रमेण निस्तीर्य च दोहदव्यथां प्रचीयमानावयवा रराज सा। पुराणपत्रापगमादनन्तरं लतेव संनद्धमनोज्ञपल्लवा' इति। इह प्रचीयमानावयवत्वसन्नद्धमनोज्ञपल्लवत्वयोः शक्यार्थैक्याभावेऽपि पर्यवसितपरिपुष्टत्वरूपार्थैक्यात्तथात्वं बोध्यम्॥ ७५॥ अथ क्रमप्राप्तमुपचरितं साधारणधर्मं लक्षयति—**असन्नेवेति**। तमुदाहरति—**संसर्ग इति**। अत्र चेतसि काठिन्यं दृढतमावयवत्वरूपो धर्मः। सतु नास्त्येवेति लक्षणसंगतिः। यथावा प्राचाम्—'पुरुषाः प्रस्तरहृदयाः प्रस्तरहृदयापि कामिनी भवति। इति किं पृच्छस्व कुचौ मद्धृदये वसत ईदृशी रीतिः' इति। इह पाषाणप्रस्तरेत्याद्यमरात्प्रस्तरशब्दितपाषाणत्वं हृदयपदवाच्येऽन्तःकरणे नास्त्येवेति वा तद्वत्काठिन्यमपि तथैवेति प्रागवत्। परंतु तद्यङ्ग्यमेवेति शेषः॥ ७६॥ एवं क्रमप्राप्तमेव केवलशब्दात्मकं साधारणा-

**शब्दैकगोचरो योऽर्थो नोपमानोपमेययोः ।**
**खलाः सदैव कुटिलाः केशा इव लसदृशाम् ॥ ७७ ॥**
**एकाऽवाच्योपमा पूर्णा षड्लुप्तैकोनविंशतिः ।**
**दैक्षित्येका कल्पितैकेत्यष्टाविंशतिधास्त्यसौ ॥ ७८ ॥**
**पञ्चोपस्कर्तृता भेदैः सा भवत्खाब्धिभूमिता ।**
**तथा नवविधैर्धर्मैर्भिन्ना सा खर्तुदृग्धरा ॥ ७९ ॥**
**एवमन्यैश्च तद्भेदै रसगङ्गाधरोदितैः ।**
**कथमानन्त्यमत्र स्यादुपमायाः प्रतिश्रुतम् ॥ ८० ॥**
**अनन्वयोऽन्यसादृश्यव्यवच्छेद्युपमादिकम् ।**
**श्रीगुरो त्वत्समः शक्त्या त्वमेव द्वैत ईक्ष्यसे ॥ ८१ ॥**

धर्मं लक्षयति—**शब्दैकेति** । तमुदाहरति—**खला इति** । अत्र खलकेशयोः कौटिल्यरूप एकः साधारणो धर्मो नास्त्येव किंतु खलेऽपकारित्वं केशे वक्रत्वमिति तथात्वं बोध्यम् । यथावा मदीयनीतिशतपत्रे—'तारुण्यारोपितगुणे सुन्दरीभ्रूशरासने । नम्रत्वमेव संपाद्य जगज्जयति मन्मथः' इति ॥ ७७ ॥ एवमवाच्योपमामारभ्य कल्पितोपमान्तं सामान्यत उपमाभेदानां संख्यामथोपस्कर्तृत्वभेदेन तत्संख्यां तथा तत्साधारणधर्मभेदेनापि तत्संख्यां निरूप्य तद्ग्रन्थान्तरस्थतद्भेदैस्तस्याः प्राक्प्रतिज्ञातमानन्त्यमेव सिद्धमित्यभिधाय तत्प्रकरणोपसंहारं सूचयति—**एकेत्यादित्रिभिः** । षड् षोढा दैक्षिती कुवलयानन्दे श्रीमदप्पय्यदीक्षितपरिगणिताष्टविधलुप्तोपमानां मध्येऽत्रोक्ततद्भेदानन्तर्भूतत्वेनावशिष्टेत्यर्थः । असौ सामान्यत उपमा ॥ ७८ ॥ **पञ्चेति** । पञ्चसंख्याकाः ये उपस्कर्तृतायाः रसाद्युपस्कारकतायाः भेदास्तैरित्यर्थः । गुणितेत्यार्थिकम् । **खेति** । 'अङ्कानां वामतो गतिः' इति वचनात् चत्वारिंशदुत्तरैकशत १४० संख्याकेत्यर्थः । **खर्त्विति** षष्ट्युत्तरद्वादशशत १२६० संख्याकेत्यर्थः ॥ ७९ ॥ **एवमन्यैश्चेति । रसेति।** बिम्बादिभावापन्नावसितानुगामिक्यङ्गर्था यथा—'सिन्दूरारुणवपुषो देवस्य रदाङ्कुरो गणाधिपतेः । संध्याशोणाम्बरगतनवेन्दुलेखायितः पातु' । तत्रैवानुगामिधर्मान्तर्गतहेत्वादिभावापन्नबिम्बादिभावा यथा—'रूपवत्यपि च क्रूरा कामिनी दुःखदायिनी । अन्तः काटवसंपूर्णा सुपक्वेवेन्द्रवारुणी' । तत्रैव च लक्ष्यताया यथा—'सर्प इव शान्तमूर्तिः श्वेवायं मानपरिपूर्णः । क्षीब इव सावधानो मर्कट इव निष्क्रियो नितराम्' इति ॥ ८० ॥ एवमुपमाप्रकरणं परिसमाप्य तस्याः सुन्दरद्वितीयसादृश्यवर्णनविषयत्वेन प्रसङ्गसंगत्या स्मारितमेकमात्रसुन्दरसादृश्यवर्णनविषयमनन्वयं लक्षयति—**अनन्वय इति** । अन्येनोपमानेन सह अन्यस्मिन्वोपमाने यत्सादृश्यमुपमाप्रतीपयोर्हंसीव कृष्ण ते कीर्तिस्त्वल्लोचनसमं पद्ममिति च क्रमात्प्रतीयमानं साधर्म्यं तद्व्यवच्छिनत्ति व्यावर्तयतीत्येतादृशं यदुपमादिकमेकस्यैवोपमानोपमेयभावेन साधर्म्यं सोऽनन्वय इत्यन्वयः । एवंच द्वितीयसादृश्यव्यवच्छेदफल-

**उपमेयोपमान्योन्यभिन्नसादृश्यभेदि तत् ।**
**त्रयीव ब्रह्मविद्येयं ब्रह्मविद्येव च त्रयी ॥ ८२ ॥**

कैकमात्रविषयकोपमानोपमेयभावसादृश्यमनन्वय इति तदीयलक्षणपर्यवसितिः । अत्र 'नखकिरणपरम्पराभिरामं किमपि पदाम्बुरुहद्वयं मुरारेः । अभिनवसुरदीर्घिकाप्रवाहप्रकरपरीतमिव स्फुटं चकाशे' इति रसगङ्गाधरोक्ते पद्ये—'क्षीरोदमथनकालिकपयःकणाक्रान्तमवतु विष्णुवपुः । भाविदधिभाण्डभङ्गजदधिपृषदुपलिप्यमानमिव' इति । मदीयाद्वैतामृतमञ्जर्यां आर्यायां च क्रमात्कल्पितयथार्थभविष्यत्कालावच्छेदेन संपद्यमानधर्मविशेषवशादेकमेव हरिशरीरमुपमानोपमेयभावेन वर्ण्यत इति तत्रोभयत्राप्युत्प्रेक्षाविशेषघटितेऽतिप्रसङ्गभङ्गाय फलकान्तम् । तत्र द्वितीयसादृश्यव्यवच्छेदाभावात् तावन्मात्रोक्तावेतद्व्यङ्ग्येऽप्रतो वक्ष्यमाणे असमालंकारे वर्ण्यानौपम्यैकफलकेऽतिव्याप्तिव्युदस्तयेऽवशिष्टमित्याकूतम् । तमुदाहरति—**त्रयीति** । अत्र शक्तिः साधारणो धर्मः । शिष्टं तु स्पष्टमेव ॥८१॥ एवं द्वितीयसादृश्यव्यवच्छेदकत्वाद्यवच्छिन्नानन्वयस्मारिततृतीयसादृश्यव्यवच्छेदकत्वाद्यवच्छिन्नोपमेयोपमां लक्षयति—**उपमेयेति** । अन्योन्याभ्यां परस्पराभ्यां भिन्नस्तृतीयो यः पदार्थस्तन्निष्ठं यत्सादृश्यं तद्भिनत्ति व्यवच्छिनत्तीति तथेत्यर्थः । एतादृशं यत् तत् प्राक्तनपद्योक्तमुपमादिकं उपमेयोपमा भवतीत्यर्थः । एवंच तृतीयसदृशव्यवच्छेदकत्वे सति परस्परसादृश्यविषयकसुन्दरवर्णनविषयतावच्छिन्नमुपमेयोपमेति लक्षणं पर्यवस्यति । अत्र रसगङ्गाधरप्रत्युदाहरणे परस्परोपमाख्ये 'तडिदिव तन्वी भवती भवतीवेयं तडिल्लता गौरी' इत्यत्र । तथा मदीयाद्वैतामृतमञ्जर्यां आर्यायाः पूर्वार्धे 'राधे शरदिव विमला त्वमसि त्वमिवास्ति शरदपीन्दुमुखी' इत्यत्र चातिव्याप्तिवारणाय सत्यन्तम् । तत्र परस्परसादृश्यविषयसुन्दरवर्णनविषयतावच्छिन्नत्वेऽपि तृतीयसदृशव्यवच्छेदकत्वाभावात् । तथाहि प्रथमे एकेन तावद्रूपेण धर्मेण तडित्प्रतियोगिके कामिन्यनुयोगिके सादृश्ये वर्णिते तेनैव धर्मेण कामिनीप्रतियोगिकस्य तडिदनुयोगिकस्य सादृश्यस्यार्थिकत्वेऽपि न गौरिमधर्मेण सिद्धिरिति तदर्थं द्वितीयपादसार्थक्यात्र तृतीयसदृशव्यवच्छेदफलकत्वम् । एवं द्वितीयेऽपि वैमल्यधर्मेण राधानुयोगिकस्य शरत्प्रतियोगिकस्य सादृश्यस्य वर्णनात्तेनैवे धर्मेण राधाप्रतियोगिकस्य शरदनुयोगिकस्य सादृश्यस्याप्यर्थसिद्धत्वेपीन्दुमुखीत्वधर्मेण न सादृश्यसिद्धिरिति तदर्थं त्वमिवेत्यादेः सार्थक्यात्र तृतीयसदृशव्यवच्छेदफलकत्वमिति । एवं 'सदृशी तव तन्वि निर्मिता विधिना नेति समस्तसंमतम् । अथ चेन्निपुणं विभाव्यते मतिमारोहति कौमुदी मनाक्' इति । 'नहि राधे त्वत्तुल्या रमणी भूतेऽपि वर्तमानेऽपि । भाविन्यपि प्रपञ्चे तथापि किंचित्समाम्बुजिनी' इति च निरुक्तग्रन्थद्वय एव क्रमात्तृतीयसदृशव्यवच्छेदकत्वेऽपि परस्परसादृश्यविषयकवर्णनाभावात्तत्रातिव्याप्तिव्यावृत्तये परस्परेत्यादि परस्परसादृश्यविषयकं यत्सुन्दरं लिङ्गवचनभेदादिप्रागुक्तालंकारसामान्यविशेषदोषरहितं एतादृशं यद्वर्णनं तस्य या विषयता

**परस्परोपमाद्यन्यसदृशोच्छित्तिरेव नः।**
**गोदे न त्वत्समा कापि व्यक्तिः किंचित्तु जह्नवी ॥ ८३ ॥**
**असमस्त्वन्यमात्रस्य सादृश्यस्य तिरस्क्रिया।**
**त्वत्समः सदयः शंभो नासीन्न स्यान्न चास्त्यपि ॥ ८४ ॥**

---

तत्प्रतिपादकवाक्यजन्यज्ञाननिरूपितविषयत्वं तदवच्छिन्नत्वमित्यर्थः । तामुदाहरति—**त्रयीवेति** । अत्रेदंशब्दप्रयोगात्त्रयी यथा श्रोत्रप्रत्यक्षा तथा ब्रह्मविद्याप्यपरोक्षैव प्रकृतवर्ण्यास्तीति द्योत्यते । यथावा ममैवात्रोदाहृतार्यायां उत्तरार्धे—'खञ्जनमिथुनमिवेदं नयनयुगं नयनयुगमिवैतदपि' इति । यत्तु रसगङ्गाधरकृद्भिरुदाहारि—'कौमुदीव भवती विभाति मे कातराक्षि भवतीव कौमुदी । अम्बुजेन तुलितं विलोचनं लोचनेन च तवाम्बुजं समम्' इति । अत्र लिङ्गवचनभेदादिदुष्टसादृश्यवारणाय सुन्दरमिति तैरेवैतदुदाहरणादव्यवहितपूर्वं स्वकृतलक्षणनिविष्टसुन्दरपदकृत्यमुक्तम् । प्रकृते तु कौमुद्यामम्बुजपदविवक्षितानि कुमुदान्युत्पलानि वा सहस्राणि लोके प्रसिद्धान्येव तत्र जात्यभिप्रायेणैकवचनप्रयोगौचित्येऽपि कामिन्यां लोचनद्वयस्यैव सत्त्वात्तत्र विलोचनमित्याद्येकवचनप्रयोगस्य विरुद्धमतिकृत्त्वं केन पराकरणीयमिति न विद्मः ॥ ८२ ॥ एवमुपमेयोपमां निरूप्य तत्प्रत्युदाहरणस्मृतां परस्परोपमां लक्षयति—**परस्परेति** । नः अस्मदादीन् श्रोतॄन्प्रति । **द्वीति** । द्वयोरुपमानोपमेययोर्यः अन्य इतरः सदृशः संवर्ण्यसाधर्म्यवान् तस्य उच्छित्तिर्निराकृतिरित्यर्थः । सैव परस्परोपमा भवतीत्यन्वयः । उपमानोपमेयेतरवर्ण्यसाधर्म्यनिराकरणवर्णनमात्रविषयत्वमिति तल्लक्षणं फलितम् । तामुदाहरति—**गोद इति** । यथावा रसगङ्गाधर एवार्थवाक्यभेद उपमेयोपमोदाहरण एव शाब्दी परस्परोपमा पर्यवस्यति । 'अभिरामतासदनमम्बुजानने नयनद्वयं जनमनोहरं तव । इयति प्रपञ्चविषयेऽपि वैधसे तुलनामुदञ्चति परस्परात्मना' इति । यथावा मदीयाद्वैतामृतमञ्जर्याम्—'नहि राधे त्वत्तुल्या रम्या भूतेऽपि वर्तमानेपि । भाविन्यपि प्रपञ्चे तथापि किंचित्समाम्बुजिनी' इति । अत्रोदाहरणत्रयेऽपि तृतीयसदृशव्यच्छित्तिरेवेति लक्षणसंगतिः ॥ ८३ ॥ अथैतत्प्रसङ्गस्मृतानन्वयध्वनितासमालंकारं लक्षयति—**असमस्त्वति** । तुशब्दः पूर्ववैलक्षण्यार्थः । **अन्येति** । यावदन्यदित्यन्यमात्रं तस्येत्यर्थः । स्वेतरयावत्पदार्थसंबन्धिन इति यावत् । सादृश्यस्य साधर्म्यस्य तिरस्क्रिया निराकृतिरित्यर्थः । एवंच यावत्स्वेतरानुयोगिकस्वप्रतियोगिकसाधर्म्यनिराकरणवर्णनविषयत्वमसमालंकारत्वमिति सिद्धम् । यथावा रसगङ्गाधरे—'पूर्णमसुरै रसातलममरैः स्वर्गो वसुन्धरा च नरैः । रघुवंशवीरतुलना तथापि खलु जगति निरवकाशैव' इति । मदुदाहरणे ह्युपमाननिषेध इह तूपमानिषेध इति विशेषः ॥ ८४ ॥ एवमसमालंकारनिरूपणसंस्मृतसामान्यविशेषभावनिबन्धन-

**सुखेन प्रतिपत्त्यर्थं सामान्योक्तस्य वस्तुनः।**
**एकदेशं निरूप्यांशांशितोदाहरणं मतम्॥ ८५॥**
**कठिनोऽपि सुवंश्यश्चेद्वीरहस्ते गुणी नतः।**
**चापस्त्रैयम्बकः श्रीमद्रघुनाथकरे यथा॥ ८६॥**
**संमतोऽयं तु न प्राचामुपमान्तर्धिमिच्छताम्।**
**रसगङ्गाधरे किंतु नव्यैः सूक्ष्मदृशोदितः॥ ८७॥**

---

मुदाहरणालंकारं लक्षयति—**सुखेनेति। सामान्येति**। सामान्येन सामान्यांशेन उक्तं प्रतिपादितं तस्येत्यर्थः। एतादृशस्य वस्तुनः पदार्थस्य सुखेनानायासेन प्रतिपत्त्यर्थं श्रोतुः प्रबोधार्थम्। एकदेशं विशेषांशं निरूप्य प्रतिबोध्य। —**अंशेति**। अवयवावयविभावनिरूपणविषयः यत्तदुदाहरणं एतन्नामकोऽलंकारो भवतीत्यन्वयः। एवंच सामान्यांशनिरूपितपदार्थविषयकानायासप्रमाप्रयोजकतदेकदेशोद्देशपूर्वकतदुभयावयवावयविभाववचनविषयत्वमुदाहरणत्वमिति फलितम्। अत्र वचनपदेनार्थान्तरन्यासव्युदासः। तत्र हीवयथानिदर्शनदृष्टान्तादिशब्दरूपाणामुदाहरणबोधकवचनानामभावात्॥ ८५॥ तमुदाहरति—**कठिनोऽपीति**। अत्र चेत्पदं देहलीदीपन्यायेनोभयत्राप्यन्वेति। भवतीति शेषः। तथाचात्र पूर्वार्धे कठिनस्यापि पदार्थस्य सुवंश्यत्वपूर्वकं काठिन्यशालित्वनैयत्यमुद्दिश्य दैवाद्वीरकरगतत्वे गुणित्वनम्रत्वनैयत्यरूपसामान्यांशनिरूपण यदकारि तद्विषयकानायासप्रमाप्रयोजकं तदेकदेशीभूतत्रैयम्बकचापाद्युद्देशपूर्वकं तदुभययोः सामान्यविशेषांशयोरवयवावयविभावप्रतिबोधकं वचनं यथाशब्दस्तद्विषयत्वं तज्ज्ञानविषयत्वमुत्तरार्धे स्पष्टमेवेति लक्षणसमन्वयः। एवंचात्र सामान्यमवयवी विशेषोऽवयव इति पर्यवसितं भवति। यथावा मदीयाद्वैतामृतमञ्जर्याम्—'कुटिलाकुलोऽपि राग्यपि दर्शनतः क्षोभकोऽपि बद्धोऽपि। सीमन्तवदृजुश्चेन्मुक्ताभूष्यो न किं भूयात्' इति। अत्रेवशब्दो यथालक्षणयैवोदाहरणपरस्तथा वच्छब्दोऽपि तदर्थविहिततद्धितत्वेन तद्वाचको लक्षणयैव तत्पर इति बोध्यम्। यद्यत्र श्लेषाक्षेपविशेषाख्यालंकारान्तरघटितत्वान्नेदं शुद्धोदाहरणमिति चेत्तर्हि यथावा मदीय एव नीतिशतपत्रे—'गुणैरनेकैर्युक्तोऽपि दुष्टस्यैकस्य योगतः। वर्ज्य एव पुमान्भूयाद्भुजङ्गस्येव चन्दनः' इति॥ ८६॥ नन्वयं प्राचीनाचार्यैः किमिति न संगृहीत इतिचेत्तेषामस्योपमान्तर्भूतत्वेनातिरिक्तत्वासंमतत्वादेवेत्याह—**संमत इति**। तदुक्तं रसगङ्गाधर एव—'प्राञ्चस्तु नायमलंकारोऽतिरिक्तः उपमयैव गतार्थत्वात्। नच सामान्यविशेषयोः सादृश्यानुल्लासात्कथमुपमेति वाच्यम्। निर्विशेषं न सामान्यमिति सामान्यस्य यत्किंचिद्विशेषं विनाऽप्रकृतत्वात्तादृशविशेषमादाय विशेषान्तरस्य सादृश्योल्लासे बाधकाभावात्। इत्यादिभिरापाततो मुखे प्रतीयमानस्यापि सामान्यविशेषभावस्य परिणामे सादृश्य एव विश्रान्तेरित्यप्याहुः' इति। एवं तर्हि त्वया कुतः संग्रथित इत्यत्राह—**रसेति**। तदुक्तं तत्रैव

**प्रातिकूल्यं प्रतीपत्वमुपमानोपमेययोः ।**
**पञ्चधा तन्मतं प्राचां तत्राद्यं स्याद्विपर्यये ॥ ८८ ॥**
**राधे त्वदास्यवच्चन्द्रो द्वितीयं तूपमामके ।**
**धन्यत्वध्वस्तये वर्ण्याधिक्यवर्णनमिष्यते ॥ ८९ ॥**
**विलसत्यङ्गनापाङ्गेऽनङ्ग ते क्व कलम्बकाः ।**
**तृतीयमुपमेयस्याधिक्यध्वस्त्यै परादरः ॥ ९० ॥**

---

प्राक् । सामान्येन निरूपितस्यार्थस्य सुखप्रतिपत्तये तदेकदेशं निरूप्य तयोरवयवावयविभाव उच्यमान उदाहरणम् । अर्थान्तरन्यासवारणायोच्यमान इतीत्यादिना लक्षणमुपपाद्य उदाहरति—'अमितगुणोऽपि पदार्थो दोषेणैकेन निन्दितो भवति । निखिलरसायनराजो गन्धेनोग्रेण लशुन इव' इत्यादिनोक्त्वा । यथावा—'अतिमात्रबलेषु चापलं विदधानः कुमतिर्विनश्यति । त्रिपुरद्विषि वीरतां वहन्नवलिप्तः कुसुमायुधो यथा' इति॥८७॥एवमुदाहरणालंकारमुपपाद्य तत्र प्राचामसमतत्वेऽपि सयुक्तिकत्वेन स्मृतं प्राचां संमतमपि नव्यमते युक्त्यसहत्वादुपमादेः पृथग्गणनायोग्यं पञ्चप्रकारं प्रतीपालंकारं तथैव विवक्षुस्तत्सामान्यमादौ लक्षयति—**प्रातिकूल्यमित्य**र्धेन—**उपमानेति** । प्रागुदाहृतश्रुत्यादिप्रसिद्धयोरित्यार्थिकं प्रातिकूल्यमेव परस्परप्रतिस्पर्धासूचकवर्णनजन्यज्ञानविषयत्वमेव प्रतीपत्वं प्रतीपालंकारत्वमित्यर्थः । अथास्य पञ्चप्रकारकत्वं प्रतिजानीते--**पञ्चधा तदिति** । प्राचां मम्मटभट्टादीनामित्यर्थः । तत्र प्रथमं लक्षयति—**तत्रेति** । उपमेत्याद्यत्रानुकृष्य योज्यम् । एवं चोपमानोपमेयत्वेन प्रसिद्धयोश्चन्द्रमुखयोर्विपर्यये वैपरीत्येन विन्यासे सति आद्यं प्रथमं प्रतीपप्रकारस्वरूपं स्यादिति संबन्धः ॥ ८८ ॥ तदुदाहरति—**राध इति** । पादेनैव । यथावा कुवलयानन्दे—'यत्त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवरं मेघैरन्तरितः प्रिये तव मुखच्छायानुकारी शशी । येऽपि त्वद्गमनानुसारिगतयस्ते राजहंसा गतास्त्वत्सादृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते' इति । द्वितीयं लक्षयति त्रिपाद्या—**द्वितीयं त्विति** । तुशब्दः पूर्ववैलक्षण्यार्थः । उपमानके चन्द्रादावुपमान एवेत्यर्थः । **धन्यत्वेति** । मदीयोपमा कामिन्यानयापि प्रेक्षावद्भिरपि प्रदीयत इत्यहमेव धन्योऽस्मीति गर्वखर्वीकरणार्थमित्यर्थः । **वर्ण्येति** । वर्ण्यस्योपमेयस्य यदाधिक्यं उपमानतोऽप्यौत्कट्यं तद्वर्णनमित्यर्थः । एवंचोपमानावलेपविलोपप्रयोजकोपमेयोत्कर्षप्रकाशनविषयत्वं द्वितीयप्रतीपत्वमिति फलति ॥ ८९ ॥ तदुदाहरति—**विलसतीति** । 'कलम्बमार्गणशराः' इत्यमरः । यथावा काव्यप्रकाशे—'अहमेव गुरुः सुदारुणानामिति हालाहल तात मास्म दृप्यः । ननु सन्ति भवादृशानि भूयो भुवनेऽस्मिन्वचनानि दुर्जनानाम्' इति । तृतीयं लक्षयति—**तृतीयमित्य**र्धेनैव । परमुपमानम् ॥ ९० ॥

**खलस्य हृदि कौटिल्यं बालायाः कुन्तलाग्रतः ।**
**चतुर्थमुपमानस्य ज्ञेयं कैमर्थ्यवर्णनम् ॥ ९१ ॥**
**गौराङ्गीषु सतीष्वत्र भान्तीमा विद्युतः कुतः ।**
**पञ्चमं तूपमेयस्यान्येन सादृश्यनिह्नवः ॥ ९२ ॥**
**सुन्दरि त्वद्वियोगाभोऽग्निरिति व्यर्थकल्पना ।**
**तत्राद्येतरमन्यानि सन्ति काव्यप्रकाशके ॥ ९३ ॥**
**आद्यं प्रतापरुद्रीये चतुर्थमपि संमतम् ।**
**रसगङ्गाधरे त्वत्र न किंचिदपि युज्यते ॥ ९४ ॥**
**आद्यत्रयस्योपमायामन्तर्भावोपपादनात् ।**
**आक्षेपे तु चतुर्थस्य व्यतिरेकेऽन्तिमस्य च ॥ ९५ ॥**

---

तदुदाहरति—**खलेति** । यथावा कुवलयानन्दे—'गर्वमसंभाव्यमिमं लोचनयुगुलेन किं वहसि भद्रे । सन्तीदृशानि दिशि दिशि सरःसु ननु नीलनलिनानि' इति । यथावा रसगङ्गाधरे-'निभाल्य भूयो निजगौरिमाणं मानापमानं हृदये विधासीः । गृहे गृहे पश्य तवाङ्गवर्णा मुग्धे सुवर्णावलयो लुठन्ति' इति । **चतुर्थमिति** ॥ ९१ ॥ तदुदाहरति—**गौराङ्गीष्विति** । यथावा काव्यप्रकाशे—'लावण्यौकसि सप्रतापगरिमण्यग्रेसरे त्यागिनां देव त्वय्यवनीभरक्षमभुजे निष्पादिते वेधसा । इन्दुः किं घटितः किमेष विहितः पूषा किमुत्पादितं चिन्तारत्नमहो मुधैव किममी सृष्टाः कुलक्ष्माभृतः' इति । पञ्चमं लक्षयति—**पञ्चमं त्विति** । अन्येन उपमानेन निह्नवः अपलापः । असंभववर्णनमिति यावत ॥ ९२ ॥ तदुदाहरति—**सुन्दरीति** । यथावा कुवलयानन्दे—'आकर्णय सरोजाक्षि वचनीयमिदं भुवि । शशाङ्कस्तव वक्त्रेण पामरैरुपमीयते' इति । यथावा रसगङ्गाधरे—'करिकुम्भतुलामुरोजयोः क्रियमाणां कविभिर्विशृङ्खलैः । कथमालि शृणोषि सादरं विपरीतार्थविदो हि योषितः' इति । तत्र पञ्चप्रतीपमध्ये केषां कानि संमतानीत्यत्राह—**तत्रेत्यादि**सार्धेनैव । आद्यात्प्रथमादितराण्यन्यानि यथास्यात्तथेत्यर्थः । **काव्येति** । स्वार्थे कप्रत्ययः । काव्यप्रकाश एवेत्यर्थः ॥ ९३ ॥ **आद्यमिति** । तद्यथा तत्रैव 'आक्षेप उपमानस्य कैमर्थक्येन कथ्यते । यद्वोपमेयभावः स्यात्तत्प्रतीपमुदाहृतम्' । यत्रोपमेयस्य लोकोत्तरत्वादुपमानाक्षेपः प्रतीयते तदेकं प्रतीपम् । यत्रोपमेयस्योपमानत्वं कल्प्यते तद्द्वितीयमिति । **रसेति** । अत्र प्रतीपपञ्चकमध्य इत्यर्थः । युज्यते युक्तं भवतीत्येतत् ॥ ९४ ॥ तत्र हेतुमाह—**आद्यत्रयस्येति** । अत्र तदीयक्रमस्यैव संप्रथितत्वात्तन्मध्ये प्राथमिकप्रतीपभेदत्रितयस्येत्यर्थः । उपमायाम् । तथा चतुर्थस्य अत्रोक्तक्रमानुसारेणैव चतुर्थस्य प्रतीपप्रभेदस्येत्यार्थिकम् । आक्षेपे व्यतिरेके तद्वत् अन्तिमस्य पञ्चमप्रतीपप्रभेदस्येत्यर्थः । **अन्तर्भावेति** । अन्तर्भावसाधनार्थं युक्तिप्रपञ्चनादिति हेतोः रसगङ्गाधरे ग्रन्थे तु अत्र प्रतीपपञ्चकमध्ये किंचिदपि प्रतीपभेद-

जातं न युज्यते नैव सयुक्तिकमस्तीति पूर्वेणान्वयः । तदुक्तं तत्रैव । तदेवं पञ्चविधं प्रतीपं प्राचामनुरोधान्निरूपितम् । वस्तुतस्तु आद्यात्रयोऽप्युपमायामेवान्तर्गता भेदाः । चतुर्थः केषांचिदाक्षेपे । पञ्चमस्त्वनुक्तवैधर्म्ये व्यतिरेके । तथाहि । निष्पद्यमानं सुन्दरं वा सादृश्यमुपमा । नह्याद्ये प्रतीपे मुखमिव कमलमित्यादौ सादृश्यस्यानिष्पत्तिरसौन्दर्यं वास्ति येनोपमातो बहिर्भावः स्यात् । सौन्दर्यविशेषस्य त्वयाप्यभ्युपगमात् । विशेषस्य सामान्यानिवारकत्वात् । नहि प्रसिद्धकमलादिप्रतियोगिकमेव सादृश्यमुपमेति राज्ञामाज्ञास्ति । नचोपमाविरुद्धवाचिनः प्रतीपशब्दमाहात्म्यादेव तादृशं सादृश्यमुपमेति शक्यं वक्तुम् । उपमाविशेषविरुद्धवाचकत्वेनापि तदुपपत्तेः । एवंचाद्यं प्रतीपं प्रसिद्धोपमाविशेष एव । अतएव द्वितीयतृतीयावपि भेदावुपमाविशेषावेव । उपमानोपमेययोस्तिरस्कारस्तूपमान्तराद्वैलक्षण्यं प्रयोजयेन्नतूपमासामान्यात् । तदनुस्यूतत्वेनैव तत्प्रतीतेः । नहि द्राक्षामाधुर्यातिशयेन पार्थिवान्तराद्विलक्षणेनापार्थिवा भवति । अपिच यद्युपमानोपमेययोस्तिरस्कारोऽलंकारान्तरताप्रयोजकः स्यात्पुरस्कारोऽपि तथा स्यात् । यथा—'एको विश्वसतां हराम्यपघृणः प्राणानहं प्राणिनामित्येवं परिचिन्त्य मास्म मनसि व्याधानुतापं कृथाः । भूपानां भवनेषु किंच विमलक्षेत्रेषु गूढाशयाः साधूनामरयो वसन्ति कति न त्वत्तुल्यकक्षाः खलाः' । अत्रौपम्यप्रदर्शनस्य नोपमानतिरस्कारः फलम् । तस्य गर्वितत्वेनाविवक्षणात् । किंतु तदनुतापनाशः । एवंच फलवैलक्षण्यमात्रेणालंकारान्तरत्वं ब्रुवता अस्याप्यलंकारान्तरत्वमभ्युपेयं स्यात्प्रतीपषष्ठप्रभेदत्वं वा । किंच त्वदुक्तप्रतीपप्रभेदानामपि परस्परवैलक्षण्येन पृथक्पृथगलंकारत्वं स्यान्न प्रतीपप्रभेदत्वम् । प्रतीपस्य सकलप्रभेदसाधारणसामान्यलक्षणाभावात् । अन्यतमत्वं तु दूषणसहस्रग्रस्तत्वादलक्षणमेवेत्यसकृदुक्तम् । उपमालक्षणं तु सकलसाधारणम् । चतुर्थः प्रभेदस्तु येषां मतेनाक्षेपस्तेषामस्तु नाम प्रतीपालंकारः । पञ्चमस्य तु गतिरुक्तैव प्रभेदस्येति । श्रीमदप्पय्यदीक्षितास्तु कुवलयानन्देऽस्मिन्नेव प्रकरणे—'अनन्वयोपमेयोपमाप्रतीपानामप्युपमायामेवान्तर्भावमुपमानकैमर्थ्याख्यतद्गणनागतपञ्चमप्रतीपस्य केवलस्याक्षेपेऽन्तर्भावं च मतभेदेनोचिरे । केचिदनन्वयोपमेयोपमाप्रतीपानामुपमाविशेषत्वेन तदन्तर्भावं मन्यन्ते । अन्ये तु पञ्चमप्रतीपप्रकारमुपमानाक्षेपरूपत्वादाक्षेपालंकारमाहुरिति । नन्वेवमपि पण्डितरायैः प्रतीपसामान्यलक्षणाभाव एवोक्तो भवता तु 'प्रातिकूल्यं प्रतीपत्वमुपमानोपमेययोः' इत्यादिना तत्सामान्यलक्षणमुक्तं तत्कथं घटेतेति चेत्सत्यम् । तस्य यदि प्राचीनरीत्या तदुक्तप्रकारेषु तथा तदापादितषष्ठतद्भेदेऽप्यनुगमो न स्यात् । तथाहि उपमानोपमेययोः परस्परस्पर्धासूचकवर्णनजन्यज्ञानविषयत्वं हि तदुक्ते प्रसिद्धौपम्यवैपरीत्येन वर्ण्यमानमौपम्यमेकं प्रतीपमिति प्रथमप्रभेदलक्षणे किं जल्पसि मुग्धतयेत्यादितदुदाहरणे च उपमेयापेक्षयाऽधिकसाधारणधर्मवत उपमानस्य तदपेक्षया किंचिन्न्यूनतद्धर्मव-

**रूपकं तूपमेयत्वावच्छेदकपुरस्कृतेः ।**
**तत्रोपमानतादात्म्याध्यवसानं गिराऽत्मराट् ॥ ९६ ॥**

दुपमेयत्वेन वर्णने तस्य प्रसिद्धोपमेयस्य तादृशोपमानात्मना च वर्णने सार्वभौमस्य सामन्तत्वे सामन्तस्य च दैवात्सार्वभौमत्वे न्यूनस्याधिक्यार्थितयाऽधिके स्पर्धा तथाधिकस्य न्यूनस्पर्धाप्रयुक्तस्पर्धा च यद्वत्प्रसिद्धैव लोके तद्वत्प्रकृतेऽपि स्पर्धाध्वननं युक्तमेव । किंच 'किं जल्पसि मुग्धतया हन्त ममाङ्गं सुवर्णवर्णमिति । तद्यदि पतति हुताशे तदा हताशे तवाङ्गवर्णं स्यात्' इत्युदाहरणे तु सुवर्णवर्णमिति पदस्यैव सन्निहितपूर्वत्वेन तच्छब्देन तदर्थस्यैव सुवर्णस्येव वर्णो यस्य तत्तथेति बहुव्रीहिबोध्याङ्गनाङ्गस्य बोध्यत्वाद्विरुद्धमतिकृत्त्वमित्यन्यदेतत् । एवं उपमानोपमेययोरन्यतरस्य किंचिद्गुणप्रयुक्तमद्वितीयतोत्कर्षं परिहर्तुं द्वितीयप्रदर्शनेनोल्लास्यमानं सादृश्यमपरं द्विविधम् । उपमानस्य कैमर्थ्यं चतुर्थम् । सादृश्यविघटनं पञ्चमं चेति तत्संमतद्वितीयादिप्रतीपप्रभेदेष्वपि निरुक्तसामान्यलक्षणसमन्वयः प्रोक्तदिशैवानुसंधेयः सुधीभिः । एवंच तदीया प्रतीपसामान्यलक्षणाभावोक्तिस्तु किमभिप्रायेति नैव वयं जानीमः । एतेन एको विश्वसतामित्यादिना तदापादिते षष्ठेऽपि प्रतीपप्रभेदे निरुक्ततत्सामान्यलक्षणसमन्वयो व्याख्यातः । भेदाधिक्यापादनं तु चमत्कारविशेषाधिक्यजनकत्वादिष्टापत्त्यैव पराकरणीयम् । पञ्चसंख्याया दिङ्मात्रप्रदर्शनफलत्वात् । तथाहि साहित्यदर्पणकृता 'उक्त्वा चात्यन्तमुत्कर्षमत्युत्कृष्टस्य वस्तुनः । कल्पितेऽप्युपमानत्वे प्रतीपं केचिदूचिरे' इति लक्षणमुक्त्वा अहमेव गुरुरित्याद्युदाहरता तस्यैकविधताया एवोपपादनमकारि । प्रतापरुद्रीये द्वैविध्यस्य, काव्यप्रकाशे चातुर्विध्यस्य, कुवलयानन्दे पञ्चविधत्वस्यापि प्रकृतेपि तथैवेति । एवमपि प्रथमत्वादिक्रमोऽप्यनियत एव दृश्यते सर्वत्र । तस्मात्पूर्वाचार्याणां अलंकारेषु बालानामवगाहन एव तात्पर्यं नत्वन्यप्रतिक्षेप इति संक्षेपः ॥९५॥ एवं सादृश्यमूलकप्रतीपप्रपञ्चनस्मृतस्य रूपकस्य सामान्यं लक्षयति—**रूपकं त्विति** । तुशब्दो निरुक्तभेदप्रधानालकारवलक्षण्यार्थः । **उपमेयत्वेति** । उपमेयतावच्छेदकपुरस्कारेणेत्यर्थः । तत्रोपमेये । गिरा वर्ण्यप्रस्तावकवाचेत्यर्थः । **उपमानेति** । उपमानप्रतियोगिकतादात्म्यावधारणविषय इत्यन्वयः । भवतीत्यार्थिकम् । एवंच उपमेयतावच्छेदकपुरस्कारेणोपमेये शब्दावधृतमुपमानतादात्म्यं रूपकमिति तल्लक्षण फलितम् । तदुक्तं रसगङ्गाधरे—'उपमेयतावच्छेदकप्रकारेणोपमेये शब्दान्निश्चीयमानमुपमानतादात्म्यं रूपकमिति भ्रान्तिमदपह्नुतिनिदर्शनातिशयोक्तिव्यावृत्तय तृतीयान्तम् । भ्रान्तिमति तज्जनकदोषेणैव निरुक्तपुरस्कृतिप्रतिरोधात् । अपह्नुतौ वक्त्रिच्छयैवोक्तावच्छेदकस्य निषिध्यमानत्वात् । निदर्शनातिशयोक्त्योस्तु तस्य साध्यवसानलक्षणामूलकत्वाच्च न तत्रातिव्याप्तिः । इदं प्रियाननं चन्द्र इति प्रत्यक्षाहार्यनिर्णयविषयचन्द्रतादात्म्यव्यवच्छित्तये शब्देति । अवधृतमित्युक्त्या नूनं मुखं चन्द्र इत्याद्युत्प्रेक्षाख्यसंभावनाया व्यावृत्तिः । उपमेयोपमान-

**इदमष्टविधं काव्यप्रकाशादिचतुर्मते ।**
**तद्यथा रूपकं सामान्यतस्त्रिविधमुच्यते ॥ ९७ ॥**
**अंश्यनंशित्वभेदाभ्यां परम्परितभेदतः ।**
**आद्यं समस्तविषयमेकदेशविवर्ति च ॥ ९८ ॥**

पदाभ्यां सादृश्यलाभात्सुखं मनोरमारामेति प्रभृतिशुद्धारोपविषयतादात्म्यस्य विशिष्टलक्ष्यपदार्थस्य व्युदासः। तदुदाहरति—**आत्मेति**। राज्ञि राज्ञिराडित्यमराद्राजत इति व्युत्पत्तेरानन्दात्मैव प्रत्यगेव राडिति विग्रहाच्च । आत्माभिन्नः सार्वभौमो भवतीति भावः । अत्रोपमेयतावच्छेदकमात्मत्वं तत्पुरस्कारत्वसूचकोद्देश्यतावच्छेदेन प्रथमप्रयोगस्तेन उपमेये 'यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह । यच्चास्य संततो भावस्तस्मादात्मेति भण्यते' इति वचनप्रतिपादितात्मपदवाच्ये प्रतीचि उपमानप्रतियोगिकवक्ष्यमाणतादात्म्यानुयोगितावच्छिन्नं शब्दावधृतं समानाधिकरणसमभिव्याहृतात्मराट्शब्दमात्रनिर्णीतं उपमानं राट्पदवाच्यश्रीरामादिसार्वभौमस्तस्य तादात्म्यं भेदसहिष्णुरभेदः स्पष्टमेवेति लक्षणसंगतिः । यथावा बृहद्योगवासिष्ठे—'प्रशान्तमोहदारिद्र्यो दुराशादोषसंक्षये । विवेकधनसंभारात्स्थितोऽस्मि परमेश्वर' इति । एतेनेह मानुषानन्दमारभ्य हैरण्यगर्भानन्दान्तनिखिलविषयसुखसीकरशुद्धोदसागरत्वमद्वैतात्मनि व्यज्यते । तेन सार्वदिकतदनुसंधानपूर्वकदृश्याननुसंधानलक्षणजीवन्मुक्तिरपि व्यक्तैव । यथावा मदीये कृष्णलीलामृते—'इदं यदीयं चरितं चमत्कृतिं चिनोति चिन्मात्रितचेतसामपि । स्वतः सदैकोऽपि स कोऽपि गोपिकाकुचस्थलीनीलमणिर्विराजते' इति । नन्वत्रोपमितसमासाश्रयणे लुप्तोपमापि संभवत्येव । तथाच कथमिदं रूपकस्यैवोदाहरणमिति चेद्वाढम् । प्राक्तनलक्षणवाक्यसमभिव्याहारादेवेति गृहाण । अन्यथा गत्यन्तराभावात् । अत एवोक्तं रसगङ्गाधरे—'ययोरिवादिशब्दप्रयोगे उपमा तयोरेकत्रान्यारोपे रूपकमिति नियमात्' इति । एवं चात्रोपमासमानत्वेन प्रायस्तद्भेदानन्त्यवदेतद्भेदानन्त्यमेव तत्तदाचार्यमतभेदविचारे स्वचातुरीसंचारे च पर्यवस्येदेवेति दिक् ॥ ९६ ॥ ननु भवत्वेवं रूपकसामान्यलक्षणं तदुदाहरणं च, तथाप्यस्योपमासमकक्षत्वेन प्रागुक्तरीत्या तद्वदेव बालव्युत्पादनार्थं दिङ्मात्रं कतिचिद्भेदाः प्रतिपाद्या एवेत्यतस्तद्भेदसंख्यां प्राचीनाचार्यचतुष्टयमतेन स्पष्टं प्रतिजानीते—**इदमित्यर्धेन** । **काव्यप्रकाशेति** । आदिना प्रतापरुद्रीयसाहित्यदर्पणरसगङ्गाधराः । कथं तदष्टविधत्वमित्यपेक्षायां तत्प्रपञ्चयति—**तद्यथेत्यादि**त्रिभिः ॥ ९७ ॥ कथं तत्त्रैविध्यमित्यत आह—**अंशीत्यर्धेन** । अंशि सावयवम् । अनंशि निरवयवम् । **परम्परितेति** । परम्परिताख्यतृतीयरूपकभेदेनेत्यर्थः । एतेषां लक्षणान्यग्रे वक्ष्यामः । तत्राप्याद्यस्यांश्याख्यसावयवस्य पुनर्द्वैविध्यं विधत्ते—**आद्यमित्यर्धेनैव** । समस्तेत्याद्यपि संज्ञाद्वयं प्रागवत्तान्त्रिकमेव ॥ ९८ ॥ एवं द्वितीयस्य निर-

**द्वितीयं केवलं मालारूपं चेति द्विधाद्यवत् ।**
**तृतीयं श्लिष्टशुद्धत्वभेदाद्वेधापि च द्विधा ॥ ९९ ॥**
**प्रत्येकं केवलं मालारूपकं चेति चाष्टधा ।**
**आद्यमन्योन्यसापेक्षोत्पत्तिरूपकसंहतिः ॥ १०० ॥**
**समस्तविषयं तत्र तद्यत्रारोप्यवस्तुनाम् ।**
**समस्तानामभिस्फूर्तिः शब्दादेवोपजायते ॥ १०१ ॥**

---

वयवाख्यस्यापि द्वैविध्यमभिधत्ते—**द्वितीय**मित्यर्धेनैव । आद्यवत्सावयववदित्यर्थः । एवं तृतीयस्य परम्परिताख्यस्यापि श्लिष्टत्वादिना द्वैविध्यं विधत्ते—**तृतीयमि**त्यादिना । पुनस्तद्द्वैविध्यं प्रतिजानीते—**अपिचे**त्यादिशेषेण ॥ ९९ ॥ अथ श्लिष्टपरम्परितं शुद्धपरम्परितं चापि पुनर्द्विधेत्यतस्तद्विशदयति—**प्रत्येकमि**त्यादिना । एकं शुद्धं श्लिष्टपरम्परितं द्वितीयं मालारूपं श्लिष्टपरम्परितं चेत्यर्थः । उपसंहरति—**इतीति** । तदुक्तं रसगङ्गाधरे—'तदिदं रूपकं सावयवं निरवयवं परम्परित चेति शुद्धपरम्परितं चेति द्विविधं तावत्रिविधम् । तत्राद्यं समस्तवस्तुविषयमेकदेशविवर्ति चेति द्विविधम् । द्वितीयमपि केवलं मालारूपं चेति द्विविधम् । तृतीयं च श्लिष्टपरम्परितं सत्प्रत्येकं केवलमालारूपत्वाभ्यां चतुर्विधमित्यष्टविधमाहुरिति । तत्र प्रथमं सावयवं रूपकं लक्षयति—**आद्यमित्या**द्युत्तरार्धेनैव सामान्यतः । **अन्योन्येति** । अन्योन्यं परस्परं सापेक्षा हेतुहेतुमद्भावेन साकाङ्क्षा उत्पत्तिः कविनिबद्धाविर्भूतिर्येषामेतादृशानि यानि रूपकाणि अभेदतादात्म्यान्यतरसंबन्धेन सुन्दर उपमेये सुन्दरोपमानारोपविषयवस्तूनि तेषां संहतिः संघात इत्यर्थः । स एव आद्यं सावयवं निरुक्तहेतुमद्भावात्कनककटकन्य॰ ॰वयवैर्हेतुभिः सह वर्तत इति तथैतत्संज्ञकं रूपकं भवतीत्यन्वयः । एतदप्युक्तं तत्रैव । तत्र परस्परसापेक्षनिष्पत्तिकानां रूपकाणां संघातः सावयवमिति । एवंच परस्परसापेक्षनिष्पत्तिकरूपकनिकरत्वं सावयवरूपकत्वमिति तल्लक्षणं फलितम् । अत्र 'शरदिन्दुमुखी राधा श्रीकृष्णः करुणाम्बुदः । मनोवृन्दावनेऽस्माकमुभौ विहरतां चिरम्' इति मदीये पद्ये परस्परनिरपेक्षनिष्पत्तिकरूपकनिकरत्वेन तत्राप्रसङ्गभङ्गार्थं परसापेक्षनिष्पत्तिकेति, मालोपमाव्यावृत्तये रूपकेति, तन्मात्रव्युदासाय निकरेति ॥ १०० ॥ एवं सावयवाख्यस्य रूपकप्रथमभेदस्य सामान्यतो लक्षणं संक्षिप्याथ समस्तविषयैकदेशविवर्तित्वभेदाभ्यां तद्द्वैविध्यस्योद्दिष्टत्वादादौ समस्तविषयाख्यं तद्भेदं लक्षयति—**समस्तेति** । तत्र सावयवरूपकस्य भेदद्वयमध्य इत्यर्थः । तत् रूपकं समस्तविषयं भवति यत्र आरोप्यवस्तूनां आरोप्याणि सादृश्यात्कविनाध्यस्यानि यानि मुखाद्यधिकरणे चन्द्रादीनि वस्तूनि तेषामित्यर्थः । समस्तानां यत्रावयवानामवयविनश्च सामस्त्येन निरूपणं निबध्यते तत्समस्तवस्तुविषयं रूपकमिति विद्यानाथवचनात्समासघटितानामिति यावत् । अभिस्फूर्तिः प्रकटप्रतीतिः शब्दादेव मुखचन्द्रः प्रियायाम इत्यादिवा-

**लक्ष्मीविद्युत्समाश्लिष्टः शार्ङ्गेन्द्रधनुषान्वितः।**
**पातु मां भवतापार्तं भगवान्करुणाम्बुदः॥ १०२॥**
**अन्त्यं सावयवं तत्स्यादेकदेशविवर्ति यत्।**
**संसारपञ्जरान्मुक्ताः क्रीडन्त्यानन्दनन्दने॥ १०३॥**
**अनंशि शुद्धमेवेदं विद्याकल्पलता मता।**
**तन्मालारूपमात्मज्ञः श्रुतेर्बन्धुर्मतेः प्रियः॥ १०४॥**

---

क्यादेव नतु प्रत्यक्षादिनापीत्यर्थः। उपजायते संपद्यते तत्समस्तवस्तुविषय सावयवरूपकमिति संबन्धः॥ १०१॥ तदुदाहरति—**लक्ष्मीति**। अत्रोपमेयमधिकरणं लक्ष्म्यादि तत्रारोप्यवस्तु विद्युदादि तयोरभेदघटको लक्ष्मीरेव विद्युद्गौरत्वभास्वरत्वचपलत्वादिसाधर्म्येण विद्युदभिन्नेति समासात्समस्तवस्तुत्वं तद्विषयकज्ञानस्योक्तशब्दैकजन्यत्वं चेति लक्षणसमन्वयः। यथावा रसगङ्गाधरे 'सुविरलमौक्तिकतारे धवलांशुकचन्द्रिकाचमत्कारे। वदनपरिपूर्णचन्द्रे सुन्दरि राकासि नात्र संदेहः' इति। अपिच तत्रैव—'व्योमाङ्गणे सरसि नीलिमदिव्यतोये तारावलीमुकुलमण्डलमण्डितेऽस्मिन्। आभाति षोडशकलादलमञ्जुभृङ्ग सूराभिमुख्यविकचं शशिपुण्डरीकम्' इति। विस्तरस्तु तत्रैव बोध्यः। अन्योन्यसापेक्षत्वादिसावयवरूपकसामान्यलक्षणं तु पद्यत्रयेऽपि स्फुटमेवेति दिक्॥ १०२॥ अथ क्रमप्राप्तमेकदेशविवर्त्याख्यं द्वितीयं सावयवरूपकभेदं लक्षयति—**अन्त्यं सावयवमिति। एकेति**। एकदेशे कस्मिंश्चिच्छब्दानुपात्तेऽपि सहचरैरपरावयवैरर्थाक्षिप्तारोप्येऽवयवे विवर्तते परिणमत इति तथेत्यर्थः। उक्तं हि रसगङ्गाधरे—'यत्र च क्वचिदवयवे शब्दोपात्तमारोप्यमाणं क्वचिच्चार्थसामर्थ्याक्षिप्तं तदेकदेशे शब्दानुपात्तविषयिके अवयवरूपके विवर्तनात्स्वस्वरूपगोपनेनान्यथात्वेन च वर्तनादेकदेशविवर्तीति। तदुदाहरति—**संसारेति**। अत्र मुक्ताख्योपमेयेऽवयवे आरोप्यमाणत्वेनेष्टस्य कीराख्योपमानस्य शब्दानुपात्तत्वे संसारेत्यादिपूर्वोक्तरूपकादिसहचरैः कीरत्वस्य विवर्तमानत्वाल्लक्षणसंगतिः। यथावा तत्रैव—'भवग्रीष्मप्रौढातपनिवहसंतप्तवपुषो बलादुन्मूल्य द्राङ्निगडमविवेकव्यतिकरम्। विशुद्धेऽस्मिन्नात्मामृतसरसि नैराश्यशिशिरे विगाहन्ते दूरीकृतकलुषजालाः सुकृतिनः' इति॥ १०३॥ अथ परस्परासापेक्षोत्पत्तिरूपकत्वेन निरवयवरूपकसंबन्धिमालात्वाभावप्रयुक्तकेवलाख्यं शुद्धं रूपकं लक्षयति—**अनंशीति**पादेन। तदुदाहरति—**विद्येति**। तेनैव। यथावा काव्यप्रकाशे—'कुरङ्गीवाङ्गानि स्तिमितयति गीतध्वनिषु यत्सखीं कान्तोदन्तं श्रुतमपि पुनः प्रश्नयति यत्। अनिद्रं यच्चान्तः स्वपिति तदहो वेद्म्यभिनवां प्रवृत्तोऽस्याः सेक्तुं हृदि मनसिजः प्रेमलतिकाम्' इति। एवं निरवयवमेव मालाकारग्रथनान्मालारूपकं लक्षयति—**तदिति**। तदुदाहरति—**आत्मज्ञ इति**। यथावा काव्यप्रकाशे—'सौन्दर्यस्य तरङ्गिणी तरुणिमोत्कर्षस्य हर्षोद्गमः कान्तेः कार्मणकर्म नर्मरहसामुल्लासनावासभूः। विद्या

**आरोप एव यत्र स्यादारोपान्तरकारणम् ।**
**तत्परम्परितं तत्र श्लेषमूलः स चेत्तथा ॥ १०५ ॥**
**सुदृशां तिलकश्रीमद्गुरोऽस्यतुलसौख्यदः ।**
**तन्मालारूपमब्जेयं हरिबन्धनशृङ्खला ॥ १०६ ॥**

वक्रगिरां विधेरनवधिप्रावीण्यसाक्षात्क्रिया प्राणः पञ्चशिलीमुखस्य ललनाचूडामणिः सा प्रिया' इति ॥ १०४ ॥ अथ क्रमप्राप्तं तृतीयं परम्परिताख्यं रूपकभेदं संप्रपञ्चयितुं तत्सामान्यं लक्षयति—**आरोप एवेति** । तथाचोक्तं रसगङ्गाधरे—'यत्र च आरोप एव आरोपान्तरस्य निमित्तं तत्परम्परितम्' इति । एवं परम्परितसामान्येऽपि तद्भेदद्वयमध्ये प्रथमं समुद्दिष्टं श्लिष्टाख्यं भेदं लक्षयति—**तत्रेत्यादि**शेषेण । सः आरोपः श्लेषमूलः वक्ष्यमाणश्लेषालंकारकारणकश्चेत्तर्हि तथा श्लिष्टपरम्परितं भवतीत्यन्वयः । इदमप्युक्तं तत्रैव । तत्रापि समर्थकत्वेन विवक्षितस्यारोपस्य श्लेषमूलकत्वे श्लिष्टपरम्परितमिति तदुदाहरणे स्पष्टं भविष्यतीति भावः ॥ १०५ ॥ तदुदाहरति—**सुदृशामिति** । हे सुदृशां शोभना दृक् ज्ञानं येषां तेषां पण्डितानां परोक्षज्ञानिनामित्यर्थः । तिलकगौणवृत्त्या तिलकवन्माङ्गल्यजनकेत्यर्थः । पक्षे मृगाक्षीणां ललाटगतकुङ्कुमतिलकेत्येतत् । शिष्टं तु सरलमेव । अत्र गुरौ यस्तिलकत्वारोपः परमानन्दप्रदत्वसाधर्म्यात्कृतस्तत्र कारण पण्डितेषु सुन्दरीत्वारोप एवेति परम्परितसामान्यलक्षणस्य तथाऽसौ श्लेषमूलक एवेति श्लिष्टपरम्परिताख्यतत्प्रथमभेदरूपविशेषलक्षणस्य समन्वयः स्फुट एव । यथावा मदीये नीतिशतपत्रे—'मूर्खताख्या पिशाचीयं यस्य चेतसि संविशेत् । तमेव भ्रामयत्याशापञ्चकेऽप्यनिशं वृथा' इति । अत्र शब्दादीष्टविषयकाशापदवाच्याभिलाषपञ्चकमेव आशापदवाच्यदिक्पञ्चकमिति श्लेषेणोर्ध्वदिशा सहितासु प्राच्यादिदिक्षु समीहितशब्दादिविषयपञ्चकतृष्णारोपान्मूर्खतायां पिशाचीतादात्म्यारोप इति लक्षणसंगतिरित्याकूतम् । अथोद्देशक्रमप्राप्तं मालारूपं श्लेषघटितमेव तन्मालेति परम्परितं लक्षयति । तदुदाहरति—**अब्जेयमिति** । इयं वर्णनीयत्वेन बुद्धिस्थत्वात्साक्षिप्रत्यक्षा । अब्जा । 'लक्ष्मीः पद्मालया पद्मा' इत्यमराल्लक्ष्मीरित्यर्थः । हरीति । हरिर्विष्णुः पक्षे सिंहः तद्बन्धनं वशीकरणं पक्षे रोधनं तत्साधनीभूता शृङ्खला गौरतया कनकशृङ्खला । साहि भूषणतया विष्णोरपि कण्ठतो वक्षोधारणार्थं लोभं कौस्तुभवज्जनयेदेवेति तदारोपो निरुक्तश्लेषघटितो लक्ष्म्यामुचित एव । एतादृशानि द्वित्राणि जगज्जीवनपीयूषवल्लीकुवलयप्रमुदित्यादीन्यत्र विशेषणान्तराणि स्वयमेवोह्यानि । मया तु श्लिष्टपरम्परितरूपकभेदः केवलमालारूपत्वाभ्यां द्विविधोऽपि श्लेषाख्यालंकारान्तरसंसृष्टत्वादनादरणीय एवान्यथा परिकरपरिकराङ्कुरकाव्यलिङ्गाख्यालंकाराणां प्रायः सर्वत्र संभवात्तद्घटितानामपि रूपकभेदानां ग्रहः कुतो न कार्य इत्यापत्तेरित्यस्वरसात्तत्प्रपञ्चो नैव कृत इत्याकूतम् । यथावा रसगङ्गाधरे—'कमलावासकासारः क्ष्माधृतिफणीश्वरः । अय

**तत्परम्परितं शुद्धं धृतिर्दैन्यान्यचन्द्रिका।**
**मालारूपं तु तत्कान्तां सुखाब्धिश्रीः स्मरेन्दुभा॥१०७॥**
**सायुज्यादथ सारूप्यादुपमानेन रूपकम्।**
**उपमेये त्रिधाधिक्यन्यूनत्वानुभयोक्तितः॥ १०८॥**
**षोढा कुवलयानन्दे दीक्षितैः प्रतिपादितम्।**
**तदप्युदाहराम्यत्र सायुज्याधिक्यमुख्यतः॥ १०९॥**

कुवलयस्येन्दुरानन्दयति मानवान्' इति॥ १०६॥ अस्ति परम्परिताख्यतृतीयरूपकभेदस्य द्वितीयः शुद्धाख्योऽपि भेदः केवलो मालारूपश्चेत्युद्देशक्रमानुसारात्तत्र कथं तल्लक्षणाद्यपीत्यपेक्षायां तदाह—**तदित्यादि**। क्रमात् पूर्वोत्तरार्धाभ्याम्। **धृतिर्दैन्येति**। इह दैन्ये आन्ध्यत्वारोप एव धृतौ चन्द्रिकारोपस्य कारण भवतीति परम्परितसामान्यलक्षणस्य तथा श्लेषशून्यत्वेन शुद्धत्वस्य मालारूपराहित्यात्केवलाख्यतत्प्रथमभेदत्वस्य तद्विशेषलक्षणस्यापि सत्वात्तदुदाहरणत्वमिति तत्त्वम्। यथावा मदीयाद्वैतामृतमञ्जर्याम्—'धैर्यपयोनिधिचन्द्रः शिबिर्दधीचिर्विवेकदिनसूर्यः। कार्पण्यतृणकृशानुः समभूत्कर्णः क्व तत्र वयम्' इति। **मालेति**। कान्ता यावत्स्त्रीगुणसकलदोषाभावविशिष्टस्वसुन्दरीत्यर्थः। शिष्टं तु स्पष्टमेव। यथा वैधर्म्येण साहित्यदर्पणे—'सौजन्याम्बुमरुस्थली सुचरितालेख्यद्युभित्तिर्गुणज्योत्स्नाकृष्णचतुर्दशी सरलतायोगे श्वपुच्छच्छटा। यैरेषापि दुराशया कलियुगे राजावली सेविता तेषां शूलिनि भक्तिमात्रसुलभे सेवा कियत्कौशलम्' इति॥ १०७॥ अथ कुवलयानन्दकृतां श्रीमदप्पय्यदीक्षितानां संमतान्रूपकालंकारभेदानत्र संक्षेपतः संजिघृक्षुस्तल्लक्षणसक्षेपणध्वननपूर्वकं भङ्ग्यन्तरेणताननूद्यात्र तत्संग्रहणं प्रतिजानीते—**सायुज्यादि**त्यादियुग्मेन। दीक्षितैः यदित्यार्थिकं रूपकम्। उपमानेन विषयिणा सह उपमेये वर्ण्ये विषये सायुज्यात्। आरोपिताभेदाद्धेतोः। अथ तथा सारूप्यात्समानरूपत्वापरपर्यायीभूततादूप्यान्निमित्ताच्चेत्यर्थः। क्रमादिति शेषः। **आधिक्येति**। आधिक्यस्य उपमानापेक्षया उपमेये रञ्जकयत्किंचिद्धर्माधिक्यस्य न्यूनत्वस्य तदपेक्षयैव किंचिद्रञ्जकधर्मवैधुर्यस्य तथा अनुभयस्य आधिक्याद्यभावशब्दितसाम्यस्य च या उक्तयस्ताभिरिति यावत्। त्रिधा प्रत्येकमभेदताद्रूप्ययोस्त्रित्रिप्रकारमतः॥ १०८॥ **षोढेति**। कुवलयानन्दे प्रसिद्ध एतन्नाम्नि ग्रन्थ इत्यर्थः। षोढा षट्प्रकारकं प्रतिपादितमस्ति तदप्यहमत्र ग्रन्थे। सायुज्येति। अभेदाधिक्यादिभेदेनेत्यर्थः। उदाहरामि दिङ्मात्रेण संगृह्णामीति संबन्धः। समासोक्त्यलंकारघटकश्लेषेण। पक्षे षोढा पञ्चज्ञानेन्द्रियान्तःकरणकरणकत्वेन षड्विधः कुवलयेऽन्तः प्राथमिकहिरण्मयपार्थिवावरणयुक्तब्रह्माण्डमण्डलमध्य इत्येतत् आनन्दः सुखमेव यस्मिंस्तत्र ब्रह्मलोक इत्यर्थः। उपमेये उप। 'उपोपसर्गः सामीप्ये तत् प्रतीचि समाप्यते' इति वार्तिकादात्मनि मातुं योग्ये दृश्यत्वाद्भासनार्हे जीवचिदाभास इति यावत्। उप-

**बोधोऽमृतफलः स्वर्द्रुस्त्यागोऽनार्द्रोऽमृतद्युतिः।**
**योगश्चिन्तामणिः साक्षाद्भक्तिः श्रीरपरा स्थिरा ॥ ११० ॥**
**श्रद्धास्त्यमूर्तारम्भान्या शान्तिस्तु सुरभिः परा।**
**एवं चतुर्दशैवासन्रूपकाण्यभिमेलनात् ॥ १११ ॥**

---

मानेन उप समीपे मानं ज्ञानं यस्य तेन नित्यज्ञानवतेश्वरेण सहेत्यर्थः। त्रिधा स्थूलसूक्ष्मकारणभेदात्त्रिप्रकारम्। सायुज्यात् सगुणब्रह्माहंब्रह्मोपासनपरिपाकत ऐक्यात्। तथासारूप्यात् किंचिन्न्यूनतत्परिपाकतस्तल्लीलाविग्रहसमरूपत्वादित्यर्थः। **आधिक्येति**। आधिक्यन्यूनत्वाभ्यां याऽनुभयोक्तिर्भेदोक्त्यभावस्तेनेतियावत्। रूपकं रूपस्य जीवस्वरूपस्य कं सगुणसुखम्। दीक्षितैः प्रतिपादितमिति योज्यम् ॥ १०९ ॥ तत्रैकैकपादेनैकैकरूपकोदाहरणं प्रकटयन्षण्णामपि तेषां तानि सार्धश्लोकेन संक्षिपन् प्रथममुद्देशक्रमप्राप्तमभेदाधिक्यरूपकमुदाहरति—**बोध इति**। बोधः ब्रह्मात्मैक्यसाक्षात्कारः अमृतफलः कैवल्यैकफलः एतादृशः स्वर्द्रुः कल्पद्रुमोऽस्तीत्यर्थः। अत्रोपमेयस्य बोधस्योपमानेन स्वर्द्रुणा सहाभेदारोपात्कल्पद्रुमस्य हि रसनास्वाद्यफलविशेषवत्त्वस्यैव पुराणादिप्रसिद्धेश्चेह बोधतादात्म्यापन्नस्य तस्य मोक्षफलत्वकथनादिदमभेदाधिक्यरूपकमिति लक्षणसंगतिः। एवमेवाग्रेऽपि बोध्यम्। यथावा कुवलयानन्द एव—'त्वय्यागते किमिति वेपत एष सिन्धुस्त्वं सेतुमन्थकृदतः किमसौ बिभेति। द्वीपान्तरेऽपि न हि तेऽस्त्यवशंवदोऽद्य त्वां राजपुङ्गव निषेवत एव लक्ष्मीः' इति। अथ द्वितीयमभेदन्यूनत्वरूपकमुदाहरति—**त्याग इति**। अमृतेति च्छेदः। अनार्द्रः अस्नेहः। तेन न्यूनत्वम्। त्यागे ह्यस्नेहत्वं प्रसिद्धमेव। यथावा तत्रैव—'वेधा द्वेधा भ्रमं चक्रे कान्तासु कनकेषु च। तासु तेष्वप्यनासक्तः साक्षाद्भर्गो नराकृतिः' इति। एवमेव तृतीयमभेदानुभयोक्तितत् योग इति। यथावा तत्रैव—'चन्द्रज्योत्स्नाविशदपुलिने सैकतेऽस्मिन्सरय्वा वादद्यूतं चिरतरमभूत्सिद्धयूनोः कयोश्चित्। एको वक्ति प्रथमनिहतं कैटभं कंसमन्यस्तत्त्वं स त्वं कथय भवता को हतस्तत्र पूर्वम्' इति। अथ ताद्रूप्यरूपकत्रयमध्य आधिक्यताद्रूप्यं तत् भक्तिरिति। अपरा द्वितीया स्थिरेत्याधिक्यम्। यथावा नैषधीयचरिते—'किममुभिर्ग्लपितैर्जड मन्यसे मयि निमज्जतु भीमसुतामनः। मम किल श्रुतिमाह तदर्थिकां नलमुखेन्दुपरां विबुधः स्मरः' इति ॥ ११० ॥ तद्वन्न्यूनत्वताद्रूप्यं तत् श्रद्धेति। यथावा—'अचतुर्वदनो ब्रह्मा द्विबाहुरपरो हरिः। अभाललोचनः शंभुर्भगवान्बादरायणः' इति। एवमनुभयोक्तिताद्रूप्यं तत्। **शान्तिस्त्विति**। सुरभिः कामधेनुः परा द्वितीया। यथावा—'किं पद्मस्य रुचिं न हन्ति नयनानन्दं विधत्ते न किं वृद्धिं वा झषकेतनस्य कुरुते नालोकमात्रेण किम्। वक्त्रेन्दौ तव सत्ययं यदपरः शीतांशुरुज्जृम्भते दर्पः स्यादमृतेन चेदिह तदप्यस्त्येव बिम्बाधरः' इति। तथाच प्राचीनैरष्टभिरेतैश्च षड्भिर्मिलित्वा चतुर्दशरूपकाण्यभूवन्नित्याह—**एवमिति** ॥ १११ ॥

**चतुर्विंशतिधा शब्दभूयिष्ठादि तु रूपकम् ।**
**मतमाभरणे तत्रानित्थं रूपकरूपकम् ॥ ११२ ॥**
**शंभो त्वच्चरणाम्भोजमृदुमाणिक्यमन्दिरे ।**
**धीहंसी चारुदृग्भूयात्कदात्मान्यानवेक्षिणी ॥ ११३ ॥**
**परिणामोऽत्र विषयी विषयत्वेन कार्यकृत् ।**
**गुरोः पादाम्बुजद्वन्द्वमेव मे द्वन्द्वदाहकृत् ॥ ११४ ॥**

नन्वेवं प्राचीनाचार्यमतान्तरेऽन्येऽपि रूपकभेदाः संभाव्यन्त एव, तथाच तेऽप्यत्र कुतो न संगृह्यन्त इत्याशङ्क्य समाधत्ते—**चतुर्विंशतिधेति** । तुशब्दः प्रोक्तशङ्काशान्त्यर्थः । आभरणे सरस्वतीकण्ठाभरणे । **शब्देति** । आदिना अर्थभूयिष्ठादिः । एतादृशं रूपकं चतुर्विंशतिधा चतुर्विंशतिप्रकारकम् । रूपकं मतं संमतं वर्तत इत्यार्थिकम् । ततः किं तत्राह—**तत्रेत्यादि**शेषेण । तत्र शब्दभूयिष्ठादितत्संमतचतुर्विंशतिसंख्याकरूपकभेदमध्य इत्यर्थः । रूपकरूपकमेव अनित्थं निरुक्तकाव्यप्रकाशादिप्रतिपादितचतुर्दशरूपकभेदानन्तर्भूतं एतादृशं रूपकरूपकमेव वक्ष्यमाणमस्तीत्यार्थिकोऽन्वयः । एवंच तदिदमत्र संगृह्यत इति शेषः । तद्भिन्नानां त्रयोविंशतिरूपकभेदानां तु प्रोक्तचतुर्दशतद्भेदेष्वेवान्तर्भावसंभव इति भावः ॥ ११२ ॥ तदुदाहरति—**शंभो इति** । शं सकलकल्याणं भवत्यस्मादिति तत्संबुद्धौ तथेत्यर्थः । अतएव—**त्वदिति** । तव चरणावेवाम्भोजे कमले ते एव मृदुस्निग्धमेतादृशं यन्माणिक्यमन्दिरं तत्रेत्यर्थः । **धीति** । धीर्बुद्धिरेव हंसी राजहंसी सैव चारुदृक् मृगाक्षीत्यर्थः । **आत्मेति** । स्वेतरवस्त्वनवेक्षणशीलेत्यर्थः । एतादृशी कदा भूयादिति सबन्धः । इह चरणयोरम्भोजरूपकं तत्र मृदुमाणिक्यमन्दिररूपकम्, एवं धियि हंसीरूपकं तत्रापि मुग्धरूपकमिति रूपकरूपकमिदमिति भावः । यथावा सरस्वतीकण्ठाभरणे—'मुखपङ्कजरङ्गेऽस्मिन्भ्रूलतानर्तकी नव । लीलानाट्यामृतं दृष्टौ सखि यूनां निषिञ्चति' इति । तदेवं पञ्चदशरूपकभेदाः सर्वेऽपीति शिवम् । उपलक्षणमिदं रसगङ्गाधरोक्तवाक्यार्थरूपकस्यापि । तद्यथा तत्रैव रूपकप्रकरणे—'एवं पदार्थरूपकं लेशतो निरूपितम् । एवं वाक्यार्थे विषये वाक्यार्थान्तरस्यारोपे वाक्यार्थरूपकम् । यथाहि विशिष्टोपमायां विशेषणानामुपमानोपमेयभाव आर्थस्तथात्रापि वाक्यार्थघटकानां पदार्थानां रूपकमप्यवसेयम् । 'आत्मनोऽस्य तपोदानैर्निर्मलीकरणं हि यत् । क्षालनं भास्करस्येदं सरसैः सलिलोत्करैः' इत्यादि । यथावा ममाद्वैतामृतमञ्जर्याम्—'रहसि प्रियसख्यामपि वक्तुं या ह्रीः कुलीननववध्वाः । निजकान्तसंगवृत्तं सैव मुनेर्ब्रह्मसुखकथने' इति ॥ ११३ ॥ एवमुपमेयस्योपमानाभेदरूपरूपकनिरूपणप्रसङ्गसंगतमुपमेयतादात्म्यतः प्रकृतकार्यकार्युपमानवर्णनविषयं परिणामालंकारं लक्षयति—**परिणाम** इत्यर्धेन । अत्र अलंकारशास्त्र एव नतु लोके । अपरशास्त्रे वा विषय्युपमानं विषयत्वेन उपमेयत्वेन कार्यकृत्प्रकृतकार्यसाधकं

**समानबलसादृश्यमूलप्रोद्यद्विरोधतः।**
**ससंदेहस्तु नानाकोट्यवगाहिसुधीप्रदः॥ ११५॥**

चेत्परिणामः परिणामालंकारो भवतीत्यन्वयः। एवंच विषयिशब्दितोपमा विषयपदवाच्य उपमेये तत्त्वेन प्रकृतकार्यसिद्ध्यर्थमभेदारोपवर्णनविषयत्वं परिणामालंकारत्वमिति तल्लक्षणं बोध्यम्। तदुक्तं रसगङ्गाधरे—'विषयी यत्र विषयात्मतयैव प्रकृतोपयोगी न स्वातन्त्र्येण स परिणामः। अत्र च विषयाभेदो विषयिण्युपयुज्यते। रूपके तु नैवमिति रूपकादस्य भेदः' इति। तमुदाहरति—**गुरोरिति**। अत्र द्वन्द्वशब्दितसकलद्वैतदाहरूपकार्यकर्तृत्वमम्बुजाख्योपमानस्य गुरुपादरूपोपमेयतादात्म्ये सत्येव संभवेन्न त्वन्यथा क्वचिदपीति लक्षणसगतिः। यथावा पण्डितरायाणाम्—'अपारे संसारे विषमविषयारण्यसरणौ मम भ्रामंभ्रामं विगलितविरामं जडमतेः। परिश्रान्तस्यायं तरणितनयातीरनिलयः समन्तात्संतापं हरिनवतमालस्तिरयतु' इति। व्यधिकरणो यथा—'अहीनचन्द्रा लसताननेन ज्योत्स्नावती चापि शुचिस्मितेन। इयं हि योषा सितपक्षदोषा तोषाय केषां न महीतले स्यात्' इति। दर्पणे द्वयं द्विविधोऽपि व्युत्क्रमेणैवोदाहारि—'स्मितेनोपायनं दूरादागतस्य कृत मम। स्तनोपपीडमाश्लेषस्ततो द्यूतपणस्तया' इति। नन्वेवं व्यधिकरणस्त्वया कुतो नोक्त इति चेत्सत्यम्। उपमानोपमेययोस्तादात्म्ये सत्युपमानस्योपमेयात्मना प्रकृतकार्यकारित्वस्योभयत्रापि तुल्यत्वाद्वैयधिकरण्येऽपि चमत्कारान्तरादृष्टेश्चेति दिक्॥ ११४॥ नन्वेवं विषयिणो विषयतादात्म्येन कार्यकारित्वं किं प्रायिकमेव विवक्षितं यद्वा यथाकथचिदिति संशयप्रसङ्गसंगतं ससंदेहं लक्षयति—**समानेति**। समानबलं अन्यूनानतिरिक्तसामर्थ्यं एतादृशं यत्सादृश्यं साधर्म्यं उपमेयस्य मुखस्य उपमेयानुरूपाभ्यां चन्द्रपद्माख्योपमानाभ्यां साकं तौल्यमिति यावत्। तन्मूलं यस्य एतादृशो यः प्रोद्यन् भासमानः सचासौ विरोधश्च तस्माद्धेतोरिति तथेत्यर्थः। **नानेति**। नाना अनेकाः याः कोट्यः विषताहव्यक्तयस्ता अवगाहते विषयीकरोत्येतादृशी या सुधीः सुन्दरज्ञप्तिः तां ददाति स्वप्रतिबोधककाव्यद्वारा जनयतीति तथेत्यर्थः। स संदेहः उपमेयविषयकानेकोपमानकोटिकारोपसंदेहसाहित्यादेतत्संज्ञकोऽलंकारो भवतीति संबन्धः। तदुक्तं रसगङ्गाधरे—'सादृश्यमूलाभासमानविरोधकसमबलनानाकोट्यवगाहिनी धीरमणीया ससंदेहालंकृतिः' इति। नन्वत्र बुद्धिविशेष एवोक्तालंकारत्वं प्रतीयते त्वया तु तज्जनकशब्दबुद्धार्थविशेष एव। तदुक्तं तत्कथं न तेन सह विरोध इतिचेन्न। तल्लक्षण एवैवं विवक्षाया अवश्यवाच्यत्वादन्यथा तादृशसंदेहशालिनि देवदत्तेऽतिव्याप्तेर्जडे काव्ये तादृशधीमत्त्वाभावादव्याप्तेश्च दुष्टं तल्लक्षणं स्यात्तस्मात्तत्परिष्कार एवायमिति ध्येयम्। एवं चान्यूनानतिरिक्तसामर्थ्यकसाधर्म्यज्ञानाख्यदोषमूलकपरस्परप्रतिभासमानप्रातिकूल्यकरणकानेककोट्यवगाहि सुन्दरबुद्धिजनकशब्दप्रतिपाद्यत्वं स संदेहालंकारत्वमिति तल्लक्षणं पर्यवस्यति। अत्र—'किमिन्दुः किं पद्म किमु मुकुरबिम्बं किमु

**शुद्धा निश्चयगर्भा च निश्चयान्तेति सा त्रिधा ।
चतुर्णां मंमटादीनामप्ययं मत ईदृशः ॥ ११६ ॥
तडिद्घनाम्बुतोत्फुल्लमल्लीतापिच्छकाविमौ ।
इति संदिदिहे राधामाधवौ वीक्ष्य बालकैः ॥ ११७ ॥**

मुखं चकोरौ किं मीनौ किमु मदनबाणौ किमु दृशौ । खगौ वा गुच्छौ वा कनककलशौ वा किमु कुचौ तडिद्वा तारा वा कनकलतिका वा किमबला' इति पूर्वपूर्वापेक्षाधिकबलोत्तरोत्तरोत्प्रेक्षायामतिप्रसङ्गभङ्गार्थं सामर्थ्यकान्तम् । 'अधिरोप्य हरस्य हन्त चापं परितापं प्रशमय्य बान्धवानाम् । परिणेष्यति वा न वा युवायं निरपाय मिथिलाधिनाथपुत्रीम्' इति रसगङ्गाधरोदाहृतमिथिलास्थजनोक्तौ तच्चिन्ताव्यञ्जके संशयमात्रेऽतिव्याप्तिव्यावृत्तये साधर्म्यज्ञानेति । एवमपि सिंहवत्प्रान्तरं गच्छ गृहं सेवस्व वा श्ववदिति तदुक्तोपमाविकल्पेऽनेकधर्मावगाहिसादृश्यमूलकत्वेनातिव्याप्तितादवस्थ्यनिरासार्थं दोषेति । तत्र दोषजन्यत्वाभावात् । मालारूपके तद्व्युदासाय प्रातिकूल्यान्तं निरुक्तविशेषणप्राप्तानेककोटिकत्वस्पष्टीकरणार्थमेवावगाह्यन्तम् । स्थाणुर्वा पुरुषो वा राक्षसो वेति लोकप्रसिद्धसंदेहव्युदस्तये सुन्दरेति । इदं तथा रसाद्युपस्कारकत्वं चेति विशेषणद्वयं सर्वालंकारसाधारणमेवेत्येतेन चमत्कारकरत्वाख्येन तदप्यत्रोपलक्ष्यते । बुद्धिजनकेत्याद्यवशिष्टपदकृत्यं त्वन्यथेत्यादिना प्रागेवोक्तमिति संक्षेपः ॥ ११५ ॥ ननु भवत्वेव ससंदेहालंकारलक्षणमथापि तदन्तर्गताया बुद्धेः किमेकरूप्यमेवोतानेकरूपत्वमित्याशङ्कयान्त्यपक्षाङ्गीकारेण समाधत्ते—**शुद्धेत्यर्धेन** । केवलसंशयरूपेत्यर्थः । सा निरुक्तलक्षणकुक्षिनिक्षिप्तप्रेक्षेत्यर्थः । नन्वेवं तर्हि तादृशधीप्रदस्यास्य ससंदेहालंकारस्यापि त्रैविध्यं स्यादिति चेदित्याक्षेपमिष्टापत्तिमूलीभूतप्राचीनाचार्यसमत्या समाधत्ते—**चतुर्णामित्युत्तरार्धेन** । मम्मटः काव्यप्रकाशकारः । आदिना प्रतापरुद्रीयसाहित्यदर्पणरसगङ्गाधरकाराः । ईदृशः प्रोक्तत्रैविध्यविशिष्टः अयं ससंदेहालंकारः मतः संमतोऽस्तीति संबन्धः ॥ ११६ ॥ तत्राद्यमुदाहरति—**तडिद्घनाविति** । इमौ पुरोवर्तिनौ । **तडिदिति** । विद्युन्मेघावेव । उत अथवा उदिति उत्फुल्लौ परमविकसितौ मल्लीतापिच्छौ मालतीतमालावेव वा । इति एवंप्रकारेण बालकैः गोपकुमारैः राधामाधवौ 'वीक्ष्य वृन्दावनकुन्दादिनिकुञ्जादाववलोक्य संदिदिहे संशयोऽकारीत्यन्वयः । अत्रोत्फुल्लपदेन तयोः परमप्रहृष्टत्वं द्योत्यते । तथा पूर्वकोटिसमबलत्वमपि । अन्यथा भौमयोर्मल्लीतापिच्छयोर्दिव्याभ्यां तडिद्घनाभ्यां समबलत्वायोगान्न लक्षणसमन्वययोग्यलक्ष्योदाहरणं स्यात् । नचैतावतापि कथं समबलत्वम् । नहि तडित इव भास्वरत्वं घनस्येवातिदूरतः संतापहारकत्वं च फुल्लायामपि मल्ल्यां फुल्लेऽपि च तमाले संभवति । तस्माद्विफल एवायमायास इति वाच्यम् । प्रकृते व्यज्यमानसंभोगशृङ्गारस्योद्दीपनविभावसामग्रीत्व एव समबलत्वस्य विवक्षितत्वात्तस्य चोक्तफुल्लत्वविशेषणमन्तरा दुःसंपादत्वाच्च । तथाचान्यूनान-

**किं चन्द्रोयं कुतो नाङ्की पद्मं वोद्यत्कुतो निशि।
इति वृन्दावने राधाननदक्संशयी हरिः॥ ११८॥**

तिरिक्तसामर्थ्यकमेव तडिद्घनयोः संफुल्लमल्लीतमालयोश्च राधामाधवसाधर्म्यमिति गोपकुमारनिष्ठतद्विषयकज्ञानाख्यदोषमूलकः तडिद्घनारोपो हि संफुल्लमल्लीतमाला रोपेण सच तेनेति परस्परं प्रतिभासमानप्रातिकूल्य एवेति तादृशासाधारणकारणकश्च योऽनेककोट्यवगाही उभयकोटिविषयकः संशयः इमौ पुरोवर्तिनौ तडिद्घनावुत उत्फुल्लमल्लीतापिच्छकाविति प्रसिद्ध एव तद्विषयिणी या श्रोतॄणां सुन्दरबुद्धिश्चारुचमत्कारकारिणी ज्ञप्तिस्तज्जनको यः प्रकृतकाव्यात्मकः शब्दस्तत्प्रतिपाद्यत्वं प्रकृते स संदेहालंकारे स्फुटमेवेति लक्षणसंगतिः। यथावा काव्यप्रकाशे—'अस्याः सृष्टिविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः। वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो निर्मातु प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः' इति। यथावा साहित्यदर्पणे—किं तारुण्यतरोरियं सरभसोद्भिन्ना नवा मञ्जरी वेलाप्रोच्छलितस्य किं लहरिका लावण्यवारांनिधेः। उद्गाढोत्कलिका तनोः स्वसमयोपन्यासविश्रम्भिणः किं साक्षादुपदेशयष्टिरथवा देवस्य शृङ्गारिणः' इति। यथावा रसगङ्गाधरे—'मरकतमणिमेदिनीधरो वा तरुणतरस्तरुरेष वा तमालः। रघुपतिमवलोक्य तत्र दूरादृषिनिकरैरिति संशयः प्रपेदे' इति। अत्रोदाहरणत्रयेऽपि क्रमाद्धेतूत्प्रेक्षाशुद्धोत्प्रेक्षाविकल्पालंकारघटितत्वं बोध्यम्। यथावा कुवलयानन्दे—'जीवनग्रहणे नम्रा गृहीत्वा पुनरुत्थिताः। किं कनिष्ठाः किमु ज्येष्ठा घटीयन्त्रस्य दुर्जनाः' इति। अत्रापि श्लेषालंकारघटितत्वमेवेति क्व शुद्धससंदेहोदाहरणत्वमिति सहृदया एव विवेचयन्त्विति रहस्यम्। रसगङ्गाधरेऽग्रे—'सिन्दूरैः परिपूरितं किमथवा लाक्षारसैः क्षालितं लिप्तं वा किमु कुङ्कुमद्रवभरैरेतन्महीमण्डलम्। संदेहं जनयन्नृणामिति परित्रातत्रिलोकस्त्विषां त्रातः प्रातरुपातनोतु भवतां भव्यानि भासां निधिः' इति पद्यमुदाहृत्य तद्विचार्यैवं च सूर्यकिरणधर्मिकः संशयो गुणीभूतो व्यञ्जनागम्यत्वाद्विषयविषयिणोरारोपानुकूलविभक्तिकतां नापेक्षते। अपेक्षते च साक्षाच्छब्दवेद्यतायामिति कुत्राप्यध्यवसानमूलसंशयस्येत्युक्त्वा, ततोऽग्रे किंचित् खण्डनाद्युपपाद्य 'तीरे तरुण्या वदनं सहासं नीरे सरोजं च मिलद्विकासम्। अलोक्य धावत्युभयत्र मुग्धा मरन्दलुब्धालिकिशोरमाला' इति। अतएव संशयध्वन्युदाहरणं तथा 'आज्ञा सुमेषोरविलङ्घनीया किं वा तदीया नवचापयष्टिः। न न स्थिता किंवनदेवता वा शकुन्तला वा मुनिकन्यकेयम्' इति तद्गौणव्यङ्ग्यस्य। तथा 'संपश्यतां तामतिमात्रतन्वीं शोभाभिराभासितसर्वलोकाम्। सौदामनी वा सितयामिनी वेत्येव जनानां हृदि संशयोऽभूत्' इति। तथा 'सपल्लवा किंनु विभाति वल्लरी सफुल्लपद्मा किमियं नु पद्मिनी। समुल्लसत्पाणिपदा स्मिताननामितीक्षमाणैः समलम्भि संशयः' इति चोक्तम्॥ ११७॥ अथ निश्चयगर्भोदाहरणमाह—**किं चन्द्रोऽयमिति**।

**च्युता कल्पलता स्वस्तः किंवैषा विद्युदम्बुदात् ।**
**इति संदिह्य निःश्वासैः कृष्णो निर्णीतवान्प्रियाम् ॥११९॥**

—

अयं पुरोवर्ती पदार्थः किं चन्द्रः अस्ति नवेत्यार्थिकम् । तत्र प्रथमकोटिबाधनिश्चायकं हेतुमाह—**कुत इत्यादिना** । 'कलङ्काङ्कौ लाञ्छनं च' इत्यमरायद्ययं चन्द्रस्तर्हि अङ्की कलङ्की कुतो नास्तीत्यन्वयः । तस्य निशि पूर्णत्वे प्रतीयमानस्य कलङ्कित्वव्याप्यत्वभाननियमादिति भावः । वेत्यथवा यदि पुरोवर्तिनि कलङ्कित्वाभावात्पद्मं चेत्तर्हि निशि रात्रावप्यय उयद्विकसनलक्षणमुदयं प्रापदेव कुतो भवतीत्यध्याहृत्य योजना । नहि रात्रौ पद्मं विकसतीत्याशयः । तस्मात्पुरोवर्तिवस्तुनोऽस्य निश्यपि विकासशालित्वात्पद्मत्वाख्यद्वितीयकोटिरपि बाधितैवेति निर्णयाभावपर्यवसायिसंशयः पुनस्तदवस्थ एवेति भावः । इतीत्याद्युत्तरार्धं तु स्पष्टमेव । एवं चेह निश्चयगर्भत्वाद्द्वितीयससंदेहभेदोदाहरणत्वम् । यथावा रसगङ्गाधरे—'तरणितनया किं स्यादेषा न तोयमयी हि सा मरकतमणिज्योत्स्ना वा स्यान्न सा मधुरा कुतः । इति रघुपतेः कायच्छायाविलोकनकौतुकैर्वनवसतिभिः कैः कैरादौ न संदिदिहे जनैः' इति । अत्र मरकतमणेः कान्तिरित्येव प्रयोक्तव्यम् । 'चन्द्रिका कौमुदी ज्योत्स्ना' इत्यमराच्चन्द्रस्यैव कान्तौ ज्योत्स्नाशब्दस्य रूढत्वादिति ध्येयम् ॥ ११८ ॥ इदानीमुद्देशक्रमप्राप्तं निश्चयान्ताख्यं ससंदेहालंकारस्य तृतीयं भेदमुदाहरति—**च्युतेति** । एषा वृन्दावने चैत्रचित्राचन्द्रिकायां पुरोवर्तिनीत्यर्थः । स्वस्तः स्वर्गात्सकाशादित्यर्थः । च्युता पतिता । कल्पलता कल्पवल्लयेव सौरभ्यभास्वररूपवत्त्वादिना अस्ति किमित्यन्वयः । वेत्यथवा अम्बुदान्मेघाच्च्युता स्खलिता विद्युत् सौदामनी अस्ति किमित्यादिप्राग्वदेव । इत्युक्तप्रकारेण कृष्णः वृन्दावने राधामन्वेषयन्नित्यार्थिकम् । संदिह्य' संदेहवृत्तिमान्दूरत्वादिना सादृश्यसामग्रीदोषाद्भूत्वा, पश्चात्तत्समीपे गतः सन्नित्यार्थिकम् । निःश्वासैः स्वविरहमूर्च्छाकालिकतदीयश्वासोच्छ्वासैरित्यर्थः । प्रियां स्वप्रेयसीं राधिकामेव तां निर्णीतवान्निश्चितवानिति योजना । यथावा काव्यप्रकाशे—'इन्दुः किं क्व कलङ्कः सरसिजमेतत्किमम्बु कुत्र गतम् । ललितसविलासवचनैर्मुखमिति हरिणाक्षि निश्चितं परतः' इति। यथावा साहित्यदर्पणे—'किं तावत्सरसि सरोजमेतदारादाहोस्विन्मुखमवभासते तरुण्याः । संशय्य क्षणमिति निश्चिकाय कश्चिद्बिब्बोकैर्बकसहवासिनां परोक्षैः' इति । **बकेति** । प्रायशो बकैकसहवासविशिष्टानां कमलानां परोक्षैरगोचरैरित्यर्थः। एतादृशैः**बिब्बोकैः**। 'बिब्बोकोऽभिमतप्राप्तावपि हर्षादनादरः' इति रामाश्रमोक्तवचनात्तत्सूचकवचनैरित्यर्थः। यथावा रसगङ्गाधरे—'चपला जलदाच्च्युता लता वा तरुमुख्यादिति संशये निमग्नः । गुरुनिःश्वसितैः कपिर्मनीषी निर्णीतवानथ तां वियोगिनीति' । तां सीतामित्यर्थः ॥ ११९ ॥ एवं ससंदेहालंकारनिरूपणे कृते तत्रान्तिमस्य निश्चयान्ततद्भेदस्य निश्चयविषयेतरकोट्यवच्छेदेन भ्रान्ति-

**सादृश्याद्धर्मिणि भ्रान्तिस्तादात्म्येनान्यधर्मिणः ।**
**चार्वनाहार्यनिश्चित्या तद्वांस्तदनुवादवाक् ॥ १२० ॥**
**राधिकालिङ्गितं कृष्णं दृष्ट्वा वृन्दावने चिरम् ।**
**सविद्युदम्बुदभ्रान्त्या ननृतुः केकिनः शतम् ॥ १२१ ॥**

त्वसिद्धेस्तत्प्रसङ्गाद्भ्रान्तिमन्तमलंकारं लक्षयति—**सादृश्यादिति** । धर्मिणि उपमेये । **अन्येति** । उपमानाख्यधर्मिण इत्यर्थः । सादृश्यात् सुन्दरसाधर्म्यादिति यावत् । उत्तरार्धगतात्तच्छब्दादिह यच्छब्दोऽध्याहार्यः । या चारु सुन्दरं यथा स्यात्तथा । **अनाहार्येति** । 'आहार्यं बाधकालीनमैच्छिकं ज्ञानमुच्यते' इति तल्लक्षणात्तद्भिन्नाया निश्चितिर्विचारमन्तरैवाध्यवसितिस्तयेत्यर्थः । तादात्म्येनैक्येन । भ्रान्तिः प्रसिद्धैव । तदनुवादेति । तां निरुक्तभ्रान्तिं अनुवदतीति तथा तादृशी वाक्काव्यवाणी यत्र विषये स्वजन्यज्ञानद्वारा स तथेत्यर्थः । एतादृशः । **तदिति** । भ्रान्तिमानलंकारोऽभवतीत्यन्वयः । एवंच उपमेयावच्छेदेनोपमानस्य साधर्म्यात्सुन्दरानाहार्यविचारप्रागभावसमानाधिकरणैक्यनिश्चितिरूपभ्रान्त्यनुवादकवाक्यजन्यज्ञानविषयत्वं भ्रान्तिमदलंकारत्वमिति तत्सामान्यलक्षणं पर्यवस्यति । मिलितसामान्यतद्गुणाख्यवक्ष्यमाणालंकारवारणायात्रोपमेयग्रहणम् । 'अकरुणहृदय प्रियतम मुञ्चामि त्वामतः परं नाहम् । इत्यालपति कराम्बुजमादायालीजनस्य विकला सा' इति भामिनीविलासोक्ते नायकं प्रति नायिकावृत्तकथकतत्प्रेषितदूतीवाक्ये व्यज्यमानोन्मादव्युदासायोपमानस्य साधर्म्यादिति । रज्जुसर्पादिभ्रमव्यावृत्तये सुन्दरेति । अभेदादिरूपकनिरासाय अनाहार्येति । प्रमापनोदाय रूपान्तम् । एतेन संशयोऽपि निरस्तः । पशुपक्ष्यादिनिष्ठदैवापन्नभ्रान्तिभेदनाय भ्रान्तीत्यादिविषयत्वान्तम् । वाक्यमिह काव्यमेव । एवमुल्लेखवारणाय भ्रान्तावैकल्यं विवक्षितमिति संक्षेपः ॥ १२० ॥ अथैतमुदाहरति—**राधिकेति** । केकिनः स्वेष्टदर्शनजन्यहर्षोत्कर्षाच्छब्दं कुर्वाणाः शिखिन इत्यर्थः । वृन्दावने चिरं बहुकालं यथास्यात्तथा । **राधिकेति** । राधया स्वयमेव प्रमुदितत्वेनाश्लिष्टमित्येतत् । कृष्णं भगवन्तं चिरं दृष्ट्वा दीर्घकालमवलोक्येति यावत् । एतेन संभावितत्वमावेद्यते । **सेति** । सतडिद्घनभ्रमेणेत्यर्थः । शतं अनेकसंख्याकं यथा भवति तथा चिरं ननृतुरित्यन्वयः । तथाचात्रोपमेयौ राधाकृष्णौ तदवच्छेदेन उपमानौ विद्युदम्बुदौ तयोः परमगौरत्वकृशतनुत्वनीलवर्णत्वसरसत्वसादृश्याद्दोषादनाहार्यविचारासहतादात्म्यनिश्चयरूपा भ्रान्तिर्या वृन्दावने मयूराणामतिचमत्कारकारिकण्यभूत्तदनुवादवाक्यत्वं प्रकृतपद्ये वर्तत एवेत्येतज्जन्यज्ञानविषयत्वं निरुक्तभ्रान्तिमत्यलंकारे स्फुटमेवेति लक्षणसंगतिः । यथावा काव्यप्रकाशे—'कपाले मार्जारः पय इति कराल्लेढि शशिनस्तरुच्छिद्रे प्रोतान्बिसमिति करी संकलयति । रतान्ते तल्पस्थान्हरति दयिताप्यंशुकमिति प्रभामत्तश्चन्द्रो जगदिदमहो विभ्रमयति' इति । यथावा सरस्वतीकण्ठाभरणे—'कनककलशस्वच्छे राधापयोधरमण्डले नवजलधरश्यामामात्मद्युति

**सादृश्यधीद्धसंस्कारजज्ञानं स्मृत्यलंकृतिः ।**
**खेलत्खञ्जनयुग्माब्जदृक्सस्मार सुदृङ्मुखम् ॥ १२२ ॥**

प्रतिबिम्बिताम् । असितनिचयप्रान्तभ्रान्त्या मुहुर्मुहुरुत्क्षिपञ्जयति जनितव्रीडाहासः प्रियाहसितो हरिः' इति कुवलयानन्दे त्वयमन्योन्यभ्रान्तिमूलोऽप्युक्तः । 'पलाशमुकुलभ्रान्त्या शुकतुण्डे पतत्यलिः । सोऽपि जम्बूफलभ्रान्त्या तमलिं धर्तुमिच्छति' इति। यथावा रसगङ्गाधरे—'कनकद्रवकान्तिकान्तया मिलितं राममुदीक्ष्य कान्तया । चपलायुतवारिदभ्रमान्ननृते चातकपोतकैर्वने' । अत्र चातकगतहर्षोपस्कारकतया तद्गता भ्रान्तिरलंकारः । अत्रैव यदि 'परिफुल्लपतत्रपल्लवैर्मुमुदे चातकपोतकैर्वने' इत्युत्तरार्धं निर्मीयते तदायमेव भ्रान्तिध्वनिरिति । यथावा मदीये कृष्णलीलामृते—'भगवदेकरतातुरचेतसा विरहदाहवशोज्झितवाससा । उषसि राधिकया बत भानवी रुगपि चेलधियाऽचकृषे मदात्' इति ॥ १२१ ॥ एवं भ्रान्तिमदलंकारे निरूपिते तत्र भ्रान्तौ स्मृतेरपि केषांचिन्मते प्रयोजकत्वात्तत्प्रसङ्गात्स्मृतं स्मृत्यलंकारं लक्षयति—**सादृश्येत्यादि**पूर्वार्धेन । सादृश्यं उपमानोपमेययोः सुन्दरं साधर्म्यं तद्विषयिणी या धीरनुभूतिः तया वार्तमानिकया इद्धः 'एकसंबन्धिज्ञानमपरसंबन्धिस्मारकम्' इति नियमादुद्बुद्धो यः संस्कारः पूर्वानुभूतनिरुक्तसादृश्यविषयकज्ञानीयसूक्ष्मावस्थाविशेषस्तेन जायत इति तथा एतादृशं यज्ज्ञानं 'अनुभूतविषयाऽसंप्रमोषाः स्मृतिः' इति पातञ्जलसूत्रात्संस्कारजन्यं ज्ञानं स्मृतिरित्यभियुक्तोक्तेश्च स्मृतिरेव प्रागुक्तान्यथानुपपत्त्या निरुक्तज्ञानविषयकज्ञानजनककाव्यप्रतिपाद्यत्वमिति यावत् । स्मृत्यलंकृतिः प्रोक्तस्मृत्यात्मकज्ञानविषयकज्ञानजनकशब्दप्रतिपाद्यत्वं स्मरणालंकारत्वमित्यन्वयः । एवंच सुन्दरसादृश्यविषयकवार्तमानिकज्ञानप्रोद्बुद्धसंस्कारजन्यज्ञानविषयकज्ञानजनकशब्दप्रतिपाद्यत्वं स्मरणालंकारसामान्यलक्षणं पर्यवसितम् । तदुक्तं रसगङ्गाधरे—'सादृश्यज्ञानोद्बुद्धसंस्कारप्रयोज्यं स्मरणं स्मरणालंकारः' इति । पदकृत्यानि तु प्रागुक्तदिशा स्वयमूह्यानि । तमुदाहरति—**खेलदित्या**द्युत्तरार्धेन । खेलति क्रीडति इति खेलदेतादृशं खञ्जनयुग्मं खञ्जरीटमिथुनं यस्मिंस्तादृशं यदब्जं पद्मं तत्पश्यतीति तथा एतादृशः श्रीराम इत्यर्थः । **सुदृगिति** । शोभने दृशौ यस्याः वैदेह्यास्तस्याः मुखं वदनं सस्मार स्मृतवानिति योजना । अत्र सुन्दरसादृश्यधीः खेलत्खञ्जनयुग्मविशिष्टपद्मनिष्ठसुदृङ्मुखसंबन्धिसुन्दरसाधर्म्यविषयकवार्तमानिकं श्रीरामे ज्ञानं तेन प्रोद्बुद्धो यः संस्कारस्तज्जन्यं यज्ज्ञानं सीताननविषयकस्मृत्यात्मकं तद्विषयकज्ञानजनको यः प्रकृतकाव्यात्मकः शब्दस्तत्प्रतिपाद्यत्वं प्रकृतालंकारे स्पष्टमेवेति लक्षणसमन्वयः । यथावा सरस्वतीकण्ठाभरणे—'अदृश्यन्त पुनस्तेन खेलाः खञ्जनपङ्क्तयः । अस्मर्यन्त विनिश्वस्य प्रियानयनविभ्रमाः' इति । यथावा काव्यप्रकाशे—'निम्ननाभिविवरेषु यदम्भः प्लावितं चलदृशां लहरीभिः । तद्भवैः कलरुतैः सुरनार्यः स्मारिताः सुरतकण्ठरुतानाम्' इति । यथावा प्रसन्नराघवे नाटके—'सौमित्रे ननु सेव्यतां

**एकस्य वस्तुनोऽनेकप्रकारां रुचिरां धियम्।**
**शब्दद्वारैव यः कुर्यात्स उल्लेख इह स्मृतः ॥ १२३ ॥**

तरुतलं चण्डांशुरुज्जृम्भते चण्डांशोर्निशि का कथा रघुपते चन्द्रोऽयमुन्मीलति। वत्सैतद्विदितं कथं नु भवता धत्ते कुरङ्गं यतः क्वासि प्रेयसि हा कुरङ्गनयने चन्द्रानने जानकि' इति। रसगङ्गाधरे तु—'इत एव निजालयं गताया वनिताया गुरुभिः समावृतायाः। परिवर्तितकंधरं नतभ्रुस्स्मयमानं वदनं न विस्मरामि'। अत्र स्मरणस्य चिन्तोद्बुद्धसंस्कारप्रयोज्यत्वान्नालंकारो व्यङ्ग्यत्वविरहाच्च न भावः। एवम् 'दरानमत्कन्धरबन्धमीषन्निमीलितस्निग्धविलोचनाब्जम्। अनल्पनिःश्वासभरालसाङ्ग्याः स्मरामि सङ्गं चिरमङ्गनायाः'। इहापि स्मृतिर्न भावो नाप्यलंकारः। व्यङ्ग्यस्यैव व्यभिचारिणो भावत्वादित्युक्त्वाग्रे किंचित्खण्डनाद्युक्त्वा, 'अगाधं परितः पूर्णमालोक्य स महार्णवम्। हृदयं रामभद्रस्य सस्मार पवनात्मजः' इत्युपचरितं स्मरणमुदाहृतम्। विस्तरस्त्वत्र सरस्वतीकण्ठाभरणाद्याकरेष्वेवानुसंधेयः। प्रस्तुतेऽत्र तु मया विस्तरभयान्नैवासौ कृत इति दिक् ॥ १२२ ॥ एवं सामान्यतोऽन्यत्रान्यारोपरूपभ्रान्तिमदलंकारनिरूपणप्रसङ्गसङ्गतमुल्लेखालंकारं लक्षयति—**एकस्येति**। एकस्य वस्तुनः वर्ण्यस्य पदार्थस्य। **अनेकेति**। बहुविधाम्। तत्रापि रुचिरां सहृदयानन्दकत्वेन रम्यामित्यर्थः। एतादृशीं धियं बुद्धिवृत्तिं यः शब्दद्वारैव स्ववाचककाव्यद्वारेणैव ननु साधनान्तरेण कुर्यात् इह अलंकारशास्त्रे सः पदार्थ उल्लेख इति स्मृतः परिभाषितो भवतीत्यन्वयः। तथाच एकत्वसंख्यावच्छिन्नवर्ण्यविषयकानेकप्रकारकरुचिरधीजनकशब्दैकप्रतिपाद्यत्वमुल्लेखालंकारत्वमिति तत्सामान्यलक्षणं निष्कृष्टम्। अत्र भ्रान्तिमत्यतिव्याप्तिव्यावृत्तये विषयकान्तम्। मालारूपकेऽतिप्रसङ्गभङ्गायानेकप्रकारकेति। मृगजलकल्लोलमालां पश्येत्यादिशब्दबोधविषये तद्वारणाय रुचिरेति। भिन्नां चित्रमिदं पश्येत्यादिस्थले भिन्नित्याधिष्ठाने नानाविधकारुनगरनागरनगर्यादिरङ्गरचनाविशेषात्मकसोपाधिकभ्रमेतिव्याप्तिव्युच्छित्तये एकेति। तदुक्तं रसगङ्गाधरे—'एकस्य वस्तुनो निमित्तवशाद्यदनेकैर्ग्रहीतृभिरनेकप्रकारग्रहणं तदुल्लेखः' इति। ननु तत्र निमित्तवशादनेकैर्ग्रहीतृभिरिति च निमित्तादि त्वया लक्षणे कुतो न निवेशितमिति चेन्न। निमित्तग्रहणस्य अनेकप्रकारकेत्यनेनैव चारितार्थ्यात्। नहि निमित्तमन्तरानेकप्रकारक उल्लेखः संभवति। अनेकैर्ग्रहीतृभिरित्यस्य त्वेकग्रहीतृकर्तृकोल्लेखेऽव्याप्तेः प्रकृते सामान्यलक्षणे ग्रहणं न कृतम्। तथाच स्वयमेव वक्ष्यति 'धर्मस्यात्मा भागधेयं क्षमायाः' इत्यादिमालारूपकेऽतिप्रसङ्गवारणायानेकैर्ग्रहीतृभिरित्यविवक्षितबहुत्वकं ग्रहणविशेषणमिति प्रतिपाद्य तल्लक्षणं मध्ये किंचिद्ग्रन्थं विलिख्य अथ प्रकारान्तरेणाप्युल्लेखो दृश्यते यत्रासत्यपि ग्रहीत्रनेकत्वे इत्यादिना। तस्माद्युक्तमेवेदमिति ॥ १२३ ॥ एवमुल्लेखालंकारसामान्यलक्षणमुपपाद्य किं रूपकादेरिवास्यापि केचिद्भेदाः सन्ति नवेत्याशङ्कां शमयन्नेकग्रहीत्रनेकग्रहीतृकत्वभेदेन तत्कोटिद्वैविध्य तस्य प्रत्येकं त्रैविध्यान

**विषयाश्रयसामानाधिकरण्यभिधा त्रिधा ।**
**स्वरूपफलहेतूनां ग्रहीतृभिरपि त्रिधा ॥ १२४ ॥**
**निस्पृहोऽनाल्पसौख्येषु शुद्धधर्मेषु सस्पृहः ।**
**शास्त्रेषु चतुरास्यो मे नित्यं विजयते गुरुः ॥ १२५ ॥**
**सुहृदः पुण्यसक्तेषु सदयाः सर्वदुःखिषु ।**
**सत्सु हृष्टा उदासीनाः खलेषु कति पण्डिताः ॥ १२६ ॥**

षोढा विभिन्नत्वं चाह—**विषयेति** । विषयश्चाश्रयश्च सामानाधिकरण्यं चेति तथा तेषां भिद्भेदस्तया वक्ष्यमाणविषयादिभेदेनेत्यर्थः । त्रिधा त्रिप्रकारकोऽयमुल्लेखालंकारो भवतीति किंचिदध्याहृत्य संबन्धः । तदुक्तं रसगङ्गाधर एव । अथ प्रकारान्तरेणाप्युल्लेखो दृश्यते । यत्रासत्यपि ग्रहीत्रनेकत्वे विषयाश्रयसमानाधिकरणादीनां सबन्धिनामत्यन्तमनेकत्वप्रयुक्तमेकस्य वस्तुनोऽनेकप्रकारत्वमिति । अथानेकग्रहीतृकोटिकोल्लेखस्यापि ग्राह्यस्वरूपफलहेतूनां भेदात्पुनस्त्रैविध्य विधत्ते स्वरूपेत्याद्युत्तरार्धेन । पुनरप्यसावुल्लेखालंकारः । **स्वरूपेति** । ग्रहीतृभिरपीत्यादि । विषयादिषण्णां स्वरूपाणि त्वनुपदमेवोदाहरणेषु स्पष्टीभविष्यन्तीति भावः ॥१२४॥ ततः क्रमेण षड्विधमपि तमुदाहरन्नादौ एकग्रहीतृकोटिगतमनेकविषयभेदेनैकस्यानेकोल्लेखमुदाहरति—**निःस्पृह इति । अनात्मेति** । इष्टशब्दादिजन्यानन्देष्वित्यर्थः । सर्वत्रेह विषयसप्तम्येव । **शुद्धेति** । तन्त्रगन्धास्पृष्टवैदिककर्मस्वित्यर्थः । यथावा रसगङ्गाधरे—'कातराः परदुःखेषु निजदुःखेष्वकातराः । अर्थेष्वलोभा यशसि सलोभाः सन्ति साधवः' इति ॥ १२५ ॥ अथ तत्रैवाश्रयभेदेनैकस्यानेकोल्लेखमुदाहरति—**सुहृद इति । सर्वेति** । यावद्विपन्नेष्वित्यर्थः । तथाच पातञ्जलं सूत्रं 'मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनातश्चित्तप्रसादनम्' इति । यथावा कुवलयानन्दे—'अकृशं कुचयोः कृशं वलग्ने विपुलं चक्षुषि विस्तृतं नितम्बे । अधरेऽरुणमाविरस्तु चित्ते करुणाशालिकपालिभागधेयम्' इति । यथावा रसगङ्गाधरे—'तुषारास्तापसव्राते तामसेषु च तापिनः । दृगन्तास्ताटकाशत्रोर्भूयासुर्मम भूतये' इति । ननु त्वदीये पूर्वोदाहरणेऽनात्मसौख्यादौ विषयता प्रकृतोदाहरणे तु पुण्यसक्तादिष्वाश्रयता तथा, कुवलयानन्दरसगङ्गाधरोदाहरणयोरेतयोरपि कुचतापसादिष्वप्याश्रयतैवेत्यत्र किं नियामकं सप्तम्यन्तत्वस्य स्थलचतुष्टयेऽपि तुल्यत्वादिति चेत्सत्यम् । कविविवक्षाया एव नियामकत्वात् । अतएव रसगङ्गाधरे तावदिदं पद्यमुदाहृत्योक्तम् 'इहत्वाश्रयानेकत्वप्रयुक्तमनेकविधत्वं दृगन्तानाम्' इति । आश्रयत्वमाधारत्वमेव । कुवलयानन्दोदाहरणे त्ववच्छेदकत्वापराभिधं सर्वस्मिन्नात्मास्तीत्यादाविव व्याप्यत्वमेव सप्तम्यर्थ इष्टः । तदुक्तं ऐरावताख्ये द्वितीयरत्न एव—'आधारे विषये व्याप्येऽन्यक्रियालक्षकक्रिये । सप्तमी कमले हंस आस्त इत्यादिके भवेत्' इति ॥ १२६ ॥

**योगिनो योगिनां मध्ये भोगिनोऽपि च भोगिनाम्।**
**विदुषामपि विद्वांसः पिशुनाः कैर्विनिश्चिताः॥ १२७॥**
**आत्मा भूमैव तत्त्वज्ञैः कर्तैवेति च कर्मठैः।**
**देहादिसंघ एवान्यैः सर्वैरुल्लिख्यतेऽद्भुतम्॥ १२८॥**
**यतयो मोक्तुमेवेति पातुमेवेति भीरवः।**
**प्रकटः कर्तुमेवेति कर्मिणस्त्वां गुरो विदुः॥ १२९॥**

एव तत्रैव सामानाधिकरण्यभेदेनाप्येकस्यानेकोल्लेखमप्युदाहरति—**योगिन इति। कैरिति।** तत्तत्सामानाधिकरण्येन तत्तद्व्यपदेशव्यवहार्यत्वेनाव्यभिचारिस्वरूपनिर्णयाभावात्कैश्चिदपि पिशुना नैव निर्णीताः सन्तीत्याकूतम्। यथावा रसगङ्गाधरेएव—'विद्वत्सु विमलज्ञाना विरक्ता यतिषु स्थिताः। स्त्रीयेषु तु गरोद्गारा नानाकाराः क्षितौ खलाः' इति। अत्र विद्वदादिसहचरभेदप्रयुक्तं खलानामनेकविधत्वमिति च तत्रैव विवृतिरपि॥ १२७॥ एवमेकग्रहीतृकविषयाश्रयसामानाधिकरण्यभेदेन त्रिविधमुल्लेखमुद्देशक्रमानुसारेणैव समुदाहृत्येदानीं तत्क्रमेणैव तमनेकग्रहीतृकोटिकमपि स्वरूपफलहेतुभेदेन त्रिविधमेवोदाहरन् प्रथमं स्वरूपोल्लेखमुदाहरति—**आत्मेति। भूमैवेति।** 'भूमात्वेव विजिज्ञासितव्यः' 'यो वै भूमा तत्सुखम्' इत्यादिश्रुतेः 'भूमा संप्रसादादध्युपदेशात्' इति शारीरकमीमांसासूत्राच्च त्रिविधपरिच्छेदात्मकाखिलद्वयात्यन्ताभावोपलक्षितं सच्चिदेकसुस्वरूप ब्रह्मैवेति यावत्। अत्र यद्यपि अन्यपदेनैव तत्त्वज्ञकर्मठेतरत्वावच्छेदेन यावत्संग्रहः सपन्न एव तथापि कर्मठापेक्षया नीचकोटिकानां पामराणामेवान्यपदेन संग्रहः स्यान्न सांख्यद्वयन्यायद्वयवादिनां कापिलादितैर्थिकाणां तथा तदेकदेशिनां माध्वरामानुजवल्लभीयादीनामपीति कस्यचिदाशङ्का स्याद्यतस्ते न तत्त्वज्ञाः नापि कर्मठास्तथाच तेषां कुत्रान्तर्भाव इति प्राप्ते, ये हि निरुक्तभेदवादिषु तत्तच्छास्त्रसिद्धान्तं यथावदेव ज्ञात्वा तदुक्तत्यागयोगादिसाधनैकनिष्ठास्ते कर्मठेष्वेवान्तर्भाव्याः। सिद्धान्ते ज्ञानेतरयावन्मोक्षसाधनानां कर्तुमकर्तुमन्यथाकर्तुं शक्यत्वेन कर्मत्वाभ्युपगमाद्ये तु तत्तच्छास्त्राभिमानमात्रवन्तस्तेषां लोके पण्डितत्वेन व्यवहारात्तेषां तु क्वान्तर्भाव इति विमर्शे यदि ते देहाद्यतिरिक्तकर्त्रात्मापरोक्षज्ञानवन्तः सन्ति तर्हि ते तत्तच्छास्त्रोक्तज्ञानेतरत्यागयोगाद्यखिलसाधननिष्ठाः कुतो न भवन्ति कुतः पुनर्धनैकनिष्ठाः प्रदृश्यन्त इत्यादियुक्त्या च तेषां देहादिसंघातमवादिषु पश्वादिसाधारणपामरेष्वेवान्तर्भाव्यत्वमिति द्योतयितुं **सर्वैरिति**। अस्यापि शान्तरसोपस्कारकत्वादलंकारत्वम्। अन्यत्तूक्तरीत्यैवोह्यम्। यथावा रसगङ्गाधरे—'नरैर्वरगतिप्रदेत्यथ सुरैः स्वकीयापगेत्युदारतरसिद्धिदेत्यखिलसिद्धसंघैरपि। हरेस्तनुरिति श्रिता मुनिभिरस्तसंसारियं तनोतु मम शं तनोः सपदि शंतनोरङ्गना' ॥ १२८॥ अथ क्रमागतं फलोल्लेखमुदाहरति—**यतय इति।** अये गुरो' त्वां प्रति यतयः यतन्ते मोक्षार्थं प्रयत्नं कुर्वन्तीति तथा। सकलसाधनसंपन्ना

**केचित्त्यागैकनिष्ठत्वात्परे त्वैश्वर्यवत्त्वतः।**
**एके तु संशयोच्छेदादेव साधून्भजन्त्यलम्॥ १३०॥**
**विषयत्वनिषेधस्य सामानाधिकरण्यतः।**
**आरोप्यमाणविषयितादात्म्यं स्यादपह्नुतिः॥ १३१॥**

मुमुक्षव इत्यर्थः। अयं इत्यार्थिकम्। मोक्तुमेव अस्मदादीञ्जीवान् अविद्याद्यखिलदृश्यजालबन्धनान्निष्काशयितुमेवेत्यर्थः। प्रकटः परमेश्वर एव मायिकलीलाविग्रहावच्छेदेनाविर्भूतोस्तीति शेषः। तथा भीरवः दरिद्राद्यखिलपीडाभीता इतियावत्। पातुमेव परिरक्षितुमेवेत्यर्थः। कर्मिणः कर्मठाः। कर्तुमेव संध्यावन्दनादिनिखिलस्ववर्णाश्रमादिसमुचितधर्मानुष्ठानार्थमेवेत्येतत्। विदुर्जानीयुरित्यन्वयः। प्रकट इति पदमुक्तमतद्वयेऽप्यनुकृष्य योज्यम्। यथावा रसगङ्गाधरे—'अर्थिनो दातुमेवेति त्रातुमेवेति कातराः। जातोऽयं हन्तुमेवेति वीरास्त्वां देव जानते' इति॥ १२९॥ एवमेव हेतूल्लेखमप्युदाहरति—**केचिदिति**। **त्यागेति**। 'न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः' इति श्रुतेर्यावद्दृश्यसुखविषयकनिश्चलानादरमात्रनिरतत्वादित्यर्थः। साधूनलं भजन्तीत्यपकृष्य योज्यम्। **परेत्विति**। तुशब्दः पूर्ववैलक्षण्यार्थः। **ऐश्वर्येति**। अणिमाद्यखिलयोगसिद्धिशालित्वादिति यावत्। साधूनित्याद्यत्रापि प्राग्वदेव संबन्ध्यते। **एकेत्विति**। संशयेति 'छिद्यन्ते सर्वसंशयाः' इति श्रुतेरद्वैतापरोक्षब्रह्मविद्याप्रदत्वादेवेत्यर्थः। शिष्टं तु स्पष्टमेव। पूर्वोदाहरणे उत्तमाद्यनुलोमक्रमोऽत्र तु तद्विपरीत इति ज्ञेयम्। एवं रसगङ्गाधरेऽनेककोट्येककोटयुल्लेखक्रम इह तूपजीव्योपजीवकभावादेकानेककोट्युल्लेखक्रम एवेत्यपि। यथावा तत्रैवम्—'हरिचरणनखरसङ्गादेके हरमूर्धसंस्थितेरन्ये। त्वां प्राहुः पुण्यतमामपरे सुरतटिनि वस्तुमाहात्म्यात्' इति। एवं विस्तरोऽप्यत्र तत्रैव बोध्यः॥ १३०॥ एवमुल्लेखालंकारं निरूप्य तत्सामान्यलक्षणे एकस्य वस्तुन इत्यादिना प्राक्प्रतिपादितेऽनेकप्रकारकरुचिरधीकालावच्छेदेन विषयसंबन्धिनैसर्गिकप्रकारापह्नवप्रसङ्गसंगतमपह्नुत्यलकारं सामान्यतः पण्डितराजरीत्यैव लक्षयति—**विषयत्वेति**। विषयत्वमुपमेयत्वमुपमेयतावच्छेदकीभूतं तस्य यो निषेध आहार्योऽपलापस्तस्येत्यर्थः। **सामानेति**। सामानाधिकरण्येनेति यावत्। **आरोप्येति**। आरोप्यमाणं स्वेच्छयैवाध्यस्यमानमेतादृशं यद्विषयिण उपमानस्य तादात्म्यं ऐक्यविषयकज्ञानजनकवाक्यप्रतिपाद्यत्वमित्येतत्। तत् अपह्नुतिः स्यादपह्नुत्यलंकारत्वं भवेदित्यन्वयः। एवंच विषयतावच्छेदकनिषेधसामानाधिकरण्येनारोप्यमाणविषयितादात्म्यविषयकरुचिरज्ञानजनकवाक्यप्रतिपाद्यत्वमपह्नुत्यलंकारत्वमिति तत्सामान्यलक्षणं पर्यवस्यति। तदुक्तं रसगङ्गाधरे—'उपमेयतावच्छेदकनिषेधसामानाधिकरण्येनारोप्यमाणमुपमानतादात्म्यमपह्नुतिः' इति। तथाच लक्षणे तृतीयान्तेन रूपकनिरासः। तत्र रूपके तावदुपमेयोपमानतावच्छेदकयोर्न विरोध इह तूपमेयतावच्छेदकस्यैच्छिकनिषे-

**रसगङ्गाधरे सामान्यादेषा द्विविधा मता।**
**एका सावयवान्या तु तद्विरुद्धा क्रमाद्यथा ॥ १३२ ॥**
**एतेन कुन्तलाः किंतु भ्रमरास्तृप्तिनिश्चलाः।**
**नेदं मुखमिदं पद्मं नेयं स्त्रीयं तु पद्मिनी ॥ १३३ ॥**
**नेमे सितासिताः सन्ति कटाक्षाः स्वसुयोषितः।**
**किंत्वनङ्गाङ्गसिद्ध्यर्थं नूत्ना एव सितासिताः ॥ १३४ ॥**

---

धात् स प्रसिद्ध एवेति तद्व्यावृत्तिः । आरोप्यमाणपदेनाहार्यनिश्चयविपर्यासक्रियमाणत्वं विवक्षितम् । तेन 'सङ्ग्रामाङ्गणसंमुखाहतकियद्विश्वंभराधीश्वरव्यादीर्णीकृतमध्यभागविवरोन्मीलन्नभोनीलिमा । अङ्गारप्रखरैः करैः कवलयन्सद्यो जगन्मण्डलं मार्तण्डोऽयमुदेति केन पशुना लोके शशाङ्कीकृतः' इति रसगङ्गाधरीयपद्य एव भ्रान्तिमदलंकारपराकृतिः । तन्निश्चयस्य विरहदोषजन्यत्वेनाहार्यत्वाभावात् । शिष्टं तु प्राग्वदेवेति दिक् ॥ १३१ ॥ अथास्या अपह्नुतेः रससमतिकं सामान्यतो द्वैविध्यं विधत्ते—**रसेति । तदिति ।** निरवयवेत्यर्थः । विस्तरस्तु तत एवावसेयः । प्रकृते गौरवादतिप्रयोजकत्वाभावाच नैव प्रपञ्च्यत इति रहस्यम् ॥ १३२ ॥ तत्रोद्देशानुसारेण प्रथमं सावयवामपह्नुतिमुदाहरति—**एत इति ।** ननु भ्रमराणां कथं शयनमत तत्राह—**तृप्तीति ।** इहोपकार्योपकारभावापन्नावयवसंघात्मकत्वात्सावयवत्वम् । एवं विषयतावच्छेदकस्य कुन्तलत्वादेर्या निषेधस्तत्सामानाधिकरण्येनैवात्रारोप्यमाणं यद्भ्रमरादिविषयितादात्म्यं तद्विषयकरुचिरज्ञानजनकप्रकृतवाक्यप्रतिपाद्यत्वात्सामान्यलक्षणमपि समतं बोध्यम् । यथावा रसगङ्गाधरे—'स्मितं नैतत्किं तु प्रकृतिरमणीयं विकसितं मुखं ब्रूते मूढः कुसुममिदमुद्यत्परिमलम् । स्तनद्वन्द्वं मिथ्याकनकनिभमेतत्फलयुगं लता रम्या सेयं भ्रमरकुलनम्या न रमणी' इति । अत्र चरणत्रये अपह्नवपूर्वक आरोपापह्नुतिश्चरमचरणे त्वारोपपूर्वकापह्नुतिरिति बोध्यम् । तदुक्तं साहित्यदर्पणेऽपह्नुतिं प्रकृत्य—'प्रकृतं प्रतिषिध्यान्यस्थापनं स्यादपह्नुतिः' इति । तल्लक्षणं सक्षिप्य 'इयं च द्विविधा । क्वचिदपह्नवपूर्वक आरोपः क्वचिदारोपपूर्वकोपह्नव इति । क्रमेणोदाहरणम्—'नेदं नभोमण्डलमम्बुराशिर्नैताश्च तारा नवफेनभङ्गाः । नायं शशी कुण्डलितः फणीन्द्रो नासौ कलङ्कः शयितो मुरारिः ॥ एतद्विभाति चरमाचलचूडबिम्बडिण्डीरपिण्डरुचिशीतमरीचिबिम्बम् । उज्ज्वालितस्य रजनी मदनानलस्य धूमं दधत्प्रकटलाञ्छनकैतवेन' इति । अत्र डिण्डीरखण्डेति वाच्यम् । नोचेदुद्यत्परिमलमित्यस्येवाश्लीलत्वं स्यात्तेन तत्रापि 'कुसुममिदमामोदभरितम्' इत्येव न्याय्यमिति दिक् ॥ १३३ ॥ एवं सावयवामपह्नुतिमुदाहृत्य क्रमप्राप्तां निरवयवामपि तामुदाहरति—**नेम इति । स्वेति ।** अत्र स्वसुपदाभ्यां सुन्दर्या अपि परकीयायाः स्वकीयाया अप्यसुन्दर्याश्च व्यावृत्तिस्तत्तृतीयपुमर्थसिद्धिर्ध्वन्यते । अतएव किंत्वित्याद्युत्तरार्धम् । सितासिताः प्रयाग इत्यर्थः । यथावा रसगङ्गा-

**षोढा कुवलयानन्दे मतैषा भिन्नलक्षणा ।**
**प्रत्येकं तत्र सामान्यलक्षणं विषयह्नुतिः ॥ १३५ ॥**

धर एव—'श्यामं सितं च सुदृशो न दृशोः स्वरूपं किंतु स्फुटं गरलमेतदथामृतं च । नोचेत्कथं निपतनादनयोः सदैव मोहं मुदं च नितरां दधते युवानः' इति । यथावास्मदद्वैतामृतमञ्जर्याम्—'बहुगुणमयी नवीना तन्वी गिरिवरनितम्बवनटलीना । कान्ता न वागुरेयं प्रसारिता कालभिल्लेन' इति ॥ १३४ ॥ ननु कुवलयानन्देऽपह्नुतिः षट्प्रकारा प्रतिपादितास्तथापि तत्रेदं सावयवादिभेदद्वय नैव दृश्यत इति चेन्न । तस्य मते तथैवेष्टत्वादित्याशयेन तन्मतमनुवदति—**षोढेत्यादि** सप्तभिः । एषा अपह्नुत्याख्या प्रकृतालकृतिः षोढा षड्विधा कुवलयानन्दे । एतन्नामके श्रीमदप्पय्यदीक्षितग्रन्थ इत्यर्थः । प्रत्येक एकैक प्रति यथा स्यात्तथेत्यर्थः । **भिन्नेति** । एतादृशी मता समतास्तीत्यन्वयः । नन्वेवमपि तत्संमतभेदषट्के मतान्तरीयतद्भेदेषु चानुगतं तत्सामान्यलक्षणं किं स्यात् । नच तदीयायामेव चित्रमीमांसायां तदुक्तमेवेति वाच्यम् । तस्याप्येतत्समतपर्यस्तापह्नुत्याख्यभेदेऽव्याप्तेः प्राचां काव्यप्रकाशकारादिकृतलक्षणानामपि चाव्याप्तेः सैव न सभवतीत्याशङ्क्य समाधत्ते—**तत्रेत्यादि**शेषेण । तत्र कुवलयानन्दमते । **विषयेति** । विषयस्योपमेयस्य ह्नुतिरपलाप एव सामान्यलक्षण भवतीति योजना । एव चोपमेयापलापो यत्र सुन्दरः प्रतीयते तादृशकाव्यप्रतिपाद्यत्वमपह्नुत्यलंकारत्वमिति तत्सामान्यलक्षण पर्यवस्यति । स तु उपमेयतावच्छेदकस्य अपलाप एव । स च शाब्द एव विवक्षितो न लार्थस्तेन 'कान्त्या स्मरवधूयन्ती' इत्यादावुपमेयमात्रलुप्तोपमायां नातिव्याप्तिः । तत्रोपमेयलोपस्यार्थत्वात् । 'अपलापस्तु निह्नवः' इत्यमरादपलापपदस्य शाब्दनिह्नव एव शक्तत्वाच्च । एवच सर्वानुगतत्वाल्लाघवाच्च युक्तमेवेदं लक्षणमिति बोध्यम् । एतेन रसगङ्गाधरोक्तदोषावमोषोपि । तथाहि । तत्र तावदपह्नुतिलक्षणादिनिरूप्याग्र एवमुक्तम् 'यत्तु कुवलयानन्दाख्ये संदर्भे अप्पय्यदीक्षितैरपह्नुतिप्रभेदकथनप्रस्तावे पर्यस्तापह्नुत्याख्यभेदं निरूपयद्भिरभिहितम् 'अन्यत्र तस्यारोपार्थः पर्यस्तापह्नुतिस्तु सः । नायं सुधांशुः किं तर्हि सुधांशुः प्रेयसीमुखम्' इति । अत्र चिन्त्यते 'नायमपह्नुतेर्भेदो वक्तुं युक्तः । अपह्नुतिसामान्यलक्षणानाक्रान्तत्वात् । तथाहि 'प्रकृतं यन्निषिध्यान्यत्साध्यते सा त्वपह्नुतिः' । उपमेयमसत्यं कृत्वोपमान सत्यतया यत्स्थाप्यते सापह्नुतिरिति काव्यप्रकाशोक्तलक्षणबहिर्भावस्तावत्स्फुट एव । एवं विषयापह्नवे वस्त्वन्तरप्रतीतावपह्नुतिरित्यलंकारसर्वस्वोक्त लक्षणमपि नात्र प्रवर्तते । 'प्रकृतस्य निषेधेन यदन्यत्वप्रकल्पनम् । सा स्यादपह्नुतिर्वाक्यभेदाभेदवती द्विधा' इति चित्रमीमांसागत त्वन्निर्मितमपि लक्षणमिह तथैव । तस्मात् 'नायं सुधांशुः किं तर्हि सुधांशुः प्रेयसीमुखम्' इत्यत्र दृढारोपं रूपकमेव भवितुमर्हति नापह्नुतिः । उपमेयतोपमानतावच्छेदकयोः सामानाधिकर-

ण्यस्य निष्प्रत्यूह भानात्। तदुक्तं विमर्शिन्याम्—'न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते'। अत्र विषस्य निषेधपूर्वं ब्रह्मस्वविषये आरोप्यमाणत्वात् दृढारोपं रूपकमेव नापह्नुतिरिति। यदिच प्राचीनमतमुपेक्ष्यालंकाररत्नाकरेणेव मयाप्ययं प्रकारोपह्नुतिमध्ये गणित इत्युच्यते तदा आहार्यताद्रूप्यनिश्चयस्य समानत्वाद्रूपकभेद एवापह्नुतिरित्यप्युच्यतां, निरस्यतां च प्राचीनमुखदाक्षिण्यम्। एवमपि चित्रमीमांसागतत्वन्निर्मितापह्नुतिलक्षणस्यात्राव्याप्तिः स्थितैव। अपिच यदि 'नायं सुधांशुः किं तर्हि सुधांशुः प्रेयसीमुखम्' इत्यत्र पर्यस्तापह्नुतिरित्युच्यते तदा तस्यामेव त्वत्कृतचित्रमीमांसागतस्य 'बिम्बाविशिष्टे निर्दिष्टे विषये यद्यनिह्नुते। उपरञ्जकतामेति विषयी रूपकं तदा' इति रूपकलक्षणस्यातिव्याप्तिर्वज्रलेपायिता स्यात्। विषयिणोऽनिह्नवेऽपि विषयस्यानिह्नुतत्वात्। अथापि चित्रमीमांसायां प्राचीनमतानुसारेण रूपकलक्षणम्। कुवलयानन्दे च रत्नाकराद्यनुसारेणापह्नुतिलोक्तिरिति यथाकथंचित्सामञ्जस्यं विधेयमिति दिगिति। तत्र प्रथममपह्नुतिसामान्यलक्षणानाक्रान्तत्वेन 'अन्यत्र तस्यारोपार्थः पर्यस्तापह्नुतिस्तु सः। नायं सुधांशुः किं तर्हि सुधांशुः प्रेयसीमुखम्' इति कुवलयानन्दोक्तापह्नुतिभेदे तत्वाभावं प्रतिज्ञाय हेतूकृतं तत्सामान्यलक्षणाभावं प्रतिपादयितुं तथाहीति तदारम्भं विधाय प्रकृतमित्यादिना काव्यप्रकाशोक्तलक्षणमुक्त्वा इति काव्यप्रकाशोक्तलक्षणबहिर्भावः स्फुट एवेत्युक्तं पण्डितराजैस्तद्विचार्यते। किमेतल्लक्षणस्य सांप्रदायिकैः कृतविवरणरीत्या प्रकृते अभावः किंवा अभिनवभवदभिहितयुक्त्या। नाद्यः। इद हि काव्यप्रकाशलक्षणं जयरामभट्टाचार्यैरेवं व्याख्यातम्। उपमेयमित्यादि। क्वाचित्कं किंचिदपह्नुत्य कस्यचित्प्रदर्शनमपह्नुतिरिति। न पञ्चेषुरित्यादावपह्नुतिरेव दण्डिनोक्तेति। काव्यप्रदीपकारैरपि—'प्रकृतं यन्निषिध्यान्यत्साध्यते सात्वपह्नुतिः'। प्रकृतमुपमेयं निषिध्यासत्यतया व्यवस्थाप्य अन्यदप्रकृतमुपमानं यत्साध्यते सत्यतया व्यवस्थाप्यते सापह्नुतिरिति। विवृतं चेदमुद्योते। प्रकृतमिति निषिध्येत्यन्तेन रूपकव्युदासः। तत्र प्रकृतनिषेधाभावात्। **उपमेयमिति**। इदमुपलक्षणम्। किंचिदपह्नुत्य कस्यचित्प्रदर्शनमपह्नुतिरित्येव लक्षणम्। अतएव 'केसेमुवला मोडिए' इत्यादौ स्वयं न प्रपलाय्य गतास्त्वद्वैरिणोपितुतनः पराभवं संभाव्य ते कदराग्र त्यजन्तीत्यपह्नुतिर्व्यज्यत इति प्रकाशकारैश्चतुर्थे उक्तम्। एवंच 'नायं सुधांशुः किं तर्हि सुधांशुः प्रेयसीमुखम्' इत्यादावपह्नुतिरेव। अतएव दण्डिनोक्तम्—'अपह्नुतिरपह्नुत्य किंचिदन्यार्थसूचनम्। न पञ्चेषुः स्मरस्तस्य सहस्रं पत्रिणां यतः' इति। एतेन 'नायं सुधांशुः' इत्यादौ, 'न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते' इत्यादौ च नापह्नुतिः किंतु दृढारोपरूपकमिति परास्तम्। नेदं मुखं चन्द्र इति प्रसिद्धापह्नुत्युदाहरणेऽपि मुखत्वनिषेधे चन्द्रारोपदार्ढ्यसंपादकतायां वक्तुं शक्यत्वेनानुभवसिद्धत्वेन चापह्नुतिमात्रस्योच्छेदापत्तेः। यदि तु निषेधपूर्वकारोपे चमत्कारविशेषस्यानुभवसिद्धत्वा-

**सा शुद्धाहार्यसद्बुध्ये यत्र धर्मस्य निह्नवः ।**
**नायं विवस्वान्किं त्विन्द्रस्त्रीकुङ्कुमकरण्डकः ॥ १३६ ॥**

---

दलंकारान्तरत्वं तर्हि प्रकृतेऽपि तुल्यमिति । एवंच सांप्रदायिकसारस्यं क्व पर्यवसन्नं प्रकृत इति भवतैवानुसंधेयम् । नाप्यन्त्यः । अनुपलब्धेः । एतेनाग्रिमग्रन्थे एवं विषयापह्नव इत्यादिना नात्र प्रवर्तत इत्यन्तेनोक्तोऽलंकारसर्वस्वकृतलक्षणस्य प्रकृते प्रवृत्त्यभावोऽपि प्रत्युक्तः । तद्यथा । तत्र तावद्विषयापह्नवे वस्त्वन्तरप्रतीतावपह्नुतिरित्येतावन्मात्रमुक्तं तेन विषयपदं ह्युपमेयमात्रपरं तच्च 'नायं सुधांशुः किं तर्हि सुधांशुः प्रेयसीमुखम्' इत्यत्र प्रेयसीमुखमेव तस्य तु प्रकृतेऽपह्नवो नैवास्तीति तल्लक्षणस्याप्रवृत्तिरिति भवतामाशयस्तु निर्विवाद एव । परंत्वसौ ऊर्ध्वतनस्वीयग्रन्थाननुसंधानमूलक एव प्रतिभाति । तत्र हि प्रतीपप्रकरणे तत्पञ्चविधत्वं प्राचामनुसारेणाभिधायोक्तम् । वस्तुतस्तु आद्यास्त्रयोऽप्युपमायामेवान्तर्गता भेदाः, चतुर्थः केषांचिदाक्षेपे पञ्चमस्त्वनुक्तवैधर्म्ये व्यतिरेके । तथाहि निष्पद्यमानं सुन्दरं वा सादृश्यमुपमा । नह्याद्ये प्रतीपे मुखमिव कमलमित्यादौ सादृश्यस्यानिष्पत्तिरसौन्दर्यं वास्ति । येनोपमातो बहिर्भावः स्यात् । सौन्दर्यविशेषस्य त्वयाप्यभ्युपगमात् । विशेषस्य सामान्यानिवारकत्वात् । नहि प्रसिद्धकमलादिप्रतियोगिकमेव सादृश्यमुपमेति राज्ञामाज्ञास्ति । नचोपमाविरुद्धवाचिनः प्रतीपशब्दमाहात्म्यादेव तादृशं सादृश्यमुपमेति शक्यं वक्तुम् । उपमाविशेषविरुद्धवाचकत्वेनापि तदुपपत्तेरिति । तेन प्रकृते सुधांशोरपि वर्ण्यत्वलक्षणोपमेयत्वसंभवेन तत्र कलङ्कित्वादिप्रसिद्धदोषप्रमोषार्थं तदधिकगुणवन्निर्दुष्टत्वादिना प्रेयसीमुखतादात्म्यवर्णने विवक्षिते विषयस्य दिविष्ठत्वेन पुरोवर्तिनः प्रत्यक्षसुधांशोरपह्नवस्तथा वस्त्वन्तरीभूतकामिनीमुखसायुज्येन तन्मात्रस्य प्रतीतिरपि निर्बाधैवेति कुतोऽस्य तल्लक्षणबहिर्भाव इति भवतैव विभावनीयम् । एवंच 'प्रकृतस्य निषेधेन यदन्यत्वप्रकल्पनम् । सा स्यादपह्नुतिर्वाक्यभेदाभेदवती द्विधा' इति चित्रमीमांसालक्षणमपि प्रकृते समन्वितत्वेन व्याख्यातम् । प्रकृतो हि विरहिणः श्रीरामादेर्नायकस्य दिविष्ठश्चन्द्रः प्रत्यक्षः स्तुत्या विरहदशायामात्मदेहदाहप्रहाणाशावशाद्वर्ण्यश्च तथापि स्वाभाव्यात्ततो दाहमेवोपलभ्य सुधांशुसंज्ञावैपरीत्यान्नायं सुधांशुरित्यपह्नवं तस्य विधाय निरतिशयसुखहेतुत्वेन ततोऽधिकतमगुणवत्त्वात्सर्वथा निर्दुष्टत्वाच्च जानक्याख्यस्वप्रेयसीमुख एवोक्तसंज्ञासाम्राज्यस्येष्टत्वात् सद्योविलक्षणचमत्कारकारकत्वेनेत्थमेव सकलनिर्मत्सरसूरीश्वरैर्वाक्यार्थस्य समर्थनीयत्वाच्च । एतेन तस्मादित्यारभ्य दिगन्तस्तदग्रिमग्रन्थोऽपि स्फुटमेव प्रत्युक्तः सन् दिगन्तमेव गतोऽवगन्तव्यः । यदपि विमर्शिनीकारमतमुदाहारि तदपि प्रागुक्तप्राचीनवचनैरेव दत्तोत्तरम् । तस्माद्विद्वच्चक्रवर्तिनां दीक्षितानां प्राचामाचार्याणां च रहस्याननुधानमूलक एवायं प्रलाप इति शिवम् ॥ १३५ ॥ एवं निर्दुष्टेऽपह्नुतिलक्षणे प्राचीनार्वाचीनाखिललक्ष्यानुग-

**सयुक्तिके सदारोपे हेत्वपह्नुतिरुच्यते।**
**नेदमिन्दुरनङ्कत्वात्किंत्विदं मुकुरो रतेः ॥ १३७ ॥**
**पर्यस्तापह्नुतिर्धर्मनिह्नवोऽन्यत्र सिद्धये।**
**नामृतं दिवि किंत्वेतत्तरुण्या अधरे चिरम् ॥ १३८ ॥**

तेऽति लघुभूते विषयापह्नवरूपे सामान्यतः संसिद्धेऽधुनोद्दिष्टषोढाप्रकारां ता प्रत्येकं संलक्ष्योदाजिहीर्षुः प्रथमं शुद्धत्वावच्छिन्नां तां लक्षयति—**सेत्यर्धेनैव।** यत्र **आहार्येति।** 'आहार्यं बाधकालीनमैच्छिकं ज्ञानमुच्यते' इति तल्लक्षणात्तादृशी या सद्बुद्धिश्चमत्कारकारिणी धीवृत्तिस्तदर्थमित्यर्थः। धर्मस्य विषयतावच्छेदकस्य निह्नवः अपलापोऽस्ति सा शुद्धा अपह्नुतिर्भवतीत्यन्वयः। अथ तामुदाहरति—**नायमित्यर्धेनैव।** एवमग्रेऽपि। अत्र स्त्रीपदेन शच्यादीनां मुख्यामुख्यानां सर्वासामपि संग्रहः सूच्यते। यथावा काव्यप्रकाशे—'अवाप्तः प्रागल्भ्यं परिणतरुचः शैलतनये कलंको नैवायं विलसति शशाङ्कस्य वपुषि। अमुष्येयं मन्ये विगलदमृतस्यन्दशिशिरे रतिश्रान्ता शेते रजनिरमणी गाढमुरसि' इति। यथावा कुवलयानन्दे—'अङ्कं केपि शशङ्किरे जलनिधेः पङ्कं परे मेनिरे सारङ्गं कतिचिच्च सञ्जगदिरे भूच्छायमैच्छन्परे। इन्दौ यद्दलितेन्द्रनीलशकलश्याम दरीदृश्यते तत्सान्द्रं निशि पीतमन्धतमसं कुक्षिस्थमाचक्ष्महे' इति। इह पक्षोपन्यासात्तत्तदुत्प्रेक्षितधर्मापह्नव आर्थ एवेति पूर्वस्माद्विशेषः ॥ १३६ ॥ एवं हेत्वपह्नुतिं लक्षयति—**सयुक्तिक इति।** तामुदाहरति—**नेदमिति।** इदं पुरोवर्ति स्त्रीयामुखम्। यथावा काव्यप्रकाशे—'अमुष्मिंल्लावण्यामृतसरसि नूनं मृगदृशः स्मरः शर्वप्लुष्टः पृथुजघनभागे निपतितः। यदङ्गाङ्गाराणां प्रशमपिशुना नाभिकुहरे शिखा धूमस्येयं परिणमति रोमावलिवपुः' इति। अत्र धूमशिखा रोमावलीवपुः परिणमतीति परिणामशब्दार्थवशान्नेयं रोमावलिः किंतु धूमशिखेति प्रतीयत इति प्रदीपः। कुवलयानन्देपि—'मन्थानभूमिधरमूलशिलासहस्रसंघट्टनव्रणकिणः स्फुरतीन्दुमध्ये। छायामृगः शशक इत्यपि पामरोक्तिस्तेषां कथंचिदपि तत्र नहि प्रसक्तिः' इति ॥ १३७ ॥ तद्वत्पर्यस्तापह्नुतिं लक्षयति—**पर्यस्तेति।** **अन्यत्रेति।** उपमान इत्यर्थः। सिद्धये तादात्म्यज्ञानार्थम्। धर्मनिह्नवः उपमेयतावच्छेदकधर्मस्य तदधिकरणावच्छेदेनापलाप इति यावत्। पर्यस्तापह्नुतिरस्तीति संबन्धः। तामुदाहरति—**नामृतमिति।** तरुण्याः। सर्वस्त्रीगुणविशिष्टस्त्रियुवत्या इत्यर्थः। यथावा कुवलयानन्दे—'हालाहलो नैव विषं विषं रमा जनाः परं व्यत्ययमत्र मन्वते। निपीय जागर्ति सुखेन तं शिवः स्पृशन्निमां मुह्यति निद्रया हरिः' इति। मदीयाद्वैतामृतमञ्जर्यामपि—'अतिशीघ्रगोऽपि मन्दं गच्छन् दृष्ट्वैव जीवितं हर्तुम्। जनयति कान्ताभ्रान्तिं कालोऽयं लोललोकस्य' इति। पूर्वोदाहरणेऽपह्नवस्तद्धेतुश्च शाब्द एव। इह तु तदुभयमप्यार्थमिति विशेषः। कालाख्यदेवताविशेषनिष्ठसर्वसंहारकत्वरूपकालत्वापह्नवस्य

**अन्यभ्रान्तेर्निरासेन भ्रान्तापह्नुतिरुच्यते ।**
**रोमाञ्चयति मां नित्यं शीतं किं न प्रियामुखम् ॥ १३९ ॥**
**अन्यप्रश्ने सतच्छादने च्छेकापह्नुतिर्मता ।**
**वक्षोजौ लालयन्किं ते कान्तो नो देवच्छन्दकः ॥ १४० ॥**
**कैतवादिपदैर्निह्नुतेर्व्यक्तौ तदपह्नुतिः ।**
**ब्रह्मविद्व्याजतो ब्रह्मलोके व्यवहरत्यहो ॥ १४१ ॥**

---

तत्कारणीभूतस्य कान्तायां कटाक्षपातमात्रेण सर्वजनानां तल्लाभाभावेन मृत्युतुल्यदुःखव्यामोहादिजनकत्वस्य चार्थादेव सिद्धत्वात् ॥ १३८ ॥ तथा भ्रान्तापह्नुतिमपि लक्षयति—**अन्येति** । तामुदाहरति—**रोमाञ्चयतीति ।** इद हि स्वसखं प्रति श्रीकृष्णवाक्यम् । 'रोमाञ्चो रोमहर्षणम्' इत्यमरात्संजातरोमहर्षं करोतीत्यर्थः । यथावा गीतगोविन्दे–'जटा नेय वेणीकृतकचकलापो न गरलं गले कस्तूरीय शिरसि शशिरेखा न कुसुमम् । इयं भूतिर्नाङ्गे प्रियविरहजन्मा धवलिमा पुरारातिभ्रान्त्या कुसुमशर मां किं व्यथयसि' इति ॥ १३९ ॥ एवं च्छेकापह्नुतिं लक्षयति—**अन्येति** । सतः सत्यस्य । तामुदाहरति—**वक्षोजाविति** । आसेति शेषः । 'हारो मुक्तावली देवच्छन्दोऽसौ शतयष्टिका' इत्यमरः । यथावा कुवलयानन्दे—'सीत्कारं शिक्षयति व्रणयत्यधरं तनोति रोमाञ्चम् । नागरिकः किं मिलितो नहि नहि सखि हैमनः पवनः' इति । अपिच–'वदन्ती जारवृत्तान्तं पत्यौ धूर्ता सखीधिया । पतिं बुद्ध्वा सखि ततः प्रबुद्धास्मीत्यपूरयत्' इति ॥ १४० ॥ इदानीं कैतवापह्नुतिं लक्षयति—**कैतवादीति । तदिति ।** कैतवापह्नुतिर्भवतीत्यर्थः । अथैनामुदाहरति—**ब्रह्मविदिति ।** तत्त्वज्ञमिषेणेत्यर्थः । अहो इत्याश्चर्ये । लोके ब्रह्मैव व्यवहरतीत्यन्वयः । तथाचाम्नायते–'ब्रह्म वेद ब्रह्मैव भवति' इति । 'ज्ञानी त्वात्मैव मे मतम्' इति स्मर्यतेपि । यथावा काव्यप्रकाशे–'बत सखि कियदेतत्पश्य वैरं स्मरस्य प्रियविरहकृशेऽस्मिन्रागिलोके तथापि । उपवनसहकारोद्भासिभृङ्गच्छलेन प्रतिविशिखमनेनोट्टङ्कितं कालकूटम्' इति । यथावा मदीये कृष्णलीलामृते–'रतिसखो किमु बल्लववल्लभः परिनिषेवितुमुज्ज्वलदर्पणम् । रविमिषात्प्रकटीकुरुतेऽरुणं तदभवत्तदलौकिकरागतः' इति । ननु भावत्कमिदमुदाहरणं रतिसखीति रूपकस्य ततः परिनिषेवितुमित्यन्तमुत्प्रेक्षायाः प्रकटीकुरुत इत्यन्तं कैतवापह्नुतेः शेषेण गम्योत्प्रेक्षाया अतिशयोक्तेर्वा स्पष्टमेव भानात्संसृष्टौ योग्यं न तु कैतवापह्नुताविति चेत्सत्यम् । एतत्पर्यनुयोगस्य प्रकाशकारोदाहरणेऽपि प्रकृत एव तुल्यत्वात् । तथाहि तत्रापि सखीरागिलोकोपवनपदेषु परिकराङ्कुरस्य प्रियेत्यादिपदे परिकरस्य च्छलपदे कैतवापह्नुतेरवशिष्टे गम्योत्प्रेक्षायाश्च गूढं सत्वात्संकरोदाहरणत्वमेव वक्तुमुचितम् । यदि तत्र कैतवापह्नुतिरप्यस्तीति ब्रूषे तर्हि मामकोदाहरणेऽपि च्छलपदवन्मूलकारिकायामादिपदगृहीतव्याजच्छलमिषकपटच्छद्मादिपदानां कैतवपर्यायत्वेन तत्सत्वादिति सामान्यमेवेति

**निषिध्य भ्रामिकं तत्त्वबोधनं निश्चयो मतः ।**
**चकोर नेन्दुः कान्तास्यं किं चञ्चूपुटचालनैः ॥ १४२ ॥**
**तद्भेदतदभावान्यतरेद्धमितवस्तुनः ।**
**तद्वृत्त्यनुगताद्दक्तद्धर्मसंबन्धहेतुना ॥ १४३ ॥**
**तत्त्वेन चारुतद्वत्त्वेन वा संभावनं भवेत् ।**
**उत्प्रेक्षावाच्यगम्यत्वभेदात्सा द्विविधोच्यते ॥ १४४ ॥**

---

दिक् ॥ १४१ ॥ एवमपह्नुत्यलंकारीयचरमभेदीभूतकैतवापह्नुतिगयथार्थवस्त्वपलापकारोपस्य कैतवादिपदवर्णितत्वेन तत्प्रातिलोम्येन सुन्दरारोपनिरासपूर्वकं यथार्थवस्तुनिर्णयरूपं प्रसक्तं साहित्यदर्पणकारसंमतं निश्चयालंकारं लक्षयति—**निषिध्येति** । भ्रामिकं तिर्यगादिभिर्भ्रमकल्पितमित्यर्थः । वस्त्विति शेषः । निषिध्य प्रबाध्येति यावत् । **तत्त्वेति** । वास्तविकार्थकथनमित्यर्थः । निश्चयः निश्चयालंकारः । मतः साहित्यदर्पणकर्तुः संमतोऽस्तीतिसंबन्धः । एवंच तिर्यगादिभिर्भ्रमकल्पितं सुन्दरं वस्तु प्रतिबाध्य यथार्थवस्तुकथनं निश्चयालंकार इति तल्लक्षणं फलितम् । शिष्टं तु प्राग्वदेव । अत्र भ्रमनिश्चययोर्वैयधिकरण्येन निश्चयान्तसंदेहव्युदासः । तथा चकोरस्य भ्रान्तिमत्त्वेन सदेहाभावादपि सः सुन्दरपदेन शुक्तिरजतादिभ्रमबाधव्यावृत्तिः । तस्य चमत्कारकारित्वविरहात् । मुखे चन्द्रत्वानवधारणान्नात्र रूपकध्वनित्वम् । प्रस्तुतानिषेधाच्च नापह्नुतित्वम् । चकोरभ्रान्तेर्बाधाच्च न भ्रान्तिमत्त्वमिति शृङ्गारपुरस्कारकत्वेन चायं पृथगेवालंकार इति ध्येयम् । एतल्लक्षणमुक्तं दर्पण एव—'अन्यन्निषिध्य प्रकृतस्थापनं निश्चयः पुनः' इति । अथ तमुदाहरति—**चकोरेति** । इयं हि नायकस्यैवोक्तिः । रे चकोर अयमिन्दुर्न भवति किंत्विदं कान्तास्यमेवास्त्यतस्ते चञ्चूपुटचालनैः किं चन्द्रिकारसास्वादो नैव स्यादित्यन्वयः । यथावा दर्पण एव—'वदनमिदं न सरोजं नयने नेन्दीवरे एते । इह सविधे मुग्धदृशो मधुकर मधु नो परिभ्रम्य' इति ॥ १४२ ॥ एवं निश्चयालंकारं निरूप्याथ निश्चित एव वस्तुनि धर्म्याद्युत्प्रेक्षणसंभवात्तत्प्रसङ्गसंगतामुत्प्रेक्षां लक्षयति—**तद्भेदेत्यादिना** किंचिदधिकसार्धेन । तच्छब्देनोत्प्रेक्ष्यं धर्म्याद्येवात्र तस्य यो भेदस्तथा स चासावभावः सर्वत्र प्रसिद्धोऽन्योन्याभावभिन्नः प्रागभावप्रध्वंसाभावात्यन्ताभावान्यतमाभावाख्यः संसर्गाभावश्चेति तथा भेदश्च तदभावश्चेति तथा तद्भेदतदभावयोर्योऽन्यतरः तद्भेदस्तत्संसर्गाभावो वा तेन इत्थं विशिष्टं यन्मितं प्रमाविषयत्ववद्वस्तु तस्य उत्प्रेक्ष्यार्थप्रतियोगिकचतुर्विधान्यतमाभावावच्छिन्नप्रमाविषयत्ववद्वस्तुन इत्यर्थः । **तद्वृत्तीति** । तत्र वर्तते तमनुगच्छति चेति तद्वृत्त्यनुगौ तयोर्यस्तादृक्पूर्ववदन्यतरः एतादृशो यस्तद्धर्मः उत्प्रेक्ष्यवस्तुधर्मस्तस्य यः संबन्धः स चासौ हेतुर्निमित्तं तेनेत्यर्थः ॥ १४३ ॥ **तत्त्वेनेत्यादि** । चारु सुन्दरं यथा स्यात्तथा । तत्त्वेन उत्प्रेक्ष्यधर्मित्वेन । तद्वत्त्वेन वा उत्प्रेक्ष्यधर्मविशिष्टत्वेन वेति यावत् । संभा-

आद्या कुवलयानन्दे वस्तुहेतुफलात्मभिः ।
त्रिधात्रोक्तास्पदाद्याद्ये सिद्धाद्यास्पदतः परे ॥ १४५ ॥

ानं अयोग्यत्वाभावानुसंधानविषयीकरणमित्येतत् । उत्प्रेक्षा एतन्नामकोऽलंकारो ावेदिति संबन्धः । तथाच उत्प्रेक्ष्यवस्तुप्रतियोगिकचतुर्विधाभावान्यतमविशिष्ट- ामितवस्तुन्युत्प्रेक्ष्यवृत्तितत्समानाधिकरणान्यतरधर्मसंबन्धनिमित्तकोत्प्रेक्ष्यधर्मिधर्म- वेशिष्टत्वान्यतरत्वेनातिरमणीयं यथा स्यात्तथैवायोग्यत्वाभावविषयकानुसंधान- वेषयीकरणविषयकज्ञानजनकशब्दबोध्यत्वमुत्प्रेक्षासामान्यलक्षणं परिणमति । अत्र ॥मितान्तेन वस्तुविशेषणेन 'सद्गुरो त्वामहं मन्ये प्रभावात्परमेश्वरम्' इत्यनाहार्यसं- ावनायामयोग्यत्वाभावनिश्चयरूपायामतिप्रसङ्गभङ्गः परास्तः । तत्रेश्वरभिन्नत्वेन ॥मितत्वाभावात्प्रकृते तूत्प्रेक्ष्यभिन्नत्वेन प्रमितत्वसंग्रहाच्च । एतेन प्रागुक्तभ्रा- न्तिमानपि व्याख्यातः । 'वदनकमलेन बाले स्मितसुषमालेशमावहसि यदा । जगदिह तदैव जाने दशार्धबाणेन विजितमिति' इति पण्डितराजपद्येऽतिव्याप्तिव्यु- दस्तये निमित्तकान्तम् । तत्रोत्प्रेक्ष्यमाणतात्कालिकमीनकेतनकर्तृकजगद्विजयेन सह स्मितस्य साधर्म्याभावात् । धर्म्याद्युभयोत्प्रेक्षयोरपि संग्रहार्थमवशिष्टतृतीयान्तम् । 'विभज्य मेरुर्न यदर्थिसात्कृतो न सिन्धुरुत्सर्गजलव्ययैर्मरुः । अमानि तत्तेन निजायशोयुगं द्विफालबद्धाश्चिकुराः शिरःस्थितम्' इति प्रतीयमानाख्यगम्यो- त्प्रेक्षायामहृद्यत्वेन तन्निरासार्थं क्रियाविशेषणम् । तच्चाहृद्यत्वं यथा—'पुण्यश्लोक- शिरोमणौ महावीरचक्रवर्तिनि राज्ञि नले केशानामुत्प्रेक्षितविभज्यइत्यादिनि- जायशोयुगसाधर्म्यार्थं द्विफालबद्धत्ववर्णनं यदकारि तेन तच्छिरसि सीमन्तस्या- र्थापत्तिसिद्धत्वान्नटसाम्यं सूच्यत' इति । यद्यत्र महाकविप्रयोगादुक्तदोषावमो- षाभिलाषस्तर्ह्येवं व्याचक्ष्व । द्विफेतिपदे बवयोः सावर्ण्यात् द्विफालवत् हा आः इति पदच्छेदेन तत्पूर्वार्धोक्तनिमित्तात्तेन नलेन चिकुराः केशाः शिरःस्थितं निजायशोयुगमेव । हा इति खेदे । आः इति चाश्चर्ये । द्विफालवत् यथा रणे शत्रुकृतकुठारप्रहारेण शिरसः फालशब्दितशकलद्वयं संपद्यते तद्वदमानीति । शिष्टं तु स्पष्टमेव प्रागुक्तमिति ॥ १४४ ॥ एवं रसगङ्गाधरपरिष्कारसरण्यैवोत्प्रे- क्षालक्षणं साधारण्याद्वाच्यगम्यत्वापराभिधप्रतीताख्यतद्भेदद्वयं चाभिधायाधुना तत्र प्रथमायाः सामान्यतः षड्भेदान् ससंमत्युद्दिशति—**आद्येति** । प्रभृत्यग्रिमगतगदि- तेत्यन्तेन । आद्या निरुक्तोत्प्रेक्षा भेदद्वयमध्ये प्रथमा वाच्याख्योत्प्रेक्षेत्यर्थः । कुव- लयानन्दे । **वस्त्विति** । वस्तुहेतुफलरूपैरुपाधिभिरितियावत् । त्रिधा त्रिप्रकारा कथितास्तीति शेषः । अत्रेति देहलीदीपन्यायेन पुनरत्रापि संबध्यते । अत्र निरुक्तभेदत्रयमध्य इत्येतत् । उक्तास्पदादि उक्तं कण्ठतः कथितं आस्पदं उत्प्रेक्ष्यवस्त्वधिकरणं यस्यां सा तथा । साद्दिः प्रथमं यथा भवति तथेत्यर्थः । आदिना अनुक्तास्पदा । एवं भेदादुक्तास्पदानुक्तास्पदत्वभिन्ने आद्ये वस्तूत्प्रेक्षे प्रथमे द्वे भवत इत्यार्थिकम् । तथा परे हेतुफलोत्प्रेक्षे अवशिष्टे तु सिद्धादीति ।

**षोढैवं गदितान्यैस्तु विविधैव निरूपिता ।**
**गम्या प्रतीयमानाख्या त्वेकधैवेति सप्तधा ॥ १४६ ॥**
**तत्र तूक्तास्पदा वस्तूत्प्रेक्षास्पदनिरूपणे ।**
**पूर्णचन्द्रमहं मन्ये रत्यञ्जनकरण्डकम् ॥ १४७ ॥**

सिद्धं प्रसिद्धं आदिना अप्रसिद्धं एतादृशं यदास्पदं उत्प्रेक्ष्यवस्त्वधिकरणं ययोस्ते तथा । भावप्रधानो निर्देशः । सिद्धास्पदत्वासिद्धास्पदत्वाभ्यां प्रत्येकं द्विविधे भवत इति संबन्धः । तदुक्तं कुवलयानन्दमूले—'संभावना स्यादुत्प्रेक्षा वस्तुहेतुफलात्मना । उक्तानुक्तास्पदाऽयात्र सिद्धासिद्धास्पदे परे' इति ॥ १४५ ॥ **षोढैवमिति** । एवमुक्तरीत्या षोढा षट्प्रकारा गदितास्तीति योजना । ननु भवत्वेवं काव्यप्रकाशे सामान्यतः सूत्रिताया एकविधाया अप्युत्प्रेक्षायाः षड्विधत्वमन्यैस्तु कतिविधत्वमुक्तमित्यत आह—**अन्यैस्त्विति** । कण्ठाभरणप्रतापरुद्रीयरसगङ्गाधरादिभिरित्यर्थः ॥ १४६ ॥ अथोद्देशक्रमानुसारेणैव सप्तविधामपि तां प्रत्येकं विशेषतः संलक्ष्योदाहरिष्यन्प्रथमं तावदुक्तास्पदां वस्तूत्प्रेक्षां लक्षयति—**तत्रेति** । तत्र निरुक्तोत्प्रेक्षासप्तकमध्य इत्यर्थः । विशेषलक्षणार्थस्तुशब्दः । **उक्तेति** । लक्षणमिदं निगदव्याख्यातमेव । **आस्पदेति** । उत्प्रेक्ष्यवस्त्वधिकरणनिरूपणे सतीति यावत । निरुक्तामेतामुदाहरति—**पूर्णेति** । **रतीति** । रत्याः कामकामिन्याः अञ्जनकरण्डकः गोनवनीतकर्पूरादिद्रव्यविशेषविभावितकज्जलस्थापनविशिष्टहीरकपात्रविशेषस्तमित्येतत् । एतादृशमहं मन्य इत्यन्वयः । अत्र पूर्णेत्यनेनाङ्काभिव्यक्तियोग्यत्वमुक्तं भवति । तेन च निरुक्तोत्प्रेक्षार्हाधिकरणत्वं व्यज्यते । यथावा काव्यप्रकाशे—'उन्मेषं यो मम न सहते जातु वैरी निशायामिन्दोरिन्दीवरदलदृशस्तस्य सौन्दर्यदर्पः । नीतः शान्ति प्रसभमनया वक्त्रकान्त्येति हर्षाल्लग्ना मन्ये ललिततनु ते पादयोः पद्मलक्ष्मीः' इति । सरस्वतीकण्ठाभरणे तूत्प्रेक्षावयव उक्तः—'अङ्गुलीभिरिव केशसंचयं संनिगृह्य तिमिरं मरीचिभिः । कुड्मलीकृतसरोजलोचनं चुम्बतीव रजनीमुखं शशी' इति । तत्रैवाग्रे—अन्ये पुनर्यत्र प्रधानक्रिया नोत्प्रेक्ष्यते अवयवक्रिया तूत्प्रेक्ष्यते तमुत्प्रेक्षावयवं वर्णयन्ति । यथा—'लीनेव प्रतिबिम्बितेव लिखितेवोत्कीर्णरूपेव च प्रत्युप्तेव च वज्रलेपघटितेवान्तर्निखातेव च । सा नश्चेतसि कीलितेव विशिखैश्चेतोभुवः पञ्चभिश्चिन्तासंततितन्तुजालनिबिडस्यूतेव लग्ना प्रिया' । तेषां मते पूर्वोदाहरणमुत्प्रेक्षावयवो न भवतीति । यथवा रसगङ्गाधरे—'राज्याभिषेकमाज्ञाय शम्बरासुरवैरिणः । सुधाभिर्जगतीमध्यं लिम्पतीव सुधाकरः' । अत्रापि चन्द्रे विषये तादृशलेपनकर्तृत्वरूपधर्मोत्प्रेक्षेत्येकं दर्शनम् । किरणव्यापने विषये चन्द्रकर्तृकसुधाकरणकलेपनस्य तादात्म्येनोत्प्रेक्षणमिति द्वितीयम् । तत्र प्रथमे मते धवलीकारकत्वरूपनिमित्तानुपादानादनुपात्तनिमित्तविषयस्योपादानादुपात्तविषया द्वितीयेपि तस्यैव निमित्तस्यानुपादानादनुपात्तनिमित्ता विषयस्य निगीर्णतयानुपात्तविषयेति विशेष

**अथानुक्तास्पदा वस्तूत्प्रेक्षाधारानिरूपणे ।**
**विरहो दहतीवाङ्गं प्रियाया मे करोमि किम् ॥ १४८ ॥**
**सिद्धेऽधिकरणे हेतूत्प्रेक्षा सिद्धास्पदा मता ।**
**शंभो तव तनुः प्रायो भक्तचिन्तावशात्सिता ॥ १४९ ॥**
**असिद्धे साधिकरणे मताऽसिद्धास्पदा विदाम् ।**
**तावकत्वात्स्मरः शङ्के शिव मां पीडयत्यलम् ॥ १५० ॥**

इति ॥ १४७ ॥ एवमनुक्तास्पदां वस्तूत्प्रेक्षां लक्षयति—**अथेत्यर्धेन**व । अथोक्तास्पदवस्तूत्प्रेक्षाकथनानन्तरमित्यर्थः । तामुदाहरति—**विरह इति** । अत्र 'लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः' इत्यत्र तमोव्यापनरूपविषयस्यानुपादानादिवेहापि विरहजन्यदुःखरूपस्य विषयस्यानुपादानादियमनुक्तास्पदैव निजाङ्गदहनरूपक्रियात्मकवस्तूत्प्रेक्षणाच्चानुक्तास्पदा वस्तूत्प्रेक्षेति लक्षणसंगतिः । यथावा महारामायणीयसुन्दरकाण्डे—'पिनष्टीव तरङ्गाग्रैः समुद्रः फेनचन्दनम् । तदादाय करैरिन्दुर्लिम्पतीव दिगङ्गनाः' इति । अत्र व्याख्या कुवलयानन्दे—'तरङ्गाग्रैः फेनचन्दनस्य प्रेरणं पेषणतयोत्प्रेक्ष्यते । समुद्रादुत्थितस्य चन्द्रस्य प्रथमं समुद्रपूरे प्रसृतानां कराणां दिक्षु व्यापनं च समुद्रोत्पन्नफेनचन्दनकृततल्लेपनत्वेनोत्प्रेक्ष्यते । उभयत्र क्रमेण समुद्रप्रान्तगतफेनचन्दनपुञ्जीभवनं दिशां धवलीकरणं च निमित्तमिति फेनचन्दनप्रेरणकिरणव्यापनयोर्विषययोरनुपादानादनुक्तविषये स्वरूपोत्प्रेक्षे' इति । यद्वा साहित्यदर्पणे—'घटितमिवाञ्जनपुञ्जैः पूरितमिव मृगमदक्षोदैः । ततमिव तमालतरुभिर्वृतमिव नीलांशुकैर्भुवनम्' इति ॥ १४८ ॥ अथ सिद्धास्पदां क्रमप्राप्तां हेतूत्प्रेक्षां लक्षयति—**सिद्ध इति** । अधिकरणे उत्प्रेक्षाविषये वस्तुनीत्यर्थः । सिद्धे शक्तिवृत्त्या प्रकृतकाव्ये प्रतिबोध्यमाने सतीतियावत् । सिद्धास्पदा हेतूत्प्रेक्षा मतास्तीत्यन्वयः । उपलक्षणमिदं हेतावपीत्यस्य । तामुदाहरति—**शंभो तवेति** । अत्र तनुरित्यधिकरणस्य भक्तेति हेतोश्च सत्वाल्लक्षणसंगतिः । यथावा कुवलयानन्दे—'रात्रौ रवेर्दिवा चेन्दोरभावादिव स प्रभुः । भूमौ प्रतापयशसी सृष्टवान् सततोदिते' इति । यथावा रसगङ्गाधरे—'परस्परासङ्गसुखान्नतभ्रुवः पयोधरौ पीनतरौ बभूवतुः । तयोरमृष्यन्नयमुन्नतिं परामवैमि मध्यस्तनिमानमश्नुते' इति । अपिच—'निःसीमशोभासौभाग्यं नताङ्ग्या नयनद्वयम् । अन्योन्यालोकनानन्दविरहादिव चञ्चलम्' इति । अन्यच्च 'जनमोहकरं तवालि मन्ये चिकुराकारमिदं घनान्धकारम् । वदनेन्दुरुचामिहाप्रचारादिव वन्तङ्गि नितान्तकान्ति कान्तम्' इति ॥ १४९ ॥ एवमसिद्धास्पदामपि हेतूत्प्रेक्षां लक्षयति—**असिद्ध इति** । शिष्टं तु प्राग्वदेव । तामुदाहरति—**तावकत्वादिति** । मयीत्यार्थिकम् । अत्र स्मरकर्तृकस्वपीडने शांभवत्वं हेतुरुक्तः । सतु नैव संभवतीति असिद्धास्पदत्वं हेतूत्प्रेक्षायां युक्तमेवेति भावः । यथावा कुवलयानन्दे—'विबस्वताऽनायिषतेव मिश्राः स्वगोसहस्रेण समं जनानाम् । गावोऽपि

**सिद्धास्पदा फलोत्प्रेक्षा सिद्धेऽधिकरणे भवेत्।**
**कण्ठ एव धृतः क्ष्वेडः किं हरोदरगश्रिये ॥ १५१ ॥**
**असिद्ध आस्पदे तु स्यात्सैवासिद्धास्पदापि च।**
**त्वत्प्राप्त्यै मन्मनो जाने गौरीजाने हृदि स्थितम् ॥ १५२॥**
**प्रतीयमानगम्याख्योत्प्रेक्षा तद्वाचकं विना।**
**सोऽङ्गनासङ्गिमश्चित्तरञ्जनायार्धिताङ्गनः ॥ १५३ ॥**

नेत्रापरनामधेयास्तेनेदमान्ध्यं खलु नान्धकारैः' इति ॥ १५० ॥ एवं सिद्धास्पदां फलोत्प्रेक्षां लक्षयति—**सिद्धेति**। अधिकरणे उत्प्रेक्षाविषयीभूते वस्तुनीत्यर्थः। तामुदाहरति—**कण्ठ एवेति**। हे हर भक्तदुःखहरणकर्तः शंकरेत्यर्थः। त्वयेत्यार्थिकम्। क्ष्वेडः 'क्ष्वेडस्तु गरलं विषम्' इत्यमरात्समुद्रमथनोत्पन्नः कालकूटाख्यविषविशेष इत्यर्थः। **उदरेति**। स्वोदरवर्त्यनन्तकोटिब्रह्माण्डपरिपालनलक्षणतल्लक्ष्म्यर्थमित्यर्थः। कण्ठ एव धृतः किमिति संबन्धः। यथावा कुवलयानन्दे—'पूरं विधुर्वर्धयितुं पयोधेः शङ्केयमेणाङ्कमणीन्कियन्ति। पयांसि दोग्धि प्रियविप्रयोगे सशोककोकीनयने कियन्ति' इति। यथावा रसगङ्गाधरे—'निधिं लावण्यानां तव खलु मुखं निर्मितवतो महामोहं मन्ये सरसिरुहसूनोरुपचितम्। उपेक्ष्य त्वां यस्माद्विधुमयमकस्मादिह कृती कलाहीनं दीनं विकल इव राजानमकरोत्' इति पूर्वार्धोत्प्रेक्षितमोहरूपधर्मसिद्धये द्वितीयार्धे अविचार्यकारित्वं तत्सामानाधिकरण्येनोपात्तमिति तेनेयं सिद्धा फलोत्प्रेक्षेति रहस्यम् ॥ १५१ ॥ अथासिद्धास्पदां फलोत्प्रेक्षां लक्षयति—**असिद्ध इति**। तामुदाहरति—**त्वदिति**। 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति' इति स्मृतेर्हृद्देशावच्छेदेन त्वत्प्राप्तिः स्यादित्येतदर्थं हे गौरीजाने गौरी जाया यस्य तत्संबुद्धावुमारमण, मन्मनः हृदि हृत्पुण्डरीके गोलके स्थितमस्तीत्यहं जाने इति योजना। यथावा रसगङ्गाधरे—'दिवानिशं वारिणि कण्ठदघ्ने दिवाकराराधनमाचरन्ती। वक्षोजताप्त्यै किमु पक्ष्मलाक्ष्यास्तपश्चरत्यम्बुजपङ्क्तिरेषा' इति ॥ १५२ ॥ एवं वाच्योत्प्रेक्षां प्रतिज्ञातकुवलयानन्दमतरीत्या षोढा निरूप्य सप्रत्यवसरप्राप्तां प्रतीयमानापराभिधगम्योत्प्रेक्षां लक्षयति—**प्रतीयमानेति**। तदुक्तं कुवलयानन्दे—'मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः। उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः' इत्युत्प्रेक्षाव्यञ्जकत्वेन परिगणितानां शब्दानामप्रयोगे गम्योत्प्रेक्षेति। रसगङ्गाधरेपि—सा चोत्प्रेक्षा द्विविधा। वाच्या प्रतीयमाना च। इव नूनं मन्ये जाने अवैमि ऊहे तर्कयामि शङ्के उत्प्रेक्षे इत्यादिभिः क्यङाचारक्विबादिभिः प्रतिपादकैः सहिता यत्रोत्प्रेक्षासामग्री तत्र वाच्योत्प्रेक्षा, यत्र च प्रतिपादकशब्दरहितं तत्सामग्रीमात्रं तत्र प्रतीयमाना, यत्र तत्सामग्रीरहितं प्रतिपादकमात्रं तत्र संभावनामात्रमेव नोत्प्रेक्षेति। संभावनाप्युदाहृता तत्रैव—'रामं स्निग्धतरश्यामं विलोक्य वनमण्डले। पयोधाराधरोऽयं स्यादिति नृत्यन्ति केकिनः' इति। प्रायः स्थाणुना

**वर्ण्ये गुणैरतिशयस्योक्तौ सा सप्तधा मता ।**
**रूपकातिशयोक्त्यादिभेदेनानितरान्विता ॥ १५४ ॥**

नेन भवितव्यं नूनं पुरुषेणानेन भाव्यं, दूरस्थोऽयं देवदत्त इवाभातीति च । तामुदाहरति—**स इति** । सः ईश्वरः । **अर्धितेति** । अर्धं स्ववामार्धं संजातं यस्यास्तादृशी अङ्गना यस्य स तथाभूदित्यर्थः । यथावा साहित्यदर्पणे—तन्वङ्गयाः स्तनयुग्मेन मुखं न प्रकटीकृतम् । हाराय गुणिने स्थानं न दत्तमिति लज्जया' इति ॥ १५३ ॥ एवं संभावनामूलकोत्प्रेक्षाप्रतिपादनप्रसङ्गसंगतामतिशयोक्तिं सामान्यतो लक्षयति—**वर्ण्ये इति** । वर्ण्ये उपमेये विषये । गुणैरुपमानसाधारणादिधर्मैः । आदिना कविप्रौढोक्तिसिद्धवैचित्र्याधायकतदसाधारणधर्माणां संग्रहः । अतिशयस्योत्कर्षस्य । उक्तौ सा अतिशयोक्तिर्भवतीत्यर्थः । तथाच विषयविषयकविषयितत्साधारणासाधारणधर्मान्यतमनिमित्तकोत्कर्षविशेषाधायकवाक्यकरणकधीविषयत्वमतिशयोक्तित्वमिति । अत्रासाधारणपदेन वैधर्म्यरूपकातिशयोक्तिभेदकातिशयोक्त्याद्यखिलतद्भेदसंग्रहः । एतावन्मात्रोक्तौ साधर्म्यरूपकातिशयोक्तावव्याप्तिरतः साधारणेति । धर्मनिमित्तकेत्यनेन धर्मलुप्तोपमायामतिव्याप्तिनिवृत्तिः । आधिक्यरूपकादावतिप्रसङ्गभङ्गार्थमुत्कर्षविशेषेति । शिष्टं तु प्राग्वदेव । अथैवं सामान्यतो लक्षिताया अतिशयोक्तेः किमुत्प्रेक्षावदनेकविधत्वमुत निश्चयवदेकविधत्वमेवेति शङ्कां शमयंस्तस्याः कुवलयानन्दकारमतरीत्या सप्तविधत्वं प्रतिजानीते—**सेत्यादिशेषेण** । सेतिपदं मध्यमणिन्यायेनात्रापि संबध्यते । सा निरुक्तलक्षणा अतिशयोक्तिः । **अनितरेति** । इतरेण अलंकारान्तरेण अन्विता विशिष्टा न भवतीति तथा । अन्यालंकारासंकीर्णेत्यर्थः । एतादृशी अतएव रूपकेत्यादि । रूपं स्वरूपमेव रूपकं तस्य यः अतिशयः उपमानतादात्म्येतरतच्छक्तशब्देनोक्तिः साधर्म्यवैधर्म्यान्यतरावच्छेदेनोत्कर्षविशेषाधायकधर्मैरुपपादनं तदादयो याः भेदकातिशयोक्त्यादिवक्ष्यमाणाः षडलंकृतयस्तासां भेदेनेत्यर्थः । सप्तधा सप्तप्रकारा । मता श्रीमदप्पय्यदीक्षितानां संमतास्तीति संबन्धः । ननु तत्र तु अष्टावतिशयोक्तयो लक्षणादिना स्पष्टं प्रतिपादिताः प्रतीयन्ते तत्कथं सप्तविधत्वं तासां तत्संमतं स्यादिति चेद्बाढम् । तत्तात्पर्यबोधविधुराणां यथाश्रुतग्राहिणां तथा प्रतीतावपि वस्तुतस्तेषामेवमेव संमतत्वात् । तथाहि तत्र तावद्रूपकातिशयोक्तिनिरूपणानन्तरं 'यद्यपह्नुतिगर्भत्वं सैव सापह्नवा मता । त्वत्सूक्तिषु सुधा राजन् भ्रान्ताः पश्यन्ति तां विधौ' इति विलिख्य तत्किंचिद्व्याख्याय' नन्वेवं यद्यलंकारान्तरीयस्पष्टवैशिष्ट्येनाप्यतिशयोक्तेर्भेदः स्यात्तर्हि किमपराद्धमत्रैव निरुक्तपर्यस्तापह्नुतिभिन्नसंभावितालंकारान्तरैर्वैशिष्ट्याधाने तथान्येष्वप्यलंकारेषु तैस्तथात्वसंपादन इति स्वयमेव शिष्याद्याशयं मनसि निधाय नेदं मम संमतं यदयं भेदः केवलं पर्यस्तापह्नुतिरेव तथापि यथा अलंकारसर्वस्वकृतोत्प्रेक्षायामपि सापह्नवत्वमुक्तमेवमिह मयापीति गूढाभिसंधिं ध्वनयद्भिर्दी-

क्षितैरलंकारसर्वस्वकृतेत्यादिना 'गतासु तीरं तिमिघट्टनेन ससंभ्रमं पौरविलासिनीषु । यत्रोल्लसत्फेनततिच्छलेन मुक्ताट्टहासेव विभाति शिप्रा' इति तदीयमुदाहरणं छलपदेन कैतवापह्नुतिघटितं तथेवशब्देनोत्प्रेक्षाप्रधानं चोक्त्वाग्रे न केवलमिदं तेनाभिनवमुक्तमेवमस्माभिरपि स्वरूपहेतुफलोत्प्रेक्षात्रितयेपि वक्तुं शक्यमिति तत्रयोदाहरणान्यप्युल्लिखितानि दिङ्मात्रेण व्याख्यायालमनया प्रसक्तानुप्रसक्त्या प्रकृतमनुसराम इति ग्रन्थेन तदुपसंहारः कृतः । तेनैवं निर्णीयते वचैतत्पर्यस्तापह्नुतिगर्भितत्वेनातिशयोक्तिभेदजातं किंत्वियं प्रागुपन्यस्ता पर्यस्तापह्नुतिरेवेति । एतेन मुक्ताविद्रुममन्तरेत्यादितल्लिखितोदाहरणान्तरमपि व्याख्यातम् । एवमलंकारसर्वस्वकारस्य सापह्नवोत्प्रेक्षोदाहरणं तदनुसारेणैतेषामपि सापह्नवस्वरूपाद्युत्प्रेक्षोदाहरणत्रयमपि तत्र स्फुटालंकारद्वयसंवलितत्वोक्त्या संसृष्टिविषयमेवेति दिक् । अतएव मयात्र अनितरेति विशेषणं प्रयुक्तम् । अन्यथैवं भेदसहस्रापत्तेः संसृष्ट्यादिलोपापत्तेश्च । एतेन यदुक्तं रसगङ्गाधरे । यत्तु कुवलयानन्दे—'यद्यपह्नुतिगर्भत्वं सैव सापह्नवा मता । त्वत्सूक्तिषु सुधा राजन् भ्रान्ताः पश्यन्ति तां विधौ' इत्यत्र पर्यस्तापह्नुतिगर्भामतिशयोक्तिमाहुः । तच्चिन्त्यम् । पर्यस्तापह्नुतित्वं न प्रामाणिकसंमतमिति प्रागेव दत्तोत्तरत्वादिति तत्प्रत्युक्तम् । हेत्वसिद्धेर्मया तत्प्रकरणे प्रागेव प्रपञ्चितत्वात् । इह तद्गर्भत्वकथनव्यवस्थायाः सद्य एव साधितत्वाच्च । एवं तत्रैव प्रागुक्तम् । नव्यास्तु निगीर्याध्यवसानमेवातिशयोक्तिः । प्रभेदान्तर त्वनुगतरूपाभावादलंकारान्तरमेवेति यत्तदपि परास्तम् । निरुक्तसामान्यलक्षणेनानुगतरूपोक्तेः । नन्वेवमपि तत्कृतं कुवलयानन्दसंमतसंबन्धातिशयोक्तिखण्डनं तु तदवस्थमेव । तद्यथा तत्रैव । यदपि तैरेवोक्तम्—'संबन्धातिशयोक्तिः स्यादयोगे योगकल्पनम् । सौधाग्राणि पुरस्यास्य स्पृशन्ति विधुमण्डलम्' मिति । तदपि न । अत्रैव स्पृशन्तीवेन्दुमण्डलमिति कृते कोऽलंकारः । उत्प्रेक्षेति चेत् । तर्हीवादेरभावाद्गम्योत्प्रेक्षेयमुचिता । इवादिसत्त्वे या वाच्योत्प्रेक्षा सैवाभावे गम्योत्प्रेक्षेति नियमस्य सर्वसंमतत्वात् । 'त्वत्कीर्तिर्भ्रमणश्रान्ता विवेश स्वर्गनिम्नगाम्' इति त्वदुक्तगम्योत्प्रेक्षायाः सौधाग्राणीत्यस्य चोत्प्रेक्षांशविशेषानुपलम्भात् । तथाहि त्वत्कीर्तिरित्यादौ बहुदूरगमने स्वर्गगमने वा स्वर्गङ्गाप्रवेशतादात्म्योत्प्रेक्षेति नये स्वर्गसंबन्धित्वरूपानुपात्तधर्मनिमित्तेयं । कीर्तौ स्वर्गङ्गाकर्मकप्रवेशकर्तृत्वोत्प्रेक्षेति नये तादृशगमनरूपानुपात्तधर्मनिमित्ता । विशेषणीभूतभ्रमणश्रान्तत्वरूपहेतूत्प्रेक्षेति नये तु तादृशगमनतादात्म्याध्यवसितस्वर्गङ्गाप्रवेशरूपोपात्तधर्मनिमित्तेति सर्वथा गम्यैव । सौधाग्राणीत्यत्र परमोर्ध्वदेशसंयोगे चन्द्रमण्डलस्पर्शतादात्म्योत्प्रेक्षायां परमोर्ध्वदेशवृत्तित्वरूपानुपात्तधर्मनिमित्ता तादृशस्पर्शकर्तृत्वोत्प्रेक्षायां तु परमोर्ध्वदेशसंयोगरूपानुपात्तधर्मनिमित्तेति । इयमपि गम्योत्प्रेक्षैव । तस्मादुत्प्रेक्षासामग्री यत्र नास्ति तादृशमुदाहरणमुचितं यथास्मदीयं धीरध्वनिभिरित्यादि । सुन्दरत्वे सत्युपस्का-

**यत्रेतरमृते मुख्यसिद्धिरेव न तत्र सः ।**
**उपजीव्यतया नैव संसृष्ट्यादिकरो मतः ॥ १५५ ॥**

कत्वमलंकारसामान्यलक्षणमिहापि न विस्मरणीयमिति चेन्न । उत्प्रेक्षाप्रकरणे ादुक्तरीत्यैव सौधाग्राणीत्यादिप्रकृतोदाहरणे संभावनाया अप्यसंभवेन गम्योत्प्रेक्षाभावस्य कैमुत्यसिद्धतया संबन्धातिशयोक्तेरेव समुचितत्वान्निरुक्तखण्डनस्य ु प्रागेव स्वकृतनियमाननुसंधाननिबन्धनत्वाच्च । तथाहि तत्रोत्प्रेक्षां प्रकृत्य ात्र च प्रतिपादकशब्दरहितं तत्सामग्रीमात्रं तत्र प्रतीयमाना यत्र तत्सामग्रीःहितं प्रतिपादकमात्रं तत्र संभावनामात्रमेव नोत्प्रेक्षेति पूर्वमुक्त्वाग्रे तत्सामग्रीरूपतत्प्रयोजकधर्मनिरूपणावसरे द्विविधो हि तावद्धर्मोपि स्वतएव साधारणः साधारणीकरणोपायेनासाधारणोऽपि साधारणीकृतश्च । सचोपायः क्वचिद्रूपकं क्वचिच्छ्लेषः क्वचिदपह्नुतिः क्वचिद्बिम्बप्रतिबिम्बभावः क्वचिदुपचारः क्वचिदभेदाध्यवसायरूपोऽतिशयः । यथा 'नयनेन्दिन्दिरानन्दमन्दिरं मिलदिन्दिरम् । इदमिन्दीवरं मन्ये सुन्दराङ्गि तवाननम्' । अत्र प्रथमार्धगतः प्रथमो धर्मो रूपकेण विषयिसाधरणीकृतः । द्वितीयश्च विलक्षणशोभयोरभेदाध्यवसायेनेति । तथाच तदुक्तरीत्यैव सौधाग्राणीत्यत्र परमोर्ध्वदेशसंयोगे चन्द्रमण्डलस्पर्शतादात्म्योत्प्रेक्षापरमोर्ध्वदेशवृत्तित्वरूपानुपात्तधर्मनिमित्ता तादृशस्पर्शकर्तृत्वेक्षा तु परमोर्ध्वदेशसंयोगरूपानुपात्तधर्मनिमित्तेति पक्षद्वयमपि न संभवति । अत्र प्रतिपादकशब्दराहित्यं निर्विवादमेव । अथ सामग्री तावत्तदुक्तद्विविधधर्मान्यतरधर्मरूपा वक्तव्या, पश्चात्स धर्मः कविनोपात्तो भवतु काव्येऽनुपात्तो वेत्यन्यदेतत् । परंतु स्वत एव साधारण इति प्रथमो धर्मस्तावन्नैव संभवति । प्रथमपक्षे परमोर्ध्वदेशसंयोगस्य चन्द्रमण्डलस्पर्शस्य च पदार्थत्वं गुणत्वं वाविनाऽपरसाम्यादर्शनात् 'धूमस्तोमं तमः शङ्के कोकीविरहशुष्मणाम्' इत्यादाविव नयनेन्दिन्दिरानन्दमित्यादाविव च रूपकादिना साधारणीकृतस्यापि तस्यानुपलब्धेर्द्वितीयोऽपि धर्मो न युज्यते । नचोपचाररूपोपायेन साधारणीकृतोऽसावुक्त एव परमोर्ध्वदेशवृत्तित्वरूप इति वाच्यम् । तस्य धूमस्तोममित्यत्र नीलरूपवन्नयनेन्दिन्दिरानन्दमित्यत्र च नीलरूपनिरुपमचाञ्चल्ययोरिव चारुत्वाभावाच्च । अतएव परमोर्ध्वदेशसंयोगरूपधर्मावलम्बी द्वितीयपक्षोऽपि प्रतिक्षिप्तः । नाप्यभेदाध्यवसायरूपोपायेनैव साधारणीकृतोऽसाविति सांप्रतम् । परमोर्ध्वदेशसंयोगचन्द्रमण्डलस्पर्शयोः परमोर्ध्वदेशवृत्तित्वरूपश्चन्द्रमण्डलपर्यन्तपरमोर्ध्वदेशसंयोगचन्द्रमण्डलस्पर्शकर्तृत्वयोः परमोर्ध्वदेशसंयोगरूपश्चाभेद एव यदा न संभवति तदा तदुदाहृतमिलदिन्दिरवत्तदध्यवसायाभावस्य कैमुत्यसिद्धत्वात् । यथाकथंचिल्लक्षणादिना तत्संभवेऽपि तस्यासुन्दरत्वात्तदुक्तोदाहरणसमकक्षसौन्दर्यस्यैव तत्संमतत्वाच्च । तस्मात्सौधाग्राणीत्यत्र सामग्र्या अप्यभावादतिशयोक्त्युदाहरणेनैवेति शिवम् ॥ १५४ ॥

नन्वेवं यदि नियमो यदलंकारान्तरमिश्रणे संसृष्ट्यादिरेव तर्हि ससंमतिकं

**वर्ण्यस्य विषयित्वेन सोक्तौ रूपकपूर्विका।**
**सतडिच्छरदम्भोदः स्मृत्या नस्तापशान्तये ॥ १५६ ॥**

प्रतिपादितोत्प्रेक्षासामग्रीसमपेक्षितरूपकाद्यलंकारान्तरसंमिश्रिततत्तदुदाहरणानां संसृष्ट्यादिविषयकत्वापात इतिचेन्न। तत्र गत्यन्तराभावेन नियमान्तरस्यैवान्यथानुपपत्तिसिद्धस्येष्टत्वादित्याह—**यत्रेति**। यत्रोदाहरणे 'धूमस्तोमं तमः शङ्के' इत्यादौ इतरं रूपकाद्यलंकारम्। ऋते विना। **मुख्येति**। मुख्यस्य प्रधानस्योत्प्रेक्षादेः सिद्धिर्व्यवहार एवेत्यर्थः। न भवति। तत्र स्थले सः रूपकादिः उपजीव्यतया उपजीवितुं स्वसामग्र्युपायत्वेनाश्रयितुं योग्य उपजीव्यस्तस्य भाव उपजीव्यता तयेत्यर्थः। **संसृष्ट्यादीति**। आदिना संकरः। स्पष्टस्वभावेन संसृष्टिकर्ता गूढस्वभावेन संकरकर्ता वेत्यर्थः। मतः प्राचामाचार्याणां संमत इत्यर्थः। एतादृशः नैव भवतीत्यन्वयः। यद्येवं नियमो न सर्वालंकारिकसंमतः स्याच्चेत्तर्हि सरस्वतीकण्ठाभरणे अतिशयोक्तिं प्रकृत्य तनुत्वातिशयो यथा—'स्तनयोर्जघनस्यापि मध्ये मध्यं प्रिये तव। अस्ति नास्तीति संदेहो न मेऽद्यापि निवर्तते' इति संदेहघटितं तदुदाहरणं काव्यप्रकाशे उन्मेषय इति काव्यलिङ्गादिघटितमुत्प्रेक्षोदाहरणं च नैवोक्तं स्यात्। उपलक्षणमिदमाचार्यान्तरोदाहरणानामपि। तस्मात्तदन्यथानुपपत्त्यायमेव नियमः साधीयानित्याशयः ॥ १५५ ॥ अथोद्दिष्टक्रमेणातिशयोक्तिसप्तकमपि लक्षणप्रमाणोदाहरणैः प्रपञ्चयिष्यन्नादौ रूपकातिशयोक्तिं लक्षयति—**वर्ण्यस्येत्यर्धेन**। वर्ण्यस्य विषयापराभिधोपमेयस्येत्यर्थः। विषयत्वेन उपमानत्वेन उक्तौ सत्याम्। सा प्रकृता अतिशयोक्तिः रूपकेति। रूपकेत्यानुपूर्वी पूर्वं यस्यां सा तथा रूपकातिशयोक्तिः स्यादिति संबन्धः। एवमेवाग्रेपि। एवंच विषयस्य विनिगरणपूर्वकं विषयितावच्छेदकावच्छिन्नरूपेण विषयिवाचकशब्दबोध्यत्वं रूपकातिशयोक्तित्वमिति तल्लक्षणं विशेषतः पर्यवस्यति। इदंच बोधनमाहार्यमेवेति न बाधविरोधः। कवीच्छयैव विषयोत्कर्षविशेषाधानार्थमेव तथा कल्पनात्। अत्र रूपकेऽतिव्याप्तिव्यावृत्तये विनिगरणपूर्वकमिति। तदुक्तं रसगङ्गाधरे 'विषयिणा विषयस्य निगरणमतिशयस्तस्योक्तिः। तच्च स्ववाचकपदेन शक्यतावच्छेदकरूपेणैवान्यस्य बोधनम्' इति। तामुदाहरति—**सेति**। साम्ब इत्यर्थः। एतेन गौरीविद्युतोः शिवशरदम्बुदयोश्च क्रमात् कनकवर्णत्वकुमुदबान्धवधवलत्वलक्षणसाधर्म्येण विषयोत्कर्षाधानं ध्वन्यते। स्मृत्या स्मरणमात्रेणैव नः अस्माकम्। तापेति संसारसंतापसमपनुत्तये भवतीत्यर्थः। एतेन शरन्मेघः कदाचित्सतडिदपि दैवादातपजन्यसंतापहारकः सूर्यमाच्छाद्यैव भवति ननु तमनाच्छाद्य स्वविषयकसंस्कारजन्यान्तःकरणवृत्तिमात्रेणेति वैधर्म्येण तदावेद्यत इति ध्येयम्। यथावा काव्यप्रकाशे—'कमलमनम्भसि कमले कुवलये च तानि कनकलतिकायाम्। सा च सुकुमारसुभगेत्युत्पातपरम्परा केयम्' इति। यथावा कुवलयानन्दे—'वापी कापि स्फुरति गगने तत्परं

**उक्तौ सा विषयस्यान्यत्वेन भेदकपूर्विका।**
**श्रीगुरोः करुणान्यैव विद्याप्यन्यैव दृश्यते ॥ १५७ ॥**
**योगस्य वर्णनेऽयोगे सा स्यात्संबन्धपूर्विका।**
**अयोध्यासौध एवासीच्चन्द्रस्य श्रीशभाषणम् ॥ १५८ ॥**

---

सूक्ष्मपद्या सोपानालीमधिगतवती काञ्चनीमैन्द्रनीली। अग्रे शैलौ सुकृतिसुगमौ चन्दनच्छन्नदेशौ तत्रत्यानां सुलभममृतं संनिधानात्सुधांशोः' इति। यथावा— 'सुधाबद्धग्रासैरुपवनचकोरैरनुसृतां किरञ्ज्योत्स्नामच्छां नवलवलिपाकप्रणयिनीम्। उपप्राकाराग्रे प्रहिणु नयने तर्कय मनागनाकाशे कोऽयं गलितहरिणः शीतकिरणः' इति। यथावा साहित्यदर्पणे—'कथमुपरि कलापिनः कलापो विलसति तस्य तलेष्टमीन्दुखण्डम्। कुवलययुगुलं ततो विलोलं तिलकुसुमं तदधः प्रवालमस्मात्' इति। यथावा रसगङ्गाधरे—'कलिन्दगिरिनन्दिनीतटवनान्तरं भासयन्सदा पथि गतागतश्रमभरं हरन्प्राणिनाम्। लतावलिशतावृतो मधुरया रुचा संभृतो ममाशु हरतु श्रमानिति तमांस्तमालद्रुमः' इति। 'स्फुरत्कनककान्तिभिर्नवलताभिरावेष्टितो मम' इति चपाठः। अत्र तमालेन भगवतो निगरणे कलिन्दनन्दिनीत्यादीनि त्रीणि चरणत्रयगतानि विशेषणानि तदनुग्रहार्थं विषयविषयिणोः साधारणधर्मतया साक्षादुपात्तानि। चतुर्थमपि चतुर्थचरणगतमवैयाकरणानां दर्शने वैयाकरणानां तूपात्तया तमालाभिन्नकर्तृकया श्रमहरणक्रिययोन्नीतं तादृशक्रियाकर्तृत्वं तथातया स्थितम्। द्वितीयचरणे चोच्चावचयोनिसंचारणस्य पथ्यादिना। तृतीयेऽपि लताभिर्गोपीनां निगरणं तस्मिन्नेवानुग्राहकतया। एवंच सावयवेयमतिशयोक्तिः। यत्र चानुग्राहकं न निगरणान्तरं किंतु शुद्धं साधारणधर्मादि सा निरवयवा। यथा 'नयनानन्दसंदोहतुन्दिलीकरणक्षमा। तिरयत्वाशु संताप कापि कादम्बिनी मम' इति। तच्च विषयितावच्छेदकं क्वचित्प्रकृते निगरणदार्ढ्याय विषयमात्रवृत्तिधर्मस्वसमानाधिकरणधर्मशून्यलाभ्यां प्रसिद्धम्। यथा कलिन्दनगनन्दिनीत्यादौ तमालत्वादि। क्वचिदप्रसिद्धमपि कल्पितोपमादावुपमानमिव कविना स्वप्रतिभया कल्पितम्। धर्मिण इव धर्मकल्पनाया अविरुद्धत्वात्। यथा 'स्मृतापि तरुणातपम्' इत्यादि ॥ १५६ ॥ एवं रूपकातिशयोक्तिं निरूप्याथ भेदकातिशयोक्तिं लक्षयति—**उक्ताविति**। विषयस्य उपमेयस्य। अन्यत्वेन उक्तौ सत्यां सा अतिशयोक्तिः भेदकपूर्विका भेदकातिशयोक्तिर्भवतीति योजना। तामुदाहरति—**श्रीगुरोरिति**। यथावा कुवलयानन्दे—'अन्येयं रूपसंपत्तिरन्या वैदग्ध्यधोरणी। नैषा नलिनपत्राक्षी सृष्टिः साधारणी विधेः' इति। रसगङ्गाधरेपि—'अन्या जगद्धितमयी मनसः प्रवृत्ति रन्यैव कापि रचना वचनावलीनाम्। लोकोत्तरा च कृतिराकृतिरार्यहृद्या विद्यावतां सकलमेव चरित्रमन्यत्' इति ॥ १५७ ॥ अथ संबन्धातिशयोक्तिं लक्षयति—**योगस्येति**। अयोगे असंबन्धेपि योगस्य संबन्धस्य वर्णने सति सा अतिशयोक्तिः

वैपरीत्ये तु योगादेः सा विपर्ययपूर्विका।
वेदान्ते सुखदे कान्ताः स्वर्ग्या अपि न चिन्तये ॥ १५९ ॥
कार्यकारणसाहित्ये सा स्यादक्रमपूर्विका।
ब्रह्मविद्योदयो द्वैतबाधश्च सममेव नः ॥ १६० ॥
कार्ये हेतुप्रसङ्गे चेत्सा स्याच्चपलपूर्विका।
श्रीगुर्वपाङ्गसंचार एव मे ब्रह्मधीरभूत् ॥ १६१ ॥
प्राक्कार्ये कारणे तूर्ध्वं भवेत्सात्यन्तपूर्विका।
प्रागेव ध्वस्तमज्ञानं पश्चान्मे गुरुवीक्षणम् ॥ १६२ ॥
सूक्ष्मकान्त्योस्तु तद्भेदौ कण्ठाभरणसंमतौ।
मध्यः प्रियेऽस्ति ते नो वा राधा राकैव लक्ष्यते ॥ १६३ ॥

---

संबन्धेति। तामुदाहरति—**अयोध्येति**। यथावा रसगङ्गाधरे—'धीरध्वनिभिरलं ते नीरद मे मासिको गर्भः। उन्मदवारणबुद्ध्या मध्येजठरं समुच्छलति'। अत्र विस्तरस्त्वधस्तादेवोपन्यस्त इति नास्त्यत्र तत्प्रस्तावः ॥ १५८ ॥ विपर्ययातिशयोक्तिं लक्षयति—**वैपरीत्येनेति**। तामुदाहरति—**वेदान्त इति**। यथावा कुवलयानन्दे—'अनयोरनवद्याङ्गि स्तनयोर्जृम्भमाणयोः। अवकाशो न पर्याप्तस्तव बाहुलतान्तरे' इति ॥ १५९ ॥ अक्रमातिशयोक्तिं लक्षयति—**कार्येति**। तामुदाहरति—**ब्रह्मेति**। यथावा मदीयाद्वैतामृतमञ्जर्याम्—'यत्क्षण इह द्विजिह्वाः क्षमात्यजस्तत्प्रभोः शिरस्यपि च। येन क्षमैव निहिता तत्क्षण एवैष जयति जगदीशः' इति ॥ १६० ॥ एवं चपलातिशयोक्तिं लक्षयति—**कार्यमिति**। तामुदाहरति—**श्रीति**। यथावा कुवलयानन्दे—'आदातुं सकृदीक्षितेऽपि कुसुमे हस्ताग्रमालोहितं लाक्षारञ्जनवार्तयापि सहसा रक्तं तलं पादयोः। अङ्गानामनुलेपनस्मरणमप्यत्यन्तखेदावहं हन्ताधीरदृशः किमन्यदलकामोदोऽपि भारायते' इति। यथावा तत्रैव—'यामि न यामीति धवे वदति पुरस्तात्क्षणेन तन्वङ्ग्याः। गलितानि पुरो वलयान्यपराणि तथैव दलितानि' इति ॥ १६१ ॥ अथात्यन्तातिशयोक्तिं लक्षयति—**प्रागिति**। तामुदाहरति—**प्रागेवेति**। यथावा काव्यप्रकाशे—'हृदयमधिष्ठितमादौ मालत्याः कुसुमचापबाणेन। चरम रमणीवल्लभलोचनविषयं त्वया भजता' इति ॥ १६२ ॥ एवं कुवलयानन्दसंमतसप्तातिशयोक्तिभेदानुपपाद्येदानीं तदनन्तर्भूतानन्यानपि त्रीन्भेदान्विवक्षुरादौ सरस्वतीकण्ठाभरणेष्टं सूक्ष्मकान्त्यतिशयोक्तिद्वयमाह—**सूक्ष्मेति**। तदुदाहरति **मध्यइत्यादि**क्रमात्पादाभ्याम्। तदुक्तं तत्रैव। तनुत्वातिशयो यथा—'स्तनयोर्जघनस्यापि मध्ये मध्यं प्रिये तव। अस्ति नास्तीति संदेहो न मेऽद्यापि निवर्तते'। कान्त्यतिशयो यथा—'मल्लिकामालभारिण्यः सर्वाङ्गीणार्द्रचन्दनाः। क्षौमवत्यो न लक्ष्यन्ते ज्योत्स्नायामभिसारिकाः' इति ॥ १६३ ॥ एवं काव्य-

**यद्यादिशब्दतो संभाविता मंमटसंमता ।**
**यदि फुल्लमहोरात्रं पद्मं तत्ते मुखोपमा ॥ १६४ ॥**
**वर्ण्यानामेव धर्मैक्येऽन्येषां वा तुल्ययोगिता ।**
**वन्द्या गुर्वीशवेदान्ताः सा चेद्भूमाश्रियोऽपि धिक् १६५**

प्रकाशादिसंमता संभावितातिशयोक्तिमाह—**यद्यादीति** । आदिना चेत्शब्दः। तामुदाहरति—**यदीति** । तदुक्तं तत्रैव—'राकायामकलङ्कं चेदमृतांशोर्भवेद्वपुः। तस्या मुखं तदा साम्यपराभवमवाप्नुयात्' इति । रसगङ्गाधरेऽपि—'तिमिरशारदचन्दिरतारकाः कमलविद्रुमचम्पककोरकाः । यदि मिलन्ति कदापि तदाननं खलु तदा कलया तुलयामहे' इति ॥ १६४ ॥ एवं चरमातिशयोक्ति उदाहरणध्वनितानौपम्यस्मृतार्थिकौपम्यां तुल्ययोगितां सामान्यतो लक्षयति—**वर्ण्यानामेवे**त्यर्धेनैव । वर्ण्यानामेव प्रस्तुतवस्तूनामेव । अवधारणेनावर्ण्यसमुच्चयव्युदासः। वेत्यथवा । अन्येषां एवकारोऽत्राप्यनुकृष्यते । अप्रस्तुतवस्तूनामेवेत्यर्थः। तेनेह वर्ण्यसमुच्चयस्यापि व्युदासः। एवंच न वक्ष्यमाणे दीपकेऽतिव्याप्तिः। तस्योभयधर्मैक्यरूपत्वात् । धर्मैक्ये द्रव्यगुणकर्मतदभावान्यतमवत्त्वरूपसाधर्म्ये सतीत्यर्थः । तुल्ययोगितालंकृतिर्भवतीत्यन्वयः । एवंच लक्षणं स्फुटमेव । तामुदाहरति—**वन्द्या इत्यादिना** क्रमात्पादाभ्याम् । तदुक्तम्—'यावज्जीवं त्रयः सेव्या वेदान्तो गुरुरीश्वरः। पूर्वं ज्ञानाप्तये पश्चात्कृतघ्नत्वनिवृत्तये' इति । अत्र वन्द्यत्वलक्षणं साधर्म्यं गुर्वादित्रिष्वपि प्रस्तुतेष्वेवेति प्रथमलक्षणसंगतिः। **साचेदिति** । इदं हि सीतां विपिने विवासितवतः श्रीरामस्य वासन्तिकराकाचन्द्रिकायां सौधचन्द्रशालायां विरहदाहोपहानार्थमेकान्ते स्थितस्य सप्तद्वीपाया अपि पृथिव्या एकातपत्रं प्रभुत्वं प्रकृतकौमुदीं गजतुरगसकलरत्नवरसम्पत्ति चानुसंधाय जानकीं विनेदं सर्वमपि प्रत्युतातिदुःखावहमेवेति ध्वनकं खीयमानस एव तन्निन्दावचनम् । एवंच दण्डकारण्ये मम यावत्तस्याः सहवासः स्थितस्तावन्मम राज्यनवसौधाद्यवच्छिन्नचन्द्रिकासकलवाजिप्रभृतिरत्नवरसंपत्तिराहित्येऽपि यत्सुखमासीदद्य तद्विरहदशायां राज्यादित्रयप्राचुर्येऽपि तल्लेशोऽपि नैव प्रतीयते प्रत्युतानन्तदुःखदावानल एव प्रतिक्षणप्रवर्धिष्णुः सर्वतः प्रस्फुरतीति धिक्तास्तिस्रोऽपि पृथ्व्यादीरित्याकूतम् । अत्र वर्ण्या भगवतीजानकीपृथ्व्याद्यास्तिस्रस्त्ववर्ण्या एवेति तासां निन्द्यत्वाख्यैव धर्मान्वय इति द्वितीयलक्षणसंगतिः । यथावा काव्यप्रकाशे—'पाण्डुक्षामं वदनं हृदयं सरसं तवालसं च वपुः। आवेदयति नितान्तं क्षेत्रियरोगं सखि हृदन्तः'। 'कुमुदकमलनीलनीरजालिर्ललितविलासजुषो दृशोः पुरः का। अमृतममृतरश्मिरम्बुजन्म प्रतिहतमेकपदे तवाननस्य' इति । यथावा सरस्वतीकण्ठाभरणे—'आहूतस्याभिषेकाय विसृष्टस्य वनाय च । न मया लक्षितस्तस्य स्वल्पोऽप्याकारविभ्रमः' 'यश्च निम्बं परशुना यश्चैनं मधुसर्पिषा । यश्चापि गन्धमाल्याद्यैः सर्वस्य कटुरेव

सः' इति। यथावा साहित्यदर्पणे—'दानं वित्ताद्दतं वाचः कीर्तिधर्मौ तथायुषः। परोपकरणं कायादसारात्सारमुद्धरेत्' इति। यथावा कुवलयानन्दे काव्यादर्शमतोपन्यासे—'संगतानि मृगाक्षीणां तडिद्विलसितान्यपि। क्षणद्वयं न तिष्ठन्ति घनारब्धान्यपि स्वयम्' इति। यथावा रसगङ्गाधरे—'प्रिये विषादं जहिहीति वाचं प्रिये सरागं वदति प्रियायाः। वारामुदारा विजगाल धारा विलोचनाभ्यां मनसश्च मानः'। 'न्यञ्चति वयसि प्रथमे समुदञ्चति किं च तरुणिमनि सुदृशः। उल्लसति कापि शोभा वचसां च दृशां च विभ्रमाणां च'। तत्रैवाग्रे—'दधीचिबलिकर्णेषु हिमहेमाचलाब्धिषु। अदातृत्वमधैर्यं च दृष्टे भवति भासते॥ वसु दातुं यशो धातुं विधातुमरिमर्दनम्। त्रातुं च सकलां पृथ्वीमतीव निपुणो भवान्॥ दूरीकरोति कुमतिं विमलीकरोति चेतश्चिरंतनमघं चुलुकीकरोति। भूतेषु किंच करुणां बहुलीकरोति सङ्गः सतां किमु न मङ्गलमातनोति'। अत्र प्रथमे वर्ण्यैकनिष्ठं क्रियारूपं धर्मैक्यं, द्वितीये गुणरूपसाधर्म्यं, तृतीये त्ववर्ण्येषु गुणाभावरूपं तद्दर्शनारीत्या, चतुर्थे प्रकृताप्रकृतान्यतरक्रियासम्बन्धिकारकान्वयलक्षणं साधर्म्यं, पञ्चमे च पद्ये अर्थान्तरन्यासान्विता तुल्ययोगितेति बोध्यम्। एवमेव प्राक्तनकाव्यप्रकाशाद्युदाहरणेष्वपि द्रष्टव्यम्। ननु भवत्वेवमपि रसगङ्गाधरेऽत्रैव यत्त्वलंकारसर्वस्वकृता तदनुगामिना कुवलयानन्दकृताच गुणक्रियाभिसंबन्धत्वे गुणरूपकधर्मान्वय इति चोक्तम्। तदापाततः 'शासति त्वयि हे राजन्नखण्डावनिमण्डलम्। न मनागपि निश्चिन्ते मण्डले शत्रुमित्रयोः' इत्यत्राभावरूपस्यैव धर्मस्यान्वयादिति कुवलयानन्दं दूषयित्वा गुणक्रियेत्युपलक्षण वा धर्ममात्रस्येति स्वयमेव समाधानमप्युपलक्षणविधया विधाय, एवं 'त्वमेकस्त्व दानशीलोऽसि प्रत्यर्थिषु तथार्थिषु' इत्यादावपि दानशीलरूपैकान्वयाल्लक्षणप्रवृत्तिः। यथावा कथंचिदनेकत्रैकान्वयस्य चमत्कारिणोपेक्षितत्वात्। एतेन 'हिताहिते वृत्तितौल्यम्' इत्यादिना तुल्ययोगितायाः प्रकारान्तरं यत्कुवलयानन्दकृता लक्षितमुदाहृतं च तदपास्तम्। अस्या अपि 'वर्ण्यानामितरेषां वा धर्मैक्यं तुल्ययोगिता' इति पूर्वलक्षणाक्रान्तत्वात्। एकानुपूर्वीबोधितवस्तुकर्मकदानपात्रत्वस्य परंपरया तादृशशब्दस्य प्रागुक्तमार्गेणार्थस्य वा धर्मस्यैक्यात्। 'यश्च निम्बं परशुना' इत्यादिविलिख्यात्रापि कटुत्वविशिष्टनिम्बस्यैव परंपरयावच्छेदकसेवकपूजकधर्मवत्त्वसंभवादित्यादिना कुवलयानन्दोक्त तुल्ययोगितान्तरं 'हिताहिते वृत्तितौल्यम्' इत्यादिना यदिह खण्डितं तस्य का गतिरितिचेन्न। तत्खण्डनस्य तद्ग्रन्थानवबोधनिबन्धनत्वात्। तद्यथा तत्र तावत् हिताहिते इत्यादिना प्रकृतकारिकां विलिख्याथ दिङ्मात्रेण तां व्याख्याय यथावा यश्च निम्बमिति पद्यमुदाहृत्य तदपि किंचिद्विवृत्य पूर्वोदाहरणं स्तुतिपर्यवसायि इदं तु निन्दापर्यवसायीति भेद इत्यनयोः स्तुत्यादिनैव भेदो लक्षणतस्त्वैक्यमेवेत्यावेद्य इयं सरस्वतीकण्ठाभरणोक्ता तुल्ययोगितेति कण्ठत एव येयमस्माभिः 'वर्ण्यानामितरेषां वा धर्मैक्यं तुल्ययोगिता'

**वर्ण्यावर्ण्योभयेषां चेद्धर्मैक्यं तर्हि दीपकम् ।**
**प्रसन्ना प्रमदा पत्या निशि चन्द्रेण चन्द्रिका ॥ १६६॥**

इत्यादिना तुल्ययोगितोक्ता सैव सरस्वतीकण्ठाभरणे तु हिताहितवृत्तितौल्याख्यप्रकारान्तरेणोक्तेत्यपरेत्युच्यत इति सूचितं भवति । तस्मादेवं बालैरप्यवबोध्ये स्पष्टतरेऽत्र विषये दोषोपन्यासः किंमूलक इति निर्मत्सराः सहृदया एव विदांकुर्वन्त्विति दिक् । किंचात्रैव 'न्यञ्चति बाल्ये सुदृशः समुदञ्चति गण्डसीम्नि पाण्डिमनि । मालिन्यमाविरासीद्राकाधिपलवलिकनकानाम्' इत्यत्र 'आविर्भूता यदवधि' इत्यादिप्रागुदाहृते स्वीयपद्य एव 'पाण्डिमा गण्डमूले' इत्यत्रैव रसानने ग्राम्यत्वेन स्वयमेव निन्दितो गण्डपदप्रयोगः कृतः सतु गत्यन्तरविरहात्प्राक्तदभिहितरसाविष्टचेतोवक्तृकतयैव समाधेय इति शिवम् । अपिचेह 'प्रिये विषादं जहिहि' इति वाक्यं 'प्रिये सरागं वदति प्रियायाः' इत्याद्युदाहृते तटस्थवाक्ये द्वितीयप्रियापदप्रयोगे तु निरुक्तसमाधानमपि कठिनमेवेति ॥ १६५ ॥ अथोक्ततुल्ययोगितायाः प्रस्तुताप्रस्तुतवर्णनप्रसङ्गसंगतं दीपकं लक्षयति—**वर्ण्येति** । वर्ण्याः प्रकृताः पदार्थाः अवर्ण्या अप्रकृताः ईदृशः ये उभये वर्ण्यत्वावर्ण्यत्वावच्छिन्नास्तेषामित्यर्थः । **धर्मेति** । साधारणधर्मैक्यं चेद्भवति तर्हि दीपकं दीपकालंकारः स्यादिति संबन्धः । तदुक्तं रसगङ्गाधरे—'प्रकृतानामप्रकृतानां चैकसाधारणधर्मान्वयो दीपकम्' इति । तदुदाहरति—**प्रसन्नेति** । नचात्र चन्द्रिकापि प्रकृतैवेति सांप्रतम् । मध्यस्थरात्रिपर्यायीभूतेन निशीति सप्तम्यन्तेन देहलीदीपन्यायेनोभयत्राप्यन्वितेन तथात्वसंभवेऽपि नायिकाया एव वर्ण्यत्वप्रयोजकप्रथमग्रहणेन प्राधान्यध्वननात् । यथावा काव्यप्रकाशे—'स्विद्यति कूणति वेल्लति विचलति निमिषति विलोकयति तिर्यक् । अन्तर्नन्दति चुम्बितुमिच्छति नवपरिणया वधूः शयने' इति । अत्र टीका जयरामभट्टाचार्यस्य । दयिते परिरम्भोद्यते कूणति मृदुशब्दं करोति वेल्लति संकोचमालम्बते विचलति परिवृत्य शेते निमिषति मृषा नेत्रे मुद्रयति । इदं तु तत्संमतानेकक्रियदीपकम् । यथावा कुवलयानन्दे—'मणिः शाणोल्लीढः समरविजयी हेतिनिहतो मदक्षीणो नागः शरदि सरिदश्यानपुलिना । कलाशेषश्चन्द्रः सुरतमृदिता बालवनिता तनिम्ना शोभन्ते गलितविभवाश्चार्थिषु नृपाः' इति । यथावा—'सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः । शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम्' इति । यथावा रसगङ्गाधरे—'अमृतस्य चन्द्रिकाया ललितायाश्चापि कवितायाः । सुजनस्य च निर्माणं जनयति नहि कस्य संतोषम्' इति । यथावा—'मृतस्य लिप्सा कृपणस्य दित्सा विमार्गगायाश्च रुचिः स्वकान्ते । सर्पस्य शान्तिः कुटिलस्य मैत्री विधातृसृष्टौ नहि दृष्टपूर्वा' इति । यथावा—'सुजनाः परोपकारं शूराः शस्त्रं धनं कृपणाः । कुलवत्यो मन्दाक्षं प्राणात्यय एव मुञ्चन्ति' इति । अत्र सर्वत्र प्रकृताप्रकृतोभयविधानामपि कर्त्रादिकारकाणामेकसाधर्म्यादेकक्रियान्वयात्तुल्ययोगिताया भेदः । तत्र तु प्रकृतानामेव वा-

**प्रतिवस्तूपमा वस्तुप्रतिवस्तुत्वमीयुषा।**
**या साधारणधर्मेणैवार्थी वाक्यार्थगोपमा ॥ १६७ ॥**
**आत्मबोधाद्विमुक्तिः स्याद्भूयाद्भानूदयात्प्रभा।**
**सत्सङ्गादेव धीः सिध्येच्छान्तिः केन्दुं विना स्फुरेत् १६८**

अप्रकृतानामेव वा तथात्वमिति विशेषः । एवं तत्र गम्योप्यनयोरुपमानोपमेयभावः परस्परमैच्छिक एवेह तु प्रकृतमेवोपमेयमप्रकृतं तूपमानमिति नियमः ॥१६६॥ एवं वर्ण्यावर्ण्योभयधर्मैक्यदीपकनिरूपणप्रसङ्गसंगतामुभयवाक्यार्थैकसामान्यस्वरूपां प्रतिवस्तूपमां लक्षयति—**प्रतिवस्तूपमेति**। या। **वस्त्विति**। प्राक्साधारणधर्मनिरूपणावसरप्रपञ्चितवस्तुप्रतिवस्तुभावमित्यर्थः। एतादृशेन। **साधारणेति**। आर्थी अर्थाद्गम्यमाना। वाक्येति।वाक्यार्थे गच्छतीति यथेति यावत्। ईदृशी उपमैव प्रतिवस्तूपमा भवतीति योजना। एवंच वस्तुप्रतिवस्तुत्वापन्नसाधारणधर्मकरणकार्थिकवाक्यार्थगोपमात्वं प्रतिवस्तूपमालंकृतिसामान्यलक्षणं पर्यवसन्नम्। अत्र 'यथा भाति मतिः शान्ते राजते श्रीस्तथा हरौ' इति वाक्यार्थोपमायामतिव्याप्तिव्यावृत्तये आर्थिकेति। तावन्मात्रोक्तौ 'धैर्यमेवामृत पुंसि स्त्रियां मन्दाक्षमेव तत्' इति दृष्टान्तेऽतिप्रसङ्गः। एवमपि वक्ष्यमाणाप्रस्तुतप्रशंसायां तद्वारणाय वस्त्विवत्यादिसाधारणधर्मविशेषणम्। तत्र भिन्नशब्दोपात्तकप्रतिपाद्यत्वलक्षणवस्तुप्रतिवस्तुभावस्य साधारणधर्मे सभवात्। तथा चोक्तं रसगङ्गाधरे—'एव च वस्तुप्रतिवस्तुभावापन्नसाधारणधर्मवाक्यार्थयोरार्थमौपम्यं प्रतिवस्तूपमा'इति। किंच 'आननं मृगशावाक्ष्या वीक्ष्य लोलालकावृतम्। भ्रमद्भ्रमरसंभारं स्मरामि सरसीरुहम्' इति तदुदाहृतस्मरणालकारपद्ये तावदौपम्यस्यार्थत्वेऽपि पदार्थगतत्वमेव, स्मृतित्वेन वाक्यार्थगतत्वासंभवादतस्तत्रातिव्याप्तिव्युदासाय वाक्येति ॥ १६७ ॥ एवं प्रतिवस्तूपमां लक्षयित्वा साधर्म्यवैधर्म्याभ्यां द्विविधामपि तामुदाहरति—**आत्मबोधादि**त्यादिपूर्वोत्तरार्धाभ्याम्। अत्र स्याद्भूयादित्याह्यातशब्दयोर्भेदेपि प्रतिपाद्यस्य भवत्यस्तियात्वोरर्थस्यैक्येन वस्तुप्रतिवस्तुभावापन्नसाधर्म्यप्रयुक्तं आत्मबोधादद्वैतात्मविषयकाप्रतिबद्धस्वशाखीयमहावाक्यैककरणकसाक्षात्काराद्धेतोर्विमुक्तिर्मूलाविद्या तज्जाप्यद्वैतमिथ्यात्वानुभूतिः स्याद्यथोक्ताधिकारिणो भवेदिति प्रथमवाक्यार्थेन सहभानूदयात्प्रभा भूयादिति द्वितीयवाक्यार्थस्यार्थिकोपमेयोपमानभावसत्वात्साधर्म्येण लक्षणसंगतिः। यथावा काव्यप्रकाशे–'देवीभावं गमिता परिवारपदं कथं भजत्येषा। न खलु परिभोगयोग्यं दैवतरूपाङ्कितं रत्नम्' इति। यथात्र लक्षणसमन्वयस्तथोक्त प्रदीपे—'अत्र परिवारपदत्वपरिभोगयोग्यत्वयोरनर्थान्तरत्वादुदाहरणत्वमित्येके। कथं भजति न खलु इत्यनयोरेकार्थतया तथात्वमित्यपरे' इति। यथावा साहित्यदर्पणे नैषधीयचरिते—'धन्यासि वैदर्भि

१ 'मुद्रेति प्रदीपपाठः'.

गुणैरुदारैर्यया समाकृष्यत नैषधोऽपि । इतः स्तुतिः का खलु चन्द्रिकाया यद्विधमप्युत्तरलीकरोति' । यथावा कुवलयानन्दे—'स्थिरा शक्तिर्गुणवतां खलबुद्ध्या न बाध्यते । रत्नदीपस्य हि शिखा वात्ययापि न नाश्यते' । तत्रैव—'तवामृतस्यन्दिनि पादपङ्कजे निवेशितात्मा कथमन्यदिच्छति । स्थितेऽरविन्दे मकरन्दनिर्भरे मधुव्रतो नेक्षुरसं समीक्षते' इति । यथावा रसगङ्गाधरे—'आपद्गतः खलु महाशयचक्रवर्ती विस्तारयत्यकृतपूर्वमुदारभावम् । कालागुरुर्दहनमध्यगतः समंताल्लोकोत्तरं परिमलं प्रकटीकरोति' । तत्रैव 'विश्वाभिरामगुणगौरवगुम्फितानां रोषोऽपि निर्मलधियां रमणीय एव । लोकंपृणैः परिमलैः परिपूरितस्य कालागुरोः कठिनतापि नितान्तरम्या' इति । यथावा मदीयनीतिशतपत्रे—'तृष्णयैवाखिला दोषास्तच्छित्त्यैवाखिला गुणाः । मोदाः सर्वे विद्ययैव शोकाः सर्वेऽप्यविद्यया' इति । अत्र सन्ति भवन्तीति पूर्वोत्तरार्धयोः क्रियाध्याहारेऽपि वस्तुप्रतिवस्तुभावापन्नसाधारणकर्मकवाक्यार्थयोरार्थिकौपम्यसत्वेन लक्षणसमन्वयः सुघट एवेति संक्षेपः । अथ वैधर्म्येणापि तामुदाहरति— **सत्सङ्गादेवेति** । यथावा कुवलयानन्दे—'विद्वानेव विजानाति विद्वज्जनपरिश्रमम् । नहि वन्ध्या विजानाति गुर्वीं प्रसववेदनाम्' इति । यथावा रसगङ्गाधरे—'वंशभवो गुणवानपि सङ्गविशेषेण पूज्यते पुरुषः । नहि तुम्बीफलविकलो वीणादण्डः प्रयाति महिमानम्' । तत्रैव । यथावा—'गीर्भिर्गुरूणां परुषाक्षराभिस्तिरस्कृता यान्ति नरा महत्त्वम् । अलब्धशाणोत्कषणा नृपाणां न जातु मौलौ मणयो वसन्ति' इति । यत्तु कुवलयानन्दोक्ते 'यदि सन्ति गुणाः पुंसां विकसन्त्येव ते स्वयम् । नहि कस्तूरिकाऽमोदः शपथेन विभाव्यते' इति द्वितीयवैधर्म्योदाहरणे रसगङ्गाधरकृद्भिः वैधर्म्योदाहरण हि 'प्रस्तुतधर्मिविशेषोपारूढार्थदार्ढ्याय स्वाक्षिप्तस्वव्यतिरेकसमानजातीयस्य धर्म्यन्तरारूढस्याप्रकृतार्थकथनम्'इति तल्लक्षणमुक्त्वा प्रकृते च यदि सन्ति तदा स्वयमेव प्रकाशन्त इत्यर्थस्य प्रस्तुतस्य व्यतिरेकस्त्वसन्त उपायान्तरेणापि न प्रकाशन्त इति । नह्यत्र द्वितीयार्धेन तत्सजातीयोऽर्थो निबध्यते । निबध्यते च स्वयं प्रकाशन्ते न परेणेत्यस्य प्रस्तुतस्यैव सजातीयः शपथेन न विभाव्यते किंतु स्वयमेवेति प्रकृतार्थानुरूपतयैव पर्यवसानादित्यादिना निरुक्तोदाहरणखण्डनमुक्तम् । तथा 'तवामृतस्यन्दिनि पादपङ्कजे' इत्यादिकुवलयानन्दीयोदाहरणान्तरेऽपि 'स्थितोऽरविन्दे मकरन्दनिर्भरे' इति चेत्क्रियते तदा नु रमणीयमित्यन्तग्रन्थेन दूषणमुक्तं, तदुभयमपि सत्यमेव । तथापि प्रथमपद्ये तावत् कश्चित्प्रतारकः परिहासको वा कंचित्सरलं प्रति शपथपूर्वकं मन्निकटे कस्तूरिका वर्तत इति वदन्नरे त्वन्निकटे कस्तूरिका नास्त्येव, कुतः । हिर्हेतौ । यस्माद्धेतोः कस्तूरिकाया अभावात्तदामोदोऽप्यसन् शपथाख्योपायान्तरेणापि नैवानुभाव्यतेऽन्यं प्रति ज्ञाप्यत इति केनचित्तटस्थेन प्रतिबोध्यत इति त्वदुक्तरीत्यैव वैधर्म्योदाहरणत्वं युक्तमेव । तस्मादेवंजातीयकस्य श्रीमदप्पय्यदीक्षितगूढाशयस्य त्वयैवानाकल-

**धत्ते शीलं सती गङ्गा बिभर्ति जगदुद्धृतिम्।**
**विद्या विनयमादत्ते कलयत्यब्जिनी श्रियम्॥ १६९॥**
**दृष्टान्तः प्रकृतेष्टोपमादेर्बिम्बादिभावतः।**
**साधुः पाति जगच्चन्द्रश्चकोरार्थेऽर्थितोऽत्र कैः॥ १७०॥**

नायत्कृतं तद्ग्रन्थखण्डनं अविडम्बनं तत्। 'तत्त्व किमपि काव्यानां जानाति विरलो भुवि। मार्मिकः को मरन्दानामन्तरेण मधुव्रतम्' इति त्वल्लिखितपद्यपात्रतां त्वय्येवादधाति। एवं 'तवामृतस्यन्दिनि पादपङ्कजे' इत्यादिद्वितीयोदाहरणदूषणनिराकरणमपि वक्तुः कवेर्भक्तिरसाविष्टचेतस्त्वलक्षणसमाधानेन तावकेनैव त्वयैव संपादनीयमिति तत्र निर्मत्सरैः सहृदयैर्मध्यस्थैरेव समाधेयमिति दिक्॥ १६८॥ इदानीं मालारूपामपि तृतीयां प्रतिवस्तूपमामुदाहरति—**धत्त इति।** सती शीलं सद्वृत्तं धत्ते। तथा गङ्गा जगदुद्धृतिं बिभर्ति। एवं विद्या विनयमादत्ते तद्वत् अब्जिनी श्रियं कलयतीति चतुर्णामप्याख्यातानां शब्दभेदेऽप्यर्थस्य सार्वदिकावलम्बनलक्षणस्यैक्याद्वस्तुप्रतिवस्तुभावापन्नसाधारणधर्ममूलकार्थबहुवाक्यार्थगतोपमानोपमेयभावेन मालारूपप्रतिवस्तूपमानत्वमत्र स्पष्टमेवेति भावः। इह प्रकृतायाः कस्याश्चित्पतिव्रताया एवोपमेयत्वं गङ्गादीनां तूपमानत्वमेवेति ज्ञेयम्। तेन तस्यां सदयत्वसदसद्विवेकित्वमुरुपत्वान्यपि क्रमात्सूच्यन्ते। यथावा रसगङ्गाधरे—'वहति विषधरान्पटीरजन्मा शिरसि मषीपटलं दधाति दीपः। विधुरपि दधतेतरां कलङ्कं पिशुनजनं खलु बिभ्रति क्षितीन्द्राः' इति॥ १६९॥ अथ प्रतिवस्तूपमाप्रतिपादनार्थिकौपम्यसाधर्म्यप्रसङ्गसगतं दृष्टान्तालकारं लक्षयति—**दृष्टान्त इत्यर्धेन।** प्रकृतः वस्तुतस्तस्येष्टोऽनुकूलः यः उपमादिरादिनासाधारणधर्मः तस्येत्यर्थः। विम्बादिभावतः। बिम्बप्रतिबिम्बभावादित्यर्थः। दृष्टान्तः दृष्टान्तालंकारो भवतीति शेषः। एवंच प्रकृतवाक्यार्थानुकूलोपमानोपमेयसाधारणधर्माणां बिम्बप्रतिबिम्बत्वं दृष्टान्तत्वमिति तत्सामान्यलक्षणं फलितम्। तदुक्तं रसगङ्गाधरे—'प्रकृतवाक्यार्थघटकानामुपमानादीनां साधारणधर्मस्य च बिम्बप्रतिबिम्बभावे दृष्टान्तः' इति। इदमेव प्रतिवस्तूपमायाः स्वस्य भेदकयोयमत्र बिम्बप्रतिबिम्बभावः। एतदप्युक्तं तत्रैव। अस्य चालकारस्य प्रतिवस्तूपमया सह भेदकमेतदेव तस्यां धर्मो न प्रतिबिम्बितः किंतु शुद्धसामान्यात्मनैव स्थितः। इह तु प्रतिबिम्बित इति। तमुदाहरति—**साधुरित्यर्धेनैव।** साधुर्भगवद्भक्तः। जगद्विश्वं पाति प्रतिक्षणमीश्वरं प्रति वक्ष्यमाणलक्षणप्रार्थनया परितुष्टपरमेश्वरप्रसादद्वारा परिरक्षतीत्यर्थः। तथाचोक्तं भागवते श्रीनृसिंहं प्रति प्रह्लादवचनम्—'स्वस्त्यस्तु विश्वस्य खलः प्रसीदतां ध्यायन्तु भूतानि शिवं मिथो धिया। मनश्च भव्यं भजतामधोक्षजे आविश्यतां नो मतिरप्यहैतुकी' इति। ननु ब्रह्मविद्यया कृतकृत्योप्ययं किमित्येवमीश्वरप्रार्थनमहरहरनुतिष्ठतीत्याशङ्का स्वभावादेवेति समादधंस्तत्र दृष्टान्तं स्पष्टयति—**चन्द्र इत्यादिशेषेण।**

**सद्गुरो त्वामृते त्राता को नः संकटकोटितः ।**
**नहि पद्माकरं फुल्लीकर्तुं सूर्येतरः क्षमः ॥ १७१ ॥**
**अभेद आर्थ एवौपम्यावसायी निदर्शना ।**
**सा वाक्यार्थपदार्थत्वभेदेन द्विविधेष्यते ॥ १७२ ॥**

अत्र लोके । चन्द्रः चकोरार्थं चकोराणां स्वोदयप्रपश्चितचन्द्रिकास्वादनजनिततृप्तिलक्षणपुरुषार्थविषय इत्यर्थः । कैः पुरुषैरर्थितः प्रार्थितो भवति । नैव कैश्चिदप्यभ्यर्थितः । किंतु स्वभावादेव यथा चकोरान्सतर्पयति तथा प्रकृतसाधुरपि स्वभावादेव निरुक्तरीत्या विश्वं पालयतीत्याशयः । एवंचेहार्थिकोपमानीभूतचन्द्रचकोरतत्संतर्पणैस्तादृशोपमेयीभूतानां साधुजगत्परिपालनानां बिम्बप्रतिबिम्बभावात्प्रकृतवाक्यार्थानुकूल्याच्च लक्षणसंगतिः । यथावा काव्यप्रकाशे-'त्वयि दृष्ट एव तस्या निर्वाति मनो मनोभवज्वलितम् । आलोके हि हिमांशोर्विकसति कुमुदं कुमुद्वत्याः' इति । यथावा साहित्यदर्पणे वासवदत्तायाम्-'अविदितगुणापि सत्कविभणितिः कर्णेषु वमति मधुधाराम् । अनधिगतपरिमलापि हि हरति दृशं मालतीमाला' इति । यथावा कुवलयानन्दे अनर्घराघवे-'देवीं वाचमुपासते हि बहवः सारं तु सारस्वतं जानीते नितरामसौ गुरुकुलक्लिष्टो मुरारिः कविः । अब्धिर्लङ्घित एव वानरभटैः किं त्वस्य गम्भीरतामापातालनिमग्नपीवरवपुर्जानाति मन्थाचलः' इति । यथावा रसगङ्गाधरे-'सत्पूरुषः खलु हिताचरणैरमन्दमानन्दयत्यखिललोकमनुक्त एव । आराधितः कथय केन करैरुदारैरिन्दुर्विकासयति कैरविणीकुलानि' इति ॥ १७० ॥ एवं साधर्म्येणोदाहृत्य वैधर्म्येणापीममुदाहरति-**सद्गुरो इति** । अक्षरार्थस्तु सरल एव । अत्र संकटकोटेः सकाशात्त्राणस्य स्वप्रतियोगिकसद्गुरुकर्तृकस्य स्वकर्मकस्य परिरक्षणस्य सूर्येतरासाध्यपद्माकरफुल्लीकरणस्य च वैधर्म्येणैव बिम्बप्रतिबिम्बभावः । यथावा साहित्यदर्पणे-'त्वयि दृष्टे कुरङ्गाक्ष्याः स्रंसते मदनव्यथा । दृष्टानुदयभाजीन्दौ ग्लानिः कुमुदसंहतेः ।' यथावा कुवलयानन्दे-'कृतं च गर्वाभिमुखं मनस्त्वया किमन्यदेव निहताश्च नो द्विषः । तमांसि तिष्ठन्ति हि तावदंशुमान्न यावदायात्युदयाद्रिमौलिताम्' इति । यथावा रसगङ्गाधरे'तापत्रयं हृदि नृणां खलु तावदेव यावन्न ते चलति देव कृपाकटाक्षः । प्राचीललाटपरिचुम्बिनि भानुबिम्बे पङ्केरुहोदरगतानि कुतस्तमांसि' इति । यथावा मदीयायामद्वैतामृतमञ्जर्याम्—'अनुभूतचित्स्वरूपानन्दोऽकैवोपदेशवाक्फलति । नहि दर्शयितुं क्षमते जन्मान्धश्चन्द्रमन्येभ्यः' इति ॥१७१॥ एवं दृष्टान्तनिरूपणप्रयोजकप्रकृतेष्टोपमादिबिम्बप्रतिबिम्बभावप्रसङ्गसंगतां निदर्शनां सामान्यतो लक्षयति-**अभेद इति** । अत्र प्रकृतोपात्तार्थयोरित्यार्थिकम् । **औपम्येति** । औपम्य उपमेयोपमानभावः तत्र अवसायः पर्यवसानं यस्यास्तीति तथेत्यर्थः । एतादृशः आर्थः अर्थसंपन्नः नतु शब्दप्रतिपादितः ईदृश अभेद एव निदर्शनास्तीत्यन्वयः । एवंच प्रकृतोपात्तार्थयोरौपम्यपर्यवसायित्वे सत्यार्थिकाभेदत्वनिदर्श-

**सर्वत्र भान्तमानन्दं हित्वा कान्तारता वयम् ।**
**करस्थममृतं त्यक्त्वा लिहामो निम्बमृत्तिकाम् ॥ १७२ ॥**

नासामान्यक्षणं फलति । तथाचोक्तं रसगङ्गाधरे—'उपात्तयोरर्थयोरार्थाभेद औपम्यपर्यवसायी निदर्शना' इति । तद्भेदावाह—**सेत्यर्धेनैव** । एका वाक्यार्थनिदर्शना अपरा पदार्थनिदर्शनेति बोध्यम् ॥ १७२ ॥ तत्राद्यामुदाहरति—**सर्वत्रेति** । वयं सर्वत्र यावद्देशकालवस्त्ववच्छेदेनेत्यर्थः । भान्तं स्वप्रकाशत्वेन परिस्फूर्यमाणतया सकलस्वारोपितद्वैतसत्ताप्रकाशप्रदातृतया च निरन्तरं प्रकाशमानमपीत्यर्थः । एतादृशमानन्दं अद्वैतसच्चिदानन्दमपीति यावत् । हित्वा हि विषयास्वादसंस्कारप्राबल्यादनादृत्येत्यर्थः । **कान्तेति** । रमणीरसास्वादमोदलम्पटा इत्येतत् करस्थमिति हस्ततलप्राप्तमपीत्यर्थः । अमृतं पीयूषं त्यक्त्वा विहाय । निम्बेति पारिभद्रतलमृदमित्यर्थः । लिहाम आस्वादयाम इति संबन्धः । अत्र पूर्वोत्तरार्धगतत्वेनोपात्तयोर्वाक्यार्थयोरौपम्यपर्यवसायी आर्थिक एव भेदो ननु शाब्दिक इति निदर्शनाया वाक्यार्थगाया लक्षणसमन्वयः स्पष्ट एवेति भावः । यथावा साहित्यदर्पणे—'जन्मैव व्यर्थतां नीतं भवभोगप्रलोभिना । काचमूल्येन विक्रीतो हन्त चिन्तामणिर्मया' इति । यथावा कुवलयानन्दे–'अरण्यरुदितं कृतं शवशरीरमुद्वर्तितं स्थलेऽब्जमवरोपितं सुचिरमूषरे वर्षितम् । श्वपुच्छमवनामितं बधिरकर्णजापः कृतो धृतोऽन्धमुखदर्पणो यदबुधो जनः सेवितः' इति । नन्विदं कुवलयानन्दीयनिदर्शनोदाहरणमनुचितं श्रीमदप्पय्यदीक्षितैरलंकारसर्वस्वकारीत्यैव लिखितत्वात्तस्य तु रसगङ्गाधरकृद्भिरीदृशस्थले वाक्यार्थरूपकमेव स्वीकुर्वद्भिः खण्डितत्वात् । तद्यथा रूपकप्रकरणे तावत् एवं पदार्थरूपकं लेशतो निरूपितम् । एवं वाक्यार्थे विषये वाक्यार्थान्तरस्यारोपे वाक्यार्थरूपकम् । यथाहि विशिष्टोपमायां विशेषणानामुपमानोपमेयभाव आर्थस्तथात्रापि वाक्यार्थघटकानां पदार्थानां रूपकमार्थमवसेयम् । 'आत्मनोऽस्य तपोदानैर्निर्मलीकरणं हि यत् । क्षालनं भास्करस्येदं सरसैः सलिलोत्करैः' इत्यादिप्रतिपाद्य निदर्शनाप्रकरणेऽत्र । अलंकारसर्वस्वकारस्तु 'त्वत्पादनखरत्नानां यदालक्तकमार्जनम् । इदं श्रीखण्डलेपेन पाण्डुरीकरणं विधोः' इति पद्यं वाक्यार्थनिदर्शनायामुदाजहार । आह च यत्र तु प्रकृतवाक्यार्थे वाक्यार्थान्तरमारोप्यते सामानाधिकरण्येन तत्र संबन्धानुपपत्तिमूला निदर्शनैव युक्तेति । तन्न । वाक्यार्थरूपकस्य दत्तजलाञ्जलित्वापत्तेः । नचेष्टापत्तिः । वाक्यार्थनिदर्शनैव निर्वास्यतां स्वीक्रियतां च वाक्यार्थरूपकमिति पर्यनुयोगस्यापि तुल्यत्वात् । अस्मदुक्तोदाहरणे वाक्यार्थनिदर्शनायाः सावकाशत्वादित्याद्युक्तम् । तदुदाहरणं यथा—'त्वामन्तरात्मनि लसन्तमनन्तमज्ञास्तीर्थेषु हन्त मदनान्तक शोधयन्तः । विस्मृत्य कण्ठतटमध्यपरिस्फुरन्तं चिन्तामणिं क्षितिरजःसु गवेषयन्ति' । तत्रैव यथावा—'अन्यैः समानममरैर्जगदन्तरात्मन्ये चन्द्रशेखर वदन्ति भवन्तमज्ञाः । ते किं न हन्त तुलयन्ति नभो निरन्तं वातायनोदरगतै

**सद्गुरो त्वदपाङ्गोऽद्य नः सुधाब्धितरङ्गकः ।**
**सदादिबोधनं चेत्स्यात्क्रियया तन्निदर्शना ॥ १७४ ॥**
**पात्रे वाक्सफलेत्यूचुः सुरभावेव कोकिलाः ।**
**हारस्त्रुटति संमर्दाद्गुरुलक्ष्मी पतेदिति ॥ १७५ ॥**

विवरान्तरालैः' इति । अतएव वाक्यार्थनिदर्शनायां काव्यप्रकाशकृतोदाहृतम्—'क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः । तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम्' इति । एवं तर्हि मल्लिखितनिरुक्तकुवलयानन्दोदाहरणेऽरण्येत्यादिरूपे यदबुधो जनः सेवित इति यच्छब्दो हेत्वर्थ एवास्तु । तथाचात्रापि पद्ये आर्थिकाभेदान्नि'प्रत्यूहमेव निदर्शनाया वाक्यार्थगाया उदाहरणत्वमिति दिक् । अतएव तत्राग्रे वाक्यार्थनिदर्शनाऽन्यथैवोदाहृता । 'त्वयि सति शिवदातर्यस्मदभ्यर्थितानामितरमनुसरन्तो दर्शयन्तोऽर्थिमुद्राम् । चरमचरणघातैर्दुर्ग्रहं दोग्धुकामाः करभमनुसरामः कामधेनौ स्थितायाम्' । तथा 'राजसेवा मनुष्याणामसिधारावलेहनम् । पञ्चाननपरिष्वङ्गो व्यालीवदनचुम्बनम्' इति । विस्तरस्तु तत्र तट्टीकायामलंकारचन्द्रिकायां चेक्ष्य इति ॥ १७३ ॥ एवं वाक्यार्थनिदर्शनामुदाहृत्याथ क्रमप्राप्तां पदार्थनिदर्शनामप्युदाहरति—**सद्गुरो** इत्यर्धेन । अये श्रीमद्देशिकेश्वर, अद्य मृगजलवन्मिथ्यात्वेनावभासमानहृदयदशायामपीत्यर्थः । त्वदपाङ्गः भावत्कानुकम्पाकटाक्षः नः अस्माकं सुधेति अमृतसमुद्रतरङ्ग एव भवतीत्यर्थः । यथावा कुवलयानन्दे—'पदार्थवृत्तिमप्येके वदन्त्यन्ये निदर्शनाम् । त्वन्नेत्रयुगुलं धत्ते लीलां नीलाम्बुजन्मनोः' इति । यथावा रसगङ्गाधरे—'अगण्यैरिन्द्राद्यैरपि परमपुण्यैः परिचितो जगज्जन्मस्थानप्रलयरचनाशिल्पनिपुणः । प्रसर्पन्पीयूषाम्बुधिलहरिलीलाविलसितो दृगन्तस्तेऽमन्दं मम कलुषवृन्दं दलयतु' । अत्र दृगन्ताम्बुधिलहर्योराश्रयभेदाद्भिन्नयोरपि सादृश्यमूलस्तादूप्याभिमानः । आरोपो वा दृगन्ते लहरिलीलायाः । यथावा—'पाणौ कृतः पाणिरिलामुतायाः सस्वेदकम्पो रघुनन्दनेन । हिमाम्बुमन्दानिलविह्वलस्य प्रभातपद्मस्य बभार शोभाम्'इति । अस्यां चोपमानोपमेययोरार्थाभेदप्रतिपत्तिरतः पदार्थनिदर्शनोच्यते । बिम्बप्रतिबिम्बभाववस्तूपमानोपमेययोः सविशेषणे भवत्यन्यथा तु नेति विवेक इत्यपि तत्रैवाग्र उक्तम् । तेन मामके प्रकृतोदाहरणे ह्यमृतसमुद्रतरङ्गस्योपमानस्योपमेयेन श्रीगुर्वपाङ्गेन सहाभेदप्रतिपत्तिरार्थैवेति लक्षणसंगतिः । अथ बोधननिदर्शनां लक्षयति—**सदादीत्यर्धेनैव** । यदि सदादिबोधनं साध्वसाध्वर्थयोः क्रमादुपादानार्थं हानार्थं च बोधनमन्यान्प्रत्युपदेशनं क्रियया अप्रस्तुतकर्तृनिष्ठव्यापृत्येत्यर्थः । स्याच्चेत्तर्हि तन्निदर्शना बोधननिदर्शना भवतीति योजना ॥ १७४ ॥ द्विविधामपि तां क्रमेण पूर्वोत्तरार्धाभ्यामुदाहरति—**पात्र इत्यादिना** । पात्रे उपदेशयोग्यतापन्नेऽधिकार्येकस्थल इत्यर्थः । वाक् हितोपदेशवाणीति यावत् । सफला भवति नत्वन्यत्रेति लोकान्बोधयितुमेव कोकिलाः पिकाः सुरभौ वसन्ते सत्येव ऊचुः कलालापमकु-

**व्यतिरेको गुणैः श्लाघोपमेय उपमानतः ।**
**द्वैतघाचार्य ते साम्यं परोक्षः केश आमुयात् ॥ १७६ ॥**

र्वन्नित्यन्वयः । इदं हि सदर्थोपदेशनिदर्शनाया एवोदाहरणम् । हार इति मुक्तावलीविशेषः । गुर्वीति गुरुं उल्लङ्घयति तच्छील इत्यर्थः । पतेदवश्यमधःपातं प्राप्नुयादेवेति सूचयन्सन् संमर्दात् । दंपत्योः परस्परं गाढालिङ्गनसंघर्षाद्धेतोरित्यर्थः । त्रुटति विच्छिद्यत इति संबन्धः । सहि गुरुपदशक्यपृथुलयोः कुचयोरुपरिस्थित्वा तदतिक्रमणेन मध्यपर्यन्तगत्या च गुरूल्लङ्घनशीलो भवाम्यतः संमर्दादुक्तरूपाद्विच्छिद्य पताम्येव तद्वदन्योऽपि कश्चिद्गुरुशब्दवाच्याचार्यादिपूज्योल्लङ्घनं करिष्यति चेद्विच्छिद्याधः पतिष्यत्येवेति स्वासाधुफलकक्रियया तद्वर्जनार्थमस्मदादीन्प्रति बोधयत्येवेति भावः । इदं तावद्वानार्थमसदर्थोपदेशनिदर्शनाया अप्युदाहरणम् । यथावा काव्यप्रकाशे—'चूडामणिपदे धत्ते यो देवं रविमागतम् । सतां कार्यातिथेयीति बोधयन् गृहमेधिनः' इति । यच्छब्दात्स उदयाचले ज्ञेय इत्यर्थः । यथावा साहित्यदर्पणे—'कोत्र भूमिवलये जनान्मुधा तापयन्सुचिरमेति संपदम् । वेदयन्निति दिनेन भानुमानाससार चरमाचलं ततः' इति । यथावा कुवलयानन्दे—'अपराम्बोधन प्राहुः क्रियया सत्सदर्थयोः । नश्येद्राजविरोधीति क्षीणं चन्द्रोदये तमः । उदयन्नेव सविता पद्मेष्वर्पयति श्रियम् । विभावयन्समृद्धीनां फलं सुहृदनुग्रहम्' इति । यथावा रसगङ्गाधरे—'उन्नत पदमवाप्य यो लघुलीलयैव स पतेदिति ध्रुवम् । शैलशेखरगतः पृषत्कणश्चारुमारुतधुतः पतत्यधः' इति मंमटभट्टपद्यमुदाहृत्य 'हालाहलं खलु पिपासति कौतुकेन कालानलं परिचुचुम्बिषति प्रकामम् । व्यालाधिपं च यतते परिरब्धुमद्धा यो दुर्जनं वशयितुं कुरुते मनीषाम्' यथावा । 'व्योमनि बीजाकुरुते चित्रं निर्माति सुन्दरं पवने । रचयति रेखाः सलिले यस्तु खले चरति सत्कारम् ।' बीजाकरण बीजप्रक्षेपपूर्वकं कर्षणमिति । 'यान्ती गुरुजनैः साकं स्मयमानाननाम्बुजा । तिर्यग्ग्रीवं यदद्राक्षीत्तन्निष्पत्राकरोज्जगत्' निष्पत्राकरणं सपुङ्खशरस्य परपार्श्वे निर्गमनात्पत्रराहित्यकरणमिति । विस्तरोऽत्र तत्रैव ज्ञेयः ॥ १७५ ॥ एवं निरूपितनिदर्शनालंकारलक्षणनिविष्टौपम्यपर्यवसायित्वप्रसङ्गसंगतमुपमानापेक्षयोपमेयाधिक्यपर्यवसायिनं व्यतिरेकं लक्षयति—**व्यतिरेक इति** । उपमानतः उपमानापेक्षया उपमेये वर्ण्यत्वेन प्रकृते वस्तुनीत्यर्थः । गुणैः तत्तदुपयुक्तधर्मैः श्लाघा आतिशय्यवर्णना व्यतिरेक एतन्नामकोऽलंकारो भवतीति संबन्धः । तदुक्तं रसगङ्गाधरे—'उपमानादुपमेयस्य गुणविशेषवत्त्वेनोत्कर्षो व्यतिरेकः' इति । प्रतीपादिव्युदासाय तृतीयान्तं वैधर्म्यपरमिति च । तदुदाहरति—**द्वैतेति** । द्वैतं हन्तीति तत्संबुद्धावित्यर्थः । अये ब्रह्मात्मैक्यप्रबोधद्वारा दृश्यनाशकेति यावत् । एतेन वक्ष्यमाणार्थे हेतुर्द्योतितः । एतादृश आचार्य वेदविद्यादिदेशिकेश्वर, ते तव साम्यं तौल्यम् । **परोक्षः** स्वभावादेव स्वयमपि यः परोक्षः पश्चात्तत्रापरोक्षाद्वैतब्रह्मात्मैक्यविद्यायास्तत्त्वमस्यादिमहावा-

न्यतदर्थविचारोपदेशस्य साक्षाज्जनकत्वाभावः कैमुत्यसिद्ध एवेति भावः। एता-
शः अतएव ईशः परमेश्वरः क आप्नुयात् । कशब्द आक्षेपे। नैव प्राप्नुयादि-
त्यन्वयः। अत्रोपमानात्परोक्षादीश्वरादुपमेये श्रीगुरौ अपरोक्षत्वापरोक्षज्ञानदातृ-
त्वादिगुणैरुत्कटत्ववर्णनसत्वाल्लक्षणसंगतिः। यथावा काव्यप्रकाशादौ—'क्षीणः क्षी-
णोऽपि शशी भूयोभूयोऽभिवर्धते नितराम्। विरम प्रसीद सुन्दरि यौवनमनिवर्ति
यातं तु' इति। अत्रोपमानीभूतात् भूयः क्षीणत्वेपि पुनः पुनरभिवर्धमानत्वेन सुल-
भशोभाच्छशिनः सकाशादुपमेये यौवनेऽनिवर्तित्वेन दुर्लभत्वध्वननादाधिक्यस-
त्वेन लक्षणसमन्वयः। एवमेव वक्ष्यमाणोदाहरणेष्वपि तत्रतत्र बोध्यम्। यथावा
तत्रैव—'इयं सुनयना दासीकृततामरसश्रिया। आननेनाकलङ्केन निन्दतीन्दुं कलं-
ङ्किनम्' इति। यथावा कुवलयानन्दे—'पल्लवतः कल्पतरोरेष विशेषः करस्य ते
वीर। भूषयति कर्णमेकः परस्तु कर्णं तिरस्कुरुते' इति। एवमयमुपमेयाधिक्यप-
र्यवसायी व्यतिरेक इति ग्रन्थेन 'व्यतिरेको विशेषश्चेदुपमानोपमेययोः। शैला इवो-
न्नताः सन्तः किंतु प्रकृतिकोमलाः' इति स्वकृतकारिकानुगुणं स्वसंमतमुपमेया-
धिक्यपर्यवसायिनं व्यतिरेकमुदाहृत्याग्रे अलंकारसर्वस्वकारादिमतरीत्यैव यथाश्रु-
तग्राहिणां तावदुपमेयन्यूनत्वतत्साम्यप्रतिपादकं वस्तुतस्तु प्रेक्षावतां दृशोक्तस्वसं-
मतोपमयोत्कर्षमात्रपर्यवसायि व्यतिरेकोदाहरणद्वयमुक्तम्। तद्यथा—'रक्तस्त्वं
नवपल्लवैरहमपि श्लाघ्यैः प्रियाया गुणैस्त्वामायान्ति शिलीमुखाः स्मरधनुर्मुक्ताः
सखे मामपि। कान्तापादतलाहतिस्तव मुदे तद्वन्ममाप्यावयोः सर्वं तुल्यमशोक
केवलमहं धात्रा सशोकः कृतः' इति। अत्र यथाश्रुते ह्युपमेयन्यूनत्वं स्पष्ट-
मेव तथापि सकृदेव कान्तापादतलाहतिस्तव मुदे संपन्ना तावतैव तव लोके ह्य-
शोकत्वेन ख्यातिरभूत्परंतु तदुत्तरं तदालिङ्गनादि बहिःसंभोगस्यापि तवाभाव एव
सर्वथा वर्तते किं पुनरन्तःसंभोगे वक्तव्यम्। एवं मम तु नास्त्येव किंतु प्राग्य-
थेच्छं सबाह्याभ्यन्तरसंभोग एव कान्तायाश्चिरकालं समभूदिदानीं तु किंचित्कालं
दैवप्रातिकूल्येन तद्वियोगेपि भाविभूरितद्योगसंभावनसत्वेऽप्यहं रसज्ञचक्रवर्तित्वेन
तावतैव शोचामि त्वं तु तदुभयाभावेऽपि क्षणिकतत्पादस्पर्शानुभूतविपुलसुखत्वे-
नाशोकत्वख्यातिमात्रेणैव जडत्वेन शोकशतसंभावनायामपि न शोचसीति त्वय्येव
न्यूनत्वं मदपेक्षयेति सूक्ष्मतमविचारे तूपमेयाधिक्यमेव पर्यवस्यति सहृदयधौरे-
याणां तद्वत् चरमोदाहरणमपि। यथावा—'दृढतरनिबद्धमुष्टेः कोशनिषण्णस्य सह-
जमलिनस्य। कृपणस्य कृपाणस्य च केवलमाकारतो भेदः' इति। अत्रापि न
वास्तविकमनुभयपर्यवसायित्वं किंतु यथाश्रुतग्राहिणः कस्यचिदलंकारसर्वस्वकारा-
दिवन्मत एव तत्। वस्तुतस्तूपमेयाधिक्यपर्यवसाय्येवेदमपि। तथाहि अत्रोपमा-
नीभूते कृपाणे तावत्कदाचिद्रणाङ्गणे महावीरकरगतत्वेन करिवरदन्तदलनप्रसङ्गा-
घाते मुष्टिविनिर्मोकः संभाव्यत एव परंतूपमेये कृपणे प्राणान्तेपि वितरणप्रावण्य-
लक्षणोऽसौ स्वप्नेऽपि नैव संभाव्यत इति तस्यैवोत्कर्षः। एवं कृपाणः कदाचिद-

णादिप्रसङ्गे कोशवियुक्तोऽपि दृष्ट एव कृपणस्तु मरणोत्तरमपि ब्रह्मग्रहत्वेन कोशैकनिषण्ण इति तत्राप्युपमेयाधिक्यमेव। तद्वत्कृपाणस्य भस्मस्नेहादिभिरुज्ज्वलीकरणात्कदाचिन्नैर्मल्यमप्युपलभ्यत एव कृपणस्य तु न क्वचिदपि तद्वस्त्रादिक्षालने रजकादिदेयवित्तव्ययभियेति। तस्मात्किं कृपणस्य कृपाणस्य च केवलं आकारतः आकृतिवशादेव पक्षे दीर्घाकारयोगादेव भेदः किंतु भूयान्भेदः प्रोक्तरीत्येत्युपमेयोत्कर्ष एव। एतेन यद्रसगङ्गाधरे यदपि कुवलयानन्दकृता अलंकारसर्वस्वकारार्थानुवादकेन न्यूनतायामुदाहृतम् ' रक्तस्त्वमित्यादि सशोकत्वेन शोकाधिक्यादुपमेयापकर्षः पर्यवस्यतीति ' तदपि चिन्त्यम्। रत्याद्यनुकूलतया कुतश्चिदङ्गाद्भूषणापसारणं यथा शोभाविशेषाय भवत्येवं प्रकृते उपमालंकारदूरीकरणमात्रमेव रसानुगुणतया रमणीयं च व्यतिरेक इत्यादिदूषणमुक्तं तत्प्रत्युक्तम्। निरुक्तरीत्योपमेयोत्कर्षाद्रसातिपरिपोषाच्च। एवं तत्रैव च यदुक्तम्। यदपि कुवलयानन्दे अनुभयपर्यवसायिनो व्यतिरेकस्योदाहरणमुक्तं दृढतरेत्यादि तत्र निपुणं निरीक्षितमायुष्मता। तथाहि। किमत्रोपमानादुत्कर्षरूपो व्यतिरेकोऽनुभयपर्यवसायी आहोस्वित्सर्वस्वकाराद्युक्तदिशापकर्षरूपः। नाद्यः। उत्कर्षप्रयोजकधर्मस्यात्रानुपस्थितेः। नच श्लेषेण दीर्घाक्षरस्योपस्थितिरस्त्येवेति वाच्यम्। तस्योपमानवृत्तित्वेनोपमेयानुत्कर्षकत्वात्। अर्थान्तरेणाकृतिरूपेण सह श्लेषमूलकाभेदाध्यवसायेन साधारणीकरणाच्च। अन्यथा श्लेषमूलकोपमोच्छेदापत्तेः। चन्द्रबिम्बमिव नगर सकलङ्कमित्यादावपि कलङ्कसहितत्वकलासाकल्ययोर्वस्तुतो वैधर्म्यरूपत्वात्। नच सकलङ्कमित्यत्रोपमायामेककवेर्निर्भरः। प्रकृते तु भेदशब्दोक्त्या वैलक्षण्ये स इति भ्रमितव्यम्। यद्यत्रोपमाविघटनरूपो व्यतिरेको निर्भरसहः स्यादाकारशब्दश्लेषोऽनर्थकः स्यात्। कृपणस्य कृपाणस्य भेदो दीर्घाक्षरादेवेत्येव ब्रूयात्। नह्यत्र व्यतिरेके श्लेषोऽनुकूलः प्रत्युत प्रतिकूल एव। उपमायां पुनरनुकूलः प्रतिकूलस्य दीर्घाक्षररूपवैधर्म्यस्य साधारणीकरणात्। आकृतिभेदस्य चोपमानोपमेययोरपि सत्त्वात्। एवं हि कवेराशयो यत्कृपणकृपाणयोस्तुल्यतैव गाढतरेत्यादिविशेषणसाम्यात्। अक्षरभेदस्त्वाकारभेदन्वादविरुद्ध एवेति सहृदयैराकलनीयम्। न द्वितीयः। तस्योक्तिमात्रेणाप्यसंगतेः। अहृद्यत्वाच्च। तस्मादत्र गम्योपमैव सुप्रतिष्ठितेत्यास्तां कूटकार्षापणोद्घाटनमिति तदपि निरुक्ततत्पदतात्पर्यनिरूपणेनैव परास्तम्। यद्युक्तरीत्या दृढतरेत्यादिविशेषणेषु व्यतिरेकसंभवो न स्यात्तदा स्यादेवात्र गम्योपमापि। तस्य तु स्फुटमेव प्रदर्शितत्वादर्थपरिपोषस्य मदुक्तरीत्योपमेयोत्कर्षाधायकव्यतिरेकपक्षे भूयस्त्वमुत गम्योपमापक्ष इति ध्वनिधुरंधरैर्विबुधवरैरेवापक्षपातैः सशपथं वक्तव्यत्वाच्च। तस्मात् श्रीमदप्पय्यदीक्षितसारस्यानवबोधनिबन्धनमेवोक्तखण्डनविडम्बनमिति दिक्। यथावा गोवर्धनसप्तशत्याम्—'गौरीपतेर्गरीयो गरलं गत्वा गलेजीर्णम्। जीर्यति कर्णे महतां दुर्वादो नाल्पमपि विशति' इति। अत्र महतामिति बहुवचनं नाल्पमपीत्यादिना सूचितोपमेयोत्कर्षरूपव्यति-

**सहोक्तिः स्याद्गुणादित्वावच्छिन्नोऽस्यार्थसंश्रयः ।**
**सहोरोजयुगेनैव मुग्धाया ऐधत स्मरः ॥ १७७॥**
**विनार्थस्य तु संबन्धो विनोक्तिश्चारुतादिकृत् ।**
**सत्यौद्धत्यं विना विद्याश्रीरश्रीः सद्वयं विना ॥ १७८ ॥**

ेकध्वनितातिपूज्यत्वसूचनार्थमेव । यथावा रसगङ्गाधरे—'अनिशं नयनाभिरामया रमया संमदिनो मुखस्य ते । निशि निःसरदिन्दिरं कथं तुलयामः कलयापि पङ्कजम्' इति । तत्रैव । यथावा—'कटु जल्पति कश्चिदल्पवेदी यदि चेदीशमत्र किं विदध्मः । कथमिन्दुरिवाननं त्वदीयं सकलङ्कः स कलङ्कहीनमेतत्' इति । यथावा—'कतिपयदिवसविलासं नित्यमुखासङ्गमङ्गलसवित्री । खर्वयति सर्वासं गीर्वाणधुनीतटस्थितिर्नितराम्' । किंच—'महेन्द्रतुल्यं कवयो भवन्तं वदन्तु किं तानिह वारयामः । भवान्सहस्रैः समुपास्यमानः कथं समानस्त्रिदशाधिपेन' । अपिच–'निशाकरादालि कलङ्कपङ्किलाद्गुणाधिकं निर्मलमाननं ते । अनल्पमाधुर्यविरोधिरादिमा गिरो धरो गुम्फरसाः कवीनाम्' इति ॥ १७६ ॥

एवं व्यतिरेकालंकारं निरूप्योपमेय उपमानापेक्षया गुणाधिक्यसाहित्यलक्षणतत्स्वरूपघटनस्मृतां सहोक्तिं लक्षयति—**सहोक्तिरित्यर्धेन** । अस्य वक्ष्यमाणत्वेन बुद्धिस्थस्य सहपदार्थस्येत्यर्थः । **गुणादीति** । आदिना प्रधानम् । तथाच गुणप्रधानभावविशिष्ट इत्यर्थः । **अर्थेति** । एतादृशः पदार्थयोः सुन्दरः संबन्धः इत्येतत् सहोक्तिः स्यादित्यन्वयः । एवंच सहशब्दार्थस्य गुणप्रधानभावविशिष्टः पदार्थयोः सुन्दरः संबन्ध एव सहोक्तिरिति तल्लक्षणं फलति । अत्र सार्धं साकं सममिति सहशब्दपर्यायसंग्रहार्थमर्थेति । एवं पुत्रेण सहागतः पितेति लोकवाक्येऽतिप्रसङ्गभङ्गार्थं सौन्दर्यावबोधकं सपदं मूल इति ज्ञेयम् । तदुक्तं रसगङ्गाधरे—'गुणप्रधानभावावच्छिन्नसहार्थसंबन्धः सहोक्तिः' इति । तामुदाहरति—**सहेत्यर्धेनैव** । मुग्धायाः नवोढायाः । उरोजेति । स्तनद्वयेन सहैवेति यावत् । स्मरः कामः मुग्धाया इत्यत्रापि देहलीदीपन्यायेन संबध्यते । ऐधत ववृध इति संबन्धः । यथावा सरस्वतीकण्ठाभरणे—'कोकिलालापमधुराः सुगन्धिवनवायवः । यान्ति सार्धं जनानन्दैर्वृद्धिं सुरभिवासराः' इति । इयं मालारूपापि । यथा साहित्यदर्पणे—'सह कुमुदकदम्बैः काममुल्लासयन्तः सह घनतिमिरौघैर्धैर्यमुत्सादयन्तः । सह सरसिजषण्डैः स्वान्तमामीलयन्तः प्रतिदिशममृतांशोरंशवः संचरन्ति' इति । यथा रसगङ्गाधरे—'मान्थर्यमाप गमनं सह शैशवेन रक्तं सहैव मनसाऽधरबिम्बमासीत् । किंचाभवन्मृगकिशोरदृशो नितम्बः सर्वाधिको गुरुरयं सह मन्मथेन' । तत्रैव यथावा—'उन्मूलितः सह बलेन बलाद्बलारेरुत्थापितो बलभृतां सह विस्मयेन । नीलातपत्रमणिदण्डरुचा सहैव पाणौ धृतो गिरिधरेण गिरिः पुनातु' । विस्तरस्तु तत्रैव ज्ञेय इति संक्षेपः ॥ १७७ ॥ एवं संबन्धविशेषरूपसहोक्तिप्रसक्तां विनोक्तिं लक्षयति—**विनेति** ।

**यत्र प्रस्तुतधर्मिस्थः साधारणविशेषणैः ।**
**व्यवहारोऽतथा भाति सा समासोक्तिरुच्यते ॥ १७९ ॥**

आदिना अचारुता । एवं संबन्धे रम्यत्वं प्रागवदत्रापि बोध्यम् । तेन 'जल विना मरुर्दुष्टो मूर्खो विद्यां विनाऽधमः' इत्यादौ मरुमूर्खादिपदार्थेषु स्वरूपत एव विधीयमानस्य दौष्टयाधायकस्य जलाद्यभावलक्षणस्य विनार्थसंबन्धस्य निसर्गसिद्धत्वेन पौनरुक्त्याधायकत्वरूपारम्यत्वात्तन्निरासः । एवमर्थपदे ऋतेअन्तराप्रभृतिविनाशब्दपर्यायाणां संग्रहः । द्विविधामपि तां क्रमेणोदाहरति—**सतीत्या**दिपादाभ्याम् । औद्धत्यं विना विद्या सती तथा श्रीः संपत् सद्व्ययं विना अश्रीः शोभाशून्या भवतीत्यन्वयः । यथावा रसगङ्गाधरे रमणीयत्वे यथा—'पङ्कैर्विना सरो भाति सदः खलजनैर्विना । कटुवर्णैर्विना काव्यं मानसं विषयैर्विना' इति । अन्ये यथा । काव्यप्रकाशे—'अरुचिर्निशया विना शशी शशिना सापि विना महत्तमः । उभयेन विना मनोभवस्फुरितं नैव चकास्ति कामिनोः' इति । यथावा रसगङ्गाधरे–'सपदा संपरिष्वक्तो विद्यया चानवद्यया । नरो न शोभते लोके हरिभक्तिरसं विना'। यथावा–'वदनं विना सुकवितां सदनं साध्वीं विना वनिताम् । राज्यं च विना धनितां न नितान्तं भाति कमनीयम्'। मिश्रिता यथा-'रागं विना विराजन्ते मुनयो मणयस्तु न । कौटिल्येन विना भाति नरो न कबरीभरः' इति । अलंकारभाष्यकारस्तु नित्यसंबन्धानामसंबन्धवचनं विनोक्तिरित्याह । तन्मते तु नैतान्युदाहरणानि । इदं तूदाहरणम्–'मृणालमन्दानिलचन्दनानामुशीरशैवालकुशेशयानाम् । वियोगदूरीकृतचेतनाया विनैव शैत्यं भवति प्रतीतिः' । अत्र शैत्यस्याविनाभावेऽपि विनाभावो निबद्ध इति । ध्वनितपरस्परविनोक्तिर्यथा–'निरर्थकं जन्म गतं नलिन्या यया न दृष्टं तुहिनांशुबिम्बम् । उत्पत्तिरिन्दोरपि निष्फलैव दृष्टा प्रहृष्टा नलिनी न येन' इति ॥ १७८ ॥ एवं संबन्धविशेषात्मकविनोक्तिनिरूपणप्रसक्तां समासोक्तिं लक्षयति—**यत्रेति** । यत्र अलंकृतौ । प्रस्तुतेति । प्रकृतवर्ण्यविशेषनिष्ठ इत्यर्थः । एतादृशो यो व्यवहारः कश्चिद्व्यापारविशेष इति यावत् । साधारणेति । प्रकृताप्रकृतानुगतश्लेषादिसिद्धचारुधर्मैरित्येतत् । अतथेति । अप्रकृतनिष्ठ एव भाति परिस्फुरति । सा समासोक्तिरुच्यत इति योजना । एवं च यत्र प्रकृतधर्मिनिष्ठव्यवहारोपि प्रकृताप्रकृतानुगतश्लेषादिसिद्धमधुरविशेषणमात्रमहिम्ना अप्रकृतनिष्ठत्वारोपवानेव परिस्फुरति तत्वं समासोक्तित्वमिति तत्सामान्यलक्षणं पर्यवस्यति । अत्र पद्मिनीं पश्यपश्येत्यादौ शब्दशक्तिमूलध्वनावतिव्याप्तिव्यावृत्तये मात्रेति । तत्र विशेष्यस्यापि श्लेषेण नायिकादेर्भानात् । इह तु विशेषणैकोपस्थापितव्यवहारमात्रस्यैवाप्रकृतनिष्ठत्वेन भानांगयताया इष्टत्वाच्च । एतेन श्लेषाप्रस्तुतप्रशंसे अपि व्याख्याते । 'कलावते नमस्तस्मै यत्पादैः शारदागमः । स्फुटीभवति लोकानां सर्वेषामपि निर्मलः' इति मदीयनीतिशतपत्रपद्ये—'मलिनेऽपि रागपूर्णां विकसितवदनामनल्पतल्पेऽपि

पद्मिनीं लालयन्प्रातः स्ववियोगान्मुनिव्रताम् ।
रागी करपरामर्शैः स्मेरयन्भाति भास्करः ॥ १८० ॥

त्वयि चपलेऽपि च सरसां भ्रमर कथं वा सरोजिनीं त्यजसि' इति पण्डितराजार्यायामपि क्रमात् श्लेषाप्रस्तुतप्रशंसावशाद्धर्मभानवद्धर्मिभानस्यापि स्फुटत्वात् । एवं विशेषणेषु मधुरत्वं रसाद्यनुगुण्यमेव । अन्यथा 'राममन्मथशरेण ताडिता दुःसहेन हृदये निशाचरी । गन्धवद्रुधिरचन्दनोक्षिता जीवितेशवसतिं जगाम सा' इति रघुवंशीयपद्यवद्रसाद्यननुगुण्यापत्तेः । शिष्टं तु स्पष्टमेव । तदेतदुक्तं रसगङ्गाधरे– 'यत्र प्रस्तुतधर्मिको व्यवहारः साधारणविशेषणमात्रोपस्थापिताप्रस्तुतधर्मिव्यवहाराभेदेन भासते सा समासोक्तिः' इति । अत्र विस्तरस्तु तत्रैव बोध्य इति दिक् ॥ १७९ ॥ तामुदाहरति—**पद्मिनीमिति** । भास्करः सूर्यः यतः रागी औदयिकरक्तिमशाली, पक्षेऽनुरागवानित्यर्थः । अतः प्रातः । स्वेति । स्वकिरणसंपर्काभावान्मुकुलितां, पक्षे निजविरहात् कृतमौनव्रतामिति यावत् । एतेन निरतिशयितपातिव्रत्यं द्योत्यते । एतादृशीं पद्मिनीं कमलिनीम्, पक्षे एतज्जातीयकत्वेन कामशास्त्रप्रसिद्धां नायिकाम् । एतेन निरतिशयसौन्दर्यं सूच्यते । करेति । किरणसंचारैरित्यर्थः । पक्षे हस्तकरणकतत्कपोलादिसमास्फालनैरित्येतत् । लालयन् तन्निष्ठतमःसंहरणेन समुज्ज्वलयन्सन्नित्यर्थः, पक्षे मृदुतरस्पर्शसंजातसुखतः संतोषयन्सन्नित्येतत् । अतएव स्मेरयन्विकसयन्, पक्षे हर्षयन्निति यावत् । भाति शोभत इत्यन्वयः । अत्र रागादिस्मेरान्तैः प्रकृतसूर्याख्यधर्मिनिष्ठैः साधारणविशेषणैः प्रकृतस्तन्निष्ठोऽपि व्यवहारः किरणकरणकः कमलिनीकर्मकस्तदीयतमोनिराकरणतद्विकासनेऽनुकूलः सूर्यकर्तृकः क्रियाविशेषात्मको व्यापारः श्रवणक्षण एव अप्रकृतनायकविशेषनिष्ठनायिकाविशेषपरितोषणव्यवहारत्वेन प्रतीयत इति लक्षणसमन्वयः । इह प्रातःपदेन नायिकायां खण्डितात्वं ध्वन्यते । यथावा सरस्वतीकण्ठाभरणे—'यत्रोपमानादेवैतदुपमेयं प्रतीयते । अतिप्रसिद्धेस्तामाहुः समासोक्तिं मनीषिणः' । प्रतीयमाने वाच्ये वा सादृश्ये सोपजायते । श्लाघां गर्हामुभे नोभे तदुपाधीन्प्रचक्षते । विशेष्यमात्रभिन्नापि तुल्याकारविशेषणा । अस्त्यसावपराप्यस्ति तुल्यातुल्यविशेषणा । संक्षेपेणोच्यते यस्मात्समासोक्तिरियं ततः । सैवान्योक्तिरनन्योक्तिरुभयोक्तिश्च कथ्यते'।तत्र प्रतीयमानसादृश्यश्लाघावती यथा—'उत्तुङ्गे कृतसंश्रयस्य शिखरिण्युच्चावचग्रावणि न्यग्रोधस्य किमङ्ग तस्य वचसा श्लाघासु पर्याप्यते । बन्धुर्वा स पुरा कृतः किमथवा सत्कर्मणां संचयो मार्गे रूक्षविपत्रशाखिनि जनो यं प्राप्य विश्राम्यति' । अत्र न्यग्रोधेनैवोपमानेन प्रतीयमानसादृश्यस्य वर्णनीयवदान्योपमेयस्योक्तत्वात् तच्छ्लाघयैव तच्छ्लाघाप्रतीयत इति सेयं प्रतीयमानसादृश्या श्लाघावती समासोक्तिः । सैव गर्हावती यथा— 'किं जातोऽसि चतुष्पथे यदि घनच्छायोऽसि किं छायया संपन्नः फलितोऽसि किं यदि फलैः पूर्णोऽसि किं संनतः । हे सद्वृक्ष सहस्व संप्रति शिखाशाखाश-

ताकर्षणक्षोभोन्मोटनभञ्जनानि जनतः खैरेव दुश्चेष्टितैः'। अत्रोपमानभूतस्य सद्वृक्षस्य व्याजगर्हणया तदुपमेयः कोऽपि सत्पुरुषो विगर्ह्यत इति सेयं प्रतीयमानसादृश्या गर्हावती नाम समासोक्तिः इत्यादि। किंच तत्रैवाग्रे अभिधीयमानसादृश्या श्लाघावती तुल्याकारविशेषणा यथा—'नालस्य प्रसरो जलेष्वपि कृतावासस्य कोशे रुचिर्दण्डे कर्कशता मुखे च मृदुता मित्रे महान्प्रश्रयः। आमूलं गुणसंग्रहव्यसनिता द्वेषश्च दोषाकरे यस्यैषा स्थितिरम्बुजस्य वसतिर्युक्तैव तत्र श्रियः' इत्यादि। किंच तत्रैवाग्रे-अन्योक्तिर्द्विविधा स्वजातौ जात्यन्तरे च। तयोः स्वजातौ यथा—'लक्ष्मीपयोधरोत्सङ्गकुङ्कुमारुणितो हरेः। बलिरेष स येनास्य भिक्षापात्रीकृतः करः' इत्यादि। यथावा साहित्यदर्पणे—'व्याधूय यद्वसनमम्बुजलोचनाया वक्षोजयोः कनककुंभविलासभाजोः। आलिङ्गसि प्रसभमङ्गमशेषमस्माद्धन्यस्त्वमेव मलयाचलगन्धवाह'। अत्र गन्धवाहे कामुकत्वव्यवहारसमारोप इति। तत्रैवाग्रे यथा—'विकसितमुखीं रागावेगाद्गलत्तिमिरावृतिं दिनकरकरस्पृष्टामैन्द्रीं निरीक्ष्य दिशं पुरः। जरठलवलीपाण्डुच्छायो भृशं कलुषान्तरः श्रयति हरितं हन्त प्राचेतसीं तुहिनद्युतिः' इति। एवं तत्रैवाग्रे-'ऐन्द्रं धनुः पाण्डुपयोधरेण शरद्दधानार्द्रनखक्षताभम्। प्रसादयन्ती सकलङ्कमिन्दुं तापं रवेरप्यधिकं चकार' इत्यादि। यथावा कुवलयानन्दे-'व्यावल्गत्कुचभारमाकुलकचं व्यालोलहारावलि प्रेङ्खत्कुण्डलशोभिगण्डयुगुलं प्रस्वेदिवक्त्राम्बुजम्। शश्वद्दत्तकरप्रहारमधिकश्वासं रसादेतया यस्मात्कन्दुक सादरं सुभगया संसेव्यसे तत्कृती'। अत्र कन्दुकवृत्तान्ते वर्ण्यमाने व्यावल्गत्कुचभारमित्यादिक्रियाविशेषणसाम्याद्विपरीतरतासक्तनायकवृत्तान्तः प्रतीयते' इति। यथावा रसगङ्गाधरे-'विबोधयन्करस्पर्शैः पद्मिनीं मुद्रिताननाम्। परिपूर्णोऽनुरागेण प्रातर्जयति भास्करः' इति। अत्र किरणस्पर्शकरणकमुकुलितपद्मिनीकर्मकविकासानुकूलव्यापारवदभिन्नो भास्करो जयतीति वाक्यार्थः शक्त्यैव तावत्प्रतीयते। हस्तस्पर्शकरणकनायिकाविशेषकर्मकानुनयानुकूलव्यापारवदभिन्न इत्यादिश्चापरोऽर्थ उभयत्रानुपपत्त्या तयैव शक्त्या शक्त्यन्तरेण व्यक्त्या वा सर्वथैव प्रतीयत इत्यत्र सहृदया एव प्रमाणम्। एवंच द्वाविमौ वाक्यार्थौ सव्येतरगोविषाणवदन्न्यतासंसृष्टौ यदि स्यातां तदा भगवतो भास्करस्य कामुकत्वं कमलिन्या नायिकात्वं च सकलप्रतीतिसिद्धं विरुद्धं स्यात्। द्विप्रधानत्वे वाक्यभेदश्चापद्येत। यदि चापरोऽर्थः प्रकृतकर्तर्यारोप्यते तदा कमलिनीविकासकर्ता नायिकानुनयकर्ता च सूर्य एकत्र द्वयमिति विषयताशाली बोधः स्यान्नतु पूर्वोक्तानुपपत्तिपरिहारः। यदि च श्लेषमूलाभेदाध्यवसानेन कमलिन्यादीनां नायिकात्वादिप्रत्यय उपपाद्यते तथाप्यश्लिष्टपदोपस्थितो भगवान्नायकत्वाघ्रात एव। पद्मिनीशब्दस्थाने नलिनीशब्दोपादाने सापि नायिकात्वेन कथं नाम प्रतीतिपथमियात्। तस्माद्विशेषणसाम्यमहिम्ना प्रतीतोऽप्रकृतवाक्यार्थः स्वानुगुणं नायकादिमर्थमाक्षिप्य तेन परिपूर्णविशिष्टशरीरः प्रकृतवाक्यार्थो स्व-

वयवतादात्म्यापन्नतदवयवाभेदेनावतिष्ठते । स च परिणाम इव प्रकृतात्मनैव कार्योपयोगी स्वात्मना च रसाद्युपयोगी । अत्र चाप्रकृतार्थस्य पृथक्शब्दानुपादानाद्रूपकाद्वाक्यार्थसंबन्धिनो वैलक्षण्यम् । पदार्थरूपकात्तु स्फुटमेव । आक्षिप्तार्थघटितत्वात् । वाक्यार्थशेषात् । एवंचात्र शक्यार्थाक्षेपाभ्यां सर्वार्थनिर्वाह इति भामहोद्भटप्रभृतीनां चिरंतनानामाशयः । 'निशामुखं चुम्बति चन्द्र एषः' इत्यादौ निशाचन्द्रशब्दयोरश्लिष्टत्वान्मुखचुम्बनमात्रस्य पुत्रादिसाधारण्येन कथं तावन्नियतनायकाक्षेपकत्वं कथंवाऽक्षिप्तस्यापि नायकादेर्निशाचन्द्रयोरेवाभेदेनान्वयो न भेदेन चुम्बनादौ । तथात्वे च तयोर्नायकताटस्थ्ये रसानुद्बोधापत्तेः । तस्मात् 'निशामुखं चुम्बति चन्द्रिकेयं' 'अहर्मुखं चुम्बति चण्डभानुः' इत्यादावप्रतीयमाननायकत्वम् । प्रकृते टाप्प्रथमाभ्यां प्रतिपादितेन प्रकृत्यर्थगतेन स्त्रीत्वेन पुंस्त्वेन च स्वाधिकरण एवाभिव्यज्यते । एवंच शशिनो नायकत्वसिद्धिः । श्लिष्टविशेषणैर्व्यञ्जनाव्यापारेणैवाप्रकृतार्थबोधनम् । शक्तेः प्रकरणादिना नियन्त्रणात् । यदित्थं व्यञ्जनमाहात्म्यादेवाप्रकृतवाक्यार्थतादात्म्येन प्रकृतवाक्यार्थोऽवतिष्ठते । गुणीभूतव्यङ्ग्यभेदश्चायमिति तु रमणीयः पन्थाः इति स्वसंमतसमासोक्तिरहस्यं निरुच्याग्रेऽलंकारसर्वस्वकारमतं सानुवादं विदलय्य पण्डितराजैः । यत्तु सर्वस्वकाराज्ञानुवर्तिना कुवलयानन्दकृता सपूर्वपक्षसिद्धान्तमुक्तम् । अत्र विशेषणसाम्यात्सारूप्याद्वा यदप्रस्तुतवृत्तान्तस्य प्रत्यायनं तत्प्रस्तुते विशेष्ये तत्समारोपार्थम् । सर्वथैव प्रस्तुतानन्वयिनः कविसंरम्भगोचरत्वायोगात्ततः समासोक्तावप्रस्तुतव्यवहारसमारोपश्चारुताहेतुः । ननु रूपक इव प्रस्तुतेऽप्रस्तुतसमारोपोऽस्ति । मुखं चन्द्र इत्यादौ मुखे चन्द्रत्वारोपहेतुमुखशब्दसमभिव्याहारवत् 'रक्तश्चुम्बति चन्द्रमाः' इत्यादिसमासोक्त्युदाहरणे चन्द्रादौ जारत्वारोपहेतोस्तद्वाचकपदसमभिव्याहारस्याभावात् । नचेह 'निरीक्ष्य विद्युन्नयनैः पयोदो मुखं निशायामभिसारिकायाः' इत्यत्र निरीक्षणगुणानुगुणनयनोपादानं यथा पयोदस्य दृष्टृपुरुषत्वगमकं तथा किंचिज्जारत्वस्यास्ति । 'त्वय्यागते किमिति वेपत एष सिंधुस्त्वं सेतुमन्थकृदतः किमसौ बिभेति' इत्यत्र सेतुमन्थकृत्त्वं विष्णोः कार्यं यथा राज्ञो विष्णुत्वस्य तथा किंचिदस्ति । तस्माद्विशेषणसमर्पिताप्रस्तुतव्यवहारसमारोपमात्रमिह चारुताहेतुः । यद्यपि विशेषणसमर्पितयोर्द्वयोरप्यर्थयोरविशिष्टं प्राधान्यं तथाप्यन्यतराश्रये धर्मिण्यन्यतरारोपस्यावश्यकत्वे श्रुते प्रकृतव्यवहारधर्मिण्येवाप्रकृतव्यवहारस्यारोप उचितः । तस्य च स्वरूपतो ज्ञातस्यारोपे चारुत्वाभावात्कामुकाद्यप्रस्तुतधर्मिसंबन्धित्वेनावगम्यमानस्य रसानुगुणत्वादारोपः । कामुकादेश्च पदादनुपस्थितस्यापि चुम्बनादिना व्यञ्जितस्य व्यवहारविशेषणत्वम् । तस्मात् 'अयमैन्द्रीमुखं पश्य रक्तश्चुम्बति चन्द्रमाः' इत्यत्र जारसंबन्धिताद्दशचुम्बनरूपव्यवहाराश्रय इत्येव बोध इति कुवलयानन्दकृन्मतमत्र विशेषणेत्यादिना पदसमभिव्याहारस्याभावादित्यन्तेन ग्रन्थेनाक्षरतस्तदग्रे तात्पर्यतश्चानूद्य । तदेत-

त्सर्वमसंगतमिति सर्वात्मना तदसांगत्यं प्रतिज्ञाय। तत्र हेत्वाकाङ्क्षायां यत्ता-वदुच्यते–मुखं चन्द्र इत्यत्र मुखे चन्द्रत्वारोप इति तत्र नामार्थयोरभेदेनैवा-न्वयान्मुखे चन्द्रस्यारोपो न चन्द्रत्वस्य चन्द्रविशेषणस्येत्येकं प्रथमं दूषणमुक्तं तत्सत्यमेव। तथापि मुखं चन्द्र इत्यादौ मुखे चन्द्रत्वारोपहेतुमुखशब्दसमभि-व्याहारवदिति त्वयैवात्र तद्ग्रन्थानुवादे वाक्यमुक्तम्। तत्र मुखे वदने चन्द्र-त्वेन धर्मेण आह्लादकत्वसामान्येन यश्चन्द्रस्यारोप इत्यार्थिकम्। यद्वा चन्द्र-त्वविशिष्टस्य चन्द्रस्य य आरोपः तस्य हेतुः कारणीभूतो यो मुखशब्देन सह समभिव्याहारः मुख चन्द्र इति समानविभक्तिवचनत्वेनाव्यवधानेन चाभिधानं तद्वदिति सरलधियामर्थः प्रतीयते। अतएव न्यायरत्नावलीकारैः समुदाहृते 'इदमर्थवस्त्वपि भवेद्रजते परिकल्पित रजतवस्त्विदमि। रजतभ्रमेऽस्य च परिस्फुरणान्न यदि स्फुरेन्नहि तु शुक्तिरिव' इतिश्लोके शुक्तिरिवेत्यस्य व्याख्याने। शुक्तिरिव शुक्तित्वविशिष्टवत् इत्यवच्छेदकपुरस्कारेणैव ब्रह्मा-नन्दसरस्वतीभिस्तदभिहितमुपमानम्। ततोऽत्र दीक्षितैरवच्छेदकघटितमेव चन्द्रत्वेत्याद्युक्तम्। तथाच कोऽत्र दोषलेशोपि। एवं तदग्रे यदप्युच्यते जारा-दिपदसमभिव्याहारस्य हेतोर्विरहान्न चन्द्रादौ जारत्वारोप इति। तत्र। धर्मितारोपे तादृशसमभिव्याहारस्य हेतुत्वं नत्वार्थारोपे। अन्यथा रूपकध्वनेरुच्छेदापत्तेः। नच रूपकध्वनावारोप्यमाणसाधारणधर्मोक्तिरारोप्यमाणतादात्म्यव्यञ्जिका। नचेह तथा किंचिदस्तीति वाच्यम्। इहापि परनायिकामुखचुम्बनस्य श्लेषमर्यादया व्यञ्जनमर्यादया वा प्रतीतस्य प्रकृतधर्मिणि चन्द्रे आरोप्यमाणस्य जारासाधारण-धर्मत्वेन जारत्वव्यञ्जकतायाः स्फुटत्वादित्यादिनाऽप्रकृतव्यवहारमात्रारोपे दूषणा-न्तरं प्रपञ्च्य। तस्मादप्रकृताभिन्नतया व्यवसितः प्रकृतव्यवहारः स्वविशेष्ये तद्विशेष्याभिन्नतयावस्थिते भासते तत्राप्रकृतार्थ उपस्कारकतया गुण इति प्रकार एव रमणीय इति निगमितम्। एवं चेतावतोपपादनेन तथा। यदित्थं व्यञ्ज-नमाहात्म्यादेवाप्रकृतवाक्यार्थतादात्म्येन प्रकृतवाक्यार्थोऽवतिष्ठते, गुणीभूतव्य-ङ्ग्यभेदश्चायमिति तु रमणीयः पन्था इति प्राक्तननिर्णयग्रन्थेन च समासोक्तिर्नाम कश्चिदर्थालंकारो नैव किंतु गुणीभूतव्यङ्ग्यभेद एवेति सिद्धम्। तर्हि विनोक्त्यलंकारनिरूपणानन्तरं भवतैव समासोक्तित्वेन तल्लक्षणं प्रथमतएव किमिति कृतं। तथा अथास्याः केचन भेदा निगद्यन्त इति प्रतिज्ञाय समासोक्तेरेव भेदाः—'उत्सङ्गे तव गङ्गे पायपाय पयोऽतिमधुरतरम्। शमिताखिलश्रमभरः कथय कदाह चिराय शयिताहे'। अत्र शिशुजननीवृत्ता-न्ताभेदेन स्थितः प्रकृतवृत्तान्त इति। 'अलंकर्तुं कर्णौ भृशमनुभवन्त्या नव-रुजं ससीत्कारं तिर्यग्वलितवदनाया मृगदृशः। कराब्जव्यापारानतिमुकृतसारा-न्रसयतो जनुः सर्वं श्लाघ्यं जयति ललितोत्तंस भवतः'। अत्र नवकान्तया क्लेशेन कर्णे क्रियमाणस्योत्तंसस्य वृत्तान्तः प्रत्यग्रखण्डिताधरकामुकवृत्तान्ता-

भेदेन स्थित इति । 'अन्धेन पातभीत्या संचरता विषमविपर्येषु । दृढमिह मया गृहीता हिमगिरिश्रृङ्गादुपागता गङ्गा' । अत्र गिरिशृङ्गप्रभववेणुयष्टिव्यवहाराभेदेनेति प्रभृतयो भेदाः किमिति निरूपिताः । तस्मात्प्रकृतार्थप्रतिपादकेन वाक्येन श्लिष्टविशेषणमाहात्म्यान्न तु विशेष्यस्य सामर्थ्यादपि यदप्रकृतस्याप्यर्थस्याभिधानं सा समासेन संक्षेपेणार्थद्वयकथनात्समासोक्तिरिति काव्यप्रकाशादिसकलप्रौढालंकाराकरप्रसिद्धत्वात्समासोक्तिखण्डनं तत्र गौणव्यङ्ग्यभेदत्वमण्डनं च स्वग्रन्थोपक्रमोपसंहारादिकमप्यपश्यतः पण्डितराजस्य पण्डिता एव किंमूलकमिति विदांकुर्वन्तु चिरतरम् । एतेनाग्रिमत्रैव प्रकरणे तत्कृतं कुवलयानन्दखण्डनमपि विडम्बितप्रायमेव । तद्यथा–यत्तु कुवलयानन्दे सारूप्यादपि समासोक्तिर्दृश्यते यथा—'पुरा यत्र स्रोतः पुलिनमधुना तत्र सरितां विपर्यासं यातो घनविरलभावः क्षितिरुहाम् । बहोर्दृष्टं कालादपरमिव मन्ये वनमिदं निवासः शैलानां तदिदमिति बुद्धिं द्रढयति' । अत्र वनवर्णने प्रस्तुते तत्सारूप्यात्कुटुम्बिषु धनसंतानादिसमृद्ध्यसमृद्धिविपर्यासं प्राप्तस्य तत्समाश्रयस्य ग्रामनगरादेर्वृत्तान्तः प्रतीयत इत्युक्तम् । तदसत् । समासोक्तिजीवातोर्विशेषणसाम्यस्यात्राभावेन समासोक्तिनाया एवानुपपत्तेरित्यादि । तत्र 'निशामुखं चुम्बति चन्द्र एषः' इत्यत्र स्त्रीलिङ्गपुंलिङ्गाभ्यां मुखचुम्बनरूपार्थसचिवाभ्यां नायिकात्वं नायकत्वं च व्यज्यत इति हि निर्विवादमित्यस्मिन्नेव प्रकरणे प्राक्तेनैवोक्तम् । तत्र यदि विशेषणसाम्यं स्त्रीलिङ्गत्वादिनैव समासोक्तिघटकं तर्ह्यत्रापि स्रोतःपुलिनयोर्धनसंतानसाधारणं क्लीबत्वं सरितां क्षितिरुहां च कुटुम्बिनी कुटुम्बिसाधारणं स्त्रीलिङ्गत्वं पुंलिङ्गत्वं च नैव दण्डखण्डितम् । एव तत्र मुखचुम्बनरूपोऽर्थः सहायश्चेत्तर्ह्यत्रापि विपर्यासरूपः स तादृशः स्फुट एव । तथाच पुरा यत्रेत्याद्युदाहरणे विशेषणसाम्याभावात्समासोक्तेरेवाभावकथनं साहसमात्रमेवेति ध्येयं पक्षपातविधुरैर्विबुधवरैर्धीरैरेवेति दिक् ॥ एवं रसगङ्गाधर एव समासोक्तिविशेषोदाहरणान्तराण्यपि । यथा—'गुणवृद्धी परे यस्मिन्नैव स्तः प्रत्ययात्मके । बुधेषु सदिति ख्यातं तद्ब्रह्म समुपास्महे' इति । अत्र वेदान्तशास्त्रसिद्धव्यवहारे व्याकरणशास्त्रसिद्धस्य शतृशानज्व्यवहारस्य लौकिके । शास्त्रीयस्य यथा—'परार्थव्यासङ्गादुपजहदथ स्वार्थपरतामभेदैकत्वं यो वहति गुणभूतेषु सततम् । स्वभावाद्यस्यान्तः स्फुरति ललितोदात्तमहिमा समर्थो यो नित्य स जयतितरां कोऽपि पुरुषः' । अत्र समर्थसूत्रगतमहाभाष्यार्थस्य । तत्रहि 'अथ ये वृत्तिं वर्तयन्ति किं त आहुः' इत्यादिना जहत्स्वार्थावृत्तिरजहत्स्वार्थावृत्तिरिति पक्षद्वयं निरूपितम् । तत्रैवोपसर्जनार्थेऽभेदैकत्वसंख्यापि ध्वनिता । प्रकटीकृता च हरिणा—'यथौषधिरसाः सर्वे मधुन्याहितशक्तयः । अविभागेन वर्तन्ते तां संख्यां तादृशीं विदुः' इति । 'व्यागुञ्जन्मधुकरपुञ्जमञ्जुगीतामाकर्ण्य स्तुतिमुदयत्त्रपातिरेकात् । आभूमीतलनतकन्धराणि मन्येऽरण्येऽस्मिन्नवनिरुहां कुटुम्बकानि' इत्यादि । यथावा मदीयाद्वैतामृतमञ्जर्यां

**प्रकृतार्थोपयुक्तार्हव्यङ्ग्यशालिविशेषणे।**
**भवेत्परिकरः पाहि गुरोऽगस्त्य भवाम्बुधेः॥ १८१॥**

रतिमुकुले—'प्रत्यङ्मुखोऽपि रक्तः पूर्णोऽप्युदयन्कुमुद्वतीः स्पृशति। द्विजराजोऽपि त्यक्त्वा किमित्ययं तारकाः स्वीयाः' इति॥ १८०॥ एवं साधारणविशेषणप्रयुक्तसमासोक्तिनिरूपणप्रसक्तं साभिप्रायविशेषण परिकरं लक्षयति—**प्रकृतेत्यादिना।** प्रकृतः प्रस्तुतो योऽर्थस्तस्य उपयुक्तमुपपादकमेतादृशमपि तथा **अर्हं** चमत्कारकारि ईदृश यद्व्यङ्ग्यं व्यञ्जनैकाभिव्यक्तमर्थजातं तच्छालि **तेन शालते** शोभते तच्छीलं तच्च तदेतच्चेति तथा एतादृशं यद्विशेषणं तस्मिन्सतीत्यर्थः। विशेष्यस्येत्यार्थिकम्। परिकरः एतन्नामकोऽलंकारः भवेदिति संबन्धः। **अत्र** अर्हेत्यनेन हीनव्यङ्ग्यव्युदासः। एव व्यङ्ग्यपदेन हेत्वलकारवैलक्षण्यमपि। तथाचोक्त रसगङ्गाधरे—'विशेषणानां साभिप्रायत्वं परिकरः। तच्च प्रकृतार्थोपपादकचमत्कारि व्यङ्ग्यकत्वम्। अत एवास्य हेत्वलंकाराद्वैलक्षण्यम्। तत्र व्यङ्ग्यस्यानावश्यकत्वादिति। नन्वेवं यद्यस्य व्यङ्ग्यैकायत्तत्वं तर्हि ध्वन्याख्योत्तमोत्तमकाव्यत्वमेव प्रथनीय नन्वर्थालंकारत्वेन मध्यमकाव्यत्वमितिचेन्न। प्रकृतार्थालंकारोपस्कारकत्वेन तस्याप्रधानत्वात्। तदप्युक्तं तत्रैव 'व्यङ्ग्यस्य गुणत्वाच्च न ध्वनित्व व्यपदिश्यते' इति। तमुदाहरति—**पाहीत्यादिशेषेण।** अयि भवाम्बुधेः संसारसमुद्रस्य अगस्त्य, तद्विनाशकेत्यर्थः। अगस्त्येन हि सप्तापि समुद्राः सकृदाचमनमात्रेणैव स्वयोगशक्त्या शोषिताः सुरकार्यविशेषार्थमिति पुराणादिप्रसिद्धमेव तद्वदनन्तपारमतिदुरन्तदुःखदं त्वमिमं संसारसमुद्रमपि स्वकृपाकटाक्षेण सद्यः संशोषयस्यतस्तत्तुल्य एव मम भवसीति भावः। एतादृश अतएव गुरो हे हितोपदेष्टराचार्येत्यर्थः। अत्र भवेत्यादिपञ्चम्यन्तत्वेन पुनरपि योजनीयम्। एवंचाविद्यातद्व्याप्यतत्कार्यात्मकयावद्दृश्यमृगजलनिधेः सकाशादिति यावत्। मामिति शेषः। पाहि रक्षयेत्यन्वयः। अत्र भवाम्बुधेरगस्त्येति गुरोर्विशेषणस्य प्रकृतार्थः स्वकर्मकगुरुकर्तृकसंसारसमुद्रापादानकतन्मिथ्यात्वबोधनलक्षणवाधनफलकतदधिष्ठानीभूतस्वप्रकाशाद्वैतसच्चिदानन्दब्रह्मात्मैक्यप्रबोधनद्वारातन्मात्राश्रयविषयकमूलाज्ञानविध्वंसनरूपमोक्षलक्षणसमुद्धरणात्मक एव तत्रोपयुक्तत्वादगस्त्यस्य शुद्धवैदिकशिवभक्तयोगीश्वरब्रह्मविद्वरसार्वभौमत्वेन गुरूपमानध्वनकतद्रूपकार्हत्वादहह परमरमणीयं यद्व्यङ्ग्यं दुरन्तदुःखात्मकद्वैतरूपं संसारसमुद्रप्रतियोगिकसद्यःप्रध्वंसनलक्षणक्षमत्वरूप तच्छालित्वाल्लक्षणसंगतिः। यथावा कुवलयानन्दे—'सर्वाशुचिनिधानस्य कृतघ्नस्य विनाशिनः। शरीरकस्यापि कृते मूढाः पापानि कुर्वते' इति। अत्र संमटभट्टसंमतानि बहून्यपि साभिप्रायविशेषणानीति पूर्वस्माद्विशेषः। अत्र रसगङ्गाधरकारैः कुवलयानन्दग्रन्थखण्डनं यदकारि तत्तदुपसंहारतात्पर्यानवबोधमूलमेव। तद्यथा रसगङ्गाधरेऽत्रैव प्रकरणे तावदुक्तम्। यत्तु कुवलयानन्दकार आह—'श्लेषयमकादिष्वपुष्टार्थत्वदोषाभावेन तत्रै-

कस्यापि विशेषणस्य साभिप्रायस्य विन्यासे विच्छित्तिविशेषसद्भावात्परिकरत्वोपपत्तिः । यथा 'क्षितिभृतैव सदैवनका वयं वनवता नवता किमहिद्रुहा' इति गोवर्धनपर्वतविषयके नन्दादीन्प्रति भगवद्वाक्ये इति । तदसदिति प्रतिज्ञाय तत्र हेलाकाङ्क्षोपशमं यो हीममलंकारं दोषाभावान्तःपातितयाऽलंकारमध्याद्बहिर्भावयति स किंत्वदुक्तश्लेषयमकादिशब्दचित्रातिरिक्तस्थले साभिप्रायविशेषणेषु विच्छित्तिविशेषं मन्यते नवा । आद्ये दोषाभावमात्रेण विच्छित्तिविशेषस्यालंकारप्रयोज्यस्यालंकारमन्तरेणानिष्पत्तेः । सिद्धं सर्वत्र परिकरस्यालंकारत्वम् । द्वितीयेऽन्यत्रेव यमकादिष्वपि विच्छित्तिविशेषो नास्तीति तेन सुवचत्वादित्यादिना विकल्पपूर्वकं दूषणमभिधाय यदि च यमकेऽनुभवं विच्छित्तिविशेषे प्रमाणं ब्रूषे ब्रूहि तदान्यत्रापि तमेव प्रमाणमिति यमकपर्यन्तमनुधावनं व्यर्थमेव । तस्मात्पुष्टार्थतारूपेण दोषाभावेन सह परिकरालंकारस्य विषयविभागो दुःशक इति प्राप्ते ब्रूमः । सुन्दरत्वे सत्युपस्कारकत्वमलंकारत्वं चमत्कारापकर्षकाभाववत्वं च दोषाभावत्वं, तदेतद्धर्मद्वयं विविक्तविषयं यदि दैवादेकस्मिन्विषयविशेषे समाविशेत्तदा का हानिः स्यादुपधेयमकरेऽप्युपाध्यसंकरात् । यथा ब्राह्मणस्य मूर्खत्वं दोषो विद्या तु दोषाभावश्च भवति गुणश्च, तथेहाप्युपपत्तिरित्याद्युपसहृतं तदुचितमेव परं त्वेतादृशायुक्तत्वं श्लेषयमकाद्युदाहरणपक्षे मनसि निधायैव दीक्षितैस्तत्राग्र उक्तम् । अपिच एकपदार्थहेतुकं काव्यलिङ्गमलंकार इति सर्वसंमतं तद्वदेकस्यापि विशेषणस्य साभिप्रायस्यालंकारत्वं युक्तमेवेति । अत्रायमभिप्रायः । साभिप्रायविशेषणात्मैकोपि पदार्थः दोषविशेषाभावभिन्नत्वे सत्यलंकारविशेष एव । रमणीयत्वे सति रसाद्युपस्कारकत्वात् । एकपदार्थमात्रहेतुककाव्यलिङ्गालंकारवदिति । यथा काव्यलिङ्गस्य सहेतुकैकपदार्थघटितस्य सकलालंकारिकसमतविच्छित्तिविशेषपोषकत्वेन निर्हेतुकत्वदोषाभावभिन्नमलंकारविशेषत्वमेव । तथैकस्यापि साभिप्रायविशेषणपदार्थस्य निरुक्तहेतुनैवापुष्टार्थत्वरूपदोषाभावभिन्नं परिकराख्यालंकारविशेषत्वं समुचितमेव । अतएव पण्डितराजैरप्युपसंहारावसरे तावदेवमेवोक्तम् । अन्यथा प्राचां काव्यलिङ्गमप्यलंकारो न स्यात्तस्यापि निर्हेतुरूपदोषाभावात्मकत्वात् । 'द्विजराज कलाधार विश्वतापनिवारण । कथं मामबलां क्रूरः करैर्दहसि निर्दय' इत्यादौ विशेषणाधिक्याद्व्यङ्ग्याधिक्ये चमत्काराधिक्यमिति । एवमनेकविशेषणपक्ष एवैतेषामपि संमत इति फलति । अत एवैतैरन्यत्रैवोक्तं प्राक् । एकस्यैव विशेषणस्य चमत्कारितायाः अनपह्नवनीयत्वात् । 'अयि लावण्यजलाशय तस्या हा हन्त मीननयनायाः । दूरस्थे त्वयि । किं वा कथयामो विस्तरेणालम्' इति । यत्तूक्तमेतैः—'नच दोषाभावतया प्राप्तस्यापि परिकरस्य किमित्यलंकारेषु गणनागौरवमिति वाच्यम् । उभयात्मकत्वेनेतरवैलक्षण्यज्ञापनार्थतया गणनोपपत्तेः । यथा गुणीभूतव्यङ्ग्यभेदतया संगृहीतापि समासोक्तिरलंकारगणनायां पुनर्गण्यते । यथावा–'प्रासादवासिषु गणितोऽप्यु-

**विशेष्ये तादृशेऽप्ययमतः परिकराङ्कुरः ।**
**सर्वान्कामान्ददात्वद्य गौरीरमण एव नः ॥ १८२ ॥**

भयवासी भूतलवासिगणनायां पुनर्गण्यते तथेहापीति न कश्चिद्दोष इति समासोक्तेर्गौणव्यङ्ग्यत्वमलंकारत्वं चेत्युभयात्मकत्वं परिकरस्यापुष्टार्थरूपदोषाभावत्वालंकारविशेषात्मकत्वरूपोभयात्मकत्वसाध्ये दृष्टान्तत्वेन तद्विचार्यते । सुन्दरत्वे सत्युपस्कारकत्वमलंकारत्वं चमत्कारापकर्षकाभावत्वं च दोषाभावत्वमिति युष्मदुक्तलक्षणत एव तयोर्भावत्वाभावविशेषत्वाभ्यां घटत्वपटप्रतियोगिकात्यन्ताभावयोर्घटावच्छेदेन सामानाधिकरण्याविरोधवदविरोधेऽपि गौणव्यङ्ग्यत्वाख्योत्तमकाव्यत्वस्य अलंकारविशेषत्वरूपार्थचित्राख्यमध्यमकाव्यत्वस्य च परस्परविरुद्धधर्मत्वेनैकस्यां समासोक्तौ सामानाधिकरण्यं कथं बालैरपि श्रद्धेयं स्यात् । नह्येकमेव कनकं कलत्रं वा तुल्यकालमुत्तमं मध्यमं च भवति । तस्माद‍विवेचकवचनमेवैतदिति संक्षेपः । यथावा भावत्कोदाहरणानि—'मन्त्रैर्मीलितमौषधैर्मुकुलितं त्रस्तं सुराणां गणैः स्रस्तं सान्द्रसुधारसैर्विदलितं गारुत्मतैर्ग्रावभिः । वीचिक्षालितकालियाहितपदे स्वर्लोककल्लोलिनि त्वं तापं तिरयाऽधुना मम भवव्यालावलीढात्मनः' इति । तथा—'मदकामविमोहमत्सरा रिपवस्त्वासुर एव तावकम् । धृतशार्ङ्गगदारिनन्दक प्रतिकर्षन्ति कथं न वीक्षसे' । अत्राप्युपेक्षानौचित्यस्य तावकशब्दप्रतिपादितेन स्वामिभृत्यभावेनैव निष्पन्नशरीरस्य प्रकर्षकं धृतशार्ङ्गेत्यादिविशेषणं अमोघशस्त्रास्त्रसंपन्नस्य समक्षमेव रिपुभिः कृष्यमाणं दासमुपेक्षमाणस्याकीर्तिर्भवित्री तवेत्याकूतान्तर्गतमिति । अत्र शार्ङ्गस्य धनुषः सायकमापेक्षतयैव कार्यकारित्वात्पद्मभुजस्य तदुपयुक्तस्य प्रकृते राहित्यात्प्रत्यक्षादिविरुद्धविन्यासो दोपस्तूक्तव्याख्यानेनापि नैवावमोचितोपि मयावमोच्यते । 'कौमोदकी गदा खड्गो नन्दकः' इत्यमरान्नन्दकस्य खड्गत्वेन कोशनिविष्टत्वेन कटिबन्धस्थितत्वाद्दूरयुद्धोपयुक्तास्त्राख्योक्तधनुःसहायीभूतशरमोचकत्वं चतुर्थकरेणोचितमेव । निकटयुद्धे तु तदुपयोगाभावात्तेनैव करेण विकोशीकृत्य नन्दकं कृत्वा मारणेन मुक्तिप्रदानद्वारा भगवति शत्रुनन्दकत्वमपीति रहस्यम् । तथा आसुर एवेति लिङ्गसंख्याविभेदन्यायेनैकवचनान्तमपि मदेत्यादेर्विशेषणं पण्डितराजकाव्येनाश्रितमेवातः समन्वयन्तमिदं । आसुर एव 'निबन्धायासुरी मता' इति भगवत एवोक्तरजआदिप्रधानवृत्त्युदयकाल एव । पक्षे असुरसङ्गर एवेत्यर्थ इति । एवंच—'दोषं स एव यच्छतु यो निपुणः स्याद्गुणस्य संग्रथने' इति मदीयार्द्वतामृतसभ्यर्यामर्धसमार्या जातिरपि । अपिच 'खर्वीकृतेन्द्रगर्व त्वरया चक्रेण भिन्ननक्रमुख । लीलात्तकोलमूर्ते मामुद्धर्तुं कथं न शक्नोषि' इति रसगङ्गाधरीयमेवेति ॥ १८१ ॥ एवं साभिप्रायत्वप्रसङ्गसंगतं श्रीमदप्पय्यदीक्षितैकसंमतं परिकराङ्कुरं लक्षयति—**विशेष्य इति** । तादृशे प्राग्वत्प्रकृतार्थोपयुक्ताद्यव्यङ्ग्यशालिनीत्यर्थः । एतादृशे विशेष्य एव सति परिकराङ्कुरः

**श्रुत्यैकयाप्यनेकार्थबोधनं श्लेष उच्यते ।**
**एकधर्मपुरस्कृत्या तच्चेच्छुद्धः स इष्यते ॥ १८३ ॥**

एतन्नामालंकार इत्यर्थः । **अप्पय्येति** । अप्पय्यदीक्षितसंमत इत्येतत् । अस्तीत्यार्थिकम् । तमुदाहरति—**सर्वानिति** । अद्य इदानीमेव । एतेन विलम्बासहत्वलक्षणमत्यातुरत्वं द्योत्यते । **गौरीति** । गौरीं गौराङ्गीं भगवतीं त्रिपुरसुन्दरीं रमयतीति तथा । श्रीमदुमाविलसनशाली शिव एवेत्यर्थः । एतेन तद्दत्तानामेवेष्टविषयसभोगो संभूतसुखानामप्यन्ते क्रममुक्तिप्राप्तेरद्वैतात्मत्वेनाविनाशिसुखत्वं सूचितम् । अत एवोक्तं सौन्दर्यलहर्यां श्रीमद्भगवत्पादाचार्यपादारविन्दैः—'विरिञ्चिः पञ्चत्वं व्रजति हरिराप्नोति विरतिं विनाशं कीनाशो भजति धनदो याति निधनम् । वितन्द्री माहेन्द्री विततिरपि संमीलति दृशां महासंहारेऽस्मिन्विलसति सति त्वत्पतिरसौ' इति । सर्वान्मनुष्यानन्दादिब्रह्मानन्दान्तानखिलानपीत्यर्थः । एतेन 'सोऽश्नुते सर्वान्कामान् सह ब्रह्मणा विपश्चिता' इति श्रुतिरप्यवलम्बिता भवति । एतादृशान् कामान्काम्यन्त इति व्युत्पत्त्येच्छाविषयीभूतान् संपूर्णविषयानन्दानिति यावत् । नः अस्मभ्यं ददातु विशेष्यपदध्वनितस्वानुभूतालौकिकविषयसुखरीत्या स्वसखित्वेन श्रुतिप्रसिद्धास्मदादीन् जीवानपि सुखिनः करोत्विति योजना । अत्र गौरीत्यादिविशेष्यस्यैवोक्तरीत्या साभिप्रायत्वाल्लक्षणसमन्वयः । यथावा कुवलयानन्दे—'फणीन्द्रस्ते गुणान्वक्तुं लिखितुं हैहयाधिपः । द्रष्टुमाखण्डलः शक्तः क्वाहमेष क्व ते गुणाः' इति । विरञ्चिरित्यादि त्वत्पतिरसावित्यन्तमपि तथा । यथावा मदीये कृष्णलीलामृते—'अथाऽस्य लीलाप्यतिकोमलाऽमला समुल्ललास स्वलसच्चलाचला । यदीक्षणं च श्रवणं समक्षणे चरन्ननन्तोपि च नान्तमाप्तवान्' इति । अत्रानन्तेति तथा ॥ १८२ ॥ एवंच विशेष्ये साभिप्रायरूपं परिकराङ्कुरालंकारं निरूप्य तत्प्रसङ्गसंगतं विशेष्यवाचकपदेतरावच्छेदेनैवानेकार्थघटितत्वादिभेदभिन्नं श्लेषालकारं निरूपयिष्यंस्तत्सामान्यं लक्षयति—**श्रुत्येत्यर्धेन** । एकयापि श्रुत्या सकृच्छ्रवणमात्रेणेत्यर्थः । **अनेकेति** । नानार्थविषयकज्ञानजननमित्येतत् । तदुक्तं रसगङ्गाधरकृद्भिः । श्रुत्या एकया अनेकार्थप्रतिपादनं श्लेष इति । एवं सामान्यतो लक्षितश्लेषस्य विशेषलक्षणाकाङ्क्षायां तांस्तद्विषयान्विवक्षुः प्रथमं शुद्धश्लेषाख्यमार्थिकतद्भेदं व्युत्पादयति—**एकेत्यर्धेनैव** । तत्प्रागुक्तमेकश्रुत्यैवानेकार्थप्रतिपादनमित्यर्थः । **एकेत्यादि** । अर्थद्वयेऽपि तत्तत्पदैर्विशेष्यविशेषणक्रियावाचकैर्विधेयो धर्मः एकस्तुल्यरूप एव तत्पुरस्कृत्या तत्पुरस्कारेणेति यावत् । एतादृशं यदि चेत्तर्हि सः प्रागुक्तसामान्यलक्षणः श्लेषालंकारः शुद्धः वक्ष्यमाणोपाधिशून्यः अर्थैकविषयकत्वात् आर्थापराभिधः इष्यते आलंकारिकैः स्वीक्रियत इत्यन्वयः ॥ १८३ ॥ नन्वेवमुक्तानेकार्थप्रतिबोधनमेवानेकधर्मपुरस्कारेणापि चेत्तर्हि सोपि भेदः कश्चिदुत्पाद्य इत्याशङ्कायां तद्वैविध्यं प्रतिजानीते—**अनेकेति** । अत्र हेतुं व्युत्पादयति—

अनेकधर्मपूर्वं चेत्तद्विधा परिकीर्त्यते ।
अनेकशब्दैकशब्दप्रतिभाद्वारभेदतः ॥ १८४ ॥
तत्राद्यस्तु सभङ्गः स्याद्द्वितीयोऽभङ्ग ईर्यते ।
त्रिधाप्ययं तु प्रकृताप्रकृतैकोभयाश्रयात् ॥ १८५ ॥
प्रत्येकं त्रिविधत्वेन नवधान्त्योभयत्रये ।
विशेषणैकपदगं श्लिष्टत्वं कामतोऽन्यतः ॥ १८६ ॥
रक्तकृष्णार्जुना गीता गुरुदृष्टिः पुनातु नः ।
शुभदोमापतिर्विश्वश्रिये विश्वेश्वरोऽस्त्वलम् ॥ १८७ ॥

**अनेकेति** । अनेकशब्दप्रतिभानैकशब्दप्रतिभानलक्षणद्वारयोर्भेदाद्धेतोर्निरुक्तार्थद्वयप्रतिपादनमनेकधर्मपूर्वं यदि चेत्तर्हि द्विधा परिकीर्त्यत इति पूर्वेण संबन्धः ॥ १८४ ॥ तत्रोक्तभेदद्वयेऽपि क्रमेण संज्ञान्तर विधत्ते– **तत्रेत्यर्धेनैव** । आद्यः अनेकशब्दप्रतिभानद्वारकानेकधर्मपूर्वकैकश्रुतिकर्तृकानेकार्थप्रतिभानलक्षणः प्रोक्तशब्दश्लेषभेदद्वयमध्ये प्रथमभेद इत्यर्थः । तुशब्दः पुनरर्थे । सभङ्गः स्याद्भङ्गश्लेषापरनामकः श्लेषभेदः सभङ्गाख्यो भवेदिति योजना । भवत्वेवं तल्लक्षणमभिधान चाथाप्यन्त्यस्य किं तदित्यत आह—**द्वितीय इति** पादार्धेनैव । द्वितीयः एकशब्दप्रतिभानद्वारकानेकधर्मपूर्वकैव श्रुतिकर्तृकानेकार्थप्रतिभानलक्षणः प्रोक्तशब्दश्लेषभेदद्वयमध्येऽन्तिमभेद इति यावत् । अभङ्गः अङ्गश्लेषापरनामकः शब्दश्लेषभेद ईर्यते कथ्यत इत्यर्थः । ननु भवत्वेवमर्थश्लेषैकभेदशब्दश्लेषभेदद्वयसहित सामान्यतः श्लेषभेदत्रयमथापि किमस्यापि प्रत्येक 'नानार्थसंश्रयः श्लेषो वर्ण्यावर्ण्योभयास्पदः' इति कुवलयानन्दकारिकायुक्तं भेदान्तरमत्र संमतं नवा । नान्त्यः । सकलालंकारिकैः प्रायोऽङ्गीकृतोक्तभेदत्रयत्यागेऽसांप्रदायिकत्वापत्तेः । आद्ये किं पुनस्तद्भेदत्रयमुक्तभेदत्रयेऽप्याहोस्विद्द्वयोरेव शब्दश्लेषाभिधभेदयोरुतैकस्मिन्नेवार्थश्लेषभेद इत्याशङ्क्याद्यपक्षमेवाङ्गीकुर्वाणः समाधत्ते—**त्रिधापीत्यादि**नोत्तरश्लोकगतनवधेत्यन्तेन । अत्रापि तुशब्दः प्रागवदेव । अपिः समुच्चये । निरुक्तरीत्याऽर्थादिभेदेन त्रिविधोऽप्ययं श्लेष इत्यर्थः । **प्रकृतेति** । वर्ण्यमात्रार्थद्वयावर्ण्यमात्रार्थद्वयवर्ण्यावर्ण्योभयाख्याश्रयभेदादित्यर्थः । उपलक्षणमिदं स्थलविशेषे तृतीयाद्यर्थस्यापि । प्रकटयिष्यामस्तयोदाहरणावसरे ॥१८५॥ **प्रत्येकमित्यादि** । नवधा नवविधः संपद्यत इति शेषः । तत्रापि विशेषं स्पष्टयति—**अन्त्येत्यादिना** । अन्त्यं शब्दश्लेषाख्यं यदुभयं भेदद्वयं तस्य यत्त्रयं प्रकृतादि तत्रेत्यर्थः । **विशेषणेति** । श्लिष्टत्वं श्लेषघटितत्वम् । विशेषणैकपदगं संमतं न तु विशेष्यपदगमपि । अन्यथा शब्दशक्तिमूलध्वनिभेदोच्छेदापत्तेः । अन्यतः आद्येऽर्थश्लेषभेदत्रये । कामतः यथेच्छं विशेष्यादिश्लिष्टत्वं संमतं भवतीति भावः ॥ १८६ ॥ नन्वेतच्छ्लेषभेदनवकं प्रायो रसगङ्गाधरमूलकमेव तथापि तेनापि साकमत्र क्रमवैषम्यमेव प्रतीयते । तथाहि तत्र तावत्तल्लक्षण सक्षि·

प्योक्तम् । तच्च द्वेधा अनेकधर्मपुरस्कारेणैकधर्मपुरस्कारेण च । आद्यं द्वेधा । अनेकशब्दप्रतिभानद्वारैकशब्दप्रतिभानद्वारा चेति त्रिविधः श्लेषः । तत्राद्यः सभङ्गः । द्वितीयोऽभङ्ग इति वदन्ति । तृतीयस्तु शुद्धः । एवं त्रिविधोऽप्ययं प्रकृतमात्राप्रकृतमात्रप्रकृताप्रकृतोभयाश्रितत्वेन पुनस्त्रिविधः । तत्राद्ये भेदे द्वितीये च विशेष्यस्य श्लिष्टतायां कामचारः । तृतीयभेदे तु विशेषणवाचकस्यैव श्लिष्टत्वं न विशेष्यवाचकस्य । तथात्वे तु शब्दशक्तिमूलध्वनेरुच्छेद एव स्यात् । विशेषणमात्रश्लिष्टतायामपि प्रकृताप्रकृतधर्मिणोरुपादान एव श्लेषः । प्रकृतधर्मिमात्रस्योपादाने तु समासोक्तेरेव विषय इति । अत्रानेकधर्मपुरस्कारेणैकश्रुतिकर्तृकानेकार्थप्रतिपादनपक्षस्यानेकशब्दप्रतिभानद्वारकत्वैकशब्दप्रतिभानद्वारकत्वभेदेन द्वैविध्यमादावभिधायानन्तरं प्रथमविकल्पावशिष्टैकधर्मपुरस्कारकरणकैकश्रुतिकर्तृकानेकार्थबोधनलक्षणश्लेषभेदेन सह त्रिविधस्यापि पुनः प्रत्येकं प्रकृतमात्राद्याश्रयभेदेन त्रैविध्यमुक्तम् । त्वयातु शुद्धाख्यार्थस्यैवैकधर्मपुरस्कारकरणकैकश्रुतिकर्तृकानेकार्थप्रतिपादनात्मकश्लेषभेदस्यैव प्रथमं प्रतिपादनं विधाय तदुत्तरमुक्तशब्दश्लेषभेदद्वयेन सह त्रिविधस्यापि तस्य पुनस्तद्वदेव प्रत्येकं प्रकृताद्याश्रयभेदेन नवविधत्वमुपपादितमिति स्फुटमेव मूलीभूतेन तेन सह त्वदुक्तेर्वैषम्यमिति चेत्सत्यम् । तत्रतुशब्दमन्तराऽर्थोपस्थित्यभावात्काव्ये शब्दस्यैव प्राधान्यविवक्षया तद्भेदद्वयस्यैव प्रथमं प्रपञ्चनमकारि । मया तु काव्ये सामान्यतः शब्दात्मकत्वेन तत्प्राधान्येपीहार्थालंकारप्रकरणेऽर्थस्यैव प्राधान्यं ध्वनयताऽर्थश्लेषाभिधतद्भेदस्यैव प्रथमं प्रतिपादनं प्रपञ्चितमित्यभिसंधिभेदात्पद्धतिभेदेऽपि सिद्धान्ताविरोधान्नैव मम तद्ग्रन्थेन सह विरोधगन्धोपीत्यतः प्रोक्तलक्षणा नवापि श्लेषभेदाः श्लोकचतुष्टयेन प्रोदाहरिष्यता प्रथमं प्रकृतमात्राश्रितार्थापरनामकशुद्धाख्यसकृच्छ्रुतिकर्तृकैकधर्मपुरस्कारकरणकानेकार्थबोधनलक्षणश्लेषभेदःसमुदाह्रियते—**रक्तेत्यर्धेनैव।** रक्तौ गुरुशिष्यवरत्वसाम्यलाभेन सर्वात्मना परस्परमनुरक्तौ कृष्णार्जुनौ यस्यां सा तथा, पक्षे कोणाद्यवच्छेदेन शोणश्यामशुक्लवर्णेत्यर्थः । एतादृशी गीता भगवद्गीता प्रसिद्धैव । गुरुदृष्टिः गुर्वी महती दृष्टिरद्वैतात्मविषयकत्वेन प्रमा यया सा तथेत्यर्थः । एतादृशी सती नः अस्मान्प्रति पुनातु द्वैतापाविद्यापहारेण सद्यः स्वानन्दाद्वैतसच्चिदमृतैकरूपताऽऽपादनतः शुद्धतां नयत्वित्यन्वयः । पक्षे गीताश्रुत्यादिषु परमपूज्यत्वेन संकीर्तितेत्यर्थः । एतादृशी गुरुदृष्टिः । श्रीगुरोः कृपादृष्टिरिति यावत् । शिष्टंतु प्राग्वदेव । अत्र गीतागुरुदृष्ट्योरुभयोरपि वर्ण्यत्वेन प्रकृतत्वादेकशब्दस्य सभङ्गत्वादिवक्ष्यमाणोपाधिना विभिन्नार्थत्वाभावाच्च प्रकृतमात्राश्रितत्वमेकधर्मपुरस्कारकरणकत्वं तथा आवृत्त्या पदयोजनाभावात्सकृच्छ्रुत्येककर्तृकानेकार्थज्ञापनत्वमर्थमात्रप्राधान्येन शुद्धापरनामकार्थश्लेषत्वं चेति लक्षणसंगतिः । एवं शान्ताख्यव्यज्यमानरसोपस्कारकत्वचारुत्वाभ्यामलंकारत्वमपि बोध्यम् । यथावा काव्यप्रकाशे—'श्लेषः स वाक्य एकस्मिन्यत्रानेकार्थता भवेत्' इति लक्षणकारिकार्धम् ।

एकार्थप्रतिपादकानामेव शब्दानां यत्रानेकोऽर्थः स श्लेष इति व्याख्यायोदाहृतम्। 'उदयमयते दिङ्मालिन्यं निराकुरुतेतरां नयति निधनं निद्रामुद्रां प्रवर्तयति क्रियाः। रचयतितरां स्वैराचारप्रवर्तनकर्तनं नवनवलसत्तेजःपुञ्जो विभाति विभाकरः'। अत्राभिधाया अनियन्त्रणाद्वावप्यर्कभूपौ वाच्याविति। यथावा रसगङ्गाधरे। अर्थश्लेषो यथा—'अर्जुनस्य गुरुर्मायामनुजः परमः पुमान्। गुञ्जापुञ्जधरः पायादपायादिह कोपि वः' इति। अत्र हरपक्षे अर्जुनस्य गुरुत्वदशायां शिवे किरातरूपेण मायया प्रकटीभूते गुञ्जापुञ्जधरत्वार्हत्वेपि हरिपक्षे भीष्मपर्वणि गीताशास्त्रोपदेष्टृत्वेनार्जुनस्य गुरुत्वावस्थायां भगवति हरौ गोकुलविलासकालिकबाल्याद्येकोचितं द्वारवत्यादिराज्यादिकर्तृत्वदशायां कथंकारं श्लाघ्यमिति सहृदया एव विभावयन्त्विति दिक्। यथावा मदीये कृष्णलीलामृते—'अयं समुद्यन्प्रतिवासरं प्रभुः प्रफुल्लपद्माशयसद्मदीपकः। अलंकरोति स्वत एवं गोकुलं कुलं द्विजानामपि हर्षसंकुलम्' इति। यथावा मामक एव नीतिशतपत्रे—'सद्वृत्तमेव संसेव्य गुरवो लघवोपि च। सर्वे वर्णाः समायान्ति सर्वार्थैः श्रुतियोग्यताम्' इति। यथावाऽस्मदीय एव भागीरथीकथाचम्पूप्रबन्धे—'धन्यानां मृदुलपदाः सुवर्णरूपाः सद्वृत्ताः सरसगुणाः प्रसादशीलाः। नानालंकृतिविलसद्ध्वनिप्रचाराश्चुम्बति स्वरसत आस्यमीज्यवाचः' इति। एवं शुद्धाख्यं प्रकृतकार्थश्लेषभेदं समुदाहृत्य प्रागुक्तलक्षणक्रमानुसारेण प्राप्तावसरमादौ शब्दश्लेषभेदद्वयमध्येऽप्येकधर्म्येककर्तृकमनेकधर्मपुरस्कारकरणकत्वेऽप्यनेकशब्दप्रतिभानद्वारकं वर्ण्यमात्रार्थद्वयाश्रयं सभङ्गश्लेषाख्यं तद्भेदमुदाहरति—**शुभेति**। शुभं मुक्त्याख्यं निरतिशयं कल्याणं ददातीति तथा एतादृशः मापतिःलक्ष्मीरमण इत्यर्थः। एतेन भोगदातृत्वमपि ध्वन्यते। नन्वेवंचेदसौ करुणानिधिस्तर्हि सर्वस्यापि प्रायेणोन्माद एव स्यात्ततः कुतः संभवत्यधिकृतिमन्तरा मुक्तिप्रत्याशापीत्यत आह—**विश्वेश्वर इति**। जगन्नियन्तेत्यर्थः। अलमखण्डम्—**विश्वेति**। जगतोऽपि चतुर्विधपुमर्थसंपदेपि भवत्वित्यन्वयः। अत्राखण्डपदेनोक्ताशीःप्रार्थनस्याक्षणिकत्वेन सार्वदिकत्व सूच्यते। हरपक्षे तु शुभदोमे त्याद्येकंपदम्। एवच भोगमोक्षाभ्याखिलकल्याणदातृत्वं शुद्धसत्वप्रधानमायालीलाविग्रहरूपिण्यामुमायामेवेति व्यज्यते। पतिपदेन तस्याः स्वातन्त्र्यं व्युदस्यते। अपरं तूक्तार्थमेव। अत्र हरिहरयोरुभयोरप्येकेश्वरलीलाविग्रहत्वेन प्रार्थ्यत्वात्प्रकृतमात्राश्रयत्वं शुभदोमे त्यत्र पदच्छेदतदभावाभ्यां सभङ्गश्लेषत्वं शब्दश्लेषत्वानेकधर्मपुरस्कारकरणकत्वानेकशब्दप्रतिभानद्वारकत्वानि चेत्यादिलक्षणसमन्वयः। यथावा रसगङ्गाधरे'संभूत्यर्थं सकलजगतो विष्णुनाभिप्रपन्न यत्रालि स त्रिभुवनगुरुर्वेदनाथो विरिञ्चिः। ध्येयं धन्यालिभिरतितरां स्वप्रकाशस्वरूप पद्माख्यं तत्किमपि ललित वस्तु वस्तुष्टयेऽस्तु'। अत्राशीःप्रकरणं तुष्टिजननसमर्थत्वेन लक्ष्मीभगवन्नाभिकमलयोरुभयोरपि प्रकृतत्वात्प्रकृतमात्राश्रितोऽयमेकयाश्रुत्या पदद्वयप्रतिभासद्वारा भिन्नधर्मपुरस्कारेणानेकार्थप्रतिपादनात्सभङ्ग इति। अत्र लक्ष्मीपक्षे विष्णुना अभिप्रपन्नमिति च्छेदः। विष्णुना

**कमलोन्मीलनः कोऽपि पातु मां स्वप्रभो हरिः ।**
**प्रियास्याग्रे रविज्योतिर्भासिताब्जश्रियस्तृणम् ॥ १८८ ॥**

भगवता नारायणेनापि अभितः प्रपन्न आलिङ्गनादिना प्राप्तमित्यर्थः । यद्वा विष्णुना अभि न विद्यते भीर्यत्र तत्तथा कामबाणभयशून्य एतादृशं प्रपन्नं प्राप्तमित्यर्थः । विष्णोरपि यत्प्राप्त्यैव स्मरशरभीराहित्यं संपद्यत इत्याकूतम् । यथावा कृष्णभक्तिचन्द्रिकायाम्—'उभयोरेका प्रकृतिः प्रत्ययभेदाच्च भिन्नवद्भाति । कलयति कश्चिन्मूढो हरिहरभेदं विना शास्त्रम्' । अयमर्थः—उभयोः हरिहरयोः प्रकृतिः 'मायां तु प्रकृतिं विद्यात्' इतिश्रुतेश्चतुर्भुजपञ्चमुखाख्यलीलाविग्रहयोरुपादानीभूता मायेति यावत् । एकैवास्ति । परंत्विदं चतुर्भुजादि विग्रहजातं प्रत्ययभेदात्तमालनीलफुल्लमल्लिकाधवलवर्णादिविषयकपरोक्षादिज्ञानभेदादेवेत्यर्थः । भिन्नवद्भाति भिन्नसदृशं प्रतीयते । नतु वस्तुतस्तथेत्यर्थः । निरुक्तरीत्या प्रकृत्यैक्यात्तदवच्छिन्नचैतन्यत्वेनाप्यैक्यमेवेति भावः । एवं तर्हि विनाशास्त्रं श्रीशेशयोर्भेदधीरिति बृहन्नारदीयनामापराधगणनवचनाद्भेददर्शिनोऽवश्यंभावी यो विनाशो नरकादिना पञ्चपर्वाविद्योपचयस्तत्साधनीभूत सर्पास्त्रादिसदृशमस्त्रमित्यर्थः । एतादृशं हरिहरभेदं कः कलयति जानातीति प्रश्ने यश्चिन्मूढः चित्यद्वैतब्रह्मविषयेऽज्ञः स एव कलयत्यन्यस्तज्ज्ञस्तु नैव कलयतीति वेदान्तपक्षेऽर्थः । व्याकरणपक्षे तु हृञ् हरण इति धातुलक्षणा प्रकृतिर्हरिहरशब्दयोरुभयोरप्येकैव परंतु तत्तत्प्रत्ययभेदादिदं शब्दद्वयं भिन्नवद्भाति नतु वस्तुतस्तथा । कुतः प्रकृत्यैक्यात् । अतः कश्चिन्मूढः शास्त्रानभिज्ञ एव । शास्त्रं विना हरिहरभेदं कलयतीति ॥ १८७ ॥ अथोक्तलक्षणक्रमप्राप्तं शब्दश्लेषाख्यानेकधर्मपूर्वकैकशब्दप्रतिभानद्वारकैकश्रुतिकर्तृकानेकार्थप्रतिभानलक्षणमभङ्गश्लेषमुदाहरति—**कमलेति** प्राग्वदर्थेनैव । कमलायाः लक्ष्म्या उन्मीलनं मन्दस्मितरूपं विकसनं येन स तथा । रमाप्रेमपात्रीभूत इत्यर्थः । एतादृशः कोऽप्यनिर्वचनीयगुण इति यावत् । एवं निखिलभोगहेतुभूतलक्ष्मीनायकत्वेन तत्कामुकभजनीयोऽप्यसाववाच्यगुणश्चेत्किमस्मदादीन्प्रति भायादित्यतः पुनस्तं विशिनष्टि—**स्वेति** । स्वयंप्रकाशत्वेनान्यानधीनभान इत्यर्थः । एतेन स्वज्ञानमात्रेण तस्य मोक्षदत्वमपि द्योत्यते । नन्वेवं चेदसङ्गोदासीनोऽसौ कथमस्मभ्यं भोगमोक्षावपि दास्यतीत्यत आह—**हरिरिति** । भक्तदुःखहरणस्वभावो भगवानिति यावत् । अतएव मां पात्वित्यन्वयः । भोगमोक्षदैन्यादनवरतं मां रक्षत्वित्यर्थः । पक्षे कमलानां पद्मानां उन्मीलनं विकसनं येन स तथा हरिः सूर्यः । शिष्टं तु प्राग्वदेव । अत्रैकश्रुतिकर्तृकमनेकार्थप्रतिभानं विष्णुसूर्ययोरुभयोरपि हरिशब्दवाच्यत्वादेवमनेकधर्मपूर्वकैकशब्दप्रतिभानद्वारकं लक्ष्मीसरोजयोर्मन्दहासविकासाख्योभयधर्मबोधनस्य कमलोन्मीलन इत्येकशब्दप्रतिभानैककरणकत्वात् चेति लक्षणसंगतिः । यथावा रसगङ्गाधरे—अयमेवाभङ्गात्मको यथा—'करकलितचक्रघटनो नित्यं पीताम्बरस्तमोरातिः । नीजसेविजाड्यनाशनचतुरो हरिरस्तु

भूतये भवताम्' इति । यथावा मदीये गीतसीतापतौ—'बाणः श्लिष्यति सूपमां वितनुते श्रीकालिदासः स्वयं कारुण्यं भवभूतिरेव कुरुते श्रीहर्ष उत्प्रेक्षते । शृङ्गारं जयदेवपूजितपदो गोवर्धनः सेवते वीर्यं चारुमुरारिरेव च जगन्नाथः प्रसादं परम्' इति । अत्र बाणाद्यष्टकविपक्षेऽर्थः स्फुट एव । स्मरशरपक्षे दिङ्मात्रमुच्यते। बाणः वक्ष्यमाणाचिन्त्यसामर्थ्यादत्र मदनस्यैव । यदाश्लिष्यति तद्धनुर्मौर्वीमालिङ्गिष्यति तदा स्वयम् । **श्रीति** । श्रियः लक्ष्म्याः कं सुखं याभिरेतादृश्यः या आलयस्तत्सख्यस्तासां मानावस्थायां तत्प्रसादनार्थं तनुते स्वानुकूल्येन विस्तारयतीत्यर्थः । तथा भवेति । भवाच्छिवाद्भूतिरुत्पत्तिर्यस्य स एकः स्कन्द एवापत्नीकत्वात्कारुण्यं कुरुते शोचतीत्यर्थः । एवं श्रीहर्षः लक्ष्म्यवतारीभूतत्वाच्छ्रिया सीतया हर्षः यस्य स रामः उत्प्रेक्षते भूयस्तामेव पश्यतीत्यर्थः। तद्वत् । **जयेति।** जयविजयप्रमुखदेवार्चितचरण इत्यर्थः । एतादृक् गोवर्धनः गवां वर्धनं येन तथा श्रीकृष्णः । वीर्यमित्यादि । उक्तावस्थाद्वय एव स वीर्यादि सेवतेऽन्यदा तु शृङ्गारमेवेति योज्यम् । तस्मादद्भुतं कामवीर्यमिति । एवं चैते श्लेषालंकारस्य शुद्धापरनामकार्थशब्दान्तर्गतसभङ्गाभङ्गाख्यास्त्रयो भेदाः क्रमात्प्रकृतमात्रार्थद्वयाश्रिताः समुदाहृता इदानीं त्रयाणामपि प्राक्प्रतिपादितप्रकृतमात्राश्रितत्वादिभेदेन त्रैविध्यान्नवविधभेदमध्येऽवशिष्टभेदषट्के निरुक्तक्रमप्राप्त शुद्धाख्यार्थश्लेषभेदस्याप्रकृतार्थद्वयपरं भेदमुदाहरति—**प्रियास्येति** । इदं हि भगवतः शंकरस्यैव वामाङ्कस्थितोमामुखमवेक्ष्य स्वमनसि वाक्यम् । प्रिया मत्प्रेमपात्रीभूतेयं गौरी । अस्याः यदिदमास्यं मुखं तदग्रे तत्पुरस्तादित्यर्थः । **रवीति** । रवेः सूर्यस्य ज्योतिः किरणास्तैर्भासितौ क्रमाद्विकासितोद्भासितौ एतादृशौ यावब्जौ अब्जं चाब्जश्चाब्जौ 'अब्जो जैवातृकः सोमः' इत्यमरात्सूर्यकिरणानामेवाम्मयमण्डलविशेषसन्निकर्षेण तत्प्रतिबिम्बस्यैव चन्द्रतया ज्योतिःशास्त्रप्रसिद्धत्वाच्च कमलकलानिधी तयोर्याः श्रियः शोभास्तास्तथेत्यर्थः । तृण तृणतुल्यास्तुच्छाः सन्तीति संबन्धः । एतेन कमलस्य दिवैव विकसितत्वेन रम्यत्वाच्चन्द्रस्य तु रात्रावेव कान्तिमत्त्वेन तथात्वाद्गौरीमुखस्य तु निसर्गसिद्धसार्वदिकमन्दस्मितशालित्वेन परमरम्यत्वात्तदग्रे किंचित्कालिकरम्यत्वाभासयोः कमलकलानिध्योः प्रसिद्धशोभानां तुच्छत्वमुचितमेवेति सूच्यते । अत्र कमलकलानिध्याख्या प्रकृतार्थद्वय एव रवीत्यादिपदश्लेषविषयत्वादप्रकृतार्थद्वयाश्रयत्वमर्थश्लेषीयभेदत्वं चेति लक्षणसमन्वयः । यथावा रसगङ्गाधरे—'हरिकरसङ्गादधिकं रमणीयाप्यतुलरागसंवलिता । सुन्दरि तवाननाग्रे कमलाभा विगलितप्रतिभा' इति । अत्र कमलाभेति विशेष्यवाचकपदे कमलपक्षे सांगत्येऽपि लक्ष्मीपक्षे उपमेयत्वेन विवक्षितसुन्दर्याननस्योपमानीभूता लक्ष्मीकान्तिर्लक्ष्मीर्वानुचितैवेति प्रतिभाति । काव्यादौ सर्वत्र कमलचन्द्रयोरेव मुखोपमानत्वेन विस्पष्टत्वात्तद्वल्लक्ष्म्यास्तथा काप्यदृष्टचरत्वाच्चेति किमत्र तत्तत्व-

**प्रेयस्यपाङ्गपातश्चेत्किं मे कुवलयश्रिया ।**
**मनोरमाधरास्वादे तुच्छमासीन्ममामृतम् ॥ १८९ ॥**
**रामो विद्वत्समोऽव्याद्वः प्रध्वस्तखरदूषणः ।**
**दशास्यहृज्जयीशानः प्राप्तवैदेह्युपाश्रयः ॥ १९० ॥**

मिति प्रेक्षावन्त एव प्रेक्षन्त्विति संक्षेपः ॥ १८८ ॥ एवं शब्दश्लेषभेदद्वयमध्येऽपि प्रथमं प्रागुक्तक्रमरीत्यैवाप्रकृतसभङ्गश्लेषमुदाहरति—**प्रेयसीति** । इदं हि राधामालिङ्गय संफुल्लमल्लिकानिकुञ्जे विलसतः कृष्णस्य प्रफुल्लां लोलां नीलोत्पलावलिं खेलत्खञ्जनराजिं च पश्येति वदन्त कंचित्सुहृदं प्रति प्रतिवचः। शृणवये प्रियसखशिरोमणे, मे प्रेयस्यपाङ्गपातश्चेत् मत्प्रीतिविषयीभूताया राधाया योऽपाङ्गः कटाक्षस्तस्य पातः मद्वदनेन्दीवरे संचारश्चेत्तर्हि मे कुवलयश्रिया संफुल्लनीलोत्पलावलिशोभयेत्यर्थः । पक्षे अकुवलयेति च्छेदः । न विद्यतेऽस्मदादिप्रत्यक्षरतार्थं कुवलयं भूमण्डलं येषां ते तथा । 'अङ्गेषु जीर्यति परं खञ्जनयूनोर्मनोभवप्रसरः । न पुनरनन्तर्गर्भितनिधिनि धरामण्डले केलिः' इति गोवर्धनाचार्यवचनाच्छाकपार्थिवादिवत्समासाश्रयणाच्च खेलत्खञ्जनराजिरश्चेतियावत् । किं न किमपि प्रयोजनं वर्तत इत्येतत् । अयंभावः—राधिकायाः कटाक्षो यत्क्षणावच्छेदेन मद्वदनेन्दीवरे प्रतिबिम्बितत्वेन संचरति तत्क्षण एव तत् प्रतिविम्बविशिष्टं मन्मुखं तत्कपोलतलकाञ्चनादर्शे प्रतिविम्बति तेन तत्कपोलतलकाञ्चनादर्शप्रतिबिम्बितमन्मुखेन्दीवरं प्रोक्तराधिकानेत्रकटाक्षस्य खञ्जनायमानस्य प्रतिबिम्बेन विशिष्टं च प्रतिक्षणं प्रपश्यतो मम निरुक्तकुवलयावलिखञ्जनराजिनिरीक्षणेन क्षणमपि किंचिदपि नैव प्रयोजनं संभाव्यत इति । एवं चात्रावर्ण्यत्वेनाप्रकृतयोरेव कुवलयखञ्जनलक्षणपदार्थयोरुक्तपदच्छेदाच्छेदादिनोपस्थितेरप्रकृतसभङ्गश्लेषलक्षणसमन्वयः । यथावा कुवलयानन्दमूलकारिकार्धे—'अब्जेन त्वन्मुखं तुल्यं हरिणाहितसक्तिना' इति । अत्राब्जश्चन्द्रः कमलं चाब्जमुपमानत्वादप्रकृतम् । तत्र तद्विशेषणेपि हरिणेत्यादौ श्लेषः, सचाद्यपक्षे हरिणे स्वाङ्कनिहितकुरङ्गे विषये आहिता स्थापिता सक्तिरासक्तिर्येन स तथा । अन्त्यपक्षे तु हरिणेति च्छेदः । हरिणा विष्णुना । आहितेति स्थापितप्रीतिनेति सभङ्गश्लेषः । इदानीं शब्दश्लेषोक्तभेदद्वयेऽन्तिममप्रकृताभङ्गश्लेषभेदमुदाहरति—**मनोरमेति** । इदमपि विरहिणो नलादेः कस्यचिन्नायकस्य स्वप्रियसखं प्रति स्वमनस्येव वा प्राक्तनस्वनायिकासंभोगस्मृत्या वचनम् । अत्रामृतं पीयूषं पक्षे 'श्रेयो निःश्रेयसामृतम्' इत्यमरात्कैवल्यं चेति श्लेषः । पदच्छेदविशेषं विना सरल एवेत्यभङ्गः प्रकृतवर्ण्यनायिकाधरमधुरिमेतरविषयकत्वादप्रकृताश्रित एवेति लक्षणसंगतिः । यथावा कुवलयानन्दे—'नीतानां व्याकुलीभावं लुब्धैर्भूरिशिलीमुखैः । सदृशेव न रुद्धानां कमलानां त्वदीक्षणे' इति । 'मृगभेदे तु कमले' इति मेदिनी । 'अलिबाणौ शिलीमुखौ' इत्यमरः । शिष्टंतु स्पष्टमेव ॥ १८९ ॥ अधुना प्रकृताप्रकृतोभयाश्रयमार्थाख्यं शुद्धश्लेषमुदाहरति—**राम इत्यर्धेनैव** । रलयोः सावर्ण्यात्पक्षेऽप्रकृते विदुषि प्रध्वस्तखलदूषण

इत्यर्थः । अपरं तु सरलमेव । यथावा मदीयाद्वैतामृतमञ्जर्यां रतिनीतिमुकुले—'कुटिलोऽपि रागवानपि दर्शनतः क्षोभकोऽपि बद्धोऽपि। सीमन्तवदृजुश्चेन्मुक्ताभूप्यो न किं भूयात्' इति । अथ शब्दश्लेषीयोभयाश्रितसभङ्गाभङ्गश्लेषोदाहरणद्वय क्रमात्पादाभ्यामेव प्रदर्शयन् श्रीराम प्रकृतमप्रकृतं विद्वांस च विशिनष्टि—**दशास्येत्यादि** । अत्र श्रीरामपक्षे दशास्यं रावणं हरति हन्तीति तथा हतदशवदन इत्यर्थः । अतएव जयीशानः जयिनां विजयशालिनां मध्ये ईशः श्रेष्ठ इतियावत्। विद्वत्पक्षे तु दशास्येत्याद्येकं पदम् । दशानां श्रोत्रादिज्ञानेन्द्रियपञ्चकवागादिकर्मेन्द्रियपञ्चकमेलनेन दशसंख्याकानां करणानामास्यमिव मुख्यमेतादृश यद्गून्मनस्तस्य यो जयः 'अभ्यासवैराग्याभ्यां तन्निरोधः' इति पातञ्जलसूत्रादावुक्ताभ्यासाद्युपायेन 'योगश्चित्तवृत्तिनिरोधः' इत्यादि तदाद्युक्तलक्षणः स्वरूपैकाकारतादार्ढ्यरूपो वशीकारः स विद्यते येषां तेषामीशानो योगीन्द्रचूडामणिरित्यर्थः । एवं चात्रोक्तपदच्छेदेनार्थभेदात्सभङ्गत्वं श्रीरामादिवर्णनात्प्रकृतादिनिष्ठत्व चेति लक्षणसंगतिः । पुनः कीदृशः रामो विद्वांश्च । अतएव । **प्राप्तेति** । प्राप्तः लब्धः वैदेह्याः सीतायाः उपाश्रयः वामाङ्गगतत्वेन कण्ठाश्लेषो येन स तथा । समालिङ्गितजनकनन्दिनीक इति यावत् । पक्षे प्राप्तः समाधिपरिपाकादिना समनुभूतः वैदेह्याः प्रारब्धक्षयोर्ध्वमवश्यभाविन्याः लोकदृश्यापि प्रौढजनतर्कितायाः आत्यन्तिकदृश्येन्द्रजालभानाभावपूर्वस्वप्रकाशपूर्णानन्दाद्वैतस्थितिरूपनिर्गुणसायुज्यमुक्तेरुपाश्रय इव उपाश्रयः अखण्डैक्यलक्षणोऽवलम्बो येन स तथा । अद्वैतब्रह्मविद्यादिपरिपाकतः प्रत्यक्षीकृतजीवन्मुक्तिसुख इत्यर्थः । तथाचात्रापि प्राग्वदेव शब्दश्लेषोभयाश्रयत्वं पदच्छेदविशेषेणार्थान्तराकरणादभङ्गश्लेपत्वं चेति लक्षणसमन्वयः। एवं प्रियास्याम्र इत्यादिप्राप्तवैदेह्युपाश्रय इत्यन्ते प्रागुक्तशुद्धाभिधार्थश्लेपशब्दश्लेषीयसभङ्गाभङ्गभेदद्वयसहितभेदत्रयस्य क्रमादप्रकृतमात्राश्रितत्वप्रकृताप्रकृतोभयाश्रितत्वभेदेन द्वैविध्यादुदाहरणषट्केऽपि प्रागुक्तं अन्त्योभयत्रये । विशेषणैकपदगं श्लिष्टत्वमिति शास्त्रनियमितं विशेष्याश्लिष्टत्वमपि स्पष्टमेव । यथावा दमयन्तीकथाचम्पूप्रबन्धे क्रमाद्द्वयोरप्युदाहरणे—'व्यासः क्षमाभृतां श्रेष्ठो वन्द्यः स हिमवानिव । सृष्टा गौरीदृशी येन भवे विस्तारिभावना' इति । 'सद्दूषणापि निर्दोषा सखरापि सकोमला । जयत्यसौ कृता येन रम्या रामायणी कथा' इतिच। अत्राप्रकृतमात्राश्रितसभङ्गश्लेपस्याद्यमुदाहरणम् । प्रकृताप्रकृतयोभयाश्रिताभङ्गश्लेपस्यान्त्यमिति । तद्यथा । सः व्यासः हिमवानिव हिमाचल इव, पक्षे हिमवानिव हेमन्तशिशिरात्मकशीतकाल इव वन्द्योऽस्तीति संबन्धः । कीदृशो व्यासो हिमवच्छब्दवाच्यो हिमाचलः शीतकालश्च । क्षमाभृतां श्रेष्ठः परापराधसहिष्णुत्वशालिनां मध्ये तथा पृथ्वीधारकपर्वतानां मध्ये तद्वत् भूमिपोषकर्तॄणां मध्ये क्रमाद्द्वैतशास्त्रकर्तृत्वादनन्तरत्नौषधिनिलयत्वाद्गोधूमादिचरमधान्यजनकत्वाच्च वरिष्ठ इत्यर्थः । स क इत्यत्राह—**सृष्टेत्यादिना** । येन व्यासेन भवे संसारे विस्तारिभारता

विस्तारि सपादशतसाहस्यात्मकं गायत्रीच्छन्दसा शतसाहस्यात्मकमनुष्टुप्छन्दसा वा हरिवंशाख्यखिलान्तं ग्रन्थविस्तारशालि भारतं यया सा तथेत्यर्थः । ईदृशी निरुक्तविशेषणविशिष्टेति यावत् । गौः कविताकृपिणी वाणी सृष्टा निर्मिते-त्यन्वयः । पक्षे येन हिमवता । भवे शिवे विषये विस्तारिभारता विस्तारि अने-कसंवत्सरकालिकत्वस्य पुराणप्रसिद्धत्वाद्विस्तारशालिभात्र परमसंतोषजन्यमन्दस्मि-तकान्तिरेव तदुपशोभितं च रतं सुरतं यस्याः सा तथा । एतादृशी गौरीदृशी गौरीसदृशी कन्या सृष्टा निर्मितेत्यर्थः । पक्षान्तरे । येन शीतकालेन भवे स्वाविर्भावे सति विस्तारिभारता विस्तारशालिनी भारते मनुष्याणां पुष्ट्यधि-क्याद्रात्रेः प्राचुर्याच्च क्रमाद्देहकान्तिसुरतसुखे यस्यां सा तथेति यावत् । एता-दृशी गौः पृथ्वी सृष्टा निर्मितेति योजना । एवं चात्राप्रकृतयोरेव हिमवच्छब्द-वाच्ययोर्हिमाचलशीतकालयोरुक्तपदच्छेदादिना भङ्गश्लेषत्वाल्लक्षणसंगतिः । नचात्र व्यासपक्षेपि विशेषणान्वयात्कथमप्रकृतमात्राश्रितत्वं प्रागुक्तं संगच्छेतेति वाच्यम् । प्रायः सर्वत्र तथात्वेपि क्वचिदेवमपि संभवस्यादूषकत्वात्प्रत्युत चमत्कारातिशय-स्यैवार्थपुष्ट्या दृष्टत्वाद्विशेष्यवाचके व्यासपदे तु तदभावाच्च । एतेन यत्प्राक्प्र-तिज्ञातं शतोपरि पञ्चाशीतिसंख्यश्लोकव्याख्याने, उपलक्षणमिदं स्थलविशेषे तृ-तीयाद्यर्थस्यापि प्रकटयिष्यामस्तथोदाहरणावसर इति तत्समर्थितं भवति । एवं 'उदयमयते दिङ्मालिन्यम्' इत्यादिकाव्यप्रकाशोदाहरणेऽपि अत्राभिधाया अनियन्त्रणाद्द्वावप्यर्कभूपाविति तदुक्तार्थद्वयवत्सहृदुरप्यस्मत्संमतः स भवत्येवेति दिक् । यथावा अस्मदीयाद्वैतामृतमञ्जर्याम्—'परहृदयहरणनिपुणः सरलधुरीणः श्रिताविरतसगुणः । चन्द्रापीडं प्रथयन् जयति सहस्राशयो बाणः' इति । अत्र परेषां श्रोतॄणां यानि हृदयान्यन्तःकरणानि तेषां यद्धरणं वशीकरणरूपमाकर्षण तत्र निपुणः प्रवीण इत्यर्थः । तत्र हेतुः—**सरलेति** । प्रसादगुणशालिकाव्य-कर्तृऋजुरीतिमात्रव्यवहर्तृशिरोमणिरित्यर्थः । तत्रापि किं प्रमत्तस्तत्राह—**श्रितेति** । सर्वदावलम्बितगुणीन्द्र इति यावत् । **चन्द्रेत्यादि** । कल्पितकादम्बर्यां चन्द्रापी-डनामकं राजकुमारं वर्णयन्नित्येतत् । अतएव **सहस्रेति** । बहुविधतात्पर्यक-ग्रन्थप्रथक इत्यर्थः । एतादृशः बाण एतन्नामा कविर्जयति सर्वोत्कर्षेण वर्तत इत्यन्वयः । अयं हि प्रकृतोऽर्थः । अप्रकृतस्तु श्रीरघुवीरशरो बाणासुरश्च । तत्राद्ये यथा—**परेति** । रावणादिशत्रुहृदयविदलनदक्ष इत्यर्थः । तत्र हेतुः सरलेति । ऋजुराज इत्येतत् । श्रितेति । श्रितमाश्रितं अविरतं नित्यं सगुणं सज्ज्यं धनुर्येन स तथेत्यर्थः । तत्रापि चन्द्रेत्यादि । 'पुमानापीडशेखरौ' इत्यमरा-दर्धचन्द्राकारमापीडशब्दितशेखरस्थानीयं स्वाग्रं प्रथयन्युद्धावसरे प्रकटयन्नित्यर्थः । अतएव सहस्रेति । सहस्रं अनन्तवारं आसमन्तात् शयः 'पञ्चशाखः शयः पाणिः' इत्यमरादामकरस्पर्शो लक्षणया यस्य स तथेति यावत् । एतादृशः बाणः निरुक्तशरो जयतीति प्राग्वत् । अन्त्येतु परेति । परशब्देन अग्नेव तत्र यद्धृ-

दयस्य हरणं विषयेभ्यः सकाशादाकर्षणं तत्र निपुणः। सरलेति। सुशीलश्रेष्ठः श्रितेति आलम्बिताखण्डचन्द्रखण्डमण्डललक्षणशिवाख्यसगुणब्रह्मक इत्यर्थः। यद्वा निरन्तराश्रितगुणवानित्यर्थः। तत्रापि चन्द्रेत्यादि। श्रीचन्द्रचूडं निरन्तरं वर्णयन्नित्यर्थः। एतादृशः सहस्रेति। सहस्रं संख्यया अभितः शयाः हस्ताः यस्य स तथा। तस्य सहस्रभुजत्वं प्रसिद्धम्। बाणः बाणासुर इत्येतत्। जयतीत्युक्तार्थं। यथावा तत्रैव-'इह शब्दरूपमात्रग्रहणचणाः प्रायशो भवन्त्यखिलाः। सुदृशां हृदयग्राही भवति सहस्रेषु कोऽप्येकः' इति। अयमर्थः। इह लोके। शब्देति। सुबन्तादिविभक्तिरूपमात्रज्ञानप्रख्याताः एतादृशोऽपि प्रायशः बाहुल्येन नतु नियमेन। अखिला भवन्तीति संबन्धः। ततः किं तत्राह—सुदृशामित्यादि। सुदृशां विज्ञानशालिनां ग्रन्थकृतामित्यर्थः। हृदयेति। रहस्यग्रहणशील इति यावत्। एतादृशस्तु पुरुषः सहस्रेषु कोऽप्येको भवतीत्यन्वयः। तादृशः पुरुषपुंगवः सुदुर्लभ एवेति भावः। अयमर्थः प्रकृतो निबन्धाशयज्ञपक्षे। शृङ्गारपक्षे तु शब्देति सुदृशामित्यादौ योज्यम्। मृगाक्षीणामित्यर्थः। भित्यादिव्यवधाने शब्दमात्रग्रहणे शब्दोऽयं पिकसमत्वात्कामिन्या एवेति ज्ञाने विषये प्रत्यक्षतायां तु गौराङ्गीयं सुरूपेत्यादिरूपादिविषयकज्ञानविषय एव च विख्याता इत्यर्थः। एतादृशाः प्रायशः अखिलाः सर्वे पुमांसो भवन्तीति योजना। परंतु सुदृशां खञ्जनाक्षीणां तरुणीनामित्यर्थः। हृदयेति। चेतोवशीकारपुरःसरमुरोजग्रहणकर्ता तु सहस्रेषु कोप्येक एव तत्तत्पुण्यविशेषपरिपाकतस्तादृग्गुणगणवांस्तत्तत्पतिर्भवतीति यावत्। एवं चैतादृगतिविरल इत्याशयः। वस्तुपक्षे शब्देति। 'अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम्। आद्यत्रयं ब्रह्मरूपं मायारूपं ततो द्वयम्' इत्यभियुक्तोक्तेर्नामरूपात्मकदृश्यमात्रविषयज्ञानविख्याता इत्यर्थः। सुदृशां बादरायणाद्याचार्याणाम्। हृदयेति। तात्पर्यविषयीभूतसच्चिदानन्दाद्वैतात्मतत्त्वविषयकापरोक्षाप्रतिबद्धबोधवानित्येतत्। सहस्रेष्विति। 'कश्चिद्धीरः प्रत्यगात्मानमैक्षत्' इति 'कश्चिन्मां वेत्ति तत्त्वतः' इति च श्रुतिस्मृतिभ्यां परमदुरवाप इत्यभिप्रायः। शिष्टं तु स्पष्टमेव। सदूषणापीति। रामायणकथापक्षे खरदूषणाख्यविख्यातराक्षसहननवर्णनवत्यपीत्यर्थः। असौ वाल्मीकिः। कान्तापक्षे असौ ब्रह्मा जयति। असौ कः। येन रम्या रन्तुं योग्या सकलगुणरमणीया रमणी कृतेत्यन्वयः। कीदृशी रम्या सेति। दिनचतुष्टयं पुष्पवत्त्वात्सदूषणापीत्यर्थः। पुनः सेति कटाक्षे। तीक्ष्णापीत्यर्थः। नन्वेवमप्यर्थश्लेषाभङ्गाख्यशब्दश्लेषभेदयोः परस्परं सांकर्यमिव दृश्यते। तथाहि 'रक्तकृष्णार्जुना गीता गुरुदृष्टिः पुनातु नः' इति त्वदीयमर्थश्लेषोदाहरणम्। तद्वत् 'कमलोन्मीलनः कोऽपि पातु मां स्वप्रभो हरिः' इत्यभङ्गश्लेषस्य च तत्। एवमेतन्मूलीभूतरमगङ्गाधरकारस्यापि क्रमात् 'अर्जुनस्य गुरुर्मायामनुजः परमः पुमान्। गुञ्जापुञ्जधरः पायादपायादिह कोऽपि वः' इति। 'करकलितचक्रघटनो नित्यं पीनाम्बरस्तमोरातिः। निजसेविजाड्यना-

ज्ञानचतुरो हरिरस्तु भूतये भवताम्' इति चार्थश्लेषाभङ्गश्लेषोदाहरणे। तथाच किमत्र भेदकमिति न स्फुटीभवतीति चेन्न। लक्षणादिभेदेनैव तत्स्फुटीभावात्। तद्यथा। तत्रोभयमते एवेमे अनयोर्लक्षणे। सकृच्छ्रवणमात्रेण प्रकृतैकाश्रितानेकार्थप्रतिपादनं शुद्धापराभिध आर्थश्लेषः। तत्त्वे सत्यनेकधर्मपुर्वकमेकशब्दप्रतिभानद्वारकतत्प्रतिपादनमभङ्गश्लेष इति। तत्र रक्तेत्याद्युदाहरणे सकृच्छ्रवणमात्रेणैव संवर्णनीयत्वेन स्वकर्मकपावयितृत्वाद्भगवद्गीताश्रीमद्गुरुदृष्टयोरुभयोरपि प्रकृतत्वात्तन्मात्राश्रितत्वेनानेकार्थप्रतिपादनं स्पष्टमेव। नच रक्तकृष्णार्जुनेत्यत्रानेके धर्माः प्रतिभासन्त इति सांप्रतम्। अदृष्टतद्व्याख्याकत्वेन भवत एवैतदान्ध्यात्। तत्र हि रक्तौ गुरुशिष्यवरत्वसाम्यलाभेन सर्वात्मना परस्परमनुरक्तौ कृष्णार्जुनौ यस्यां सा तथेति गीतापक्षे विगृह्य, गुरुदृष्टिपक्षे विग्रहान्तरमनुक्त्वैव कोणाद्यवच्छेदेन शोणश्यामशुक्लवर्णेत्यर्थ इत्युक्तम्। तथाच पक्षान्तरेप्युक्तव्युत्पत्तेरेव संमतत्वेन रक्तौ कोणावच्छेदेन रक्तवर्णसंसृष्टौ कृष्णार्जुनौ शिष्योपरि कृपयाऽपाङ्गसंचारे कदाचित्तारकाख्यकनीनिकावच्छिन्नः कृष्णवर्णः कोणस्थशोणवर्णेन संपृक्तो भवति क्वचित् परिसरवृत्तिकः शुक्लोपीति द्वावप्युपात्तौ। यस्यामित्यादि शिष्टं तु प्राग्वदेव। एवंच गीतागुरुदृष्टयोरुभयोरपि प्रकृतयोरेकधर्मपुरस्कारेणैव प्रतिपादनात्कोदाहरणान्तरसंकरः। नन्वेवं तर्हि रसगङ्गाधरोदाहरणेपि हरिपक्षे गुञ्जापुञ्जधरत्वार्जुनगुरुत्वयोर्बाल्यादिकालभेदेन भवतु संगतमिति चेत्सत्यम्। तत्र विशेषणयोः साक्षादेव कालभेदेन सामानाधिकरण्यम्।अत्र तु रक्तकृष्णार्जुनेति विशेषणनिविष्टकृष्णार्जुनपदार्थयोरेव रक्तपदार्थेन सह कालभेदेन संपृक्तत्वमिति वैषम्यात्। एवं कमलोन्मीलनेत्याद्यभङ्गश्लेषोदाहरणेपि। कमलाया लक्ष्म्याः उन्मीलनं मन्दस्मितरूपं विकसनं येन स तथा रमाप्रेमपात्रीभूत इत्यर्थ इति विष्णुपक्षे व्याख्याय। कमलानां पद्मानां उन्मीलनं विकसनं येन स तथेति सूर्यपक्षे व्याख्यातमिति स्फुटमेवानेकधर्मपूर्वकत्वम्। व्युत्पन्निव्युत्पाद्ययोरुभयोरपि विभिन्नत्वात्। अत एव मयार्थश्लेषोदाहरणविवरणे 'अयं समुद्यन्–' इत्यादिकृष्णलीलामृतीयं द्वितीयमुदाहरणं निरुक्तरसगङ्गाधरोदाहरणास्वरसमुक्तलक्षणमथवेति संसूच्य लिखितम्। तत्रापि प्रफुल्लपद्माशयसद्मदीपक इति पदेनाभङ्गश्लेषोदाहरणत्वरूपं तं तथैव द्योतयित्वा सद्वृत्तमेवेत्यादिनीति शतपत्रीयपद्यमुदाहृत्य तत्रापि प्रकृताप्रकृतार्थश्लेषोदाहरणत्वरूपं तं पुनरपि तथैवाभिव्यज्य धन्यानामित्यादिभागीरथीकथापद्यमुदाहृतम्। तत्र मङ्गलग्रन्थत्वेन शृङ्गारप्राधान्यध्वननार्थकत्वेन च वाणीरमण्योरुभयोरपि प्रकृतत्वात्प्रकृतौचित्यमेव। परंतु सुवर्णरूपा इत्यत्र सुवर्णवत्काञ्चनवत्सर्वाभिलषणीयानि रूपाणि, सुन्दरीपक्षे गौरत्वाखिलावयवसुन्दरत्वतारुण्यलावण्यादिधर्मजातानि, वाणीपक्षे सुबन्तादिशब्दरूपाणि यासामिति। तथा नानालंकृतीत्यादिपदे च नानालंकृतिभिरुपमाद्यनेकालंकारैर्विलसन्तः शोभमानाः ध्वनयः व्यङ्ग्यार्थाः येषां तादृशाः प्रचाराः स्वयोग्यस्थाने संचाराः यासां

ता इति वाणीपक्षे, रमणीपक्षे तु नानालंकृतिभिर्बहुकङ्कणाद्याभरणैः विलसन्तः ध्वनयः येषां तादृशाः प्रचारा इत्यादिप्राग्वदेव व्युत्पत्तिर्बोध्येत्यलं प्रसक्तानुप्रक्त्येति शिवम् ॥ ननु यत्प्रागेकशतोत्तरषडशीतितमश्लोकतट्टीकयोरप्रकृतश्लेषाख्यशुद्धश्लेषादिभेदषट्केपि श्लेषघटितत्वं विशेषणैकपदगं संमतम् । ननु विशेष्यपदगमपि अन्यथाशब्दशक्तिमूलध्वनिभेदोच्छेदापत्तेरित्युक्तम् । तत्र कीदृशं तच्छब्दशक्तिमूलध्वनियुक्तमुदाहरणं येन निरुक्तापत्तिर्मद्बुद्धिमारोहेदिति चेदुच्यते । सद्वृत्तमेव संसेव्येत्यादिप्रागुक्तं मदीयनीतिशतपत्रपद्यमेवाऽस्तु । तत्र हि द्वितीयो वर्णशब्दवाच्याक्षरपरो योऽर्थः प्रतीयते सतु शब्दशक्तिमूलध्वनेरेव विषयः व्यञ्जनां विना तत्र गत्यन्तराभावात् । एवमेवोक्तं रसगङ्गाधरेपि । यत्र तु प्रकृताप्रकृतोभयविशेष्ययोरपि श्लिष्टपदोपात्तत्वं सतु ध्वनेर्विषय इत्युक्तम् । सच यथा—'अविरलविगलितदानोदकधारासारसिक्तधरणितलः । धनदाप्रमहितमूर्तिर्जयति तरां सार्वभौमोऽयम्' इति । यच्चात्र कुवलयानन्दकारमतमनूद्य रसगङ्गाधरकारेण तृणितं तन्नातिरमणीयम् । तथाहि कुवलयानन्देहि यदत्र प्रकृताप्रकृतश्लेषोदाहरणे शब्दशक्तिमूलध्वनिमिच्छन्ति प्राञ्चस्तत्तु प्रकृताप्रकृताभिधानमूलस्योपमादेरलंकारस्य व्यङ्ग्यत्वाभिप्रायं नत्वप्रकृतार्थस्यैव व्यङ्ग्यत्वाभिप्रायम् । अप्रकृतार्थस्यापि शक्त्या प्रतिपाद्यस्याभिधाया अवश्यभावेन व्यक्त्यनपेक्षत्वादित्याद्युक्तं तत्र मुख्यं दूषणबीजं तावत्तस्य । 'अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते । संयोगाद्यैरवाच्यार्थधीकृद्व्यापृतिरञ्जनम्' इति प्राचामाचार्याणां ग्रन्थविरोध एव । परंतु कुवलयानन्दकारैरपीदमुक्तम् । सरस्वतीकण्ठाभरणोक्ताभिन्नपदश्लेषोदाहरणविवरण एव । तत्रतु 'श्लेषोऽनेकार्थकथनं पदैरेकेन कथ्यते । पदक्रियाकारकैः स्याद्भिन्नाभिन्नैः स षड्विधः' । तेषु भिन्नपदो यथा—'दोषाकरेण संबद्धो नक्षत्रपथवर्तिना । राज्ञा प्रदोषो मामित्थमप्रियं किं न बाधते' । अत्र प्रदोषो रात्रेः प्रथमयामः किमिति प्रियारहित मां न बाधते इत्युक्तेर्युक्तिमाह । इत्थमनुभूयमानेन प्रकारेण राज्ञा संबद्धः । कीदृशेन दोषाकरेण । नक्षत्रपथवर्तिनेति । योहि दोषाणामाकरेण राजमार्गानिगामिना च राज्ञा प्रकृष्टदोषः संबध्यते असावप्रियमवश्यं बाधत एव । तदत्र पूर्वस्मिन् प्राकरणिकेऽर्थे द्वितीयोऽर्थोऽप्राकरणिकः पदभेदेनोपश्लिष्यमाणो भिन्नपदश्लेषापदेशमासादयति । अभिन्नपदो यथा—'असावुदयमारूढः कान्तिमात्रक्तमण्डलः । राजा हरति लोकस्य हृदयं मृदुभिः करैः'। अत्रायमुदीयमानश्चन्द्रमा लोकस्य हृदयं हरतीत्युक्तेर्युक्तिमाह । राजानुरक्तमण्डलः उदयी मृदुकरः कान्तिमानिति । यो ह्येवंभूतो राजा सोऽवश्यं लोकस्य हृदयहारी भवति । अत्रापिच प्राकरणिकेऽर्थे प्राकरणिक उपश्लिष्यमाणः पदानामभेदेनाभिन्नपदः श्लेषो भवतीति । एवंच तन्मत एतस्यालंकारत्वात्तत्र च काव्यप्रकाशादिग्रन्थविरोधे तदभिप्रायवर्णनं कुवलयानन्दकारैः कृतम् । तथा चैतन्मते भवतु शब्दशक्तिमूलध्वनित्वमिति मतभेदेनोभयमपि संगतमेव । अतएव रसगङ्गाधरकारेणोक्तग्रन्थ-

विरोधाद्यभिधायान्ते स्वमतमुक्तम् । वयं तु ब्रूमः–अनेकार्थस्थले ह्यप्रकृताभिधाने । शक्तेरुक्तिसंभवोऽप्यस्ति । योगरूढिस्थले तु सोपि दुरापास्तः । यथा 'चाञ्चल्ययोगि नयनं तव जलजानां श्रियं हरतु । विपिनेऽतिचञ्चलानामपि च मृगाणां कथं नु तां हरति' । अत्र नैवाश्चर्यकारी चाञ्चल्यगुणरहितानां कमलानां चाञ्चल्यगुणाधिकेन च तव लोचनेन शोभायास्तिरस्कारः । आश्चर्यकारी तु हरिणानां तु तद्गुणयुक्तानां तिरस्कार इति वाच्यार्थे पर्यवसन्नेपि रूढिनिर्मुक्तकेवलयोगमर्यादया मूर्खपुत्राणां धनग्रहणं नेतृभिश्चौरैः सुशकं नतु गवेषकाणामिति जलजनयनमृगशब्देभ्यः प्रतीयमानोऽर्थः कथं विना व्यञ्जनव्यापारं उपपादयितुं शक्यते । यतो योगशक्ते रूढ्या दृढनियन्त्रिताया नास्ति स्वातन्त्र्यम् । अतएव पङ्कजादिपदेभ्यः पङ्कजनिकर्तृत्वेन कुमुदशैवालादिबोधो लक्षणयैव तादृशशक्तिज्ञानं पद्मत्वप्रकारकबोधत्वस्यैव कार्यतावच्छेदकत्वादित्युक्तं नैयायिकैः । अतएवच 'ईशानो भूतभव्यस्य स एवाद्य स उ श्वः' इति वेदान्तवाक्ये किमैश्वर्यविशिष्टः कश्चिज्जीवः प्रतिपाद्य ईश्वरो वेति संशये प्राप्ते 'शब्दादेव प्रमितः' इति सूत्रितमुत्तरमीमांसाकारैर्व्यासचरणैः । तस्मात्प्रागुक्तपद्ये प्रकृतचोरव्यवहारो न शक्तिवेद्योऽपि तु व्यक्तिवेद्य एव । मुख्यार्थबाधाभावाल्लक्ष्योऽपि न शक्यो वक्तुम् । तात्पर्यबाधस्तु तात्पर्यार्थबोधोत्तरबोध्यः सएव तु कथं स्यादिति व्यञ्जनैव शरणीकरणीया । नहि चोरव्यवहारोऽत्र वक्तुर्विवक्षित इति ज्ञाने श्रोतुः कश्चिदुपायोऽस्ति ऋते सहृदयतोन्मिषितादुक्तव्यापारादिति । तस्मादनेकार्थस्थले निरुक्तोदाहरणादौ शक्त्युक्तिसंभवस्त्वेतत्संमतोऽप्यस्त्येव । तेन मतभेदव्यवस्थयोभयाविरोध एव ज्यायानित्यलं पल्लवितेन ॥

अयं श्लेषालंकारः प्रायेणोपमावदनेकालंकारोपकारकत्वेन तत्साहचर्यातिवर्यतामेवैति यद्यप्यथापि दिङ्मात्रमुदाह्रियते । तत्र च्छेकापह्नुतौ यथा कुवलयानन्दे—'पद्मे त्वन्नयने स्मरामि सततं भावो भवत्कुन्तले नीले मुह्यति किं करोमि महितैः क्रीतोऽस्मि ते विभ्रमैः । इत्युत्स्वप्नवचो निशम्य स रुषा निर्भर्त्सितो राधया कृष्णस्तत्परमेव तद्व्यपदिशन् क्रीडाविटः पातु वः' इति । विष्णोर्हि 'ह्रीश्च ते लक्ष्मीश्च पत्न्यौ' इति श्रुतेः सरस्वती लक्ष्मीश्चेति पत्नीद्वयं । तत्संस्कारात्कचिद्वसन्तकाले वृन्दावने विकसितमधुमालतीनिकुञ्जे तत्कुसुमशय्यायां राधिकया सह यथेच्छसुरतविलासमासाद्य तयालिङ्गितः प्रसुप्तः स्वप्ने ते उभे अपि प्रेयसी विलोक्य पद्मे इत्यादिपूर्वार्धं जजल्प । हे पद्मे रमे, अहं त्वन्नयने सततं स्मरामि । एवं भो नीले, भर्तुः श्यामवर्णत्वात् शारदया निसर्गशुक्लयापि पातिव्रत्यपरिपालनाय कृष्णवर्णस्य कृतत्वान्नीला सरस्वतीति शास्त्रे प्रसिद्धमेव । तस्मादये नीले प्रेयसि, मे भावो मनःसंकल्पविशेषः भवत्कुन्तले तव कबरीभारे मुह्यति संसक्तो भवतीत्यर्थः । तत्र हेतुमाह । यतोऽहं ते तव महितैः पूजितैर्विभ्रमैर्विलासैः क्रीतः विशिष्टमूल्यप्रदानेन यावद्देहं दासीकृतोऽस्मि, अतः किं करोमि तदाज्ञापयेत्यार्थिकम् । इत्युत्स्वप्नवचः प्रारब्धवशादकस्मात्संजातजागरया राधया निशम्य

**सादृश्यादिप्रकारेणाप्रस्तुतव्यवहारतः ।**
**साऽप्रस्तुतप्रशंसा स्यात्प्रस्तुतो यत्र कथ्यते ॥ १९१ ॥**
**तजेस्विष्वर्क एवैको वन्द्यो यद्दीप्तियोगतः ।**
**तमःशमश्च पाषाणोऽप्येति तेजस्वितां यतः ॥ १९२ ॥**

---

श्रुत्वा सरुषा सत्या निर्भर्त्सितः कृष्णः तद्वचः तत्परमेव हे राधे, त्वन्नयने अहं पद्मे स्मरामि, तथा नीले अतिश्यामवर्णे भवत्कुन्तले इत्यादि राधिकापरमेव व्यपदिशन्नित्यादि स्पष्टमेव । यथावा साहित्यदर्पणे—'काले पयो धराणामपतितया नैव शक्यते स्थातुम् । उत्कण्ठितासि तरले नहि नहि सखि पिच्छिलः पन्थाः' इति । अत्र अपतितया पतिवियुक्तयेति स्वाभिमतम्, योजितं तु अपतितया अस्खलितया मयेत्यादि । शिष्टं तु स्पष्टमेव ॥ १९० ॥ एवं श्लेष निरूप्य तस्य प्रकृताप्रकृतघटितत्वप्रसङ्गसंगतामप्रस्तुतप्रशंसां लक्षयति—**सादृश्यादीति** । यत्र यस्यां वक्ष्यमाणायामलंकृताविर्त्यर्थः । **सादृश्यादीति** । सादृश्यं प्रागुक्तमुपमानोपमेयसाधर्म्यम् । आदिना वक्ष्यमाणाः कार्यकारणादयः । एवंच साधर्म्याद्यन्यतमप्रकारेणेति यावत् । अप्रस्तुतेति । अप्रस्तुतः अप्रकृतः अवर्ण्य इत्येतत् एतादृशो यो व्यवहारस्तेनेत्यर्थः । सार्वविभक्तिकस्तसिः । व्यधिकरणे तृतीये । प्रस्तुतः प्रकृतः संवर्ण्य इति यावत् । एतादृशः व्यवहार इत्यार्थिकम् । कथ्यते ज्ञाप्यते । सा अप्रस्तुतप्रशंसा अलकृतिः स्यादित्यन्वयः । एवंच साधर्म्याद्यन्यतमप्रकारकरणकाप्रस्तुतव्यवहारवर्णननिमित्तकप्रस्तुतव्यवहारप्रतिपादककाव्यव्यङ्ग्यार्थोपस्कारकचमत्कारजनकत्वमप्रस्तुतप्रशंसात्वमित्येव तल्लक्षणं फलितम् । अत्र वक्ष्यमाणानेकतद्भेदसंग्रहार्थं साधर्म्यादीत्यादिकरणकान्तम् । समासोक्त्यतिव्याप्तिव्यावृत्तये अप्रस्तुतव्यवहारेति । स्तुतिनिन्दोभयस्यापि संग्रहार्थं वर्णनेति निमित्तपदमुपादानीभूतकाव्यव्यावृत्तय एव । पर्यायोक्तव्यावृत्तिसिद्धये प्रस्तुतव्यवहारप्रतिपादकेति । काव्येत्यादिन्वलकृतिसामान्यसंग्रहार्थं प्रायः प्राग्व्याख्यातमेव । तदुक्तं रसगङ्गाधरे—'अप्रस्तुतेन व्यवहारेण सादृश्यादिवक्ष्यमाणप्रकारान्यतमप्रकारेण प्रस्तुतव्यवहारो यत्र प्रशस्यते सा अप्रस्तुतप्रशंसा । प्रशंसनं च वर्णनामात्रं नतु स्तुतिः । 'धिक्कालस्योन्नततां यस्य च्छायापि नोपकाराय' इत्यादावव्याप्त्यापत्तेः । इयं पञ्चधा अप्रस्तुतेन स्वेन सदृशं प्रस्तुतं गम्यते यस्यामित्येका, कार्येण कारणमित्यपरा, करणेन कार्यमिति तृतीया, सामान्येन विशेष इति चतुर्थी, विशेषे सामान्यमिति पञ्चमीति ॥ १९१ ॥ तामुदाहरति—**तेजस्विष्विति** । पूर्वार्धमिदं निगदव्याख्यातमेव । तमःशमश्चेति । 'माया च तमोरूपानुभूतेः' इति श्रुतेरत्र तमःपदमिदं श्लिष्टम् । तेन प्रकृतोऽत्र सद्गुरुरेव नतु कश्चिच्छौर्योत्कर्षशाली भूपाल इति द्योत्यते । चः समुच्चये । तथा यतः यत्संबन्धित्वेन यत्स्वामिक इत्यर्थः । पाषाणोपि । एतेनातिजाड्यात्रैकालिकतत्वानर्हत्वं ध्वन्यते । सूर्यकान्त इत्यर्थः । तेजस्वितां वन्द्युत्पा-

दकत्वेन प्रशस्ततेजःशालितामिति यावत् । एतीति संबन्धः । तस्माद्यत्कृपाकटाक्षयोगेन सामान्यतः सर्वेषामधिकारिकुञ्जराणामज्ञानान्ध्यविध्वंसनं वर्तते तद्वन्मादृशः प्रस्तरप्रायजडतरान्तःकरणोऽपि यत्स्वामिकत्वादेव अद्वैतशास्त्रीयग्रन्थरचनरूपप्रशस्ततेजोवत्त्वं प्राप्नोति स एकः केवलः श्रीसद्गुरुरेव सकलैश्वर्यवत्सुबुद्धयैवादौ वन्दनीय इत्याशयः । गत इत्यावृत्त्या हेतुपरमपि योजनीयम् । तेन काव्यलिङ्गालंकारोप्येतदङ्गतयात्र सिद्ध्यतीत्याकूतम् । एवंचात्र सूर्यस्य श्रीमद्गुरुणासह तमःशामकत्वादिरूपसाधर्म्यस्य वक्ष्यमाणतद्भेदमध्ये प्रथमस्य यद्दीप्तियोगतः तमःशमश्चेत्यादौ वर्णितत्वेन तत्प्रकारकरणकत्वात्तेजस्विष्वर्क एवेत्यादिना अप्रस्तुतसूर्यव्यवहारवर्णननिमित्तकप्रस्तुतसद्गुरुव्यवहारप्रतिपादकत्वादेतत्काव्यव्यङ्ग्यशान्तरसानुप्राणितश्रीगुरुविषयकरतिरूपव्यङ्ग्यार्थोपस्कारकचमत्कारजनकत्वाच्च लक्षणसंगतिः । यथावा काव्यप्रकाशे । सा च—'कार्ये निमित्ते सामान्ये विशेषे प्रस्तुते सति । तदन्यस्य वचस्तुल्ये तुल्यस्येति च पञ्चधा' । तदन्यस्य कारणादेः । क्रमेणोदाहरणानि—'याताः किं न मिलन्ति सुन्दरि पुनश्चिन्ता त्वया मत्कृते नो कार्या नितरां कृशासि कथयत्येवं सबाष्पे मयि । लज्जामन्थरतारकेण निपतत्पीताश्रुणा चक्षुषा दृष्ट्वा मां हसितेन भाविमरणोत्साहस्तया सूचितः' । अत्र प्रस्थानात्किमिति निवृत्तोऽसीति कार्ये पृष्टे कारणमभिहितम् । 'राजन्राजसुता न पाठयति मां देव्योऽपि तूर्णीं स्थिताः कुब्जे भोजय मां कुमारसचिवैर्नाद्यापि किं भुज्यते । इत्थं नाथ शुकस्तवारिभवने मुक्तोऽध्वगैः पञ्जराच्चित्रस्थानवलोक्य शून्यवलभीष्वेकैकमाभाषते' । अत्र प्रस्थानोद्यतं ज्ञात्वा सहसैव त्वदरयः पलाय्य गता इति कारणे प्रस्तुते कार्यमुक्तम् । 'एतत्तस्य मुखात्कियत्कमलिनीपत्रे कणं वारिणो यन्मुक्तामणिरित्यमंस्त स जडः शृण्वन्यदस्मादपि । अङ्गुल्यग्रलघुक्रियाप्रविलयिन्यादीयमाने शनैः कुत्रोड्डीय गतो ममेत्यनुदिनं निद्राति नान्तःशुचा' । अत्रास्थाने जडानां महत्वसंभावना भवतीति सामान्ये प्रस्तुते विशेषः कथितः । 'सुहृद्वधूबाष्पजलप्रमार्जनं करोति वैरप्रतियातनेन यः । स एव पूज्यः स पुमान्सनीतिमान् सुजीवितं तस्य स भाजनं श्रियः' । अत्र कृष्णं निहत्य नरकासुरवधूनां यदि दुःखं शमयसि तदा त्वमेव श्लाघ्य इति विशेषे प्रस्तुते सामान्यमुदितम् । तुल्ये प्रस्तुते तुल्याभिधाने त्रयः प्रकाराः । श्लेषः समासोक्तिः सादृश्यमात्रं वा तुल्यान्तरस्याक्षेपहेतुः । क्रमेणोदाहरणानि—'पुंस्त्वादपि प्रविचलेद्यदि यद्यधोऽपि यायाद्यदि प्रणयनेन महानपि स्यात् । अभ्युद्धरेत्तदपि विश्वमितीदृशीयं केनापि दिक्प्रकटिता पुरुषोत्तमेन' । 'येनास्यभ्युदितेन चन्द्र गमितः क्लान्तिं रवौ तत्र ते युज्येत प्रतिकर्तुमेव न पुनस्तस्यैव पादग्रहः । क्षीणेनैतदनुष्ठितं यदि ततः किं लज्जसे नो मनागस्त्वेवं जडधामता तु भवतो यद्व्योम्नि विस्फूर्जति' । 'आदाय वारि परितः सरितां मुखेभ्यः किं तावदर्जितमनेन दुरर्णवेन । क्षारीकृतं च वडवादहने हुतं च पातालकुक्षिकुहरे विनिवेशितं च' इति ।

विस्तरस्तु तत्रैवेह द्रष्टव्यः प्रदीपादावपि । सरस्वतीकण्ठाभरणे त्वत्र प्रकारान्तरमेवोक्तं वाच्यप्रत्येतव्यादिबहुविधभेदैः । अथापि दिङ्मात्रं ततः संगृह्यते। वाच्या प्रत्येतव्या च क्रमाद्यथा—'पङ्गो धन्यस्त्वमसि न गृहं यासि योऽर्थी परेषां धन्योऽन्ध त्वं धनमदवतां नेक्षसे यन्मुखानि । श्लाघ्यो मूकस्त्वमसि कृपणं स्तौषि नाथाशया यः स्तोतव्यस्त्वं बधिर न गिरं यः खलानां शृणोषि' । 'कामं वनेषु हरिणास्तृणानि खादन्त्ययत्नसुलभानि । विदधति धनिषु न दैन्यं ते किल पशवो वयं सुधियः' इति । यथावा प्रतापरुद्रीयेऽप्येवमेव—'आशासु प्रशमितवासनादयेभ्यः किं लब्धं भ्रमरगणैर्जरत्तरुभ्यः । पुन्नागो नवनवसौरभप्रसूनैरामोदं दिशति निवासमारभध्वम्' इति । 'द्रष्टुमना अपि न पश्यति न भणति वक्तुं सकुतूहलापि। स्पर्शोत्सुकापि न स्पृशति वनितायाः कीदृशी सृष्टिः' इति च च्छायेयम् । यथावा साहित्यदर्पणेऽप्येवमेव—'इन्दुर्लिप्त इवाञ्जनेन जडिता दृष्टिर्मृगीणामिव प्रम्लानारुणिमेव विद्रुमदलं श्यामेव हेमप्रभा । कार्कश्यं कलया च कोकिलवधूकण्ठेष्विव प्रस्तुतं सीतायाः पुरतश्च हन्त शिखिनां बर्हाः सगर्हा इव' । अत्र संभाव्यमानेभ्य इन्द्वादिगताञ्जनलिप्तत्वादिभ्यः कार्येभ्यो वदनादिगतसौन्दर्यविशेषरूपं प्रस्तुतं कारणं प्रतीयते । 'गच्छामीति मयोक्तया मृगदृशा निःश्वासमुद्रेकिणं मुक्त्वा तिर्यगवेक्ष्य बाष्पकलुषेणैकेन मां चक्षुषा । अद्य प्रेम मदर्पितं प्रियसखीवृन्दे त्वया बध्यतामित्थं स्नेहविवर्धितो मृगशिशुः सोत्प्रासमाभाषितः' इति च । यथावा कुवलयानन्दे—'सौहार्दस्वर्णरेखाणामुच्चावचभिदाजुषाम् । परोक्षमिति कोऽप्यस्ति परीक्षानिकषोपलः' । अत्र यदि त्वं प्रत्यक्षइव परोक्षेऽपि मम हितमाचरसि तदा त्वमुत्तमसुहृदिति विशेषे वक्तव्यत्वेन प्रस्तुते सामान्यमभिहितमिति । तत्रैव यथावा तदीये वरदराजस्तवे—'आश्लिष्य नूनममृतद्युतयः पदं ते देहक्षयोपनतदिव्यपदाभिमुख्याः । लावण्यपुण्यनिचयं सुहृदि त्वदास्ये विन्यस्य यान्ति मिहिरं प्रतिमासभिन्नाः' । अत्राप्राकरणिकचन्द्रगततयोत्प्रेक्षमाणेन लावण्यनिचयविन्यासेन कारणेन तत्कार्यमनन्तकोटिचन्द्रलावण्यशालित्वमनन्यमुखसाधारणं भगवन्मुखे वर्णनीयतया प्रस्तुतं प्रतीयते । तथाहि चन्द्रे तावन्मन्त्रलिङ्गाद्वृद्धिक्षयाभ्यां भेदाध्यवसायाद्वा प्रतिमासभिन्नत्वेन वर्णितास्तेनानानाश्चन्द्रा अनन्तकोटय इति सिद्धम् । कालस्यानादित्वात् । सर्वेषां च तेषां आकाशसमाश्रयणं श्लेषमहिम्ना भगवच्चरणसमाश्रयणेनाध्यवसितम् । भगवच्चरणप्रपन्नानां च देहक्षयोपस्थितौ परमपदप्राप्त्याभिमुख्यं तदानीमेव स्वसुहृद्द्वेष्ये स्वकीयसुकृतस्तोमनिवेशनं ततः सूर्यमण्डलप्राप्तिश्चेत्येतत्सर्वं श्रुतिसिद्धमिति तदनुरोधेन तेषां देहक्षयकालस्यामावास्यारूपस्योपस्थितौ सूर्यमण्डलप्राप्तेः प्राक्प्रत्यक्षसिद्धपुण्यत्वेन निरूपितस्य लावण्यस्य प्रहाणं निमित्तीकृत्य तस्य चन्द्रमादृदयस्वरूपोपचरिततत्सौहार्दवति भगवन्मुखे न्यसनमुत्प्रेक्षितम् । यद्यपि सुहृद्द्वेष्ये तावत्स्वपुण्यसंक्रमणं भवति तथाप्यत्र सुहृदि-

१ 'नवो नवो भवति जायमानः' इत्यादि ।

त्येकवचनेन भगवन्मुखमेव चन्द्रस्य मुहृद्भूतं न मुखान्तराणि चन्द्रसादृश्यगन्धस्यास्पदानीति भगवन्मुखस्येतरमुखेभ्यो व्यतिरेको व्यञ्जितः । यद्यपि श्रुतौ सूर्यमण्डलप्राप्त्यनन्तरं भाविविरजानद्यतिक्रमणानन्तरमेव मुहूर्तफलकृतसंक्रमणं श्रूयते तथापि शारीरकशास्त्रे तस्यार्थवशात्प्रागभावः स्थापित इति तदनुसारेण विन्यस्य मिहिरं यान्तीत्युक्तम् । कार्यनिबन्धना यथा—'नाथ त्वदङ्घ्रिनखधावनतोयलग्नास्तत्कान्तिलेशकणिका जलधिं प्रविष्टाः । ता एव तस्य मथनेन घनीभवन्त्यो नूनं समुद्रनवनीतपदं प्रपन्नाः' । अत्र भगवत्पादाम्बुजक्षालनतोयरूपायां दिव्यसरिति अलक्तरसादिवल्लग्नानां तया समुद्रं प्रविष्टानां नखकान्तिलेशकणिकानां परिणामतया संभाव्यमानेन समुद्रनवनीतपदवाच्येन चन्द्रेण कार्येण तन्नखात्युत्कर्षः प्रतीयते । यथावा—'अस्याश्चेद्गतिसौकुमार्यमधुना हंसस्य गर्वैरलं संल्लापो यदि साध्यतां परभृतैर्वाचंयमत्वं वरम् । अङ्गानामकठोरता यदि दृषत्प्रायैव सा मालती कान्तिश्चेत्कमला किमत्र बहुना काषायमालम्बताम्' इति । तत्रैवाग्रे यथावा—'तापत्रयौषधवरस्य तव स्मितस्य निःश्वासमन्दमरुता वितुषीकृतस्य । एते कडङ्गरचया इव विप्रकीर्णा जैवातृकस्य किरणा जगति भ्रमन्ति' । अत्र ह्यप्रस्तुतानां चन्द्रकिरणानां भगवन्मन्दस्मितरूपदिव्यौषधधान्यविशेषकडङ्गरचयोत्प्रेक्षणे भगवन्मन्दस्मितस्य तत्सारतारूपः कोऽप्युत्कर्षः प्रतीयते । नच धान्यकडङ्गरचययोः कार्यकारणभावादिसबन्धोऽस्ति । अतः सहोत्पत्त्यादिकमपि संबन्धान्तरमाश्रयणीयमिति । यथावा रसगङ्गाधरे—'आनम्य वल्गुवचनैर्विनिवारितेऽपि रोषात्प्रयातुमुदिते मयि दूरदेशम् । बाला कराङ्गुलिनिदेशवशंवदेन क्रीडाबिडालशिशुनाशु रुरोध मार्गम्' । तत्रैवाग्रे यथा—'पाण्डित्यं परिहृत्य यस्य हि कृते बन्दित्वमालम्बितं दुष्प्रापं मनसापि यो गुरुतरैः क्लेशैः पदं प्रापितः । रूढस्तत्र स चेन्निगीर्य सकलां पूर्वोपकारावलिं दुष्टः प्रत्यवतिष्ठते तदधुना कस्मै किमाचक्ष्महे' । अत्र दुष्टेषु कृत उपकारः परिणामे न सुखं जनयतीति प्रस्तुतं विशेषेण सामान्यं गम्यते । वस्तुतस्तु प्रथमस्याप्रस्तुतप्रशसाप्रकारस्य नानाविधत्वं संभवति । यत्रात्यन्तमप्रस्तुतेन वाच्येन प्रस्तुतं गम्यते स प्रकारो निगदितएव । यत्र च स्थलविशेषे वृत्तान्तद्वयमपि प्रस्तुतं सोऽप्येकः । यथा जलक्रीडाप्रकरणे भ्रमरकमलिन्यादिषु पुरःस्थितेषु नायके च स्वनायिकायामननुरक्ते पार्श्ववर्तिन्या नायिकासख्याः कस्याश्चिदुक्तौ-'मलिनेऽपि रागपूर्णां विकसितवदनाममन्दजल्पेऽपि । त्वयि चपलेऽपि च सरसां भ्रमर कथं वा सरोजिनीं त्यजसि' इति पद्ये । अथात्र कथमप्रस्तुतप्रशंसा वाच्यार्थस्य प्रस्तुतत्वेन तल्लक्षणानालीढत्वादितिचेन्न । अप्रस्तुतशब्देन हि मुख्यतात्पर्याविषयीभूतोऽर्थो विवक्षितः।सच क्वचिदत्यन्ताप्रस्तुतः क्वचित्प्रस्तुतश्चेति न कोपि दोषः। नच ध्वनिमात्रस्याप्रस्तुतप्रशंसात्वापत्तिरिति वाच्यम् । अतएव तत्र सादृश्याद्यन्यतमप्रकारेणेति विशेषणमुपात्तमिति विभावनीयम् । एतेन द्वयोः प्रस्तुतत्वे

१ 'दिगन्ते श्रयन्तेइत्याद्युदाहृतस्येत्यर्थः'–२ दिगन्तइत्यादिना.

**तिर्यक्ष्वपि तरः सिंहो भगवानपि शत्रुहृत्।**
**यत्सारूप्यमवाप्यैव समभूद्भक्तवत्सलः ॥ १९३ ॥**
**वर्ण्येन वर्ण्यव्यक्तौ स्याद्दीक्षितः प्रस्तुताङ्कुरः।**
**स्वर्द्रुमौलेरलौ गुञ्जत्यपि मुग्धासि मालति ॥ १९४ ॥**

प्रस्तुताङ्कुर इति कुवलयानन्दाद्युक्तमुपेक्षणीयम् । किंचिद्वैलक्षण्यमात्रेणैवालंकारान्तरत्वकल्पने वाग्भङ्गीनामानन्त्यादलंकारानन्त्यप्रसङ्ग इत्यसकृदावेदितत्वादिति । अत्रोच्यते । यदिदं यत्र चेत्यादिना भवता व्यवस्थाप्य कुवलयानन्दोपेक्षणमाज्ञप्तं तत्त्वद्ग्रन्थेन सहैवाग्रिमेण विरुद्धम् । तथाहि अग्रे त्वयैवोक्तम्। एवं च वाच्येन व्यक्तेन वा अप्रस्तुतेन वाच्यं व्यक्तं वा प्रस्तुतं यत्र सादृश्याद्यन्यतमप्रकारेण प्रशस्यते साऽप्रस्तुतप्रशंसेति तल्लक्षणपरिष्करणं, तथा अप्रस्तुतप्रशंसायां प्रस्तुतं व्यङ्ग्यमिति निर्विवादमिति च तदग्रे स्वरहस्यकथनमपि च कृतम्। तदुक्तरीत्या मलिनेपीत्यादिपद्ये 'आपेदिरेऽम्बरपथं परितः पतङ्गा भृङ्गाररसालमुकुलानि समाश्रयन्ते। संकोचमञ्चति सरस्त्वयि दीनदीनो मीनो नु हन्त कतमां गतिमभ्युपैतु' इति तावक एव तादृक्पद्यान्तरे चोभयोरपि प्रस्तुतत्वेनायुष्मतोऽभिमतत्वे कथं संगच्छेत। नहि कमलिनीभ्रमरादिरप्रस्तुतो वाच्योऽर्थोऽपि लक्षणे संगृहीतः, नाप्यव्यङ्ग्यस्य शक्त्येकगम्यस्य तस्य प्रकृतत्वं संभवति। उक्तनियमभङ्गापत्तेः। किंच वाच्यं व्यक्तं वा प्रस्तुतमिति परिष्कारे वाच्यस्यापि प्रस्तुतत्वकथनं प्रस्तुतव्यङ्ग्यमिति निर्विवादमित्युत्तरग्रन्थविरुद्धं चेति निर्मत्सराः सूरीश्वरा एव विचारयन्त्विति दिक् ॥ १९२ ॥ प्रोक्तोदाहरणे भानोर्यावच्चक्षुष्मत्सुलभत्वेन परमदुर्लभसद्गुरुनिदर्शनानौचित्यास्वारस्यादुदाहरणान्तरमाह—**तिर्यक्ष्वपीति**। पक्षे शत्रुर्मोहः ॥ १९३ ॥ एवमप्रस्तुतप्रशंसां निरूप्य तत्प्रसङ्गसंगन्तं प्राचामसंमतमपि कुवलयानन्दे श्रीमदप्पय्यदीक्षितैः–'प्रस्तुतेन प्रस्तुतस्य द्योतने प्रस्तुताङ्कुरः। किं भृङ्ग सत्यां मालत्यां केतक्या कण्टकेद्धया' इत्यादिना प्रतिपादितं प्रस्तुताङ्कुरालंकारं लक्षयति—**वर्ण्येनेत्यर्धेनैव**। कवेरन्यस्य वा वक्तुर्वर्णयितुमिष्टेन प्रस्तुतव्यवहारेणेत्यर्थः। वर्ण्येति प्रस्तुतव्यवहारव्यञ्जनायां सत्यामित्येतत्। दीक्षितः निरुक्तरीत्या श्रीमदप्पय्यदीक्षितसंमत इति यावत्। **प्रस्तुतेति**। प्रस्तुताङ्कुरनामकोऽलंकारः स्यादिति संबन्धः। एवंच शक्तिवृत्तिप्रतिपाद्यप्रकृतव्यवहारकरणकव्यञ्जनावृत्तिद्वारकप्रतिपद्यमानप्रस्तुतव्यवहारत्वं प्रस्तुताङ्कुरालंकारत्वमिति तत्सामान्यलक्षणं पर्यवसितम्। तमुदाहरति—**स्वरित्यर्धेनैव** । कल्पद्रुमकुसुमशेखरसंबन्धिनीत्यर्थः । अलौ भ्रमरे गुञ्जत्यपि त्वद्विकासनाभ्यर्थनार्थं गुञ्जारवमपि कुर्वति सतीत्यर्थः। एतेनात्यादरः सूच्यते । रे मालति, त्वं मुग्धैवास्यविकसितैव वर्तसे इत्यन्वयः। पक्षे इदं हि वृन्दावने मानवतीं राधिकां प्रति मालतीनिकुञ्जे गुञ्जद्भ्रमरकोरकपुञ्जेऽनुनयत्यपि भगवति अप्रसन्नां तां प्रति तत्सखीवाक्यं। तत्र मालतीमुकुल एव भूयः परिभ्रमणेन गुञ्जद्भ्रमरवरां मालती-

मुद्दिश्य—**स्वरिति।** एतेन कल्पद्रुमस्य क्षीरसमुद्रमथनोत्पन्नत्वात्तत्सोदरीभूतन्दिराधरामृततृप्तत्वं भगवति व्यज्यते । एतादृशे अलौ श्रीकृष्णे कृष्णवर्णत्वात्पराङ्गनालम्पटत्वाच्च षट्पदसदृश इत्यर्थः । एतेन सारग्राहित्वेन गुणज्ञत्वं द्योत्यते। तत्रापि गुञ्जत्यपि गुञ्जारवसदृशमधुरतरानुलापमपि करोति सतीत्येतत् । एतेनात्यादरो ध्वन्यते । ननु त्वद्दोषात्तूष्णीमवस्थित इत्यर्थः। एवमपि रे मालति, तत्सदृशकृशाङ्गि निसर्गसौरभ्यशालिनि राधिके, त्वं मौनमेवावलम्बस इदमनुचितमेवेति भावः। एतेन यद्ययं विफलयत्नत्वेनोदासीनः सन्नन्यत्रेयात्तर्हि तदानीं त्वन्मुखविकासोऽपि तदास्वादकाभावेन विफल एव स्यादतस्त्वं द्रुतमेव मदुपदेशं हिततमं मत्वा प्रसीदेत्याशयः सूच्यते । यथावा कुवलयानन्दे—'अन्यासु तावदुपमर्दसहासु भृङ्ग लोलं विनोदय मनः सुमनोलतासु । बालामजातरजसं कलिकामकाले व्यर्थं कदर्थयसि किं नवमल्लिकायाः' इति । यथावा तत्रैव—'कोशद्वन्द्वमियं दधाति नलिनी कादम्बचञ्चुक्षतं धत्ते चूतलता नवं किसलयं पुंस्कोकिलास्वादितम् । इत्याकर्ण्य मिथः सखीजनवचः सा दीर्घिकायास्तटे चेलान्तेन तिरोदधे स्तनतटं बिम्बाधरं पाणिना' इति । एतस्यालंकारत्वे प्राचां संमतिरपि तत्रैव । उक्तं हि ध्वनिकृता—'शब्दार्थशक्त्याक्षिप्तोऽपि व्यङ्ग्योऽर्थः कविना पुनः। यत्राविष्क्रियते स्वोक्त्या सान्येवालंकृतिर्ध्वनेः' इति।तत्रैवाग्रे यथा—'रात्रिः शिवा काचन संनिधत्ते विलोचने जाग्रतमप्रमत्ते । समानधर्मा युवयोः सकाशे सखा भविष्यत्यचिरेण कश्चित्' इति । यथावा—'वहन्ती सिन्दूरं प्रबलकबरीभारतिमिरत्विषां वृन्दैर्बन्दीकृतमिव नवीनार्ककिरणम् । तनोतु क्षेमं नस्तव वदनसौन्दर्यलहरीपरीवाहस्रोतःसरणिरिव सीमन्तसरणिः' । अत्र वर्णनीयत्वेन प्रस्तुतायाः सीमन्तसरणेर्वदनसौन्दर्यलहरीपरीवाहस्रोतःप्रेक्षणेन परिपूर्णतटाकवत्परीवाहकारणीभूता स्वस्थाने अमान्ती वदनसौन्दर्यसमृद्धिः प्रतीयते । सापि वर्णनीयत्वेन प्रस्तुतैवेति। यथावा मदीये कृष्णलीलामृते—'सितैव कीर्तिर्भवति स्वभावतस्त्वतोऽस्य मूर्त्याऽसितयापि संगता । रसेन हीनापि च मे सरस्वती किमत्र तीर्थे त्वरतां न यास्यति' इति । अत्र वर्णनीयत्वेन बुद्धिस्थतया साक्षिप्रत्यक्षत्वादिदंशब्दनिर्दिष्टस्य भगवतः श्रीकृष्णस्य सद्गुणख्यातिलक्षणा कीर्तिः कविसमयैकसिद्धशुक्लरूपवत्त्वात् 'सितासिते सरिते यत्र संगते' इत्यादिश्रुत्यादिप्रसिद्धया जगदुद्धारकत्वसाधर्म्येण गङ्गया सह स्वाभाविकतादात्म्येण वर्णनार्थे स्तुतैव। तथास्य मूर्तिशब्दितेन्दीवरसुन्दरवर्णव्यक्त्या सहवासयोग्यया असिताख्यकालिन्दीतादात्म्यापन्नया संगतिरपि तस्याः संवर्णनाय प्रस्तुतैव। एवं गङ्गायमुनासंगमे प्रयागे शास्त्रैकप्रसिद्धायाः प्राच्याः सरस्वत्याः सुगुप्तत्वेन रसशब्दितजलविकलत्वात्तदभिन्नत्वेनामानित्वादिस्वाभाव्याद्रसपदवाच्यशृङ्गारादिराहित्येन वर्णनीया निजवाण्यपि तयोर्भगवत्कीर्तिमूर्त्योः सितासितयोर्मेलने सरस्वतीत्वेन संनिविष्टा प्रस्तुतैव तथोक्तसामग्र्या तस्यां तीर्थेश्वरपदवाच्यप्रयागवत्प्रकृतेऽपि प्राग्वत् श्लेषेण भगवत्कीर्तिमूर्तिवर्णनपरायां

**पर्यायोक्तं तु वर्ण्येऽन्यप्रकाराक्षेपतोऽभिधा।**
**किंचिद्विरहशून्योऽपि यो न भोगी स पातु माम्॥१९५॥**

मद्वाण्यां शास्त्रशिरोमणित्वनयत्वमप्याक्षेपादिध्वनितं प्रस्तुतमेवेत्यत्र शक्तिव्यक्तिभ्यां गम्ययोः क्रमात्त्रिपादीचरमचरणार्थयोरुभयोरपि प्रस्तुतत्वात्प्रस्तुताङ्कुरालंकारत्वं समुचितमेवेति ध्येयं धीरैः॥ १९४॥ एवं शक्यव्यङ्ग्योभयोरपि प्रस्तुतत्वे प्रस्तुताङ्कुरालंकारनिरूपणप्रसङ्गसंगतं पर्यायोक्तालंकारं सामान्यतो लक्षयति—**पर्यायोक्तं** त्वित्यर्धेनैव। वर्ण्ये व्यञ्जनावृत्तिप्रतिपाद्यवस्तुनि विषय इत्यर्थः। **अन्येत्यादि**। अन्यः स्वविवक्षितव्यङ्ग्यरूपादितरः एतादृशो यः प्रकारः धर्मः तथा आक्षेपः अर्थापत्तिव्यापारः ताभ्यामिति तथा क्वचिद्व्यङ्ग्यस्वरूपप्रकारेतरप्रकारेण क्वचिच्छक्यार्थान्यथानुपपत्तिलक्षणाक्षेपेण वेत्यर्थः। अभिधाशक्तिवृत्तिमूलकव्यक्तिवृत्तिप्रतिपाद्यार्थोपस्थितिस्तु पर्यायोक्तमकारणं भवतीत्यन्वयः। तदाहुः पण्डितराजाः—'विवक्षितस्यार्थस्य भङ्ग्यन्तरेण प्रतिपादनं पर्यायोक्तम्। येन रूपेण विवक्षितोऽर्थस्तदतिरिक्तः प्रकारो भङ्ग्यन्तरं आक्षेपो वेति'। तदुदाहरति—**किंचिदि**त्यर्धेनैव। यः वक्ष्यमाणगुणकः प्रकृतः पदार्थः। **किंचिदि**त्यादि। स्वकान्ताप्रतियोगिकयावद्वियोगविरहितोऽपीत्यर्थः। भोगी सबाह्याभ्यन्तरस्वाङ्गनासंभोगशालीत्येतत्। एतादृशो न भवति। स एव मां पातु भवभयाद्रक्षत्विति संबन्धः। अत्र भगवानर्धनारीश्वर एव सार्वदिकसार्वाशिकस्वरमणीविरहविधुरत्वे सति सर्वसंभोगशून्यत्वप्रकारेण तदुक्त्यन्यथानुपपत्तिलक्षणाक्षेपेण वा द्योतितः स्वकर्मकपालनक्रियाकर्तृत्वविशिष्टः सततमस्त्विति कव्याशीर्विषयः। तेनात्र निरुक्तपर्यायोक्तालंकरणलक्षणसमन्वयः स्पष्ट एव। यथावा कुवलयानन्दे—'लोकं पश्यति यस्याङ्घ्रिः स यस्याङ्घ्रिं न पश्यति। ताभ्यामप्यपरिच्छेद्या विद्या विश्वगुरोस्तव'। अत्र गौतमः पतञ्जलिश्च स्वासाधारणस्वरूपाभ्यां गम्यौ रूपान्तरेणाभिहिताविति। यथावा रसगङ्गाधरे—'सूर्याचन्द्रमसौ यस्य वासो रञ्जयतः करैः। अङ्गरागं सृजत्यग्निस्तं वन्दे परमेश्वरम्'। अत्रापि गगनाम्बर इति सूर्यचन्द्रकररज्यमानवस्त्र इत्याकारेण भस्माङ्गराग इत्यग्निसृज्यमानाङ्गराग इत्याकारेण निरूपित इति। किंच तत्रैवाग्रे यदस्मिन्प्रकरणे कुवलयानन्दकारेणोक्तं तत्सर्वमविचारितरमणीयमेव। तथाहि यत्तावदुच्यते—'नमस्तस्मै कृतौ येन मुधा राहुवधूस्तनौ'। अत्र भगवान्वासुदेवः स्वासाधारणरूपेण गम्यः राहुवधूकुचवैयर्थ्यकारकत्वेन रूपान्तरेणाभिहित इति। अत्र हि राहुवधूकुचवैयर्थ्यकारित्वेन राहुशिरश्छेदकारित्वं व्यज्यत इति तावन्निर्विवादम्। भगवद्वासुदेवत्वं तु विशेषणमर्यादया लभ्यं न काव्यमार्गीयव्यङ्ग्यकक्षामधिरोढुं प्रभवतीत्यादिना। तस्मादत्र च्छेदकारित्वेनावगमः पर्यायोक्तस्य विषयो ननु भगवद्रूपेणेति सहृदयैराकलनीयमिति सानुवादं कुवलयानन्दविदलनं यदकारि तत्तुच्छम्। विशेषाभावात्। तथाहि। त्वया तावद्राहुवधूकुचवैयर्थ्यकारित्वेन राहुशिरश्छेदकारित्वं व्यज्यत

**पर्यायोक्तान्तरं व्याजेनेष्टकृद्दीक्षितेरितम् ।**
**राधे मत्कन्दुकौ देहीत्याचकर्षाऽच्युतः कुचौ ॥ १९६ ॥**

इति तावन्निर्विवादमिति तस्मादत्र च्छेदकारित्वेनावगम इति चोपक्रमोपसंहारयोर्वदता 'नमस्तस्मै कृती येन मुधा राहुवधूकुचौ' इत्युदाहरणे पर्यायोक्तालंकारविषयत्वेन यद्राहुवधकर्तृत्वं धर्मजातमेव व्यङ्ग्यत्वेनेषितं तद्धर्मिणं विहाय नैव स्वरूपं लभेतेत्यतस्तद्धर्मीयतच्छब्दशक्यतावच्छिन्नत्वेन व्यक्तः श्रीमान्वासुदेवः प्रोक्तविशेषणनिरूपितविशेष्यतावच्छिन्नस्त्वार्थिकस्तत्रापि संमत एव । स एव कुवलयानन्दकारैः स्पष्टप्रतिपत्त्यर्थं संक्षेपतोऽत्र भगवानित्यादिना तथोक्तः । तस्यायमर्थः– अत्र नमस्तस्मा इत्याद्यर्धपद्य इत्येतत् । भगवान्मोहिनीरूपधारणैश्वर्यशाली वासुदेवः परमात्मा विष्णुरेव । **स्वेति** । स्वकीयमोहिन्यवतारात्मकाभिनवराहुशिरश्छेदनक्षमलोकोत्तरवपुषेति यावत् । गम्यः व्यञ्जनावृत्तिप्रतिपाद्य इत्यर्थः । राहुवधूकुचवैयर्थ्यकारकत्वेन निरुक्तराहुशिरश्छेदलक्षणकारणजन्यराहुवधूकुचवैयर्थ्यकाररूपकार्यात्मकधर्मविशेषावच्छिन्नरूपान्तरेणाभिहित इति विचारे तव तेषां च फलतः को विशेष इति निष्पक्षपातिनः सहृदयचक्रवर्तिन एव सूक्ष्मदृशा विमर्शयन्त्वित्यलं पल्लवितेन ॥ १९५ ॥ एवं 'पर्यायोक्तं तदप्याहुर्यद्व्याजेनेष्टसाधनम् । यामि चूतलतां द्रष्टुं युवाभ्यामास्यतामिह' । अत्र नायिकां नायिकेन संगम्य चूतलतादर्शनव्याजेन निर्गच्छन्त्या सख्या तत्स्वाच्छन्द्यसंपादनेनेष्टसाधनं पर्यायोक्तमिति कुवलयानन्दप्रसिद्धं पर्यायोक्तान्तरमपि ससंमतिकं संक्षेपतो लक्षयति—**पर्यायोक्तान्तरमिति** । अपरं पर्यायोक्तमित्यर्थः । व्याजेन किंचिन्मिषेण इष्टकृत् अभिमतार्थसाधनमिति यावत् । एतादृशं । दीक्षितेति । श्रीमदप्पय्यदीक्षितैः कुवलयानन्दे कथितमस्तीत्यर्थः । तदुदाहरति—**राधे मत्कन्दुकाविति** । हे राधे, त्वं इमौ स्वपरिहितकञ्चुक्यां निगूहितावित्यार्थम् । एतादृशौ मत्कन्दुकौ बलरामस्य मम च क्रीडार्थं निर्मितौ दिव्यवसनघनगुच्छावित्यर्थः । देहीति वदन्निति शेषः । एतादृशः सन् अच्युतः स्वभक्तानुग्रहार्थं लोकदृष्ट्या तावदेतदुपलक्षिता अनन्तलीलाः कुर्वन्नपि स्वाद्वैतसच्चिदानन्दरूपात्कालत्रयेऽप्यस्खलितः श्रीकृष्ण इत्यर्थः । कुचौ प्रकृतराधिकायाः स्तनावेवेति यावत् । आचकर्ष बलादाकर्षयामासेति संबन्धः । अत्र स्वकन्दुकद्वयनिगूहनं राधायामारोप्य तद्याचनच्छद्मना तस्याः स्तनमर्दनं नायककर्तृकं स्वेष्टसाधनं वर्णितमिति तल्लक्षणसंगतिः । यथावा कुवलयानन्द एव—'देहि मत्कन्दुकं राधे परिधाननिगूहितम् । इति विस्रंसयन्नीवीं तस्याः कृष्णो मुदेऽस्तु वः' इति । नन्वयमेवार्थः प्रकृतोदाहरणेऽपि भवता संग्रथित इत्यर्थचौर्यापत्तिरितिचेन्न । छायानुहरणस्यैवात्र मया कृतत्वात् । तस्य तु 'कविरनुहरति छायामर्थं कुकविः पदं चोरः । सकलप्रबन्धहर्त्रे साहसकर्त्रे नमस्तुभ्यम्' इत्यभियुक्तोक्त्या सर्वसंमतत्वात् । 'चक्राभिघातप्रसभाज्ञयैव चकार यो राहुवधूजनस्य । आलिङ्गनोद्दामविलासवन्ध्यं रतोत्सवं चुम्बनमात्रशेषम्' इत्यलंकारसर्वस्वकारोदा-

**निन्दास्तुतिभ्यां स्तुत्यादिसिद्धिर्व्याजस्तुतिर्मता ।**
**तमो हत्वापि बोधेन हा स्वभानमपि क्षतम् ॥ १९७ ॥**
**किं वर्णयामि संसार तव संसारतामहम् ।**
**यत्रेशाप्तिरपि प्रायो दुःखायैव वियोगतः ॥ १९८ ॥**

---

हरणच्छायायाः कुवलयानन्देऽपि 'नमस्तस्मै कृतौ येन मुधा राहुवधूकुचौ' इति पूर्वपर्यायोक्तोदाहरणेऽपि दृष्टत्वाच्च । अर्थचौर्यं हि तत् । यथा—'महान्तं विश्वासं तव चरणपङ्केरुहयुगे निधायान्यन्नैवाश्रितमिह मया दैवतमुमे । तथापि त्वच्चेतो यदि मयि न जायेत सदयं निरालम्बो लम्बोदरजननि कं यामि शरणम्' इति श्रीभगवत्पादीयसौभाग्यलहरीपद्यार्थस्य । 'तवालम्बादम्ब स्फुरदलघुगर्वेण सहसा मया सर्वेऽवज्ञासरणिमथ नीताः सुरगणाः । इदानीमौदास्यं यदि भजसि भागीरथि तदा निराधारो हा रोदिमि कथय केषामिह पुरः' इति गङ्गालहरीपद्ये संग्रथनं जगन्नाथीयम् ॥ १९६ ॥ एवं व्याजेष्टसाधनरूपं द्वितीयपर्यायोक्तप्रसक्तामिदानीं व्याजस्तुतिं लक्षयति—**निन्देत्याद्यर्धेनैव** । आदिना निन्दा । सिद्धिपदेन पर्यवसानम् । एवंच यत्र निन्दामुखेन स्तुतिः पर्यवस्यति स्तुतिमुखेन निन्दा वा पर्यवस्यति सा व्याजस्तुतिः । व्याजेन निन्दामिषेण स्तुतिर्व्याजापर्यवसितनिन्दात्वेन मिषरूपा वा स्तुतिरिति योगवृत्त्यापि यथार्थनाम्न्यलंकृतिरिति तल्लक्षणं सिध्यति । तदुक्तं कुवलयानन्दे—'उक्तिर्व्याजस्तुतिर्निन्दास्तुतिभ्यां स्तुतिनिन्दयोः । कः स्वर्धुनि विवेकस्ते पापिनो नयसे दिवम्' । 'साधु दूति पुनः साधु कर्तव्यं किमतः । परम् । यन्मदर्थे विलूनासि दन्तैरपि नखैरपि' इति । तामुदाहरत्यायामर्धेनैव । **तमो हत्वापीत्यादिना** । यथा जाग्रत्कालिकस्थूलदेहादिसंघातावच्छिन्नचैतन्यविषयकः प्रबोधः स्वप्नप्रयोजकसुषुप्त्याकारपरिणतावस्थाज्ञानरूपं तमः प्रभज्य व्यावहारिकं प्रपञ्चं प्रमापयतीति प्रसिद्धमेव । तथा तु प्रकृतेन अद्वैतब्रह्मात्मैक्यविषयकेन बोधेन नैव कृतं किंतु श्रीगुरुचरणविचारितवेदान्तमहावाक्यजेन खेदेन । तमः सव्याप्यकार्यक मूलाज्ञानं हत्वापि बाधित्वापि । हेति खेदे । स्वभानमपि अहं ब्रह्मज्ञानवानस्मीति बोधविषयकभानमपि क्षतम् । एवंच यत्र स्वविषयकभानस्यापि बाधस्तत्र परविषयकस्य तस्यासौ कैमुत्यसिद्ध एवेति किमनेन बोधेन कृतमिति यथाश्रुते निन्दया । 'यस्याऽमतं तस्य मतं मतं यस्य न वेद सः । अविज्ञातं विजानतां विज्ञातमविजानताम्' इत्यादिश्रुतिसहस्रसिद्धफलव्याप्त्यभावोपलक्षिताद्वैतसच्चिदानन्दब्रह्मात्मेतरयावद्दृश्यबाधफलकतया तत्स्तुतिरेव पर्यवस्यतीति लक्षणसंगतिः ॥ १९७ ॥ अथ द्वितीयां तामुदाहरति—**किं वर्णयामीति** । संसारतां सम्यक् सारवत्ताम् । यत्र संसारे । प्रायःपदमभेदाप्तिव्युदासाय । एवंचेयं स्तुतिरपि निन्दकपर्यवसायित्वाद्व्याजस्तुतिरेवेति लक्षणसंगतिः । यत्त्वत्र रसगङ्गाधरकारैः कुवलयानन्दीयानि अन्यनिन्दयान्यस्तुतेरन्यस्तुत्यान्यनिन्दाया अन्यस्तुत्यान्यस्तुतेश्च व्याजस्तुतित्वपराण्युदाहरणानि भ-

**यत्रान्यनिन्दाद्यैरस्मादन्यस्तुत्यादि साप्यसौ।**
**धिग्रागं नौमि विद्वांसं धन्यश्चन्द्रस्तदास्यरुक् ॥ १९९ ॥**
**व्याजनिन्दा तु यत्रान्यनिन्दयान्यस्य सा मता।**
**आशीं विहाय सर्पाणां जिह्वाच्छित्किं न निन्द्यते ॥२०० ॥**

त्यन्तरतयोक्तत्वात्कथंचिदङ्गीकृत्यापि 'अर्धं दानववैरिणा गिरिजयाप्यर्धं शिवस्याहृतं देवेत्थं जगतीतले स्मरहराभावे समुन्मीलति। गङ्गा सागरमम्बरं शशिकला नागाधिपः क्ष्मातल सर्वज्ञत्वमधीश्वरत्वमगमत्त्वां मां च भिक्षाटनम्' इति राजस्तुत्या तन्निन्दोदाहरणे यत्सर्वज्ञत्वादिप्रतीतिविरोधादिदूषणमुक्तं तद्रक्तुर्दरिद्रसंतापपोषकत्वाद्भूषणमेव ॥ १९८ ॥ नन्वेवं चेत्तर्हि पर्यायोक्तवदुक्तरूपा त्रिविधा व्याजस्तुतिरपि निरुक्तद्विविधव्याजस्तुतेरन्यैव कुवलयानन्दकारसमता वक्तव्या। तथाच व्याजस्तुतिपदशक्यतावच्छिन्नत्वेन तदैक्येऽप्यवान्तरभेदात्तत्पञ्चविधत्वं स्यादित्याशङ्क्य चमत्कारातिशयादिष्टमेवास्तीति समादधंस्तद्भेदत्रयलक्षणं संक्षिपति-**यत्रेत्यर्धेनैव**। अन्यनिन्दाद्यैः। आद्यपदेन तद्भिन्नस्तुतिर्ग्राह्या। बहुवचनं तु स्तुतिप्रयोजकस्तुत्यन्तरसंग्रहार्थम्। अस्मात्प्रकृतान्निन्द्यादेरित्यर्थः। अन्यस्तुत्यादि। आदिना निन्दास्तुती ग्राह्ये। एवंच यत्र अन्यनिन्दया तदितरस्तुतिः तथा अन्यस्तुत्या तदितरनिन्दा तद्वदन्यस्तुत्या तदितरस्तुतिरेव। सापि असौ व्याजस्तुतिरेव श्रीमदप्पय्यदीक्षितसमतास्तीत्यर्थः। तां त्रिविधामप्युदाहरति—**धिग्रागमित्या**-र्धेनैव। अत्र रागनिन्दया विरागस्तुतिर्विद्वत्स्तुत्या मूर्खनिन्दा चन्द्रस्तुत्या विद्वद्वदनस्तुतिश्चेति क्रमादुदाहरणत्रयं बोध्यम्। यथावा तत्त्रयमपि क्रमात्कुवलयानन्द एव—'कस्त्वं वानर रामराजभवने लेखार्थसंवाहको यातः कुत्र पुरागतः न हनुमान्निर्दग्धलंकापुरः। बद्धो राक्षससूनुनेति बहुशः संताडितस्तर्जितः सव्रीडात्तपराभवो वनमृगः कुत्रेति न ज्ञायते'। 'यद्वक्त्रं मुहुरीक्षसे न धनिनां ब्रूषे न चाटून्मृषा नैषां गर्ववचः शृणोषि न च तान् प्रत्याशया धावसि। काले बालतृणानि खादसि सुखं निद्रासि निद्रागमे तन्मे ब्रूहि कुरङ्ग कुत्र भवता किं नाम तप्तं तपः'। 'शिखरिणि क्व नु नाम कियच्चिरं किमभिधानमसावकरोत्तपः। तरुणि येन तवाधरपाटलं दशति बिम्बफलं शुकशावकः' इति च ॥ १९९ ॥ एवं तत्संमतामेव व्याजनिन्दामपि लक्षयति—**व्याजेति**। अन्यस्य तद्भिन्नस्य। तामुदाहरति—**आशीमिति**। आशीविष इत्यमराद्विषाधारदंष्ट्रामित्यर्थः। जिह्वाच्छित् काद्रवेयाणां दर्भोपरि पतितामृतावलेहनकाले तद्रसनाच्छेदनार्थं तत्र वज्रप्रेरक इन्द्र इत्यर्थः। प्रसिद्धमेवेदं महाभारतादौ। एवं चात्रेन्द्रनिन्दया सर्पनिन्देति लक्षणसंगतिः। तदुक्तं कुवलयानन्दे—'निन्दाया निन्दया व्यक्तिर्व्याजनिन्देति गीयते। विधे स निन्द्यो यस्ते प्रागेकमेवाहरच्छिरः'। यथावा—'विधिरेव विशेषगर्हणीयः करट त्वं रट कस्तवापराधः। सहकारतरौ चकार योऽसौ सहवासं सरलेन कोकिलेन'। यथावा—'लावण्यद्रविणव्ययो न गणितः क्लेशो महानर्जितः स्वच्छन्दं

**निषेधश्चारुराक्षेपः सोऽनेको मतभेदतः।**
**अस्तु चिन्तामणिर्मेऽसावथवास्ते गुरोः कृपा ॥ २०१ ॥**

चरतो जनस्य हृदये चिन्ताज्वरो निर्मितः। एषापि स्वगुणानुरूपरमणालाभाद्वराकी हता कोऽर्थश्चेतसि वेधसा विनिहितस्तन्वीमिमां तन्वता' इति च। एतन्मूलं तु पूर्वतन्त्रे नहि निन्दान्यायमूलीभूतमुदितानुदितहोमप्राशस्त्यादिश्रवणमेव। विस्तरस्तु कुवलयानन्दादावेव ॥ २०० ॥ एवं व्याजनिन्दानिरूपणप्रसक्तमाक्षेपालंकारं सामान्यतो लक्षयति—**निषेध इत्यर्धेन**। 'सूच्यग्रेण सुतीक्ष्णेन यावद्विध्यति मेदिनी। अहं तावन्न दास्यामि विना युद्धेन केशव' इत्यादिनिषेधव्युदासार्थं विशिनष्टि—**चारुरिति**। चारुत्वमत्र श्रवणमात्रेण चमत्कारकारकत्वमेव। एवंच स्वश्रवणमात्रेणानन्दजनकलौकिकनिषेधत्वमाक्षेपालंकारसामान्यलक्षणं पर्यवस्यति। अत्र लौकिकपदेन 'स एष नेति नेत्यात्मा' इत्यादिवैदिकनिषेधव्यावृत्त्या काव्यैकनिषेधसंग्रहः। नन्वेवं चेत्तर्हि तद्विशेषाः कतिविधाः सन्तीत्याशङ्क्य मतभेदेन तस्यानेकप्रकारकत्वमेवेत्याह—**स इत्यादिना**। एवंच तत्तन्मतभेदसिद्धतत्प्रकारभेदस्यानतिप्रयोजकत्वादिहासंग्राह्यत्वमेवेतिभावः। तमुदाहरति—**अस्त्वित्यर्धेनैव**। असौ सर्वेष्टदत्वेन शास्त्रप्रसिद्धः। तदुक्तं रसगङ्गाधरे मतभेदं निरूप्य 'इतरे तु निषेधमात्रमाक्षेपः। चमत्कारित्वं चालंकारसामान्यलक्षणप्राप्तमेव। तच्च व्यङ्ग्यार्थे सति संभवतीत्यतो व्यङ्ग्यो निषेधः सर्वोऽप्याक्षेपालंकारः' इति। तथाच प्रकृतोदाहरणे चिन्तितमात्रेण सर्वेष्टदातृत्वेन चिन्तामणिः प्रथमं प्रार्थितः पश्चाद्विचारे श्रीसद्गुरोः कृपायाः सततसर्वेष्टकारित्वसमनुभवात्तत्कैमर्थ्यमनुसंधाय मास्तु स इति व्यञ्जनायास्तन्निषेधबोधनायाथवेत्यादिचतुर्थपाद इति लक्षणसंगतिः। नन्वेवं यदि तदा त्वयापि लक्षणं 'व्यङ्ग्यो निषेध आक्षेपः' इत्येवं किमिति न कृतमिति वाच्यम्। वक्ष्यमाणस्य तद्भेदविशेषस्यासंग्रहापत्तेः। स च दर्शितः कुवलयानन्दकारैर्द्वितीयत्वेन—'आक्षेपः स्वयमुक्तस्य प्रतिषेधो विचारणात्। चन्द्र संदर्शयात्मानमथवास्ति प्रियामुखं' इति प्रथमं तत्प्रकारमुक्त्वा—'निषेधाभासमाक्षेपं बुधाः केचन मन्वते। नाहं दूती तनोस्तापस्तस्याः कालानलोपमः'। केचिदलंकारसर्वस्वकारादय इत्यमाहुः—'न निषेधमात्रमाक्षेपः किंतु यो निषेधो बाधितः सन्नर्थान्तरपर्यवसितः कंचिद्विशेषमाक्षिपति स आक्षेपः। यथा दूत्या उक्तौ नाहं दूतीति निषेधो बाधितत्वादाभासरूपः संघटनकालोचितकैतववचनपरिहारेण यथार्थवादित्वे पर्यवस्यन्निदानीमेवागत्य नायिकोज्जीवनीयेति विशेषमाक्षिपतीति। एवं चेह निषेधस्याभासत्वेन व्यङ्ग्यत्वाभावः स्फुट एव। चारुत्वं तूक्तविधया चमत्कारातिशयादेवेति ध्येयम्। यथावा तत्रैवाग्रे—'आक्षेपोऽन्यो विधौ व्यक्ते प्रतिषेधे तिरोहिते। गच्छ गच्छसि चेत्कान्त तत्रैव स्याज्जनिर्मम' इत्यादि। एवं च साहित्यदर्पणोक्तविध्याभासालंकारस्याप्यत्रैवान्तर्भावो व्याख्यातः। तत्रापि यथा 'गच्छ गच्छसि चेत्कान्त पन्थानः सन्तु ते शिवाः। ममापि जन्म तत्रैव भूयाद्यत्र गतो

**विरोधस्याल्पभासश्चेद्विरोधाभास उच्यते।**
**शुद्धः श्लेषादिमूलश्चेत्यसौ द्विविध इर्यते ॥ २०२ ॥**
**दृश्यमप्यास दृङ्मात्रं मेऽस्य दृङ्मात्रदर्शने।**
**सुप्त एव प्रबुद्धोऽयं द्विजराजत्रयीतनुः ॥ २०३ ॥**

---

भवान्' इत्येतत्पद्यस्यैव समुदाहृतत्वाद्विशेषाभावाच्च । यथावा रसगङ्गाधरे–'अभूदप्रत्यूहः कुसुमशरकोदण्डमहिमा विलीनो लोकानां सह नयनतापोऽपि तिमिरैः। तवास्मिन्पीयूषं किरति परितस्तन्वि वदने कुतोहेतोश्चेतो विधुरयमुदेति प्रतिदिनम्' इति। यथावा तत्रैवाग्रे—'किं निःशङ्कं शेषे शेषे वयसि त्वमागतो मृत्युः। अथवा सुखं शयीथा जननी जागर्ति जाह्नवी निकटे'। 'रीतिं गिराममृतवृष्टिकरीं त्वदीयां तां चाकृतिं कृतिवरैरभिनन्दनीयाम्। लोकोत्तरामथ कृतिं करुणारसार्द्रां ज्ञातुं न कस्यचिदुदेति मनः प्रसादम्'। अत्र करिष्यमाणमनःप्रसादस्य निषेधो वर्णनीयस्यानिर्वाच्यतां बोधयितुमिति। अयमपि निषेधः प्राग्वदेवाव्यङ्ग्योऽपि चारुत्वेन संग्राह्य एव। यथावा तत्रैवाग्रे—'तपोनिधे कौशिक रामचन्द्रं निनीषसे चेन्नय किं विकल्पैः।निरन्तरालोकनपुण्यधन्या भवन्तु वन्या इह जीवभाजः'। विस्तरस्तु तत्रैवानुसंधेय इति गौरवभयादुपरम्यते ॥ २०१ ॥ एवमाक्षेपालंकारस्य निषेधघटितत्वात्तत्प्रतिपादनप्रसङ्गसंगतं तन्मूलकं विरोधाभासालंकारं लक्षयति—**विरोधस्येत्यर्धेन**। तदुक्त रसगङ्गाधरे–'विरोधाभासविषयकप्राच्यादिमतभेदप्रपञ्चानन्तरम्।अयं च विरोधालंकारः कुवलयानन्दकृता उत्प्रेक्षाशिरस्कोऽप्युदाहृतः। यथा–'प्रतीपभूपैरिव किं ततो भिया विरुद्धधर्मैरपि भेत्तृतोज्झिता।अमित्रजिन्मित्रजिदोजसा स यद्विचारदृक्चारदृगप्यवर्तत' इति तस्य ससमतिकमलंकारान्तरमिश्रत्वमप्यभिधाय। विरोधप्रतीत्यनन्तरं यत्रार्थान्तरप्रतीत्या विरोधाभास इष्यत इति। कुवलयानन्देपि–'आभासत्वे विरोधस्य विरोधाभास इष्यते। विनापि तन्वि हारेण वक्षोजौ तव हारिणौ' इति। अस्य प्राचीनमतेऽनेकविधत्वेऽपि तस्यानतिप्रयोजकत्वाद्वैविध्यमेवाभिधत्ते—**शुद्ध इत्यादिना**। एतदप्युक्तं रसगङ्गाधर एव विरोधाभासप्रकरणे। वस्तुतो जात्यादिभेदानामहृद्यत्वात् शुद्धत्वश्लेषमूलत्वाभ्यां द्विविधो ज्ञेय इति। आदिनोत्प्रेक्षादिकमप्युदाहृतदिशैव बोध्यम् ॥ २०२ ॥ तत्र शुद्धमादावुदाहरति—**दृश्यमपीत्यादिपूर्वार्धेन**। मे मम अस्य पुरोवर्तित्वेन दृश्यस्यैव कस्यचित्पुरुषस्य। **दृङ्मात्रेति**। दृष्टिमात्रज्ञाने सतीत्यर्थः। दृश्यमपि दर्शनयोग्यमपि वस्तुजातम्। दृङ्मात्रं दृष्ट्येकरूपमासेति संबन्धः। एवं चेद सर्वथा विरुद्धमेव। नहि देवदत्तस्य यज्ञदत्तसंबन्धि चक्षुषः साक्षात्कारे सति यज्ञदत्ततद्भिन्नघटादिसकलं दृष्टिविषयीभूतं वस्तु स्वतदृष्ट्यन्यतरदृष्टिमात्रस्वरूपं संपद्यत इति विरोधः स्फुट एवाद्भुतरसव्यञ्जकेनापिना द्योतितः। अस्याभासत्वं तु यथा—अस्य स्मर्यमाणत्वेन साक्षिप्रत्यक्षस्य श्रीगुरोः दृङ्मात्रेति। कृपापाङ्गावलोकने सतीत्यर्थः। मे मम। दृश्यमपि यावद्द्वैतेन्द्रजालमपीति यावत्। एतेनासंभा-

**नन्वत्र कत्यपेरर्था नच ये कोशगा इति।**
**वाचकत्वं निपातानां न शाब्दिकनये यतः ॥ २०४ ॥**
**तन्न लक्षकताप्यस्य नापि द्योतकतास्त्यतः।**
**उक्तोदाहरणादीदं क सिद्ध्येदत उच्यते ॥ २०५ ॥**

वितत्वं व्यज्यते । दृश्यात्रं अद्वैतसच्चिदानन्दात्मैकरसमासेत्यन्वयः । एवंच प्राक् प्रतीतो विरोधस्त्वाभासमात्र एवेति भावः । यथावा काव्यप्रकाशे—'सृजति च जगदिदमवति च संहरति च हेलयैव यो नियतम् । अवसरवशतः शफरो जनार्दनः सोऽपि चित्रमिदम्'।'पेशलमपि खलवचनं दहति तरां मानसं सुतत्त्वविदाम् । परुषमपि सुजनवाक्यं मलयजरसवत्प्रमोदयति' इति च । रसगङ्गाधरेपि 'हर्षयन्ति क्षणादेव क्षणादेव दहन्ति च । यूनः स्मरपराधीनान्निर्दया हन्त योषितः' इति । सृजति चेत्यादि । अवसरेति । 'अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये । छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि च' इत्यमरात्कालवशतः सोऽपि जनार्दनः 'शफरः शफरीद्वयोः' इत्यपि तत एव मत्स्य इत्यर्थः । एवं श्लेषादिमूलमपि तमुदाहरति—**सुप्तएवे**त्याद्युत्तरार्धेन । अथ पुरोवर्ती कश्चित्पुरुषः सुप्तः निद्रित एव प्रबुद्धोऽस्तीति विरोधः स्फुट एव । नहि यो निद्राणः स जागर्तीति । अस्याभासत्वं तु । अयं प्रागुक्तः श्रीगुरुः सुप्त एव 'यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः' इति स्मृतेर्द्वैतविषयकानादरेण तत्र सुप्त एव प्रबुद्धः । 'या निशा सर्वभूतानां तस्यां जागर्ति संयमी' इति च तदुक्तेरद्वैतात्मविषयकप्रबोधवानिति । एव द्विजेत्यादि । नहि चन्द्रः सूर्यो भवतीति विरोधः । तस्याभासत्वं तु अतएव श्रीगुरुर्द्विजराज इत्यादि ॥ २०३ ॥ ननु दृश्यमप्यास दृश्यात्रमित्युक्तोदाहरणे निरर्थक एवापिशब्दः किमिति प्रत्युक्तः । तत्सार्थकत्वे किमसावेकार्थोऽनेकार्थो वा । नाद्यः । प्रमाणाभावात् । अतएव नान्त्योऽपीति गूढाभिसंधिस्तत्संख्यां पृच्छति—**नन्विति** । अत्र अलंकारशास्त्रे तत्रामरादिकोशप्रसिद्ध्या प्रश्नानवसर एवेत्याशङ्कां शमयति—**नचेत्यादिना** । तत्र हेतुं स्पष्टयति—**वाचकत्वमि**त्याद्युत्तरार्धेन । यतः शाब्दिकनये वैयाकरणसिद्धान्त इत्यर्थः । निपातानां चादीनां प्रादीनामपीत्यर्थः । वाचकत्वं शक्तत्व नेत्यन्वयः । तदुक्तं रसगङ्गाधरे विरोधाभासालंकारप्रकरण एव—'यत्रापिशब्दादिर्विरोधस्य द्योतकस्तत्र विरोधः शाब्दोऽन्यत्र त्वार्थ इति तावत्प्राचां सिद्धान्त इत्युक्त्वाऽग्रे नन्वपिशब्दादीनां प्रयोगे शाब्दो विरोधो भासत इति तथाप्यसंगतं तत् । निपातानां शाब्दिकनये शक्तेरस्वीकारादिति ॥ २०४ ॥ ननु मास्तु निपातानां वाचकता लक्षकतायां किं बाधकमित्याशङ्क्य शक्यसंबन्धो लक्षणेति सामान्यतस्तार्किकादिसंमतलक्षणालक्षणेन तस्याः शक्तिपूर्वकत्वनियमाद्वाचकत्वाभावादेवापेर्लक्षकतापि नैवास्तीत्याह—**तदित्यादिना** । तत्तस्माद्वाचकत्वाभावादेव हेतोरप्यपेर्लक्षकतापि विरोधादिलक्षकत्वमपि नैवास्तीति संबन्धः । नन्वेवमपि द्योतकतास्त्वित्याशङ्क्य

**वाचकत्वाद्यभावेऽपि निरूढा लक्षणा यथा।**
**निरूढद्योतनाप्येवमपेरस्तु सतां मता ॥ २०६ ॥**
**तथैव कौशिकाः सर्वेऽप्यपेरर्था यथास्थलम्।**
**वक्तव्याः पण्डितैस्तेन क्वोक्तार्पत्तिर्वदात्र ते ॥ २०७ ॥**
**गर्हासमुच्चयप्रश्नशङ्कासंभावनास्वपि।**
**इति पञ्चामरे प्रोक्ता अपेरर्थास्तथैव च ॥ २०८ ॥**
**अपिः संभावनाप्रश्नशङ्कागर्हासमुच्चये।**
**तथा युक्तपदार्थेषु कामचारक्रियासु च ॥ २०९ ॥**
**इति युक्तपदार्थश्च कामचारक्रियापि च।**
**मेदिनीकृन्मतावर्थौ पूर्वस्मादधिकावपेः ॥ २१० ॥**

---

तस्याः शक्त्यादिमूलकत्वेन तदभावात्सापि नैवेत्याह—**नापीत्यादिना।** उपसंहरति—**अत इत्यादिना।** आदिना तत्प्रतिपाद्योऽलंकारः। एवं पूर्वपक्षं समाधातुं प्रतिजानीते—**अत इत्यादिना** ॥ २०५ ॥ निरुक्तरसगङ्गाधराशङ्कितशाब्दिकसिद्धान्तानुसारेण यदा सामान्यतः सर्वनिपातानामेव वाचकत्वाभावात्तदन्तःपातिनोऽपेस्तथात्वस्य कैमुत्यात्तन्मूलकलक्षकत्वाद्यभावाच्च यद्युदाहृतविरोधाभावेन तन्मूलकविरोधाभासाद्यसिद्धिस्तर्हि तदीयादेव सिद्धान्तग्रन्थात्तस्य सर्वस्याप्युदाहृतविरोधादेः सुकरैव सिद्धिरित्याशयेन तमेव सिद्धान्तग्रन्थमर्थतोऽनुवदन्समाधत्ते—**वाचकत्वादी**त्यादिना। प्रकृतस्यापि शब्दस्येति शेषः। निरूढेत्यादिना दृष्टान्तः। सा च द्वितीयरत्ने प्राक्प्रपञ्चितैवेति भावः। दार्ष्टान्तिके योजयति—**निरूढेत्या**द्युत्तरार्धेन। एव निदर्शितनिरूढलक्षणावदित्यर्थः। अपेः निरूढद्योतनापि सतामालंकारिकादिविदुषां मता संमतास्त्विति योजना। तदुक्तं रसगङ्गाधर एवोदाहृततच्छब्दग्रन्थोत्तरमिति चेन्नेति प्रतिज्ञाय निरूढलक्षणाया इव निरूढद्योतनाया अपि शक्तिसमकक्षत्वादिति ॥ २०६ ॥ ननु भवत्वेव सामान्यतो निपातानां निरूढद्योतनापि वृत्तिः शक्तिसमकक्षैवाथापि प्रकृते किमागतमित्याशङ्कां फलितकथनेन समाधत्ते—**तथैवेति।** निरुक्तनिरूढद्योतनयैवेत्यर्थः। सर्वे संपूर्णा अपि कौशिकाः कोशप्रसिद्धाः। अपेर्निपातान्तःपातित्वेनापिशब्दस्येत्यर्थः। यथास्थलं यथायोग्यविषयमिति यावत्। क्रियाविशेषणमिदम्। पण्डितैर्वक्तव्या इत्यन्वयः। फलितमाह—**तेनेत्यादि**शेषेण। अत्र अपिशब्दार्थविषय इत्येतत् ॥ २०७ ॥ ननु कस्मिन्कोशे केपि शब्दार्था उक्ता इत्यपेक्षायां प्रथममतिमान्यत्वात्प्रसिद्धत्वाच्च नामलिङ्गानुशासने अमरसिंहकृते तद्वाक्येनैव तान्कथयति—**गर्हेत्याद्यर्धेन।** अपीति निपातः गर्हादिषु निरुक्तवृत्त्या वर्तत इति संबन्धः। अथ तत्सख्यां कथयस्तत्तत्संबन्धित्वादिभ्रमं भञ्जयति—**इतीत्यादिना। अत्र** कोशान्तरमपि समुच्चेतुमाह—**तथैवचेति** ॥ २०८ ॥ तद्वाक्यमेव पठति—**अपिरिति** ॥ २०९ ॥ पूर्वस्मादत्र विशेषं कथयंस्तन्नामापि प्रथयति—**इतीति।**

परनारीरपि प्रैक्षीर्नरकं किं न यास्यसि।
अतः संन्यस्य वैरस्याद्धरिं हरमपि स्मर ॥ २११ ॥
अपि किं मामकं रूपं वास्तवं तद्गुरो वद।
अपि द्वैतामृतं किंवा मृषा मृगजलोपमम् ॥ २१२ ॥
मुक्तोऽपि संपतेत्सङ्गात्तरुणीनां मृगीदृशाम्।
संसारोऽपि न किं ध्वंस्यो वने निवसता त्वया ॥ २१३ ॥
स्वभार्यर्तुप्रसङ्गे तु यथेच्छमपि संरम।
इति सप्ताप्यपेरर्थाः कोशोक्ताः समुदाहृताः ॥ २१४ ॥
अत्र संभावनापक्षे सविशेषणयुक्तितः।
अपिर्विरुद्धयुक् चेत्तद्भिन्ने बोध्यनियामकः ॥ २१५ ॥

---

पूर्वस्मादमरकोशात्। अपेः अपिशब्दस्य ॥ २१० ॥ तत्रामरक्रमानुसारेणैव यथा स्थलमिति प्राक् प्रतिज्ञातरीत्या सप्तविधानपि तान् समुदाहरन् प्रथमं गर्हाभिधनिन्दाख्यमपि शब्दार्थं समुदाहरति—**परनारीरिति**। रे जाल्म, त्वं परनारीरपि स्वेतरसुन्दरीरपीत्यर्थः। यतः प्रैक्षीः सततसुरताभिलाषलक्षणप्रकर्षेणैवेक्षितवानस्यतः नरकं न यास्यसि किमपितु यास्यस्येवेति योजना। एवं च धिक्त्वामीदृशमिति निन्दैव व्यज्यते। तर्हि किमितः परं कार्यमित्यत आह समुच्चयाख्यं द्वितीयमपेरर्थं सूचयन्—**अत इति** ॥ २११ ॥ 'अपि चेत्सुदुराचारः' इत्यादिस्मृतेः सानुतापमुक्ताभिलाषं परित्यज्येशं भजतः स्वरूपजिज्ञासया प्रश्नाख्यं तृतीयं तमुदाहरति—**अपीति**। ततः शङ्काभिधसंशयाख्यं चतुर्थं त कथयति—**अपि द्वैतमिति**। ऋतं सत्यम् ॥ २१२ ॥ अथोक्तप्रश्नसमाधानश्रवणे सङ्गत्याग एवाधिकारीति श्रीगुरुर्ध्वनयन् संभावनाभिधं पञ्चममपि शब्दार्थमुदाहरति—**मुक्तोऽपीति**। अत्र मृगीदृशामिति विशेषणेन तारुण्यवत्सौन्दर्यमपि द्योत्यते। बहुवचनं तु जात्यभिप्रायमेव। एकस्य समकालं बहुस्त्रीसंभोगासंभवात्। एतेन चित्रादितरुण्यादिदर्शनाद्यपि निन्द्यमेवेति ध्वन्यते। तदुक्तं भागवते—'पदापि न स्पृशेद्विद्वान्युवतीं दारवीमपि। कथां च वर्जयेत्तासां न पश्येल्लिखितामपि' इति। एवं तर्हि मे सुदुर्लभ एव मोक्षस्ततः किं विवेकादिसाधनप्रयासैरित्यतिनिर्विण्णं शिष्यं समाश्वासयन्नाचार्यः षष्ठं युक्तपदार्थमपेरर्थं प्रथयति—**संसारोऽपीति**। ध्वंस्योऽपि न किमिति संबन्धः। एतेन तत्र ध्वंसयोग्यत्वं व्यज्यते। वन इत्यादिना तत्साधनं सर्वथा सङ्गत्याग एवेति द्योत्यते। अत एव तैत्तिरीयाः समामनन्ति—'न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः' इति ॥ २१३ ॥ ननु यदा संन्यासः क्रियते मयास्तु नाम वने निवासो मे परं त्विदानीं संन्यासमन्तरा किं मया विचारो पि न कार्य इत्याशङ्क्य सप्तममपिशब्दार्थं कामचाराख्यं कथयन् समाधत्ते—**स्वेति**। एतेन परनारीविहारपरिहार एव शास्त्रे प्रधानसाधनत्वेन संमत इति ध्वन्यत। उपसंहरति—**इतीति** ॥ २१४ ॥ तन्मध्ये संभावनाख्य-

**स्वपरोद्भासकस्यापि प्रतिबन्धवशात्क्वचित् ।**
**परैकभासकत्वं स्यादभ्राच्छादितसूर्यवत् ॥ २१६ ॥**
**विशिष्टवाचके शब्दे विशेष्यांशे विरोधतः ।**
**विशेषणैकवाचित्वं पुत्र्यभूदेवमादिषु ॥ २१७ ॥**
**मुक्तिर्नाप्रतिबद्धेन बोधेन तु विना क्वचित् ।**
**तथात्वे स्वस्य धूमेन सङ्गवत्पतनं कथम् ॥ २१८ ॥**

---

पञ्चमाप्यर्थपक्षे कंचिद्विशेषमाह—**अत्रेति** । निरुक्तसप्तविधाप्यर्थमध्य इत्यर्थः । **सविशेषणेति** । 'सविशेषणौ हि विधिनिषेधौ विशेषणमुपसंक्रामतः सति विशेष्ये बाधे' । 'पुत्री जातः शिखी ध्वस्तः' इति न्यायादित्यर्थः । अपिः विरुद्धयुक् चेत्तर्हि तद्भिन्ने । **बोध्येति** । बोध्यस्य विधेयादेर्नियामकः ॥ २१५ ॥ ननु संभावनाख्यपञ्चमाप्यर्थपक्षे यदुक्तमपेः सविशेषणविधिनिषेधन्यायेन स्वाभिधेयविरुद्धार्थवाचकपदान्वयित्वे क्वचित्प्राप्ते सति तद्भिन्नत्वावच्छेदेनैव स्वाभिधेयनैयत्यबोधकत्वमिति तदनुपपन्नम् । तथाहि प्रागुक्ते भावत्के मुक्तोऽपि सङ्गात्पततीत्यादौ तदुदाहरणे यथाश्रुते सङ्गान्यथानुपपत्त्या मुक्तपदेन जीवन्मुक्त एव ग्राह्य इति तु निर्विवादमेव । तथाच तादृशस्यापि भरतादेर्हरिणशिशुसङ्गात्पुनर्हरिणादिजन्मवदधःपातसंभावनैवापिशब्दार्थः प्रतीयते । नच मुक्तिपतनयोस्तेजस्तिमिरयोरिव परस्परविरोधयोगादेव तत्रापेः संभावनार्थकत्वं बाधितं सन्निरुक्तसविशेषणविध्यादिन्यायेन तद्भिन्नपातनैयत्यैकपर्यवसायि । भरतस्तु तदानीं प्रतिबद्धज्ञानत्वेनैव पञ्चदश्यां वर्णितत्वेनामुक्त एवेति सांप्रतम् । तथात्वे त्वदुदाहरणस्यैवासाङ्गत्यात् । एवंच निरुक्तोदाहरणे मुक्तपदमुद्रास्य बुधादिपदमेव प्रयोक्तव्यमिति चेन्न । उक्तव्युत्पत्तिविशेषप्रपञ्चनार्थमेव तथा प्रयुक्तत्वादित्यभिसंधाय निरुक्तन्यायदार्ढ्यार्थमत्र दृष्टान्तं स्पष्टयति—**स्वपरेति** । एवं हि लोके सामान्यव्याप्तिः । यत्स्वपरोद्भासकस्यापि स्वप्रकाशादिवस्तुनः क्वचित्प्रतिबन्धवशादभ्राच्छादितसूर्यवत्परैकभासकत्वं स्यादिति संबन्धः । यद्यप्यत्र सूर्यः स्वप्रकाशत्वेन स्वयमपि भात्येव । अन्यथा घटादिरपि न भायात्तथाप्यस्मदादिचक्षुःकिरणानां सूर्यसंनिकर्ष एव प्रतिबद्ध इति ॥ २१६ ॥ ननु भवत्वेवं सनिदर्शना व्याप्तिस्ततः प्रकृते किमागतमित्याशङ्क्य तन्निदर्शनेन शब्देऽपि सामान्यतो व्यवस्थां व्याप्तिपूर्विकां गूढाभिसंधिः कथयति—**विशिष्टेति** । अत्र दर्शितदृष्टान्तान्वयस्त्वार्थिक एव । विशिष्टवाचके विशेषणविशेष्यतत्संबन्धाख्यवस्तुसमुदायाभिधायक इत्यर्थः । एतादृशे शब्दे विशेष्यांशे विरोधतः प्रत्यक्षादिप्रमाणान्तरविरोधाद्धेतोरित्यर्थः । पुत्र्यभूदेवमादिषु उदाहरणेषु । विशेषणैकवाचित्वं विशेषणीभूतपुत्रमात्रवाचकत्वमस्तीति संबन्धः । विशेष्यीभूतस्य पितुः प्रागेव सिद्धत्वादिति तत्त्वम् ॥ २१७ ॥ इदानीं गूढाभिसंधिमुद्धाटयति—**मुक्तिरिति** । मुक्तिस्तु अप्रतिबद्धेन । ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनादिशास्त्रसिद्धभूतभावि-

**तन्मुक्तोऽपीत्यपेर्बोध्ये विरोधे न युजेर्भवेत्।**
**तद्भिन्नेष्वेव सङ्गेन पातनैयत्यबोधनम्॥ २१९॥**
**स्ववपोत्खादनेनापि यागः कार्य इतीदृशात्।**
**वाक्यात्तात्पर्यतोऽप्यर्थः किं नास्त्यन्यावधारणम्॥२२०॥**

वर्तमानाख्यत्रिविधप्रतिबन्धविधुरेणेत्यर्थः। एतादृशेन बोधेन अद्वैतब्रह्मात्मैक्यविषयकसाक्षात्कारेणेत्यर्थः। विना क्वचित् कस्मिंश्चिद्देशे कालेऽपि न नैव भवतीत्यन्वयः। फलितमाह—**तथात्व इत्यादिना**। निरुक्तप्रमैककरणकाविद्याध्वस्तिरूपमुक्तिशालित्वे सतीति यावत्। खस्याकाशस्य धूमेन सङ्गवन्न ह्याकाशस्य धूमेन दृश्यमानापि संगतिरिति प्राचीनाचार्यवचनात्कथं पतनं भवेदिति योजना॥२१८॥ नन्वेवं तर्हि 'मुक्तोऽपि संपतेत्सङ्गात्' इत्यादि त्वदुदाहरणस्य का गतिरित्यत आह—**तन्मुक्तोऽपीत्यादिना** इत्यस्मिन्नुदाहरण इत्यर्थः। तत्तस्मान्निरुक्तरूपात् मुक्तिर्नाप्रतिवद्धेनेत्यादिपूर्वपद्ये निर्णीतान्मुक्तस्य कथंचिदपि प्रारब्धपरिसमाप्त्यनन्तरं बाधितद्वैतावभासस्याप्यभावेन नरकपातासंभवादिति यावत्। अपेः अपिशब्दस्य। बोध्ये निरूढद्योतनावृत्त्या प्रागुक्तरीत्या समुदाहृतामरसिंहोक्तसंभावनाख्ये पञ्चमार्थरूपे प्रतिपाद्ये विषय इत्यर्थः। विरोधेन निरुक्तरीत्या कदाचिदपि पतनासंभवात्तत्संभावनया सह सामानाधिकरण्याभावेनेति यावत्। युजेः योगाद्भेनोरित्यर्थः। तद्भिन्नेष्वेव जीवन्मुक्तेतरमनुष्येष्वेव। सङ्गेन परनारीसंसर्गेण। **पातेति**। नरकपातनिश्चयप्रतिपादनमित्यर्थः। भवेदित्यन्वयः। अयमभिप्रायः। यथा लोके व्यावहारिकस्वप्रकाशत्वेन सूर्यस्याभ्रायावृतत्वे सति द्रष्टृचक्षुःसंनिकृष्टयावत्स्वेतरभासकत्वमेव दृष्टं, यथावा पुत्री जात इत्यादिशब्देऽपि विशिष्टवाचकत्वेन तद्विशेष्यीभूतस्य पितुः सिद्धत्वाज्जनिक्रियासमभिव्याहृतस्य पुत्रीति विशिष्टवाचकस्यापि शब्दस्य विशेषणीभूतपुत्रमात्रवाचकत्वं सविशेषणविध्यादिन्यायसिद्धं, तथा प्रकृते अपिशब्दस्य 'मुक्तोऽपि सपतेत्सङ्गात्' इत्यादौ सङ्गान्मुक्ततदितरसर्वसाधारण्येन नरकपातसंभावनालक्षणविशिष्टार्थवाचकस्यापि दृष्टान्तयोः क्रमादभ्राच्छादनरूपः पितुः सिद्धत्वरूपश्च प्रतिरोध इव प्रकृतेऽपि जीवन्मुक्तस्य शास्त्रशतकोटिसिद्धपतनाभावनियमरूपः प्रतिरोधः प्रसिद्ध एवेति दृष्टान्ते सूर्येतरचक्षुःसंनिकृष्टघटादिवत् पुत्रादिवच्च मुक्तेतरसकलमनुष्यावच्छेदेन परनारीसङ्गहेतुकं पतननैयत्यमेवेत्यर्थवाचकत्वमेवेति। यदा मुक्तोऽपि सङ्गात्पतति तदा तदन्यः पततीति कैमुत्यसिद्धमेवेत्यर्थस्तु सर्वसंमतः सएव सति प्रतिबन्धसत्वेऽत्र मया व्युत्पत्तिवैचित्र्यादुपपादित इति क्षन्तव्य एवायं मदपराधः सुधीभिरिति शिवम्॥ २१९॥ ननु किमनया कुसृष्टया 'मुक्तोऽपि संपतेत्सङ्गात्' इत्यादि भवतोक्तस्यापेः संभावनालक्षणपञ्चमार्थोदाहरणस्य मुक्तस्य पतनासंभवरूपविरोधेन सङ्गदुस्तरत्वमात्रबोधनपरत्वादितिचेत्सत्यम्। 'प्रजापतिर्वा इदमेक आसीत्सोऽकामयत प्रजाः पशून्सृजेयेति स आत्मनो वपामुदक्खिदत्तमग्नौ

हत्वापीति स्मृतावेवं पुराणे ज्ञानिनामपि ।
चेतांसीत्यादिके काव्ये ब्रह्मापीत्यत्र निर्णयः ॥ २२१ ॥
विरोधाभासमुख्येषु त्वलंकारेषु यादृशात् ।
अप्यर्थात्स्याच्चमत्कारः स एवैभ्यः प्रगृह्यताम् ॥ २२२ ॥
कार्यकारणभावस्य वैचित्र्यं स्याद्विभावना ।
विनैव कारणं कार्यमाद्यास्येन्दुर्निशां विना ॥ २२३ ॥

---

पाग्रहात्ततोजस्तूपरः समभवत्त ९ स्वायै देवताया आलभत ततो वै स प्रजाः पशूनसृजत' इति तैत्तिरीयकसंहिताया द्वितीयाष्टकप्रथमप्रश्नप्रथमानुवाके समाम्नानात्पूर्वतन्त्रे समुन्नीते आत्मवपोत्खादनेनापि यागः कर्तव्य इति वाक्येऽप्येतादृश एवात्मवपोत्खादने मरणप्रसङ्गेन कर्त्रभावरूपविरोधात्पशुवपोत्खादनेन यागोऽवश्यं कर्तव्य एवेत्यर्थः स्वीकृतस्तद्वत्प्रकृतेऽपि मुक्तेतरः सङ्गात्पतत्येवेति स्वीकारे किं बाधकम् । अपिशब्दसमभिव्याहारस्य यथाश्रुतविरोधस्य चोभयत्रापि तुल्यत्वादित्याशयेन साक्षेपं प्रतिवादिनं प्रति पृच्छति—**स्ववपेति** । अप्यर्थः अपिशब्दार्थः । **अन्येति** । आत्मेतरच्छागादिपशुवपोत्खादनपूर्वकावश्ययागानुष्ठानावधारणमित्यर्थः । शिष्टं तु स्पष्टमेव ॥ २२० ॥ न केवलं श्रुतावेवेदृशो नियमः किंतु स्मृतिपुराणकाव्येष्वपीत्याह—**हत्वापितीति** । 'यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते । हत्वापि स इमॉल्लोकान्न हन्ति न निबध्यते' इति भगवद्गीताख्यस्मृतावित्यर्थः । 'ज्ञानिनामपि चेतांसि देवी भगवती हि सा । बलादाकृष्य मोहाय महामाया प्रयच्छति' इति मार्कण्डेयाख्ये पुराण इत्यर्थः । तत्र देवीमाहात्म्यचन्द्रिकाख्ये तद्व्याख्याने मयैवमेवोपपादितमिति बोध्यम् । काव्ये भर्तृहरेर्नीतिशतकात्मके । 'अज्ञः सुखमाराध्यः सुखतरमाराध्यते विशेषज्ञः । ज्ञानलवदुर्विदग्धं ब्रह्मापि नरं न रञ्जयति' इत्यत्रेति यावत् । एवं प्रागुक्त एव निर्णय इत्यन्वयः ॥ २२१ ॥ प्रकृते कथमित्यत आह—**विरोधेति** । एभ्यो निरुक्तार्थेभ्यः सकाशादित्यर्थः ॥ २२२ ॥ एवं विरोधाभासप्रसङ्गतोऽपिशब्दार्थविचारं प्रपञ्च्य सिंहावलोकनन्यायेन विरोधाभासाद्येष्वपि तद्ग्रहणव्यवस्थाप्यविरोधनिरूपणप्रसक्तामेवेदानीं षोढा विभावनां निरूपयितुमुपमारूपकादिवदादौ तत्सामान्यं लक्षयति—**कार्येत्यर्धेनैव** । इदं हि षोढा विभावनास्वप्यनुगतं भवति । एतेन रसगङ्गाधरकारैर्विभावनाया उपमारूपकादिवत्सामान्यलक्षणाभावादिना कुवलयानन्दोक्तान् षट्प्रकारान् संदूष्य यत्पुनः प्रकारान्तरेण तद्व्यवस्थापनमपि कृतं तत्प्रत्युक्तम् । निरुक्तरीत्या तत्सामान्यलक्षणसिद्धेरिति बोध्यम् । तत्र कुवलयानन्दकारिकानुसारेणैव प्रथमां विभावनां लक्षयति—**विनैवेत्यादिना** । अथ तामुदाहरति—**आस्येत्यादिशेषेण** । आस्येन्दुः प्रेयसीमुखचन्द्रः निशां विनैव कारणीभूतां रात्रिमन्तरैव । उदित इति शेषः । अयं भावः—राकामृतद्युतिरेवात्र प्रियामुखरूपकार्हः स च निशारम्भं विना नैवोदेतीति तस्यां

द्वितीया कारणासामग्र्येऽपि कार्ये विभावना ।
कटाक्षैरेव राधाऽसौ बिभेद हृदयं हरेः ॥ २२४ ॥
प्रतिबन्धेऽपि चेत्कार्ये तृतीया स्याद्विभावना ।
शमक्षीरोदमग्नोऽपि दह्यते स्मरवह्निना ॥ २२५ ॥
विभावना चतुर्थी तु कार्योत्पत्तावकारणात् ।
कमलाच्चन्द्रिकोदेति प्रकामं सर्वदोप्यहो ॥ २२६ ॥
विरुद्धात्कारणात्कार्ये पञ्चमी स्याद्विभावना ।
ददाह विरहे सीतां हा हन्त मलयानिलः ॥ २२७ ॥

---

तदुदयकारणत्वेऽप्यत्र तदभावेऽपि प्रेयस्याः सार्वदिकसुप्रसन्नास्यत्वात्तन्मुखतादात्म्यापन्नचन्द्रोदयलक्षणं कार्यमभिवर्णितमिति प्रथमविभावनेयं भवतीति लक्षणसंगतिरिति । तदुक्तं कुवलयानन्दे—'विभावना विनापि स्यात्कारणं कार्यजन्म चेत् । अप्यलाक्षारसासिक्तं रक्तं तच्चरणद्वयम्' इति । यथावा साहित्यदर्पणे—'अनायासकृशं मध्यमशङ्कातरले दृशौ । अभूषणमनोहारि वपुर्वयसि सुभ्रुवः' इति । यथावा रसगङ्गाधरे—'विनैव शस्त्रं हृदयानि यूनां विवेकभाजामपि दारयन्त्यः । अनल्पमायामयवल्गुलीला जयन्ति नीलाब्जदलायताक्ष्यः' । 'निरुपादानसंसारमभित्तावेव तन्वते । जगच्चित्रं नमस्तस्मै कलाश्लाघ्याय शूलिने' । 'यदवधि विलासभवनं यौवनमुदियाय चन्द्रवदनायाः । दहनं विनैव तदवधि यूनां हृदयानि दह्यन्ते' । अत्र हि उदात्ते यौवने दाहहेतुत्वं पर्यवस्यतीति । इह विस्तरस्तु तत एवावगन्तव्य इत्यलं प्रसक्तानुप्रसक्त्या ॥ २२३ ॥ अथ 'हेतूनामसमग्रत्वे कार्योत्पत्तिश्च सा मता । अस्त्रैरतीक्ष्णकठिनैर्जगज्जयति मन्मथः' इति कुवलयानन्दोक्तद्वितीयविभावनां लक्षयति—**द्वितीयेति । कारणेति** । कारणानामुपादानादीनामसमग्रत्वे सत्यपीत्यर्थः । तामुदाहरति—**कटाक्षैरेवेति** । अवधारणेन साधनान्तरव्युदासः ॥ २२४ ॥ एवं 'कार्योत्पत्तिस्तृतीया स्यात्सत्यपि प्रतिबन्धके । नरेन्द्रानेव ते राजन्दशत्यसिभुजङ्गमः' इति तदुक्तां तृतीयां तां लक्षयति—**प्रतिबन्धेऽपीति** । तामुदाहरति—**शमेति** । प्रसिद्ध एव तादृशः सौभर्यादिरित्याशयः । यथावा कुवलयानन्दे—'चित्रं तपति राजेन्द्र प्रतापतपनस्तव । अनातपत्रमुत्सृज्य सातपत्रं द्विषद्गणम्' इति ॥ २२५ ॥ तद्वत् 'अकारणात्कार्यजन्म चतुर्थी स्याद्विभावना । शङ्खाद्वीणानिनादोऽयमुदेति महदद्भुतम्' इति तदुक्तां चतुर्थी तां लक्षयति—**विभावनेति** । तामुदाहरति—**कमलादिति** । श्रीगुरुमुखरूपादित्यर्थः । तस्य स्मितपूर्वाभिभाषित्वादिति भावः ॥ २२६ ॥ एवं 'विरुद्धात्कार्यसंपत्तिर्दृष्टा काचिद्विभावना । शीतांशुकिरणास्तन्वीं हन्त संतापयन्ति माम्' इत्यपि तदुक्तां पञ्चमीं तां लक्षयति—**विरुद्धादिति** । तामुदाहरति—**ददाहेति** । यथावा कुवलयानन्दे—'अविवेकि कुचद्वन्द्वं हन्तु नाम जगत्त्रयम् ।

षष्ठी विभावना ज्ञेया कार्यात्कारणजन्म चेत् ।
श्रीराम विजय स्वद्दोः कीर्तिक्षीरोद उद्गतः ॥ २२८ ॥
प्रसिद्धकारणौघस्य सामानाधिकरण्यतः ।
कार्यानुत्पत्तिरुक्ता चेद्विशेषोक्तिरिहेष्यते ॥ २२९ ॥
अद्वैतसच्चिदानन्द सद्गुरो त्वयि सर्वदा ।
हृदि सत्यपि धिक्कान्तां तच्चिन्तयति संततम् ॥ २३० ॥
कार्यस्यासंभवत्वोक्तिर्दीक्षितेष्टोऽस्त्यसंभवः ।
द्वैतमेव मृषा कुर्याद्गुरुरित्यास कस्यचित् ॥ २३१ ॥

श्रुतिप्रणयिनोरक्ष्णोरयुक्तं जनमारणम्' इति ॥ २२७ ॥ अथ 'कार्यात्कारणजन्मापि दृष्टा काचिद्विभावना । यशःपयोधिरभवत्करकल्पतरोस्तव' इति च तदुक्तां षष्ठीं तां लक्षयति—**षष्ठीति** । यथावा कुवलयानन्दे—'जाता लता हि शैले जातु लतायां न जायते शैलः । संप्रति तद्विपरीतं कनकलतायां गिरिद्वयं जातम्' इति । यथावा मदीयाद्वैतामृतमञ्जर्याम्—'विद्युत्पयोधरेऽभूत्क्वापि न विद्युति पयोधरो दृष्टः । अद्य तु विपरीतमिदं मन्दगविद्युति पयोधरद्वन्द्वम्' इति ॥२२८॥ एवं कार्यकारणभाववैलक्षण्यलक्षणविभावनाप्रतिपादनप्रसङ्गसंगतां 'कार्याजनिर्विशेषोक्तिः सति पुष्कलकारणे । हृदि स्नेहक्षयो नाभूत्स्मरदीपे ज्वलत्यपि' इति कुवलयानन्दोक्तां विशेषोक्तिं लक्षयति—**प्रसिद्धेति** । तदुक्तं रसगङ्गाधरे—'प्रसिद्धकारणकलापसामानाधिकरण्येन वर्ण्यमाना कार्यानुत्पत्तिर्विशेषोक्तिः' इति ॥ २२९ ॥ तामुदाहरति—**अद्वैतेति** । तत् हृदयतः संततमपि कान्तां रमणीमेव चिन्तयति । अतः तादृशं तत्प्रति धिगस्त्वित्यन्वयः । अप्यन्तं तु सरलमेव । यथावा काव्यप्रकाशे—'कर्पूर इव दग्धोऽपि शक्तिमान्यो जने जने । नमोस्त्ववार्यवीर्याय तस्मै मकरकेतवे' इति । यथावा साहित्यदर्पणे—'धनिनोऽपि निरुन्मादा युवानोऽपि न चञ्चलाः । प्रभवोऽप्यप्रमत्तास्ते महामहिमशालिनः' । अत्र महामहिमशालित्वं निमित्तमुक्तम् । यथावा कुवलयानन्दे—'अनुरागवती संध्या दिवसस्तत्पुरःसरः । अहो दैवगतिश्चित्रा तथापि न समागमः' इति । यथावा रसगङ्गाधरे—'उपनिषदः परिपीता गीतापि च हन्त मतिपथं नीता । तदपि न हा विधुवदना मानससदनाद्बहिर्याति' । यथावा—'प्रतिपलमखिलाँल्लोकान्मृत्युमुखं प्रविशतो निरीक्ष्यापि । हा हतकं चित्तमिदं विरमति नाद्यापि विषयेभ्यः' इति । अत्र प्रत्युदाहरणमपि तत्रैव—'दृश्यतेऽनुदिते यस्मिन्नुदिते नैव दृश्यते । जगदेतन्नमस्तस्मै कस्मैचिद्बोधभास्वते' इति ॥ २३० ॥ एवं विशेषोक्तिगतकार्यानुत्पत्तिप्रसक्तमसंभवालंकारं ससंमतिकं लक्षयति—**कार्यस्येत्यर्धेन** । कार्यस्य असंभवत्वोक्तिरसंभावितत्ववर्णनमित्यर्थः । एतादृशः असंभव एतन्नामकोऽलंकारः दीक्षितेष्टः श्रीमदप्पय्यदीक्षितैकसंमतोऽस्तीत्यर्थः । एवंच कार्यप्रतियोगिकाघटमानत्ववर्णनविषयत्वमेवासंभवालंकारत्वमिति तत्सामान्यलक्षणं सिद्ध्यति । तदुक्तं कुवलया-

**भिन्नदेशे विरुद्धाभे हेतुकार्ये त्वसंगतिः ।**
**संयमः साधितः केशैः श्रुत्यन्तानुभवो दृशोः ॥ २३२ ॥**

नन्दे—'असंभवोऽर्थनिष्पत्तेरसंभाव्यत्ववर्णनम्। को वेद गोपशिशुकः शैलमुत्पाटयेदिति'। तमुदाहरति—**द्वैतमेवेत्यर्धेनैव** । गुरुः श्रीमदाचार्यः यथोपनयनोत्तरं केनचिदाचार्येण मां प्रति स्वशाखात्मको वेदः समुपदिष्टस्तथा प्रकृतोऽप्यसौ तदर्थं कंचिद्धर्मादिकं शरणागतं मां प्रति ब्रूयादित्येवाश्वासः स्थितः द्वैतमेव सकलं दृश्यमेव मृषा मिथ्या कुर्यादिति वित् संभावनारूपा धीः कस्यास । न कस्यापीति संबन्धः। एतेन तत्राद्वैतब्रह्मात्मबोधद्वारा द्वैतमिथ्यात्वकारकत्वमद्भुतमिति द्योत्यते । यथावा भामिनीविलासे—'निसर्गादारामे तरुकुलसमारोपसुकृती कृती मालाकारो बकुलमपि कुत्रापि निदधे। इदं को जानीते यदयमिह कोणान्तरगतो जगज्जालं कर्ता कुसुमभरसौरभ्यभरितम्' इति । यद्यपीदं पद्यमन्योक्तिशतकान्तर्गतमप्रस्तुतप्रशंसालंकारघटितत्वेनैव मया प्रणयप्रकाशाख्यतद्व्याख्याने व्याख्यातमथापि तदनुप्राणितः प्रकृतालंकारोऽपि नात्र दण्डवारित इति तदुदाहरणमपीति बोध्यम् । एतेन प्राचामर्वाचीनानां च नैवायं संमत इति परास्तम् । दिङ्मात्रस्यैव तत्र तत्र तैस्तैः प्रतिपादितत्वात् । यावत्काव्यकोडीकारेणालंकारनिर्णयस्यासर्वज्ञाशक्यत्वान्नव्यैरपि जगन्नाथपण्डितैः स्वकाव्यनिबद्धस्याप्यस्योपलभ्यमानरसगङ्गाधरीयालंकाराननेऽसंगृहीतत्वाच्चेति दिक् ॥ २३१ ॥ एवमसंभवप्रसक्तामसंगतिं लक्षयति—**भिन्नेति** । भिन्नौ देशौ ययोस्ते तथा । वैयधिकरण्यशालिनी इत्यर्थः । तथा विरुद्धाभे विरुद्धे इव आ ईषत् भातस्ते तथा।आपातिकविरोधप्रतिभासे इति,यावत्।एतादृशेतु हेतुकार्ये असंगतिरेतन्नाम्न्यलंकृतिर्भवतीत्यन्वयः । तथाचोक्तं कुवलयानन्दे—'विरुद्धभिन्नदेशत्वं कार्यहेत्वोरसंगतिः । विषं जलधरैः पीतं मूर्छिताः पथिकाङ्गनाः' इति । रसगङ्गाधरेऽपि विरुद्धत्वेनापाततो भासमान हेतुकार्ययोर्वैयधिकरण्यमसंगतिरिति। तामुदाहरति—**संयम इति** । तरुण्या इति शेषः । केशैश्चिकुरैः संयमः सम्यक्सीमन्तादिरचनपूर्वकं कबरीभारे नियमनमित्यर्थः । पक्षे धारणाध्यानसमाध्याख्ययोगाङ्गान्तरङ्गत्रयमिति यावत् । अथ किं ततस्तत्राह—**श्रुतीति** । श्रुत्योः कर्णयोर्यावन्तौ चरमभागौ तयोर्योऽनुभवः स तथा । स्त्रीणां ह्ययं संप्रदाय एव यद्वेणीकरणानन्तरं मुकुरनिरीक्षणं कर्तव्यमिति । एवं च तदा कटाक्षाभ्यां कर्णान्तिमभागानुभवो भवत्येवेत्यर्थः । स्वरूपानुभव इति पाठे स्वसौन्दर्यानुभव इति यावत् । पक्षे श्रुत्यन्ताः वेदान्तास्तेषामनुभवस्तत्प्रतिपादितब्रह्मात्मैक्यसाक्षात्कार इत्यर्थः । पाठान्तरे स्वात्मरूपाद्वैतसाक्षात्कारः दृशोर्नयनयोरासेति योजना । अत्र हि श्लेषेण केशैः संयमः श्रुतमतार्थानुभवार्थं निदिध्यासनाख्यचित्तवृत्तिनिरोधः साधितो भवत्यथ तत्फलं श्रुत्यन्तशब्दितवेदान्तार्थानुभवस्तु दृशोः संपद्यत इति कार्यकारणयोरसामानाधिकरण्यं वास्तविकप्रथमार्थानुसारेण तयोरविरोधपूर्वकमनु-

१ 'स्वरूपानुभवः' इति पाठः.

यत्र यत्कर्तुमिष्टं तत्ततोऽन्यत्र कृतं च सा ।
पदो रागं चिकीर्षन्ती पत्यौ रागमजीजनत् ॥ २३३ ॥

---

रोधसत्वेऽपि द्वितीयार्थानुसारेण कस्य स्वर्गस्य तुच्छीकारादीशा इव ईशाः ये योगीन्द्रास्तैः स यमशब्दवाच्यः यमनियमेत्याद्यष्टाङ्गयोगसूत्रानन्तरं तत्रितयं संयम इति सूत्रात् धारणाध्यानसमाध्यङ्गसङ्घः साधितः परन्तु श्रुत्यन्तानुभवः वेदान्तार्थसाक्षात्कारः अदृशोः न विद्यते दृक् दृश्यभानं ययोः 'शुको मुक्तो वामदेवो मुक्तः' इति श्रुतेः शुकवामदेवावेव तयोः प्रसिद्धजीवन्मुक्तयोरेवेत्यर्थः । अत्राकारप्रश्लेषकरणायासाद्यथाश्रुतकिंचित्प्रतिभासमानविरोधाल्लक्षणसंगतिः । यथावा साहित्यदर्पणे—'सा बाला वयमप्रगल्भमनसः सा स्त्री वयं कातराः सा पीनोन्नतिमत्पयोधरयुगं धत्ते सखेदा वयम् । साक्रान्ता जघनस्थलेन गुरुणा गन्तुं न शक्ता वयं दोषैरन्यजनाश्रितैरपटवो जाताः स्म इत्यद्भुतम्' इति । यथावा कुवलयानन्दे—'अहो खलभुजङ्गस्य विपरीतो वधक्रमः । अन्यस्य दशति श्रोत्रमन्यः प्राणैर्वियुज्यते' इति । एवं विरुद्धविशेषणपदकृत्यमपि तत्रैवोक्तम् । यथा—'भ्रूचापवल्लीं सुमुखी यावन्नयति वक्रताम् । तावत्कटाक्षविशिखैर्भिद्यते हृदयं मम' इति । अत्र यद्यपि कार्यकारणे विभिन्नदेशीये एव भवतस्तथापि ते न विरुद्धे इति तत्र चपलातिशयोक्तावतिव्याप्तिव्यावृत्तये विरुद्धेति । आभापदकृत्यं त्वनुपदमेवोक्तमिति सर्वं रमणीयम् । यथावा रसगङ्गाधरे—'अङ्गैः सुकुमारतरैः सा कुसुमानां श्रियं हरति । प्रहरति हि कुसुमबाणो जगतीतलवर्तिनो यूनः' । यथावा-'दृष्टिर्मृगीदृशो नित्यं श्रुत्यन्तपरिशीलिनी । मुच्यन्ते बन्धनात्केशा विचित्रा वैधसी गतिः' । अत्राद्योदाहरणे शुद्धाद्वितीये तु श्लेषोपबृंहितेति विशेषः । तत्रैवाग्रे—'खिद्यति सा पथि यान्ती कोमलचरणा नितम्बभारेण । खिद्यन्ति हन्त परितस्तद्रूपविलोकिनस्तरुणाः' इति । अपिच 'मोहं जगत्त्रयभुवामपनेतुमेतदादायि रूपमखिलेश्वरदेहभाजाम् । निःसीमकान्तिरसनीरधिनाऽमुनैव मोहं प्रवर्धयसि मुग्धविलासिनीनाम्' इति । अत्र विस्तरस्तु तत्रैव ज्ञेयः । प्रकृते त्विह गौरवभयादेव मया नैवासौ संगृहीत इत्यलं पल्लवितेनेति शिवम् ॥ २३२ ॥ एवमसंगतेरपरमपि प्रकारद्वयं कुवलयानन्दकृत्संमतं क्रमेण संलक्ष्योदाहरति—**यत्रेत्यादिद्वाभ्याम्** । तथाचोक्तं तत्रैव—'अन्यत्र करणीयस्य ततोऽन्यत्र कृतिश्च सा । अन्यत्कर्तुं प्रवृत्तस्य तद्विरुद्धकृतिस्तथा । अपारिजातां वसुधां चिकीर्षन्द्यां तथा कृथाः । गोत्रोद्धारप्रवृत्तोऽपि गोत्रोद्भेदं पुराकरोः' इति । तामुदाहरति—**पदोरिति** । पादयोः रागं लाक्षारागरञ्जनेन विशिष्टरक्तिमाणमित्यर्थः । पत्यौ तद्द्रष्टुः स्वकान्तान्तःकरणलक्षणेऽधिकरण इत्यर्थः । अजीजनत् पुनःपुनर्जनयामासेति संबन्धः । अत्र स्वचरणयोरेवालक्तकरञ्जनं कुर्वन्त्या नायिकयार्थात्तदवलोकयितरि स्वभर्तर्येव स्वाभिलाषलक्षणो रागो भूयो निर्मित इति वर्णनात्सा पूर्वोक्ताऽसंगतिरेवेति लक्षणसंगतिः

विधाता । यन्निम्बानां परिणतफलस्फीतिरास्वादनीया यच्चैतस्याः कवलनकला-कोविदः काकलोकः' इति । यथावा साहित्यदर्पणे रघुवंशीयं पद्यमिन्दुमत्यजोद्वाहकालिकम्—'शशिनमुपगतेयं कौमुदी मेघमुक्तं जलनिधिमनुरूपं जह्नुकन्यावतीर्णा । इति समगुणयोगप्रीतयस्तत्र पौराः श्रवणकटु नृपाणामेकवाक्यं विवव्रुः' इति । यथावा रसगङ्गाधरे गङ्गालहरीपद्यम्—'अनाथः स्नेहार्द्रां विगलितगतिः पुण्यगतिदां पतन्विश्वोद्धर्त्रीं गदविदलितः सिद्धभिषजम् । तृषार्तः पीयूषप्रकरनिधिमत्यन्तशिशुकः सवित्रीं प्राप्तस्त्वामहमिह विदध्याः समुचितम्' इति । अत्र पीयूषप्रकरनिधिमिति प्रकरपदमधिकमपि च्छन्दोनुरोधेन नैवेक्षितम् । पीयूषनिधिमित्येतावतैव चारितार्थ्यात् । एवम् 'कुवलयलक्ष्मीं हरते तव कीर्तिस्तत्र किं चित्रम् । यस्मान्निदानमस्यालोकनमस्याङ्घ्रिपङ्कजस्तु भवान्' इति प्राथमिकोदाहरणे कीर्तेः कुवलयलक्ष्मीहारकत्वं यदुक्तं तत्र कीर्तेः सर्वत्र कविसमये शुक्लत्वप्रसिद्धेः कुवलयशोभायास्तु 'स्यादुत्पलं कुवलयम्' इत्यमरटीकायां रामाश्रम्यां द्वे कुमुदकमलादीनां सामान्येनेत्युक्तत्वात्कुवलयमिन्दीवरं चेति नाममालावचनाच्च शुक्लत्वादिना संदिग्धत्वेन तत्प्रतिमल्लत्वानौचित्यमेव । तथाच कैरवलक्ष्मीं हरत इत्यसंदिग्धप्रयोग एवेज्यः । एवं च यद्विषमालंकारे कुवलयानन्दे दूषणमुक्तं तत्स्वदोषाणामप्यनभिज्ञत्वात्तुच्छमेव । तद्यथा—यत्तु 'अनिष्टस्याप्यवाप्तिश्च तदिष्टार्थ समुद्यमात्' इति विषमभेदलक्षणं निर्माय अपिशब्दसंगृहीततया इष्टानवाप्तिश्चेति प्रत्येकमपि विषमपदेनान्वय इत्युक्तं कुवलयानन्दकृता । तन्न । अव्युत्पत्तेः । अस्मिन् ग्रामे देवदत्तस्य द्रव्यस्यापि लाभोऽस्तीत्यादौ द्रव्यशब्दोत्तरापिशब्दसमुच्चितस्य विद्यादेर्द्रव्यान्वयिन्येवान्वयाद्द्रव्यस्य लाभो विद्यायाश्च लाभ इति धीरिति निर्विवादम् । प्रकृते त्वनिष्टस्याप्नोतिनान्वय इष्टानवाप्तेश्च तच्छब्दपरामृष्टेन विषमेणेति वैषम्यात् । प्रत्युत लक्षणवाक्येऽपिशब्दोऽनिष्टां धियमुत्पादयति । अनिष्टस्याप्तिरिष्टस्य चेति प्रतीतेः चकारसमुच्चितया इष्टानवाप्त्या अनिष्टावाप्तेरेकवारं मिलितायास्तत्पदपरामृष्टेन विषमेणान्वयाद्वाक्यावृत्त्या वारान्तरे च प्रत्येकमन्वयाद्भेदत्रयसंग्रह इति तु स्यादपि । नत्वपिशब्दविकत्थनमिति । तत्र इष्टार्थ समुद्यमात् अनिष्टस्य अवाप्तिः तद्विषमं, तथा अपिशब्दसंगृहीता इष्टानवाप्तिश्च तद्भवतीति अपिशब्दस्यावाप्तिपदोत्तरमेवान्वयोऽभिमत इति क्व वैषम्यावकाशः । नह्यपेः सर्वत्र काव्ये समभिव्याहृतेन सहैवान्वयनैयत्यम् । यथा तत्रैव 'स्मृतापि तरुणातपं करुणया हरन्ती नृणामभङ्गुरतनुत्विषां वलयिता शतैर्विद्युताम् । कलिन्दनगनन्दिनीतटसुरद्रुमालम्बिनी मदीयमतिचुम्बिनी भवतु कापि कादम्बिनी' इति । काव्ये स्मृतापि तथा करुणया नृणां तरुणातपमपि हरन्तीत्यपिशब्दस्यावृत्त्यान्यत्रान्वयस्यापि दृष्टत्वात् । 'अपि प्रायश्चित्तप्रसरणपथातीतचरितान्नरानूरीकर्तुं त्वमिव जननि त्वं विजयसे' इत्यत्र प्रायश्चित्तप्रसरणपथातीतचरितानपीति समभिव्याहृतादुत्तरान्वयस्याप्यावश्यकत्वाच्च । तस्मात्तद्वाक्यान्वयस्य तत्रैव व्युत्पत्त्यभावमू-

**यत्नः स्वस्पर्धिफलको विचित्रमिति कथ्यते ।**
**मुक्तये गुरुपादानुरक्त्या बद्धोऽस्म्यहं दृढम् ॥ २३७ ॥**
**आधाराधेययोरन्यतराधिक्येऽधिकं मतम् ।**
**कियती यत्र चेत्यं चित् हृदि माति न मेऽद्य मुत् ॥२३८॥**

---

लकमेवेदं दूषणोपन्यसनमिति सूरय एव विदांकुर्वन्त्विति संक्षेपः । एवमेव तत्राग्रेऽपि दूषणोद्धारे बोध्यम् । यच्चेह समालंकारे तावदुच्चैर्गजैरटनमित्यादि पद्ये व्याजस्तुत्या समालंकारस्य बाधनं तत्तु भवतोऽपि 'नितरां धनमाप्तुमर्थिभिः क्षितिप त्वां समुपास्य यत्नतः । निधनं समलम्भि तावको खलु सेवा जनवाञ्छितप्रदा' इत्युदाहरणे समानमेव । यदि तत्र कालभेदेन समालंकारव्याजस्तुत्योः परस्परं बाध्यबाधकभावस्तर्हि नासौ प्रकृतेऽप्यपवारयितुमुचित इति । एवंच किमत्र दूषणबीजं तत्सन्त एव चिन्तयन्त्विति दिक् ॥ २३६ ॥ एवं समालंकारनिरूपणान्तर्गतानुरूपयोगस्मृतं विचित्रं लक्षयति—**यत्न इति । स्वेति ।** स्वशब्देनात्र यत्न एव । तेन सह स्पर्धते विरुध्यतीति तथा तादृशं फलं यस्य स तथेत्यर्थः । तदुदाहरति—**मुक्तय इति ।** दृढमिति क्षणिकत्वव्युदासार्थम् । तदुक्तं कुवलयानन्दे—'विचित्रं तत्प्रयत्नश्चेद्विपरीतफलेच्छया । नमन्ति सन्तस्त्रैलोक्यादपि लब्धुं समुन्नतिम्' इति । अत्र वैपरीत्यं प्रतिभासत एव । यथावा साहित्यदर्पणे—'प्रणमत्युन्नतिहेतोर्जीवितहेतोर्विमुञ्चति प्राणान् । दुःखीयति सुखहेतोः को मूढः सेवकादन्यः' इति । यथावा रसगङ्गाधरे—'बन्धोन्मुक्त्यै खलु मखमुखान्कुर्वते कर्मपाशानन्तः शान्त्यै मुनिशतमतानल्पचिन्तां भजन्ति । तीर्थे मज्जन्त्यशुभजलधेः पारमुल्लङ्घकामाः सर्वं प्रामादिकमिह भवभ्रान्तिभाजां नराणाम्' इति । इदमुदाहरणद्वयमपि भ्रान्तिघटितत्वेनैव वैचित्र्यसाधकं मम त्वतथात्वेनेति विशेषः ॥ २३७ ॥ एवं विचित्रालंकारप्रसक्तमधिकालंकारं लक्षयति—**आधारेति ।** क्रमेणोदाहरणे । कियतीत्यादिपादाभ्याम् । यत्रेदं चेत्यं चेतयितुं योग्यमखिलं दृश्येन्द्रजालमपि कल्पितं सेयं ब्रह्मचित् कियती अनन्तपरिमाणास्तीत्यर्थः । इयं ह्याधाराधिक्यात्मकाधिकस्योदाहरणं । अतएव हृदीत्यादि । अद्य एवमद्वैतब्रह्मात्मवस्तुनः सर्वाधिष्ठानत्वेन त्रिविधपरिच्छेदशून्यत्वानुसंधानकाले मे हृदि अन्तःकरणे । मुत् हर्षः 'मुत्प्रीतिः प्रमदो हर्षः' इत्यमरात्ब्रह्मात्मानुसंधानजन्यानन्द इत्यर्थः।न माति अपरिच्छिन्नोक्तवस्तुविषयकज्ञानजन्यत्वेन तस्याप्यपरिच्छिन्नत्वात् परिच्छिन्ने मनसि न समाविशतीत्यन्वयः । इदं त्वाधेयाधिक्यात्मकाधिकस्योदाहरणं बोध्यम् । यथावा काव्यप्रकाशे—'अहो विशालं भूपाल भुवनत्रितयोदरम् । माति मातुमशक्योऽपि यशोराशिर्यदत्र ते' । 'युगान्तकालप्रतिसंहृतात्मनो जगन्ति यस्यां सविकाशमासत । तनौ ममुस्तत्र न कैटभद्विषस्तपोधनाभ्यागमसंभवा मुदः' इति च ॥२३८॥

सूक्ष्मादाधेयतः सौक्ष्म्यमाधारे त्वल्पमुच्यते ।
अतितन्व्यपि रोमालिर्मध्ये तस्या न दृश्यते ॥ २३९ ॥
अन्योन्यं यदि तादृक् स्यादुपकारो गुणादिना ।
राधास्मिताधरत्विड्भ्यां कापि शोभा परस्परम् ॥२४०॥
आलिलिङ्ग हरिः कामशरभीतस्तु राधिकाम् ।
सापि तं तादृशी फुल्लमल्लिकाकुञ्जरञ्जनात् ॥ २४१ ॥

एवमधिकप्रत्यनीक कुवलयानन्दकृदेकसंमतमल्पं लक्षयति—**सूक्ष्मादिति** । तुशब्दः । पूर्ववैलक्षण्यार्थः । सूक्ष्माद्दुर्लक्ष्यात् ।एतादृशात् आधेयतः । वृत्तिमनोवस्तुन इत्यर्थः । आधारेऽधिकरणे । सौक्ष्म्यं दुर्लक्ष्यत्वं वर्णितं चेदल्पं एतन्नामकमलंकरणमुच्यत इत्यन्वयः । तदुदाहरति—**अतीति** । रोमालिः प्रसिद्धैव । अतितन्व्यपि परमसूक्ष्मापि तस्याः पूर्वप्रकृतायाः कस्याश्चित्सुन्दर्या इति यावत् । मध्ये अवलग्ने न दृश्यते तस्य ततोऽप्यतिसूक्ष्मत्वान्नैव लक्ष्यत इति योजना । तदुक्तं कुवलयानन्दे—'अल्पं तु सूक्ष्मादाधेयाद्यदाधारस्य सूक्ष्मता । मणिमालोर्मिका तेऽद्य करे जपवटीयते' इति । इद हि विरहिणीं नायिकां प्रति सखीवाक्यम् । अयि प्रियसखि । **मणीति** । मणीनां माला यस्यां एतादृशी या ऊर्मिका वलयाकराङ्गुलिमुद्रा सा अद्य ते करे जपवटीयते जपार्थं अगंजा इति महाराष्ट्रदेशभाषाप्रसिद्धकस्तूर्याद्यनेकसुरभितरद्रव्यकल्कनिर्मितरुद्राक्षाकारवटीवलयमालेवाचरतीत्यर्थः । एवं चेदृशं विरहकार्श्यं तव संपन्न यद्वलयाकारं रत्नाङ्गुलीयकमतिसूक्ष्मावकाशमपि ततोऽप्यनुपमसूक्ष्मे त्वत्करे ऽपि कङ्कणवत्प्रवेश्यत इत्याकूतम् । यथावा तत्रैव—'यन्मध्यदेशादपि ते सूक्ष्म लोलाक्षि लक्ष्यते । मृणालसूत्रमपि तन्नैव माति स्तनान्तरे' इति ॥ २३९ ॥ एवमाधाराधेययोरुभयोरप्यतिसौक्ष्म्यात्परस्परानुकूलत्वघटितात्पालंकारनिरूपणप्रसक्तम् 'अन्योन्यं नाम यत्र स्यादुपकारः परस्परम् । त्रियामा शशिना भाति शशी भाति त्रियामया' इति । कुवलयानन्दोक्तमन्योन्यालंकारं लक्षयति—**अन्योन्यं यदीति** । तादृक् अन्योन्यं यथा स्यात्तथेत्यर्थः । एतादृशः गुणादिना । आदिपदेन क्रिया ज्ञेया । एवं च गुणद्वारा क्रियाद्वारा वेत्यर्थः । उपकारोऽनुग्रहो यदि स्यात्तदा अन्योन्यं नामालंकरणं स्यादिति संबन्धः । तदुक्तं रसगङ्गाधरे—'द्वयोरन्योन्येनान्योन्यस्य विशेषाधानमन्योन्यम् । विशेषश्च क्रियादिरूपः । यथा—'सुदृशो जितरत्नजालया सुरतान्तश्रमबिन्दुमालया । अलिकेन च हेमकान्तिना विदधे कापि रुचिः परस्परम्' । अत्र गुणरूपविशेषाधानं रुचेर्गुणत्वादिति । तदुदाहरति—**राधेति** । कृतेति शेषः ॥ २४० ॥ एवं गुणद्वारकं तदुदाहृत्य क्रियाद्वारकमपि तदुदाहरति—**आलिलिङ्गेति** । तुरप्यर्थे । हरिरपि । एवंचास्मदादेः केव कथेति सर्वथा दुर्जय एव कामवेग इत्याशयः । कामेति । कन्दर्पकलम्बकान्दिशीकः सन्निति यावत् । अतएव फुल्लेति । एतेन वक्ष्यमाणालिङ्गनादेर्निरुक्तभीतिशामकोपायस्य करणे कारणीभूत

किंचित्स्वास्थ्यसामग्री सूच्यते । अतएव राधिकां आलिलिङ्गेति योजना। एवं सापि राधिकापि तादृशी । स्मरशरपराभूता सतीत्यर्थः । अतएव फुल्लेति । अतएव तं श्रीकृष्णं आलिलिङ्गेत्यावृत्त्यान्वयः । एवं चात्र क्रियाद्वारकपरस्परोपकारकत्वमिति तत्त्वम् । अत्र रसगङ्गाधरकृता—'परपुरुषदृष्टिपातवज्राहतिभीता हृदयं प्रियस्य सीता । अविशत्परकामिनीभुजङ्गीभयतः सत्वरमेव सोऽपि तस्याः' । अत्र क्रियारूपविशेषाधानमिति प्रथमपादे च्छन्दोभङ्गलक्षणं स्वदोषं बालैरप्युपहसनीयमपश्यतामियदग्रे श्रीमदप्पय्यदीक्षितोपरि दूषणं प्रणीतं तत्रैव परीक्षणनिपुणरमणीयम् । तथाहि यत्तु 'यथोर्ध्वाक्षः पिबत्यम्बु पथिको विरलाङ्गुलिः । तथा प्रपापालिकापि धारां वितनुते तनुम्' । अत्र प्रपापालिकायाः पथिके मुखासक्त्या पानीयदानव्याजेन बहुकालं स्वमुखावलोकनमभिलषतः पथिकस्य धारातनूकरणतश्चिरपानीयदानानुवृत्तिसंपादनेनोपकारः कृत इति कुवलयानन्दकार आह । तत्र तावदियं पदरचनैवायुष्मतो ग्रन्थकर्तुर्व्युत्पत्तिशैथिल्यमुद्गिरति । तथाहि स्वमुखावलोकनमभिलषन्त्या इत्यत्र स्वशब्दस्य प्रपापालिकाविशेषणघटकत्वेन प्रपापालिकाबोधकत्वमेव न्याय्यं न पान्थबोधकत्वम् । एवं स्वमुखावलोकनमभिलषत इत्यत्रापि पान्थबोधकत्वमेव नत्वदिष्टप्रपापालिकाबोधकत्वम् । एवं स्थिते अर्थासंगतिः स्पष्टैवेत्यादि । तत्र यत्स्वशब्दस्यार्थवर्णनं स्वारसिकमायुष्मता कृतं तदेव कुवलयानन्दकृतामपि संमतम् । तथाच प्रपापालिकायाश्चेतसि स्वशब्दवाच्यमन्मुखावलोकनमनेन पान्थेन चिरकालं कर्तव्यं, ततोयं मयि दृढतमं समासक्तः सद्य एव मह्यं यथेष्टवनकुञ्जादौ यथेच्छं संभोगं संप्रदास्यतीति तया जलधारातनूकारः क्रियते । एवं पान्थमनस्यप्यनया प्रपापालिकया स्वशब्दितस्य मम मुखावलोकनं दीर्घकालमेव कर्तव्यं, तत इयं मयि दृढं समनुरज्य मह्यं यथावत्काममुखं दास्यतीति तेन जलगलनार्थमङ्गुलीनां विरलत्वं संपाद्यते । एवंच प्रपापालिकाप्रवृत्तेः प्राधान्येनात्मोपकारकत्वेऽपि पान्थोपकारकत्वमपि तथैव नान्तरीयकतयैव सिद्ध्यति । तद्वत्पान्थव्यापारस्यापि संभोगसुखस्योभयव्यापारसाध्यत्वेनोभयतर्पकत्वात् । एवं गङ्गाजलवदतुलनिर्मले तद्वाक्यार्थसांगत्ये तत्तात्पर्यानवबोधमूलाऽसूयादिमूला वा तद्वाक्यार्थस्यासंगतिप्रतिपत्तिस्तव । एतेनाग्रे यदुक्तं किंचेत्यादिना । इहहि धारातनूकरणाङ्गुलिविरलीकरणयोः कर्तृभ्यां स्वस्वकर्तृकचिरकालदर्शनार्थं प्रयुक्तयोस्तत्रैवोपयोगश्चमत्कारी नान्यकर्तृकचिरकालदर्शन इत्यनुदाहरणमेवैतदस्यालंकारस्येत्यादिनाऽनुदाहरणत्वं निरुक्तकुवलयानन्दोदाहृतपद्यस्य तदपि प्रत्युक्तम् । परस्परोपकारत्वस्यापि स्फुटीकरणम् । तत्रोभयोर्व्यापाराभ्यां स्वस्वोपकारसद्भावेऽपि परस्परोपकारोऽपि न निवार्यत इति कुवलयानन्देऽप्युपसंहृतत्वाच्च । तस्मादेतद्दूषणकारणं कोविदा एव कलयन्त्विति दिक् ॥ २४१ ॥ एवं

**विशेषस्तु त्रिधाऽधारं विनाधेयस्य वर्णनम् ।**
**एकोऽपरस्तु वस्त्वेकमप्यनेकत्र कथ्यते ॥ २४२ ॥**
**किंचिदुद्योगतो लभ्यवस्तुसिद्धिस्तथेतरः ।**
**गुरौ कैवल्यमाप्तेऽपि शास्त्रस्थास्तद्गिरः स्वदाः ॥ २४३ ॥**
**कृष्णे मधुपुरीं यातेऽप्यस्ति मेऽन्तर्बहिश्च सः ।**
**रसं वराटकं द्रष्टुं यतताऽऽप्तः स चिन्मणिः ॥ २४४ ॥**
**कर्तैको येन यत्कार्यमकरोद्वा करिष्यति ।**
**परस्तेनान्यथा तच्चेत्स व्याघातो द्विधा मतः ॥ २४५ ॥**

परस्परोपकारकत्वलक्षणविशेषरूपान्योन्यनिरूपणं प्रसक्तं त्रिविधं विशेषं लक्षयति—**विशेषस्त्वित्यादि**सार्धेन । एवं 'विशेषः ख्यातमाधारं विनाप्याधेयवर्णनम् । गतेऽपि सूर्ये दीपस्थास्तमश्छिन्दन्ति तत्कराः' इति कुवलयानन्दोक्तं प्रथमविशेषं लक्षयित्वा 'विशेषः सोऽपि यद्येकं वस्त्वनेकत्र वर्ण्यते । अन्तर्बहिः पुरः पश्चात्सर्वदिक्ष्वपि सैव मे' इत्यपि तदुक्तम् । द्वितीयं तं लक्षयति । अपर इत्यादिना । पूर्ववैलक्षण्यार्थस्तुशब्दः ॥ २४२ ॥ अथ 'किंचिदारम्भतोऽशक्यवस्त्वन्तरकृतिश्च सः । त्वां पश्यता मया लब्धं कल्पवृक्षनिरीक्षणम्' इति च तदुक्तं तृतीयं तं लक्षयति—**किंचिदित्य**र्धेनैव । एवं लक्षितानुदाहरति त्रीनपि क्रमेण—**गुरावित्यादि**सार्धेनैव । गुरौ आचार्ये कैवल्यं अद्वैतात्मत्वेनावस्थानलक्षणं मोक्षमित्यर्थः । आप्ते प्राप्ते सत्यपि । शास्त्रेति । शास्त्रगता इत्यर्थः । एतादृश्यः तद्गिरः तस्य गुरोः गिरः वाच इत्यर्थः । तस्य सर्वात्मत्वेनाद्वैतशास्त्रवाचः सर्वा अपि आकरादिगता अनेकग्रन्थगताश्चेत्यर्थः । स्वदाः अद्वैतात्मप्रदाः सन्तीत्यर्थः । यथावा काव्यप्रकाशे—'दिवमप्युपयातानामाकल्पमनल्पगुणगणा येषाम् । रमयन्ति जगन्ति गिरः कथमिह कवयो न ते वन्द्याः' ॥ २४३ ॥ एवमाद्यं विशेषमुदाहृत्य द्वितीयं तमुदाहरति—**कृष्ण इति** । इदं हि राधिकावाक्यम् । यथावा कुवलयानन्दे—'हृदयान्नापयातोऽसि दिक्षु सर्वासु दृश्यसे । वत्स राम गतोऽसीति संतापेनानुमीयसे' इति । रसगङ्गाधरेऽपि–'नयने सुदृशां पुरो रिपूणां वचने वदयगिरां महाकवीनाम् । मिथिलापतिनन्दिनीभुजान्तः स्थित एव स्थितिमाप रामचन्द्रः' इति । एवं तृतीयमपि तमुदाहरति—**रसमिति** । शृङ्गारादिरूपम् । सः श्रुत्यन्तप्रसिद्धः चिन्मणिः अद्वैतचिच्चिन्तामणिरित्यर्थः । एवमेवोक्तं प्राग्रसलक्षणावसरे चतुर्थरत्ने । 'यद्वा तत्संयुतिव्यक्तस्याप्युपाधिश्चिदेव सः' इति । यथावा रसगङ्गाधरे—'किं नाम तेन न कृतं सुकृतं पुरारे दासीकृता न खलु का भवनेषु लक्ष्मीः । भोगा न के बुभुजिरे विबुधैरलभ्या येनार्चितोऽसि करुणाकर हेलयापि' इति ॥ २४४ ॥ एवमाश्चर्यात्मकत्रिविधविशेषनिरूपणप्रसक्तं व्याघातमपि द्विप्रकारं लक्षयति—**कर्तेति** । एकः कर्ता येन करणेन यत्कार्यं अकरोत् । यद्वा करिष्यति परः अन्यः कर्ता तेन प्रागुक्तेनैव साधनेन तदेव प्रागुक्तमेव

**वाचा हन्ति खलो दीनानवन्तीज्यास्तयैव तान् ।**
**न मां नयसि भीरुत्वाद्वनं मा तर्हि दूरय ॥ २४६ ॥**
**द्विधा कारणमाला स्याद्धेतुपूर्वापरत्वतः ।**
**भक्त्या युक्तिर्भवेद्युक्त्या मुक्तिरेव भविष्यति ॥ २४७ ॥**

कार्यं अन्यथा तद्विरुद्धं करोति वा करिष्यति चेत्तर्हि सः व्याघातः एतन्नामकोऽलंकारः द्विधा भूतभविष्यद्भेदेन द्विप्रकारकः मतः प्राचामाचार्याणां संमतोऽस्तीति संबन्धः । तदुक्तं कुवलयानन्दे—'स्याद्व्याघातोऽन्यथाकारि तथाकारि क्रियेत चेत् । यैर्जगत्प्रीयते हन्ति तैरेव कुसुमायुधः । सौकर्येण निबद्धापि क्रिया कार्यविरोधिनी । दया चेद्बाल इति मय्यपरित्याज्य एव ते' इति । रसगङ्गाधरेऽपि—'यत्र ह्येकेन कर्त्रा येन करणेन कार्यं किंचिन्निष्पादितं निष्पादयिषितं वा तदन्येन कर्त्रा तेनैव करणेन तद्विरुद्धकार्यस्य निष्पादनेन निष्पिपादयिषया वा व्याहन्यते स व्याघात इति ॥ २४५ ॥ तत्र भूतव्याघातमाद्यमुदाहरति—**वाचेत्याद्यर्धेन** । अवन्ति रक्षयन्ति । ईज्याः पूज्याः सज्जना इत्यर्थः । एवं भविष्यद्व्याघातमन्त्यमप्युदाहरति—**नमामित्यर्धेनैव** । इदं हि पितृवचसा दण्डकारण्यमियासुं भगवन्तं श्रीरामं प्रति भगवत्याः सीताया वचः । भो भगवंस्त्वं मां प्रति भीरुत्वात् 'विशेषास्त्वङ्गना भीरुः' इत्यमरात् स्त्रीविशेषलक्षणीभूतभयशीलत्वाद्धेतोर्वनं प्रति न नयसि चेत्तर्हि तत एव हेतोर्मां दूरय स्वभुजाभ्यन्तरात् दूरीकुर्वित्यन्वयः । यथावा काव्यप्रकाशे—'दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः । विरूपाक्षस्य जयिनीस्ताः स्तुवे वामलोचनाः' इति । यथावा कुवलयानन्दे—'लुब्धो न विसृजत्यर्थं नरो दारिद्र्यशङ्कया। दातापि विसृजत्यर्थं तयैव ननु शङ्कया' इति । यथावा रसगङ्गाधरे—'दीनद्रुमान्वचोभिः खलनिकरैरनुदिनं दलितान् । पल्लवयन्त्युल्लसितान्नित्यन्तैररेव सज्जनधुरीणाः'।'विमुञ्चसि यदि प्रिय प्रियतमेति मां मन्दिरे तदा सह नयस्व मां प्रणययन्त्रणायन्त्रितः । अथ प्रकृतिभीरुरित्यखिलभीतिभङ्गक्षमान्न जातु भुजमण्डलादवहितो बहिर्भावय' इति च ॥ २४६ ॥ एवं कार्यकारणभावघटितव्याघातालंकारनिरूपणप्रसक्तां कारणमालां लक्षयति—**द्विधेति** । तत्र हेतुं प्रकटयति—**हेत्विति** । पूर्वं पूर्वं कारणमपरमपरं कार्यमयमेकस्तत्प्रकारः । पूर्वं पूर्वं कार्यमपरमपरं कारणमिति द्वितीयस्तत्प्रकार इति भेदादित्यर्थः । तदुक्तं कुवलयानन्दे—'गुम्फः कारणमाला स्याद्यथा प्रक्रान्तकारणैः । नयेन श्रीः श्रिया त्यागस्त्यागेन विपुलं यशः । भवन्ति नरकाः पापात्पापं दारिद्र्यसंभवम् । दारिद्र्यमप्रदानेन तस्माद्दानपरो भवेत्' इति । रसगङ्गाधरेपि—'सैव शृङ्खला आनुगुण्यस्य कार्यकारणभावरूपत्वे कारणमाला । तत्र पूर्वं पूर्वं कारणं परं परं कार्यमित्येका । पूर्वंपूर्वं कार्यं परंपरं कारणमित्यपरा' इति । तत्राद्यामुदाहरति—**भक्त्येति** । सा 'परानुरक्तिरीश्वरे' इति शाण्डिल्यलक्षितेशविषयकनिरतिशयानुरत्येत्यर्थः । युक्तिः सगुणाद्यन्यतरतद्रूपविषयकमनःपरिणतिरिति यावत् ।

**सद्विद्या साधुसङ्गेन साधुसङ्गः सुकर्मणा ।**
**सुकर्म शुद्धमार्गेण शुद्धमार्गः श्रुतीहया ॥ २४८ ॥**
**एकावली पूर्वपूर्वस्योत्तरोत्तरहेतुता ।**
**सा द्विधा स्याद्विशेष्यत्वाद्विशेषणतयापि च ॥ २४९ ॥**
**स विद्वान्यो विवेकी स्यात्स विवेको य आत्मदः ।**
**धर्मेण धीर्धिया त्यागस्त्यागेनामृतमश्नुते ॥ २५० ॥**

मुक्तिः सगुणपक्षे सलोकतादिसार्ष्टितान्यतमावाप्तिर्निर्गुणपक्षे अद्वैतात्मसाक्षात्कारेणाविद्याध्वस्तिरित्यर्थः ॥ २४७ ॥ द्वितीयामुदाहरंस्तादृशभक्तिकारणीभूतसद्विद्यादिपरम्परामपि व्यनक्ति—**सद्विद्येति । श्रुतीति ।** श्रुत्येकोक्तयावज्जीवं चेष्टयेत्यर्थः । यथावा काव्यप्रकाशे—'जितेन्द्रियत्वं विनयस्य कारणं गुणप्रकर्षो विनयादवाप्यते । गुणप्रकर्षेण जनोऽनुरज्यते जनानुरागप्रभवा हि संपदः' इति । साहित्यदर्पणेऽपि—'श्रुतं कृतधियां सङ्गाज्जायते विनयः श्रुतात् । लोकानुरागो विनयान्न किं लोकानुरागतः' इति । यथावा रसगङ्गाधरे—'लभ्येत पुण्यैर्गृहिणी मनोज्ञा तया सुपुत्राः परितः पवित्राः । स्फीतं यशस्तैः समुदेति नूनं तेनास्य नित्यः खलु नाकलोकः । स्वर्गापवर्गौ खलु दानलक्ष्मीर्दानं प्रसूते विपुला समृद्धिः। समृद्धिमल्पेतरभागधेयं भाग्यं च शंभो तव पादभक्तिः' इति च । विस्तरस्त्वत्र तत्रैव बोध्योऽनुपयोगान्नेह प्रपञ्चित इति शिवम् ॥ २४८ ॥ एवं शृङ्खलामूलकारणमालानिरूपणप्रसक्तामेकावलीं लक्षयति—**एकावलीति ।** एवं सामान्यतो लक्षिताया एकावल्याः पुनस्तादृग्द्वैविध्यं प्रतिबोधयति—**सेत्याद्यर्धेनैव ।** सा एकावली पूर्वपूर्वस्योत्तरोत्तरं प्रति विशेष्यत्वाद्धेतुताघटिता तथापि विशेषणतयापि हेतुताघटिता चेति द्विधा स्यादित्यध्याहृत्य संबन्धः।तदुक्तं कुवलयानन्दे—'गृहीतमुक्तरीत्यार्थश्रेणिरेकावली मता' इति लक्षणं संक्षिप्य उत्तरोत्तरस्य पूर्वपूर्वविशेषणभावः पूर्वपूर्वस्योत्तरोत्तरविशेषणभावो वा गृहीतमुक्तरीतिरिति । रसगङ्गाधरेपि—'संसर्गस्य विशेष्यविशेषणभावरूपत्वे एकावली । सा च पूर्वपूर्वस्योत्तरोत्तरं प्रति विशेष्यत्वे विशेषणत्वे चेति द्विधेति ॥ २४९ ॥ अथोक्तरीत्या द्विविधामपि तामुदाहरति—स विद्वानित्याद्यर्धाभ्यां क्रमेण । अत्र पूर्वपूर्वस्य विद्वानित्यादेरुत्तरोत्तरं प्रति विवेकीत्यादिप्रतिविशेष्यत्वाद्धेतुताघटितेयमिति प्रथमैकावलीलक्षणसमन्वयः । **धर्मेणेति ।** इह पूर्वपूर्वस्य धर्मादेरुत्तरोत्तरं ध्यादिकं प्रति विशेषणतया हेतुता घटितेति द्वितीया सा । यथावा काव्यप्रकाशे—'पुराणि यस्यां सवराङ्गनानि वराङ्गना रूपपुरस्कृताङ्गयः । रूपं समुन्मीलितसद्विलासमस्त्रं विलासाः कुसुमायुधस्य' । 'न तज्जलं यन्न सुचारुपङ्कजं न पङ्कजं तद्यदलीनषट्पदम् । न षट्पदोऽसौ कलगुञ्जितो न यो न गुञ्जितं तन्न जहार यन्मनः' इति च । यथावा कुवलयानन्दे—'नेत्रे कर्णान्तविश्रान्ते कर्णौ दोःस्तम्भदोलिनौ । दोःस्तम्भौ जानुपर्यन्तप्रलम्बनमनोहरौ । जानुनी रत्नमुकुराकारे तस्य महीभुजः' । द्वितीया यथा—'दिक्कालात्म-

**सारो गुणस्वरूपाभ्यामुत्तरोत्तरमुच्छ्रयात् ।**
**नारिङ्गश्रियमाकृष्य ततो हेमाब्जकोशभाम् ॥ २५१ ॥**
**स्तनौ ते स्मरमल्लस्य स्वर्णगोलविजित्वरौ ।**
**द्विजेभ्यः पण्डिताः श्रेष्ठास्तेभ्यो येऽत्र विरागिणः ॥२५२॥**

---

समैव यस्य विभुता यस्तत्र विद्योतते यत्रामुष्य सुधीभवन्ति किरणा राशेः स यासामभूत् । यस्तत्पित्तमुषःसु योऽस्य हविषे यस्तस्य जीवातवे वोढा यद्गुण-मेष मन्मथरिपोस्ताः पान्तु वो मूर्तयः' इति । अत्र क्रमादाकाशसूर्यचन्द्रजलाग्नि-यजमानपृथ्वीवायवोऽष्टमूर्तयः ॥ २५० ॥ एवमेकावलीनिरूपणान्तर्गतोत्तरोत्तर-हेतुभावप्रसक्तोत्तरोत्तरोत्कर्षात्मकं साराख्यमलंकारं लक्षयति—**सार इति** । गुणस्वरूपाभ्यां उत्तरोत्तर उच्छ्रयादुत्कर्षात्सारः साराभिधोऽलंकारो भवतीत्य-न्वयः । एवं च क्वचिद्गुणैरुत्तरोत्तरमुत्कर्षः क्वचित्स्वरूपेणेत्यसौ द्विविध इति फलि-तम् । तदुक्तं काव्यप्रकाशे—'उत्तरोत्तरमुत्कर्षो भवेत्सारः परावधिः' । परः पर्य-न्तभावोऽवधिर्यस्य धाराधिरोहिततया तत्रैवोत्कर्षस्य विश्रान्तेरिति । रसगङ्गाधरे तु 'गुणस्वरूपाभ्यां पूर्वपूर्ववैशिष्ट्ये सारः' इति तु लक्षणं सारस्य युक्तमित्युक्तम् । एवमर्धेन लक्षितं सारमुदाहरन्नादौ गुणसारमुदाहरति—**नारिङ्ग्**त्येकेन । हे प्रिये इत्यार्थिकम् । नारिङ्गाख्यः फलविशेषः प्रसिद्ध एव । एवंच ते स्तनावित्यु-त्तरश्लोकगतमप्यत्रापकर्षणीयम् । त्वत्कुचावेतौ नारिङ्गश्रियं पूर्वं नारिङ्गाख्यप्रसि-द्धफलशोभामित्यर्थः । आकृष्य मुग्धावस्थायां हृत्वेत्यर्थः । ततः तदुत्तरं मध्या-वस्थायाम् । हेमेति । कनककमलकोशकान्तिम् आकृष्येत्यत्राप्यनुकृष्यम् ॥२५१॥ **स्तनाविति । स्मरेति** । मदनरूपमल्लस्येत्यर्थः । **स्वर्णेति** । मल्ला हि मल्ल-शालायां कराभ्यां पाषाणगुटिके तोलयन्तीति प्रसिद्धमेव । तथाच मदनमल्लस्य देवत्वेन मल्लक्रियोचितौ कनकगोलावेव पाषाणगुटिकास्थानीयौ । तयोर्विजित्व-रौ कठिनत्वतुङ्गत्वपीतकान्तिमत्त्वसमवर्तुलत्वसाधर्म्येण विजयशीलौ संप्रति प्रौ-ढत्वदशायां भवत इत्यध्याहृत्य संबन्धः । एवं गुणप्रयुक्तोत्तरोत्तरोत्कर्षलक्षणं सा-रमुदाहृत्य स्वरूपकृतोत्तरोत्तरोत्कर्षलक्षणं तमुदाहरति—**द्विजेभ्य** इत्यर्धेनैव । अत्र त्वत्स्तनद्वयविषय इत्यर्थः । इहोदाहरणद्वितये क्रमादेकानेकविषयकत्वमपि बोध्यम् । यथावा कुवलयानन्दे—'उत्तरोत्तरमुत्कर्षः सार इत्यभिधीयते । मधुरं मधु त-स्माच्च सुधा तस्याः कवेर्वचः' इति । यथावा रसगङ्गाधरे—'जम्बीरश्रियमति-लङ्घ्य लीलयैव व्यानम्रीकृतकमनीयहेमकुम्भौ । नीलाम्भोरुहनयनेऽधुना कुचौ ते स्पर्धेते खलु कनकाचलेन सार्धम्' । 'गिरयो गुरवस्तेभ्योऽप्युर्वी गुर्वी ततोऽपि जगदण्डम् । जगदण्डादपि गुरवः प्रलयेऽप्यचला महात्मानः' इति । अत्र पूर्वा-लंकारे । एतेन 'दीपकैकावलीयोगान्मालादीपकमिष्यते' इति यदुक्तं कुवलयानन्द-कृता तद्भ्रान्तिमात्रविलसितमिति यदुक्तं तदेव भ्रान्तिमात्रविलसितम् । माला-

उपदेशक्रमात्संबन्धो यथासंख्यमुच्यते।
शिवं मोहं भवाम्भोधिं स्मर संहर निस्तर ॥ २५३ ॥
एकोऽनेकत्र पर्यायोऽनेकेऽप्येकत्र चेत्क्रमात्।
श्रीसीमन्तास्यवक्षोजे हरिदृक् तत्र तच्चिरम् ॥ २५४ ॥

---

रूपकादिवन्मालादीपकस्यापि संभवात् ॥ २५२ ॥ एवं द्वितीयस्य स्वरूपात्मसारस्य क्रमात्पूर्वपूर्वापेक्षयोत्तरोत्तराधिक्यप्रसक्तं यथासंख्यं लक्षयति—**उपदेशेति**। अर्थानामिति त्वार्थिकमेव। सर्वत्र संबन्धस्यार्थद्वयैकायत्तत्वात्। यद्यप्येकस्मिन्नपि कुसुमे रूपरसगन्धाद्यनेकार्थप्रतियोगिकसंसर्गोऽपि दृश्यत एवाथापि तत्तत्संसर्गस्तु तत्तदेकप्रतियोगिक एवेति न काप्यनुपपत्तिः। एवं चोद्दिष्टानां पदार्थानां यथाक्रमं विधेयैः सुबन्तादिपदार्थैः समन्वयो यथासंख्यमिति तल्लक्षणं पर्यवसितम्। तदुक्तं कुवलयानन्दे—'यथासंख्यं क्रमेणैव क्रमिकाणां समन्वयः। शत्रुं मित्रं विपत्तिं च जय रञ्जय भञ्जय' इति। उपदेशक्रमेणार्थानां संबन्धो यथासंख्यमिति रसगङ्गाधरेपि। तदुदाहरति-**शिवमिति**। यथावा रसगङ्गाधरे-'यौवनोद्गमनितान्तशङ्किताः शीलशौर्यबलकान्तिलोभिताः। संकुचन्ति विकसन्ति राघवे जानकीनयननीरजश्रियः' इति ॥ २५३ ॥ एवं यथासंख्यनिरूपणीयक्रमिकान्वयप्रसक्तं द्विविधमपि पर्यायालंकारं लक्षयति—**एक इति**। एकः पदार्थः क्रमात् अनेकत्र अनेकेष्वाधारीभूतपदार्थेष्वाधेयत्वेन वर्ण्यते चेदेकः पर्यायो भवति। तथा अनेकेप्याधेयीभूताः पदार्थाः क्रमादेकत्राधारे वर्ण्यन्ते चेत्सोऽप्यपरः पर्यायोऽस्तीति योजना। तदुक्तं कुवलयानन्दे—'पर्यायो यदि पर्यायेणैकस्यानेकसंश्रयः। पद्मं मुक्त्वा गता चन्द्रं कामिनीवदनप्रभा' इति। 'एकस्मिन्नप्यनेकं वा पर्यायः सोऽपि संमतः। अधुना पुलिनं तत्र यत्र स्रोतः पुराजनि' इति च। रसगङ्गाधरेपि क्रमेणानेकाधिकरणकमेकमाधेयमेकः पर्यायः क्रमेणानेकाधेयकमेकमधिकरणमपर इति। उभावपि क्रमादुदाहरति—**श्रीत्यादिना**। हरिदृक् विष्णुदृष्टिः। **श्रीति**। लक्ष्मी कबरीवदनस्तनद्वय इत्यर्थः। चिरं आसेति शेषः। एतेनाद्य उक्तः। तत्र हरिदृशि तल्लक्ष्मीसीमन्तादिकं क्रमाद्विषयतासंबन्धेन चिरमासेति द्वितीयोऽपि। यथावा काव्यप्रकाशे—'श्रोणीबन्धस्त्यजति तनुतां सेवते मध्यभागः पद्भ्यां मुक्तास्तरलगतयः संश्रिता लोचनाभ्याम्। धत्ते वक्षः कुचसचिवतामद्वितीयं च वक्त्रं त्वद्गात्राणां गुणविनियमः कल्पितो यौवनेन' इति। इदं प्रथमे। द्वितीये तु यथा रसगङ्गाधरे—'विदूरादाश्चर्यं स्तिमितमथ किंचित्परिचयादुदञ्चच्चाञ्चल्यं तदनु परितः स्फारितरुचि। गुरूणां संघाते सपदि मयि याते समजनि त्रपाघूर्णत्तारं नयनयुगमिन्दीवरदृशः' इति। अत्राश्चर्यस्तिमितत्वाद्याधेयमेव भिन्नकालिकं धर्मजातं बोध्यम्। किं चात्र कुवलयानन्दोदाहरणे दूषणं पण्डितराजैरुक्तं विम्बोष्ठ एवेत्यत्र। अधुना पुलिनं तत्रेत्यत्र चानुदाहरणत्वादिलौकिकत्वादिना

**परस्परं विनिमयः परिवृत्तिस्तु वस्तुनोः।**
**पक्वपर्णाशनं त्यक्त्वा जगृहेऽर्धमुमा विभोः॥ २५५॥**
**परिसंख्यैकमाबाध्य परत्रार्थस्य निश्चितिः।**
**चेतः स्मरसि चेद्विष्णुं स्मर नो परसुन्दरीम्॥ २५६॥**

तत्केचिन्मतत्वेनैव समाधेयमिति रहस्यम्॥ २५४॥ एवं पर्यायनिरूपणीयाधाराधेयभावप्रसक्तां श्रीमदप्पय्यदीक्षितैः 'परिवृत्तिर्विनिमयो न्यूनाभ्यधिकयोर्मिथः। जग्राहैकं शरं मुक्त्वा कटाक्षान्स रिपुश्रियाम्' इति। कुवलयानन्दोक्तां परिवृत्तिं लक्षयति-**परस्परमिति**। तामुदाहरति-पक्वेति। विभोर्व्यापकस्य परमार्थतो भूम्नः श्रीशंकरस्येत्यर्थः। अर्धं वामार्धभागमिति यावत्। एतेन विभुपदध्वनितत्रिविधपरिच्छेदशून्यस्याप्यर्धमुमापक्वपर्णाशनमपि त्यक्त्वा जगृह इत्यद्भुतरसोऽपि द्योतितः। रसगङ्गाधरे त्वत्रानेकप्रकारकत्वमप्युक्तम्। तद्यथा परकीययत्किंचिद्वस्त्वादानविशिष्टं परस्मै स्वकीययत्किंचिद्वस्तुसमर्पणं परिवृत्तिः। क्रय इति यावत्। सा च तावद्द्विविधा समपरिवृत्तिर्विषमपरिवृत्तिश्चेति। समपरिवृत्तिरपि द्विविधा। उत्तमैरुत्तमानां न्यूनैर्न्यूनानां चेति। विषमपरिवृत्तिरपि तथा। उत्तमैर्न्यूनानां न्यूनैरुत्तमानां चेति। क्रमेणोदाहरणानि—'अङ्गानि दत्वा हेमाङ्गि प्राणान्क्रीणासि चेन्नृणाम्। युक्तमेतन्न तु पुनर्लोचनाम्बुरुहद्वयम्'। अत्र पूर्वार्धे एव समपरिवृत्तिरुत्तरार्धे तु विषमैव। 'अस्थिमालामयीं दत्वा मुण्डमालामयीं तनुम्। गृह्णतां त्वत्पुरस्थानां को लाभः स्मरशासन'। 'गरिमाणमर्पयित्वा लघिमानं कुचयुगात्कुरङ्गदृशाम्। स्वीकुर्वते नमस्ते यूनां धैर्याय निर्विवेकाय'। 'किमहं कथयामि योषितामधरं बिम्बफलं समर्प्य याः। सुरसानि हरन्ति हन्त हा विदुषां पुण्यफलानि सत्वरम्' इति। मदुदाहरणे तु न्यूनप्रदानेन महत्तमादानमेवेति॥ २५५॥ एवं क्रयपर्यायीभूतोभयापेक्षपरिवृत्तिप्रसक्तां 'परिसंख्यां निषिध्यैकमेकस्मिन्वस्तुयन्त्रणम्। स्नेहक्षयः प्रदीपेषु न स्वान्तेषु नतभ्रुवाम्' इति कुवलयानन्दोक्तां परिसंख्यां लक्षयति—**परिसंख्येति**। तदुक्तं रसगङ्गाधरे—'सामान्यतः प्राप्तस्यार्थस्य कस्माच्चिद्विशेषाद्व्यावृत्तिः परिसंख्या' इति। तामुदाहरति-**चेत इति**। काव्यप्रकाशे त्वस्याश्चातुर्विध्यमुक्तम्। 'किंचित्पृष्टमपृष्टं वा कथितं यत्प्रकल्पते। तादृगन्यव्यपोहाय परिसंख्या तु सा स्मृता'। प्रमाणान्तरावगतमपि वस्तुशब्देन प्रतिपादितं प्रयोजनान्तराभावात्सदृशवस्त्वन्तरव्यवच्छेदाय यत्पर्यवस्यति सा भवेत्परिसंख्या। अत्र च कथनं प्रश्नपूर्वकं तदन्यथा च परिदृष्टम्। तथोभयत्र व्यपोह्यमानस्य प्रतीयमानता वाच्यत्वं चेति चत्वारोऽस्य भेदाः। क्रमेणोदाहरणानि—'किमासेव्यं पुंसां सविधमनवद्यं द्युसरितः किमेकान्ते ध्येयं चरणयुगुलं कौस्तुभभृतः। किमाराध्यं पुण्यं किमभिलषणीयं च करुणा यदासक्त्या चेतो निरवधि विमुक्त्यै प्रभवति'। 'किं भूषणं सुदृढमत्र यशो न रत्नं किं कार्यमार्यचरितं सुकृतं न दोषः। किं चक्षुरप्रतिहतं धिषणा न नेत्रं जानाति

**विकल्पः पाक्षिकी प्राप्तिः परस्परविरुद्धयोः ।**
**यावद्विषयसंभोगः शंभो त्यागोऽथवास्तु मे ॥ २५७ ॥**
**अक्रामिकः पदार्थानामन्वयः स्यात्समुच्चयः ।**
**राधाङ्कुरिततारुण्या कृष्णोऽप्यधरतृष्णितः ॥ २५८ ॥**

---

कस्तदपरः सदसद्विवेकम्' । 'कौटिल्यं कचनिचये करचरणाधरदलेषु रागस्ते । काठिन्यं कुचयुगुले तरलत्वं नयनयोर्वसति' । 'भक्तिर्भवे न विभवे व्यसनं शास्त्रे न युवतिकामास्त्रे । चिन्ता यशसि न वपुषि प्रायः परिदृश्यते महताम्' इति । रसगङ्गाधरेऽपि—'सेवायां यदि साभिलाषमसि रे लक्ष्मीपतिः सेव्यतां चिन्तायामसि सस्पृहं यदि चिरं चक्रायुधश्चिन्त्यताम् । आलापं यदि काङ्क्षसे मधुरिपोर्गाथास्तदाऽलप्यतां स्वापं वाञ्छसि चेन्निरर्गलसुखे चेतः सखे सुप्यताम्' । 'किं तीर्थं हरिपादपद्मभजनं किं रत्नमच्छा मतिः किं शास्त्रं श्रवणेन यस्य गलति द्वैतान्धकारोत्करः । किं मित्रं सततोपकाररसिकं तत्त्वावबोधः सखे कः शत्रुर्वद खेददानकुशलो दुर्वासनासंचयः' । 'तीर्थं गङ्गा तदितरदपां निर्मलं संघमात्रं देवौ तस्याः प्रसवनिलयौ नाकिनोऽन्ये वराकाः । सा यत्रास्ते स हि जनपदो मृत्तिकामात्रमन्यत्तां यो नित्यं नमति स बुधो बोधशून्यस्ततोऽन्यः' इत्यादि ॥ २५६ ॥ एकमेकनिषेधपूर्वकमपरविधानावधारणरूपपरिसंख्यानिरूपणप्रसक्तं विकल्पालंकारं लक्षयति—**विकल्प इति** । तदुक्तं कुवलयानन्दे—'विरोधे तुल्यबलयोर्विकल्पालंकृतिर्मता । सद्यः शिरांसि चापान्वा नमयन्तु महीभुजः' इति । रसगङ्गाधरेऽपि 'विरुद्धयोः पाक्षिकी प्राप्तिर्विकल्पः' इति । तमुदाहरति—**यावदिति** । अत्र यावद्विषयसंभोगतत्त्यागयोः परस्परविरुद्धत्वादथवेति पाक्षिकप्राप्तेरेव श्रीशंकरचरणं प्रति मयाभ्यर्थ्यमानत्वाच्च लक्षणसंगतिः । यथावानुक्रमेणोभयोः—'पतत्यविरतं वारि नृत्यन्ति च कलापिनः । अद्य कान्तः कृतान्तो वा दुःखस्यान्तं करिष्यति' इति । 'प्राणानर्पय सीतां वा गृध्रांस्तर्पय वा द्विजान् । यमं भजस्व रामं वा यथेच्छसि तथा चर' इति । किंच प्राणानित्याद्युदाहरणेऽपि सर्वत्र विकल्पालंकारे विरुद्धत्वेऽपि अर्पणादिविधेयांशघटकत्वतौल्येन ध्वन्यमानोपमानोपमेयभावे लिङ्गादिभेददोषप्रमोषो रसगङ्गाधर एवाग्रे । 'नच लिङ्गवचनभेद उपमायां दोष इति वाच्यम् । साधारणधर्मस्योपमानसामानाधिकरण्ये उपमेयसामानाधिकरण्ये च यत्र वैरूप्यं तत्रैव लिङ्गवचनभेदस्य दोषताया अभ्युपगतेरिति ॥२५७॥ एवमेतत्प्रतिपक्षप्रसक्तं समुच्चयं लक्षयति—**अक्रामिक इति** । एतेनात्र क्षणमात्रविलम्बेऽपि न क्षतिः' इति । तमुदाहरति—**राधेति** । **अधरेति**। अत्र तस्या इत्यार्थिकम् । अधरे अधरोष्ठे तत्पानविषये तृष्णा संजाता यस्य स तथेत्यर्थः । आसेतिशेषः । अपिः समुच्चये । यथावा काव्यप्रकाशे—'तत्सिद्धिहेतावेकस्मिन्यत्रान्यत्तत्करं भवेत्' । समुच्चयोऽसौ तस्य प्रस्तुतस्य कार्यस्यैकस्मिन्साधके स्थिते साधकान्तराणि सन्ति स समुच्चयः । उदाहरणम्—'दुर्वाराः स्मरमार्गणाः प्रियतमो दूरे मनोऽत्युत्सुकं

**समाधिराकस्मिकहेत्वन्तरा कार्यसाधुता ।**
**यदा तीव्रविजिज्ञासा तदैवाप्तः शिवो गुरुः ॥ २५९ ॥**

गाढं प्रेम नवं वयोऽतिकठिनाः प्राणाः कुलं निर्मलम् । स्त्रीत्वं धैर्यविरोधि मन्मथसुहृत्कालः कृतान्तोऽक्षमी नो सख्यश्चतुराः कथं नु विरहः सोढव्य इत्थं शठः' । अत्र विरहासहत्वं स्मरमार्गणा एव कुर्वन्ति तदुपरि प्रियतमदूरस्थित्याद्युपात्तम् । एष एव समुच्चयः सद्योगे असद्योगे सदसद्योगे च पर्यवस्यतीति न पृथग्लक्ष्यते । तथाहि—'कुलममलिनं भद्रा मूर्तिर्मतिः श्रुतशालिनी भुजबलमलं स्फीता लक्ष्मीः प्रभुत्वमखण्डितम् । प्रकृतिसुभगास्त्वेते भावास्त्वमीभिरयं जनो व्रजति सुतरां दर्पं राजंस्त एव तवाङ्कुशाः' । अत्र सतां योगः उत्कोदाहरणे त्वसतां योगः । 'शशी दिवसधूसरो गलितयौवना कामिनी सरो विगतवारिजं मुखमनक्षरं स्वाकृतेः । प्रभुर्धनपरायणः सततदुर्गतः सज्जनो नृपाङ्गणगतः खलो मनसि सप्त शल्यानि मे' । अत्र शशिनि धूसरे शल्ये शल्यान्तराणीति शोभनाशोभनयोगः इत्यादि । यथावा साहित्यदर्पणे—'हंहो धीर समीर हन्त जननं ते चन्दनक्ष्माभृतो दाक्षिण्यं जगदुत्तरं परिचयो गोदावरीवारिभिः । प्रत्यङ्गं दहसीह मे त्वमपि चेदुद्दामदावाग्निवन्मत्तोऽयं मलिनात्मको वनचरः किं वक्ष्यते कोकिल' इति । यथावा सरस्वतीकण्ठाभरणे—'निकामं क्षामाङ्गी सरसकदलीगर्भसुभगा कलाशेषा मूर्तिः शशिन इव नेत्रोत्सवकरी । अवस्थामापन्ना मदनदहनोद्दामविधुरामियं नः कल्याणी रमयति मनः कम्पयति च' इति । यथावा कुवलयानन्दे—'बहूनां युगपद्भावभाजां गुम्फः समुच्चयः । नश्यन्ति पश्चात्पश्यन्ति त्रस्यन्ति च भवद्द्विषः।' 'अहंप्राथमिकाभाजामेककार्यान्वयोऽपि सः । कुलं रूपं वयो विद्या धनं च मदयत्यमुम्'। यथावा—'प्रदानं प्रच्छन्नं गृहमुपगते संभ्रमविधिर्निरुत्सेको लक्ष्म्यामनभिभवगन्धाः परकथाः । प्रियं कृत्वा मौनं सदसि कथनं चाप्युपकृतेः श्रुतेऽत्यन्तासक्तिः पुरुषमभिजातं कथयति' इति । यथावा रसगङ्गाधरे—'युगपत्पदार्थानामन्वयः समुच्चयः । युगपदिति क्रमव्यावृत्त्यर्थं न त्वेकक्षणप्रतिपत्त्यर्थम् । तेन किंचित्कालभेदेऽपि न समुच्चयभङ्ग इति तल्लक्षणमुक्त्वाग्रे 'प्रादुर्भवति पयोदे कज्जलमलिनं बभूव नभः।रक्तं च पथिकहृदयं कपोलपाली मृगीदृशः पाण्डुः'।'उदितं मण्डलमिन्दोरुदितं सद्यो वियोगिवर्गेण। मुदितं च सकलयुवजनचूडामणिशासनेन मदनेन'। अत्राद्येन गुणानां द्वितीये प्रियाणां च यौगपद्येन भिन्नधर्म्यन्वयः । एवमन्यदपि तत्र बोध्यमित्यलं पल्लवनेनेति शिवम्॥२५८॥एवमनेकहेतुघटितसमुच्चयालंकारनिरूपणप्रसक्तं तादृशम् 'समाधिः कार्यसौकर्यं कारणान्तरसंनिधेः । उत्कण्ठिता च तरुणी जगामास्तं च भानुमान्' इति कुवलयानन्दोक्तं समाध्यलंकारं लक्षयति—**समाधिरिति** । **आकस्मिकेति** । अचिन्तितान्यकारणादित्यर्थः । **कार्येति** । कार्यस्य साङ्गशीघ्रसिद्धिल-

१ कुलमित्यादौ । २ राजन्नित्यादौ ।

**प्रत्यनीकं तिरस्कारः प्रतिपक्षप्रियस्य चेत्।**
**स्मरः स्मरारे त्वद्भक्तानेव नः पीडयत्यलम्॥ २६०॥**

क्षणासाधुता चेत्समाधिरेतन्नामकोऽलंकारः स्यादित्यन्वयः। तदुक्तं रसगङ्गाधरे-'एककारणजन्यस्य कार्यस्याकस्मिककारणान्तरसमवधानाहितं सौकर्यं समाधिः' इति। तमुदाहरति—**यदेति**। कस्यचिदनेकजन्मसंचितसात्विकतमपुण्यपुञ्जसंचयपरिपाकरूपपरमेश्वरप्रसादशालिनोऽधिकारिण इति शेषः। तीव्रपदेन फलापर्यवसायिसामान्यजिज्ञासाव्युदासः। विना तु परोक्षजिज्ञासाव्यावृत्तिः। शिष्टं तु स्पष्टमेव। यथावा काव्यप्रकाशे—'समाधिः सुकरं कार्यं कारणान्तरयोगतः'। साधनान्तरोपकृतेन कर्त्रा यदक्लेशेन कार्यमारब्धमाधीयते स समाधिर्नाम। उदाहरणम्—'मानमस्या निराकर्तुं पादयोर्मे पतिष्यतः। उपकाराय दिष्ट्येदमुदीर्णं घनगर्जितम्' इति। यथावा रसगङ्गाधरे—'आयातैव निशा मनोमृगदृशामुन्निद्रमातन्वती मानो मे कथमेष संप्रति निरातङ्कं हृदि स्थास्यति। ऊहापोहमिमं सरोजनयना यावद्विधत्तेतरां तावत्कामनृपातपत्रसुषमं बिम्बं बभासे विधोः' इति॥ २५९॥ एवमनायासेष्टसिद्धिप्रसङ्गतस्तदभावश्चेद्बलवतः प्रतिरोधात्तर्हि तन्मित्र एव शस्त्रपातौचित्यसङ्गतं प्रत्यनीकं बलवतः शत्रोः पक्षे पराक्रमः। 'जैत्रनेत्रानुगौ कर्णावुत्पलाभ्यामधःकृतौ' इति कुवलयानन्दोक्तं प्रत्यनीकं लक्षयति—**प्रत्यनीकमिति**। उक्तं हि रसगङ्गाधरेपि—'प्रतिपक्षसंबन्धिनस्तिरस्कृतिः प्रत्यनीकम्' इति। तदुदाहरति—**स्मर इति**। एवं च त्वयैवायं समुपशमनीय इत्याशयः। यथावा काव्यप्रकाशे—'त्वं विनिर्जितमनोभवरूपः सा च सुन्दर भवत्यनुरक्ता। पञ्चभिर्युगपदेव शरैस्तां तापयत्यनुशयादिव कामः' इति। यथावा साहित्यदर्पणे—'मध्येन तनुमध्या मे मध्यं जितवतीत्ययम्। इभकुम्भौ भिनत्त्यस्याः कुचकुम्भनिभौ हरिः' इति। सिंह इत्यर्थः। यथावा कुवलयानन्दे—'मम रूपकीर्तिमहरद्भुवि यस्तदनुप्रविष्टहृदयेयम्' इति। 'त्वयि मत्सरादिव निरस्तदयः सुतरां क्षिणोति खलु तां मदनः'। एवं बलवति प्रतिपक्षे प्रतिकर्तुमशक्तस्य तदीयबाधनं प्रत्यनीकमिति स्थिते साक्षात्प्रतिपक्षे पराक्रमः प्रत्यनीकमिति कैमुतिकन्यायेन फलति। यथा—'मधुव्रतौघः कुपितः स्वकीयमधुप्रपापद्मनिमीलनेन। बिम्बं समाकृष्य बलात्सुधांशोः कलङ्कमङ्के ध्रुवमातनोति' इति। अङ्के 'उत्सङ्गचिह्नयोः' इत्यमरादङ्कशब्दवाच्योत्सङ्गोपलक्षितशरीर इत्यर्थः। यथावा रसगङ्गाधरे—'रेरे मनो मम मनोभवशासनस्य पादाम्बुजद्वयमनारतमानमन्तम्। किं मां निपातयसि संसृतिगर्तमध्ये नैतावता तव गमिष्यति पुत्रशोकः'। 'जितमौक्तिकसंपदां रदानां सहवासेन परां मुदं ददानाम्। विरसादधरीकरोति नासामधुना साहसशालि मौक्तिकं ते'। पूर्वत्रोपजीव्यस्येह तूपजीवकस्य तिरस्काराद्वैरस्यार्थशाब्दत्वाभ्यां च वैलक्षण्यमेवमन्यदप्यूह्यम्। अत्र विचार्यते। 'हेतूत्प्रेक्षयैव गतार्थत्वान्नेदमलंकारान्तरं भवितुमर्हति' इत्यादिना 'मम रूपकान्तिम्' इत्यादिन

**कैमुत्येनार्थसिद्धिश्चेत्काव्यार्थापत्तिरुच्यते।**
**अविद्याप्यात्मबोधेन बाधितान्यकथैव का ॥ २६१ ॥**
**सामान्याद्यनवच्छिन्नोऽनुमित्यकरणत्ववान्।**
**अर्थः प्रकृतसिद्धीष्टः काव्यलिङ्गं सतां मतम् ॥ २६२ ॥**
**सर्वैनोविलयं यावद्दुर्गुणार्णवमप्यलम्।**
**मां क्षणात्कृपयोद्धर्तुं धुर्यः को वाऽपरो गुरो ॥ २६३ ॥**

---

'सुतरां क्षिणोति खलु तां मदनः' इति कुवलयानन्दकारेणोदाहृते पद्ये हेत्वंश उत्प्रेक्षांशश्चेत्युभयमपि शाब्दमिति कथंकारमस्यालंकारस्योदाहरणतां नीतमिदमायुष्मतेति न विद्म इति प्रकृतालंकारखण्डनं कुवलयानन्ददूषणं चोक्तं यत्तत्त्वदुक्तपूर्वग्रन्थवदेव सुसमाधेयम्। प्राचामनुरोधस्योभयत्रापि तौल्यात्। एवं विचारासहत्वादेव कुवलयानन्दकारैश्चित्रमीमांसायामुत्प्रेक्षान्तमेव तद्विवेचनस्य कृतत्वाच्चेति न कोपि दोष इति शिवम् ॥ २६० ॥ एवं प्रतिपक्षप्रियतिरस्कारात्मकप्रत्यनीकप्रतिपादनप्रसक्तां 'कैमुत्येनार्थसंसिद्धिः काव्यार्थापत्तिरिष्यते। स जितस्त्वन्मुखेनेन्दुः का वार्ता सरसीरुहाम्' इति कुवलयानन्दकृदेकमतां काव्यार्थापत्त्यलंकृतिं लक्षयति—**कैमुत्येनेति**। कैमुतिकन्यायेनेत्यर्थः। तामुदाहरति—**अविद्यापीति**। आत्मबोधेन यथोक्ताधिकारिणः सद्गुरुणा समुपदिष्टश्रवणादिसुविचारितस्वशाखीयवेदान्तमहावाक्यजन्याप्रतिबद्धद्वैतबाधपूर्वकाद्वैतब्रह्मात्मैक्यविषयकनिर्विकल्पप्रमालक्षणसाक्षात्कारेणेत्यर्थः। अविद्यापि निखिलद्वैतेन्द्रजालकलनोक्तचिन्मात्रैकाश्रयविषयकमूलाज्ञानव्यक्तिरपीति यावत्। अपिना निरुक्तरूपत्वेन तस्याः परमदुर्विरसत्वं सूचितम्। यदाबाधितप्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वलक्षणेन मिथ्यात्वेन निर्णीतेत्यर्थः। तदा अन्यकथैव का तत्प्रयुक्तद्वैत वार्तैव का न काप्यस्तीति संबन्धः। यथावा कुवलयानन्दे—'अधरोऽयमधीराक्ष्या बन्धुजीवप्रभाहरः। अन्यजीवप्रभां हन्त हरतीति किमद्भुतम्'। 'स्वकीयं हृदयं भित्वा निर्गतौ यौ पयोधरौ। हृदयस्यान्यदीयस्य भेदने का त्रपा तयोः' इति च ॥ २६१ ॥ एवं काव्यार्थापत्तिप्रतिपादनप्रसक्तं काव्यलिङ्गं लक्षयति—**सामान्यादीति**। आदिना विशेषः। एतेन 'उक्तिरर्थान्तरन्यासः स्यात्सामान्यविशेषयोः' इति प्रसिद्धार्थान्तरन्यासव्युदासः। अनुमितिकरणत्वघटितानुमानालकारं व्यावर्तितुं पुनर्विशिनष्टि—**अनुमितीति**। एतादृशः। **प्रकृतेति**। प्रकृतः प्रतिपाद्यो यः पदार्थः तस्य या सिद्धिः तस्या इष्टः। प्रकृतवस्तुप्रतिपत्तये विवक्षित इत्यर्थः। एतादृशश्च योऽर्थः स काव्यलिङ्गनामालंकरणं सतामालंकारिकवराणां मतं संमतं भवतीति योजना। तदुक्तं रसगङ्गाधरे–'अनुमितिकरणत्वेन सामान्यविशेषभावाभ्यां चानालिङ्गितः प्रकृतार्थोपपादकत्वेन विवक्षितोऽर्थः काव्यलिङ्गमिति। अत्र विस्तरस्तत्रैवानुसंधेयः। इह प्रकृतेत्यादितृतीयविशेषणकृत्यं तूपमादिवारणार्थमेवेत्यलं पल्लवितेन ॥ २६२ ॥ अथैवं लक्षितं काव्यलिङ्गमुदाहरति—

**वाक्सास्त्यर्थान्तरन्यासो या सामान्यविशेषयोः।**
**साधवश्छिद्यपि प्रीत्यै दग्धोऽप्यगुरुरिष्टकृत् ॥ २६४ ॥**

**सर्वेति**। दारिद्र्यादितर्कितदुष्प्रारब्धलक्षणसर्वपापकारिकरणत्वेऽपि सांप्रतिकसाद्गुण्यसत्वे स्यादेव निःश्रेयसाधिकृतिरित्यशङ्काय पुनर्विशिनष्टि—**यावदित्यादिना**। अलं पर्याप्तं यथा स्यात्तथा यावद्दुर्गुणार्णवमपि सकलासुरादिसंपत्समृद्धिसंपन्नमपीत्यर्थः। एतादृशं मां क्षणानिमेषमात्रेणैव। कृपया अनन्यशरणत्वज्ञानजन्योद्धरणविलम्बासहिष्णुतयेति यावत्। उद्धर्तुं संसारसमुद्रान्निष्काशयितुमित्येतत्। अयि गुरो, कोवा अपरस्त्वदन्यो धुर्यः समर्थोऽस्ति न कश्चिदपीति संबन्धः। तस्मात्त्वमेव मदुद्धरणकरणप्रवीणो भवसीति भावः। अत्र निरुक्तलक्षणस्यार्थस्य साधकत्वेन विवक्षितः पूर्वार्धोक्तरीत्यानुमानादिसामग्रीविधुरः सर्वेत्यादिसकलश्लोकार्थः स्पष्ट एवेति लक्षणसंगतिः। यथावा काव्यप्रकाशे—'वपुःप्रादुर्भावादनुमितमिदं जन्मनि पुरा पुरारे नैवास्मि क्षणमपि भवन्तं प्रणतवान्। नमन्मुक्तः संप्रत्यहमतनुरग्रेऽप्यनतिमानितीश क्षन्तव्यं तदिदमपराधद्वयमपि' इति। यथावाकुवलयानन्दे—'समर्थनीयस्यार्थस्य काव्यलिङ्गं समर्थकम्। जितोऽसि मन्दकन्दर्प मच्चित्तेऽस्तित्रिलोचनः' इति। 'असोढा तत्कालोल्लसदसहभावः स तपसां कथानां विस्रम्भेष्वथ च रसिकः शैलदुहितुः। प्रमोदं वो दद्यात्कपटबटुवेषापनयने त्वराशैथिल्याभ्यां युगपदभियुक्तः स्मरहरः'। 'जीयादम्बुधितनयाऽधररसमास्वादयन्मुरारिरयम्। अम्बुधिमथनक्लेशं कलयन्विफलं च सफलं च' इति च। यथावा रसगङ्गाधरे—'पद्मासनप्रभृतिनिर्जरचित्तवृत्तिदुष्प्रापदिव्यमहिमन् भवतो गुणौघान्। तुष्टूषतो मम नितान्तविशृङ्खलस्य मन्तु शिशोः शिव न मन्तुमिहासि योग्यः' इति। यत्त्वेतैः पण्डितराजैः कुवलयानन्दकारलक्षणमनूद्य तदपि सामान्यविशेषभावानालिङ्गितत्वविशेषणरहितं चेदर्थान्तरन्यासे स्यादेवातिप्रसक्तमित्युक्तं तत्सत्यमेव। परंतु तद्विशेषणं तेषां संमतमेवेति तदाशयज्ञेन चेत्पदं प्रयुञ्जता भवतैव ज्ञापितमिति सर्वं तदनवद्यमेवेति दिक् ॥ २६३ ॥ एव व्याप्तिमूलककाव्यलिङ्गालंकारप्रतिपादनप्रसक्तं तद्घटितसामान्याद्यात्मकमर्थान्तरन्यासं लक्षयति—**वागित्यर्धेनैव**। या सामान्यविशेषयोर्वाग्युक्तिः सा अर्थान्तरन्यासोऽस्तीति संबन्धः। तदुक्तं कुवलयानन्दे—'उक्तिरर्थान्तरन्यासः स्यात्सामान्यविशेषयोः। हनूमानब्धिमतरद्दुष्करं किं महात्मनाम्'। 'गुणवद्वस्तुसंसर्गाद्याति स्वल्पोऽपि गौरवम्। पुष्पमालानुषङ्गेण सूत्रं शिरसि धार्यते' इति। तमुदाहरति—**साधवइत्यादिसार्धेन**। अत्राद्यपादे सामान्योक्तिः अन्त्यपादे विशेषोक्तिरिति लक्षणसंगतिः। यथावा कुवलयानन्दे—'यदुच्यते पार्वति पापवृत्तये न रूपमित्यव्यभिचारि तद्वचः। तथाहि ते शीलमुदारदर्शने तपस्विनामप्युपदेशतां गतम्' इति। यथावा रसगङ्गाधरे—'कस्तूर्येन्मार्मिकस्तन्वि रमणीयेषु वस्तुषु। हित्वान्तिकं सरोजिन्याः पश्य याति न षट्पदः'। यथा—

**संतर्पितोऽप्यहिः क्षीरैर्विषमेव वमत्यलम्।**
**दुर्जनानां स्वभावोऽयमुपकारेऽपि याहतिः॥ २६५॥**
**उत्कर्षाकारणे तद्धेतुत्वं प्रौढोक्तिरिष्यते।**
**मृगाङ्कमृगनेत्रश्रीहारिणी ते प्रियेक्षिणी॥ २६६॥**
**धर्मिणि प्रकृते तस्य व्यवहारानुदीरणात्।**
**अतथाव्यवहारस्य संबन्धो ललितं स्मृतम्॥ २६७॥**

'प्रभुरपि याचितुकामो भजेत वामोरु लाघवं सहसा। यदहं त्वयाधरार्थी सपदि विमुख्या निराशतां नीतः' इतिच ॥ २६४॥ एवं सामान्यपूर्वकविशेषार्थान्तरन्यासमुदाहृत्य विशेषपूर्वकसामान्यार्थान्तरन्यासमुदाहरति—**संतर्पितोऽपीति।** आहतिरुपकर्तुर्ध्वस्तिः। ननु काव्यलिङ्गस्यानुपदोक्तस्य प्रागुक्तस्योदाहरणालंकारस्य प्रकृतस्यार्थान्तरन्यासस्य तथा वक्ष्यमाणयोर्हेत्वनुमानालंकारयोश्च व्याप्तिमूलकत्वसाम्येऽपि कोंशो विशिष्य प्रत्येकं परस्परभेदक इति चेच्छृणु। काव्यलिङ्गे तु निरुक्तविशेषणद्वयेनानुमानार्थान्तरन्यासवदुदाहरणहेत्वलंकाराभ्यामपि वैलक्षण्यमभिसंभवत्येव। सामान्याद्यवच्छिन्नत्वस्य तत्र सत्वात्। उदाहरणार्थान्तरन्यासयोर्वैलक्षण्यस्य रसगङ्गाधर एवोक्तत्वाच्च। तथाचोक्तं तत्रैव—'इदमस्ति वैलक्षण्यं सामान्यार्थसमर्थकस्य विशेषवाक्यार्थस्य द्वयी गतिः। अनुवाद्यांशमात्रे विशेषत्वं विधेयांशस्तु सामान्यगत एवेत्येका। अनुवाद्यविधेयोभयांशेऽपि विशेषत्वमित्यपरा। तत्राद्योदाहरणालंकारस्य विषयः। द्वितीया त्वर्थान्तरन्यासभेदस्येति'। एवं काव्यप्रकाशे वैधर्म्येणाप्यर्थान्तरन्यासभेदावुक्तौ ॥ २६५॥ एवं व्याप्तिमूलकार्थान्तरन्यासनिरूपणे सति तद्विपरीतप्रसक्तां प्रौढोक्तिं लक्षयति—**उत्कर्षेति।** तद्धेतुत्वमुत्कर्षहेतुत्वमित्यर्थः। तामुदाहरति—**मृगाङ्केति**। अये प्रिये, ते अक्षिणी। **मृगाङ्केति।** मृगाङ्कस्य चन्द्रस्य अङ्कस्थितो यो मृगः किशोरकुरङ्गः तस्य या नेत्रश्रीर्नयनशोभा तस्याः हारिणी स्वशोभयापहरणशीले भवत इत्यन्वयः। अत्र नेत्रशोभायां हरिणसामान्यस्य कारणत्वे सुप्रसिद्धेऽपि तत्रातथाभूतस्यापि चन्द्रचमूरोस्तत्कल्पनालक्षणसंगतिः। यथावा कुवलयानन्दे—'प्रौढोक्तिरुत्कर्षाहेतौ तद्धेतुत्वप्रकल्पनम्। कचाः कलिन्दजातीरतमालस्तोममेचकाः' इति। एतेन 'किंचिन्मिथ्यात्वसिद्ध्यर्थं मिथ्यार्थान्तरकल्पनम्। मिथ्याध्यवसितिर्वेश्यां वशयेत्खस्रजं वहन्' इति तदुक्ता मिथ्याध्यवसितिर्व्याख्याता। अत्रैवान्तर्भावात् बालव्युत्पादनार्थमेव तत्र पृथगुक्तेश्च ॥ २६६॥ एवं प्रौढोक्तिप्रसक्तं ललितं लक्षयति—**धर्मिणीति। अतथेति।** अप्रकृतव्यवहारस्येत्यर्थः। तदुक्तं कुवलयानन्दे—'प्रस्तुते वर्ण्यवाक्यार्थप्रतिबिम्बस्य वर्णनम्। ललितं निर्गते नीरे सेतुमेषा चिकीर्षति' इति। रसगङ्गाधरेपि—'प्रकृतधर्मिणि प्रकृतव्यवहारानुल्लेखेन निरूप्यमाणोऽप्रकृतव्यवहारसंबन्धो ललितालंकारः। 'आददानः परद्रव्यं विषं भक्षयसि ध्रुवम्' इत्यादिनिदर्शनावारणाय तृतीयान्तम्। अप्रस्तुतप्रशंसावारणाय प्रकृतधर्मिणीति

**किंवा ब्रवीम्यहं चित्रं सखि त्वं पश्य कौतुकम् ।**
**गोष्ठद्वारमियं पश्चात्पिधत्तेऽद्य वृषे गते ॥ २६८ ॥**
**विना तत्करणे यत्नमभीष्टाप्तिः प्रहर्षणम् ।**
**राधां प्रतीक्षते कृष्णो यावत्तावत्तु साभ्यगात् ॥ २६९ ॥**

॥ २६७ ॥ अथैतदुदाहरति—**किंवेति** । इदं हि राधया मानातिशयेनावहेलितत्वात् श्रीकृष्णे तन्मन्दिरादौदासीन्येन गते सति पश्चात्तापेन तस्यां दूत्यादिप्रेषणेन पुनस्तदानयने यतमानायां सत्यां तद्रहःसखीं प्रति तद्रहःसख्यन्तरवाक्यम् । अयि सखि, अहं त्वां प्रति किंवा चित्रं ब्रवीमि । तस्य लोकोत्तरतया साकल्येन वक्तुमशक्यत्वान्नैव ब्रवीमि किंतु त्वमेवेदं कौतुकं पश्येति संबन्धः । ननु किं तदिति तत्सूचनमात्रं त्वपेक्षितमेवेत्यत आह—**गोष्ठद्वारमित्याद्युत्तरार्धेन** । इयमित्यङ्गुल्या निर्दिश्यमाना निकटवर्तिनी प्रियसखी राधिकेत्यर्थः । वृषे वृषभे गते बहिः स्वैरगृहार्थं रात्रौ प्रयाते सतीति यावत् । पश्चादद्य गोष्ठद्वारं गोष्ठस्य 'गोष्ठं गोस्थानकम्' इत्यमरात्तत्रां निरोधनादिनिलयद्वारं पिधत्ते कपाटादिनाच्छादयतीति योजना । अत्र प्रकृतधर्मीभूतायां राधिकायां प्रकृतधर्मस्य मानातिशयेन श्रीकृष्णावहेलनलक्षणस्यानुल्लेखेन अप्रकृतव्यवहारोऽयं वृषे गते सत्यनन्तरं गोष्ठद्वारपिधानव्यवहारस्तत्संसर्गस्य निरूपणत्वाल्लक्षणसंगतिः । यथावा कुवलयानन्दे नैषधीयचरितपद्ये—'अनायि देशः कतमस्त्वयाद्य वसन्तमुक्तस्य दशां वनस्य' इत्यादौ । अत्र कतमो देशस्त्वया परित्यक्त इति प्रस्तुतार्थमनुपन्यस्य वसन्तमुक्तस्य वनस्य दशामनायीति तत्प्रतिबिम्बभूतार्थमात्रोपन्यासाल्ललितालंकारः इति । अत्र रसगङ्गाधरे 'इह च प्रस्तुते धर्मिणि देशविशेषे राजकर्तृकत्यागकर्मत्वरूपस्य वर्ण्यस्यार्थस्यावर्णनेऽप्यप्रस्तुतस्यावसन्तकर्तृकत्यागकर्मत्वस्याप्यवर्णनात्कथं संगच्छताम्' इति चरमं दूषणमुक्तं तत्तुच्छम् । तत्प्रतिबिम्बीभूतार्थमात्रोपन्यासादिति मात्रचैव दत्तोत्तरत्वात् । वसन्तेन मुक्तमिति विग्रहस्य तवापीष्टत्वेनार्थमात्रस्यानपह्नवाच्च । एवंच प्राक्तनदूषणगणोऽपीर्ष्यादिमूलकत्वादेवेति निपुणं विभाव्य सूरिभिः पराकरणीय इति दिक् ॥ २६८ ॥ एवं ललितप्रसक्तम् 'उत्कण्ठितार्थसंसिद्धिर्विनायत्नं प्रहर्षणम् । तामेव ध्यायते तस्मै निसृष्टा सैव दूतिका' इति कुवलयानन्दोक्तं प्रथमप्रहर्षणालंकारं लक्षयति—**विनेति** । **अभीष्टेति** । 'सर्वेन्द्रियसुखास्वादो यत्रास्तीत्यभिमन्यते । तत्प्राप्तीच्छां ससंकल्पामुत्कण्ठां कवयो विदुः' इति तदुक्तोत्कण्ठाविषयीभूतार्थप्राप्तिरित्यर्थः । तदुदाहरति—**राधामिति** । यथावा गीतगोविन्दे—'मेघैर्मेदुरमम्बरं वनभुवः श्यामास्तमालद्रुमैर्नक्तं भीरुरयं त्वमेव तदिमं राधे गृहं प्रापय । इत्थं नन्दनिदेशतश्चलितयोः प्रत्यध्वकुञ्जद्रुमं राधामाधवयोर्जयन्ति यमुनाकूले रहःकेलयः' इति । इदं हि मामकं प्रहर्षणलक्षणं त्रिविधप्रहर्षणसाधारणमेव । परं त्वत्र तत्करणे अभीष्टाप्त्यसाधारणकारणविषये यत्नं विना प्रयत्नमन्तरेत्यर्थः । साधारणः अकस्मादिति तु शेषपूर-

**ईप्सितादधिकाप्तिस्तद्दीपार्थ्यर्पात्मभं मणिम् ।**
**उपाययत्नाफलमप्यञ्जनार्थ्यलभन्निधिम् ॥ २७० ॥**

णम् । प्रथमभेदपक्ष एवात्रेति विशेषः । एवमेवोक्तं रसगङ्गाधरे 'साक्षादुद्देश्यकयत्नमन्तरेणाप्यभीष्टार्थस्य लाभः प्रहर्षणम्' । इदं च सामान्यलक्षणं त्रिविधप्रहर्षणसाधारणम् । तत्राकस्मादभीप्सितार्थस्य लाभ इत्येका विधा । वाञ्छितार्थसिद्ध्यर्थं यत्ने क्रियमाणे ततोऽप्यधिकतरार्थलाभ इत्यपरा । उपायसिद्ध्यर्थाद्यत्नात्साक्षात्फलस्य लाभ इति तृतीया । अस्यामेवाव्याप्तिनिरासार्थं लक्षणे साक्षादित्युक्तम् । क्रमेणोदाहरणानि—'तिरस्कृतो रोषवशात्परिष्वजन् प्रियो मृगाक्ष्या शपितः पराङ्मुखः । किं मूर्च्छितोऽसाविति कांदिशीकया कयाचिदाचुम्ब्य चिराय सस्वजे' । अत्र यत्नसामान्यशून्यस्यापीष्टलाभः । 'केलीमन्दिरमागतस्य शनकैरालीरपास्येङ्गितैः सुप्तायाः सरुषः सरोरुहदृशः संवीजनं कुर्वतः । जानन्त्याप्यनभिज्ञयेव कपटव्यामीलिताक्ष्या सखि श्रान्तासीत्यभिधाय वक्षसि तया पाणिर्ममाऽधीयत' । अत्र भामिन्या रोषनिवारणाय यत्ने क्रियमाणे रोषनिवारणादप्यधिकतरसुखप्रदः कामुकस्य भामिनीकर्तृकः स्वकरकर्मकस्तत्कुचाधिकरणक आसङ्गः । नचात्र तृतीयभेदः शङ्क्यः । व्यजनवीजनसमये कामुकस्य माननिवारणस्यैव मुख्योद्देश्यत्वेन तदुपेयकुचस्पर्शादिफलान्तरस्यानुपस्थितेः । यथावा—'लोभाद्वराटिकानां विक्रेतुं तक्रमनिशमटन्त्या । लब्धो गोपकिशोर्या मध्येरथ्य महेन्द्रनीलमणिः' । अत्र प्रहर्षणद्वितीयभेदः स्फुट एवेत्यादितद्दर्शनोपायविमर्शनार्थं 'मया तदालीसदनं गतेन तत्रैव साऽलक्ष्यत पक्ष्मलाक्षी । दाक्षायणीमर्चयितु प्रयाता' । अत्र तद्दर्शनोपायसिद्ध्यर्थं प्रयुक्तात्तत्सखीसदनगमनयत्नात् साक्षादेव तद्दर्शनलाभ इति ॥ २६९ ॥ अथ 'वाञ्छितादधिकार्थस्य संसिद्धिश्च प्रहर्षणम् । दीपमुद्योजयेद्यावत्तावदभ्युदितो रविः' इत्यपि कुवलयानन्दोक्तं द्वितीयप्रहर्षणप्रभेदं लक्षयति—**ईप्सितादिति** पादेन । तत्प्रहर्षणं भवतीत्यर्थः । तदुदाहरति—**दीपेति** पादेनैव । आत्मभं स्वप्रकाशम् । यथावा कुवलयानन्दएव—'चातकस्त्रिचतुरान्पयःकणान्याचते जलधरं पिपासया । सोऽपि पूरयति विश्वमम्भसा हन्तहन्त महतामुदारता' इति । अत्र रसगङ्गाधरे दूषणमुक्तं यत् 'लक्षणे संसिद्धिशब्दार्थो लाभेन कृतः संतोषातिशयः । एवं च प्रकृते चातकस्य त्रिचतुरकणमात्रार्थितया जलदकर्तृकजलकरणकविश्वपूरणेन हर्षाधिक्याभावात्प्रहर्षणं कथंकारं पदमाधत्ताम्' इति । तदसत् । श्लोके मात्रपदाभावात्कालान्तरे तृडाविर्भावतस्तदर्थित्वसंभवात्प्रावृट्काले सर्वदा तृष्या निरुक्तजलदकर्तृकजलकरणकविश्वपूरणतः कालान्तरीयतृडुपशमाश्वासेन प्रहर्षणसंभवाच्चेति दिक् । एवं 'यत्नादुपायसिद्ध्यर्थात्साक्षाल्लाभः फलस्य च । निध्यञ्जनौषधीमूलं खनतासादितो निधिः' इति च कुवलयानन्दोक्तं तृतीयं प्रहर्षणप्रकारं प्राग्वदेवाह—**उपायेति** । उपायविषयकप्रयत्नादित्यर्थः । फलमपि प्रहर्षणं भवतीत्यार्थिकम् । अञ्जनेत्याद्युदाहरणम् । उक्तरीत्यैवेदं स्पष्टम् । यथावा तत्रैव—'उच्चित्य

उल्लासो गुणदोषाभ्यामेकस्यान्यत्र तौ यदि ।
नासिकां सरलां वीक्ष्य सीमन्तः सरलोऽभवत् ॥ २७१ ॥
भ्रुवोः कौटिल्यमालक्ष्य कटाक्षावपि तादृशौ ।
वक्षोजयोर्गुरुत्वेन लघुर्मध्यो मृगीदृशः ॥ २७२ ॥
दृष्टेरतुलचापल्याद्धृतिर्धीरैव सर्वदा ।
ताभ्यां तु तदभावश्चेदवज्ञाऽलंकृतिर्मता ॥ २७३ ॥

प्रथममवस्थितं मृगाक्षी पुष्पौघं श्रितविटपं ग्रहीतुकामा। आरोढुं पदमदधादशोकयष्टावामूलं पुनरपि तेन पुष्पितोऽभूत्' इति । विषादनमप्येतद्विरुद्धत्वात्स्वयमेवोह्यम् । अमङ्गलप्रायत्वान्मया नैव मूले प्रपञ्चितम् । कुवलयानन्दे तु यथा—'इष्यमाणविरुद्धार्थसंप्राप्तिस्तु विषादनम् । दीपमुद्योजयेद्यावन्निर्वाणस्तावदेव सः' । 'रात्रिर्गमिष्यति भविष्यति सुप्रभातं भास्वानुदेष्यति हसिष्यति पङ्कजश्रीः । इत्थं विचिन्तयति कोशगते द्विरेफे हा हन्त हन्त नलिनीं गज उज्जहार' इति । रसगङ्गाधरे यथा—'स्वस्वव्यापृतिनम्रमानसतया मत्तो निवृत्ते जने चञ्चूकोटिविपाटितारलकुटो यास्याम्यहं पञ्जरात् । एवं कीरवरे मनोरथमयं पीयूषमास्वादयत्यन्तः संप्रविवेश वारणकराकारः फणिग्रामणीः' । 'चेलाञ्चलेनाननशीतरश्मिं संवृण्वतीनां हरिदृश्वरीणाम् । गोपाङ्गनानां स्मरजातकम्पादकाण्डसंपातमियाय नीवी' इत्यपि चोक्तम् । विस्तरस्त्वत्र तत्रैव द्रष्टव्यः । प्रकृतानुपयोगान्नेह संगृहीतोऽसाविति दिक् ॥ २७० ॥ एवं प्रहर्षणप्रसक्तमुल्लासं लक्षयति—**उल्लास इत्यर्धेनैव** । एवं चैकस्य गुणेनान्यत्र गुणः । एकस्य दोषेणान्यत्र दोषः । एकस्य गुणेनान्यत्र दोषः । एकस्य दोषेणान्यत्र गुण । इत्ययं चतुर्विध एव फलितः । क्रमेणोदाहरति—**नासिकामित्यादिद्वाभ्याम्** । अत्र नासिकायाः सारल्यरूपगुणेन सीमन्ते सरलत्वं गुणः ॥ २७१ ॥ **भ्रुवोरिति**। तादृशौ कुटिलावित्यर्थः। अभूतामित्यार्थिकम् । अत्रैकसंबन्धिदोषेणान्याधिकरणकदोषः । एवंचानयोरुदाहरणयोः सर्वथा नैव वैपरीत्यमित्याशयः, परंतु क्रमात् कान्तावयववर्णनेऽपि स्त्रीलिङ्गादिनिर्देशात्स्त्रीगुणात्पुंसि गुणः स्त्रीदोषोऽपीति व्यज्यते वक्षोजयोरिति । अत्र पुंगुणेनापि पुंस्येव दोष इति वैपरीत्यम् ॥ २७२॥ **दृष्टेरिति** । अत्र स्त्रीदोषेणापि स्त्रियामेव गुण एवेत्यपि तत् । तदुक्तं कुवलयानन्दे—'एकस्य गुणदोषाभ्यामुल्लासोऽन्यस्य तौ यदि । अपि मां पावयेत्साध्वी स्नात्वेतीच्छति जाह्नवी' । 'काठिन्यं कुचयोः स्रष्टुं वाञ्छन्त्यः पादपद्मयोः । निन्दन्ति विश्वधातारं त्वद्धाटीवैरियोषितः' । 'तद्भाग्यं धनस्यैव यन्नाश्रयति सज्जनम् । लाभोऽयमेव भूपाल सेवकानां नचेद्वधः' इति । यथावा रसगङ्गाधरे—'अन्यदीयगुणदोषप्रयुक्तमन्यस्य गुणदोषयोराधानमुल्लासः । तच्च गुणेन गुणस्य दोषस्य दोषेण गुणेन दोषस्य दोषेण गुणस्य वेति चतुर्धा । आधानं च तद्धत्तावुद्धिः । क्रमेणोदाहरणानि—'अलभ्यं सौरभ्यं हरति नियतं यः सुमनसां क्षणादेव प्राणानपि विरहशस्त्रक्षतभृताम् । त्वदीयानां लीलाचलितलह-

**चातकोऽतुलवृष्टावप्येति चलुमितं जलम् ।**
**मौनं यदि कुमुद्वत्याः का क्षतिः स्यात्त्रयीतनोः ॥ २७४ ॥**
**गुणदोषावनिष्टेष्टकृत्त्वाल्लेशो न तादृशौ ।**
**वरं भिक्षा श्रियोऽसत्याः स्वरपि क्षीयते बत ॥ २७५ ॥**

रीणां व्यतिकरात्पुनीते सोऽपि द्रागहह पवमानस्त्रिभुवनम्' । 'विशालाभ्यामाभ्यां किमिह नयनाभ्यां खलु फलं न याभ्यामालीढा परमरमणीया तव तनुः । अयं तु न्यक्कारो जननि मनुजस्य श्रवणयोर्ययोर्नान्तर्यातस्तव लहरिलीलाकलकलः' । 'हिंसाप्रधानैः खलु यातुधानैर्याऽनीयताऽपावनतां सदैव । रामाङ्घ्रियोगादथ सापि वन्या विन्ध्यस्य धन्या स मुनेः सती वा' इत्यादि । विस्तरस्त्विवहतद्ग्रन्थयोरेव बोध्यः । अथास्य प्रतिमल्लामवज्ञां लक्षयति—**ताभ्यां त्विति** । गुणदोषाभ्यां तदिति । गुणाद्यभावश्चेदित्यर्थः ॥ २७३ ॥ तामुदाहरति—**चातक इति** । अत्रातुलदृष्टिकारित्वरूपमेघगुणेनापि चातकस्यानधिकारित्वादल्पजलावाप्त्या विपुलजलप्राप्तिरूपगुणाभाव इति भावः । एवं गुणेनान्यदीयेनान्यस्य गुणाभावमुदाहृत्य दोषेण तादृशेन तस्य दोषाभावमप्युदाहरति—**मौनमिति** । त्रयीतनोः 'अंशुमाली त्रयीतनुः' इत्यमरात्सूर्यस्येत्यर्थः । यथावा कुवलयानन्दे—'स्वल्पमेवाम्बु लभते प्रस्थं प्राप्यापि सागरम् । मीलन्ति यदि पद्मानि का हानिरमृतद्युतेः'। यथावा तत्रैव—'मदुक्तिश्चेदन्तर्मदयति सुधीभूय सुधियः किमस्या नाम स्यादलसपुरुषानादरभरैः । यथा यूनस्तद्वत्परमरमणीयापि रमणी कुमाराणामन्तःकरणहरणं नैव कुरुते' । 'त्वं चेत्संचरसे वृषेण लघुता का नाम दिग्दन्तिनां व्यालैः कङ्कणभूषणानि कुरुषे हानिर्न हेम्नामपि । मूर्द्धन्यं कुरुषे सितांशुमयशः किंनाम लोकत्रयीदीपस्याम्बुजबान्धवस्य जगतामीशोऽसि किं ब्रूमहे' इति । यथावा रसगङ्गाधरे—'निष्णातोऽपि च वेदान्ते वैराग्य नैति दुर्जनः । चिर जलनिधौ मग्नो मैनाक इव मार्दवम्' । 'मध्येगलं विहरतां गरलं निकामं नागाधिपाः शिरसि भालतले हुताशः । ध्याता भवज्वलनमध्यगतस्तथापि तापं तदैव हरते हर ते तनुश्रीः' । 'मद्वाणि मा कुरु विषादमनादरेण मात्सर्यमन्दमनसां सहसा खलानाम् । काव्यारविन्दमकरन्दमधुव्रतानामास्येषु यास्यसि सतां विपुलं विलासम्' इतिच ॥ २७४ ॥ एवं गुणदोषघटितत्वेनोल्लासप्रसक्तं लेशं लक्षयति—**गुणदोषाविति । अनिष्टेति** । अनिष्टेष्टे कुरुतः क्रमात्संपादयतस्तौ तथा तयोर्भावस्तस्माद्धेतोरित्यर्थः । अतादृशौ व्यत्ययेन वर्णितौ चेल्लेशः स्यादिति संबन्धः । तमुदाहरति—**वरमित्यादि**पादाभ्यां व्युत्क्रमेण । भिक्षायाः दोषत्वेऽपि गुणत्वं स्वर्गस्य गुणत्वेऽपि दोषत्वमिति । तदुक्तं कुवलयानन्दे—'लेशः स्याद्दोषगुणयोर्गुणदोषत्वकल्पनम् । अखिलेषु विहङ्गेषु हन्त स्वच्छन्दचारिषु' । 'शुक पञ्जरबन्धस्ते मधुराणां गिरां फलम्' । यथावा तत्रैव—'सन्तः सच्चरितोदयव्यसनिनः प्रादुर्भवद्यन्त्रणाः सर्वत्रैव जनापवादचकिता जीवन्ति दुःखं सदा । अव्यु-

**तद्गुणः स्वगुणावृत्त्या स्वसंसृष्टगुणग्रहः।**
**उत्तंसेन्दीवरं तेऽद्य कटाक्षैः कुमुदायते ॥ २७६ ॥**
**पूर्वरूपमिदं स्वीयगुणाप्तावन्यसंनिधेः।**
**तदपीन्दीवरं बाले कटाक्षैरेव ते सितैः ॥ २७७ ॥**
**अतद्गुणस्तु संसर्गेऽप्यन्यदीयगुणाग्रहः।**
**शिवग्रीवानुषक्तोऽपि प्रकोष्ठो गौर एव ते ॥ २७८ ॥**
**मतोऽस्त्यनुगुणः स्वीयगुणोत्कर्षोऽन्यसंनिधेः।**
**नासाभरणमुक्तालिः स्मिताधररुचातिरुक् ॥ २७९ ॥**

---

त्पन्नमतिः कृतेन न सता नैवासता व्याकुलो युक्तायुक्तविवेकशून्यहृदयो धन्यो जनः प्राकृतः' इति। यथावा रसगङ्गाधरे—'अपि बत गुरुगर्वं मास्म कस्तूरि यासीरखिलपरिमलानां मौलिना सौरभेण। गिरिगहनगुहायां लीनमत्यन्तदीनं स्वजनकममुनैव प्राणहीनं करोषि'। 'नैर्गुण्यमेव साधीयो धिगस्तु गुणगौरवम्। शाखिनोऽन्ये विराजन्ते खण्ड्यन्ते चन्दनद्रुमाः' इति च। सर्वत्र लक्षणसमन्वयः प्रोक्तवदेव ॥ २७५ ॥ एवं लेशप्रसङ्गात्तद्गुणं लक्षयति—**तद्गुण इति। स्वेति।** स्वगुणस्यावृत्तिः स्वच्छतमेऽपि स्फटिके जपाकुसुमलोहितरूपप्रतिबिम्बावच्छेदेन निजशुक्लरूपास्फूर्तिस्तयेत्यर्थः। स्वसंसृष्टेति। स्वसंबद्धवस्तुसंबन्धिगुणसंग्रह इति यावत्। तदुक्तं कुवलयानन्दे—'तद्गुणः स्वगुणत्यागादन्यदीयगुणग्रहः। पद्मरागायते नासामौक्तिकं तेऽधरत्विषा'। रसगङ्गाधरेऽपि—'स्वगुणत्यागपूर्वकं स्वसंनिहितवस्त्वन्तरसंबन्धिगुणग्रहणं तद्गुणः' इति। तमुदाहरति—**उत्तंसेति।** अये प्रिये इत्यार्थिकम्। अद्य ते त्वत्संबन्धि। उत्तंसेन्दीवरं कर्णपूरीकृतनीलोत्पलम्। ते त्वत्संबन्धिभिः कटाक्षैरेव संचारविशेषावच्छेदेन सितापाङ्गतरङ्गैरित्यर्थः। कुमुदायते कैरवीभवतीत्यन्वयः। यथावा रसगङ्गाधरे—'नीतो नासान्तिकं तन्व्या मालत्याः कुसुमोत्करः। बन्धूकभावमानिन्ये रागेणाधरवर्तिना' इति ॥ २७६ ॥ एतस्यैव संज्ञान्तरं पूर्ववद्रूपान्तरादेवाह—**पूर्वरूपमिति।** तदुदाहरति—**तदपीति।** असितैरितिच्छेदः। यथावा कुवलयानन्दे—'पुनः स्वगुणसंप्राप्तिः पूर्वरूपमुदाहृतम्। हरकण्ठांशुलिप्तोऽपि शेषस्त्वद्यशसा सितः' इति। यथावा रसगङ्गाधरे—'अधरेण समागमाद्रदानामरुणिम्ना पिहितोऽपि शुद्धभावः। हसितेन सितेन पक्ष्मलाक्ष्याः पुनरुल्लासमवाप जातपक्षः' इति ॥ २७७ ॥ एवमतद्गुणं लक्षयति—**अतद्गुणस्त्विति।** तमुदाहरति—**शिवेति।** अयि गौरीति शेषः। यथावा कुवलयानन्दे—'संगतान्यगुणानङ्गीकारमाहुरतद्गुणम्। चिरं रागिणि मच्चित्ते निहितापि न रज्यसि' इति। यथावा रसगङ्गाधरे—'कुचाभ्यामालीढं सहजकठिनाभ्यामपि रमे न काठिन्यं धत्ते तव हृदयमत्यन्तमृदुलम्। मृगाक्षीनामन्तर्जनानि निवसन्ती खलु चिरं न कस्तूरी दूरीभवति निजसौरभ्यविभवात्' इति ॥ २७८ ॥ एवमतद्गुणनिरूपणप्रसक्तमनुगुणं लक्षयति—**मतो-**

**मीलितं लिङ्गसाम्येन प्रत्यक्षेऽपि भिदग्रहः ।**
**नित्यमभ्यञ्जनं सीते योषितां विहितं किमु ॥ २८० ॥**

**स्तीति** । अन्यसनिधेः स्वगुणसजातीयगुणकेतरवस्तुसंनिधानादित्यर्थः । **अन्येति** । **स्वीयेति** । स्वसिद्धगुणसमृद्धिरिति यावत् । अनुगुणः एतन्नामकोऽलंकारः । मतः सयुक्तिकत्वात्संमतोऽस्तीत्यर्थः । तदाहुः कुवलयानन्दकृतः—'प्राक्सिद्धस्वगुणोत्कर्षोऽनुगुणः परसंनिधेः । नीलोत्पलानि दधते कटाक्षैरति नीलताम्' । 'कपिरपि च कापिशायनमदमत्तो वृश्चिकेन संदष्टः । अपिच पिशाचग्रस्तः किं ब्रूमो वैकृतं तस्य' इति । तमुदाहरति—**नासेति** । अत्राधरपदेन निरुक्तमौक्तिकेषु पद्मरागसाहचर्यात्किंचित्पाटलिमसंभवात्स्मितकान्तावपि स्वारुणिमसहकृतेस्तत्साजात्येन तदाधिक्याधायकत्वं ध्वनितम् ॥ २७९ ॥ एवमेतत्साधर्म्यप्रसक्तं मीलितमपि लक्षयति—**मीलितमिति** । प्रत्यक्षे चाक्षुषेऽपि वस्तुनि विषये । लिङ्गसाम्येन हेतुतौल्येन । भिदग्रहः सत्यसंभावितपदार्थयोर्भेदानवबोध इति यावत् । मीलितं एतन्नामकमलंकरणं भवतीत्यन्वयः । तदुदाहरति—**नित्यमिति** । इदं हि भगवतः श्रीरामस्य रत्नागारे जानकीं प्रति, तल्लावण्यमलौकिकं दृष्ट्वा वाक्यम् । भो सीते, योषितां स्त्रीणां अभ्यञ्जनं अभ्यङ्गस्नानं नित्यं विहितमस्ति किन्विति संबन्धः । अयमाशयः—यथा नित्येऽखिलमिति मुहूर्तमार्तण्डवचनाद्देशविशेषावच्छेदेन पुरुषैः क्रियमाणे नित्यमभ्यङ्गस्नाने अखिलं पुष्पवासितं तद्भिन्नादिसंपूर्णतैलं शुभमेवेत्यर्थकात्पुंसामभ्यङ्गस्नानं नित्यं विहितमस्ति तद्वत्स्त्रीणामपि नित्यमभ्यञ्जन भवति किमित्याक्षेपस्तु 'अथ बुधाम्बुपक्षपितृभाभ्यङ्गात्पतिघ्न्यङ्गना' इति तद्वाक्याद्बुधवासरशततारकामघानक्षत्रदिवसनिषेधादुपपन्न एवेति । एवंचात्र भगवत्याः सीतायाः स्वरूपे प्रत्यक्षेऽपि भगवतः श्रीरामस्याभ्यङ्गसाधारणेनात्मनि प्रतिबिम्बग्रहणयोग्यतारूपकान्तिमत्त्वात्मकालौकिकतल्लावण्यलक्षणेन लिङ्गसाम्येन तस्यामभ्यङ्गजन्यनिसर्गसिद्धरोचिषोर्भेदाग्रहो ध्वनिमर्यादया सिद्ध इति लक्षणसंगतिः । यथावा काव्यप्रकाशे—'अपाङ्गतरले दृशौ मधुरवर्णवक्रा गिरो विलासभरमन्थरा गतिरतीव कान्तं मुखम् । इति स्फुरितमङ्गके मृगदृशः स्वतो लीलया तदत्र न मदोदयः कृतपदोऽपि सलक्ष्यते' इति । यथावा साहित्यदर्पणे—'लक्ष्मीवक्षोजकस्तूरीलक्ष्म वक्षःस्थले हरेः । ग्रस्तं नालक्षि भारत्या भासा नीलोत्पलाभया' इति । यथावा कुवलयानन्दे—'मीलितं यदि सादृश्याद्भेद एव न लक्ष्यते । रसो नालक्षि लाक्षायाश्चरणे सहजारुणे' । 'मल्लिकामाल्यभारिण्यः सर्वाङ्गीणार्द्रचन्दनाः । क्षौमवत्यो न लक्ष्यन्ते ज्योत्स्नायामभिसारिकाः' इति । यथावा रसगङ्गाधरे—'स्फुटमुपलभ्यमानस्य कस्यचिद्वस्तुनो लिङ्गैरतिसाम्याद्भिन्नत्वेनागृह्यमाणानां वस्त्वन्तरलिङ्गानां स्वकारणाननुमापकत्वं मीलितम् । संग्रहश्च 'भेदाग्रहेण लिङ्गानाम्' इत्यादि लक्षणपरिष्कारस्तत्रैव द्रष्टव्यः । यथावा—'सरसिरुहोदरसुरभावधरितबिम्बाधरे मृगाक्षि तव । वद वदने मणि-

**सामान्यं नेक्ष्यते यत्र विशेषः कोऽपि साम्यतः।**
**आदर्शमन्दिरस्थाया दमयन्त्या न निर्णयः॥ २८१ ॥**
**साकूतं प्रतिवाक्यं चेदुत्तरं परिभण्यते।**
**यत्रासौ मल्लिकाकुञ्जस्तत्र च्छाया घनेक्ष्यते॥ २८२ ॥**

---

रदने ताम्बूलं केन लक्षयेय वयम्'। अत्र प्रियेण ताम्बूलं कुतो न गृह्णासीत्युक्ते एतावन्तं समयं ताम्बूलानि भुक्त्वैव समागतास्मीत्युक्तवतीं प्रति तस्येयमुक्तिः। यथावा मदीयायामद्वैतामृतमञ्जर्याम्—'राधेऽङ्गरागमिह न क्वचिदपि धत्से कुतस्त्वमुरसीष्टम्। नित्यं दधामि कौङ्कुममिति चेन्नो लक्ष्यते कस्मात्' इति। इदं हि भगवतः श्रीकृष्णस्य राधिकां प्रति कुचकनककमलकोशमर्दनकालिकं वाक्यम्। भो राधे, त्वं इह मया मर्द्यमानस्तनकाञ्चनकमलकोशावच्छेदेन प्रत्यक्ष इत्यर्थः। एतादृशे उरसि त्वं इष्टमस्मदभिलषितं अङ्गरागं काश्मीरकर्दमाद्यङ्गोद्वर्तनद्रव्यालेपनं क्वचिदपि कुतो न धत्स इत्याक्षेपे सति, अहं कौङ्कुमं काश्मीरजन्मजं तं नित्यं दधामीति वदसि चेत्तर्हि सोऽस्माभिः कस्माद्धेतोर्नो लक्ष्यत इत्यन्वयः। एवंच तस्याः परमगौरत्वेन प्रत्यक्षेऽपि तद्भेदाग्रह इत्याशयः॥ २८० ॥ एवं भेदाग्रहनिबन्धनमिलितालंकारनिरूपणप्रसक्तं सामान्यालंकारं लक्षयति—**सामान्यमिति**। यत्र उपमानोपमेययोरिति शेषः। साम्यतः परमसाधर्म्येणेत्यर्थः। कोऽपि विशेषो नैवेक्ष्यते तत्सामान्यमित्यध्याहृत्यान्वयः। अस्तीत्यार्थिकम्। तदुक्तं कुवलयानन्दे—'सामान्यं यदि सादृश्याद्विशेषो नोपलक्ष्यते। पद्माकरप्रविष्टानां मुखं नालक्षि सुभ्रुवाम्' इति। यथावा रसगङ्गाधरे—'प्रत्यक्षविषयस्यापि वस्तुनो बलवत्सजातीयग्रहणकृतं तद्भिन्नत्वेनाग्रहणं सामान्यम्' इति। तदुदाहरति—**आदर्शेति**। नलस्यासीदिति शेषः। यथावा साहित्यदर्पणे—'मल्लिकाचितधम्मिल्लाश्चारुचन्दनचर्चिताः। अविभाव्याः सुखं यान्ति चन्द्रिकास्वभिसारिकाः'। मीलिते उत्कृष्टगुणेन निकृष्टगुणस्य तिरोधानं इह तूभयोस्तुल्यगुणतयाभेदाग्रह इति। यथावा कुवलयानन्दे—'रत्नस्तम्भेषु संक्रान्तप्रतिबिम्बशतैर्वृतः। लङ्केश्वरः सभामध्ये न ज्ञातो वालिसूनुना' इति। विस्तरस्तु तत्रैव ज्ञेयः॥ २८१ ॥ एवं विशेषः सन्नप्यतिसाम्यान्न लक्ष्यत इति सामान्यलक्षणप्रसक्तं गूढाभिसन्धिघटितप्रतिवचनात्मकमुत्तरालंकारं लक्षयति—**साकूतमिति**। तमुदाहरति—**यत्रेति**। इदं हि चैत्रातपक्लान्तं वृन्दावने श्रीकृष्णमालक्ष्य संकेतसूचकं राधिकायास्तं प्रति वाक्यम्। यथावा साहित्यदर्पणे—'वीक्षितुं न क्षमा श्वश्रूः स्वामी दूरतरं गतः। अहमेकाकिनी बाला तवेह वसतिः कुतः' इति। यथावा कुवलयानन्दे—'किंचिदाकूतसहितं स्याद्गूढोत्तरमुत्तरम्। यत्रासौ वेतसी पान्थ तत्रेयं सुतरा सरित्। 'ग्रामेऽस्मिन्प्रस्तरप्राये न किंचित्पान्थ विद्यते। पयोधरोन्नतिं दृष्ट्वा वस्तुमिच्छसि चेद्वस'। इदमुन्नयप्रश्नस्योदाहरणम्। निबद्धप्रश्नस्योदाहरणं यथा—'कुशलं तस्या जीवति कुशलं पृच्छामि जीवतीत्युक्तम्। पुनरपि तदेव कथयसि मृतां नु कथ-

**ज्ञात्वा पराशयं चेष्टा साकूता सूक्ष्ममुच्यते ।**
**राधा मयेक्षिता जाती कुसुमेऽञ्जनमातनोत् ॥ २८३ ॥**
**पराशयविदे चेष्टा साकूता पिहितं मतम् ।**
**सपत्न्याश्चित्रमलिखद्गूढायाः सा स्वमन्दिरे ॥ २८४ ॥**
**स्वाकारगुप्तिर्व्याजोक्तिर्हेत्वन्तरनिरुक्तितः ।**
**सख्यस्मि पीडितोद्याने वानरेण नखक्षतैः ॥ २८५ ॥**

---

यामि या श्वसिति' इति । यथावा रसगङ्गाधरे—'प्रश्नप्रतिबन्धकज्ञानविषयीभूतोऽर्थ उत्तरम् । तच्चोत्तरं द्विविधम् । उन्नीयप्रश्नं निबद्धप्रश्नं च । क्रमेणोदाहरणे—'त्वमिव पथिकः प्रियो मे विटपिस्तोमेषु गमयति क्लेशान् । किमितोऽन्यत्कुशलं मे संप्रति यत्पान्थ जीवामि' । 'किमिति कृशासि कृशोदरि किं तव परकीयवृत्तान्तैः । कथय तथापि मुदे मम कथयिष्यति याहि पान्थ तव जाया' इति ॥ २८२ ॥ एवं साकूतत्वसाधर्म्येणोत्तरालंकारनिरूपणप्रसक्तं सूक्ष्मालंकारं लक्षयति—**ज्ञात्वेति** । तदुदाहरति—**राधेति** । इदं हि भगवतः श्रीकृष्णस्य स्वरहःसखं प्रति स्वगुह्यावेदकं वाक्यम् । रे प्रियसख, अद्य राधा मयेक्षिता सुरताभिलाषेणावलोकिता सती तादृशं मदाशयं ज्ञात्वा तत्संकेतसूचकाख्यरहस्यरूपाकूतेन जातीकुसुमे वृन्दावनेऽत्र निकटवर्तिमालतीपुष्प इत्यर्थः । अञ्जनं स्वनेत्रवर्तिकज्जलम् । आतनोत्स्थापयामासेति संबन्धः । एवं चास्मिन्मालतीकुञ्जे कज्जलसदृशतमस्विन्यां रजन्यामद्यावयोः सुरतसंकेत इत्याकूतमुक्तचेष्टया ज्ञापयांबभूवेति भावः । यथावा काव्यप्रकाशे—'संकेतकालमनसं विटं ज्ञात्वा विदग्धया । हसन्नेत्रार्पिताकूतं लीलापद्मनिमीलितम्' । अत्र जिज्ञासितः संकेतकालः कयाचिदिङ्गितमात्रेण विदितो निशासमयशंसिना कमलनिमीलनेन लीलया प्रतिपादित इति । यथावा कुवलयानन्दे—'सूक्ष्मं पराशयं ज्ञात्वा यत्तु साकूतचेष्टितम् । मयि पश्यति सा केशैः सीमन्तमणिमावृणोत्' इति ॥ २८३ ॥ अतएव प्रसङ्गसंगतं पिहितमपि लक्षयति—**परेति** । तदुदाहरति—**सपत्न्या इति** । सा पूर्वोक्ता राधा । श्रीकृष्णो हि कस्यांचिदन्यस्यां स्वतुल्यरूपगुणायामासक्तोऽस्ति नवेति संदिहाना सती तन्निर्णयार्थं तस्याः गूढायाः सपत्न्याश्चित्रं स्वमन्दिरेऽलिखत्तद्वीक्षणेनायं किं प्रसीदत्युत विषीदत्यथवोदास्ते । यद्याद्यः कल्पस्तदा संजातसंयुक्तेर्यदि द्वितीयस्तर्हि भविष्यत्संभुक्तेर्यदि तृतीयस्तदाऽनासक्तेश्च निर्णयः सुघट एवेति धिया लिलेखेति योजना । तदुक्तं कुवलयानन्दे—'पिहितं परवृत्तान्तं ज्ञातुं साकूतचेष्टितम् । प्रिये गृहागते प्रातः कान्तातल्पमकल्पयत्' इति ॥ २८४ ॥ एवमतुलचातुरीप्रसक्तां व्याजोक्त्यलंकृतिं लक्षयति—**स्वाकारेति** । तामुदाहरति—**सखीति** । अत्राकारस्य हेत्वन्तरवर्णनेन गोपनाद्वचनस्यान्यथानयनेन तदर्थगोपनरूपायाश्छे-

---

१ आसीदिति पाठः ।

**अन्योद्देश्यैव गीरन्यमुक्ता गूढोक्तिरुच्यते ।**
**कीरापसर गोस्तन्याः प्राप्तो मालाकृदुद्धतः ॥ २८६ ॥**

कापह्नुतेर्भेदः । यथावा काव्यप्रकाशे—'शैलेन्द्रप्रतिपाद्यमानगिरिजाहस्तोऽवगूढोल्लसद्रोमाञ्चादिविसंस्थुलाखिलविधिव्यासङ्गभङ्गाकुलः । हा शैत्यं तुहिनाचलस्य करयोरित्यूचिवान्सस्मितं शैलान्तःपुरमातृमण्डलगणैर्दृष्टोऽवताद्वः शिवः' इति । यथावा कुवलयानन्दे—'व्याजोक्तिरन्यहेतूक्त्या यदाकारस्य गोपनम् । सखि पश्य गृहारामपरागैरस्मि धूसरा' । 'कस्य वा न भवेद्रोषः प्रियायाः सव्रणेऽधरे । सभृङ्गपद्ममाघ्रासीर्वारितापि मया धुना' । उपपतिना खण्डिताधरायाः नायिकायाः सकाशमागच्छन्तं प्रियमपश्यन्त्येव सख्या नायिकां प्रति हितोपदेशव्याजेन तं प्रति नायिकापराधगोपनमिति ॥ २८५ ॥ एवं गुप्तिविशेषघटितव्याजोक्त्यलंकृतिनिरुक्तिप्रसङ्गसङ्गतां गूढोक्त्यलंकृतिं लक्षयति । अन्यः शाब्दबोधे संबोध्यतावच्छिन्नत्वप्रतीयमानविषयतानवच्छिन्नः प्रमातेत्यर्थः । सः उद्देश्योऽभिसंधिविषयो यस्याः सा तथेति यावत् । एतादृश्येव गीर्वाक् यदि अन्यं उद्देश्यभिन्नं प्रति उक्तास्ति चेत्तर्हि गूढोक्त्यलंकृतिः कथ्यत इति फलितोऽर्थः । तामुदाहरति—**कीरेति** । अत्र 'मृद्वीका गोस्तनी द्राक्षा' इत्यमरान्नायिकायामतुलसरसत्वेन लोभजनकत्वेऽपि कीरपदेन पक्षप्राबल्यतः सद्योपसरणेऽपि कालान्तरे तल्लाभसंभावना ध्वन्यते । अन्यथोद्धतपदेन तन्नायके क्षमाशून्यत्वेन प्राणवियोगोऽपि संभवेत्तदपेक्षया वरं सद्यस्तत्त्याग एवेति भावः । इदं हि परकीयामसक्तं कश्चिन्नायकं प्रति तत्पत्यागमनमवलोकयन्त्यास्तत्सख्याः कीरापदेशेन समवबोधकं वाक्यमिति लक्षणसंगतिः । तदुक्तं कुवलयानन्दे—'गूढोक्तिरन्योद्देश्या गीर्यद्यन्यं प्रति कथ्यते । वृषापेहि परक्षेत्रादायाति क्षेत्ररक्षकः' । नेयमप्रस्तुतप्रशंसा । कार्यकारणत्वादिव्यङ्ग्यत्वाभावात् । नापि श्लेषमात्रम् । अप्रकृतार्थस्य प्रकृतार्थान्वयित्वेन विवक्षितत्वात् । तस्य केवलमितरवचनार्थनिर्दिष्टतया विच्छित्तिविशेषसद्भावात् । यथा—'नाथो मे विपणिं गतो न गणयत्येषा सपत्नी च मां त्यक्त्वा मामिह पुष्पिणीति गुरवः प्रामा गृहाभ्यन्तरम् । शय्यामात्रसहायिनीं परिजनः श्रान्तो न मां सेवते स्वामिन्नागमलालनीय रजनीं लक्ष्मीपते रक्ष माम्' । अत्र लक्ष्मीपतिनाम्नो जारस्यागमनं प्रार्थयमानया तटस्थवञ्चनाय भगवन्तं प्रत्याक्रोशस्य प्रत्यायनमिति । यथावा मदीयार्द्रनामृतमञ्जर्यां नीतिमुकुले—'हत्वा तमोऽपि सदृशं प्रकाशमभिनीय सर्वतः स्नेहम् । दीप कथं कज्जलमपि समुद्गिरस्यतुलसंतापात्' । इदं हि वाक्पाण्डित्येन परमनिगूढ परतरुणीः सुसंभुक्तवन्तं स्वकान्तं प्रति कस्याश्चिद्विदग्धायाः परमनिगूढं रहसि रत्यागारे दीपान्योक्तिच्छलेन प्रत्युत स्वोपर्येव कोपकृतदुर्वाक्यवर्षणोपशमनार्थं वचः । भो दीप प्रसिद्धप्रदीप, त्वं सदश दशाजन्यवर्तिकाभिः सहितं तमोऽपि तिमिरमपि हत्वा क्रमाद्दाहसहानवस्थानलक्षणविरोधाभ्यां विनाश्येत्यर्थः । अत्रापिना तमस्यालोकमन्तरोपायशतेनापि दुर्निरसत्वं

**युक्तिः स्वमर्मगुप्त्यर्थं व्यापारेणान्यवञ्चनम् ।**
**तुभ्यं साकूततताम्बूलं दृष्ट्वान्यं शम्भवेऽर्पयत् ॥ २८७ ॥**

सूचितम् । तथा सर्वतः स्वसंनिकृष्टदेशावच्छेदेन प्रकाशमालोकं अभिनीय अभितः समन्ताद्भागेन नीत्वा । प्रसार्येति यावत् । एवं सर्वतः समन्ताद्भागेन स्नेहमपि तैलमप्यभिनीयाभितः समाकृष्य दग्ध्वेत्यपिशब्दमनुकृष्यान्वयः । अतुलेति निरुपमोष्मजननादित्यर्थः । कज्जलमपि अञ्जनमपि । एतेन प्रकाशात्मकत्वेन तमोभिविरोधिनस्तव तत्सदृशकृष्णवर्णाञ्जनजनकत्वमनुचितमेवेति द्योत्यते । कथं समुद्गिरसि निरुक्तरीत्या तव तमःसमभिवमनमनुचितमेवेति भावः । पक्षे भो दीप इव गृहमण्डनपण्डितवर मत्प्राणनाथ, त्वं सदशं दशाभिः आवरणविक्षेपदशाभिः सहितं सदशं । एतादृशं तमः मूलाज्ञानं हत्वा स्वसंपादितगुरूपदिष्टविचारिततत्त्वमस्यादिवेदान्तमहावाक्यजन्यसकलद्वैतबाधकप्रत्यगब्रह्मैक्यविषयकाप्रतिबद्धप्रायापरोक्षप्रबोधेन प्रध्वंस्येत्यर्थः । नचाज्ञानस्य 'आच्छाद्य विक्षिपति संस्फुरदात्मरूपं जीवेश्वरत्वजगदाकृतिभिर्मृषैव । अज्ञानमावरणविभ्रमशक्तियोगादात्मत्वमात्रविषयाश्रयताबलेन' इति संक्षेपशारीरकोक्तरावरणादिशक्तिद्वयवत्त्वमेव नतु चेतनदेहस्य बाल्यादिवद्दशावत्त्वमपीति वाच्यम् । अस्य वाक्यस्य सारस्वज्ञैः श्रीमद्भारतीतीर्थैस्तयोरवस्थात्वस्यापि वर्णनात् । तथाचोक्त तृप्तिदीपे—'अज्ञानमावृतिस्तद्वद्विक्षेपश्च परोक्षधीः । अपरोक्षमतिः शोकमोक्षस्तृप्तिर्निरङ्कुशा । सप्तावस्था इमाः सन्ति चिदाभासस्य तास्विमौ । बन्धमोक्षौ स्थितौ तत्र तिस्रो बन्धकृतः स्मृताः' इति । नन्वेवमपीमाश्चिदाभासाख्यजीवस्यैवावस्थाः सन्ति नत्वज्ञानस्येतिचेन्न । चिदाभासपृथक्कारे तस्य गगनकुसुमायमानतया तथोक्तत्वात् । नाप्येवंचेद्दशाभिरिति बहुवचनानर्थक्यमिति शङ्क्यम् । पञ्चत्वाज्ञानाभिप्रायेण तत्सार्थक्यात् । एवं सदशमिति प्रकाशशब्दितप्रबोधस्यापि विशेषणम् । तत्रापि परोक्षध्यायवशिष्टमोक्षकारकावस्थाचतुष्टयस्यापि संभवाद्दशावस्थापदयोः पर्यायत्वाच्च । अभिनीय अभिनयशब्दितं विषयिजनेषु तन्नाटनमात्रं कृत्वेत्यर्थः । एवमेव सर्वतः सर्वजनेषु स्नेहं प्रेमाणमप्यभिनीय नाटयित्वा । अतुलेति स्वापराधबोधसंभावितेतरक्रोधप्रबाधकनिरुपमरोषाद्धेतोरिति यावत् । कज्जलमपि कज्जलसदृशकलङ्कसंपादक दुर्वाक्यमपीत्यर्थः । एतेन निरुक्तमहिम्नस्तवेदमयुक्तमेवेति व्यज्यते । कथं समुद्गिरसि वमनवत्किमिति वेगादुच्चारयसीति संबन्धः । तस्मादेतादृशेन विदुषा पारदारिकः कामः स्वेन्द्रियदमनाद्यन्यस्यानविषयकः क्रोधश्च नैव कार्य इति नीतिरित्याकूतम् । तथाचेह गूढोक्तिलक्षणं स्फुटमेव । उदाहरणचतुष्टयेऽत्रावान्तरवैजात्यं तु स्वयमेवोह्यम् ॥ २८६ ॥ एवं गुप्तिसाधर्म्यसंगतां युक्त्यलंकृतिमपि लक्षयति—**युक्तिरिति** । तामुदाहरति—**तुभ्यमिति** । सा राधिका हे श्रीकृष्णेत्यार्थिकम् । तुभ्यं त्वदर्थं कृतताम्बूलं विरचितवीटिकाविशेषं रहसि मद्धस्तद्वारा प्रेषयन्ती सतीति शेषः । अन्यं इतरं कंचिदकस्माद्दैववशात्तत्र समागतं जनं दृष्ट्वा अवलोक्य शंभवे

**श्लेषेण काक्वा वान्यार्थकृत्तिर्वक्रोक्तिरीर्यते ।**
**प्रसीद प्रमदे हर्षात्प्रसादः कोऽपरो भवेत् ॥ २८८ ॥**

निकटवर्तिदेवालयस्थशंकरायेत्यर्थः । अर्पयत् निवेदयामासेति संबन्धः । एवं चैतादृशक्रियावैदग्ध्यादिभूरिचातुरीशालिन्येव मत्सखी राधिकेति त्वयाद्य निःशङ्कमेव तन्मन्दिरं प्रति समभिसर्तव्यमिति तत्सख्या योत्यते । यथावा कुवलयानन्दे—'युक्तिः परातिसंधानं क्रियया मर्मगुप्तये । त्वामालिखन्ती दृष्ट्वान्यं धनुः पौष्पं करेऽलिखत् । यथा—'दम्पत्योर्निशि जल्पतोर्गृहशुकेनाकर्णितं यद्वचस्तत्प्रातर्गुरुसंनिधौ निगदतः श्रुत्वैव तारं वधूः । कर्णालम्बितपद्मरागशकलं विन्यस्य चञ्चूपुटे व्रीडार्ता विदधाति दाडिमफलव्याजेन वाग्बन्धनम्' इति ॥ २८७ ॥ एवं युक्तिमूलीभूतचातुर्यप्रसक्तां वक्रोक्तिं लक्षयति—**श्लेषेणेति** । काक्वा 'काकुः स्त्रियां विकारो यः शोकभीत्यादिभिर्ध्वनेः' इत्यमराद्धर्षादिजन्यस्वरभङ्गाभिव्यञ्जककण्ठध्वनिविकृत्येत्यर्थः । तामुदाहरति—**प्रसीदेति** । इदं हि मानवतीं स्वकीयां प्रौढां प्रति नायकस्यानुनयवाक्यम् । हे प्रमदे, 'प्रमदा मानिनी' इत्यमरात्त्वं प्रसीद । मयि विषये प्रसन्ना भवेत्यर्थः । अथासौ वक्रोक्त्या तं प्रत्युत्तरयति—**हर्षादित्यादिना** । एवंच तया 'मुत्प्रीतिः प्रमदो हर्षः' इत्यमरात्प्रमदे इति स्त्रीलिङ्गकस्वसंबुद्ध्यर्थकत्वं विहाय श्लेषेण हर्षे विषये त्वं प्रसीदेति वाक्यार्थं गृहीत्वा 'प्रसादस्तु प्रसन्नता' इत्यपि तदुक्तेर्हर्षादिपरोऽन्यः कः प्रसादो भवेद्येन तद्विषयः स कार्यः स्यादिति काक्वाऽऽक्षिप्येदं वाक्यमेवाप्रयोजकमिति व्यनक्तीति योजना । यथावा कुवलयानन्दे—'वक्रोक्तिः श्लेषकाकुभ्यां यदर्थान्तरकल्पनम् । मुञ्च मान दिनं प्राप्तं नेह नन्दी हरान्तिके' । 'अहो केनेदृशी बुद्धिर्दारुणा तव निर्मिता । त्रिगुणा श्रूयते बुद्धिर्नतु दारुमयी क्वचित्' । इदमविकृतश्लेषवक्रोक्तेरुदाहरणम् । विकृतश्लेषवक्रोक्तेर्यथा—'भवित्री रम्भोरु त्रिदशवदनग्लानिरधुना स ते रामः स्थाता न युधि पुरतो लक्ष्मणसखः । इयं यास्यत्युच्चैर्विपदमधुना वानरचमूर्लघिष्ठेदं षष्ठाक्षरपरविलोपं पठ पुनः' । सर्वमिदं शब्दश्लेषमूलाया वक्रोक्तेरुदाहरणम् । अर्थश्लेषमूलाया यथा—'भिक्षार्थी क्व प्रयातः सुतनु बलिमखे ताण्डवं क्वाद्य भद्रे मन्ये वृन्दावनान्ते क्व नु स मृगशिशुर्नैव जाने वराहम् । बाले कच्चिन्न नष्टो जरट्वृषपतिर्गोप एवात्र वेत्ता लीलासलाप इत्थं जलनिधिहिमवत्कन्ययोस्त्रायतां नः' । काक्वा यथा—'असमालोच्य कोपस्ते नोचितोऽयमितीरिता । नैवोचितोऽयमिति त ताडयामास मालया' । अत्र नैवोचितोऽयमिति काक्वा स्वरविकारेण उचित एवेत्यर्थान्तरकल्पनम् । यथावा कस्यचित्प्राचीनस्य—'यामि विधावभ्युदिते पुनरेष्यामीति यदुदित भवता । जानात्युदन्तमात्रं नेदं तत्त्वेन मुग्धवधूः' इति । इदं हि कंचित् श्रीकृष्णादिनायकं प्रति तद्वाक्यानुवादपूर्वकं राधादिनायिकासखीवाक्यम् । अये नायक, अहमिदानीं यामि प्रवासं गच्छामि । तथा विधौ अभ्युदिते सति पुनः एष्यामि त्वां प्रत्युपागमिष्यामीति यद्भवता त्वया उदितमुक्तम् ।

**जात्यादिगस्वभावस्य वाक्स्वभावोक्तिरुच्यते ।**
**पारावतो रुतं कुर्वन्निरंसति निजप्रियाम् ॥ २८९ ॥**
**निरुक्तिर्योगवृत्त्यैव नाम्नोऽर्थान्तरकल्पनम् ।**
**अनाथव्यथकत्वेन युक्तं शशधरो भवान् ॥ २९० ॥**

---

अत्र इयं मत्सखी यतः मुग्धवधूः अतः उदन्तमात्रं 'वार्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यात्' इत्यमराद्वृत्तान्तमात्रं जानाति । इदन्तत्वेन वास्तविकार्थत्वेन न जानातीति योजनार्थश्लेषपक्षे । शब्दश्लेषपक्षे तु विधौ चन्द्रे अभ्युदिते सति पुनरेष्यामि इति उदन्तमात्रं उत् उकारः । तपरकरणं हि तत्र व्याकरणे प्रसिद्धम् । तत् शब्दरूपं अन्ते यस्य विधुशब्दस्य तावन्मात्र जानाति । नतु इदन्तत्वेन इत् इकारः अन्ते यस्य विधिशब्दस्य तत्वेन तव दैवे अभ्युदिते सत्येव पुनरेष्यामीति त्वद्विवक्षितार्थत्वेन नैव जानातीति । तस्माद्बाला । अतएव सरलेयं मत्सख्येवं नैव त्वया वञ्चनीयेति भाव इति । यथावा मदीयाद्वैतामृतमञ्जर्याम्—'सरसमपि सादि सान्तं तव तारुण्यं कथं कृतं विधिना । यद्यत्सद्वयमेतत्तथेति सुदृशां तु सिद्धान्तः' इति । अत्र पूर्वार्धः श्रीकृष्णप्रश्नो राधां प्रति । उत्तरार्धस्तु तदुत्तरमेव सादिजन्यम् सान्तं तत एव क्षयित्वेन तर्कितम् । पक्षे सः सकारः सद्वयं कुचद्वयाविर्भावसहितम् । पक्षे द्वैतसहितम् । पक्षान्तरे सकारयुगवत् तथा सादि सान्तं चेति तु सुदृशां मादृशां मृगीदृशां, पक्षे भवादृशां सदसद्विचारस्पृशामित्यर्थः । शिष्टं तु स्पष्टमेव । एवं चात्रोदाहरणद्वयेऽपि श्लेषवक्रोक्तिः स्पष्टैव ॥ २८८ ॥ एवं वक्रोक्त्यलंकृतिनिरूपणे 'वाचा किंच सुधा समुद्रलहरीलावण्यमामन्त्र्य' इति रसमञ्जर्युक्तरीत्या तस्यास्तरुणीस्वाभाव्यप्रसक्तां स्वभावोक्तिं लक्षयति—**जात्यादिगेति** । वाक् वर्णनघटितवाणीत्यर्थः। तामुदाहरति—**पारावत इति**। 'पारावतः कलरवः' इत्यमरात्प्रसिद्धएव । रुतं 'तिरश्चां वाशित रुतम्' इत्यमराच्छब्दविशेषमित्यर्थः । कुर्वन्सन्नेव निजप्रियां रिरंसतीच्छापूर्वकमधि रतिं कर्तुमिच्छतीत्यन्वयः । यथावा साहित्यदर्पणे–'लाङ्गूलेनाभिहत्य क्षितितलमसकृद्दारयन्नग्रपद्भ्यामात्मन्येवावलीय द्रुतमथ गगनं प्रोत्पतन्विक्रमेण । स्फूर्जद्धुङ्कारघोरः प्रतिदिशमखिलान्द्रावयन्नेष जन्तून्कोपाविष्टः प्रविष्टः प्रतिबलमनलोद्दीप्तचक्षुर्मृगेन्द्रः' इति । यथावा कुवलयानन्दे—'स्वभावोक्तिः स्वभावस्य जात्यादिस्थस्य वर्णनम् । कुरङ्गैरुत्तरङ्गाक्षैः स्तब्धकर्णैरुदीक्षितम्' । यथा—'तौ संमुखप्रचलितौ सविधे गुरूणां मार्गप्रदानरभसात्स्खलितावधानौ । पार्श्वोपसर्पणमुखावपि भिन्नदिक्कं कृत्वा मुहुर्मुहुरुपासरतां सलज्जम्' इति ॥ २८९ ॥ एवं स्वभावोक्तिप्रसङ्गेन शब्दस्यापि योगवृत्त्या क्वचिदर्थान्तरबोधकत्वस्वाभाव्यात्प्राप्तां निरुक्त्यलंकृतिं लक्षयति—**निरुक्तिरिति** । तामुदाहरति—**अनाथेति** । शशः प्रसिद्ध एव । तस्य धर्ता हि मृगव्यापारे क्षत्रियपालितः श्वविशेषः प्रसिद्ध एव। स यथा अनाथानां शशमृगादीनां व्यथकस्तद्वदनाथायाः प्रोषितपतिकाया विरहिण्याः प्राणान्तव्यथाकर चन्द्र त्वं शशधर इति युक्तमेवेति भावः।

**प्रतिषेधोऽनुवादो यः साभिप्रायो निषेधगः।**
**नेयं प्रहसनप्रौढी किंतु पाण्डित्यमण्डना॥ २९१॥**
**यत्सिद्धस्य विधानं तद्विध्यलंकृतिमूचिरे।**
**प्राप्ते तु षोडशे वर्षे सुन्दरी सुन्दरी भवेत्॥ २९२॥**
**यदीत्थं तत्तदैवैवमूहः संभावनं मतम्।**
**सद्गुरो त्वद्गुणागण्यास्त्वमेव यदि वर्णयेः॥ २९३॥**

यथावा कुवलयानन्दे—'निरुक्तिर्योगतो नाम्नामन्यार्थत्वप्रकल्पनम्। ईदृशैश्चरितैर्जाने सत्यं दोषाकरो भवान्'। 'पुरा कवीनां गणनाप्रसङ्गे कनिष्ठिकाधिष्ठितकालिदासा। अद्यापि तत्तुल्यकवेरभावादनामिका सार्थवती बभूव' इति। यथावा मदीये कृष्णलीलामृते—'वसूनि रत्नानि ववर्ष देवकी महाऽकरेऽतो वसुदेव उच्यते। यदत्र कृष्णाभिधमात्मवस्त्वपि प्रजज्ञिवद्दिव्यमहेन्द्रनीलरुक्' इति॥ २९०॥ एवं निरुक्तौ प्रसिद्धनामार्थनिषेधात्प्रसक्तं निषेधालंकारं लक्षयति—**प्रतिषेध इति**। निषेधगः निषेधविषयकज्ञानजनक इत्येतत्। तमुदाहरति—**नेयमिति**। यथावा कुवलयानन्दे—'प्रतिषेधः प्रसिद्धस्य निषेधस्यानुकीर्तनम्। न द्यूतमेतत्कितव क्रीडनं निशितैः शरैः' इति। युद्धरङ्गे प्रत्यवतिष्ठमानं शकुनिं प्रति विदग्धवचनमुपहाससूचकमित्याशयः॥ २९१॥ एवं प्रतिषेधालंकारलक्षणान्तर्गतानुवादलक्षणसिद्धबोधनप्रसक्तां विध्यलंकृतिमपि लक्षयति—**यदिति**। ऊचिरे आहुः। पूर्वाचार्या इत्यार्थिकम्। तामुदाहरति-**प्राप्तेत्विति**। अत्र यद्यपि घटे घटत्वविधानवत्सुन्दर्यां सुन्दरीत्वविधानानुपपत्तेर्द्वितीयसुन्दरीशब्दोऽनुपयुक्तएव तथाप्यसौ स्वार्थबोधनप्रतिबन्धादर्थान्तरसंक्रमितवाच्यत्वेऽपि लोकोत्तरसौन्दर्यशालित्वलक्षणव्यङ्ग्यार्थस्य च 'प्राप्ते तु षोडशे वर्षे' इत्यादिना कण्ठत एव स्फुटीकृतत्वेन ध्वनित्वानर्हत्वाच्चालौकिकसौन्दर्यशालित्वपर्यवसाय्येवेति भावः। तेनात्र व्यङ्ग्यादिभिन्नत्वेन चमत्कृतिजनकत्वादलंकृतित्वमक्षतमेवेति बोध्यम्। तदुक्तं कुवलयानन्दे—'सिद्धस्यैव विधानं यत्तामाहुर्विध्यलंकृतिम्। पञ्चमोदञ्चने काले कोकिलः कोकिलो भवेत्'। यथा—'हे हस्त दक्षिण मृतस्य शिशोर्द्विजस्य जीवातवे विसृज शूद्रमुनौ कृपाणम्। रामस्य गात्रमसि निर्भरगर्भखिन्नसीताप्रवासनपटोः करुणा कुतस्ते'। अत्र रामस्य स्वहस्तं प्रति रामस्य गात्रमसीति वचनमनुपयुक्तं सद्रामस्येत्यनेन स्वस्यात्यन्तं निष्करुणत्वं गर्भीकरोति। तच्च निर्भरेत्यादिविशेषणेनाविष्कृतम्। अधिकं तु तत्रैव बोध्यम्॥ २९२॥ एवं विध्यलंकृतिनिरुक्तिप्रसक्तं विध्यलंकृतिलक्षणनिविष्टस्य यदि षोडशवर्षं प्राप्तं स्याच्चेत्तदैव सुन्दरीसुन्दरी स्यादिति व्याप्तिनियमस्य प्रसङ्गतः संगतं संभावनालंकरणं लक्षयति—**यदीत्थमिति**। यदीत्थं भवेत्तर्हि तदैव तत्स्यादेवं ऊहस्तर्कः संभावनमलंकरणं मतं प्राचामाचार्याणां संमतं भवतीति संबन्धः। तदुदाहरति—**सद्गुरो इति**। एवंच सद्गुरोरमानित्वादिस्वाभाव्येन स्वमुखतः स्वगुणवर्णनप्रवृत्तेः कालत्रयेऽप्य-

**सबीजो लोकवादश्च यत्र च्छेकोक्तिरेव सा।**
**वायुर्वाति यथा पृष्ठं तथा कार्यं तदुन्मुखम् ॥ २९४ ॥**

संभवाद्गुणानामगण्यत्वमेवेति भावः। तदुक्तं कुवलयानन्दे—'संभावनं यदीत्थं स्यादित्यूहोऽन्यस्य सिद्धये। यदि शेषो भवेद्वक्ता कथिताः स्युर्गुणास्तव'। यथावा—'कस्तूरिकामृगाणामण्डाद्गन्धगुणमखिलमादाय। यदि पुनरहं विधिः स्यां खलजिह्वायां निवेशयिष्यामि' इति ॥ २९३ ॥ एवं संभावनालंकरणस्य व्याप्तिमूलकत्वप्रसक्तां छेकोक्तिं लक्षयति—**सबीज इति**। यत्र लोकवादः लोकप्रवादोऽपि। चोऽप्यर्थे। सबीजः साभिप्रायः किंचिदर्थान्तरपर्यवसायी सा छेकोक्तिरेवालंकृतिर्भवतीत्यन्वयः। तामुदाहरति—**वायुरिति**। इयं हि लोकोक्तिरेव। तथाप्यत्र श्रीकृष्णः सुरभिसंफुल्लवृन्दावनीयमधुमालतीकुञ्जे चन्द्रिकायां मां ज्योत्स्नाभिसारिकात्वेन ससंकेतमाकारितवांस्तदा त्वहमपि रहःप्रियसखि तदाज्ञाभङ्गभियाङ्गीकृतवत्येवासमर्थापि निशि मया स्वगृहात्पतित्यागसर्वजनवञ्चनपूर्वकमतिगूढं तत्राभिसर्तुं कथं पार्येतेति स्वसंकटपरिहारपरिपित्सुं राधिकां प्रति सखीवाक्यमेव पुंलिङ्गादिनाध्यवसीयते। एवंच वायुस्थानीयोत्रभगवान् श्रीकृष्ण एवासङ्गत्वात्प्रबलतमत्वाच्च। स यथा वाति 'वा गतिगन्धनयोः' इति स्मरणाद्यया रीत्यान्तःप्रसादपूर्वकं तुभ्यं सौगन्ध्यजननोपलक्षितं सुरतं ददाति तथैव त्वया पृष्ठं कामशास्त्रप्रसिद्धपाशुकरतिबन्धे यथाश्रुतमेव। कायस्य सरलसुरतकालेपि पृष्ठैकाधारत्वात्तदुपलक्षितं वपुस्तदुन्मुखं सर्वात्मना तदनुकूलमेव कार्यमिति तात्पर्यानुसारी संबन्धः। यथाश्रुते तु यथा वायुर्वाति तथा तदुन्मुखं पृष्ठमिति सरलैव योजना। एवंच यथाप्रसङ्गः पतति तथैव वर्तितव्यमिति नीतिर्द्योत्यते। एतावानायासस्तु सख्याः सर्वजनप्रतारणपूर्वकं राधामुपदेष्टुमेव। यथावा कुवलयानन्दे—'छेकोक्तिर्यत्र लोकोक्तेः स्यादर्थान्तरगर्भता। भुजंग एव जानीते भुजंगचरणं सखे'। यथा—'मलयमरुतां व्राता याता विकासितमल्लिकाः परिमलभरो भग्नो ग्रीष्मस्त्वमुत्सहसे यदि। घन घटयितुं तं निःस्नेहं य एव निवर्तने प्रभवति गवां किं नश्छिन्नं स एव धनंजयः'। अत्र धनलिप्सया प्रोषिताङ्गनासखीवचने य एव गवां निवर्तने प्रभवति स एव धनंजय इत्यादिप्रसिद्धलोकवादानुकारोऽत्रातिसौन्दर्यशालिनीमिमामपहाय धनलिप्सया प्रस्थितो रसानभिज्ञत्वाद्गोप्राय एव, तस्य निवर्तकस्तु धनस्य जेता धनेनाकृष्टस्य तद्विमुखीकरणेन प्रत्याकर्षकत्वादित्यर्थान्तरमेव गर्भीकृतमिति। नन्वेतन्मूलीभूता 'लोकप्रवादानुकृतिर्लोकोक्तिरिति भण्यते। सहस्व कतिचिन्मासान्मीलयित्वा विलोचने' इति कुवलयानन्द एवोक्तालोकोक्तिरत्र प्राकृतो नोक्तेति चेच्छृणु। निरुक्तच्छेकोक्त्या सहैकीकृत्य मदुदाहृतरीत्याऽत्रैव तदन्तर्भावस्य लाघवेनेष्टत्वात्। एवमेवैतत् प्राक्तनानां कुवलयानन्दोक्तानां आवृत्तिदीपकमालादीपककारकदीपकानां दीपकभेदविशेषाणां तत्रैवान्तर्भावस्तथा तदुक्तस्य विकस्वरस्य चार्थान्तरन्यासो-

**भूताद्यर्थस्य या साक्षात्त्वेनोक्तिर्भाविकं तु तत्।**
**अद्यापि सा मे दृग्बद्धा कामितानुमतीङ्गिता ॥ २९५ ॥**

दाहरणसंसृष्टौ मिथ्याध्यवसितेः प्रौढोक्तौ दोषस्याभ्यर्थनानुज्ञा तत्रैव गुणदर्शनात्। 'विपदः सन्तु नः शश्वद्यासु संकीर्त्यते हरिः' इत्यनुज्ञायाः 'कार्याजनिर्विशेषोक्तिः सति पुष्कलकारणे। हृदि स्नेहक्षयो नाभूत्स्मरदीपे ज्वलत्यपि' इति विशेषोक्तौ। 'सूच्यार्थसूचनं मुद्रा प्रकृतार्थपरैः पदैः। नितम्बगुर्वी तरुणी दृग्युग्मविपुला च सा' इति मुद्रायाः 'अलंकारः परिकरः साभिप्राये विशेषणे। सुधांशुकलितोत्तंसस्तापं हरतु वः शिवः' इति परिकरे—'पूर्वावस्थानुवृत्तिश्च विकृते सति वस्तुनि। दीपे निर्वापितेऽप्यासीत्काञ्चीरत्नैर्महन्महः' इति पूर्वावस्थायाः 'पुनः स्वगुणसंप्राप्तिः पूर्वरूपमुदाहृतम्। हरकण्ठानुलिप्तोऽपि शेषस्त्वद्यशसा सितः' इति पूर्वरूपे। 'क्रमिकं प्रकृतार्थानां न्यासं रत्नावलीं विदुः। चतुरास्यः पतिर्लक्ष्म्याः सर्वज्ञस्त्वं महीपते' इति रत्नावल्याः 'प्रश्नाक्षरोत्तराभिन्नमुत्तरं चित्रमुच्यते। केदारपोषणरताः के खेटाः किं चलं वयः' इति चित्रस्य चाग्रिमे वक्ष्यमाणे शब्दालंकाररत्ने तदलंकारविशेषयोः। तथा 'भेदवैशिष्ट्ययोः स्फूर्तावुन्मीलितविशेषकौ। हिमाद्रिं त्वद्यशो मग्नं सुराः शीतेन जानते'। 'लक्षितान्युदिते चन्द्रे पद्मानि च मुखानि च' इति चोन्मीलितविशेषकयोः काव्यलिङ्गे वक्ष्यमाणेऽनुमानालंकारे वा—'विवृतोक्तिः श्लिष्टगुप्तं कविनाविष्कृतं यदि। वृषापेहि परक्षेत्रादिति वक्ति ससूचनम्' इति विवृतोक्तेः 'गूढोक्तिरन्योद्देश्या गीर्यदन्यं प्रति कथ्यते। वृषापेहि परक्षेत्रादायाति क्षेत्ररक्षकः' इति गूढोक्तौ 'उदात्तमृद्धिसहितं श्लाघ्यं चान्योपसर्जनम्। सानौ यस्याभवद्युद्धं तद्धूर्जटिकिरीटिनो.'। 'रत्नस्तम्भेषु संक्रान्तप्रतिबिम्बशतैर्वृतः। ज्ञातो लङ्केश्वरः कृच्छ्रादाञ्जनेयेन तत्त्वतः' इत्युदात्तस्य 'हेतोर्हेतुमता सार्धं वर्णनं हेतुरुच्यते। असावुदेति शीतांशुर्मानच्छेदाय सुभ्रुवाम्' इत्यादिहेत्वलंकारस्याग्रिमस्य काव्यलिङ्गे तद्वत् 'अत्युक्तिरद्भुतातथ्यशौर्यौदार्यादिवर्णनम्। त्वयि दातरि राजेन्द्र याचकाः कल्पशाखिनः'। 'राजन्सप्ताप्यकूपारास्त्वत्प्रतापाग्निशोषिताः। त्वद्वैरिराजवनिताबाष्पपूरेण पूरिताः' इत्युक्तेरपि 'अनयोरनवद्याङ्गि स्तनयोर्जृम्भमाणयोः। अवकाशो न पर्याप्तस्तव बाहुलतान्तरे' इत्यादिवदतिशयोक्तिविशेष एवान्तर्भाव इति ध्येयम्। धीरैः क्षन्तव्यं च मदपराधजातम् ॥ २९४ ॥ एवं च्छेकोक्तेरभिप्रायघटितत्वेन तादृक्तया प्रसक्तं भाविकालंकरणं लक्षयति—**भूतादीति**। आदिशब्देन भविष्यतोऽप्यर्थस्य संग्रहः। प्रसिद्धं चैतद्भागवतेऽक्रूरानन्दवर्णने। तदुदाहरति—**अद्यापीति**। सा पूर्वानुभूता प्रिया। **दृगिति**। दृशि दृष्टौ बद्धेव बद्धा संबद्धा प्रत्यक्षेत्यर्थः। तत्र हेतुं वदंस्तां विशिनष्टि—**कामितेति**। मे इत्यत्राप्यनुकृष्य योज्यम्। कामितस्य मत्प्रार्थितस्य अनुमतिरनुमोदनं यत्र तादृशमिङ्गितं सकटाक्षमन्दस्मितग्रीवाभिवलनं यस्याः सा तथेत्यर्थः। यथावा काव्यप्रकाशे—'आसीदञ्जनमत्रेति पश्यामि तव लोचने। भाविभूषणसंभारां साक्षात्कुर्वे तवाकृतिम्'

**व्याप्यारोपाद्वितर्कः स्याद्यापकारोपणं यदि।**
**यदीयं नानुरक्ता स्यात्तन्न पश्येत्कटाक्षतः॥ २९६॥**
**प्रातिकूल्येऽपि चेदिष्टमनुकूलमुदीर्यते।**
**अपराधी प्रियः पात्योऽधस्त्वयैतदुरःस्थया॥ २९७॥**
**बाह्यान्तःकरणोत्पन्नं ज्ञानं प्रत्यक्षमिष्यते।**
**संनिकर्षे प्रियास्येन दृक्तृप्यत्यन्यदा मनः॥ २९८॥**

---

इति। यथावा कुवलयानन्दे—'भाविकं भूतभाव्यर्थसाक्षात्कारस्य वर्णनम्। अहं विलोकयेऽद्यापि युध्यन्तेऽत्र सुरासुराः'। 'अद्यापि तिष्ठति दृशोरिदमुत्तरीयं धर्तुं पुनः स्तनतटाद्गलितं प्रवृत्ता। वाचं निशम्य नयनं नयनं ममेति किंचित्तदा यदकरोत्स्मितमायताक्षी' इति॥ २९५॥ एवंच यत्र यत्र भूताद्यर्थविषयकसाक्षात्कारलोक्तिस्तत्र भाविकत्वमिति। भाविकनिरूपणे व्याप्तिप्रसक्त वितर्कालंकारं लक्षयति—**व्याप्येति**। यद्ययं निर्वह्निः स्यात्तदा निर्धूमोऽपि स्यात्। तमुदाहरति—**यदीयमिति**। यथावा सरस्वतीकण्ठाभरणे वितर्कभेदान् प्रकृत्य। तेषु निर्णयान्तस्तत्वानुपाती यथा—'मैनाकः किमयं रुणद्धि गगने मन्मार्गमव्याहतं शक्तिस्तस्य कुतः स वज्रपतनाद्भीतो महेन्द्रादपि। तार्क्ष्यः सोऽपि समं निजेन विभुना जानाति मां रावणं आः ज्ञात स जटायुरेष जरसा क्लिष्टो वधं वाञ्छति' इत्यादि। विस्तरस्तु तत्रैव ज्ञेयः॥ २९६॥ एव वितर्कसिद्धव्याप्तिप्रसक्तमनुकूलालंकरणं लक्षयति—**प्रातिकूल्येपीति**। तदुदाहरति—**अपराधीति**। इयं हि नायिकां प्रति सख्युक्तिः। यथावा साहित्यदर्पणे—'अनुकूलं प्रातिकूल्यमानुकूल्यानुबन्धि चेत्'। यथा 'कुपितासि यदा तन्वि विधाय करजक्षतम्। बधान भुजपाशाभ्यां कण्ठमस्य दृढ तदा' इति। यथावा अमरुकशतके—'कोपात्कोमललोलबाहुलतिकापाशेन बध्वा दृढ नीत्वा वासनिकेतन दयितया सायं सखीनां पुरः। भूयोऽप्येवमिति स्खलन्मृदुगिरा ससूच्य दुश्चेष्टितं धन्यो हन्यत एव निह्नुतिपरः प्रेयान्रुदत्या हसन्' इति। अत्र वाक्यार्थविस्तरस्तु मदीये शारदोदयाख्यैतट्टिप्पणग्रन्थ एव द्रष्टव्यः॥ २९७॥ एवमनुकूलालंकारलक्षणकुक्षिनिक्षिप्तप्रातिकूल्यबाधकेष्टज्ञानस्य प्रमात्वेनैव लक्षणघटकतया प्रसक्तान्यलंकाराणां पुराणादिष्वपि दृष्टत्वात्पौराणिकसंमतान्यष्टौ प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्धिसंभवैतिह्याख्यप्रमाणान्यप्यलंकारत्वेन दिदर्शयिषुः प्रथमं प्रत्यक्षालंकारं लक्षयति—**बाह्येति**। इष्यतेऽलंकारत्वेन प्राचीनैर्नवीनैश्चालंकारिकैः स्वीक्रियत इत्यर्थः। क्रमात्तमुदाहरति—**संनिकर्ष इति**। अन्यदा विप्रकर्षे। एवंच संनिकर्षे सति प्रियास्यविषयकं चाक्षुषं प्रत्यक्षं तदभावे तत्संस्कारतः स्मृत्या ध्यानेन वा मनसस्तदाकारत्वलक्षणं मानसं प्रत्यक्षं भवतीत्यस्य विलक्षणचमत्कारजनकत्वादुक्तालंकारत्वमिति लक्षणसंगतिः। तदुक्तं सरस्वतीकण्ठाभरणे—'प्रत्यक्षमक्षजं ज्ञानं मानसं चाभिधीयते' इति। यथा—'मन्दमन्दविगलत्रपमीषच्चक्षुरुल्लसितपक्ष्म

**व्याप्येन व्यापके धीकृदनुमानमिहोच्यते ।**
**अनुरक्तेयमस्मासु स्मितपूर्वकटाक्षतः ॥ २९९ ॥**

दधत्या । वीक्ष्यते स्म शनकैर्नववध्वा कामिनो मुखमधोमुखयैव' । अमिथ्यात्मकं यथा—'मनः प्रत्यक्चित्ते सविधमवधायात्तमरुतः प्रहृष्यद्रोमाणः प्रमदसलिलोत्सङ्गितदृशः । यदालोक्याह्लादं ह्रद इव निमज्ज्यामृतमये दधत्यन्तस्तत्त्वं किमपि यमिनस्तत्किल भवान्' इतिच । यथावा कुवलयानन्दे—'किं तावत्सरसि सरोजमेतदारादाहोस्विन्मुखमवभासते युवत्याः । संशय्य क्षणमिति निश्चिकाय कश्चिद्बिम्बोकैर्बकसहवासिनां परोक्षैः' इति ॥ २९८ ॥ एवं क्रमप्राप्तमनुमानालंकारमपि तदुपजीव्यत्वात्तदुत्तरं लक्षयति—**व्याप्येनेति** । व्याप्येन लिङ्गेन । व्यापके साध्ये एतादृशे इह काव्यव्यापारगोचरार्थविषय इत्यर्थः । **धीति** । प्रमितिजनकमित्यर्थः । अनुमानं अनुमानालंकरणम् । उच्यत इत्यन्वयः । तमुदाहरति—**अनुरक्तेति** । इदं हि भगवतः श्रीकृष्णस्य कांचित्तादृगाशयसूचिकां गोपिकां विलोक्य स्वमनस्येव स्वसुहृदं प्रति वा वचः । अत्र पुरोवर्तित्वेन प्रत्यक्षगोपिकापक्षः । तदाश्रितः स्वविषयकानुरागः साध्यः । मन्दहासापाङ्गवीक्षणं तत्कर्तृकं स्वकर्मकं हेतुः । अर्थसमाजसिद्धतादृग्गोप्यन्तरं दृष्टान्त इत्यूह्यम् । इहोक्तरूपेण व्याप्येन हेतुना काव्यव्यापारगोचरनिरुक्तगोपीविशेषपक्षकस्वविषयकानुरक्तत्वरूपसाध्यविषयकप्रमा भवतीति लक्षणसंगतिः । तदुक्तं रसगङ्गाधरे—काव्यव्यापारगोचरानुमितिकरणमनुमानम् । काव्यलिङ्गवारणाय गोचरान्तमिति । एवं च 'हिमाद्रिं त्वद्यशो मग्नं सुराः शीतेन जानते । लक्षितान्युदिते चन्द्रे पद्मानि च मुखानि च' इति कुवलयानन्दोदाहृतयोः'भेदवैशिष्ट्ययोः स्फूर्तावुन्मीलितविशेषकौ' इति तल्लक्षितोन्मीलितविशेषकयोः प्रागुक्तोऽत्रान्तर्भावः सुघट एव । उभयत्रापि क्रमात् शैत्यप्रमालिङ्गकहिमाद्रिप्रमारूपायाः कमलप्रतियोगिकरमणीमुखानुयोगिकभेदविषयकानुमितिरूपप्रमितेः सर्वदा विकसमानत्वहेतुकायाश्चोक्तकाव्यव्यापारगोचरानुमानैकसाध्यत्वादिति ध्येयम् । यथावा सरस्वतीकण्ठाभरणे—'अविरलविलोलजलदः कुटजार्जुननीपवनवातः । अयमायातः कालो हन्त हताः पथिक गेहिन्यः' । 'सावज्ञमागमिष्यन्नूनं पतितोऽसि पादयोस्तस्याः । कथमन्यथा ललाटे यावकरसतिलकपङ्क्तिरियम्'इतिच । यथावा कुवलयानन्दे—'यथा रन्ध्रं व्योम्नश्चलजलदधूमः स्थगयति स्फुलिङ्गानां रूपं दधति च यथा शक्रमणयः। यथा विद्युज्ज्वालोल्लसितपरिपिङ्गाश्च ककुभस्तथा मन्ये लग्नः पथिकतरुखण्डे स्मरदवः' । यथावा—'यत्रैता लहरी चलाचलदृशो व्यापारयन्ति भ्रुवं तत्तत्रैव पतन्ति संततममी मर्मस्पृशो मार्गणाः । तच्चक्रीकृतचापपुङ्खितशरः प्रेङ्खत्करः क्रोधनो धावत्यग्रत एव शासनधरः सत्यं तदासां स्मरः' । पूर्वं रूपकसंकीर्णमिदमतिशयोक्तिसंकीर्णमिति भेदः । शुद्धानुमानं यथा—'निलीयमानैर्विहगैर्निमीलद्भिश्च पङ्कजैः । विकसन्त्या च मालत्या गतः संज्ञायते रविः' । यथावा—'सौमित्रे ननु सेव्यतां तरुतलम्' इत्यादि

**धीः संज्ञासंज्ञिसंबन्धे यतस्तदुपमानकम् ।**
**भगणं शकटाकारं बाले त्वं विद्धि रोहिणीम् ॥ ३०० ॥**
**यथार्थवक्तृवचनं शब्द इत्यभिधीयते ।**
**राधे कृष्णः परात्मायं लीलाकृदिति निश्चिनु ॥ ३०१ ॥**
**प्रत्यक्षादिप्रसिद्धोऽपि योऽर्थो नैवोपपद्यते ।**
**अर्थान्तरं दिशत्येषा त्वर्थापत्तिरिहोदिता ॥ ३०२ ॥**

॥ २९९ ॥ एवं क्रमप्राप्तमुपमानप्रमाणालंकारं लक्षयति—**धीरिति** । यतः सकाशात् । **संज्ञेत्यादि** । संज्ञा गवयादिपदशक्यता, संज्ञी गवयादिपदवाच्यो गवादिसदृशः पिण्डविशेषः । अनयोर्यः संबन्धः वाच्यवाचकभावरूपः संसर्गस्तस्मिन्विषय इत्यर्थः । धीः प्रमा भवति तत् निरुक्तप्रमाकरणं गवयादिपिण्डमात्रप्रत्यक्षोत्तरकालिकं गोसदृशो गवय इत्यतिदेशवाक्यस्मृतिरूपं करणमिति यावत् । उपमानकमस्तीति सवन्धः । एतेनोपमालंकारस्य व्यावृत्तिः सूचिता लक्षणफलादिभेदादिति बोध्यम् । तमुदाहरति—**भगणमिति** । हे बाले, त्वम् । **शकटेति** । शकटसदृशसंस्थानविशेषमित्यर्थः । एतादृशं भगणं नक्षत्रसंघम् । रोहिणीं विद्धीति योजना । तदुक्तं कण्ठाभरणकुवलयानन्दयोः । 'तां रोहिणीं विजानीहि ज्योतिषामत्र मण्डले । समूहस्तारकाणां यः शकटाकारकाश्रितः' इति । 'यस्तन्वि तारकान्यासः' इति कुवलयानन्दपाठः । आलेख्यनामकचित्रस्य पादादिचिह्नरूपाया मुद्राया आदर्शादिप्रतिबिम्बस्य चात्रैवान्तर्भावः । उक्तज्ञानजनकत्वतौल्यादिति दिक् ॥ ३०० ॥ इदानीं क्रमप्राप्तं शब्दप्रमाणमलंकारत्वेन लक्षयति—**यथार्थेति** । तदुदाहरति—**राध इति** । यथावा सरस्वतीकण्ठाभरणे—'दमं दानं दयां शिक्षेः स्तनयित्नुर्वदत्यसौ । ददद् इति वागदेवी दयध्वं दत्त दाम्यत' तदेतद्विधिरूपमाप्तवचनम् । निषेधरूपं यथा—'निवार्यतामालि किमप्ययं बटुः पुनर्विवक्षुः स्फुरितोत्तराधरः । न केवलं यो महतोपभाषते शृणोति तस्मादपि यः स पापभाक्' इति । यथावा कुवलयानन्दे—'विवक्षता दोषमपि च्युतात्मना त्वयैकमीशं प्रति साधु भाषितम् । यमामनन्त्यात्मभुवोऽपि कारणं कथं स लक्ष्यप्रभवो भविष्यति' । 'बलात्कुरुत पापानि सन्तु तान्यकृतानि वः । सर्वान्बलवताऽनर्थानकृतान्मनुरब्रवीत्' । 'महाजनाचारपरम्परेदृशी स्वनाम नामाददते न साधवः । अतोऽभिधातुं न तदुत्सहे पुनर्जनः किलाचारमुचं विगायति' । 'असंशयं क्षत्रपरिग्रहक्षमा यदार्यमस्यामभिलाषि मे मनः । सतां हि संदेहपदेषु वस्तुषु प्रमाणमन्तःकरणस्य वृत्तयः' इति ॥ ३०१ ॥ अथ क्रमप्राप्तामर्थापत्तिमप्यलंकारत्वेन लक्षयति—**प्रत्यक्षादीति** श्लोकेनैव । आदिनानुमानादिः । यः सर्वेदिवसाभुञ्जानत्वे सति पीनत्वादिलक्षणोऽर्थः प्रत्यक्षादिप्रसिद्धोऽपि देवदत्ताश्रितत्वेन प्रत्यक्षादिप्रमाणसिद्धोऽपि नैव उपपद्यते युक्तिसहो नैव भवति । अतः स्वोपपत्तयेऽर्थान्तरं रात्रिभोजनलक्षणं पदार्थान्तरं दिशति ज्ञापयति । एषा तु इह

**उपवीतसमं हारं प्रातर्वीक्ष्य मृगीदृशः ।**
**विपरीतरतं सख्यो विनिर्णेयुः स्वचेतसि ॥ ३०३ ॥**
**असत्त्वं यत्पदार्थानां सोऽभावोऽनुपलब्धिकः ।**
**प्रिये मध्यस्तवास्त्येव परं नैवोपलभ्यते ॥ ३०४ ॥**
**प्रमाणान्तरतो बाधो योग्यतैवात्र संभवः ।**
**कृपाधीश कृपास्मासु पातित्यादेव भाविनी ॥ ३०५ ॥**

लोके शास्त्रे च अर्थापत्तिरेतन्नामकप्रमाणव्यतिरेकप्रकृतेऽलंकारत्वेनाप्युदिता कथितास्तीत्यन्वयः । तदुक्तं सरस्वतीकण्ठाभरणे—'प्रत्यक्षादिप्रतीतोऽर्थो यस्तथा नोपपद्यते । अर्थान्तरं च गमयत्यर्थापत्तिं वदन्ति ताम्' इति ॥ ३०२ ॥ तामुदाहरति—**उपवीतेति** । यज्ञोपवीतसमानसंस्थानमित्यर्थः । दक्षिणं बाहुं मध्यतः समुद्धृत्य वामस्कन्धेऽवस्थापितमिति यावत् । एतादृशं मृगीदृशः पार्वत्याः हारं मुक्तावलिविशेषम् ।'हारो मुक्तावली' इत्यमरः । प्रातरुषसि वीक्ष्य आलोक्य सख्यः रहःसहचर्यः स्वचेतसि विपरीतरतं । पुरुषायितमित्यर्थः । मृगीदृश इत्यार्थिकम् । विनिर्णेयुरिति योजना । अयं भावः । सा तावन्निशि भगवता शिवेन सह विपरीतसुरतं कुर्वाणा पुंस्त्ववेषार्थं यज्ञोपवीतस्थाने स्वमुक्ताहारमेव तादृशं निवेशयामास । स तु तादृक्सुरतश्रान्तिविस्मृत्या तथैव निद्रायामप्यासीदतः सखीभिः प्रभाते तथेक्षितः प्रोक्तसुरतगमकोऽभूदिति । यथावा कण्ठाभरण एव—'निर्णेतु शक्यमस्तीति मध्यं तव नितम्बिनि । अन्यथानुपपत्त्यैव पयोधरभरस्थितेः' इति । विस्तरस्तु तत्रैव द्रष्टव्यः । यथावा मदीये कृष्णलीलामृते—'समुद्र एषोऽस्य सपत्नसुन्दरीस्रवदृगब्जाम्बुभिरेव निर्मितः । नचेत्कथं क्षार उदाररंहसा प्रपूरितोऽप्यस्य नखेन्दुजाम्भसा' इति । यथावाऽस्मदीयायामेवाद्वैतामृतमञ्जर्याम्—'वल्मीकान्मुनिमिषतः किमनन्तः प्रादुरास यदि नेदम् । तद्वाक्यललितकण्ठः को वा नाभूच्छिवः साक्षात्' इति ॥ ३०३ ॥ एवं क्रमप्राप्तमभावापराभिधमनुपलब्ध्याख्यं षष्ठं प्रमाणमप्यलंकारत्वेन लक्षयति—**असत्त्वमित्यर्धेनैव** । यत्पदार्थानामसत्त्वं समीहितस्थलेऽविद्यमानत्वं सः अभाव एव । अनुपलब्धिकः अनुपलब्ध्यपराभिधोऽलंकारो भवतीत्यन्वयः । तमुदाहरति—**प्रिये इति** । इदं तु निगदव्याख्यातमेव । यथावा कण्ठाभरण एव—'मानुषीषु कथं वा स्यादस्य रूपस्य संभवः । न प्रभातरलं ज्योतिरुदेति वसुधातले' इति । यथावा कुवलयानन्दे । अनुपलब्धिर्यथा—'स्फुटमसदवलग्नं तन्वि निश्चिन्वते ते तदनुपलभमाना रूपयन्तोऽपि लोकाः । कुचगिरिवरयुग्मं यद्विनाधारमेतत्तदिह मकरकेतोरिन्द्रजालं प्रतीमः' इति ॥ ३०४ ॥ एवं क्रमागतं संभवाख्यमपि सप्तमं प्रमाणमलंकारत्वेन लक्षयति—**प्रमाणान्तरत** इत्यर्धेनैव । अन्यप्रमाणेनेत्यर्थः । अबाधः बाधाभावः । एतद्रूपायोग्यतैवात्र लोके शास्त्रे च संभव एतदभिधोऽलंकारोऽस्तीति संबन्धः । तमुदाहरति—**कृपाब्धीति** । यथावा कुवलयानन्दे—'ये नाम के-

**ऐतिह्यं वृद्धवाक्यानामादिहीना परम्परा ।**
**वदन्ति ह्यखिला वृद्धाः श्रीशसेव्यमृतीत्यपि ॥ ३०६ ॥**
**तिलतन्दुलवत्सङ्गः संसृष्टिर्बह्वलंकृतेः ।**
**सद्गुरो पाहि मां दीनं भवदावानलाकुलम् ॥ ३०७ ॥**
**क्षीरनीरसमो नानालंकाराणां स संकरः ।**
**हरिर्जयति संसारतिमिरध्वंसकृच्चिरम् ॥ ३०८ ॥**

चिदिह नः प्रथयन्त्यवज्ञां जानन्ति ते किमपि तान्प्रति नैष यत्नः । उत्पत्स्यतेऽस्ति मम कोऽपि समानधर्मा कालो ह्ययं निरवधिर्विपुला च पृथ्वी' इति ॥३०५॥ अथैतिह्यमपि क्रमागतमष्टमं प्रमाणमलंकारत्वेन लक्षयति—**ऐतिह्यमिति** । तामुदाहरति—**वदन्तिहीति** । अमृती मोक्षशाली यावदारब्धं जीवन्मुक्त इत्यर्थः। अपिना सद्योमुक्तोपीत्येतत् । पक्षद्वयमपि संक्षेपशारीरकादिशास्त्रसिद्धमेवेति भावः । यथावा कुवलयानन्दे—'कल्याणी बत गाथेयं लौकिकी प्रतिभाति माम् । एति जीवन्तमानन्दो नरं वर्षशतादपि' इति ॥ ३०६ ॥ एवमुपमाद्यैतिह्यान्तानामष्टनवत्यलंकाराणां मध्येऽन्यतमानां मेलने विस्पष्टे सति चित्ररूपवत्संसृष्ट्याख्योऽन्य एवालंकारो भवतीति सूचयंस्तं लक्षयति—**तिलेति** । **बह्विति** । एकवचनमत्र जात्यभिप्रायकमेव । अनेकालंकाराणामित्यर्थः । तिलतन्दुलवत्संमेलनेऽपि यथा तिलतन्दुलानां परस्परं भेदः स्पष्ट एव प्रतिभाति तथा अलंकाराणां संमेलनेऽपि यत्र भेदः परस्परं स्फुटतरं प्रत्यक्षीक्रियते इति यावत् । एतादृशो यः सङ्गः निरुक्तालंकारसमुदायः सा संसृष्टिरेतन्नाम्न्यलंकृतिर्भवतीति योजना । तामुदाहरति—**सद्गुरो इति** । अयि सद्गुरो, त्वं भवेति संसारदावानलविकलमित्यर्थः । अतएव दीनमेतादृशं मां पाहि कृपादृष्ट्यमृतवृष्ट्या परिपालयेति संबन्धः । अत्र सदिति परिकराङ्कुरः । भवेत्यत्र रूपकं लुप्तोपमा वा दीनमित्यादौ परिकरः पाहीत्यादौ काव्यलिङ्गं चेत्येतन्मेलनस्य विस्पष्टत्वाल्लक्षणसंगतिः । यथावा सरस्वतीकण्ठाभरणे—'पिनष्टीव तरङ्गाग्रैरुदधिः फेनचन्दनम् । तदादाय करैरिन्दुर्लिम्पन्तीव दिगङ्गनाः' । अत्रोत्प्रेक्षाद्वयं रूपकद्वयं च तिलतण्डुलवत्संकीर्यते इति संसृष्टिं प्रकृत्योक्तम् । यथावा काव्यप्रकाशे तां प्रकृत्य—'लिम्पतीव तमोङ्गानि वर्षतीवाञ्जनं नभः । असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता' इति । अत्र पूर्वार्धे उत्प्रेक्षाद्वयमुत्तरार्धे उपमा च व्यक्तैवेति तथा । यथावा साहित्यदर्पणे—'देवः पायादपायाद्वः स्मेरेन्दीवरलोचनः । संसारध्वान्तविध्वंसहंसः कंसनिषूदनः' इति । अत्र स्मेरेत्यत्र लुप्तोपमा संसारेति रूपकद्वयं च व्यक्तमेव । यथावा कुवलयानन्दे—लिम्पतीवेत्याद्यर्थालंकारसंसृष्ट्युदाहरणं विलिख्य । 'आनन्दमन्दिरपुरन्दरमुक्तमाल्यमौलौ हठेन निहितं महिषासुरस्य । पादाम्बुजं भवतु वो विजयाय मञ्जुमञ्जीरसिञ्जितमनोहरमम्बिकायाः' इत्युक्तम् ॥ ३०७ ॥ एवं अथैतेषामलंकाराणां यथासंभवं क्वचिन्मेलने लौकिकालंकाराणां मेलन इव चारुत्वान्तरालम्ब-

आरम्भ उपमाचत्वारिंशाधिकशतं भिदा ।
अनन्वयश्चोपमेयोपमाऽन्योन्योपमा तथा ॥ ३०९ ॥
असमश्चोदाहरणं प्रतीपं पञ्चधा मतम् ।
रूपकं संमतं विद्यामितं परिणतिस्तथा ॥ ३१० ॥

नेन नरसिंहन्यायेन पृथगलंकारत्वस्थितौ तन्निर्णयः क्रियते। तत्र तिलतण्डुलन्यायेन स्फुटावगम्यमानभेदालंकारमेलने संसृष्टिः क्षीरनीरन्यायेनास्फुटभेदालंकारमेलने संकर इति कुवलयानन्दोक्तां संसृष्टिं निरूप्य संकरमपि तदुक्तं लक्षयति—**क्षीरेति**। सः प्रागुक्तः संघः। तमुदाहरति—**हरिरिति**। अत्र हरिशब्दे हरत्यद्वैतात्मप्रबोधजनकवेदान्तमहावाक्यविचारोपदेशेन मूलाविद्यामिति व्युत्पत्त्या संसारतिमिरेत्यादिविशेषणाद्धरिशब्दस्य 'यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु' इत्याद्यमरात्सूर्यवाचकत्वादपि तद्रूपः सद्गुरुरिति रूपकं तथा विष्णुवाचकत्वाच्च श्लेषश्चैव मयूरव्यंसकादिसमासाश्रयणेन तिमिरमिति रूपकं संसारस्तिमिरमिवेति लुप्तोपमा च न स्फुटीभवतीति लक्षणसंगतिः। यथावा कण्ठाभरणे—'क्षीरक्षालितचन्द्रेव नीलीधौताम्बरेव च। टङ्कोल्लिखितसूर्येव वसन्तश्रीरदृश्यत'। अत्रोपमोत्प्रेक्षे क्षीरनीरवन्मिश्रे इति। 'कृष्णार्जुनानुरक्तापि दृष्टिः कर्णावलम्बिनी। याति विश्वसनीयत्वं कस्य ते कलभाषिणि'। अत्र पांसूदकयोरिव मृत्पिण्डे श्लेषविरोधयोरव्यक्तयोरेव व्याजस्तुतावङ्गभावोऽवगम्यत इति च। यथावा साहित्यदर्पणे—'अनुरागवती संध्या दिवसस्तत्पुरःसरः। अहो दैवगतिश्चित्रा तथापि न समागमः'। अत्र समासोक्तिर्विशेषोक्तेरङ्गमिति। यथावा कुवलयानन्दे—'संकरं प्रकृत्य स चाङ्गाङ्गिभावेन समप्राधान्येन संदेहेनैकवाचकानुप्रवेशेन च चतुर्विध इति। प्रतिज्ञाय अङ्गाङ्गिभावसंकरो यथा—'तलेष्ववेपन्त महीरुहाणां छायास्तदा मारुतकम्पितानाम्। शशाङ्कसिंहेन तमोगजानां लूनाकृतीनामिव गात्रखण्डाः'। अत्र विस्तरस्तु समुदाहृतकण्ठाभरणादिग्रन्थत्रयेऽप्यनुसंधेयः प्रकृतानुपयोगान्नेह मया संगृहीतोऽसाविति शिवम् ॥ ३०८ ॥ एवमित्थं शतमलंकारा इत्यादिकुवलयानन्दीयान्तिमकारिकोक्तरीत्या शतसंख्याकानेव स्वकृतप्रियव्रतचरितचन्द्रिकान्तिमभागोक्तब्रह्मशरीरद्वैधीभावोत्पन्नार्धनारीश्वरतादात्म्यानुसंधानजन्यदक्षिणवामोभयभागक्रमोत्पन्नमनुशतरूपात्मकमिथुनसंभूतप्रियव्रताख्यज्येष्ठपुत्रतज्ज्येष्ठपत्नीबर्हिष्मत्यभिधदम्पत्योः प्राथमिकसुरतकालिकसंवादोक्तशतालंकारानुपमादिसंकरान्तान्निरूप्यताननुक्रामति—**आरम्भ इत्यादिसप्तदशश्लोकैः**। संख्यादिसुबोधार्थमन्यप्रक्षेपनिराकरणार्थं च। आरम्भे प्रथममित्यर्थः। भिदा तद्भेदेन। **अनन्वयश्चेति**। अनन्वयादीनां नैव भेद इत्यर्थः। अन्योन्योपमेति च्छेदः। चशब्दतथाशब्दौ समुच्चायकावेव। एवमेवाग्रेऽपि सर्वत्र द्रष्टव्यम् ॥ ३०९ ॥ **असमश्चेति**। **विद्येति**। 'पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः। वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश' इति स्मृतेश्चतुर्दशसंख्याभेदभिन्नमित्यर्थः ॥ ३१० ॥

संदेहत्रितयं भ्रान्तिश्चैवमान्स्मृतिरप्यथ ।
उल्लेखः षड्विधश्चैवापह्नुतिश्चापि षड्विधा ॥ ३११ ॥
निश्चयश्च तथोत्प्रेक्षा सप्तधा परिकीर्तिता ।
दशधातिशयोक्तिः स्यादेकधा तुल्ययोगिता ॥ ३१२ ॥
दीपकं प्रतिवस्तूपमा त्रिधा गदिता बुधैः ।
दृष्टान्तो द्विविधश्चैव चतुर्धैव निदर्शना ॥ ३१३ ॥
व्यतिरेकः सहोक्तिश्च विनोक्तिश्च तथैवच ।
समासोक्तिः परिकरस्तथा परिकराङ्कुरः ॥ ३१४ ॥
श्लेषो नवविधोऽप्रस्तुतप्रशंसैकधा मता ।
प्रस्तुताङ्कुर एकः स्यात्पर्यायोक्तद्वयं तथा ॥ ३१५ ॥
व्याजस्तुतिः पञ्चधैव व्याजनिन्दा तथैव च ।
आक्षेपश्च विरोधाभासद्वयं परिकीर्तितम् ॥ ३१६ ॥
विभावना षड्विधा स्याद्विशेषोक्तिस्तथैव च ।
असंभावोऽसंगतिश्च त्रिविधा विषमं समम् ॥ ३१७ ॥
विचित्रमधिके चाल्पमन्योन्यद्वयमेव च ।
विशेषत्रितयं व्याघातौ च कारणमालिके ॥ ३१८ ॥
एकावल्यौ तथा सारौ यथासंख्यं तथैव च ।
पर्यायौ परिवृत्तिश्च परिसंख्या विकल्पकः ॥ ३१९ ॥
समुच्चयः समाधिश्च प्रत्यनीकं तथैवच ।
काव्यार्थापत्तिरेवं स्यात्काव्यलिङ्गं तथैव च ॥ ३२० ॥
तद्वदर्थान्तरन्यासौ प्रौढोक्तिर्ललितं तथा ।
प्रहर्षणत्रयं चैव तथोल्लासश्चतुर्विधः ॥ ३२१ ॥
अविज्ञा द्विविधा लेशौ तद्गुणः पूर्वरूपकम् ।
अतद्गुणश्चानुगुणो मीलितं च तथैवच ॥ ३२२ ॥
सामान्यमुत्तरं सूक्ष्मं पिहितं च तथैवच ।
व्याजोक्तिरथ गूढोक्तिर्युक्तिर्वक्रोक्तिरेव च ॥ ३२३ ॥

---

**संदेहेति** ॥ ३११ ॥ **निश्चयश्चेति** । एकधा एकप्रकारा ॥ ३१२ ॥ **दीपकमिति** ॥ ३१३ ॥ **व्यतिरेक इति** ॥ ३१४ ॥ **श्लेष इति** । अप्रस्तुतेतिच्छेदः ॥ ३१५ ॥ **व्याजस्तुतिरिति** ॥ ३१६ ॥ **विभावनेति** । असंगतिरिति तु स्पष्टमेव ॥ ३१७ ॥ **विचित्रमिति** । अधिके इति द्विवचनात्तदीयं भेदद्वयमेवेत्यर्थः । एवमेव व्याघातावित्यत्रापि । एतेन कारणेत्याद्यपि व्याख्यातम् ॥ ३१८ ॥ **एकावल्याविति** । प्राग्वदेव ॥ ३१९ ॥ **समुच्चय इति** । ॥ ३२० ॥ **तद्वदिति** ॥ ३२१ ॥ **अवज्ञेति** ॥ ३२२ ॥ **सामान्यमिति**

स्वभावोक्तिर्निरुक्तिश्च प्रतिषेधो विधिस्तथा।
संभावनं च च्छेकोक्तिर्भाविकं च वितर्ककः ॥ ३२४ ॥
अनुकूलं तथा प्रत्यक्षादिमानाष्टकं तथा।
संसृष्टिः संकरश्चैवमलंकारशतं मतम् ॥ ३२५ ॥
गोक्षीराब्धेः शिवगुरुविबुधसहायोऽच्युतः समुद्दध्रे।
अर्थालंकारवपुः कौस्तुभनामाष्टमं रत्नम् ॥ ३२६ ॥

इति श्रीसाहित्यसारे कौस्तुभाख्यमष्टमरत्नं संपूर्णम् ॥ ८ ॥

---

## कामधेनुरत्नम् ९

अर्थालंकारतोऽथाहं शब्दालंकारसंचयम्।
जघन्यं प्रविहायैव पद्याद्यहं दिशामि तम् ॥ १ ॥

---

॥ ३२३ ॥ **स्वभावोक्तिरिति** ॥ ३२४ ॥ **अनुकूलमिति** । **प्रत्यक्षादीति** । आदिनानुमानोपमानशब्दार्थापत्त्यनुपलब्धिसंभवैतिह्यग्रहः । मतं प्राचीनाचार्यस्वारस्यानुसारिणो मम संमतमित्यर्थः ॥ ३२५ ॥ **गोक्षीरेति** । पूर्वार्धमिदं प्रागेव व्याख्यातम्। **अर्थेति** । अर्थालंकारनिरूपणस्वरूपमित्यर्थः । **कौस्तुभेति** । कौस्तुभ इति नाम यस्य तत्तथेत्यर्थः ॥ ३२६ ॥

इति श्रीमत्० कौस्तुभाख्याष्टमार्थालंकाररत्नसरसामोदोल्लासः संपूर्णः ॥८॥

---

एवमष्टमरत्नेऽर्थालंकारान्संप्रपञ्च्य तेन प्रथमरत्नोक्तचतुर्विधकाव्यमध्ये तृतीयं मध्यमं तदुपपाद्याधुनाऽवसरप्राप्तं अधमं काव्यभेदं निरूपयिष्यन्नवमं शब्दालंकाररत्नमारभमाणः प्राक्तनरत्नेन सहास्यावसरसांगत्यं समभिदधानः श्लेषेणाधमकाव्यप्रपञ्चरूपत्वेनैतस्मादुद्विजतः शिष्यादीन्सारतः सक्षेपकथनप्रतिज्ञया समाश्वासयति—**अर्थालंकारत इति** । अहं प्रकृतग्रन्थलेखकत्वोपहितश्चिन्मात्र इत्यर्थः । **अथेति** । प्राचीनरत्ने अर्थालंकारनिरूपणात् । अथ अनन्तरम् **शब्देति** । ननु यमकादेः खड्गबन्धादेश्च तत्र केवलं बालैकलालनोपयोगित्वेन प्रेक्षावदनादरणीयत्वमेवेत्यत आह—**जघन्यमित्यादि** तृतीयपादेन । तत्र जघन्यत्वेनातिनिन्द्यत्वादेव तद्धाने प्रकर्षोऽनवधारणं च प्रेत्यादिना ध्वन्यते । एवं तर्हि किं तदधमेऽपि काव्यप्रपञ्चेऽत्र प्रेक्षावदादरणीयमवशिष्येतेत्यत्राह—**पद्यत्याद्यन्त्यपादेन** । आदिना गद्यम् । तं प्राक्प्रतिज्ञातशब्दालंकारसंचयमिति यावत् । दिशामि कथयामीत्यन्वयः । पक्षे अहं स्वधर्मपत्न्युपभोगलालसः । **अथेति** । धर्माख्यपुमर्थैककृतासाभरणमङ्गलसूत्राद्यलंकारधारणादित्यर्थः । अथानन्तरं वहितम् । **शब्देति** । स्वनजनकाभरणनिकरमित्यर्थः । जघन्यं जघनार्हं काञ्च्याख्यं जघनैकोपयुक्तमिति यावत् । तस्य शिष्टाचारविरोधात्तद्धाने प्रकर्षादि

**सव्यञ्जनालिरेवात्र छेकानुप्रासशालिवाक् ।**
**कुन्दमन्दस्मिता राधा हरिं याति रतीक्षितम् ॥ २ ॥**
**वर्णा द्विजादिजात्मानः स्थानसादृश्यतो यदि ।**
**सततं ललिताः सन्ति श्रुत्यनुप्रास एव सः ॥ ३ ॥**

---

**पद्यादीति** । 'सरणिः पद्धतिः पद्या' इत्यमरान्मञ्जीरादिकम् । आदिना कङ्कणादि ॥ १ ॥ तत्रादौ श्लेषेण च्छेकानुप्रासं लक्षयति—**सेत्याद्यर्धेन** । समानानि च तानि व्यञ्जनानि चेति तथा । अचः स्वराः स्वरहीनं व्यञ्जनमिति वचनात्स्वजातीयहलैकाक्षराणि तेषां या आलिः पङ्क्तिर्द्वित्रादिसरणिः साच्कस्वल्पविजातीयव्यञ्जनान्तरव्यवधाने सत्येव साच्कसजातीयव्यञ्जनराजिरेवेत्यर्थः । अत्र शब्दालंकारप्रकरणे । एवं लक्षणमभिधाय लक्ष्यमुद्दिशति—**छेकेति** । छेको विदग्ध इत्यभिधानाच्छेकानां विदग्धपदाभिधविबुधानां अनु रसाद्यनुसारेण मधुररसेषु शृङ्गारादिषु । 'ततोऽरुणपरिस्पन्दमन्दीकृतवपुः शशी । दध्रे कामपरिक्षामकामिनीगण्डपाण्डुताम्' इति काव्यप्रकाशोदाहृतरीत्या मधुरवर्णमयी परुषेषु वीरादिषु परुषवर्णमयी । 'क्षत्रध्वान्तशरद्भास्वद्गर्वहृद्भ्राजदोजसा । कः संगरेऽर्भकः पार्थः शस्त्रं मध्वन्तकोद्दृभ्रे' इत्यादिमूलप्रागुदाहृता एतादृशी या प्रकर्षेण वर्णविन्यासोत्कर्षेण आसनमेवासः पद्यादिविन्यासस्तेनान्वर्थकसंज्ञा विशेषेण तन्त्रैकप्रसिद्धेन शालते एतादृशी वाक्काव्यविशेषगतशब्दालंकारवाणी भवतीत्यर्थः । तमुदाहरति—**कुन्देत्याद्युत्तरार्धेन** । नकुदवत्परमारक्ताधरकान्तिसंकीर्णत्वादर्धोन्मीलितबहिररुणकुन्दमुकुलदलवन्मन्दं शनैः स्मितं किंचिदेव हास्यं यस्याः सा तथेत्यर्थः । एतेन पद्मिनीस्वाभाव्यमिष्टलाभहृष्टत्वं च सूच्यते । एतादृशी राधारतीति । रत्यर्थमीक्षितं स्वयं प्रागवलोकितम् । अतएव रतये क्रीडार्थमीक्षितं राधां प्रत्यवलोकितं यस्य स तथा तमित्यर्थः । एवंच प्रकृते समानुरागकत्वं व्यज्यते । ईदृशं हरिं यातीति संबन्धः । तत्र हेतुं द्योतयन्राधां विशिनष्टि—**सेत्यादिद्वाभ्याम्** । सव्यञ्जनारतिसामग्रीयुक्ता आलिः सखी यस्याः, स्वयं तु छेकाश्चतुरास्राननु प्रकर्षेण आसनशालिनी वाग्यस्याः सा । अत्र कुन्दमन्देति याति रतीक्षितमिति च च्छेकानुप्रास एव । वृत्त्यनुप्रासस्तु वृत्तीनां गुणरत्न एव सप्तमे प्रपञ्चितत्वेन तदनतिरिक्तत्वान्नेह प्रतन्यत इति दिक् ॥ २ ॥ एवं श्लेषेणैव दर्पणसंमतं श्रुत्यनुप्रासमपि लक्षयति—**वर्णा इत्यादि**श्लोकेनैवोदाहरति च । यदि वर्णाः साच्का हलः । **द्विजेति** । द्विजाः 'दन्तविप्राण्डजा द्विजाः' इत्यभिधानाद्दन्ताः । आदिना अकुहविसर्जनीयानां कण्ठ इत्यादिवचनात्कण्ठादिस्थानान्तरं बोध्यम् । तत्र जातः अभिव्यक्तः आत्मा स्वरूपं येषां ते तथा दन्ताद्युक्तसुप्रसिद्धतत्तत्स्थानजन्यस्वरूपा इत्यर्थः । **स्थानेति** । स्वस्थानैकजन्यत्वरूपसौन्दर्यत्वलक्षणसाधर्म्येणेति यावत् । सततं कविना पद्यादिनिबद्धत्वेन निरन्तरमित्यर्थः । ललितास्तत्रापि रसाद्यनुकूलत्वेन सुन्दराः सन्ति तर्हि सः श्रुत्यनुप्रास एव भव-

**वागर्थावृत्तिके लाटानुप्रासो भेदसंमतेः।**
**बाले बालेन्दुभस्मेरे स्मेरेणाक्ष्णावलोकय ॥ ४ ॥**

तीति योजना। अत्र तृतीयचरण एवोदाहरणम्। सर्वेषामपि तद्वर्णानां दन्त्यत्वात्। लृतुलसानां दन्ता इति दन्तस्थानस्था एव तत्र सततं ललिताः सन्तीति वर्णाः स्पष्टा एव। अत्र अकुहविसर्जनीयानां कण्ठ इति स्वोदाहृतसुप्रसिद्धस्थानक्रमं विहाय तवर्गीयवर्णोदाहरणं तु दर्पणेष्टे तालुरदादिक इति माधुर्याधिक्यादेव। तदुक्तं साहित्यदर्पणे—'उच्चार्यते यदेकत्र स्थाने तालुरदादिके। सादृश्यं व्यञ्जनस्यैतच्छ्रुत्यनुप्रास उच्यते'। उदाहरणम्–'दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः। विरूपाक्षस्य जयिनीस्ताः स्तुवे वामलोचनाः'। अत्र जीवयन्ति जयिनीरिति। अत्रच जकारयकारयोरेकस्थाने तालावुच्चार्यत्वात्सादृश्यम्। एवं दन्त्यकण्ठ्यानामप्युदाहार्यम्। एष सहृदयानामतीव श्रुतिसुखावहत्वाच्छ्रुत्यनुप्रास इति। पक्षे यदि द्विजादीति।·आदिना शूद्रः। एतादृशाः वर्णाः प्रसिद्धा एव ब्राह्मणादयश्चत्वारः। स्थानेति गङ्गादिनदीप्रवाहागमनोर्ध्वोदगादिदिगर्वागाद्यनुक्रमनिवासस्थानोत्तमोत्तमोत्तममध्यमाधमत्वरूपसाम्येनेत्यर्थः। सततं ललिताः सन्ति तर्हि सः देशः। श्रुतीति। श्रुत्यनुसारेणैव प्रकर्षेणासनमवस्थानं यस्यैतादृगित्यर्थः ॥ ३ ॥ एवमेव लाटानुप्रासमपि मंमटभट्टादिसंमतं लक्षयति—**वागर्थेति**। वागर्थयोः सार्वांशिकसाम्येनावृत्तिः पौनः पुन्येन कथनं यस्मिन्काव्ये तत्रेत्यर्थः। **भेदेति**। अनन्वयभेदस्यैव संमतत्वेन हेतुनेति यावत्। **लाटेति**। लाटदेशीयजनमनोरञ्जकत्वात्तन्नामत एवासौ प्रचुरप्रसिद्धो भवतीति भावः। तमुदाहरति—बाल इत्याद्युत्तरार्धेनैव। बाल इति बालचन्द्रनिभः अवश्यदर्शनीयत्वात्सूक्ष्मत्वाच्च स्मेरो मन्दहासो यस्याः सा तथा तत्संबुद्धावित्यर्थः। स्मेरेण सुप्रसन्नेन। एकवचनं तु कटाक्षनिरीक्षणाभिप्रायकमेव। मां त्वत्प्राणेशमिति शेषः। तत्र प्रयोजनापेक्षायां तत्र पुनः पूर्वार्धं योजयति—**वागित्यादिश्लेषेण**। वागर्थयोरिव यत्संमेलनं 'स भूरिति व्याहरत्। तेन भुवमसृजत' इति। 'तस्माद्वा एतस्मादात्मन आकाशः सभूतः' इति च श्रुतेर्वाक्प्राधान्येनार्थप्राधान्येन वा सृष्टिदर्शनाद्विपरीतसुपरीतान्यतरसुरतमित्यर्थः। तस्य या आवृत्तिः पौनःपुन्येनानुष्ठानं तेन कर्मैहिकं पारत्रिकं च सुखं यस्याः सकाशात्सा तथा तत्संबुद्धावित्यर्थः। तथाच तैत्तिरीयाः समामनन्ति'प्रजातिरमृतमानन्द इत्युपस्थः' इति। एवं च प्रजातिपदवाच्यपुत्रसंततिद्वारा पितृऋणमोचनतस्तत्प्रसादासादितचित्तशुद्धिद्वारकविवेकादिपरम्परया ज्ञानेनामृतमद्वैतकैवल्यमपि तथा 'सर्वेषामानन्दानामुपस्थ एकायतनम्' इति श्रुत्यन्तरादानन्दश्च त्वदेकायत्त इत्याशयः। एतेनास्यां स्वकीयात्वमेवारुन्धत्यादिवदिति ध्वनितम्। अन्यथोक्तश्रुत्युक्तफलसाकल्यासंभवात्। तस्माद्यत एतादृशी त्वं स्वीयैव भवस्यतः अभेदेति च्छेदः। अभेदस्य द्वैतमिथ्यात्वपूर्वकं ब्रह्मात्मैक्यविषयिणी या सम्यग्दृढापरोक्षत्वादिना अबाधिता

**अक्षरव्रातकावृत्तियमकं यमकं कविः।**
**वर्णी गृही वनी दण्डी साधयन्ति धयन्ति च ॥ ५ ॥**

अप्रतिबद्धा च मतिर्विचारितसद्गुरूपदिष्टस्वशाखोपनिषन्महावाक्यैककरणिका चरमप्रमा तस्या हेतुभूताया इति यावत्। एवं अलाटेत्यत्रापि च्छेदः। अं विष्णुं 'अकारो वासुदेवः स्यात्' इत्यभिधानाल्लात्यात्मत्वेनादत्त इत्यलस्तत्त्वावबोधस्तदर्थमटन्ति तत्तत्तीर्थक्षेत्रशास्त्रादिषु परिभ्रमन्तीति तथा तीव्रमुमुक्षवस्ताननुलक्ष्य प्रकर्षेण तदुद्धारमात्रधिया आसनमवस्थानमेवासः सकलसंप्राप्ताद्वैततत्त्वजिज्ञासूद्धारस्त्वत्प्रसादैकाधीनोऽस्त्यतस्त्वं मानं विहाय सप्रसादं मामवलोकयेत्युत्तरार्धेन संबन्धः। तदुक्तं काव्यप्रकाशे—'शाब्दस्तु लाटानुप्रासो भेदे तात्पर्यमात्रतः'। शब्दार्थयोरभेदेऽप्यन्वयमात्रभेदाल्लाटजनवल्लभत्वाल्लाटानुप्रासः। उदाहरणम् 'यस्य न सविधे दयिता दवदहनस्तुहिनदीधितिस्तस्य' इति। इदमेवार्थसमजातीययमकस्याप्युदाहरणम्। परंतूभयत्रापि नकार उत्तरार्धे यस्य सविधे दयितास्ति तस्य तुहिनदीधितिर्न दवदहनो भवतीति योज्यः। साहित्यदर्पणेऽपि 'शब्दार्थयोः पौनरुक्त्यं भेदे तात्पर्यमात्रतः। लाटानुप्रासः' इत्युक्तः। उदाहरणम्—'स्मेरराजीवनयने नयने किं निमीलिते। पश्य निर्जितकन्दर्पं कन्दर्पवशगं प्रियम्' इति ॥ ४ ॥ एवमेव यमकमपि लक्षयति—**अक्षरेति**। अक्षराणां सस्वरव्यञ्जनानां यो व्रातः समूह एव व्रातकः वाक्यं तस्य या आवृत्तिरन्यूनानतिरिक्तत्वेन पुनरुक्तिर्यत्र तादृशं काव्यं यमकमेतत्संज्ञकं भवतीति लक्षणनिर्देशः। अथैतदुदाहरति—**यमकमित्यादि**ना प्राग्वदेव। एतादृशं यमकं यमयति तदेकचिन्तनेनेन्द्रियाणि नियमयति तदितरविषयेभ्यो व्यावर्तयतीति यथा स्यात्तथेत्यर्थः। एवंप्रकारेण कविः काव्यकर्ता, पक्षे अक्षरेति। अक्षराणां 'अग्निमीळे पुरोहितम्' इत्यादीनां 'इषेत्वोर्जेत्वा' इत्यादीनां च वेदवर्णानां यो व्रातकः सकलस्वशाखालक्षणः सङ्घः तस्य या आवृत्तिः सर्वदा ब्रह्मयज्ञादौ यथाविधिपठणसंततिस्तया ये यमाः 'अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः' इति पातञ्जलसूत्रप्रसिद्धा हिंसादयो निवृत्तिधर्मास्तैर्यत्कं सुखं तदित्यर्थः। यमकं यमनमेव यमकं वेदाभ्यासजन्या हिंसादिनिवृत्तिधर्मपरिपाके तदितरविषयपारवश्यनिरसनपूर्वकं यथा भवति तथेति यावत्। ईदृक्प्रकारेण वर्णी ब्रह्मचारी। पक्षे अक्षरेति। 'अक्षरमम्बरान्तधृतेः' इति पारमर्षसूत्रात्। 'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनणु' इत्यादिश्रुतेश्च अक्षरस्य अद्वैतब्रह्मण एव ये व्राताः अस्मदाद्यदृष्ट्या तत्र कल्पितजन्यजगदभिन्ननिमित्तकारणत्वप्रयोजकानादिभावरूपमूलज्ञानं तेन ये व्राताः सूर्यादिदेवगणास्तेषां कं सुखं येभ्यस्ते तथा एतादृशः ये यावत्काम्यनिषिद्धवर्जनपूर्वकं यावन्नित्यनैमित्तिकप्रायश्चित्तानि तेषां या आवृत्तिः पौनःपुन्येन फलाभिसंधिकर्तृत्वाभिमानराहित्येन यदनुष्ठानं तेन ये यमाः अहिंसादयः प्रागुक्ता एव तैर्यत्कं सुखं तदित्यर्थः। एतादृशं यमकं यथा स्यात्तथेत्यादयग्रे

**एकस्यां चेत्क्रियायां स्युः कर्तारो बहवो यदि।**
**नञाऽन्विता अपि प्रेष्ठं तत्तादृग्द्रौपदीशवत्॥ ६॥**

सर्वपक्षेषु प्राग्वदेवेति यावत्। एवरीत्या गृही गृहस्थ इत्यर्थः। तथा पक्षे अक्षरेति प्राग्वदेव। वनी वानप्रस्थ इत्यर्थः। तन्नित्यादिकर्मणां गृहस्थतोऽविशेषात्। तथा। पक्षे अक्षरेति। अक्षरे अद्वैतब्रह्मणि व्रातकस्य समुदायात्मकस्य द्वैतस्य या अवृत्तिरविद्यमानत्वं तद्विषयको यो यमश्चित्तनियमनं वेदान्तश्रवणादिना ब्रह्मात्मैक्यविषयकं निदिध्यासनं तेन यत्कं सुखं तदित्यर्थः। यमकमिति क्रियाविशेषणं तूक्तार्थमेव। एवंप्रकारतः दण्डी एकदण्डी परमहंससंन्यासी चेति यावत्। साधयन्ति निरुक्तसुखानि संपादयन्ति तथा धयन्ति तद्रसानप्यास्वादयन्तीत्यन्वयः। तदुक्तं चन्द्रालोके—'आवृत्तवर्णस्तबकं स्तबकन्दाङ्कुरं कवेः।' कवेः कविसंबन्धिनः। स्तवेति। बवयोः सावर्ण्यात्स्तुतिरूपकन्दाङ्कुरं तत्पोषकारणमस्तीत्यर्थः। इदं हि वक्ष्यमाणयमकस्योदाहरणमपि माधुर्यमाधुर्येतिवत्। 'यमकं प्रथमाधुर्यमाधुर्यवचसो विदुः' इति। प्रथमाः प्राचीनाः कवय इत्यर्थः। शिष्टं तु स्पष्टार्थमेव। यथावा मदीयप्रियव्रतचरितचन्द्रिकायां 'सा कविता सा वनिता नैव यतः शक्यते दृगपनेतुम्।' पुनः सेति। अर्धसमजातीयकं यमकमिदम्॥ ५॥ नन्वेकवचनान्ते कर्तृपदे बहुवचनान्तमाख्यातमख्यातमेवेति चेन्न। आर्षपौरुषोदाहरणेषु तादृक्प्रयोगदर्शनान्यथानुपपत्त्या नियमविशेषस्यैव तत्र हेतुत्वादित्याशयं विशदयति—**एकस्यां चेदिति**। एकस्यां क्रियायां बहव एव कर्तारः अन्विताः स्युश्चेत् यदि वा नञाऽपि अन्विताः एकस्यां क्रियायां बहवः कर्तारः स्युस्तथापि तन्निरुक्तक्रियावाचकमाख्यातमित्यर्थः। तादृगेव बहुवचनान्तमेव। प्रेष्ठं प्रकर्षलक्षणनैयत्येनैव विदामभिमतमस्तीत्यन्वयः। ननु किमत्र मानमित्याशङ्क्य सर्वप्रमाणमूर्धन्यार्षादितादृक्प्रयोगसंदर्शनान्यथानुपपत्त्यनुग्राहकमनुमानं सूचयंस्तत्साधकं दृष्टान्तं स्पष्टयन्समाधत्ते—**द्रौपदीशवदिति**। द्रौपद्या एव धर्मादिपञ्चभर्तृकता महाभारतप्रसिद्धैव तद्वदिति यावत्। अयं भावः। द्रौपदीपाणिग्रहणलक्षणा क्रिया तावदेकैवेति निर्विवादमेव। परंतु तत्र कर्तारो धर्मराजादयः पञ्चेति बहव एव आसन् तद्वत्ते तस्याः प्राथमिकसुरतसमारम्भकालावच्छेदेन लज्जातिरेकस्वाभाव्यात्तदुच्चारितनकारशक्यनिषेधविषयतावच्छिन्ना अप्यभवन्। तेन तद्गर्भाधानं धर्मराजादिबहुकर्तृकमेव यथा लोके शास्त्रे च सुप्रसिद्धमेव। तद्वत्प्रकृते तावत्पूर्वपद्ये साधनादिरूपायामेकस्यामेव क्रियायां कव्यादयः पञ्चाप्यन्विताः प्रत्येकमेकवचनान्ता एव सन्ति तेन तत्र साधयन्तीत्यादिबहुवचनान्तमाख्यातमत्युचितमेव विरचितमस्तीति। एवं वक्ष्यमाणार्षोदाहरणेषु तावदेकस्यामेव क्रियायां कर्तारः प्रत्येकमेकवचनान्तास्तथा नञा तत्पर्यायीभूतेन नकारेणापि प्रत्येकमन्विताः सन्ति तत्र बहुवचनान्तानि क्रियापदान्यपि समुचितान्येव। एकक्रियान्वयित्वस्य नकारान्वितत्वेपि तुल्यत्वात्तस्यैवोक्तनियमसा-

धकत्वाच्च। तथाचात्रायं प्रयोगः। एकवचनान्तपदवाच्यबहवः कर्तारः बहुवचनान्ताख्यातवन्तः एकफलोपधायकत्वलक्षणैकक्रियान्वयित्वात् द्रौपदीशवदिति। द्रौपद्यास्तावदीशेषु भर्तृषु धर्मभीमार्जुननकुलसहदेवेषु यथा एकक्रियान्वयित्वं द्रौपदीसंभोगसंपादनलक्षणाद्वितीयव्यापारपरत्वं यतो वर्तते अतः धर्मः भीमः अर्जुनः नकुलः सहदेव इत्येकवचनान्तपदवाच्यबहुषु कर्तृषु विजहुरिति बहुवचनान्ताख्यातवत्त्वमपि वर्तत एवेति व्याप्तिग्रहः सुग्रह एव सूक्ष्मधियाम्। यदि ते एकवचनान्तपदवाच्या बहवः कर्तारो न बहुवचनान्ताख्यातवन्तः स्युस्तर्हि एकक्रियान्वयिनोऽपि न स्युरित्याद्यनुकूलतर्कसत्त्वान्नेदमसदनुमानम्। नचेदं विजहुरिति बहुवचनान्ताख्यातवत्त्वं पाण्डवेष्वेकवचनान्तपदवाच्येष्वेकक्रियान्वयित्वहेतुना कपोलकल्पितमिति सांप्रतम्। महाभारत एव दृष्टत्वात्। तथाचोक्तमादिपर्वणि द्रौपदीस्वयंवरे कण्ठत एव—'ततः समाधाय स वेदपारगो जुहाव मन्त्रैर्ज्वलितं हुताशनम्। युधिष्ठिरं चाप्युपनीय मन्त्रविन्नियोजयामास सहैव कृष्णया। प्रदक्षिणं तौ प्रगृहीतपाणी परीणयामास स वेदपारगः। ततोऽभ्यनुज्ञाय तमाजिशोभनं पुरोहितो राजगृहाद्विनिर्ययौ। क्रमेण चानेन नराधिपात्मजा वरस्त्रियास्ते जगृहुस्तदा करम्'। 'पतिश्वशुरता ज्येष्ठे पतिदेवरताऽनुजे। मध्यमेषु च पाञ्चाल्यास्त्रितयं त्रितयं त्रिषु। कृते विवाहे तु ततस्तु पाण्डवाः प्रभूतरत्नामुपलभ्य तां श्रियम्। विजह्रुरिन्द्रप्रतिमा महाबलाः पुरे तु पाञ्चालनृपस्य तस्य ह' इति। अत्र युधिष्ठिरमित्याद्येकवचनान्तपदवाच्यपक्षसारूप्यम्। विजह्रुरिति बहुवचनान्ताख्यातवत्त्वसाध्यसारूप्यम्। पाण्डवाः 'प्रभूतरत्नामुपलभ्य तां श्रियम्' इत्येकक्रियान्वयि हेतुसारूप्यमपि दृष्टान्ते स्पष्टमेव। तस्माद्युक्तमेवोक्तानुमानादीति दिक्। ननु यदर्थमेतावानायुष्मतः प्रयासः कानि तान्यार्षमानुषोदाहरणान्येवादाविति चेच्छृणु। 'न क्रोधो न च मात्सर्यं न लोभो नाशुभा

१ अयं श्लोकस्तु रत्नगर्भाख्यभारतटीकापाठे लिखितोपि तत्र नैव व्याख्यातश्चतुर्धरटीकापाठे तु नैव लिखितोपि लोके कालिदासं प्रति व्यासकाश्यां समस्यात्वेन प्रसिद्ध इति प्रक्षिप्त एव ममावभाति। तथाहि। लोके ह्येवं किंवदन्ती शिष्टैरैतिह्यत्वेनोच्यते—'भोजनृपः काशीयात्रार्थं सकालिदास एव गतः स नायातः पुनः परावृत्तो व्यासकाशीदर्शनाय मार्गवशादेवायातस्तत्र तु व्यासप्रतिमा पाषाणमयी केनचित्स्थापिता सेति तां पृथूदरां करतः कालिदासः परामृशन् 'द्रोणं च भीष्मं च जयद्रथं च' इत्यादिप्रयोगकरणात् व्यासश्चकारकुक्षिरेवेति पिचण्डिल इति कवित्वगर्वाद्यदोपजहास तदैव तद्धस्तस्तत्र संलग्नोऽभूत्। अनन्तरं तद्राज्यन्त्ययामे कश्चिद्ब्राह्मणस्तमुपेत्य पप्रच्छ—किमिति त्वमत्र कोऽसीति' तदुत्तरं तद्वृत्तं श्रुत्वा 'त्रितयं त्रितयं त्रिषु' इति समस्योक्ता। अथ कालिदासेन 'पतिश्वशुरता ज्येष्ठे पतिदेवरताऽनुजे। इतरेषु च पाञ्चाल्या' इति त्रिपाद्या तत्पूरणे कृते तद्धस्तः सुनिर्मुक्तः सच ब्राह्मणोऽन्तर्हितोऽभूदिति। तदयं श्लोकः प्रक्षिप्त एवेति ध्येयं धीरैः सुधीभिरिति दिक्।

मतिः। भवन्ति कृतपुण्यानां भक्तानां पुरुषोत्तमे' इति विष्णुसहस्रनामफलश्रुतौ नञ्प्रतिरूपनकारघटितैकैकवचनान्तबहून्कर्तृनेकक्रियान्वितानुद्दिश्य बहुवचनान्ततदाख्यातविधानं सुप्रसिद्धमेव। अत्रहि श्रीमद्भगवत्पादीयं भाष्यमिदं 'न क्रोधो न लोभो नाशुभेति अकारानुबन्धरहितेन नकारेण समस्तं पदत्रयम्। अक्रोधादयो भवन्ति मात्सर्यं च न भवतीत्यर्थ इति। एवं दशमस्कन्धपूर्वोत्तरार्धयोरपि क्रमात् 'नेमं विरिञ्चो न भवो न श्रीरप्यङ्गसंश्रया। प्रसादं लेभिरे गोपी यत्तत्प्राप विमुक्तिदात्' इति। 'न प्रद्युम्नो नानिरुद्धो न रामो न च केशवः। शेकुर्यस्य परित्रातुं कोऽन्यस्तदवितेश्वरः' इतिच। नचात्र त्वदुदाहृतभाष्य एव अक्रोधादयो भवन्ति मात्सर्यं च न भवतीत्युक्तयोक्तस्थले तावदेत इत्यध्याहार एव तत्सम्मत इति वाच्यम्। तत्तात्पर्यस्य त्वयाद्याप्यज्ञातत्वात्। तथाहि तदाशयस्तु नच मात्सर्यमित्यत्र चकारेण व्यवधानान्न क्रोधो न लोभो नाशुभेत्यादिप्रयोगत्रयेऽपि अकारानुबन्धविधुरत्वान्नञ्भिन्नेन नकारेणैव 'शैलवृक्षावगौ नगौ' इत्यमरोक्तेर्नगादिवत्समस्तत्वमभिप्रेत्य अक्रोधादयो भवन्तीत्युक्तं परंतु तत्र तथा वक्तुमशक्यत्वादेकक्रियान्वयित्वेऽपि किंचिद्विजात्यादगत्यैव मात्सर्यं च न भवतीत्येकवचनान्ताख्यातमध्याहृत्य भिन्न एवान्वयः कृत इति। नैतावतोक्तव्याप्तिभङ्गो भवति। अथ 'नेमं विरिञ्च' इत्यत्रतु विरिञ्चश्चतुराननाख्यः ना। 'स वै शरीरी प्रथमः स वै पुरुष ईश्वरः। आदिकर्ता स भूतानां ब्रह्माग्रे समवर्तत' इति स्मृतेः 'पुरुषाः पूरुषा नरः' इत्यमराच्च पुरुष इत्यर्थः। तथा न भवः न विद्यते भवः उत्पत्तिः संसारो वा यस्य स शिव इत्यर्थः। तथा अङ्गसंश्रयात्पत्नीत्वेनाङ्गसङ्गिन्येतादृक् श्रीरपीत्याद्यन्वयं प्रतिबन्धकाभावादेकस्यामित्याद्युक्तनियमः सुघट एव। एवं 'न प्रद्युम्नो नानिरुद्धो न रामः' इति पदत्रये तु नग इत्यादिवदेव समासे प्रद्युम्नत्वादिवीर्याभावादभिप्रेत्य यस्य परित्रातुं न शेकुस्तथा चकारेणाप्यर्थकेन केशवोऽपि यस्य परित्रातुं न शशाकेति निरुक्तभाष्यवदगत्यैवैकवत्वेनान्तविभक्तिविपरिणामं कृत्वा कोऽन्यस्तदवितेश्वर इति चरमचरणेनान्वयः कार्य इति तात्पर्यम्। यद्वा असौ प्रद्युम्नः न किंतु प्रद्युम्न एवेति काकुरेव त्रिष्वपि परंतु चोवधृतौ। यस्य परित्रातुं नैव शेकुः कोऽन्यस्तदवितेश्वर इति नञं विनापीदं तत्। पौरुषोदाहरणं तु कुवलयानन्दकारिकाकारैः श्रीमदप्पय्यदीक्षितैः समुच्चयालंकारात्मना प्रोक्तम्—'अहंप्राथमिकाभाजामेककार्यान्वयेऽपि सः। कुलं रूपं वयो विद्या धनं च मदयन्त्यमुम्' इति। इहाप्युक्तनियमः सरल एवेति संक्षेपः। एवमेवोपपादितं व्युत्पत्तिवादे गदाधरभट्टाचार्यैः—आख्यातद्विवचनबहुवचनयोस्तु संख्याबोधकत्वमावश्यकं चैत्रो मैत्रश्च गच्छतः। चैत्रो मैत्रो देवदत्तश्च गच्छन्तीत्यादौ। 'चन्द्रे कलङ्कः सुजने दरिद्रता विकासलक्ष्मीः कमलेषु चञ्चला। मुखाप्रसादः सधनेषु सर्वदा यशो विधातुः कथयन्ति खण्डितम्' इत्यादौ च द्वित्वबहुत्वबोधकसुपोऽभावात्। नच तत्र सुबेकवचनस्यैव द्वित्वबहुत्वादौ लक्षणाऽस्तिव-

**ननु यत्पूर्वपद्येऽत्र प्रोक्तं तच्चार्वथापि यत् ।**
**नञाऽन्विता अपीत्युक्तं कोऽर्थोऽत्रापेरिहोच्यते ॥ ७ ॥**

---

विवाच्यम् । आनुशासनिकातिरिक्तार्थे सुब्विभक्तेर्लक्षणाया अनभ्युपगमात् । अन्यथा चैत्रो मैत्रश्च गच्छत इत्यादाविव च्छन्दसि लक्षणयैव स्वादिना द्वित्वादिबोधनसंभवात् । औजसादिरूपादेशिस्मृतिद्वारा द्विविधबोधनिर्वाहाय च्छन्दसि 'सुपां सुः' इत्यादिसूत्रेण औजसादिस्थाने स्वाद्यादेशस्य वैयर्थ्यात् । चैत्रादिपदोत्तरैकवचनस्य द्वित्वादिलाक्षणिकत्वे तदप्रकृत्यर्थमैत्रादिसाधारणद्वित्वादिबोधे च उक्तव्युत्पत्तिविरोधेनानुपपत्तिश्च' इति । नन्वत्र भवदभिमतांशस्तावदेकस्यां क्रियायामेकवचनान्ता बहवः कर्तारस्तात्पर्यतः समन्विता यत्र विवक्षिताः सन्ति तत्राख्यातं बहुवचनान्तमेव नियतमिति नतु तादृगार्षपौरुषप्रयोगस्थलेऽप्येतदादिपदाध्याहारोऽपीत्यत्र संमतित्वेन व्युत्पत्तिवादग्रन्थोऽयं समुदाहृतोऽस्त्याख्यातद्विवचनेत्यादिरुक्तव्युत्पत्तिविरोधेनानुपपत्तिश्चेत्यन्तस्तत्र किमागतमिति चेदाकलयैतत्तात्पर्यम् । आख्यातद्विवचनबहुवचनयोस्तु संख्याबोधकत्वमावश्यकमिति प्रतिज्ञाय चैत्रो मैत्रश्च गच्छतः । चैत्रो मैत्रो देवदत्तश्च गच्छन्तीत्यादाविति हेतुत्वेन वाक्यद्वयं स्वयं प्रयुक्तम् । तेन विभक्त्यर्थीभूतलडागच्छतः गच्छन्तीति च क्रमात् द्वित्वबहुत्वसंख्यावाचके एवाख्याते प्रयुक्ते न तु चैत्रो मैत्रश्च एतौ चैत्रो मैत्रो देवदत्तश्च एते गच्छन्तीत्येतच्छब्दादेः पूर्वपरामर्शकस्य अध्याहारोपि । तत्र प्राचां प्रयोगोऽपि तथा समुदाहारि चन्द्रे कलङ्क इत्यादिपद्यात्मकः । तस्मान्मदभिमतार्थेतात्पर्यकत्वमेवोक्तग्रन्थस्येति सुधीभिरेवावधार्यम् । नच चैत्रो मैत्रश्चैतौ गच्छतः । चैत्रो मैत्रो देवदत्तश्चैते गच्छन्तीत्यध्याहारेणैव निर्वाहे किं बाधकमिति वाच्यम् । गौरवात् । शब्दाध्याहारस्य चार्थाध्याहारस्य चावश्यकत्वादन्यथा शाब्दबोधस्यैवासंभवात् । एवमपि चैत्रो मैत्रश्चेत्यादिवाक्यश्रोतुः करणादिना समुद्बुद्धसंस्कारादेव विनैवाध्याहारं गच्छत इत्याद्येकक्रियान्वयित्वेन नियत एव शाब्दबोधः । उक्तगौरवमप्यङ्गीकुर्वाणं प्रत्यधस्तादेवोक्तं द्वितीयरत्ने । 'घटं गुणं च संपाद्य वाप्याः पेयं जलं ततः । निर्वेधं निकटस्थाया गङ्गायाः को न विरिपबेत्' इति ॥ ६ ॥ एवं विचित्रव्युत्पत्तिनियमश्रवणेनातिहृष्टः शिष्यः शास्त्राद्युक्तस्याव्ययत्वेन प्रसिद्धस्याप्यपिशब्दस्यार्थनिर्णयजिज्ञासुः शङ्कते—नन्विति। यदित्यादिचार्वन्तं सप्रसादं समाधानकथनार्थमेव प्राक्तनग्रन्थाभिनन्दनं अथापीत्याद्युक्तमित्यन्तं निगदव्याख्यातमेव । अत्र अपेः अपिशब्दस्य कोऽर्थः इत्येतत्पर्यन्तमेव प्रश्नपरो ग्रन्थः । अत्र सानुवादमाचार्यः प्रतिजानीते । इहेत्यादिशेषेण । उक्तप्रश्ने विषय इत्यर्थः । उच्यते समाधीयत इति यावत् ॥ ७ ॥

अपिः पदार्थसंभावनेत्यादेः पाणिनेर्गिरः ।
गर्हासमुच्चयप्रश्नशङ्कासंभावनास्वपिः ॥ ८ ॥
इति पञ्चामरस्येष्टा अपेरर्थास्तथैवच ।
अपिः संभावनाप्रश्नशङ्कागर्हासमुच्चये ॥ ९ ॥
तथायुक्तपदार्थेषु कामचारक्रियासु च ।
इति युक्तपदार्थश्च कामचारक्रियापि च ॥ १० ॥
मेदिनीकृन्मतावर्थौ पूर्वस्मादधिकावपेः ।
उदाहरणतः सप्ताप्येतान्स्पष्टं ब्रवीम्यहम् ॥ ११ ॥
परनारीमपि प्रैक्षीर्नरकं किं न यास्यसि ।
अत्र गर्हापिशब्दार्थः स्फुटोऽमरगिरेक्ष्यते ॥ १२ ॥
समुच्चयोऽतः संन्यस्य हरं हरिमपि स्मर ।
अपि किं मामकं रूपमिह प्रश्नोऽस्त्यपेस्तथा ॥ १३ ॥
अपि द्वैतं मृषास्तीदं सत्यमित्यत्र संशयः ।
मुक्तोपि संपतेत्सङ्गात्तरुण्या इह संभवः ॥ १४ ॥
संसारोपि न किं ध्वंस्यो विचारादित्यसौ तथा ।
तत्राद्येऽपिर्विरुद्धेन संबद्धोऽन्यावधारकः ॥ १५ ॥

---

अथैतदर्थप्रमाणान्युपन्यसति—**अपिरित्यादिना** । 'अपिः पदार्थसंभावनान्ववसर्ग[1]गर्हासमुच्चयेषु' इति तत्सूत्रम् । गिर इति पञ्चमी । पाणिनेर्वाग्वशादित्यर्थः । अथैतदेकमूलममरमपि संगृह्णाति—गर्हेत्यर्धेन ॥ ८ ॥ ततः किं तदाह—**इतीति**। तत्र मेदिनीमपि किंचिदाधिक्यात्संगृह्णाति—**अपिरित्यादिना** ॥ ९ ॥ **तथेति** । इतीति मेदिनीसमाप्त्यर्थो निपातः । अथैतदुक्तार्थद्वयं किंपूर्वतोधिकं तत्राह—**युक्तेत्यादिना** ॥ १० ॥ **मेदिनीति** । ननु नैते स्पष्टीभवन्तीत्यत्राश्वासनं प्रतिजानीते—उदाहरणत इत्यर्धेन ॥ ११ ॥ अथ प्रतिज्ञातोदाहरणपूर्वकमुक्तसप्तविधानप्यर्थान् क्रमेण विशदयति—**परनारीमपी**त्यादिना । रे देवदत्तेत्याद्यर्थिकम् । **अपरगिरेति** । य उक्तोस्ति स इति शेषः ॥ १२ ॥ **समुच्चय इति** । अतः यतस्त्वया परनारीक्षणं नरकावहं कृतमत इति संबन्धः । **अपीति** । अपेरर्थ इति शेषः ॥ १३ ॥ **अपीति** । द्वैतं द्वयम् । **मुक्तोपीति** । संभवाख्यो ह्यप्यर्थः प्रकृते द्विविधः स्वविरुद्धस्वाविरुद्धसंबद्धत्वभेदात्तत्रायमाद्य इत्याशयः । ननु स्वविरुद्धसंबद्धे संभवत्वमेवासिद्धं नहि पदार्थत्वेन ह्रदे वह्निमत्त्वं संभवतीति चेन्न । संभवस्य तरुण्यां पुंयोगेन गर्भधारणादेरिव योग्यताया एव विवक्षितत्वात् । तत्रादृष्टादिलक्षणबलवत्प्रतिबन्धकसत्वे कार्याजननस्य प्रकृतेऽपि तुल्यत्वाच्चेति दिक् ॥ १४ ॥ ननु किमत्र मुक्तस्य सङ्गात् पतने प्रतिबन्धकमिति

---

१ अन्ववसर्गः कामचारानुज्ञेतिसिद्धान्तकौमुदी ।

**कन्दुको हि विरुद्धेन कुड्येन यदि संगतः ।**
**तर्हि द्रुतं परावृत्य तदन्यत्रैव संपतेत् ॥ १६ ॥**
**तद्वन्मुक्ते तरुण्यादेः सङ्गात्पातो य ईर्यते ।**
**स तु तद्भिन्न एव स्यान्मुक्ते दृश्यविमर्दनात् ॥ १७ ॥**
**तन्मुक्तोपीत्यपेर्बोध्यविरुद्धेन युजा भवेत् ।**
**तद्भिन्नेष्वेव सङ्गेन पातनैयत्यबोधनम् ॥ १८ ॥**
**स्ववपोत्खादनेनापि यागः कार्य इतीदृशात् ।**
**वाक्यात्तात्पर्यतोऽप्यर्थः किं नास्त्यन्यावधारणम् ॥ १९ ॥**

चेन्मुक्तत्वमेवेति गृहाण । तच्च मुक्तिरेव साच 'अविद्यास्तमयो मोक्षः साच बन्ध उदाहृतः' इति वार्तिकादविद्या तस्याः प्रध्वंसे तदेकोपादानकस्य दृश्यस्यैव मृषात्वेन पतनजननासंभवादित्यभिप्रायेण स्वाविरुद्धसंबद्धत्वेन द्वितीयसंभवमपेरर्थमुदाहरति—**संसारोऽपीति** । ननु भवत्वेवमथापि मुक्तोपीत्यादौ कथमर्थ इत्यत्राह—**तत्रेति** । **अन्येति** । अन्यः अमुक्तः यः तत्र अवधारकः । परतरुणीसङ्गेनाधःपातनियामक इत्यर्थः । अज्ञस्तूक्तसङ्गात्पतत्येवेति भावः ॥ १५ ॥ नन्वपेः संभवरूपार्थस्थले विरुद्धेनार्थविशेषेण संबद्धत्वे प्रकृतान्यावधारकत्वमुक्तलक्षणं कया युक्त्येत्यपेक्षायां तां संक्षिपति—**कन्दुक इत्यादि**द्वाभ्याम् । लीलया रङ्गविशेषाङ्कितपत्रमात्रनिर्मिताविरुद्धकुड्यव्युदासाय विशिनष्टि—**विरुद्धेनेति** । कन्दुकोऽत्र पुष्पपटादिनिर्मितो लीलागुच्छः ॥ १६ ॥ एवं दृष्टान्तं कथयित्वा दार्ष्टान्तिके योजयति—**तद्वदिति** । उक्तार्थमेवेदमधस्तात्प्रपूर्वपद्यावतरण एव ॥ १७ ॥ फलितमाह—**तदिति** । तत्तस्मात्कारणात् । **मुक्तो**पीत्यपेः 'मुक्तोपि संपतेत्सङ्गात्तरुण्या इह संभवः' इत्यनुपदोक्तोदाहरणगतापिशब्दस्येत्यर्थः । **बोध्येति** । बोध्यं यत्तरुणीसंसर्गकरणकं तस्याः परकीयात्वं चेन्नरकनिपतनं तेन सह विरुद्धो यो यावद्भेदविदलनकृदद्वैतब्रह्मरूपो मुक्तपदशक्यो यावत्प्रारब्धं बाधितत्वेन प्रतिभासमानदृश्यावभासो जीवन्मुक्त इति यावत् । तेनसह या युक्संबन्धः । मुक्तोऽपीत्यादिप्रागुक्तवाक्ये समभिव्याहृतिस्तया करणीभूतयेत्यर्थः । **तद्भिन्नेष्वेवेति** । मुक्तेतरजीवाख्यकर्माधिकार्यवच्छेदेनैवेत्येतत् । सङ्गेन परतरुण्याद्युपलक्षितयावद्विषयाध्यासेन । **पातेति** । निरुक्ताधःपातनियतत्वज्ञापनमेव अपेरर्थः सिद्धान्तितो भवतीति संबन्धः । अत्रेदमनुमानम् । मुक्तोऽपि सङ्गात्पततीत्यपिशब्दः अमुक्तः सङ्गात्पतत्येवेति नियमबोधकः । यद्वा विमतोपिशब्दः तद्भिन्न एवाघातकः । विरुद्धसंगतत्वात् । कुड्यसंसृष्टकन्दुकवत् । अत्र विरुद्धत्वघटितवाक्यविधेयरोधकत्वमेवेति तत्वम् ॥ १८ ॥ नन्विदं लोके शास्त्रे चाप्रसिद्धमेवेत्याशङ्क्य 'प्रजापतिरात्मनो वपामुदखिदत् । तेनायजत्' इत्यादिश्रुतिमूलके आत्मवपोत्खादनेनापि यागः कर्तव्य इत्यादिमीमांसकवाक्ये तत्प्रसिद्धिं बोधयति—**स्वेति** । **अन्येति** । अ.षोमीयादिपशुव-

**यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते।**
**हत्वापि स इमांल्लोकान्न हन्ति न निबध्यते ॥ २० ॥**
**ज्ञानिनामपि चेतांसि देवी भगवती हि सा।**
**बलादाकृष्य मोहाय महामाया प्रयच्छति ॥ २१ ॥**
**इति स्मृतिपुराणादौ विरुद्धार्थेन संगतौ।**
**अपेस्तद्भिन्न एव स्वविधेयार्थावबोधनम् ॥ २२ ॥**
**द्वितीये त्वविरुद्धार्थसंगतापेस्तु संभवः।**
**स्याद्यथाश्रुत एवेह जलक्षिप्तदृषत्समः ॥ २३ ॥**
**अपि वेदं पठेत्यादावपिर्युक्तपदार्थगः।**
**अपिक्रीडार्भकेत्यादौ कामचारक्रियास्वपिः ॥ २४ ॥**
**तेन प्राक्तनपद्येऽपिः समुच्चय इति स्फुटम्।**
**तव चिन्तामणेर्लाभो वराटयमवेक्षतः ॥ २५ ॥**

पोत्खादनेन यागः कार्य एवेति नियमनमित्यर्थः। नास्ति किं अपित्वस्त्येवेति
यावत्। तस्माद्युक्तमेवेदमपि शब्दार्थकथनं कथकानामित्यभिप्रायः ॥ १९ ॥
अत्र श्रीमद्भगवद्वाक्यं मार्कण्डेयपुराणवाक्यं च संवादयति—**यस्येत्यादिद्वा**
भ्याम् ॥ २० ॥ **ज्ञानिनामपीति**। अत्र ज्ञानिशब्दः श्रीभगवद्गीतासु 'ज्ञानी
त्वात्मैव मे मतम्' इत्यादिषु बहुधा ब्रह्मात्मैक्यविषयकसाक्षात्कारवत्येव प्रसिद्ध
इति तत्संकोचेन परोक्षज्ञानिपरत्वेन नेतुमशक्य एवेत्युक्तैव गतिर्युक्तेत्याकूतम्
॥ २१ ॥ एवंच पूर्ववाक्ये तावदेकब्रह्मात्मैक्यसाक्षात्कारशालिकर्तृकतुल्यकालि
कसर्वजीवकर्मकवधक्रियाऽनुपपत्तेस्तद्विधानबोधनाऽसंभवः प्रकृतवाक्ये चापरो
क्षज्ञानिनो ह्यबाधितमायावशेषस्यैवासंभवश्चेति तद्वाक्ययोरन्यथानुपपत्तिरपि प्रकृ
तोपयुक्तैवेति निगमयति—**इतीति**। आदिनात्र 'ब्रह्मापि नरं न रञ्जयति' इ
भर्तृहरिः। संगतौ सत्याम्। **स्वेति**। स्वघटितवाक्येत्यर्थः। सिद्धमिति शेष
॥ २२ ॥ एवं संभवाभिधस्य अपिशब्दार्थस्य पूर्वोक्तरीत्या द्विप्रकारत्वात्प्रथम
प्रकारकार्थकथनानन्तरमवसरप्राप्तं द्वितीयं तत्प्रकारं प्रथयति—**द्वितीये त्विति**
पूर्ववैलक्षण्यार्थस्तुशब्दः। तत्र दृष्टान्तं स्पष्टयति—**जलेति**। जलक्षिप्तदृषद
प्रतिरोधकाभावाद्यथा तदेकाभिघातकत्वं दृश्यते तद्वत्ससारोपि नकिंध्वंसो विच
रादित्यसौ तथेति प्रागुदाहृतेऽत्र प्रतिरोधाभावात्संभवाभिधं यथाश्रुतत्वमेवो
भावः ॥ २३ ॥ इत्थममरसंमतापिशब्दार्थपञ्चकं संप्रपञ्च्याथ तदधिकं मेदिन
संमतमर्थद्वयमुदाहरति—**अपिवेदमिति**। हे अर्भक, त्वं क्रीडापि अनुपन
तत्वाद्यथेच्छं खेलनमपि संपादयेत्यन्वयः ॥ २४ ॥ एवं प्रासङ्गिकं समा
प्राकृतप्रश्नस्य समाधानमभिधत्ते—**तेनेति**। समुच्चये विषये। ननु किमिर
दृक्प्रश्ने त्वयैतावानायासः कृत इत्यत आह—**तवेति**। निरुक्तभगवद्गीता
गतापिशब्दस्वारस्यलाभः सकलशास्त्राविरोधेन तव अपिशब्दार्थसामान्यविषय

**अनेकलिङ्गकोद्देश्येष्वन्त्यलिङ्गं विधायकम्।**
**विद्या वित्तं च वंशोऽपि विफलः सुकृतं विना ॥ २६ ॥**
**उद्देश्यवचनं वा स्याद्विधेयवचनं तथा।**
**आख्यातं सुमतिः श्रीः स्याद्विद्या दाराः स्पृशन्त्यलम् २७**
**स्वपरोद्भासकस्यापि प्रतिबन्धवशात्क्वचित्।**
**परैकभासकत्वं स्यादभ्राच्छादितभानुवत् ॥ २८ ॥**
**विशिष्टवाचके शब्दे विशेष्यांशे विरोधतः।**
**विशेषणैकवाचित्वं पुत्र्यभूदेवमादिषु ॥ २९ ॥**
**गोक्षीराब्धेः शिवगुरुविबुधसहायोऽच्युतः समुद्दध्रे।**
**श्रीकामधेनुसंज्ञं शब्दालंकारदं नवमरत्नम् ॥ ३० ॥**

---

बुभुत्सोश्चिन्तामणिलाभतुल्य एव बभूवेति भावः ॥ २५ ॥ नन्वनेकलिङ्गको- द्देश्येषु विधेयं किंलिङ्गकमित्यत्राह—**अनेकेति**। अत्रान्त्य उद्देश्यो वंश इति पुंलिङ्गक एव शब्दस्तेन विधायकः शब्दो विफल इति तल्लिङ्गक एवेति भावः ॥ २६ ॥ नन्वेवमप्याख्यातं किमुद्देश्यवचनं भवति विधेयवचनं नेत्यत आह— **उद्देश्येति**। तदुभयमप्युदाहरति। **सुमतिरित्या**दिशेषेण ॥ २७ ॥ नन्वेवमपि 'पुत्री जातः शिखी ध्वस्तः' इत्याद्युदाहृत्य पूर्वाचार्यैः 'सविशेषणे हि विधिनिषधौ विशेषणमुपसंक्रामतः सति विशेष्येऽबाधे' इति नान्यं प्रकल्प्य विशेषणीभूत- पुत्रादावेव जातत्वादेरन्वयनियमः स्वीकृतः परं विशेष्यीभूतदेवदत्तादौ तदन्व- यस्य तत्प्रागद्य च वर्तमानत्वादिना बाधितत्वादित्यत्र परं युक्तिः प्रकृतप्रयोगा- न्यथानुपपत्तिभिन्ना कापि नोक्तेत्याशङ्क्य तां सदृष्टान्तं स्पष्टयति—**स्वपरेति**। **अभ्रेति**। स घटादीन्न भासयतीति न किंतु स्वयमेवास्मदादिदृशा न भासत इत्यर्थः ॥ २८ ॥ अथैतद्दार्ष्टान्तिके योजयति—**विशिष्टेति**। यद्यप्ययं न्यायः प्रागेवात्र विवृत एवाथापि तत्प्रकारान्तरमेवेति नैव पौनरुक्त्यमित्यभिप्रायः ॥ २९ ॥ एवं प्रासङ्गिकं समाप्य प्रकरणमुपसंहरति—**गोक्षीरेति**। **शब्देति**। शब्दालंकारसारबोधकमित्यर्थः। पक्षे प्रार्थनाशब्दमात्रश्रवणेन अलंकारं अलंभूषण- पर्याप्तिशक्तिवारणवाचकमित्यमरात्पर्याप्तिकृतिपर्यन्तं यावत्कामितवस्तुप्रदमित्यर्थः ॥ ३० ॥ इति श्रीमत्पदवाक्यप्रमाणक्षीरार्णवविहरणश्रीमदद्वैतविद्येन्दिरारमणष- ट्चपनामकश्रीमन्नारायणशास्त्रिचरणसरोजराजहंसायमानमानसेन मोडकोपाह्वयेन अच्युतशर्मणा विद्यार्थिना विरचितसाहित्यसारव्याख्यायां सरसामोदाख्यायां कामधेन्वाह्वनवमरत्नामोदः संपूर्णः।

---

## रम्भारत्नम् ।

**गुरुवत्करगं कृत्वा शब्दालंकरणं परम् ।**
**सुदृशं स्वात्मरत्यर्थं संदिशामि सुविस्तरम् ॥ १ ॥**
**स्वकीया परकीया च सामान्येति त्रिधा सुदृक् ।**
**सर्वदा पतिमात्रात्मरतिराद्या निगद्यते ॥ २ ॥**

---

अथ ग्रन्थकृद्दशमरत्नमप्सरोवराख्यं नायिकैकनिरूपकत्वेन यथार्थोचितसमाख्यमारिरिप्सुः प्राक्तनरत्नेन सहास्य सांगत्यं सूचयन् सप्रयोजनमभिधेयविधानं प्रतिजानीते—**गुरुवदिति** । अत्राहमित्यध्याहारात्कवावमानित्वादिव्यज्यते । गुरुवदाचार्यतुल्यमित्यर्थः । स हि जिज्ञासोः शब्दालंकरणं शब्दब्रह्मपर्याप्तिसंपादनमिति यावत् । करगं हस्तप्राप्तप्रायं कृत्वा यथा सुदृशमद्वैतात्मतत्त्वविद्यामित्यर्थः । तस्या एव सकलसंविच्छोभनत्वात्सौष्ठवम् । स्वेति । स्वप्रमातुश्चिदाभासस्य य आत्मा वास्तविकस्वरूपः स्वप्रकाशाद्वैतसच्चिदानन्दपरब्रह्मप्रत्यक्कूटस्थः परमात्मा तत्र या रतिः 'आत्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराड् भवति' इति श्रुतेः । 'यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः । आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते' इति स्मृतेश्च तृप्तपर्यायीभूता तदेकाकारवृत्तिरूपा जीवन्मुक्तिरेव तदर्थं तल्लक्षणफलसिद्धये इत्यर्थः । सुदृशं सुष्ठु अप्रतिबद्धापरोक्षलक्षणा या दृक् विचारितसद्गुरूक्ततत्त्वमस्यादिमहावाक्यमात्रकरणकाद्वैतब्रह्मात्मैक्यविषयकदृश्यमिथ्यात्वपूर्वकचरमप्रमानामकब्रह्मविद्यारूपप्रमितिस्तामिति यावत् । एतत्पदस्यावृत्त्यात्र योजनात्परोक्षापरोक्षविद्याद्वयमपि सकलशब्दब्रह्मसारस्याकलनमन्तरा नैव भवतीत्यावेद्यते । परं यावद्भेदवादिविदलनपूर्वकमेव यथा स्यात्तथा तद्वत्सुविस्तरं च संपूर्णप्रकरणाकरपूर्वकमपीत्यर्थः । अधिकारिणं शिष्यं प्रति संदिशति । अविद्यादि यावद्दृश्यबोधेनोपदिशतीति यावत् । पक्षे गुरुर्बृहस्पतिः । पक्षान्तरे गुरुः 'स्यान्निषेकादिकृद्गुरुः' इत्यमरात्पितेत्यर्थः । सुदृगपि दृगुपलक्षितयावद्रूपगुणविशिष्टकन्यैव तामित्यर्थः । **स्वेति** । स्वकीयेन विवाहितनायकेन सह या आत्मनः निजव्यक्तेः रतिः सुरतसंभुक्तिस्तदर्थमित्यर्थः परं उत्कटम् । **शब्देति** । काचकङ्कणादिकमिति यावत् । करगं हस्तनिविष्टं कृत्वा सुविस्तरं यथा लोकशास्त्रविहितवस्त्रालंकारादिप्रदाननानाविधतुर्यघोषलक्षणनिरतिशयमङ्गलविस्तरपुरःसरं यथा भवति तथैव यथोक्तवरं प्रति संदिशति यथाशास्त्रमेव ब्राह्मविवाहेन विनिवेदयतीत्यर्थः । तथैव परं जघन्यहानेनातिरम्यम् । **शब्देति** । निरुक्तानुप्रासादीत्येतत् । करगं हस्तदत्तामिव कृत्वा सुदृशं सकललौकिकरसमुख्यशृङ्गारालम्बनविभावीभूतां स्वकीयां नायिकामित्यर्थः । अतएव निर्भयत्वात् स्वात्मेति च्छेदः । स्वस्य निजस्य आत्मा ब्रह्मानन्दो यथा भवति तथेत्यर्थः । रत्यर्थम् सुविस्तरं परकीयादिहेययथाविधितदुपकरणाद्युपादेयप्राचुर्यपूर्वकं यथा स्यात्तथा अत्र रत्ने संदिशामि चारुनिरूपयामीत्यन्वयः ॥ १ ॥ एवमुक्तरीत्योद्वाहि

तयैव स्त्रिया सह धर्मादिनिखिलपुमर्थसिद्धिर्गृहस्थस्य नत्वन्ययेति निर्णीते कलावत्त्य क्वचिदुद्वाहितास्वपि व्यभिचारो दृश्यत इति कथमादौ धर्मस्यैव सिद्धिः संभवेदित्येतद्विभागज्ञानार्थं तल्लक्षणतस्तद्वानमुपादानं च सूचयन्नादौ सामान्यतः स्त्रीत्रैविध्यमुद्दिशति—**स्वकीयेत्यर्धेनैव** । तदुक्तं दशरूपककारिकाकृता—'स्वान्या साधारणस्त्रीति तद्गुणा नायिका त्रिधा' इति । रसमञ्जर्यामपि नायिका तावन्निरूप्यत इति प्रतिज्ञाय 'सा च त्रिविधा स्वीया परकीया सामान्या च' इति । तत्राद्यां लक्षयति—**सर्वदेत्यर्धेनैव** । क्षणिकरतिस्तु परकीयादेरपीति सर्वदेति । अतएव मात्रच् । आत्मपदं तु रतेर्निरतिशयत्वसूचकोपमानार्थमेव । तथाच निरन्तरनिरतिशयपतिरतिमत्त्वं स्वकीयात्वमिति तल्लक्षणं फलितम् । तदुक्तं साहित्यदर्पणे—'विनयार्जवादियुक्ता गृहकर्मरता पतिव्रता स्वीया' इति । तत्र स्वामिन्येवानुरक्ता स्वीयेति रसमञ्जरीकृत्तल्लक्षणं संक्षिप्योदाजहार च—'गतागतकुतूहलं नयनयोरपाङ्गावधि स्मितं कुलनतभ्रुवामधर एव विश्राम्यति । वचः प्रियतमश्रुतेरतिथिरेव कोपक्रमः कदाचिदपि चेत्तदा मनसि केवलं मज्जति' इति । अत्र कश्चिदिदं पद्यमन्यथा व्याख्याय सामान्यायां तत्प्रसंजयति । तद्यथा—**कुलेति** । कुले पुरुषनिकर एव तद्वशीकारार्थं नताः संकुचिताः भ्रुवो यासां तास्तथेत्यर्थः । अतएव अपाङ्गावध्यपि । अपगतं अङ्गमवयवो यस्य सः अवधिः परिसमाप्तिर्यस्मिन्कर्मणि यथा भवति तथा । विगतनासाद्यवयवपुरुषपर्यन्तमपीति यावत् । नयनयोः नेत्रयोः गतेति गमनागमनकौतुकमिति यावत् । भवतीति शेषः । एतेन वित्तैकोपाधिकरतिमत्त्वं सामान्यवनितालिङ्गं व्यज्यते । अतएव स्मितं मन्दहसितमपि अधरे नीच एव नतु परमोत्तमे । तत्रापि विश्राम्यति स्थिरं भवति नतु ततोऽन्यत्रापि संचरतीत्यर्थः । इदमपि प्राग्वदेव लिङ्गम् । अतएव वच इत्याद्युत्तरार्धेन वचोपि । मूल्यसूचकवित्तविषयकवाक्यमपीति यावत् । **प्रियेति** । विपुलधनदातृत्वेनातिप्रीतिविषयकपुंकरणस्येत्यर्थः । अतिथिरेव तदेकावच्छेदेन क्षणावस्थाय्येवेत्यर्थः । इदमपि पूर्ववदेव । अथैतेनोक्तवाक्यस्य दैवात्प्रत्युत्तराप्रदाने कृते सति बहुधा वित्तलुब्धतया कोपक्रमो नैव जायतेऽथाप्यसौ कदाचिदपि चेत्तदा मनसि केवलमन्तःकरण एव मज्जति । जलधिगतमैनाकवदीषदपि नैव बहिर्वक्रदृष्ट्यादिद्वारा स्पष्टीभवतीति यावत् । एतेनापि तदेव दृढीभवतीति भाव इति । एवंचेदं दुरुदाहरणमेवेति संदूष्यात्र मया त्वेवमुदाहियत इति प्रतिज्ञाय पठति—'पदन्यासो गेहाद्बहिरहिफणारोपणसमो वचो लोकालभ्यं कृपणधनतुल्यं मृगदृशः । निजावासादन्यद्भवनमपरद्वीपतुलितं पुमानन्यः कान्ताद्विधुरिव चतुर्थीसमुदितः' इति । अत्रोच्यते । यथा भानुमिश्रपद्ये त्वया तावदपाङ्गकलाधरेपि पदत्रयान्यथाव्याख्यानेनैवाखिलोपि श्लोकः सामान्यसीमन्तिन्यामतिव्यापितस्तद्वत्तावेकोप्ययं मृगकान्तपदद्वयान्यथाकरणेनैव परकीयायां व्यभिचरति । 'मृग अन्वेषणे' इति धातोर्मृगयति शोधयति स्वजारमिति तथा तादृशी दृग्दृष्टिर्यस्यास्तस्याः सुगूढव्यभिचारि य

**निगूढान्यरतिस्तद्वद्द्वितीया परिकीर्तिता।**
**वित्तैकोपाधिकरतिस्तृतीया जगतीष्यते ॥ ३ ॥**
**नारदेन स्तुते विष्णौ पित्रा चाप्यनुमोदिते।**
**तपः कृत्वैव गौरी तु स्वप्रेयोर्धत्वमप्यगात् ॥ ४ ॥**

---

इति यावत्। यद्यपि पदन्यास इत्याद्यवशिष्टत्रिपादीवर्णितार्थवत्त्वं बहिरस्त्येव तथापि 'कमु कान्तौ' कान्तिरिच्छेति धात्वादेः'कान्तं मनोरमम्'इत्यमराच्च स्वमनोभिलषितपुरुषादेव कान्तपदाभिधेयादन्यः पुमान् चतुर्थीसमुदितः विधुरिव वरदचतुर्थीचन्द्र इवानीक्ष्योऽस्तीति दोषसामान्यादिदमपि तादृगेवेति लयैव ध्येयम्। तथाचोदाहरणद्वयमपि यथाश्रुतरीत्या चारुतरमेवेति दिक्। पक्षे अथोक्तचित्रैविध्यं व्यवहृतयेऽभिधत्ते—**स्वकीयेति**। चेतनजडोभयानुगतिभेदात्। तत्र प्रथमां लक्षयति—**सर्वदेति**। पतिर्दर्दयसत्तादिप्रदः सचासौ मात्रासु विषयेषु आत्मरतिर्यया सा तथा ॥ २ ॥ एवमुद्देशक्रमानुसारेण प्रथमोद्दिष्टां स्वीयां संक्षेपतः संलक्ष्याथ द्वितीयां परकीयां लक्षयति—**निगूढेत्यर्धेन**। अन्यः पतीतरः एवं रतिरपि। तत्र वित्तानौपाधिक्येव। तेन न सामान्यायामतिव्याप्तिः। एतदनुग्राहकमेव निगूढेति। तत्रापि पतितौल्यमेव द्योतयितुं तद्वदिति। एतेन तद्रतेरपि निःसीमत्वं सूच्यते। पक्षे निगूढा अनादिभावरूपाऽवरणपिहिता आत्मरूपा रतिः प्रीतिः 'मुत्प्रीतिः प्रमदो हर्षः' इत्यमरात्प्रत्यगानन्दो यस्यां सा तथेत्यर्थः। तद्वत्प्राग्वदेव द्वितीया परकीया अविद्यादिजडावच्छिन्नचिदिति यावत्। अथ सर्वथैव हानार्थं सामान्यामपि तां लक्षयति—**वित्तैकेति**। सर्वलोकप्रसिद्ध्यर्थं जगतीति। पक्षे वेत्तीति वित् तस्य भावो वित्ता सैव एकः मुख्यः उपाधिः प्रयोजको यस्यास्तादृशी रतिः प्रागुक्तप्रीत्यपरनाम्नी चिद्रूपा मुदेव यस्यां सा तथेत्यर्थः। एवच्च चिज्जडोभयानुगतं बिम्बप्रतिबिम्बानुगतप्रकाशवच्चिन्मात्रसुखमेव ब्रह्मास्तीति परोक्षज्ञानमन्तरा संपूर्णाद्वैतशास्त्रश्रवणं निर्णेतुं नैव शक्यत इति युक्तमेवोक्तज्ञानावस्थाया सामान्यमुद्दक्त्वमित्याशयः। ननु भवत्वेवं बन्धमोक्षादसर्वव्यवहारसिद्ध्यर्थमेव भवता चित्रैविध्यमङ्गीकृतं तथापि जीवेश्वराख्यचेतनावच्छिन्नचित एव कुतः स्वकीयात्वलक्षणं मुख्यत्वमविद्यादिजडावच्छिन्नायास्तस्याः परकीयात्वलक्षणं मध्यमत्वं चेतनजडोभयानुगतत्वावच्छिन्नायास्तस्यास्तु सामान्यात्वलक्षणं जघन्यत्वमिति चेत्सत्यम्। चेतनयोर्जीवेश्वरयोरेव क्रमान्मोक्षफलभाक्त्वनित्यमुक्तत्वादविद्यादिजडस्य तु सर्वव्यवहारनिर्वाहकत्वादुभयानुगतिमध्ये चेतने चित्वेनैवातिशयान्तरासंभवेन जड एव तत्संभवेन खद्योतवत्तदङ्गत्वान्मुख्यत्वादिक्रमादुचितमेवेत्यलं पल्लवितेन ॥ ३ ॥ ननु भवत्वेवं तिसृणामपि लक्षणानि परं त्वत्र भवत्संमतान्युदाहरणानि कानीत्यतः प्रथमायाः 'तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणाम्' इति श्रुतेर्यथाशास्त्रपातिव्रत्ये साक्षात्परम्परया वा ज्ञानोत्पत्तिध्रौव्यमभि-

**निजदर्शनमात्रेण ब्राह्मण्यं ददती सती ।**
**अरुन्धती वसिष्ठान्यं नैव पश्यति कुत्रचित् ॥ ५ ॥**
**इन्द्राग्नियमपाशिष्वप्यात्मप्रेयःसमेष्वपि ।**
**मुख्यमेव नलं वव्रे दमयन्ती गिरेरिता ॥ ६ ॥**
**राधादिरेव लोकेऽस्मिन्भवत्यन्वर्थगोपिका ।**
**सामान्या सा त्वमान्यैव जगति प्रथिता भृशम् ॥ ७ ॥**

---

प्रेत्य देवादिषु त्रिष्वपि तदुदाहरणान्यनुक्रमेणाह—**नारदेनेत्यादि**त्रिभिः । इदमुपाख्यानं शिवपुराणे प्रसिद्धमेव । नारदेन प्रसिद्धेन विष्णौ स्तुते । चोप्यर्थे । पार्वतीयोग्यवरत्वेन हिमाचलनिकटे वर्णिते सत्यपीत्यर्थः । तत्रापि तत्पितुरनुमोदनं नचेत् किं ततस्तत्राह—**पित्रा चापीति** । ततः किं तदाह—**तप इत्याद्युत्तरार्धेन** । गौरी तु इति तुशब्दः सर्वलोकवैलक्षण्यार्थकः । अतएव तप एव कृत्वा स्वेति समाप्त्यवधि यथाश्रुतमेव योज्यम् । एतेन निरतिशयत्वमेव रतौ द्योत्यते । पक्षे कलिसंतरणोपनिषद्रीत्या हरेरामेत्याद्यनुष्टुभोक्तषोडशनामभिर्नारदेन विष्णौ स्तुते तथा तत्पित्रा ब्रह्मणोक्तमन्त्रोपदेष्टृत्वात्तस्मिन्ननुमोदितेऽपि सति गौरी निरतिशयशुद्धसत्त्वात्मकचरमवृत्तिरूपब्रह्मविद्या तु तपः कृत्वैव अहं ब्रह्मास्मीति सविवेचनसप्रज्ञातमभ्यस्यैव प्रेयोधत्वमपि 'तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मा' इति श्रुतेरात्मैकरस्यमभ्यगादित्यन्वयः ॥ ४ ॥ **निजेति** । 'उभयोः संनिधाय शिरसी उदकुम्भेनावसिच्य ब्राह्मण्याश्च वृद्धाया जीवपत्न्या जीवप्रजाया अगार एतां रात्रीं वसेद्ध्रुवमरुन्धतीं सप्तऋषीनिति दृष्ट्वा वाचं विसृजेत जीवपत्नी प्रजां विन्देयेति' इत्याश्वलायनसूत्रे वधूप्रवेशप्रकरण उक्तत्वात् । अरुन्धती निजेति ब्राह्मण्यमिति ब्राह्मणी च ब्राह्मणश्च ब्राह्मणौ तयोर्भावः ब्राह्मण्य ब्रह्मनिष्ठत्वं तद्योग्यतां ददती सती अरुन्धतीत्यादि यथाश्रुतमेव योज्यम् । पक्षे निजेति । अद्वैतात्मसाक्षात्कारैककरणेनैवेत्यर्थः । अरुन्धतीसमाधिवद्वृत्तिरोधमकुर्वाणा ब्रह्मविद्या । **वसिष्ठेति** । परमवरिष्ठाद्वैतात्मभिन्नम् । अपरं तु सरलमेव ॥ ५ ॥ **इन्द्रेति** । गिरा सरस्वत्या । पक्षे दमयन्ती इन्द्रियदमनशीलात्मविद्या । गिरा 'इन्द्र मित्रम्' इत्यादिश्रुत्येरिता सती नल न लाति दृश्यं नैवादत्ते तमद्वैतात्मानमित्यर्थः ॥ ६ ॥ एवं सर्वात्मनोपादेयां स्वकीयां भूर्युदाहृत्यादौ दासान्यविषयां परकीयामुदाहरति—**राधादिरेवेत्यर्धेन** । आदिना तत्सजातीयान्यगोपिका अपि । **अन्वर्थेति** । गोपयतीति व्युत्पत्त्या यथार्थश्रीकृष्णाख्यपरपुरुषानुरागगोपनकर्त्रीत्यर्थः । यथा तदनुरागस्य तद्देशकालावच्छेदेन भगवद्वचोविना नक्कापि प्राकट्यं तथैव तद्वरस्य ताभिः स्वरूपगुणादिना संपादितत्वादिति तत्त्वम् । एतेन व्यासादेरुद्धवादेश्च तज्ज्ञानसत्त्वेपि न क्षतिरित्याकूतम् । पक्षे 'राधसाध संसिद्धौ' इति स्मरणाद्राधयति अविद्यातद्व्याप्यजीवेश्वरादितत्कार्यमाकाशादिव्यावहारिकसत्ताप्नं जडजग-

**स्वीया तु मुग्धमध्याढ्यावस्थाभेदात्तु दृक् त्रिधा ।**
**लतेवाङ्कुरतः पुष्पात्फलाच्चात्मरतेरपि ॥ ८ ॥**

ज्जालं सत्ताप्रकाशवत्तया साधयतीति तथा । आदिना शुक्तिरजतादिप्रातिभासिकसत्ताप्रकाशसाधिका चिदेव ग्राह्येत्याशयः । गोपनं त्वत्र तस्याधिष्ठानतत्वावधृतिमृतेऽमिथ्यार्थत्वसंप्रथनमेवेति भावः । एवं परकीयामुदाहृत्यावसरप्राप्तां सामान्यां जगत्यमान्यत्वेनैव प्रसिद्धत्वाद्विशेषतोऽनुदाहृत्यैव तामुदाहरति—**सामान्येत्यर्धेनैव** । पक्षे चिज्जडोभयानुगतचिदेव सामान्यसुदृगित्येव प्रागुपन्यस्तं सा तु जगत्यहं भामि घटो भातीत्याद्यनुभवाद्भृशं प्रथितापि विना विचारं चेतनजडानुगततृतीयचित्त्वेनामान्यैवास्तीति संबन्धः ॥ ७ ॥ अथ सिंहावलोकनन्यायेन स्वकीयामेव पुनरनुसंधाय सकलपुमर्थनिधानत्वेन भूरि प्रपञ्चयितुमवस्थामात्रभेदात्तत्त्रैविध्यं विधत्ते—**स्वीयात्विति** । तुशब्दः पूर्ववैलक्षण्यार्थः । आढ्यत्वं प्रागल्भ्यमेव । एवंच स्वीया तु सुदृक् । **मुग्धेत्यादि । आत्मेति** । आत्मवद्या पत्यौ रतिः प्रीतिस्तस्या इत्यर्थः । अपिः संभावनार्थः । 'गर्हासमुच्चयप्रश्नशङ्कासंभावनास्वपि' इत्यभिधानात् । लतेव द्राक्षादिवल्लीव । अङ्कुरतः पुष्पात्फलाच्च त्रिधा त्रिप्रकारा भवतीत्यन्वयः । प्रतिपादितं चेदं **रसमञ्जर्याम्**—स्वकीया तु त्रिधा मुग्धा मध्या प्रगल्भा चेति । सापि कथिता त्रिभेदा मुग्धा मध्या प्रगल्भेति साहित्यदर्पणेपि । अत्र लतादिदृष्टान्तेनाङ्कुरितात्मरतित्वं **मुग्धात्वम्**, पुष्पितात्मरतित्वं मध्यात्वम्, फलितात्मरतित्वं प्रगल्भात्वं चेति तासां लक्षणान्यपि संक्षिप्तानि भवन्ति । अङ्कुरितत्वमपि बलवत्प्रतिबन्धकासत्वेऽवश्यस्वकार्यजननयोग्यत्वम् । एवं पुष्पितत्वेऽपि बोध्यम् । फलितत्वं फलजननशून्यत्वे सति संपूर्णरूपत्वमेव । पक्षे स्वीया तु सदृक् प्रागुपन्यस्तरीत्या चेतनत्वावच्छेदकावच्छिन्ननिष्ठचिद्विषयकचरमप्रमारूपा अद्वैतब्रह्मविद्येत्यर्थः । तुशब्दः पूर्ववैलक्षण्यार्थः । लतेवाम्रादिलतेव । आत्मरतेः । 'आत्मक्रीड आत्मरतिः क्रियावानेष ब्रह्मविदां वरिष्ठः' इति श्रुतेः । 'यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः । आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते' इति स्मृतेश्च सुविचारितस्वशाखीयसद्गुरूपदिष्टब्रह्मात्मैक्यलक्षणार्थविषयकसाक्षात्कारानन्तरमधिकारिणः स्वतो व्युत्थानप्रभृतिलक्षणजीवन्मुक्तेरिति यावत् । अङ्कुरतः स्वतो व्युत्थानशालित्वरूपपञ्चमभूमिकात इत्यर्थः । अपिः समुच्चये । तथा पुष्पात् परतो व्युत्थानशालित्वरूपषष्ठभूमिकात इति यावत् । तथा फलादपि । चोऽप्यर्थे । पुनर्व्युत्थानीभावशालिसप्तमभूमिकात इत्यर्थः । अपिः समुच्चये । क्रमात् **मुग्धेति** । मुग्धा च मध्या च आढ्या प्रौढा चेति मुग्धमध्याढ्यास्ताश्च ता अवस्थाश्चेति तथा तासां यो भेदस्तस्माद्धेतोरिति यावत् । त्रिधा त्रिप्रकाराऽस्तीति संबन्धः । एवंच ब्रह्मविद्या हि पञ्चमभूमावङ्कुरितात्मरतित्वेन मुग्धा षष्ठभूमौ पुष्पितात्मरतित्वेन मध्या सप्तमभूमौ फलितात्मरतित्वेन प्रगल्भा च स्वीयेव त्रिधा त्रिप्रकारा भवतीति भावः ॥ ८ ॥

श्रुत्यन्तेनापि स द्रष्टुं प्रेयांसं संकुचत्यलम्।
हृदयं नित्यसद्वृत्तवृद्ध्या मेरुत्वमीहते ॥ ९ ॥
प्रेयसा सुमनःशय्यां हातुं व्युत्थाप्यते पिकैः।
परमानन्दसंदोहसोल्लासालिङ्गनादियम् ॥ १० ॥
काम्बरादि क हारादि क स्वयं क च स प्रियः।
अद्वैतपरमानन्दात्सैकतानत्वमागता ॥ ११ ॥
विद्या भूमिर्हिरण्यं च पशुर्धान्यममत्रकम्।
मित्रादिः सप्तधेत्यर्थः संग्रहावनवर्धनैः ॥ १२ ॥

---

एवं लक्षितासु मुग्धादितिसृष्वपि स्वीयावस्थास्वथ ताः क्रमादुदाहरति—**श्रुत्यन्तेनापीत्यादि**क्रमात्त्रिभिः। तत्राङ्कुरितात्मरतिर्मुग्धेत्येतन्मतं तल्लक्षणम्। प्राचां तु अङ्कुरितयौवना मुग्धेति। अतएव सा स्वीया सुदृगिति सर्वत्रानुकृष्य योज्यम्। प्रेयांसं निरतिशयस्वप्रेमपात्रीभूतं स्वपतिमपीत्यर्थः। श्रुत्यन्तेनापि कटाक्षतोऽपीत्येतत्। एवं चात्र संपूर्णदृष्टिस्तु दूरतोपास्तेति फलितम्। तेन लज्जातिशयो व्यज्यते। संद्रष्टुं सम्यगवलोकितुम्। अलं अत्यन्तं नतु यत्किंचित्। संकुचति मुकुलिताक्षी भवतीत्यन्वयः। ननु कामोदयाभावे रहस्यप्येतद्व्रीत्यादिना संभवत्येवेत्यत आह—**हृदयमिति**। अस्या इत्यार्थिकम्। लाक्षणिकमिदं तज्जनुषोः स्तनयोरित्याकूतम्। तेन तयोर्निरवकाशत्वेनातिपीनत्वयोग्यता ध्वन्यते। अतएव नित्येत्यादि। ईहते इच्छति। पक्षे श्रुत्यन्तो वेदान्तः। हृदयं चेतः। मेरुत्वमचलत्वम्। एतेन स्वतो व्युत्थानवती पञ्चमी भूमिः सूच्यते॥९॥**प्रेयसेति**। अत्र 'पुष्पितात्मरतिर्मध्या' इति स्वसमतं मध्यालक्षणं 'समानलज्जामदना मध्या' इति प्राचाम्। प्रेयसा स्वप्रीतिविषयतापन्नस्वपतिनापि सहेत्यर्थः। सुमनःशय्यां अर्धोन्मीलितमालतीमुकुलतल्पमपीत्यर्थः। हातुं त्यक्तुं। परमेति क्रियाविशेषणमिदम्। अतएव सोल्लासेति। प्रेयस इति शेषः। अथापि इयं कैरपि व्युत्थाप्यते। अपितु कैरपि नैव व्युत्थाप्यते सखीजनैरपि। किंतु ब्राह्मे मुहूर्ते स्वयमेव व्युत्तिष्ठतीत्यर्थः। पक्षे इयं प्रकृतब्रह्मविन्मतिः। शिष्टमुत्तरार्धं यथाश्रुतमेव। आलिङ्गनं परं निर्विकल्पसमाधिकालिकमद्वैतात्मतादात्म्यमेव। अतएव प्रेयसा निरुक्तात्मना सह सुमनःशय्यां शुद्धचित्तशयनीयम्। हातुं त्यक्तुम्। पिकैः अरण्ये प्रातः कूजद्भिः कोकिलैरेव व्युत्थाप्यत इति संबन्धः। एतेन परतो व्युत्थानादियं षष्ठभूमिरिति द्योत्यते ॥ १० ॥ **केति**। अम्बरं परिहितशाटी। आदिना कञ्चुकी। सा प्रकृता प्रगल्भा स्वीया। **अद्वैतेति**। मिथुनीभावेत्यर्थः। पक्षे अम्बराद्याकाशादि। हारादि शिवभक्तादि। तेन सप्तमीयम् ॥ ११ ॥ नन्वेवमपि निरुक्तलक्षणा स्वकीयैवादौ परिणयैकसाध्या सच लोके प्रायोर्थं विना नैव सिध्यतीति चेत्सत्यम्। अतएवोक्तं वात्स्यायनसूत्रे—'शतायुर्वै पुरुषो विभज्यकालमन्योन्यानुबद्धं परस्परस्यानुपघातकं त्रिवर्गं सेवेत। बाल्ये विद्याग्रहणादीनर्थान्कुर्यात्।

श्रोत्रादीष्टाप्तितस्तृप्तिः कामः सामान्यतो मतः ।
या तु स्पर्शविशेषेण प्राधान्यात्स तथा मतः ॥ १३ ॥
हस्तगस्यापि धान्यस्य भुवि त्यागोऽभिवृद्धये ।
दृष्टो वृष्ट्यादिसामर्थ्यात्तस्माद्धर्मं समाचरेत् ॥ १४ ॥
कामाद्रुद्रादिनाशस्तु धर्मप्रत्यर्थिनोऽभवत् ।
धर्माविरुद्धः कामस्तु श्रुतिस्मृत्योर्विमुक्तिदः ॥ १५ ॥

---

अर्थं कामं च यौवने । स्थाविरे धर्मं मोक्षं च । अनित्यत्वादायुषो यथोपपाद्यं वा सेवेतेति । विद्याग्रहणादीनित्यादिपदाभिप्रेतमपि तत्रैव । 'विद्याभूमिहिरण्यपशुधान्यभाण्डोपस्करमित्रादीनामर्जनमर्जितस्य च रक्षणं रक्षितस्य विवर्धनमर्थः' इति। एतेन सप्तविधस्यार्थसंज्ञकपुमर्थस्यापि स्वरूपमुक्तमित्यभिप्रेत्याह—**विद्येति** । मित्रादीत्यत्रादिना । 'अत्यागसहनो बन्धुः सदैवानुगतः सुहृत् । एकक्रियं भवेन्मित्रं समप्राणः सखा मतः' इत्यन्यत्रोक्तलक्षणबन्ध्वादय एव ॥ १२ ॥ एवं क्रमागतं काममपि सामान्यविशेषाभ्यां लक्षयति—**श्रोत्रादीति** । आदिना त्वगादिज्ञानेन्द्रियाण्येव । **यात्विति** । तुशब्दः पूर्ववैलक्षण्यार्थः । स्त्रीपुंसयोः परस्परं स्पर्शविशेषेण या तृप्तिः स तु प्राधान्यात्तथा कामाख्यपुरुषार्थत्वेन मतः प्राचीनाचार्यसंमतोऽस्तीति योजना । एतदप्युक्तं कामसूत्रएव—'श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानामात्मसंयुक्तेन मनसाधिष्ठितानां स्वेषु स्वेषु विषयेष्वानुकूल्यतः प्रवृत्तिः कामः । स्पर्शविशेषविषयित्वादाभिमानिकसुखानुविद्धा फलवत्यर्थप्रतीतिप्राधान्यात्कामः' इति ॥१३॥ ननूभयोरप्यनयोर्धर्मैकसाध्यत्वात्स कथं वात्स्यायनीयेऽत्र वार्धक्ये साध्य इति चोक्त इतिचेन्न । तत्रैवाग्रे अनित्यत्वादित्यादिनोक्तपक्षस्य परित्यागादित्याशयेनाह—**हस्तेति** । एतदप्युक्तं तत्रैव 'हस्तगतस्य च बीजस्य भविष्यतः सस्यस्यार्थे भूमौ त्यागदर्शनाच्चरेद्धर्मानिति वात्स्यायनः' इति । अयं भावः । अवग्रहनाशार्थं तत्र कारीर्यां साङ्गायां कृतायां तया तन्नाशतो वृष्ट्या सस्योत्कर्ष इति ॥ १४ ॥ ननु सद्यः स्वपरसंतोषकरत्वेन दृष्टफलत्वादर्थेन काम एव साध्यः किं धर्मेणेत्यत आह—**कामादिति** । अतएवाह वात्स्यायनोपि 'पाक्षिकत्वात्प्रयोगाणामपायानां च दर्शनात् । धर्मार्थयोश्च वैलोम्यान्नाचरेत्पारदारिकम्' इति । नन्वेवं तर्हि 'ऋतौ भार्यामुपेयात्' इत्यादिविधेः का गतिरित्यत्राह—**धर्मेति** । **श्रुतीति** । एवंच तुशब्दः पूर्वार्धोक्तेन्द्ररावणदुर्योधनादीनां अहल्यादिपरकीयाविषयककामवैलक्षण्यार्थः । तेन 'ऋतौ भार्यामुपेयात्' इति श्रुत्या विहितकामस्य स्वकीयाविषयकत्वेन धर्माविरुद्धत्वात्तादृशस्त्वसौ 'प्रजातिरमृतमानन्द इत्युपस्थे' इति तैत्तिरीयश्रुतौ 'धर्माविरुद्धो भूतेषु कामोस्मि भरतर्षभ' इति भगवद्गीतास्मृतौ चानुष्ठातॄणां चित्तशुद्ध्यादिद्वारा विमुक्तिद एवोक्त इत्यन्वयः । तस्मात्स्वकीयाविषयक एव कामो विधिशास्त्रविषयकत्वेन सर्वथा हितैषिभिरुपादेय एव परकीयादिविषयकस्त्वसौ कालत्रयेपि हेय एवेति भावः ॥ १५ ॥

अतएव—**धर्मेति** । धर्मशास्त्रं स्वकल्पसूत्रं तदनुगुणं माधवादिग्रन्थजातमपि । सामुद्रिकमवश्यनिषिद्धवर्ज्यं पुराणादिप्रसिद्धम् । स्त्रीलक्षणशास्त्रं' ज्योतिःशास्त्रं प्रसिद्धमेव विवाहमुहूर्तप्रभृतिपर्यन्तं वधूजन्मकालिकग्रहादिविचारकं स्त्रीजातकशास्त्रं च तैरित्यर्थः । मनोहराम् । रूपलावण्यादिना परिणेतुरन्तःकरणाकर्षणीमिति यावत् । एतादृशीं सुदृशं मृगाक्षीम् । अतएव **धर्मेति** । त्रिवर्गकारिणीमित्यर्थः । सुधीर्वर एवोद्वहेदिति संबन्धः । एतेन नायकस्यापि निषिद्धलक्षणशून्यत्वमावश्यकमेवेति ध्वन्यते । वात्स्यायनीयेऽप्युक्तम् 'सवर्णायामनन्यपूर्वायां शास्त्रतोऽधिगतायां धर्मोऽर्थः संबन्धः पित्रोः पक्षवृद्धिरनुपस्कृता रतिश्च' इति । प्रोद्वाह्यवधूलक्षणं तूक्तं स्कान्दे काशीखण्डे दिङ्मात्रेणात्र संगृह्यते—'उद्वहेत द्विजो भार्यां सौम्यास्यां मृदुभाषिणीम् । नचातिरिक्तहीनाङ्गीं नातिदीर्घां नवा कृशाम् १ नालोमिकां नातिलोमां नास्निग्धस्थूलमौलिजाम् । मोहात्समुपयच्छेत कुलहीनां च कन्यकाम् २ स्त्रीणां पादतलं स्निग्धं मांसलं मृदुलं समम् । अस्वेदमुष्णमरुणं बहुभोगोचितं स्मृतम् ३ रूक्षं विवर्णं परुषं खण्डितप्रतिबिम्बकम्[1] । सूर्याकारं विशुष्कं च दुःखदौर्भाग्यसूचकम् ४ रेखाखुसर्पकाकाभा दुःखदारिद्र्यसूचिका । उन्नतो मांसलोऽङ्गुष्ठो वर्तुलोऽतुलभोगदः ५ वक्रो ह्रस्वश्च चिपिटः सुखसौभाग्यभञ्जकः । विधवा विपुलेन स्याद्दीर्घाङ्गुष्ठेन दुर्भगा ६ मृदवोऽङ्गुलयः शस्ता घना वृत्ताः समुन्नताः । दीर्घाङ्गुलीभिः कुलटा कृशाभिरतिनिर्धना ७ ह्रस्वायुष्या च ह्रस्वाभिर्भुग्नाभिर्भुग्नवर्तिनी । चिपिटाभिर्भवेद्दासी विरलाभिर्दरिद्रिणी ८ परस्परं समारूढा यदाङ्गुल्यो भवन्ति हि । हत्वा बहूनपि पतीन्परप्रेष्या तदा भवेत् ९ यस्याः पथि समायान्त्या रजो भूमेः समुच्छलेत् । सा पांसुला प्रजायेत कुलत्रयविनाशिनी १० यस्याः कनिष्ठिका भूमिं न गच्छन्त्याः परिस्पृशेत् । सा निहत्य पतिं योषा द्वितीयं कुरुते पतिम् ११ अनामिका च मध्या च यस्या भूमिं न संस्पृशेत् । पतिद्वयं निहन्त्याद्या द्वितीया च पतित्रयम् १२ पतिहीनत्वकारिण्यौ हीने ते द्वे इमे यदि । प्रदेशिनी भवेद्यस्या अङ्गुष्ठव्यतिरेकिणी १३ कन्यैव कुलटा सा स्यादेष एव विनिश्चयः । स्निग्धाः समुन्नतास्ताम्रा वृत्ताः पादनखाः शुभाः १४ राज्ञीत्वसूचकं स्त्रीणां पादपृष्ठं समुन्नतम् । अस्वेदमशिराढ्यं च मसृणं मृदु मांसलम् १५ गूढौ गुल्फौ शिवायोक्तावशिरालौ सुवर्तुलौ । समपार्ष्णिः शुभा नारी दीर्घपार्ष्णिश्च दुर्भगा१६ रोमहीने समे स्निग्धे जङ्घे सक्रमवर्तुले। सा राजपत्नी भवति विशिरे सुमनोहरे१७ एकरोमा राजपत्नी द्विरोमापि सुखावहा । त्रिरोमा रोमकूपेषु भवेद्वैधव्यदुःखभाक् १८ वृत्तं पिशितसंमग्नं जानुयुग्मं प्रशस्यते । निर्मांसं स्वैरचारिण्या दरिद्रायाश्च विश्लथम् १९ विशिरैः करभाकारैरूरुभिर्मसृणैर्घनैः । सुवृत्तै रोमरहितैर्भवेयुर्भूपवल्लभाः २० कपित्थफलवद्वृत्तौ मृदुलौ मांसलौ घनौ ।

---

१ 'खण्डितप्रतिबिम्बकं वालुकादावजातचिह्नमिति' ।

स्फिचौ वलिविनिर्मुक्तौ रतिसौख्यविवर्धनौ २१ शुभः कमठपृष्ठाभो गजस्कन्धोपमो भगः। वामोन्नतस्तु कन्याजः पुत्रजो दक्षिणोन्नतः २२ आखुरोमा गूढमणिः सुश्लिष्टः संहतः पृथुः। तुङ्गः कमलवर्णाभः शुभोऽश्वत्थदलाकृतिः २३ भगस्य भालं जघनं विस्तीर्णतुङ्गमांसलम्। मृदुलं मृदुरोमाढ्यं दक्षिणावर्तमीडितम् २४ गभीरा दक्षिणावर्ता नाभिः स्यात्सुखसंपदे। सूते सुतान्बहून्नारी पृथुकुक्षिः सुखास्पदम् २५ समैः समांसैर्मृदुभिर्योषिन्मग्नास्थिभिः शुभैः। पार्श्वैः सौभाग्यसुखयोर्निधानं स्यादसंशयम् २६ उदरेणातितुच्छेन विशिरेण मृदुत्वचा। योषिद्भवति भोगाढ्या नित्यं मिष्टान्नसेविनी २७ निर्लोम हृदयं यस्याः समं निम्नत्ववर्जितम्। ऐश्वर्यं चाप्यवैधव्यं प्रियप्रेम च सा लभेत् २८ अष्टादशाङ्गुलततमुरः पीवरमुन्नतम्। सुखाय दुःखाय भवेद्रोमशं विषमं पृथु २९ घनौ वृत्तौ दृढौ पीनौ समौ शस्तौ पयोधरौ। स्थूलाग्रौ विरलौ शुष्कौ वामोरूणां न शर्मदौ ३० दक्षिणोन्नतवक्षोजा पुत्रिणीष्वग्रणीर्मता। वामोन्नतकुचा सूते कन्यां सौभाग्यसुन्दरीम् ३१ सुदृशां चूचुकयुगं शस्तं श्यामं सुवर्तुलम्। अन्तर्मग्नं च दीर्घं च कृशं क्लेशाय जायते ३२ पीवराभ्यां च जत्रुभ्यां धनधान्यनिधिर्वधूः। निगूढसंधी शस्ताग्रौ शुभावंसौ सुसंहतौ ३३ स्यातां दोषौ सुनिर्दोषौ गूढास्थिग्रन्थिकोमलौ। विशिरौ च विरोमाणौ सरलौ हरिणीदृशाम् ३४ अम्भोजमुकुलाकारमङ्गुष्ठाङ्गुलिसमुखम्। हस्तद्वयं मृगाक्षीणां बहुभोगाय जायते ३५ मृदुमध्योन्नतं रक्त तलं पाण्योररन्ध्रकम्। प्रशस्तं शस्तरेखाढ्यमल्परेखं शुभश्रिये ३६ विरोम विशिरं शस्तं पाणिपृष्ठ समुन्नतम्। रक्ता व्यक्ता गभीरा च स्निग्धा पूर्णा च वर्तुला ३७ कररेखाङ्गनायाः स्याच्छुभा भाग्यानुसारतः। मत्स्येन सुभगा नारी स्वस्तिकेन वसुप्रदा ३८ पद्मेन भूपतेः पत्नी जनयेद्भूपतिं सुतम्। शुभदः सरलोङ्गुष्ठो वृत्तो वृत्तनखो मृदुः ३९ अङ्गुल्यश्च सुपर्वाणो दीर्घा वृत्ताः क्रमात्कृशाः। अरुणाः सशिखास्तुङ्गाः करजाः सुदृशां शुभाः ४० नखेषु बिन्दवः श्वेताः प्रायः स्युः स्वैरिणीस्त्रियाः। पुरुषा अपि जायन्ते दुःखिनः पुष्पितैर्नखैः ४१ अन्तर्निमग्नवंशास्थिपृष्ठिः स्यान्मांसला शुभा। पृष्ठेन रोमयुक्तेन वैधव्यं लभते ध्रुवम् ४२ मांसलो वर्तुलः कण्ठः प्रशस्तश्चतुरङ्गुलः। शस्ता ग्रीवा त्रिरेखाङ्का त्वव्यक्तास्थिः सुसंहता ४३ हनुश्चिबुकसंलग्ना निर्लोमा सुघना शुभा। शस्तौ कपोलौ वामाक्ष्याः पीनौ वृत्तौ समुन्नतौ ४४ समं समांसं सुस्निग्धं स्वामोद वर्तुलं मुखम्। जनितुर्वदनच्छायं धन्यानामेव जायते ४५ पाटलो वर्तुलो स्निग्धो रेखाभूषितमध्यभूः।

---

१ 'कूर्मपृष्ठवन्निबिडः'। २ 'उन्नतः'। ३ 'कन्याजनकः'। ४ 'पुत्रजनकः'। ५ 'आखूनां मूषकाणामिव पिङ्गलानि रोमाणि यस्य स तथा'। ६ 'गूढो मणिरिव मणिर्वराङ्गत्वान्मध्यभागविशेषो यस्य स तथा। सुश्लिष्टः सुनिबिडः संहतो दृढः पृथुर्विस्तीर्णः कमलपर्णाभः पद्मपत्राकारः। कमलवर्णाभ इति कचित्। कमलगर्भाभ इति चान्यत्र'।

धर्मसामुद्रिकज्योतिःशास्त्रैरर्हां मनोहराम् ।
उद्वहेद्धर्मकामार्थसाधिकां सुदृशं सुधीः ॥ १६ ॥
नारीणां द्वारदेशावस्थायित्वाद्येव दूषणम् ।
अनन्तर्मुखताद्येवं बुद्धीनामिव सर्वदा ॥ १७ ॥
अतिलौकिकवार्ता च स्वातन्त्र्यं स्वैरिभर्तृता ।
पुरुषैः सहवासश्च प्रकाशेऽवस्थितिः सदा ॥ १८ ॥
विदेशवासः स्वाचारविरहः स्वैरिणीस्पृहा ।
पत्युरीर्ष्यालुता चेति नव स्त्रीनाशहेतवः ॥ १९ ॥

---

सीमन्तिनीनामधरो धराजानिप्रियो भवेत् ४६ गोक्षीरसंनिभाः स्निग्धा द्वात्रिंशद्दशनाः शुभाः । अधस्तादुपरिष्टाच्च समाः स्तोकसमुन्नताः ४७ अलक्षितद्विजं किंचित्किंचित्फुल्लकपोलकम् । स्मितं प्रशस्तं सुदृशामनिमीलितलोचनम् ४८ समवृत्तपुटा नासा लघुच्छिद्रा शुभावहा । ललनालोचने शस्ते रक्तान्ते कृष्णतारके ४९ गोक्षीरवर्णविशदे सुस्निग्धे कृष्णपर्वणी । मधुपिङ्गाक्षी रमणी धनधान्यसमृद्धिभाक् ५० पक्ष्मभिः सुघनैः स्निग्धैः कृष्णैः सूक्ष्मैः सुभाग्यभाक् । भ्रुवौ सुवर्तुलौ तन्व्यौ स्निग्धे कृष्णे असंहते ५१ प्रशस्ते मृदुरोमाणौ सुभ्रुवः कार्मुकाकृती । लम्बौ कर्णौ शुभावर्तौ सुखदौ च शुभप्रदौ ५२ भालः शिराविरहितो निर्लोमार्धेन्दुसन्निभः ।अनिम्नह्यङ्गुलो नार्याः सौभाग्यारोग्यकारणम् ५३ व्यक्तस्वस्तिकरेखं च ललाटं राज्यसंपदे । सीमन्तः सरलः शस्तो मौलिः शस्तः समुन्नतः ५४ गजकुम्भनिभो वृत्तः सौभाग्यैश्वर्यसूचकः । केशा अलिकुलच्छायाः सूक्ष्माः स्निग्धाः सुकोमलाः ५५ किंचिदाकुञ्चिताग्राश्च कुटिलाश्चातिशोभनाः' इति। विस्तरोऽत्र वीरमित्रोदयत एव ज्ञेय इति दिक् ॥ १६ ॥ ननु भवत्वेवं सुपरीक्ष्य विवाहस्ततः किं निरुक्तलक्षणादिविश्वासात्तदुपेक्षणमेव कर्तव्यं किंवा परिरक्षणमपीत्याशङ्कय सत्क्षेत्रे सद्वृत्तिपूर्वकं सदालवालेऽप्युप्तेऽप्याम्रादिचारुबीजे यावद्दृढफलोदयं तत्र जलनिषेकदोहृदादिप्रदानपरिरक्षणापेक्षणवदिहाप्युत्तरपक्ष एव श्रेयानिति तदभावे दोषकथनेन व्यनक्ति—**नारीणामित्यादि**त्रिभिः । अवधारणं त्वत्राग्रे परपुरुषनिरीक्षणादितः संभावितपापात्तत्कैमुत्यार्थमेव । पक्षे द्वारशब्देन निषिद्धविषयपराणि पञ्च ज्ञानेन्द्रियाण्येव । आदिपदेन तदौत्कण्ठ्यम् । नन्वेवमपि गृहेपि परपुरुषनिरीक्षणादि संभवत्येवेत्यत आह—**अनन्तरिति** । अत्र सर्वदेत्युभयपक्षेपि क्षणमात्रमपि प्रेक्षावतामुपेक्षानुचितैवेति द्योत्यते । तदुक्तं वात्स्यायनीये—'योषितस्त्विमा अभियोगमात्रसाध्याः । द्वारदेशावस्थायिनी प्रासादाद्राजमार्गावलोकिनी' इत्यादि ॥ १७ ॥ एवं सामान्यतो दोषयुगमुक्त्वा विशेषतस्तु नवविशेषगुणानिव तानाह—**अतीत्यादि**द्वाभ्याम् । एतदपि तत्रैव । अतिगोष्ठी निरङ्कुशत्व भर्तुः स्वैरिता पुरुषैः सहानिर्यन्त्रणता प्रकाशे स्थानं विदेशवासः स्ववृत्त्युपघातः स्वैरिणीसंसर्गः पत्युरीर्ष्यालुता चेति स्त्रीणां विनाशकारणानीति ॥ १८ ॥ १९ ॥

धर्ममर्थं तथा कामं लभन्ते स्थानमेव च।
निःसपत्नं च भर्तारं नार्यः सद्वृत्तमास्थिताः ॥ २० ॥

ननु नायकस्य भवत्वेवं स्वनायिकासंरक्षणादिना त्रिवर्गसिद्धिः किं ततस्तासामित्यत्राह -**धर्ममिति**। इदं हि वात्स्यायनवचनमेव। स्थानं भर्तृशुश्रूषाख्यस्वधर्मद्वारा परम्परया मोक्षसुखलक्षणमद्वैतकैवल्याविनाशिस्थलमित्यर्थः। निः सपत्नं निर्गतः सपत्नः भावप्रधानोयं निर्देशः। शत्रुभावो यस्मात्स तथा तमित्यर्थः। भर्तृमनोऽननुकूलवर्तने तन्मनसि परनिरतत्वशङ्कया शत्रुत्वमाविर्भूयात्स्वसद्वृत्तादिना तन्मनोनुकूलवर्तने तु तन्नैव भूयादिति भावः। तस्मान्नारीभिः सर्वदा सद्वृत्तं संपादनीयमित्याशयः। एतत्प्राक्तनसूत्रं त्वित्थं 'भार्यैकचारिणी रूढविश्रम्भा दैवतं पतिमानुकूल्येन वर्तेत। तन्मतेन कुटुम्बचिन्तामात्मनि निवेशयेत्। वेश्म च शुचि सुसमृष्टस्थानं विविधकुसुमं श्लक्ष्णं भूमितलं हृद्यदर्शनं त्रिषवणं विरचितबलिकर्म पूजितदेवतायतनं कुर्यात्। नह्यतोऽन्यद्गृहस्थानां चित्तग्राहकमस्तीति गोनर्दीयः। गुरुषु मित्रवर्गेषु भृत्यवर्गेषु नायकभगिनीषु तत्पतिषु च यथार्हा प्रतिपत्तिः। परिपूजितेषु च स्थानेषु हरितशाकवप्रानिक्षुस्तम्बान् जीरकसर्षपाजमोदशतपुष्पतमालगुल्मांश्च कारयेत्। आमलक्यब्जकमल्लिकाजातिकुरण्टकनवमालिकातगरनन्द्यावर्तजपागुल्मानन्यांश्च वालकोशीरपीटिकायां स्थण्डिलानि मनोज्ञानि कारयेत्। शक्त्यनुरूपं चात्र कूपं वा दीर्घिकां खानयेत्। भिक्षुकी श्रमणिका कुलटा कुहकेक्षणिका मूलकारिकाभिश्च न सृज्येत। भोजने च रुचितमिदमस्मै द्वेष्यमिदं पथ्यमिति विन्यात्। स्वं भवनमागच्छतो बहिरुपश्रुत्य किं कृत्यमिति ब्रुवती सज्जा भवनमध्ये तिष्ठेत्। परिचारिकामप्यनुपद्य पादौ स्वयं प्रक्षालयेत्। नायकप्रयाणे च विमुक्तविभूषणा विमना वा अस्य बाह्यसंदर्शने न तिष्ठेत्। अतिव्ययमसद्व्ययं वा कुर्वाणं पतिं रहसि वारयेत्। आवाहविवाहयज्ञे गमनं सखीभिर्गोष्ठीं संभूय पानं भोजनाभिगमनमित्यनुज्ञातः कुर्यात्। सर्वक्रीडासु च तच्चित्तानुलोम्येन प्रतिपत्तिः। पश्चात्संवेशनं पूर्वमुत्थानमनवबोधनं च सुप्तस्यान्यत्र धर्मातिपत्तेः। महानसमहारं सुगुप्तं स्याद्दर्शनीयं च। नायकापचारे तु किंचित्कलुषा नात्यर्थं निर्वदेत्साधिक्षेपवचनम्। किंत्वेवं मित्रजनमध्यस्थमेकाकिनं वाप्युपालभेत। न च मूलकारिका स्यात्। नह्यतोऽन्यदप्रत्ययकारणमस्तीति गोनर्दीयः। दुर्व्याहृतं दुर्निरीक्षितमन्यतो निमन्त्रणं द्वारदेशावस्थानं निरीक्षणं वा निष्कुटेषु मन्त्रणं विविक्तेषु वा चिरमवस्थानमिति वर्जयेत्। स्वेददन्तपङ्कदुर्गन्धानिति च बुध्येत। बहुभूषणः विविधकुसुमानुलेपताम्बूलविविधाङ्गरागमुखवासं वा विरजस्कमुज्ज्वलं वास इत्याभिगामिको वेषः। प्रतनुश्लक्ष्णाल्पदुकूलतापरिणताभरणतासुगन्धितानात्युद्धतमनुलेपनं तथा पुष्पाणि शुक्लानीति वैहारिको वेषः। नायकस्य व्रतमुपवासं वा स्वयमनुकरणेनानुवर्तेत। वारिता च नाहमत्र निबन्धनीयेति तद्वचसो निवर्तनम्। मृद्विदलकाष्ठचर्मलोहभाण्डानां च काले समर्घसंग्रहणम्। लवणस्नेहानां च ग-

**विरहोत्कण्ठिता मानवती वासकसज्जिका ।**
**स्वाधीनपतिका चेति मतिश्च युवतिः सताम् ॥ २१ ॥**
**प्रेयः साक्षात्कृतिर्भूयात्किं मे क्षणगलत्तनोः ।**
**संपूर्णामृतभे फुल्ले रसाले परभृद्गिरा ॥ २२ ॥**

न्धद्रव्यकरण्डकभाण्डोपधानानां दुर्लभानां च भवने प्रच्छन्नं निधानम् । मूलकालुकपालक्यमदनाम्रातकैर्वारुकत्रपुसवार्ताककूष्माण्डकालाबुसूरणशुकनासां स्वयंगुप्तातिलपर्णिकामन्थलशुनपलाण्डुप्रभृतीनां सर्वौषधीनां च बीजग्रहणं काले वापनं च । स्वस्य च व्यवहारस्य परेभ्यो नाख्यानं भर्तृमित्रस्य समानायाः स्त्रियाः कौशलेनोज्ज्वलतया पाकेन मानेनोपचारैरप्यतिशयीत । सांवत्सरिकमायं संख्याय तदनुरूपं व्ययं कुर्यात् । भोजनावशिष्टाच्च गोरसादेराघृतिकरणम् । तथा तैलगुडयोः कार्पासस्य च सूत्रकर्तनम् । सूत्रस्य वयनम् । शिक्यरज्जुपाशवल्कलसंग्रहणं च कुर्यात् । कुद्दालककुन्दनखण्डनक्षेपणावक्षोदनमित्यादि ॥ २० ॥ ननु भवत्वेवं स्त्रीणां सद्वृत्तमाहात्म्येन स्वीयाया एव धन्यतमत्वमथाप्यसौ प्रागुक्तमुग्धादिभेदेन व्यवस्थापि तत्तद्धर्मभेदेन पुनः कतिविधेत्याशङ्क्य धर्मभेदानामानन्त्यात्प्राधान्येन तच्चातुर्विध्यमेव विधत्ते । **विरहेति** । यद्यपि रसमञ्जर्यादौ प्रोषितभर्तृकादयोऽष्टौ नायिकाभेदा उक्तास्तथापि तत्रापि सर्वेषां तद्भेदानामनुदाहृतेरनतिप्रयोजकत्वाच्च दिङ्मात्रमेवेदमत्र मयोपन्यस्तमित्याकूतम् । **वासकेति** । वासः सुरतावासः । स्वरतिमन्दिरं तत्र सकलशय्यादिसुरतसामग्र्याया सज्जीभूय पतिं प्रतीक्षते सा वासकसज्जा वासकसज्जैव वासकसज्जिका । प्रोषितभर्तृकायाः प्रवत्स्यत्पतिकायाश्च विरहोत्कण्ठितायामेवान्तर्भावः । पक्षे मानवती वेदान्तमहावाक्यरूपचरमप्रमाणवती । तथा । **वासकेति** । आत्मरतित्वसामग्रीभूतशमादिमतीत्यर्थः । अतएव **स्वेति** ॥ २१ ॥ क्रमेणोदाहरति—**प्रेय इत्यादि**चतुर्भिः । **संपूर्णेति** । पूर्णेन्दूदये सतीत्यर्थः । तथा रसाले आम्रे फुल्ले विकसिते सतीति यावत् । **परेति** । कोकिलकलेनेत्यर्थः । **क्षणगलदिति** । विशरारुशरीराया इति यावत् । प्रेय इत्यादि स्पष्टम् । पक्षे प्रेयः आत्मा तस्य साक्षात्कृतिरद्वैतब्रह्मत्वेनापरोक्षप्रमितिरित्यर्थः । **संपूर्णेति** । अखण्डकैवल्यानन्दप्रकाशविषये । रसाले रस 'रसो वै सः' इति श्रुतेरद्वैतब्रह्मानन्दं लात्यादत्त इति तथा वेदान्त इत्यर्थः । फुल्ले भाष्यादिभिर्विकसिते सतीति यावत् । **परेति** । गुरुवाचेत्यर्थः । प्रोषितपतिकाधर्मस्तूक्तो वात्स्यायनीये । नायकप्रवासे च मङ्गलमात्राभरणा दैवतोपवासपरा वार्तायां स्थिता गृहानवेक्षेत । शय्या च गुरुजनसमीपे । तदभिमतकार्यप्रतिपत्तिः । नायकाभिमतानां चार्थानामुपस्कारे आवर्जने च यत्नः । नित्यनैमित्तिकेषु कर्मसूचितो व्ययः । तदारब्धानां च कर्मणां समापनम् । ज्ञातिकुलस्यमाजानभिगमनमन्यत्र व्यसनोत्सवाभ्याम् । अभिगमनं च नायकपरिजनानुयातायाः । नातिकालमवस्थानमपरिवर्तितप्रवासवेषता च । गुरु-

प्रेयसि प्रणतेऽप्यास्ते भूम्येकोल्लेखतत्परा।
श्रुत्यन्तसंचरद्दृष्टिः स्रवदश्रुकलाकुला ॥ २३ ॥
सुरभिस्नेहसुस्नातां स्वानतां सस्मितां पतिः।
रूपैकालंकृतिं वीक्ष्य स्वरहःसुदृशं कृती ॥ २४ ॥
कैवल्यरत्नपीठे या स्थिता पश्यति ताण्डवम्।
स्वप्रेयसः परित्यक्ताम्बरस्यापि सतीह सा ॥ २५ ॥

जनानुज्ञातानां च करणमुपवासानाम्। इत्यादि ॥ २२ ॥ **प्रेयसीति**। प्रेयसि स्वकीयनिरतिशयप्रेमपात्रीभूते स्वपताविस्यर्थः। एतेन बहिर्वैनोदिकरूपादिगर्वलक्षणमानकरणेप्यन्तः प्रेमप्राचुर्यं सूच्यते। प्रणतेपि प्रसादनार्थं कृतप्रणामेऽपि सतीति यावत्। अपिना प्रार्थनकाष्ठात्वं प्रणामे व्यज्यते। **श्रुतीति**। श्रुत्यन्ते कर्णप्रान्तभागे संचरन्ती परिभ्रममाणा दृष्टिर्यस्याः सा तथा। एतेन मानसामग्रीरूपा यौवनलक्षणा द्योत्यते। अतएव—**स्रवदिति**। निरुक्तमानस्य त्यागासामर्थ्यात्प्रेयःप्रणामस्याप्युत्तमनायिकात्वेन सहनाशक्तेश्च। स्रवन्ति नेत्राभ्यां स्खलन्ति च तान्यश्रूणि नेत्रोदकानि तेषां या कला लेशस्तत आकुला व्याकुलीभूतैतादृश्यपि। **भूम्येकेति**। भूमेः स्वावस्थानपृथ्व्याः। एकं केवलं य उल्लेखः स्वपादनखेन विलेखन तत्र तत्परा सादरैवास्त इत्यन्वयः। एतेन मानातिशयो ध्वन्यते। पक्षे श्रुतीति श्रुत्यन्तेपूपनिषद्भागेषु संचरन्ती तत्तात्पर्यनिर्णयार्थं परिभ्रममाणा एतादृशी या दृष्टिर्मननात्मिका चित्तवृत्तिरित्यर्थः। प्रेयसि 'तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मा' इति श्रुतेः साक्षित्वेनोपलक्षिते। अद्वैतस्वप्रकाशानन्दात्मनीत्यर्थः। प्रणतेपि निरुक्तस्वसंचारप्रदेशेषु विषयीभूतत्वेनातिनम्रे सत्यपीति यावत्। अतएव श्रूयते 'तस्य भासा सर्वमिदं विभाति' इति। अतएव स्रवदिति प्रस्खलदानन्दाश्रुलेशव्याकुलेत्यर्थः। **भूम्येकेति**। भूमेः पञ्चमभूमिकादेर्य उल्लेखः कल्पनं तत्र तत्परा तन्मात्रपरायणाऽस्त इति ॥ २३ ॥ अथोद्देशक्रमप्राप्ता वासकसज्जामुदाहरति—**सुरभीति**। सुरभि सुगन्धि एतादृशं यत्स्नेह तलं तेन सुस्नाता कृताभ्यङ्गस्नानामित्यर्थः। एतेन सकलसुरतसामग्रीसंपन्नत्व सूच्यते। अतएव—**स्वेति**। स्वशब्देनात्र पतिरेव। तेन पत्युः स्वरत्यागार आगमनवेलायामेवोत्थाय प्रत्युद्गम्य तं प्रति कृतप्रणामामित्यर्थः। एतेन सतीधर्मधुरंधरत्व ध्वन्यते। अतएव सेति सद्यः सुरतसामग्रीसंपत्समकालमेव कान्तागमनन प्रमुदितामित्त यावत्। तत्रापि—**रूपैकेति**। रूपं केशादिपादतलान्तयावदवयवसौष्ठवमेव एका मुख्या अलंकृतिरलंकारपरंपरा यस्याः सा तथा तामित्यर्थः। अतएव सुदृशं सुमृगाक्षीम्। स्वरहः स्वकीयरत्यागारे। पतिः कान्तः। वीक्ष्य अवलोक्य। कृती कृतार्थोभूदिति संबन्धः ॥ २४ ॥ एवं स्वाधीनपतिकामप्युदाहरति—**कैवल्येति**। कैवल्यमिव निरतिशयसुखरूपमीदृशं यद्रत्नपीठ चिन्तामणिमयसिंहासनं तत्रेत्यर्थः। या स्थिता

**गोक्षीराब्धेः शिवगुरुविबुधसहायोऽच्युतः समुद्दध्रे।**
**स्वीयैकनिर्णयपरं रम्भासंज्ञं दशमरत्नम्॥ २६॥**

## चन्द्ररत्नम् ११।

**सुदृशं संनिरूप्यैवं नायकं कथयाम्यलम्।**
**तदेकलक्ष्यं संक्षेपादनुरूपं विदां मुदे॥ १॥**
**उदात्तो ललितः शान्तस्त्रिधा नेता प्रकीर्तितः।**
**सर्वोऽपि धीर एवायं विज्ञेयो नायकत्वतः॥ २॥**

सती। **स्वेति**। निजप्रेमविषयस्य भगवतः श्रीशंकरस्येति यावत्। **परीति**। परित्यक्तपरिधानस्यापीत्यर्थः। एतेन निरतिशयवशीकारो व्यज्यते। ताण्डव प्रत्यह प्रदोषकालिकमुद्धतनृत्यमिति यावत्। पश्यति अवलोकयति। इह ससारे सैव सती पातिव्रत्यतः स्वाधीनपतिकात्वेन धन्यास्तीति योजना॥ २५॥ निगमयति—**गोक्षीराब्धेरिति**॥ २६॥

इति श्रीमत्पदवाक्यप्रमाणक्षीरार्णववि० सरसामोदे दशमरत्नप्रकाशः संपूर्णः॥

एव नायिकानिरूपणात्मकं रम्भाख्य दशम रत्नं परिसमाप्य तदवश्यापेक्षितनायकनिरूपणात्मकं चन्द्राख्यमेकादशरत्नमारभमाणः श्लेषेण तयोः संगति कथयति—**सुदृशमिति**। अहमित्यार्थिकम्। तेन स्वस्यामानित्व ध्वन्यते। एव प्रागुक्तप्रकारेण। सुदृश यावत्स्त्रीगुणविशिष्टस्वकीयां नायिकामित्यर्थः। संनिरूप्य व्यावर्त्यकथनपूर्वकमभिधायेति यावत्। अनुरूपं निरुक्तनायिकार्हमित्यर्थः। अतएव अलमत्यन्तं तदेकलक्ष्यं तस्याः प्रोक्तनायिकायाः एक केवल लक्ष्यं अतितरानुरागस्वारस्य यत्र तमिति यावत्। तत्र हेतुस्तु अनुरूपमित्युक्त एव। विदां पण्डितानाम्। मुदे योग्यसंबन्धपरीक्षणजन्यहर्षणार्थमित्यर्थः। सक्षेपात्कथयामीत्यन्वयः। एतेन वक्ष्यमाणनायकसामान्यसाम्येन सकलगुणवत्त्वं नायके व्यज्यते। पक्षे सुदृशं अपरोक्षाद्वैतब्रह्मात्मैक्यप्रमितिमित्यर्थः। सनिरूप्य प्राचीनाचार्यतात्पर्यानुसारेण समुपपाद्येति यावत्। एवमनयैव रीत्या। अनुरूप तदेकविषयतार्हमित्यर्थः। नन्वेव तर्हि विषयतावच्छिन्नत्वेनात्मनो धर्मित्वादपसिद्धान्तापत्तिरतः पुनस्तं विशिनष्टि—**तदेकेति**। अलमित्यत्रैव संबध्यते। अन्यूनानतिरिक्तं यथा स्यात्तथेत्यर्थः। एतेन 'तमेव विदित्वातिमृत्युमेति' इति श्रुत्यर्थः संगृह्यते। सच सर्वपरिच्छेदवैधर्म्यं विना नैव सिध्यतीति। अतएव तया निरुक्तापरोक्षप्रमयैव एकं केवलं लक्ष्यते वृत्तिव्याप्त्या तन्मात्राश्रयविषयकाविद्यानिवृत्त्यैवोपलक्ष्यत इति तथा तमिति यावत्। तत्रापि संक्षेपाद्विदां मुमुक्षूणां मुदे कथयामीति संबन्धः॥ १॥ अथ कथनीयत्वेन प्रतिज्ञातनायकस्य किं सामान्यलक्षणं के वा तद्भेदाः प्रकृते

**स्थिरो निगूढालंकारो धीरोदात्तो दृढव्रतः।**
**यास्यामि सह जानक्या वनं राज्येन किं मम॥ ३॥**
**निश्चितो धीरललितः कलासक्तः सुखी मृदुः।**
**वेणुं रणयति स्वैरं कृष्णो गोप्यवशो वने॥ ४॥**

---

भवदभिप्रेता इत्यपेक्षायां तदुभयं संक्षिपति—**उदात्त इति**। उदात्तत्वमुदारत्वम्। ललितत्वं सार्वांशिकसुन्दरत्वम्। शान्तत्वं क्वचिदप्यक्षुब्धत्वमिति तद्विशेषलक्षणानि। अथामीषां सामान्यलक्षणमपि संक्षिपति—**सर्वोऽपीति**। धीरत्वं लोकशास्त्रीत्यचलत्वम्। तत्र हेतुः। नायकत्वत इति। तदुक्तं दशरूपककारिकाकृता नेतृप्रकरणे—'नेता विनीतो मधुरस्त्यागी दक्षः प्रियंवदः। रक्तलोकः शुचिर्वाग्मी रूढवंशः स्थिरो युवा। बुद्ध्युत्साहस्थितिप्रज्ञाकलामानसमन्वितः। शूरो दृढश्च तेजस्वी शास्त्रचक्षुश्च धार्मिकः' इति। अत्र धार्मिक इति चरमविशेषणेनैव लौकिकादिधर्मवत्त्वं तदावेदितम्। ननु तत्र त्वग्रिमकारिकायामेव। 'भेदैश्चतुर्धा ललितशान्तोदात्तोद्धतैरयम्' इत्युद्धताख्योपि चतुर्थस्तद्भेदः प्रतिपादितः स कथं त्वयात्र नोक्त इतिचेन्न। नायकत्वत इत्यनेनैव दत्तोत्तरत्वात्। तेनेत्यादिनोक्ततदीयनायकसामान्यलक्षणस्यैवोद्धते स्वप्नेऽप्यसंभावितत्वाच्च। तस्मादन्धपरम्परैवेयं प्राचामुद्धतत्वकथेति दिक्॥ २॥ तत्र धीरोदात्तं विशिष्य लक्षयति—**स्थिर इति**। निगूढेति विशेषः। दृढेत्यौदार्यम्। तमुदाहरति—**यास्यामीति**। यथात्रा भामिनीविलासे—'आपद्गतः खलु महाशयचक्रवर्ती संदर्शयत्यकृतपूर्वमुदारभावम्। कालागरुर्दहनमध्यगतः समन्ताल्लोकोत्तरं परिमलं प्रकटीकरोति' इति॥ ३॥ तत उद्देशक्रमप्राप्तं धीरललितमपि तथा लक्षयति—**निश्चित इति**। अत्रापि स्थिर इत्यादिपूर्वपद्यवल्लक्षणघटकं पूर्वार्धं दशरूपकीयकारिकाकारस्यैव 'उपमा यत्र सादृश्यलक्ष्मीरुल्लसति द्वयोः' इति पूर्वार्धं कुवलयानन्दे यथा चन्द्रालोकीयमेव गृहीतं तद्वदेव संगृहीतमिति ज्ञेयम्। निश्चितः लोकशास्त्रमर्यादानुल्लङ्घननिश्चयवानित्यर्थः। एतेन धीरत्वसामान्यसंग्रहः सूच्यते। मृदुरिति तल्लालित्यलक्षणं सार्वांशिकसुन्दरत्वं ध्वन्यते। कलेत्यादि तु तद्विशेषघटकमेव। तमुदाहरति—**वेणुमिति**। वने वृन्दावने कृष्णः गोप्यवश एव गोपसुन्दरीपारवश्यविधुर एव सन् स्वैरं स्वच्छन्दं यथा स्यात्तथा वेणुं रणयतीति योजना। ननु कथमेतत्संभवेत्कात्यायनीव्रतोपाख्यानप्रसिद्धगोपकन्यकागुह्यनिरीक्षणमारभ्य कृष्णस्य मथुरागमनावधि श्रीमद्भागवतप्रसिद्धासंख्यातशृङ्गारलीलाशालिन इतिचेन्न। उपनयनात्पूर्वं कामचारस्य शास्त्रप्रसिद्धत्वात्कृष्णस्य कुब्जासंभोगोत्तरमेव क्षत्रियत्वेनोपनयनस्य तत्रैव वर्णितत्वाच्चेति धर्मशास्त्रवर्त्मना समाधानम्। नचैवं चेत्तर्हि तत्रैव परीक्षित्प्रश्ने 'धर्मव्यतिक्रमो दृष्ट ईश्वराणां च साहसम्। तेजीयसां न दो-

**सामान्यगुणयुक्तश्च धीरशान्तो द्विजादिकः ।**
**श्रीसद्गुरुर्जयत्युच्चैर्युतो दैव्यैव संपदा ॥ ५॥**
**गोक्षीराब्धेः शिवगुरुविबुधसहायोऽच्युतः समुद्दध्रे ।**
**नायकनिर्णयरूपं चन्द्राख्यं रुद्रसंख्यमपि रत्नम् ॥ ६ ॥**

---

ाय वह्नेः सर्वभुजो यथा' इति कथं श्रीशुकसमाधानमिति वाच्यम् । तस्येश्वरा णामितीश्वरत्वेन समाधानस्य विवक्षितत्वात् । तत्रायमाशयः । ईश्वरस्य नित्य- पूर्णकामत्वेपि समुद्रमथने समुद्भूतया लक्ष्म्या क्षत्रियत्वेन विष्णुरेव विश्वसुन्दर्या- पे वृतस्तेन 'स्त्रियः कामितकामिन्यो लोकः पूजितपूजकः' इति वैदुरिकन्याया- समुद्रोद्भूतसात्विकादिसर्वदेवाङ्गनाभिः स एव कामितोऽभूत् । तेन 'तन्मनोरथपू- रणार्थं' 'संभवन्तु सुरस्त्रियः' इति ब्रह्माणमभ्यनुज्ञा । तत्र सात्विकीनामुद्वाह एव षोडशसहस्रसमाधिकैकशतानामपि। रुक्मिणीतु विवाहेऽपि लक्ष्म्यवतारत्वान्न तथा । राजसीनामिह गोप्यात्मनैवोपभोगस्तामसास्त्वेकायाः कुब्जाया एव स इति न काप्यनुपपत्तिः ॥ ४ ॥ एवं शान्तमपि नायकं लक्षयति—**सामान्येति** । इद- मपि पूर्वार्धं प्राग्वदेव । सामान्यगुणास्तु नेता विनीत इत्यादयः प्रागुक्ता एव । द्विजादिक इत्यत्रादिपदेन क्षत्रियादिग्रहः । तमुदाहरति—**श्रीति** । श्रीमत्त्वम- णिमादियोगैश्वर्यवत्त्वम्, सत्त्वमद्वैतब्रह्मनिष्ठत्वम्, गुरुत्वमनन्यशरणागतकरुणानु- ग्रहप्रवीणत्वम् . अतएव दैव्यैव संपदा 'अभयं सत्वसंशुद्धिः' इति श्रीमद्भगवद्गीता- प्रसिद्धयेत्यर्थः । अवधारणं तु लोकप्रसिद्धकनककरितुरगरथपदात्यादिसंपद्व्युदासा- र्थमेव । युतः युक्तः । अतएव उच्चैः सर्वोत्कृष्टत्वेन जयति जगद्वन्द्यो भवतीत्य- न्वयः । यथावा भर्तृहरिकृतवैराग्यशतके—'पाणिः पात्रं पवित्रं भ्रमणपरिगतं भैक्षमक्षय्यमन्नं विस्तीर्णं वस्त्रमाशादशकमपमलं तल्पमस्वल्पमुर्वी । येषां निःस- ङ्गताङ्गीकरणपरिणतिः स्वात्मसंतोषिणस्ते धन्याः संन्यस्तदैन्यव्यतिकरनिकराः कर्म निर्मूलयति' इति ॥ ५ ॥ **गोक्षीरेति** । नायकेति । अतएव । **चन्द्रेति** । चन्द्र इत्याख्या यस्य तत्तथेत्यर्थः । चन्द्रे ह्युदात्तत्वरूपमौदार्यं कुरङ्गकिशोरस्य करुणया स्वाङ्कस्थापनेन लाञ्छनापत्तेरप्यङ्गीकृतत्वाल्ललित्यादेश्च सौन्दर्यं दर्शनीय- तमत्वाच्छान्तत्वरूपमक्षुब्धत्वममृतमयत्वाच्च सुप्रसिद्धमेवेति भावः ॥ ६ ॥

॥ इति श्रीमत्पदवाक्यप्रमाणक्षीरार्णवविहरणश्रीमदद्वैतविद्येन्दिरारमणष०
सरसामोदे एकादशरत्नप्रकाशः संपूर्णः ॥ ११ ॥

## अमृतरत्नम् १२ ।

**नायकं सुनिरूप्यैवं रसं संवर्णयाम्यहम्।**
**सूत्रधार इव प्रौढं विदुषां मोदसिद्धये ॥ १ ॥**
**जयतो दंपती कावप्यन्योन्याश्लेषतोषितौ।**
**वेदान्तवाण्यगम्याभावनन्तगुणभूषणौ ॥ २ ॥**

एवमेकादशं चन्द्राभिध नायकप्रतिपादक रत्न द्वितीयाचन्द्रस्येव सर्ववन्द्यत्वेन तत्वध्वननार्थं संक्षिप्याथामृतरत्नं द्वादशं रसरत्नमपि तदेकोपजीव्यत्वेन तादृगे-वारभमाणस्तयोः संगतिमाह—**नायकमिति।** अह ग्रन्थकारः। एवं प्रागुक्त-रीत्या नायकं निरुक्तलक्षण सुनिरूप्य सयुक्तिकं प्रतिपाद्य प्रौढं प्रधानं सात्वि-कराजसत्वसात्विकसात्विकत्वाभ्यां चतुर्थरत्ने प्रतिपादितं स्वकीयैकविषयं सं-भोगशृङ्गारं तथा शान्त च सूत्रधार इव विदुषां मोदसिद्धये संवर्णयामीत्यन्वयः। प्रौढमिति नायकविशेषणमपि तेन निरुक्तनायकत्रिप्रकारकत्वमात्रप्रतिपादने हेतुर्योत्यते। पक्षे नाटके हि सूत्रधारः प्रसिद्ध एव सकलनाटकपात्रप्रवेशपूर्वर-ङ्गादिव्यवस्थापकः शैलूषविशेषः। स यथा प्रौढं निखिलनायकगुणवत्त्वेन सर्वस-भ्यसंमतमित्यर्थः। एतादृशं नायकं सुनिरूप्य। एवं प्रौढमेव रस शृङ्गारवीरा-न्यतरम्। विदुषां सदस्यानां मोदसिद्धये हर्षलब्ध्यर्थं वर्णयति प्रारभते इति लोके प्रसिद्धमेव तथाहमपि संवर्णयामीत्येतत्॥ १ ॥ अथ प्रतिज्ञातं रसं वर्ण-

१ 'अयमभिप्रायः—संविच्छ्रीविलासार्थमिति प्रथमरत्नोक्तप्रयोजनकस्याग्य ग्रन्थस्य मुक्तमुमुक्षूभयानुग्राहकत्वात्तदुपयुक्तत्वेन मुख्यमित्यर्थः। तत्र हेतुः—सात्विकेत्यादि। उक्तरूपरसस्य सात्विकराजसस्य सरसमुमुक्षूपयुक्तत्वं निरन्तरूपस्य सात्विकसात्विकस्य तु मुक्तोपयुक्तत्वं द्रष्टव्यम्। तत्राद्यं तूक्तं बृहद्योगवासिष्ठे स्थितिप्रकरणे पठितममये—'स-भवन्तीह पुरुषा राम राजससात्विकाः। प्रविचार्य समायाता गन्तव्यं नेह तद्गिरा॥ प्राधान्येन सामायाता ये पदात्परमात्मनः। दुर्लभाः पुरुषा राम ते महागुणशालिनः' इति। उपशमप्रकरणेऽपि 'पुरा कतिपयान्येव मुक्त्वा जन्मानि राघव। अस्मिञ्जन्मनि यो मुक्तस्तस्माद्राजससात्विकः॥ जातोसौ वृद्धिमभ्येति पार्वणश्चन्द्रमा इव। कुटजं प्रा-वृषीवैनं सौभाग्यमनुगच्छति॥' टी—सौभाग्यं साधनचतुष्टयं, कुजपक्षे पुष्पश्रीः 'पश्चात् जन्म पाश्चात्यं तमाश्वेव महामते। विशन्ति विमला विद्या मुक्ता वेणुमिवोत्तमम्। मैत्री ताहृद्यता मैत्री सौम्यता करुणाङ्गना। समाश्रयन्ति तं नित्यमन्तःपुरमिवाङ्गनाः। यः कुर्वन्सर्वकार्याणि पुष्टे नष्टेऽथ तत्फले। समः सन्सर्वकार्येषु न तुष्यति न शोचति। तमांसीव दिवा यान्ति तत्र द्वन्द्वानि संक्षयम्। शरदीव घनास्तत्र गुणा गच्छन्ति सु-ङ्गताम्॥ पेशलाचारमधुरं सर्वे वाञ्छन्ति तं जनाः। वेणुं मधुरनिध्वानं वने वनमृगा इव॥ नरं पाश्चात्यजन्मानमेवंप्राया गुणश्रियः। जातमेवानुधावन्ति बलाका इव वा-रिदम्' इति। अन्त्यं तु प्रसिद्धमेव सर्वत्रेति दिक्।

**श्रीकुचस्पर्शसुखितं वीक्ष्य नारायणं मुहुः।**
**हृदि के न प्रहृष्यन्ति सर्वदुःखनिरासतः॥ ३॥**
**वैदेह्यपाङ्गसंश्लिष्टो दृष्टो यैरद्वयाकृतिः।**
**रघुवीरस्त एवेह कृतकृत्या भवन्त्यलम्॥ ४॥**
**हेरम्बोऽव्यात्स नः सिद्धिबुद्धिभ्यां सुनिषेवितः।**
**पार्श्वगाभ्यां निजापाङ्गनीलोत्पलशतैरलम्॥ ५॥**

येष्वन्नखिलजगदुपादानत्वेन महामायापरमात्मलीलाविग्रहौ श्रीमदुमामहेश्वरावेव वर्णयति—**जयत इति**। कावपि अवाङ्मनसगम्यत्वेनाचिन्त्यमहिमानावित्यर्थः। एतादृशौ। तत्रापि **अन्योन्येति**। परस्परालिङ्गनानन्दितावितियावत्। तत्रापि वेदान्तेति। उपनिषद्वाचामप्यगोचरीभूतकान्ती इत्यर्थः। अतएव अनन्तेति। असंख्यातसौन्दर्यादिसद्गुणमात्राभरणरमणीयावित्यर्थः। एतादृशौ दंपती जायापती जयतः सर्वोत्कर्षेण वर्तमानौ भवत इति योजना। अत्र कावपीति तद्वर्णने स्वासामर्थ्यं, अन्योन्येति संभोगशृङ्गारे समानुरागकत्वम्, वेदान्तेति निरतिशयचिदेकस्वरूपत्वम्, अनन्तेत्यपरिमितरूपलावण्यादिमत्त्वं च निरुक्तदंपत्योर्योत्यते। तेनेह स्वकीयैकालम्बितः परस्पराश्लेषानुभावितः परस्परमुखनिरीक्षणोद्दीपितः परस्परस्पर्शसुखसहकृतश्च समानुरागकः स्वकीयाविषयकत्वेनोत्तमतमः परस्परनिरतिशयरत्याख्यस्थायिभावः परिपुष्टः परिकराद्यलंकारतः प्राधान्येन व्यज्यते। तेनेदमुत्तमोत्तममेव काव्यम्। तल्लक्षणादिकं तु प्रागुक्तदिशा स्वयमेवोह्यम्। यथावा गोवर्धनसप्तशत्याम्—'उन्नालनाभिपङ्केरुह इव येनावभाति शंभुरपि। जयति पुरुषायितायास्तदाननं शैलकन्यायाः' इति॥ २॥ एवं पार्वतीपरमेश्वरयोर्वस्तुतोऽखण्डाद्वैतब्रह्मानन्दरूपत्वेन शान्तं निरुक्तभक्तानुग्रहार्थप्रकटितोक्तलीलाविग्रहविशेषादिमत्त्वेन शृङ्गारविशेषं च सवर्ण्यैवं लक्ष्मीनारायणयोरपि त तथा वर्णयति—**श्रीति**। लक्ष्म्यालिङ्गनानन्दितमित्यर्थः। एतादृशं नारायणं श्रीविष्णुं मुहुः सगुणध्यानाभ्यासमहिम्ना वारंवारमित्यर्थः। हृदि निश्चलीकृतचित्ते वीक्ष्य प्रत्यक्षतामिव नीत्वा। सर्वेति परमानन्दरूपस्य तस्य निरुक्तसगुणध्यानविशेषेणापि वस्तुमाहात्म्यान्निखिलदुःखोन्मूलनेनेतियावत्। के पुरुषाः न प्रहृष्यन्ति। अपितु सर्वेप्यानन्दिता एव भवन्तीति भावः। शिष्टं त्विह पूर्वपद्योक्तविधयैवोह्यमिति दिक्॥ ३॥ एवं श्रीगुर्वभिन्नत्वेन श्रीराममपि वर्णयति—**वैदेहीति**। सीतादृगन्तालिङ्गित इत्यर्थः। तत्र हेतुः। अद्वयेति। निरुपमरमणीयः पक्षे उन्मनीकटाक्षितः। तत्रापि हेतुः अद्वयेति। अद्वैतब्रह्मरूपः अतएव। रघ्विति। रलयोः सावर्ण्याल्लघवोऽल्पप्रज्ञा अपि वीराः संसारसंग्रामविजयिनो येन स तथेत्यर्थः। यैः पुरुषैः पूर्वपुण्यपरिपाकाद्दृष्टः साक्षात्कृतस्त एवेह संसारे। अलमत्यन्तं कृतकृत्या भवन्तीति संबन्धः। अन्यत्तूक्तमेव॥ ४॥ एवमेव श्रीगणप-

**आद्यं शराग्निसंख्याकश्लोकं रत्नं द्वितीयकम्।**
**मुनिरामेन्दुपद्यं च तृतीयं वह्निभूमितम्॥ ६॥**
**चतुर्थं चन्द्रभूनेत्रश्लोकं रामर्षिपञ्चमम्।**
**षष्ठं वेदाग्निदक्पद्यं सप्तमं खेन्दुदङ्मितम्॥ ७॥**
**अष्टमं रसदृग्रामं नवमं खाग्निसंमितम्।**
**दशमं शास्त्रदक्पद्यमितमेकादशं रसैः॥ ८॥**
**द्वादशं द्वादशश्लोक्या युतमेवं सुमेलनात्।**
**साहित्यसारः सानङ्गानङ्गशत्यन्वितोऽभवत्॥ ९॥**
**श्रीनारायणगुर्वङ्घ्रिपद्मयुग्मं नमाम्यहम्।**
**यदेककृपयाहं सच्छास्त्रसौरभ्यसंस्कृतः॥ १०॥**
**अद्वैतसच्चिदानन्देन्द्रपादाम्बुरुहद्वयम्।**
**प्रणमामि न मे येन भाति क्वापि क्वचिद्द्वयम्॥ ११॥**

तिमपि गवर्णयति—**हेरम्ब इति**। सः सर्वाग्र्यपूज्यत्वेन जगद्विख्यात इत्यर्थः। एतादृशः अतएव सिद्धीति। स्वपत्नीभ्यामेवैतदभिधाभ्यामिति यावत्। तत्रापि पार्श्वेति। अतएव निजेति। स्वापाङ्गेन्दीवरसहस्रैरित्यर्थः। अलं अत्यन्तम्। अतएव स्विति परमप्रेम्णैव वारंवारमर्चितमित्येतत्। एतादृशः परमानन्दावस्थापन्नोऽतएव नः अस्माननन्तदुःखिनोऽखिलजीवान्प्रतीत्यर्थः। अत्याद्याध्यात्मिकादित्रिविधदुःखादपि तत्प्रागभावासहवृत्तितद्ध्वंसनेन पालयत्वित्यर्थः। शिष्टं तु स्पष्टादिकं प्राग्वदेव॥ ५॥ अथैतद्द्वादशरत्नानां श्लोकसंख्यानुक्रमणिकां तनोति—**आद्यमित्यादिचतुर्भिः**। **शरेति** ३५ **मुनीति** १३७ **वह्नीति** १३ ॥ ६॥ **चन्द्रेति** २११ **रामेति** ७३ **वेदेति** २३४ **खेन्द्विति** २१०॥ ७॥ **रसेति** ३२६ एतत्संख्याकश्लोकात्मकमित्यर्थः। **खेति** ३० एतत्संख्याकश्लोकपरिमितमित्यर्थः। **शास्त्रेति** २६ एतच्छ्लोकसंख्यात्मकमस्तीत्यर्थः। **रसैरिति** ६ एतत्संख्यश्लोकैर्मितं परिमितमित्यर्थः॥ ८॥ द्वादशमित्यादिनिगदव्याख्यातमेव। **एवमित्यादि**। एवं प्रागुक्तद्वादशरत्नश्लोकानां सुमेलनात्सम्यगेकीकरणादित्यर्थः। साहित्यसारः ग्रन्थोऽयम्। सानङ्गेत्यादि। अनङ्गसंख्याकत्रयोदश श्लोकैः सहिता एतादृशी या अनङ्गशती अनङ्गशब्देन त्रयोदशसंख्याकानां शतानां समाहारस्तथा तया अन्वितः। परिमितत्वेन विशिष्ट इत्यर्थः। अभवदिति योजना॥ ९॥ अथाद्वैतविद्यागुरुचरणौ प्रणमति—**श्रीति**। उत्तरार्धपठितयच्छब्दानुरोधादिह तदित्यध्याहार्यम्। **सच्छास्त्रेति**। सच्छास्त्रमद्वैतशास्त्रमेव॥ १०॥ अथ श्रीमत्सद्गुरुपादपद्मद्वयं प्रणमति—**अद्वैतेति**। इहेन्द्रपदादग्रे सरस्वतीपदं द्रष्टव्यम्। येनोक्तपादपद्मप्रणामेनेत्यर्थः। क्वापि देशे क्वचिदपि काल

**गोक्षीराब्धेः शिवगुरुविबुधसहायोऽच्युतः समुद्दध्रे ।**
**मुख्यरसनिर्णयात्मकममृताख्यं द्वादशं रत्नम् ॥ १२ ॥**

इति यावत् । द्वयं द्वैतम् । भाति सत्यत्वेन परिस्फुरतीत्यर्थः ॥ ११ ॥ उपनिगमयति—**गोक्षीरेति** ॥ १२ ॥

श्रीगुर्वंशप्रसादेन सह तज्ज्ञः शिवंकरः ।
ग्रन्थः साहित्यसारोऽयं भूयादाचन्द्रतारकम् ॥ १ ॥

इति श्रीमत्पदवाक्यप्रमाणक्षीरार्णवविहरणश्रीमदद्वैतविद्येन्दिरारमणषष्ठ्युपनामकश्रीमन्नारायणशास्त्रिगुरुवरचरणारविन्दराजहंसायमानमानसेन मोडकोपनाम्नाच्युतशर्मणा विद्यार्थिना विरचितः स्वकृतसाहित्यसारस्वारस्यवलितसरसामोदाख्यव्याख्यानस्य द्वादशः प्रकाशः संपूर्णः ॥ १२ ॥

शाकेऽग्निबाणमुनिभूमितवर्षे खरसमाह्वयेऽपि बत ।
श्रावणसितदशमीज्ये पूर्णोऽभूत्पञ्चवटिकायाम् ॥ १ ॥
साहित्यसारसरसामोदोऽय मीनलग्न एव निशि ।
हरिहरगुरुवरकृपया चिराय सर्वेष्टदो भवतु ॥ २ ॥

